षड्दर्शनप्रकाशनग्रन्थमालायाः प्रथमं पुष्पम्

श्रीमदाचार्यभासर्वज्ञप्रणीतस्य न्यायसारस्य
स्वोपज्ञं व्याख्यानं

# न्यायभूषणम्

तदेतत्
उदासीनसंस्कृतमहाविद्यालयस्य भूतपूर्वप्रधानाचार्यः
न्यायाचार्यमीमांसातीर्थाद्युपाधिभृत्

## स्वामी योगीन्द्रानन्दः

श्रौतसौगतार्हताद्यनेकदर्शनग्रन्थसाहाय्येन संशोध्य
टिप्पणादिभिः परिष्कृत्य सम्पादितवान्




षड्दर्शन प्रकाशन प्रतिष्ठानम्
वाराणसी

प्रकाशक:

मंत्री, षड्दर्शन प्रकाशन प्रतिष्ठान
उदासीन संस्कृत विद्यालय,
ढुंढिराज, वाराणसी

●



मूल्यम् १६-०० रूप्यकाणि

●

प्रथमसंस्करणम् १०००
वसन्त पंचमी, २०२४
फरवरी १९६८



●

मुद्रक:
शरद कुमार 'साधक'
मानव मन्दिर मुद्रणालय,
नरहरपुरा, वाराणसी

●

प्राप्ति-स्थानम्
उदासीन संस्कृत विद्यालय
सी. के. ३६/१९, ढुंढिराज,
वाराणसी

महापाशुपताचार्यश्रीभासर्वज्ञप्रणीतन्यायभूषणोपलब्ध्याऽनया लोकोत्तरया लोकोत्तरमानन्दसन्दोहमनुबोभवीत्ययम्—

२ ए, सिगरा
वाराणसी
२८-१-६८

गोपीनाथकविराजः
एम्० ए० डी० लिट्०
भूतपूर्व प्रिंसिपल गवर्नमेंट संस्कृत कालेज वाराणसी

# सम्पादकीयम्

माननीयस्वामिसत्यस्वरूपशास्त्रिणः १९५९ खृष्टाब्दे न्यायभूषणमातृका-प्रतिलिपिमदर्शयन्। तां दृष्ट्वा जाताश्चर्यः प्रमुष्टमिव राष्ट्रशेवधिं लब्ध्वा प्रमुदितोऽहं शीघ्रप्रकाशनाय न्यवेदयम्। भूयो भूयः प्रार्थिताः शास्त्रिवरा गतवर्षे केवलां प्रतिलिपिमेनामर्पयन् मूलोपलब्धिस्थलं च रहस्यमिवागूपुः। तन्मात्राश्रितं सम्पादनकृत्यं कियद्दुष्करमिति नाविदितं तद्विद्यावताम्। अस्यां ममादर्शसञ्चिकायां प्रथमपरिच्छेदे १२९, द्वितीयपरिच्छेदे १७० तथा तृतीयपरिच्छेदे १८२ पृष्ठानि ८"×१३" सन्ति। अवसाने स्तोकं गलितम्। प्रतिलिपिरपीयं नानाविला। यावद् यथोपलब्धं तावत्तथैव समारोप्यतां विपश्चितां पुरतः, ते स्वयमेवावगाह्यावदातमेतत् करिष्यन्ति मोचयिष्यन्ति च ममापराधानिति सञ्चिन्त्य बृंहितोत्साहोऽस्मिन् महति कार्ये प्रावर्तिषि।

इतरबहुतरग्रन्थसाहाय्यमासाद्यैवैतत्सम्पादने प्राभवम्। विशेषसहायका ग्रन्थाः—न्यायवैशेषिकसूत्रपरिवारग्रन्थाः, पण्डितराजश्रीसुब्रह्मण्यसम्पादिता न्यायसारव्याख्या न्यायमुक्तावली, महापण्डितश्रीराहुलसांकृत्यायनसम्पादिता प्रमाणवार्तिकभाष्यव्याख्या वादन्यायश्च, प्रो० महेन्द्रजैनसम्पादितं न्यायविनिश्चयविवरणं तत्त्वार्थवार्तिकञ्च, विद्वद्वरश्रीयुतानन्तलालठक्कुरसम्पादिता ज्ञानश्रीरत्नकीर्तिनिबन्धावलिः। श्रीलानन्तलालठक्कुरशर्म्मणो न्यायभूषणविषयकलेखप्रदानाद्युपकारं न विस्मरामि। मुद्रणोपयुक्तप्रतिलिपिटङ्कणादिकार्यचतुरस्य श्रीभास्करानन्दस्वामिनः साहाय्यस्तोमं स्तोमयामि। प्रूफसंशोधने संशोधनादिकलाकलापातिकुशलस्य श्रीमहेशदत्तशुक्लस्य, अस्मदुदासीनसंस्कृतमहाविद्यालयप्रधानाचार्यस्य श्रीपुरुषोत्तमत्रिपाठिनः, मदन्तेवासिनः श्रीरमेशचन्द्रस्य च साहाय्यं भृशं संस्तौमि। मानवमुद्रणालयाध्यक्षस्य श्रीमतः शरत्कुमारसाधकस्य मुद्रणादिकृत्यदाक्षिण्यादेवेदं सम्पादनं निरवद्यमभवत्। अत एतान् सर्वान् महाशयान् धन्यवादसहस्रेण समलङ्करोमि।

*

## शोधनिका

| पृष्ठम् | अशुद्धम् | शुद्धम् |
|---|---|---|
| ६ | साध्यत्वे र | साधनत्वेन |
| १७ | संज्ञयाभिहितं | संज्ञयाभिहितं |
| ३७ | त० उ० पृ० | त० उ० पृ० ३ |
| ४६ | परिनिष्पत्तिर्श्र | परिनिष्पत्तिर्य |
| ५८ | उद्योत्कर: | उद्योतकर: |
| ८० | चोपमानादीनम | चोपमानादीनाम |
| ८७ | यद्यपि | यदपि |
| ११६ | प० वा० ३।२८४ | प्र० वा० ३।२८४ |
| १२८ | न्या० पू० २।२।५७ | न्या० सू० २।२·५७ |
| १३४ | न्या० वि० वि० | न्या० वि० वि० भा० १, |
| १५२ | मिष्टान्नपानाद्युरयोगं | मिष्टान्नपानाद्युपभोगं |
| १५८ | गुणत्वसिद्धिः | गुणत्वासिद्धिः |
| १६३ | मुक्तमिति दोष: | मुक्तमिति न दोष: |
| १६४ | नापां गुण: | नापामेव गुण: |
| १८३ | भ्रान्तिज्ञामेव | भ्रान्तिज्ञानमेव |
| १८४ | यादश | यादृश |
| १८४ | तादशस्यैव | तादृशस्यैव |
| २१८ | द्विपदार्था: | हि पदार्था: |
| २३० | व्रजेत् ॥ | व्रजेत् ॥ प्र० वा० ३।७० |
| २३१ | व्यक्तचन्तरसंश्लिप्टेति | व्यक्त्यन्तरसंश्लिष्टेति |
| २३४ | धर्मिहेत्वादिस्वरूपम् | धर्मिहेत्वादिस्वरूपम् |
| २३८ | नन्यप्रसंग: | नन्त्यप्रसंग: |
| २५८ | कभवति | भवति |
| २५९ | कारतोपलन्नादि | कारतोपलम्भादि |
| २६० | मरीचिकादिप्विव | मरीचिकादिष्विव |

| पृष्ठम् | अशुद्धम् | शुद्धम् |
|---|---|---|
| २६६ | वक्तिु: | वक्तु: |
| २६६ | महषादि | महिषादि |
| २६७ | निषेधयिष्यामः | निवेदयिष्यामः |
| २७२ | द्विविधां विद्यते— | द्विविधं विद्यते |
| २७३ | पाराश्यं | पाराश्यं |
| २७३ | वाक्यास्यानुमानत्वं | वाक्यस्यानुमानत्वं |
| २७६ | पदार्थज्ञानेनाऽत्य | पदार्थज्ञानेनाऽन्य |
| २७७ | कर्तृ संजकं | कर्तृ संज्ञकं |
| २७७ | पदपदर्थेष्वेका | पदपदार्थेष्वेका |
| २७७ | प्रत्यक्ष भेव | प्रत्यक्षमेव |
| २७७ | समकलमेवा | समकालमेवा |
| २७९ | प्रतिभोहाम्यां | प्रतिभोहाम्यां |
| २८१ | समानसं | मानसं |
| २८२ | पक्षवचनमुच्चारयिति | पक्षवचनमुच्चारयति |
| २८२ | इति, ना | इति, न |
| २८५ | वचनसोप्यस्ति | वचसोप्यस्ति |
| २८६ | युक्तस्वात् | युक्तत्वात् |
| २८६ | दर्शयीतीति | दर्शयतीति |
| २८६ | यच्चोक्तम् | यच्चोक्तम् |
| २८६ | यत्नुनरेत | यत्पुनरेत |
| २८७ | शक्नोति | शक्नोति |
| २८८ | प्रातषेद्यार्थमग्वयव्यतिरेकी | प्रतिषेधार्थमन्वयव्यतिरेकी |
| २८८ | सत्र्वोप्यनुपलब्धि | सर्वोप्यनुपलब्धि |
| ३०४ | अकाशादि | आकाशादि |
| ३०७ | हेतव | हेतवः |
| ४९७ | आत्मभेदप्रतीतभ्रान्त | आत्मभेदप्रतीतेर्भ्रान्त |
| ६३० | प्रभातभोजिनः | प्रभातभोजिनः |
| ६३० | पूजाख्याति | पूजाख्याती |
| ६३४ | प्र० वा० ३।३१ | प्र० वा० ३।३१ पृ० २६० |

★

# प्राग्बन्धः

भूषणस्य मनोहारि सभ्याः श्रोष्यन्ति शिञ्जितम् ।
पूर्वरंगप्रसंगाङ्गं किंचित् प्रस्तोतुमिष्यते ॥

बहोः कालात् प्रलुप्तमिवेदमासीद् न्यायभूषणं स्वोपज्ञं वार्तिकं न्यायसारस्य, सर्वस्वं प्राचीनस्य न्यायस्य । सत्यमिदं [1]महाम्बुधिकल्पम् । अष्टादशसु टीकासु प्राधान्यमस्य जेगीयते[2] । तार्किकरक्षायां न्यायसूत्रव्याख्याप्रसंगे हि प्रायः समुल्लेखादेवास्य न्यायसूत्रव्याख्यानताभ्रमोऽभवत् केषांचित्[3] । स्वयं ग्रन्थकारस्तु मूलग्रन्थस्य 'न्यायार्थसंग्रहः' 'संग्रहः' इति वा नाम संसूचयति— "प्रवक्ष्यते न्यायसदर्थसंग्रहः" ( न्या० भू० पृ० १ ), "संग्रहे कस्मान्नोक्तम्" ( न्या० भू० पृ० ५ )। न्यायभूषणं च संग्रहवार्तिकनाम्नाऽपि निर्दिशति— 'न्यायभूषणे संग्रहवार्तिके' ( न्या० भू० परिच्छेदान्ते )। इदमेव च 'न्यायभूषणम्', न्यायभूषणः', 'भूषणः' इत्यादिनामभिर्विश्रुतं तैर्थिकेषु[4] ।

---

१. तथा चोदीरितं वासुदेवेन विदुषा—

"न्यायभूषणमहाम्बुधौ बुधा येऽलमाचरितुं न जानते ।
तत्कृते कृतिरियं मया कृता न्यायसारपदपंजिकाभिधा ॥"

( न्या० सा० पद० पृ० ९८ )

२. भासर्वज्ञो न्यायसारतर्कसूत्रविधायकः ।
न्यायसाराभिधे तर्के टीका त्वष्टादश स्फुटाः ।
न्यायभूषणनाम्नी तु टीका तासु प्रसिद्धिभाक् ॥

( राजशेखरस्य षट्० समु० )

अकीर्तयच्च गुणरत्नोऽपि स्ववृत्तौ—"भासर्वज्ञप्रणीते न्यायसारेऽष्टादश टीकाः। तासु मुख्या न्यायभूषणाख्या" ( षट्० समु० वृत्ति० पृ० ६४ )।

३. तथा चाह श्रीविन्ध्येश्वरीप्रसादः—"भूषणो न्यायभूषणाख्यन्यायसूत्रवृत्तिकारः, तार्किकरक्षायामपि सुस्पष्टतया समुद्धृतोऽयम्" ( प्र० भा० किर० पृ० १६० )।

४. "इति न्यायभूषणम्" ( अपरार्कस्य न्या० मु० परि० १ पृ० १५३ )। "तथा च न्यायभूषणः" ( ज्ञान० नि० पृ० ८७)। "वरं भूषणः कर्मापि गुणः, तल्लक्षणयोगादिति" ( प्र० भा० किर० पृ० १६० )।

## न्यायसारटीकासु मुद्रितास्वस्य चर्चा

अद्यत्वे न्यायसारस्यान्याः चतस्रो मुद्रिताः टीकाः समुपलभ्यन्ते—

१. न्यायसारपदपञ्जिका, वासुदेवविदुषः ( पुण्यपत्तनमुद्रिता )।
२. न्यायतात्पर्यदीपिका, जयसिंहसूरिकृता ( कलिकातामुद्रिता )।
३. न्यायमुक्तावली, महाराजापरार्कदेवरचिता ( भद्रपुरमुद्रिता )।
४. न्यायकलानिधिः यतिवरस्यानन्दानुभवस्य कृतिः ( भद्रपुरमुद्रिता )।

इमाः समाः समुपजीवन्ति भूषणम्। न्यायसारपदपंजिका तु महाम्बुधिमेवैनं मनुते, तन्निवेदितम्। तात्पर्यदीपिकापि वादशेषविशेषबुभुत्सून् नयति स्म भूषणम्—"इतरख्यातिनिरासो भूषणादिशास्त्रेभ्यो ज्ञेयः" ( न्या० ता० दी० पृ० ६७ )। न्यायमुक्तावली तु न केवलमनुहरति न्यायभूषणम्, तदालोचकान् उदयनवल्लभज्ञानश्रीरत्नकीर्तिप्रमुखान् परान् पराचर्करीत्यपि। भूषणं भूषणकारं च निर्भरं स्मरति—"अवोचदयमाचार्यस्त्वन्यथा न्यायभूषणे" ( न्या० मु० पृ० १६ )।

## भूषणस्य विशेषता

### १. स्वपरालोचना—

यद्यप्युपक्रमे "प्रवक्ष्यते न्यायसदर्थसंग्रहः"—इत्येवमेव प्रतिश्रुतम्, तथापि तत्प्रतीपासदर्थकदर्थने रसातिरेकमस्य प्रतीमः। न केवलं परान् पराकरोति, सगोत्रानपि सूत्रकारान् महर्षिगणान् विगणयितुं न करुणायते। तथाप्यात्मानं प्रपूतमेव प्रतनोति—"न खलु वै सूत्रकारनियोगभयात् पदार्थाः स्वधर्मं हातुमर्हन्ति। यदि चाविचारितं सूत्रकारवचः प्रमाणम्, परीक्षासूत्राणां तर्हि वैयर्थ्यं स्यात्" ( न्या० भू० पृ० ९८ )। "न्यायशास्त्रं च व्याख्यातुं वयं प्रवृत्तास्तेनास्माकं वैशेषिकतन्त्रेण विरोधो न दोषाय" ( न्या० भू० पृ० १६३ )। अत एव श्रीवल्लभादिरभिशप्तो भृशं भूषणकारः—"तदिदं चिरन्तनवैशेषिकमतदूषणं भूषणकारस्यातित्रपाकरम्। तदियमनाम्नातत भासर्वज्ञस्य यदिदमाचार्यमप्यवमन्यते" ( न्या० ली० पृ० ३५७-५८ )।

बौद्धराद्धान्तनिबर्हणाय तु धृतावतारोऽयमित्यालक्ष्यते। कियदाक्षिपति प्रकटं कटाक्षैः—"तस्मादिमे सौगताः शून्यताभिधानेनासारतां प्रदर्श्य बुद्धाय देयम्, धर्माय देयम्, संघाय देयमित्येवं लोकान् प्रतार्य मिष्टान्नपानाद्युपभोगं कुर्वन्तः पूर्वसंस्काराविशेषेऽपि अमेध्यभक्षणादिकं परिहरन्तः चक्रभ्रमणवदस्माकं पूर्व-

संस्कारादेव प्रवृत्तिरित्येवं ब्रुवाणाश्च धूर्ततामेवात्मनः प्रकटयन्तीति" ( न्या० भू० पृ० १५२ )।

यथार्हमार्हतादीनपि सत्करोत्येव—"को वा खरोष्ट्रादिनिकृष्टाभावो यो नास्त्येव जिने" ( न्या० भू० पृ० ५५७ )।

२. त्रीण्येव प्रमाणानि —

अयं न्यायाचार्यः त्रीण्येव प्रमाणानि संवृणीते—प्रत्यक्षमनुमानमागम इति। एष्वेव सर्वप्रमाणानामन्तर्भावः साध्यते—"त्रिविधग्रहणमवधारणार्थम्, सर्वासां प्रमाणव्यक्तीनां प्रत्यक्षादिलक्षणैः त्रिभिरेव संगृहीतत्वात्। तथा चोपमानादीनामत्रैवान्तर्भावं प्रतिपादयिष्यामः" ( न्या० भू० पृ० ८० )। सूत्रकारादिविरोधमद्धा पर्यहार्षीत् ४२२ तमे पृष्ठे।

३. अष्टौ ख्यातयः —

अत्राष्टौ ख्यातयः प्रख्यापिताः सन्ति—(१) अख्यातिः, (२) असत्ख्यातिः, (३) प्रसिद्धार्थख्यातिः, (४) अलौकिकार्थख्यातिः, (५) स्मृतिविप्रमोषः, (६) आत्मख्यातिः, (७) अनिर्वचनीयख्यातिः, (८) अन्यथाख्यातिः ( न्या० भू० पृ० २६ )। अन्यत्राख्यातिपदेन प्राभाकरः स्मृतिप्रमोष एव गृह्यते, किन्त्वयं निरालम्बनां भ्रान्तिमेवाख्यातिमाह—"तस्मान्निरालम्बनं जलादिविपर्ययज्ञानं स्वप्नादिविपर्ययवदिति" ( न्या० भू० पृ० २६ )। भट्टोम्बेकस्यालौकिकार्थख्यातिमतिरिक्तां निरूपयत्येवं प्रसिद्धार्थख्यातिमपि ( द्र० न्या० भू० पृ० २७ )।

४. कर्मापि गुणः —

उत्क्षेपणादौ कर्मणि वैशेषिकाभिमतं गुणातिरिक्तत्वमवगणय्य गुणत्वं निर्वर्णयति भूषणकारः —"कर्मवर्गोऽपि पंचविंशतमो गुणभेद एवास्तु, न कश्चिदत्र विशेषं पश्यामः। किमेषां गुणत्वमिति चेत्, गुणलक्षणमेव। तच्च—अस्पर्शत्वे सामान्यवत्त्वे च सति द्रव्याश्रितत्वम्" ( न्या० भू० पृ० १५८ )। एतामस्याभिनवां स्फूर्तिं प्रशशंस वैशेषिकाचार्योऽपि—"वरं भूषणः—कर्मापि गुणः, तल्लक्षणयोगित्वादिति" ( किर० पृ० १६० )।

५. संख्या भेदाभेदरूपा —

एकत्वस्याभेदपर्यायत्वं द्वित्वादेर्भेदपर्यायत्वं चाभ्युपेत्य पृथग् गुणत्वं न सहते—"तथा चैकमभिन्नमिति पर्यायः, अनेकं भिन्नमिति पर्यायः, ततश्च द्वित्वादिरप्यनेकपर्यायः, तस्योत्पत्त्यादिकल्पना न कार्या" (न्या० भू० पृ०

१५६)। तदेतन्मतं निराकुर्वाणः किरणावलीकारोऽब्रवीत्—"एतेन स्वरूपाभेद एकत्वं स्वरूपभेदस्तु नानात्वं द्वित्वमिति भूषणः प्रत्याख्यातः, स्वरूपाभेदो हि घटस्य घट एवोच्यते। घटादिप्रत्ययस्य स्वरूपप्रत्ययश्च घटाद्येकनिबन्धनत्वाद् एकादिप्रत्ययस्य च घटपटादिसाधारणत्वात्। तथा च तन्निबन्धन एकादिप्रत्ययः तं विहाय पटं नापसंक्रामेत्" ( किर० पृ० १६२-६३ )।

६. पृथक्त्वस्यापि भिन्नत्वरूपता —

"पृथक्त्वस्यापि गुणत्वमयुक्तम्, भिन्नत्वस्यैव पृथगिति व्यवहारहेतुत्वात्" ( न्या० भू० पृ० १६० ) इत्येवं भाषमाणो भूषणः वैशेषिकप्रक्रियाजम्बालजटिलव्याकुलं लोकं निस्तारयति—"ततश्च तत्प्रक्रियागहनमपि निस्तीर्णं भवति" ( न्या० भू० पृ० १६० )।

७. विभागस्य संयोगाभावलक्षणता —

विभागमपि न पृथग् गुणमुररीकरोति—"विभागोऽपि संयोगाभावलक्षणत्वान्न गुणः" ( न्या० भू० पृ० १६१ )। आचार्योदयनस्तदिदं निराह—"संयोगाभावे विभागव्यवहार इति चेत्, न रूपादिषु विभक्तप्रत्ययाभावात्" ( किर० पृ० २३१ )।

८. परत्वापरत्वेऽपि न गुणान्तरे —

संयोगप्रकारविशेषान्तर्भावान्न परत्वादेर्गुणान्तरत्वमित्याचष्टे—"नापि परत्वापरत्वे ( गुणान्तरे ), संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वयोः पूर्वोत्तरजन्मनोश्च परापरव्यवहारहेतुत्वात्" ( न्या० भू० पृ० १६२ )। एतन्मतं निरस्यन् किरणावलीकारो व्याहरते—"संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वयोरेव परापरव्यवहारनिमित्तत्वान्न ततोऽधिकयोः तयोः प्रमाणमस्ति—इति चेन्न, तदपेक्षया प्रमातर्यपि परापरप्रत्ययप्रसंगात्" ( किर० पृ० २४६ )। श्रीवल्लभोऽपि निरस्यति स्म ( न्या० ली० पृ० २८३ )। श्रीवल्लभोदयनयोरपि निराकरणमपरार्कदेवेन ( न्या० मु० पृ० १५६) कृतम्।

९. वेगोऽपि न गुणान्तरमिष्यते —

"वेगोऽपि न गुणान्तरम्, क्रियाणां शीघ्रोत्पादमात्रे वेगव्यवहारात्" ( न्या० भू० पृ० १६२)

संख्यादिनिराकरणेऽप्यस्य दुष्टाभिप्रायता नास्ति—"संख्याप्रतिषेधेऽपि नास्माकं प्रयोजनम्, किन्तु विभागजे विभागे द्वित्वे चाभिनिवेशः कर्त्तव्यः—इत्युपदेश-

श्रवणादत्रैव मुमुक्षुभिराग्रहो न कर्तव्यः, संख्यादीनां गुणत्वासिद्धावपि मुमुक्षूणां न काचित् क्षतिरित्येतज्ज्ञापनार्थं तत्प्रतिषेधोऽपि दर्शित इति" ( न्या० भू० पृ० १६३ )।

१०. स्नेहस्य जलमात्रगुणत्वनिषेधः —

न केवलमप्सु स्नेहः समस्ति, अपि तु घृतादावपि वर्तते—"स्नेहोऽपामेव गुणः—इत्यत्राग्रहो न कर्तव्यः, घृतादेरपि लोके वैद्यकादिशास्त्रे च स्निग्धत्वेन प्रसिद्धत्वात्" ( न्या० भू० पृ० १६४ )।

११. षड् हेत्वाभासाः —

हेत्वाभासाः षट् परिगणिताः —"असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः" ( न्या० भू० पृ० ३०८ )। असाधारणमनध्यवसितपदेन पृथगुपात्तम् । "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालतीता हेत्वाभासाः" ( न्या० सू० १-२-४ ) इति सूत्रोक्तपञ्चत्वविरोधं परिहरन् भणति भूषणः—"तस्मान्न पंचत्वावधारणार्थं सव्यभिचारविरुद्धेत्यादिसूत्रम्, किन्तु निदर्शनार्थम्-यथैव हेत्वाभासाः, तथाऽन्योऽपि हेतुलक्षणरहितो हेतुवदाभासमानो हेत्वाभासः प्रत्येतव्य इत्यर्थः" ( न्या० भू० पृ० ३०९ )।

१२. अनन्यसमादिजातयः —

जातिसूत्रस्य ( न्या० सू० ५-१-१ ) उपलक्षणार्थत्वं मत्वा चतुर्विंशतिजात्यतिरिक्तानामपि कासाञ्चिज्जातीनां दिक् प्रदर्शिता—अनन्यसमः (न्या० सू० २-२-३१), सम्प्रतिसमः ( न्या० सू० २-१-३ ), व्यवस्थापत्तिसमः ( न्या० सू० २-१-४ )।( द्र० न्या० पृ० ३५६-५७ )।

१३. दिक्कालयोरीश्वरेण गतार्थता —

दिशं कालं च पृथग् द्रव्यं नाङ्गीकरोत्ययं भूषणः–"दिक्कालयोरपि सर्वोत्पत्तिमतां निमित्तकारणत्वादविशेष इति चेत्, न; अप्रमाणकत्वात् । भगवानीश्वरस्तावत् सर्वेषां ज्ञानाज्ञानात्मकानां कार्याणां निमित्तमस्ति" ( न्याय० भू० पृ० ४६०-६१ )।

१४. मोक्षे नित्यं सुखं व्यज्यते —

मोक्षे नित्यसुखस्याभिव्यक्तिं वक्त्ययमाचार्यः । न्यायचन्द्रिकाकारो दुःखाभावात्मकं मोक्षं प्रतिक्षिपन् भूषणमेवमनुवदति—"मुक्तौ ज्ञानाभावाभ्युपगमे मोहावस्थातो न तस्या विशेष इति प्रेक्षावतां तदर्थंप्रवृत्त्यनुपपत्तिः । तदुक्तम्—

"दुःखहानाय नो युक्ता सुखदुःखात्मक परम् ।
न हि कश्चित्पदार्थज्ञो मोहसिद्धौ प्रवर्तते ॥
वरं वृन्दावने रम्ये सृगालत्वं वृणोम्यहम् ।
न तु निर्विषयं मोक्षं गौतमो गन्तुमिच्छति ॥" इति ।

तथा—

"दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते ।
न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः ॥"

इत्यपरे पुनरेवमाहुः—प्रेक्षावतां प्रवृत्त्यनुपपत्त्या मुक्तौ नित्यानन्दसंवेदनमस्ति । सुखसंवेदनयोर्नित्यत्वाद् मुक्तिसंसारावस्थयोरविशेषप्रसंग इति चेत्, न; चक्षुर्घटयोः कुड्यादेरिव सुखसंवेदनयोर्विषयविषयिसम्बन्धप्रत्यनीकस्याधर्मादेः संसारावस्थायां सद्भावात् तन्नाशे च मुक्तावस्थायां भवति सुखसंवेदनयोः सम्बन्धः, कुड्यादीनां चक्षुर्घटसम्बन्धवत् । सम्बन्धविरोधिमात्रेण कुड्याद्युदाहृतम्, न तु कुड्यादिवदधर्मादेर्व्यवधायकत्वमस्ति, अमूर्तत्वाद् एकदेशयोर्व्यवधानासम्भवाच्च । किन्तु "आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते"—इति वचनात् समस्ताधर्मादिनिवृत्तौ सुखसंवेदनयोः सम्बन्धविशेषादभिव्यक्तिर्भवेदिति गम्यते" ( न्या० चं० पृ० ५४५-४६ ) । तदेतद् न्यायभूषणे ( ५६५ पृष्ठे ) द्रष्टव्यम् ।

## न्यायभूषणकारः

अस्य श्रीन्यायभूषणस्य ग्रन्थमणेः प्रणेता तत्रभवान् भासर्वज्ञाचार्यः । भावसर्वज्ञ इत्यप्यस्य शुभाभिधानं[१] श्रूयते । कश्मीराभिजनोऽयमित्यपि पुरेतिवृत्तवित्सु जागर्ति चर्चा । किन्तु न्यायभूषणतोऽस्मिन् विषये कश्चन विशेषो नाधिगम्यते । राज्ञां स्मरणमप्यस्य निर्विशेषमेव—"नन्दविक्रमादित्यश्रीहर्षादिव्यवहारवत्" ( न्या० भू० पृ० ४०० ) । श्रीहर्षोऽयं राजश्रेणीसंश्लेषाद् बाणवर्णितो महाराजहर्षवर्धन एव, न तु श्रीहर्षपण्डितः ।

समयस्त्वस्य दशमशतकस्य पूर्वार्धभाग इति डा० विद्याभूषणनिर्णयमेव[२] समर्थयामो यतः—

---

१. तथा १८७ तमे पृष्ठे समुपलभ्यते—"श्रीमदाचार्यभावसर्वज्ञविरचितं" । अतो गणकारिकाप्रस्तावनायां ( पृ० १ ) डा० दलालमहाशयेनोपकल्पितं भावसर्वज्ञ इति नामांजस्यमेव भजते ।

२. द्र० न्यायशास्त्रेतिहासः पृ० ३५७ ।

( १ ) आचार्योदयनस्य समयः ६८४ खृष्टाब्दः । तेनालोचितस्य[1] सौगतवरस्य ज्ञानश्रियः समयः ६६० खृष्टाब्दः । ज्ञानश्रिया समालोचितस्य च भासर्वज्ञस्य ६३० खृष्टाब्दसमयः समायाति । ज्ञानश्रियः शिष्यो रत्नकीर्तिः, अतो रत्नकीर्तेः ज्ञानश्रियः परकालभावित्वं यद्वर्णितं डा० विद्याभूषणेन स्वकीयन्यायशास्त्रेतिहासस्य ३४१ तमे पृष्ठे, तदसमंजसमिव प्रतिभाति ।[2]

( २ ) ८२२ खृष्टाब्दमण्डनं श्रीमण्डनमिश्रं खण्डयतः कर्णकगोमिनः समयः नवमशतस्यान्तिमो भागो भवेत् । कर्णकगोमिनोपहृतं सांख्याचार्यस्य माधवस्य विशेषणं सांख्यनाशकपदं विवृणोतीव भासर्वज्ञः—"माधवमते तु सांख्यनाश एव" ( न्या० भू० पृ० ५६६ ) । अतस्ततः परोऽयमाचार्यो दशमशताब्दयाद्यार्धे भवेदिति तर्क्यते ।

## भूषणसहोदरो ग्रन्थः

### नित्यज्ञानविनिश्चयः

भूषणे लोकाप्रसिद्धस्यैकस्य ग्रन्थस्य नाम निर्दिष्टम्—यदत्रानुक्तं परोक्तचोद्यप्रतिसमाधानं प्रतिपक्षबाधनं च तत् "नित्यज्ञानविनिश्चये" द्रष्टव्यम् ( न्या० भू० पृ० ४६६ ) । अतो ज्ञायते यन्न्यायभूषणप्रणयनात् पूर्वं नित्यज्ञानविनिश्चयोऽप्यपरः कश्चन सौगतसिद्धान्तगिरिवज्रपात इवासीद् भासर्वज्ञाचार्येण विरचितो ग्रन्थः ।

## भूषणे चर्चिता न्यायाचार्याः

### १. विश्वरूपाचार्यः —

विस्मृतोऽयमद्य न्यायाचार्यः[3] चर्चितो न्यायभूषणस्य १६७तमे पृष्ठे । न्यायभाष्यस्य कश्चन टीकाकारोऽयमित्यब्रवीद् दुर्वेकमिश्रः[4] । न्यायविनिश्चय-

---

१. आत्मतत्त्वविवेके ज्ञानश्रीनामनिर्देशोऽप्यस्ति—"यत् परिहृतं ज्ञानश्रिया, तदेतद् ग्राम्यजनाद्यन्वीकरणम्" (आ० त० वि० पृ० ३४६) । अत्रैव यद् दीधितिकृता विवृतम्—"ज्ञानश्रिया ज्ञानधनेन ज्ञानातिरिक्तपदार्थानभ्युपगन्त्रा बाह्येनेति", तत्तदा बौद्धदर्शनप्रचारविरलत्वं गमयति ।

२. द्र० प्र० वा० वृत्ति० पृ० २६८ ।

३. "विश्वरूपप्रभृतयोऽप्येवमेव व्याचक्षते" ( न्या० भू० पृ० १६७ ) ।

४. "न्यायभाष्यटीकावार्तिकयोर्विश्वरूपोद्योतकरावाहतुः" ( धर्मो० प्र० पृ० १७५ ) ।

विवरणादावस्य भूयांसो मतवादा वादिराजादिभिरुपद्रुता विद्यन्ते। तत्रोद्धृतानि वाक्यानि कतिचिदुदाह्रियन्ते—

( १ ) अत्राह विश्वरूप: —"सत्यमेतत् सामग्र्यैकदेशस्य न प्रामाण्यम्, मयापि विचार्य परित्यागात्" ( न्या० वि० वि० भा० १ पृ० ५८ )।

( २ ) यत्पुनरत्र विश्वरूपस्य समाधानम्—"सुखादेर्धर्माधर्माभ्यामुत्पाद:। तौ च यथा सुखाद्युत्पत्तिमाक्षिपत:, तद्वदनन्तरक्षणे तत्संवेदनमिति" ( न्या० वि० वि० भा० १ पृ० २२० )।

( ३ ) अत्र च विश्वरूपस्य प्रत्यवस्थानम्—"क्व तन्निबन्धनं ज्ञानस्याकारवत्त्वं दृष्टं येनैवमुच्यते आकारद्वयदर्शनाभावात्। न हि ज्ञानाकारादन्यार्थाकार उपलभ्यते यतस्तत्कृतत्वं ज्ञानाकारस्योपलभ्यते। उपलम्भे वा तस्यापि प्रतिभासमानत्वाद् ज्ञानाकारतैवेति तन्निबन्धनमन्य एवार्थाकार उपलब्धव्य:। तत्राप्येवं कल्पनायामनवस्थैव, ततोऽर्थस्य वाङ्मात्रेण सत्ताभ्युपगमो न प्रमाणनिबन्धन:" इति ( न्या० वि० वि० भा० १ पृ० २५५ )।

( ४ ) तदेवमत्र सम्बन्ध इति निश्चयद्योतनार्थमुपसर्गोपादानम्, एवं विश्वरूपेणापि सन्निकर्षपदस्य व्याख्यानात् ( न्या० वि० वि० भा० १ पृ० ५३५ )।

( ५ ) अत एव विश्वरूपेणापि दर्शनमेव पुरस्कृत्य संकेतकरणमुपदर्शितम्—"यदेतत् पश्यसि, तस्य गोशब्दो वाचक:" इति ( न्या० वि० वि० भा० १ पृ० ५३७ )।

( ६ ) यत्पुनरत्र विश्वरूपेण समाधानमुक्तम्—"कारणस्यैव मेघादे: सिद्धत्वाद् धर्मित्वम्, तद्वृष्ट्युत्पादकत्वं साध्यो धर्म:, उन्नतत्वादिना तद्धर्मेणानुमीयते" इति ( न्या० वि० वि० भा० २ पृ० २०१ )।

( ७ ) यदपीदं शेषवत उदाहरणं भाष्ये प्रदर्शितम्—"पूर्वोदकविपरीतमुदकं नद्या: शीघ्रत्वं च स्रोतसो दृष्ट्वाऽनुमीयते भूता वृष्टि:" ( न्या० भा० १-१-५ ) इति। अत्रापि विश्वरूपेण तात्पर्यमुक्तम्—"नदीशब्दवाच्यो गर्तविशेषो धर्मी उपरि वृष्टिमद्देशसम्बन्धित्वं साध्यो धर्मो धर्मिगतेन पूर्णत्वादिना धर्मेणानुमीयते" इति ( न्या० वि० वि० भा० २ पृ० २०२ )।

( ८ ) भवतु निर्व्यापारत्वं तस्य, न हि तस्य व्यापारबलेन कार्यकारित्वं सहकारिसहितात् निर्व्यापारादेव तदुपपत्ते:। तथाहि—व्यापारो नाम शक्ति-

रतीन्द्रिया, क्रिया वा भवेत् ? तयोश्च किं पदार्थेन सहोत्पन्नयोर्यावत्पदार्थभावित्वम्, आहोस्वित् सामान्यवत्तयोस्तेन सहानुत्पन्नयोस्तत्र सद्भावः ? पक्षद्वयेऽपि कार्यस्य सततोदयप्रसंगः । न हि शक्तेर्व्यापाराविष्टे च कारणे कार्यस्य क्षेपः । अथैतन्मा भूदिति तयोस्तत्र कादाचित्कत्वं कार्यवत् तत्रापि वक्तव्यम् । कादाचित्कत्वे तयोः कारणपूर्वकत्वमवश्यम्भावि । तत्र सति विकल्पद्वयम्—किं स्वाश्रयकार्यकारणमात्रभावित्वं तयोः ? उतस्वित् सहकारिकारणापेक्षत्वम् ? पूर्वस्मिन् पक्षे पुनरपि सर्वदा कार्योत्पत्तिप्रसंगः । सहकारिकारणापेक्षत्वे कार्यमेव कारणद्वयात् सम्मिलितादस्तु, किं शक्तिव्यापाराभ्याम् ? इति विश्वरूपः । ( न्या० वि० वि० भा० २ पृ० २१२ ) ।

२. अध्ययनपादः —

उद्योतकरवार्तिकस्य टीकाकारोऽयं न्यायाचार्यो न्यायभूषणस्य १६७ तमे पृष्ठे समुल्लिखितः । अयमेव रुचिकारो रचयामास रुचिरां रुचिटीकामिति दुर्वेको व्याहरन् उद्धरति तद्गिराम्—अध्ययनः पुना रुचिटीकायामिदमवोचत्— "धर्मविशिष्टस्य धर्मिणो निर्देशः क्रियते श्रोतुराश्वासनार्थम् । न त्वादौ धर्मविशिष्टस्य धर्मिणो निर्देशो युक्तः । अयुक्तता तस्य प्रतिपत्तावहष्टत्वात् । तत्र प्रदेशमात्रमुपलभते तत्स्थं च धर्मम् । ततोऽविनाभावं स्मरति । तदनन्तरं तदेवेदमिति परामृशति । ततो विशिष्टतां प्रदेशस्य प्रतिपद्यते, न त्वादावेव । परामर्शस्य च स्वार्थपूर्वकत्वम् । न च स्वार्थे धर्मविशिष्टस्य धर्मिणो दर्शनमस्ति,तेन परप्रतिपत्तावपि न कार्यम् । आदौ तु क्रियते प्रतिपाद्यस्यास्थोत्पादनार्थमिति" ( धर्मो० प्र० पृ० १७५ ) ।

कर्णकगोम्यपि तद्गवीमनुगृणाति—यदप्युच्यतेऽध्ययनाविद्धकर्णोद्योतकरादिभिः—"यदि तुलान्तयोर्नामोन्नामवत् कार्योत्पत्तिकाल एव कारणविनाशः, तदा कार्यकारणभावो न स्यात्, यतः कारणस्य विनाशः कार्योत्पाद एव, भाव एव नाश इति वचनात् । एवं च कारणेन सह कार्यमुत्पन्नमिति प्राप्तम् । यदि च भाव एव नाशः, प्रथमेऽपि क्षणे भावस्य न सत्ता स्यात् । विनाशाद् भावनिवृत्तिश्च विनाशो लोकप्रतीतो न भाव एव । सर्वकाले च नाशसद्भावात् नाशस्य सत्त्वं स्यात् । अथ कार्योत्पादात् कारणविनाशो भिन्नः, तदा कृतकस्वभावत्वमनित्यत्वस्य न स्यात् । व्यतिरिक्ते च नाशे जाते तस्य क्षणस्य न निवृत्तिरिति कथं क्षणिकत्वमिति" ( प्र० वा० स्ववृत्ति० पृ० ९०-९१ ) ।

अध्ययनस्त्वाह—"स्वलक्षणयोः कार्यकारणभावग्रहणे सति कथं सामान्ययोर्गम्यगमकभावः भिन्नत्वादिति" ( प्र० वा० स्ववृत्ति पृ० ९८ ) ।

३. त्रिलोचनाचार्यः —

वाचस्पतेरयं गुरुः। न्यायभाष्यस्य काचनानेन टीका कृता, तद्वचनमुद्धरतिस्म दुर्वेकमिश्रः—त्रिलोचनः पुनर्न्यायभाष्यटीकायामिदमवादीत्—"साध्यवचनमसाधनांगवचनं न भवति, यतो विवादेषु परप्रतिपत्तिमधिकृत्य न प्रयोगनियमः शक्यः। पटुमन्दादिभावेन परप्रतिपत्तीनामनवस्थानात्। तथा हि हेतुवचनादेव कश्चित् प्रत्येति, कश्चित् पुनरन्तरेणापि हेतुवचनं वस्तुस्वरूपपरिशीलनात् प्रागेव शब्दनिष्पत्तेरोष्ठादिस्थानव्यापारोपलब्धेर्वक्तुरभिप्रेतमन्वेति। तस्मादनपेक्षितपरप्रतिपत्तिरेवायं ज्ञाता ज्ञानस्थमर्थं प्रतिपादयन्तं तस्य स्वप्रतिपत्त्या रूढस्यार्थस्य वाचकं शब्दं प्रयोक्तुमर्हति। स्वप्रतिपत्तिश्च लिंगजा ज्ञापनीयधर्मविशिष्टं धर्मिणमभिनिविशते। तस्मात् परस्य विवादयित्रा ज्ञानस्थमर्थं परो बोद्धव्य इति स एव परप्रतिपत्त्युपाय इति" (धर्मो० प्र० पृ० १७३-१७४)।

न्यायप्रकीर्णमप्यपरं ग्रन्थमयं प्रणीतवानिति रत्नकीर्तिलेखादवगम्यते—त्रिलोचनस्तु न्यायप्रकीर्णके प्राह (र० नि० पृ० १३)।

"पुनर्द्व्यणुकेश्वरसिद्धौ त्रिलोचन स्त्वाह" (र० नि० पृ० ३६)। इति समुल्लेखात् 'द्व्यणुकसिद्धिः'—'ईश्वरसिद्धिः' इतीमे प्रकरणेऽपि त्रिलोचनकृते प्रतीयेते।

त्रिलोचनवचो वादिराजोऽप्युद्धरति—"नैष दोषः पृथक्त्वाग्रहणनिबन्धनस्य वनप्रत्ययवदस्यापि स्थूलप्रत्ययस्य भ्रान्तत्वात्" (न्या० वि० वि० भा० १ पृ० १६७)।

४. वाचस्पतिमिश्रः —

यद्यपि नामग्राहं न परामृशति श्रीमिश्रं भूषणः, तथापि तन्मतमत्र चर्चितं मन्ये—

(१) लक्षणस्य व्यतिरेकिहेतुत्वं प्रतिपादितं वाचस्पतिमिश्रेण—"लक्षणं नाम व्यतिरेकिहेतुवचनम्" (ता० टी० पृ० ९८)। तदेतदुपन्यस्तं न्यायभूषणे—"लक्षणस्यापि निश्चयसाधनत्वेन प्रमाणत्वात्। अथ लक्षणं किं प्रमाणपर्यायः, उत प्रत्यक्षादीनामन्यतमात्, तदर्थान्तरं वा? केवलव्यतिरेकीत्येके" (न्या० भू० पृ० ६)।

(२) संशयलक्षणे "अनवधारणात्मकश्च प्रत्ययश्च" (न्या० वा० पृ० १२) इति वार्तिकोक्तस्य विरोधं मिश्रः पर्यहार्षीत्—"परमार्थतस्तु प्रत्यय-

शब्दो ज्ञानपर्यायः, ज्ञानत्वं तु सामान्यं संशयादिष्वप्यस्तीति न विरोध इति" ( ता० टी० पृ० २४४ )। तन्मनसि कृत्वा प्रोक्तम्--"अनवधारणज्ञानं संशयः" ( न्या० सा० पृ० १२ )। तत्र तमेव विरोधमुद्भाव्य तदेव समाधानमभ्यधाद् भासर्वज्ञः--"अनवधारणं च तज्ज्ञानं चेति व्याघातान्न युक्तमिति चेत्, न, गोशब्दादिवज्जातिनिमित्तत्वाज्ज्ञानशब्दस्य--सा च ज्ञानत्वादिजातिर्निश्चयानिश्चयस्वभावासु व्यक्तिषु वर्तते" ( न्या० भू० पृ० १२ )।

( ३ ) साधकतमत्वनिरूपणप्रसंगे भणितं मिश्रैः--"प्रमातृप्रमेययोः प्रमाणे चरितार्थत्वम्, अचरितार्थत्वं प्रमाणस्य, तस्मात् तदेव फलहेतुत्वम्" ( ता० टी० पृ० २२ )। भूषणकारस्तदेवानुवदति--"अचरितार्थता वा। प्रमातृप्रमेये प्रमाणं कृत्वा चरितार्थे भवतः, प्रमाणं त्वचरितार्थम्, प्रमां कुर्वतः साधकतमत्वमुच्यते" ( न्या० भू० पृ० ५९ )।

( ४ ) उपमानस्य प्रमाणान्तरत्वं समर्थयद्भिर्मिश्रैः प्रोक्तम्--यावदयमसौ गवय--इति साक्षात् प्रतीते सम्बन्धिनि संज्ञां न निवेशयति, तावदयं परिप्लुतमतिः प्रमाता कंचित् खलु द्रक्ष्यामि तादृशं पिण्डं यत्र गवयसंज्ञा प्रतिपत्स्य इति प्रमोत्सुक एवोदीक्षेत् न चासौ वाक्यमात्रसहायो प्रत्यक्षीकृतगोसदृशगवयपिण्डोयम् असौ गवयाख्यः"--इति प्रतिपत्तुमर्हति। न च वाक्यं विना प्रत्यक्षमात्रात्। तस्मादागमप्रत्यक्षाभ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानमुपमानाख्यं प्रमाणमास्थेयम्" ( ता० टी० पृ० १९८ )। तदेतद् न्यायभूषणकारो निराकरोति--"अदृष्टे गवये संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरयुक्तेति चेत्, न, अप्रत्यक्षेऽपि शक्रादौ तत्प्रतिपत्तिदर्शनात्। ननु वाक्यादुपप्लुता प्रतिपत्तिरासीदुपमानात्तु संज्ञिविशेषावच्छेदेन व्यवस्थिता भवतीति। कोऽयमुपप्लवः ?" ( न्या० भू० पृ० ४२० )।

( ५ ) "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः"(न्या० सू० १-१-१२) इति सूत्रे वार्तिककृतोक्तम्--"लक्षणसूत्राणि समानासमानजातीयविशेषणार्थानीति सूत्रार्थो द्रष्टव्यः।" अत्र लक्षणसूत्रस्यैकत्वात् कथं लक्षणसूत्राणीति मनसि सन्दिह्य तद्वार्तिकमापातायातं मिश्रा मेनिरे--"लक्षणसूत्राणीत्यापाततः सूत्रे विचार्यमाणानि च सूत्राणीत्यर्थः" ( ता० टी० पृ० २२१ )। तद्भ्रमं वारयन्निव भणति भूषणकारः--"एवं चात्र विशेषलक्षणार्थानि पंच सूत्राणि" ( न्या० भू० पृ० ४३७ )।

५. जयन्तभट्टः --

जयन्तभट्टं केचन विपश्चितो वाचस्पतिभासर्वज्ञाभ्यां परकालं कलयन्ति, अन्ये च पुरातनम्, तत्र

प्रथमः पक्षः—

डा० [1]विद्याभूषणप्रवराः पुरावृत्तविदो वदन्ति परकालम्, यतः

( १ ) वाचस्पतेस्तात्पर्यटीकातः[2] सन्दर्भमुद्धरति न्यायमंजर्यां जयन्तः।

( २ ) स तत्रैव ९०५ ई० समयभाविनं [3]माघकविं परामृशति।

( ३ ) भामतीगतं [4]पद्यं निबध्नाति स्वनिबन्धे।

( ४ ) तत्र तत्राचार्यपदेन[5] वाचस्पतिं मनसि करोति।

( ५ ) ८९२ खृष्टाब्दे कश्मीरशासकस्य [6]शंकरवर्मणो धर्मतत्त्वज्ञतां स्तौति ( न्या० मं० पृ० २७१ )।

( ६ ) जयन्तनन्दनोऽभिनन्दः कादम्बरीकथासारे स्वषष्ठं पूर्वजं शक्तिं कश्मीराधिपतेः ८६७ ई० समयवर्तिनो मन्त्रिणं वदति। अतः २५×४=१०० वर्षानन्तरे ९६७ खृष्टाब्दे जयन्तभट्टेन भाव्यम्।

( ७ ) भासर्वज्ञप्रणीतन्यायसारस्य [7]टीकां न्यायकालिकां गणयति गुणरत्नः षड्दर्शनसमुच्चयव्याख्याने।

( ८ ) ज्ञानश्रीमित्रप्रभृतयो भासर्वज्ञं वाचस्पतिं चालोचयन्तोऽपि जयन्तसदृक्षमतिदक्षं प्रतिपक्षिणं न प्रतिक्षिपन्तीति स तेभ्यः परः।

---

१. द्र० सतीशचन्द्रविद्याभूषणस्य न्यायशास्त्रेतिहासः ( पृ० १४१ )।

२. "तदपि परिहृतमाचार्यैर्जातं च सम्बद्धं चेत्येकः काल इति वदद्भिः" ( न्या० मं० पृ० ३१२ )। तच्च वदनं तात्पर्यटीकायामुपलभ्यते—"जातश्च सम्बद्धश्चेत्येकः कालः" ( ता० टी० पृ० ३८५ )।

३. "यथा माघेन वर्णितम्" ( न्या० मं० पृ० ८४ )।

४. यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥
इदं पद्यं भामत्यां अ० २ पा० १ सू० ११—इति गंगाधरशास्त्रिटिप्पणम् ( न्या० मं० पृ० १२० )।

५. द्र० न्या० मं० पृ० ६६,७८ टिप्पणम्।

६. तारीखेहसननाम्नि पारसीकेतिहासे ( खं० २ पृ० १०३ ) शंकरवर्मणः समयः ९४९ विक्रमाब्दोऽवधारितः।

७. "भासर्वज्ञप्रणीते न्यायसारेऽष्टादश टीकाः। तासु मुख्या टीका न्यायभूषणाख्याः, न्यायकलिका जयन्तरचिता" ( षड्० स० वृत्ति० पृ० ९४ )।

द्वितीयः पक्षः —

म० म० पं०[१] गोपीनाथकविराजप्रमुखाः संख्यावन्तस्तत्र क्षमन्ते, यतः—

( १ ) वाचस्पतिवाक्यानुपूर्वीभेदात् तदानुपूर्वीकं वाक्यं कस्यचिदपरस्याचार्यस्य सम्भवेत्।

( २ ) माघकवेः समयो नावधारित इति ९०५ ई० कालात् पूर्वभावी भवेत्।

( ३ ) भामत्या क्रोडीकृतमपि तत्पद्यं भर्तृहरेर्वाक्यपदीयस्य, न तु वाचस्पतेः।

( ४ ) वाचस्पतिग्रन्थेषु तदुद्धरणानुपलब्धेरत्राचार्यपदेन ग्रहीतुमशक्यत्वात्तस्य।

( ५ ) न्यायसूचीनिबन्धे वाचस्पत्युक्तस्य वस्वङ्कवसुवत्सरस्य [२]शब्दाब्दत्वे ( ८९८-७८= ) ९७६ ई० समये वर्तमानस्य वाचस्पतेस्तत्पूर्वत्वात्।

( ६ ) मुक्तापीडस्य राज्ञः प्रामाणिकः समयः ७५४ विक्रमाब्दः[३] [=६९७ खृष्टाब्दः ]। शक्तिस्वामिनः पुत्रः कल्याणस्वामी, तस्य चन्द्रः, तस्य जयन्त इति ६९७+५०=७४७ खृष्टाब्दे जयन्तः समायाति।

( ७ ) जयन्तस्य न्यायकलिका समुपलब्धा सरस्वतीभवनात् १९२५ खृष्टाब्दे प्रकाशिता। सा न न्यायसारस्य व्याख्या, अपि तु अक्षपादप्रोक्तषोडशपदार्थ तत्त्वं कलयति सरलं बालोपलभ्यम्। तथा चोक्तं कलिकोपसंहारे—

षोडशपदार्थतत्त्वं बालव्युत्पत्तये कथितम्।
अजातरसनिष्पन्दमनभिव्यक्तसौरभम्॥

---

१. द्र० सरस्वतीभवनस्टडीज़ खं० ३ पृ० १०३।

२. तथा चोक्तं श्रीयुक्तानन्तलालठक्कुरेण—"जयन्तश्च काश्मीराधिपस्य शंकरवर्मणोऽमात्यपदमलञ्चकारेति जयन्तकृतादागमाडम्बरनाटकात् परिज्ञायते। अयं शंकरवर्मा खृष्टीयपञ्चाशीत्यधिकाष्टशततमाब्दात् प्रभृति द्व्यधिकनवशततमाब्दं यावत् काश्मीरमहीं भुनक्ति स्मेतीतिवृत्तविदां मतम्। न्यायवार्तिकतात्पर्यटीकापरिशिष्टभूतो न्यायसूचीनिबन्धस्तु तदनुसारं न वस्वङ्कवसुमिते विक्रमाब्दे [ ८४१-२ खृष्टाब्दे ] जनिमर्हति, परन्तु तत्सङ्ख्यकशब्दसंवत्सरे [ =९७६-७७ खृष्ट ] इति द्रष्टव्यम्" ( ज्ञानश्रीनिबन्धावलिप्रस्तावनायां ४४ पृष्ठे )।

३. द्र० तारीखेहसननाम्नीतिहासे पारसीकलिखिते ( स्वे० २ पृ० ८२ )।

गुणरत्नवाक्ये तथान्वयावगमोऽभवद् भ्रमादिति मन्येऽतः तद्वाक्यमिहालोचनीयम्। "एषां नैयायिकानां तर्कग्रन्थाः न्यायसूत्रन्यायभाष्यन्यायवार्तिकतात्पर्यटीकातात्पर्यपरिशुद्धिन्यायालङ्कारवृत्तयः क्रमेण वात्स्यायनोद्योतकरवाचस्पत्युदयनश्रीकण्ठाभयतिलकोपाध्यायविरचिताः। भासर्वज्ञप्रणीते न्यायसारेऽष्टादश टीकाः, तासु मुख्या टीका—न्यायभूषणाख्या। न्यायकलिका जयन्तरचिता। न्यायकुसुमाञ्जलितर्कश्च" (षड्० स० वृत्ति० पृ० ९४)। अत्र न्यायसारस्य टीकासु प्राधान्यावद्योतनाय न्यायभूषणनाम्नीमेकामेव टीकां निर्दिदेश, न तु तदन्याः टीका गणयतिस्म। अतो न्यायकलिकाया न तट्टीकात्वेन निर्देशः, अपितूपक्रान्तस्वतन्त्रतर्कग्रन्थत्वेन। एवमेव न्यायकुसुमाञ्जलितर्कस्यापि स्वतन्त्रग्रन्थत्वेन कीर्तनम्, न तु कस्यचिट्टीकात्वेन।

( ८ ) विश्वरूपाध्ययनपादादिवत् प्रतिख्यतत्वेऽपि जयन्तस्य न ज्ञानश्रीपूर्ववर्तित्वमपलपितुं शक्यते। शंकरभासर्वज्ञत्रिलोचनवाचस्पत्यद्यादीनेवाचार्यान् न्यायसौधद्धस्तभान् मन्वानोः ज्ञानश्रीमित्रः समुन्मूलयति। तथा चाह—

दुर्णीताश्रमवेदिकादृढतरस्तम्भानमून् शंकर-
न्यायालङ्करणत्रिलोचनवचस्पत्याह्वयान् हेलया।
उन्मूल्य क्षणभङ्ग एष विहितो यत्पुण्यमाप्तं मया
तेन स्तात् परपारगस्त्रिभुवने ज्ञानश्रियोऽयं जनः॥

( ज्ञान० नि० पृ० १५६ )।

यदि ज्ञानश्रीनिबन्धेऽनुल्लेखाज्जयन्तस्य ज्ञानश्रीमित्रात्परभावित्वम् तदा जयन्तग्रन्थेष्वनुल्लेखाद् ज्ञानश्रीमित्रस्य परवर्तित्वं किन्न स्यात् ?

( ९ ) तात्पर्यटीकायां जयन्तपरामर्शो[1] जयन्तस्य पुरातनत्वमातनोति।

**अस्माकं पक्षः —**

वयं तु जयन्तभट्टस्य भासर्वज्ञात् पूर्वभावित्वमिह निवेदयितुमभिलषामः, केवलं यतः—

( १ ) यदि भासर्वज्ञात् परभावी भट्टजयन्तोऽभविष्यत्, तदा त्रिप्रमाण-

---

१. तथा च संगिरते जरद्गवीगवेषणानिष्णातः समाहितो विद्वान् अनन्तलालठक्कुरशर्मा—"न्यायवार्तिकतात्पर्यटीकायां ( १-१-६ ) जरन्नैयायिकस्य जयन्तभट्टस्य मतं वाचस्पतिना परामृष्टमिति तात्पर्यपरिशुद्धावुदयनाचार्योक्तिः" ( ज्ञानश्रीनिबन्धावलिप्रस्तावना पृ० ४४)।

वादिनिरूपणप्रसङ्गेऽवश्यं भासर्वज्ञमुपन्यस्य निरासिष्यत्। चर्चति च केवलं सांख्यम् "त्रीणि प्रमाणानीति सांख्याः" ( न्या० मं० पृ० २८ )।

( २ ) उपमाननिरूपणप्रसङ्गे, भासर्वज्ञीयमुपमानावधीरणापराधं न क्षमेत परभावी जयन्तभट्टः।

( ३ ) दिक्कालसमर्थनावसरे[1] जयन्तो भासर्वज्ञस्य दिक्कालावहेलनं नालभते-ऽतः स पूर्वभावी।

( ४ ) "नित्यं सुखमात्मनो महत्त्ववन्मोक्षे व्यज्यते" (न्या० भा० १-१-२२) इति पक्षिलस्वामिलक्षितं पक्षं वेदान्तिनामेव वदति जयन्तः—"तत्र वेदान्त-वादिन आहुः" ( न्या० मं० पृ० ५०६ ) इत्यादिना। तत्रात्मन इति षष्ठ्या अभेदार्थकत्वक्लिष्टकल्पनाऽपि कार्या, अत एव वाचस्पतिमिश्राः प्राहुः—"आत्मन इति षष्ठी राहोः शिर इतिवन्मन्तव्या" ( ता० टी० पृ० २३६ )। तत्र भासर्व-ज्ञीयनित्यसुखवन्मुक्तात्मनाऽनावर्जनं जयन्तस्य पूर्ववर्तित्वमुत्कुरुते।

( ५ ) भासर्वज्ञस्तु जयन्तवादाननुवावदीतीति विद्यते—

( क ) "ननु सत्यनुमानस्य प्रामाण्ये लक्षणाश्रयः।
कार्यो विचारो न पुनः प्रामाण्यं तस्य युज्यते॥

तथा चाहुः प्रमाणस्यागौणत्वादनुमानार्थनिश्चयो दुर्लभः" ( न्या० मं० पृ० ११८ ) "अनुमानस्य गौणत्वादिदोषेभ्यः प्रामाण्यमेव न सम्भवतीत्याहुः केचित्..प्रमाणस्यागौणत्वादनुमानादर्थदुर्लभः" (न्या० भू० पृ० २१०)।

( ख ) "विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात्।
तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः॥
देशकालदशाभेदविचित्रात्मसु वस्तुषु।
अविनाभावनियमो न शक्यो वस्तुमाह च॥"
( न्या० मं० पृ० ११६ )।

"धर्मश्चेत् साध्यः। स किं सामान्यलक्षण आहोस्विद् विशेषलक्षण इति ? किञ्चातः ? सामान्ये सिद्धसाध्यता, विशेषेऽनुगमाभाव इति। सामान्यस्याग्नि-मत्त्वानित्यत्वादिलक्षणस्य क्वचित् सिद्धत्वाद् व्यर्थं तत्साधनम्। देशादिविशिष्ट-स्यानन्वयादेवासिद्धिः" ( न्या० भू० पृ० २११ )।

---

१. दिक्कालौ समर्थितौ जयन्तेन—
तस्मादेकोऽप्ययं कालः क्रियाभेदाद्विभिद्यते।
एतेन सदृशन्यायात् मन्तव्या दिक् समर्थिता॥ (न्या० मं० पृ० १४०)।

( ग ) "यच्च विकल्पितम्--अशक्यं तद्ग्रहणमिति। तत्र केचिदाचक्षते "मानसं प्रत्यक्षं प्रतिबन्धग्राहीति" ( न्या० मं० पृ० १२१ )।

"अन्ये तु परिशेषबलेन मानसं प्रत्यक्षं व्याप्तिग्राहकं वर्णयन्ति" ( न्या० भू० पृ० २१७ )।

( घ ) "यतः शब्दं वाऽध्याहरिष्यामः—प्रत्यक्षफलपूर्वकं परोक्षार्थप्रतिपत्तिरूपं फलं यतो भवति, तदनुमानमिति" ( न्या० मं० पृ० १२६ )।

"अथवा तत्पूर्वकं यतः कर्मकर्तृवैलक्षण्याद् भवति, तदनुमानमिति" ( न्या० भू० पृ० १८६ )।

( ङ ) वादादिकथात्रयेऽपि पूर्वमुपादीयमानत्वात् पक्षः पूर्वशब्देनोच्यते, सोऽस्यास्त्याश्रयत्वेनेति पूर्वलिङ्गमित्येवमनेन पदेन पक्षधर्मत्वमुक्तं भवति। पक्षे उपयुक्ते सति शेषः सपक्षो भवति, सोऽस्यास्त्याश्रयत्वेनेति शेषवत्। एवमनेन सपक्षे वृत्तिरुक्ता भवति। सामान्यतोऽदृष्टमित्यनेन विपक्षाद् व्यावृत्तं लिङ्गमुच्येत। कथम्? अकारप्रश्लेषात् सामान्यतोऽदृष्टमिति। तिष्ठतु तावद्विशेषः, सामान्यतोऽपि न दृष्टम्। क्व इति? पक्षसपक्षयोर्वृत्तेरुक्तत्वात् परिशेषाद् विपक्षे सामान्यतोऽपि न दृष्टमित्युपतिष्ठते। इत्थं त्रिरूपं लिङ्गमेभिः शब्दैरुक्तं भवति, तदालम्बनं ज्ञानमनुमानम्" ( न्या० मं० पृ० १२७ )।

"पूर्वमुपादानात् पक्षः पूर्वशब्देनोच्यते, सोऽस्त्येव यस्य, तत्पूर्ववत् पक्षव्यापकं लिङ्गमुच्यते। शेष इति सपक्षः, उक्ताच्छिष्यमाणत्वादतः शेषवदिति सपक्षवदित्युक्तं भवति। सामान्यतोऽदृष्टं विपक्षे इत्यध्याहार्यम्। विपक्षे सामान्येनादृष्टं विपक्षशब्दाभिधेये सर्वत्राऽदृष्टमित्यर्थः। चशब्दोऽसत्प्रतिपक्षत्वाबाधितविषयत्वे समुच्चिनोति—एवं च [1]पञ्चरूपलिङ्गमुक्तं भवति।

( च ) "अथ सोपप्लवा वाक्याद् बुद्धिरित्यभिधीयते" ( न्या० मं० पृ० १४३ ),

[2]"ननु वाक्यादुपप्लुता प्रतिपत्तिरासीत्" ( न्या० भू० पृ० ४२० )।

( छ ) "संशयविपर्ययजनकनिराकरणाय च व्यवसायात्मकाव्यभिचारिपदयोरनुवृत्तिः" ( न्या० मं० पृ० १५० )

१. एतेन यज्जयन्तेन प्रोक्तम्—"पञ्च लक्षणमिह शास्त्रेऽभ्युपगम्यते, त्रिरूपे तस्मिन् वर्ण्यमाने कालात्ययापदिष्टप्रकरणसमयोः प्रसङ्गो न व्यावर्तते" ( न्या० मं० पृ० १२७ )। तन्निराकृतं भवतीत्यपि बोध्यम्।

२. अत्र जयन्तभासर्वज्ञावुभावपि वाचस्पतिप्रोक्ते ( ता० टी० पृ० १६८ ) परिप्लुतमतिवादे निराकुर्वन्ताविवालक्ष्येते ?

"प्रत्यक्षसूत्राद् अव्यभिचारिव्यवसायात्मकपदयोरिहानुवृत्तिर्द्रष्टव्या, ततो न संशयविपर्ययसाधनयोः प्रसङ्गः" ( न्या० भू० पृ० ३७६ )।

( ज ) "यथा वाह्यकेलिप्रदेशादावूर्ध्वत्वविशिष्टधर्मिदर्शनात् पुरुषेणानेन भवितव्यमिति प्रत्ययः" ( न्या० मं० पृ० ५८६ )।

"यथा [1]बाह्यालिप्रदेशे पुरुषेणानेन भवितव्यमित्यूहः" (न्या० भू० पृ० २०)

न केवलं जयन्तवादाननुवदत्ययं भासर्वज्ञाचार्यः, अपितु निराकरोतीव, यथा—"तत्पूर्वकपदमेव केवलमनुमानलक्षणमिति गुरवो वर्णयाञ्चक्रुः" ( न्या० मं० पृ० १२३ )। तदेतज्जयन्तगुरोर्मतं निराचष्टे—"अत्र तत्पूर्वकमित्येतावदेवानुमानलक्षणमिति न बुध्यामहे" ( न्या० भू० पृ० १९१ )।

## भूषणे समालोचिताः सांख्याचार्याः सांख्यमतवादाश्च

१. माधवः—

न्यायभूषणस्य ५६९ तमे पृष्ठे समुद्धृतोऽयं कश्चन प्राचीनः सांख्याचार्यः। मीमांसाश्लोकवार्तिकेऽस्य मतमुपन्यस्तम्—

क्वचिदस्या निषिद्धत्वाच्छक्तिः शास्त्रेण बोधिता।
प्रत्यवायनिमित्तत्वं विधानान्नापगच्छति॥
शास्त्रेण न हि शक्तीनासावापोद्धापनक्रियाः।
विद्यमाना हि कथ्यन्ते शक्तयो द्रव्यकर्मणाम्॥
तदेव चेदं कर्मेति शास्त्रमेवानुधावता।
हिंसादीनामधर्मत्वं कल्प्यते नानुमानतः॥

( श्लो० वा० १।२४६-५२ )।

तत्र पातनिकायां भट्टोम्बेको ब्रूते—"सांख्यनायकमाधवस्त्वाहेत्यादि।

"आगमभ्रंशकारिणामाहोपुरुषिकया तद्दर्शनविद्वेषेण वा तत्प्रतिपन्नखलीकरणाय धूर्तव्यसनेनान्यतो वा कुतश्चित्कारणादन्यथा रचनासम्भवात्।" इति धर्मकीर्तिस्वोपज्ञवृत्तिग्रन्थस्य व्याख्यानावसरे कर्णकगोमिनोक्तम्—"आहोपुरुषिकयेत्यहंमानित्वेन। यथा सांख्यनाशकमाधवेन सांख्यसिद्धान्तस्यान्यथा

---

१. "बाह्यालीप्रदेशे पुरुषेणानेन भवितव्यम्"—इति सप्तपदार्थीटीका (पृ० ३३)। बाह्यो य आलिप्रदेशस्तत्रेत्यर्थः। "आलीः सेतुः क्षेत्रद्वयसीमाव्यञ्जकः यथा—वा"—इति तट्टिप्पणम्। "यथा वाह्यालिन्दप्रदेशे पुरुषेणानेन भवितव्यम्"—इति प्रकरणपञ्चिकान्यायसिद्धिव्याख्या ( पृ० ४४ )।

रचनं कृतम्" ( प्र० वा० स्ववृत्ति० पृ० ५९५ )। अतो ज्ञायतेऽस्य माधवाचार्यवराकस्य 'सांख्यनाशकः'--इति कटाक्षपूर्णा पदवी समासीत्। भट्टोम्बेकधृतपाठेऽपि सांख्यनायकस्थाने सांख्यनाशकेति भवेद्यदि, नाश्चर्यं मनागपि। न्यायभूषणकारोऽपि तामेव पदवीं विवृण्वन्निवाह—"माधवमते तु सांख्यनाश एव स्यात्" ( न्या० भू० पृ० ५६६ )।

## २. सांख्यमतवादः—

"कपिलस्यापि सर्वज्ञत्वम्, नैसर्गिकज्ञानातिशयप्रभावातिशययुक्तत्वात्" ( न्या० भू० पृ० १६३ ) इत्यादिना कपिलं संस्मरन्नपि न तत्सूत्रमुद्धरति, किन्तु ईश्वरकृष्णस्य सांख्यसप्तति पुरस्कृत्य सांख्यमतमुपन्यस्यत्यत्र श्रीभासर्वज्ञः। तद्व्याख्याप्रसङ्गे, माठरवृत्ति जयमङ्गलाव्याख्यां चानुसरति।

| न्यायभूषणम् | सांख्यकारिकाव्याख्या |
|---|---|
| १—यथा व्रीहौ संश्लिष्टानां मूलाङ्कुरपर्णनालकाण्डप्रसवशूकतुषपुष्पक्षीरतण्डुलकणानां परिमाणं दृष्टम् ( पृ० ५६२ पं० २३ )। | यथा मूलाङ्कुरपत्रकाण्डप्रसवपुष्पतुषतण्डुलकणानां भेदानां व्रीहिः ( ज० मं० पृ० २० पं० २० )। |
| २—तथा च पञ्चीकृतानां भेदानामस्ति परिमाणम्—एकादशेन्द्रियाणि, पञ्च तन्मात्राणि, पञ्च भूतानि, पञ्च विपर्ययभेदाः ( पृ० ५६३ पं० १ )। | एवं व्यक्तं परिमितम्—एका बुद्धिः, एकोऽहङ्कारः, पञ्च तन्मात्राणि, एकादशेन्द्रियाणि, पञ्च महाभूतानीति ( माठर० पृ० २६ पं० १ )। |
| ३—कार्यकारणभावशब्देनोपकार्योपकारकभाव उच्यते। उपकार्योपकारकभावेनावस्थितानां ह्येककारणप्रभवत्वं दृष्टम् (पृ० ५६३ पं० १५)। | यदुपकरोति तत्कारणम्, यदुपक्रियते तत्कार्यम्, तयोर्विभागाद् उपकार्योपकारकभावादित्यर्थः ( ज० मं० पृ० २२ पं० १ )। |
| ४—सात्त्विकानामेकं कार्यम्—प्रसादलाघवप्रसवाभिष्वङ्गोद्धर्षप्रीतयः, राजसानामेकं कार्यम्—शोषतापभेदस्तम्भोद्वेगापद्वेषाः।...तामसानामेकं कार्यम्—वरणसादनापध्वंसबीभत्सदैन्यगौरवाणि (पृ० ५६४-६५ )। | प्रीतिस्वाभिष्वङ्गलाघवानि प्रसादहर्षौ च, स्तम्भोद्धत्यद्वेषचलनशोषणतापभेदाश्च, वरणापध्वंसनसादनगौरवदैन्यभीतयश्चैतानि सत्त्वरजस्तमसां क्रमेण ज्ञातव्यानि लिङ्गानि ( ज० मं० पृ० १९ पं० १ )। |

## भूषणेऽनमृष्टा अन्ये वादिनो वादाश्च

१. वैशेषिकाः —

कणादं काणादसूत्रं प्रशस्तपादभाष्यं च परामृशति भूषणकारः। भासर्वज्ञीयप्रतिपादनस्य क्वचित् शिवादित्यप्रतिपादनेन साम्यमुपलभामो यथा—

( क ) "अनवधारणज्ञानं संशयः" ( न्या० भू० पृ० १२ ) "अनवधारणज्ञानं संशयः" ( सप्त० पृ० ७२ )।

( ख ) "ऊहानध्यवसाययोर्न संशयादर्थान्तरभावः" (न्या० भू० पृ० २०) "ऊहानध्यवसाययोस्तु संशये एव" ( सप्त० पृ० ३३ )।

( ग ) "वाक्यस्योपचारेणानुमानत्वाभिधानात्" ( न्या० भू० पृ० २७३ ) "शब्दस्याप्यनुमानविषयत्वेनाविनाभावोपजीवकत्वेन वाऽनुमानत्वम्" ( सप्त० पृ० ६९ )।

( घ ) "असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः" ( न्या० भू० पृ० ३०८ )।

"तदाभासा असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः"। ( सप्त० पृ० ३० )।

२. मीमांसकाः —

जैमिनिं कुमारिलभट्टं प्राभाकरवादं चोद्धरति। जैमिनिं सर्वज्ञमपि मनुते— "जैमिनेरपि सर्वज्ञत्वात्तत्सूत्राणां वचनमात्रत्वमयुक्तम्" (न्या० भ० पृ० १६३)

३. वेदान्तिनः —

अद्वैतपराणि श्रुतिशिखरवाक्यान्युद्धृत्य द्वैते तात्पर्यं वर्णयति। तथापि व्यासस्य सर्वज्ञतां श्रद्धत्त एव—"शारीरकसूत्रप्रणेतुरपि सर्वज्ञत्वम्, अतीन्द्रियज्ञानदातृत्वात्। तथा चोक्तम्—

दृष्टिश्चातीन्द्रिया राजन् दूराच्छ्रवणमेव च।
पितुः प्रसादान्मे प्राप्तं पाराशर्यस्य धीमतः ॥" (भू० पृ० १६३)

४. शैवाः —

शैवग्रन्थानां प्रामाण्यं प्रतनोति। शूद्राणामपि तत्राधिकारमङ्गीकरोति भासर्वज्ञः—"शैवसिद्धान्तादीनामप्यपौरुषेयत्वप्रसङ्गात्। तत्रापि हि मन्त्राः फलदायिनः सन्ति। तेऽपि वैदिका एवेति चेत्. न; शूद्राणामपि फलदायित्वात्" ( न्या० भू० पृ० ४०३ )।

५. सन्दिग्ध आचार्यः —

तौसलाचार्यो भासर्वज्ञेन परामृष्टः—"तौसलाभिप्रेतार्थसिद्धिप्रसङ्गात्" (न्या० भू० पृ० २७७ )। अस्याचार्यस्य विषये न किञ्चिज्ज्ञायते। अस्य वाक्यविचारे

मतविशेषमप्याविष्करोति न्यायभूषणः--"सन्तानेनाकाशे वर्तमानाः क्रमविशिष्टा युगपन्मनसाऽनुभूता ( वर्णाः ) पदमिति तौसलः" ( न्या० भू० पृ० २७८ )।

६. सौगताः --

नागार्जुन-वसुबन्धु-दिङ्नाग-धर्मकीर्ति-प्रज्ञाकर-धर्मोत्तर-शान्तरक्षित-कमलशील-कर्णकगोमिपर्यन्ता आचार्याः संस्मृता अत्र । केषांचिन्नाम निर्दिष्टं केषांचिच्च ग्रन्थसन्दर्भाः समुद्धृताः । एतेषां क्षणभङ्ग-साकारविज्ञान-निर्हेतुकनाश-द्विविधप्रमेयप्रमाणतादिवादान् निरस्यत्ययं प्रखरतरतर्कप्रकरैः ।

७. जैनाः —

उमास्वाति-सिद्धसेनदिवाकर-समन्तभद्र-अकलङ्कदेवादीनां वचांसि समुद्धरति भूषणकारः । स्याद्वादमपवदति दुर्दान्तयुक्तिभिः ।

८. चार्वाकाः —

सुरगुरुसूत्रमत्र समुद्धृतम् । तत्त्वोपप्लवसिंहस्य वाक्यान्यपि समुपलभ्यन्ते ।

## न्यायभूषणस्य प्रचयगमनम्

समग्रेषु श्रौताश्रौतदर्शनेषु प्रचुरं प्रचारमुपलभामहे । भावनाविवेकटीका-प्रकरणपञ्चिकाव्याख्यादिमीमांसाग्रन्थेषु, गीतानन्दवर्धिनी-खण्डनखण्डखाद्यव्याख्या-तत्त्वप्रदीपिका-न्यायचन्द्रिकादिवेदान्तशास्त्रेषु, न्यायकुसुमाञ्जलि-तार्किकरक्षा-तर्कभाषाप्रकाश - न्यायलीलावती-किरणावली - उपस्करादिन्यायवैशेषिक-निबन्धेषु, सौगतेषु ज्ञानश्रीरत्नकीर्तिनिबन्धेषु, न्यायविनिश्चयविवरण-सिद्धिविनिश्चयटीका-स्याद्वादरत्नाकरस्याद्वादमञ्जरीप्रभृतिजैनग्रन्थेषु, षड्दर्शनसमुच्चय-वृत्तिसर्वदर्शनसंग्रहादिषु चास्य मन्तव्यानि समालोचितानि विद्यन्ते । अष्टादश-टीकापरिवारसमृद्ध्याऽप्यस्य समृद्धिं संबुध्यामहे ।

## उपसंहारः

माननीयोदासीनप्रवराणां श्रीस्वामिसत्यस्वरूपशास्त्रिमहाभागानामाभारभरं निर्भरं स्मरामि । एकैवासीदस्य पाण्डुलिपिः कुत्रचित्, श्रीस्वामिसर्वज्ञमुनि-वर्यसाहाय्येन तत्प्रतिलिपिं कारयित्वा शास्त्रिमहोदयैरेव मह्यं प्रदत्ताऽस्य मातृका; ततोऽस्य जीर्णोद्धरणपुण्यप्रसूनैर्भगवन्तं विश्वेशानमाराधयितुं समर्थोऽभवदयम्-

विद्वज्जनविधेयः

स्वामी योगीन्द्रानन्द

उदासीनसंस्कृतमहाविद्यालयः

ढुण्ढिराज, वाराणसी

गणतन्त्रदिवसः १९६८ ई०

# विषय-सूची

अ. व. द्वि.
१८-१०-६८

# न्यायसारः

## : १ :

## प्रत्यक्षपरिच्छेदः

प्रणम्य शम्भुं जगतः पतिं परं, समस्ततत्त्वार्थविदं स्वभावतः ।
शिशुप्रबोधाय मयाभिधास्यते, प्रमाणतद्भेदतदन्यलक्षणम् ॥

---

## न्यायभूषणम्

[1]उमापतिं सर्वजगत्पतिं सदा, प्रणम्य निर्वाणदमीश्वरं परम् ।
गुरूंश्च सर्वाननुमोक्षसिद्धये, प्रवक्ष्यते न्यायसदर्थसंग्रहः ॥

---

### पादटिप्पणम्

गवेषयन्तु रत्नानि, भूषणभूरिलालसाः ।
स्वामिसत्यस्वरूपेण, सोऽयं लब्धो महाम्बुधिः ॥
अस्य चिरप्रतीक्ष्यस्य, योगीन्द्रानन्द इत्ययम् ।
पादटिप्पणरूपेण, पादचर्यां विधित्सति ॥

१. तिरयिष्याम्यन्तरायपक्षात्, क्षपयिष्यामि प्रतिपक्षमलान्, विमलमलङ्करिष्याम्यान्वीक्षिकीमण्डलमिति प्रवृत्तोऽयं महान् पाशुपताचार्यनागो भासर्वज्ञो निसर्गसर्वज्ञमीश्वरं प्रणमति प्रगुणयति च सौत्रं वस्तु—उमापतिमिति । न्यायशास्त्रोक्तानां सतां समीचीनानां प्रमाणादिपदार्थानां संग्रह इति यथान्यायाभिनिवेशं वासम्, गुरून् प्रणम्येतिचर्याम्, उमापतिं सर्वजगत्पतिं निर्वाणदमीश्वरमिति रुद्रतत्त्वे सदृशचिन्ताप्रवाहं ध्यानम्, सदा प्रणम्येश्वरमिति सदारुद्रस्मृतिं निर्वाणदेतिविशेषणेन तत्प्राग्भूतं दित्साप्रसादम् च समसूसुचत् । त एते पञ्चोपायाः पाशुपतशास्त्रसम्मताः समनुक्रान्ता वेदितव्याः । मोक्षसिद्धय इति कण्ठतो दुःखान्तं लाभमभ्यधात् । इत्थं प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इति सौत्रोऽर्थः समर्थितो भवति । प्रवक्ष्यते=प्रकर्षेण वक्ष्यते व्याख्यास्यते इति यावत् । 'न्यायार्थसंग्रहः', 'न्यायसंग्रहः', 'संग्रहः'—इति न्यायसाराभिधस्य मूलग्रन्थस्य नामनिर्देशः । अनुपदमेव हि प्रक्ष्यति—"संग्रहे कस्मान्नोक्तमिति", वक्ष्यति च परिच्छेदान्ते भूषणं संग्रहवार्तिकमिति ।

## ❀ मङ्गलाचरणस्य विघ्नोत्सारणद्वारा समाप्तिसाधनता ❀

[1]तस्यादौ 'प्रणम्य'—इत्यादि वाक्यं मङ्गलार्थं सम्बन्धप्रयोजनाभिधेयप्रतिपत्त्यर्थं च। प्रणामकृतेन हि मङ्गलेन [2]अधर्मप्रतिबन्धकेनाधर्ममूला विघ्नविनायकाः प्रोत्सार्यन्ते, ततः शास्त्रपरिसमाप्तिरित्यर्थवान् प्रणामः। [3]यत्र तु न समाप्तिस्तत्र प्रणामस्य [4]असम्यक्त्वमनुमेयं कर्त्तुरधर्मबाहुल्यं वा। न चैवमसामर्थ्यमेव प्रणामस्य, अन्यत्र सामर्थ्यात्। न हि [5]प्रदीप्तहस्तिशालाग्न्युपशमासमर्थस्य कुम्भशतोदकस्यान्यत्राप्यसामर्थ्यं दृष्टम्। [6]यत्राप्यन्तरेण प्रणामं शास्त्रपरिसमाप्तिर्दृष्टा तत्रापि मानसः कायिको वा प्रणामोऽनुमेयः, साधनान्तरसाध्यो वा धर्मः। [7]वाचिकप्रणामे त्वन्येषामप्युपदेशसिद्धिः स्यात्। सर्वापि क्रिया महेश्वरप्रणामपूर्विकैव मुमुक्षुणा विशेषेणैव कर्त्तव्या, येन शास्त्रपरिसमाप्तिवद् [8]मोक्षसमाप्तिरप्यविघ्नतः स्यादिति। अथ विघ्नहेतुरधर्म एव नास्ति, धर्मो वास्ति [9]तत्प्रतिबन्धकः पूर्वकृतः। तथापि तदाशङ्कया कर्त्तव्य एव प्रणामः, शत्र्वाद्याशङ्कयाऽस्त्रादिसंग्रहवदिति।

## ❀ सम्बन्धाद्यभिधानस्यावश्यकता ❀

श्रोतृप्रवृत्त्यर्थं [10]सम्बन्धाद्यभिधानम्, [11]अर्थसंशयद्वारेण प्रवृत्तिहेतु-

---

१. तस्य = न्यायसारापरपर्यायस्य संग्रहस्य।

२. अधर्मप्रतिबन्धकेन=अधर्मनाशकधर्मजनकेन। एवमेवोक्तमपरत्रापि—"नमस्काराच्च धर्मविशेषः ततो विघ्नहेतोरधर्मस्य क्षयः, ततो हेत्वभावाद् विघ्नानुत्पत्तौ प्रारिप्सितकार्यसमाप्तिरिति" ( ब्र० सि० व्या० पृ० १ )।

३. यत्र = कादम्बर्यादौ।

४. असम्यक्त्वम् = मनःप्रणिधानाद्यपेतत्वम्।

५. प्रदीप्तायाः = दह्यमानायाः हस्तिशालाया ज्वालाजटिलमुपशमयितुमनर्हमपि कुम्भशताम्भः प्लुष्यमाणक्षुल्लकशालानलमलं शमयत्येव।

६. यत्र = शाबरभाष्यादौ।

७. नन्वेवं मानसं कायिकं वा मङ्गलमाकलय्यैव विरमेत कृतमनेन वाचसिकनमस्कारायासेन ? इत्यत आह—वाचिकेति।

८. मोक्षसमाप्तिः = मोक्षस्य सम्यग् आप्तिः प्राप्तिरिति यावत्।

९. तत्प्रतिबन्धकः = तस्य विघ्नहेतोरधर्मस्य प्रतिबन्धकः।

१०. सम्बन्धाद्यभिधानमिति। आदिनाऽभिधेयप्रयोजने समाहरति।

११. प्रवृत्तिकरणे कथंभावाकांक्षां शमयति—अर्थसंशयद्वारेणेति। अर्थसंशयद्वारेणापीति

त्वात्। [1]तदनभिधाने त्वनर्थसंशयोऽपि निवृत्तिहेतुः स्यात्, [2]प्रतिज्ञाताप्रतिज्ञातभोजनगृहयोः प्रवृत्तिनिवृत्तिवत्। [3]न चानवस्था, प्रथमं जिज्ञा-

ग्राह्यम्। अयमभिसन्धिः—केचन मन्दाः केचनामन्दाश्च श्रोतारो भवन्ति। तत्र ये तावन्मन्दाः श्रद्धाभरमन्थरतरतर्कप्रचाराः, ते शास्त्रकृत आदिवाक्यात् निश्चित्यैवाभिधेयाद्यर्थजातं प्रवर्त्स्यन्ति, इतरे तु मीमांसननिकषोपलप्रेक्षामन्तरेण सहसैवाचार्यवचःसुवर्णेषु न श्रद्दधीरन् संशयीरंश्चार्थेषु। तेऽपि प्रवर्तेरन् प्रबन्धाध्ययने, अर्थसंशयस्यापि प्रवृत्त्यङ्गत्वात्। तथैव प्रवर्तमानाः कृष्यादौ कृषीवला अवलोक्यन्तेतराम्। अमुमेवार्थमभ्यधाद् धर्मोत्तरोऽपि—"अर्थसंशयोऽपि हि प्रवृत्त्यङ्गं प्रेक्षावताम्" (न्या० वि० पृ० १३)। कमलशीलोऽपि पञ्जिकायां पिपिञ्जे—"संशयेनापि प्रवृत्तिदर्शनात्" (त० सं० पृ० ३)। आचार्यवाचस्पतिरप्यब्रवीत्—"विनिश्चितासभावाश्च मुनेराप्तत्वेन तद्वाक्यात् प्रयोजनादि विनिश्चित्य प्रवर्त्स्यन्ति। आप्तत्वानिश्चये त्वर्थसंशयात्" (ता० टी० पृ० ३–४)।

१. नन्वर्थनिश्चयो निवृत्तिं निर्वर्तयन् प्रवृत्तिं प्रतिबध्नाति। अभिधेयाद्यनभिधाने त्वनर्थनिश्चयो न जायेत, ततः प्रतिबन्धकाभावादेव प्रवृत्तिर्भविष्यति, मुधा तदर्थमभिधेयाद्यभिधानमित्यत आह—तदनभिधानेति। अनर्थनिश्चयवद् अनर्थसंशयोऽपि निवृत्तेर्हेतुः प्रवृत्तेश्च प्रतिबन्धकः। तस्मिन् सत्यपि प्रवृत्तिर्न जायतेऽतस्तन्निवृत्त्यर्थमभिधेयाद्यभिधानमवश्यमेव कार्यमिति भावः।

२. प्रतिज्ञातेति। प्रतिज्ञातभोजनके गृहे भोजनार्थी प्रवर्तते, तत्कस्य हेतोः? अर्थज्ञानसत्त्वात्। अप्रतिज्ञातभोजनकाद् गृहान्निवर्तते, अनर्थज्ञानसत्त्वाद्। अतः संशयनिश्चयसाधारणमर्थज्ञानमात्रं प्रवृत्तौ हेतुः। तथैवानर्थज्ञानं निवृत्तौ हेतुरिति स्थितम्। आचार्यवाचस्पतिरप्येवमाह—"अर्थप्रतीत्यधीना तु प्रवृत्तिर्नार्थावधारणाधीनेति" (ता० टी० पृ० ११)

३. न चानवस्थेति। अन्योऽन्याश्रयादेरप्युपलक्षणम्। तथैवाचार्यः शशङ्के—"दुरुत्तरत्वमितरेतराश्रयत्वम्—प्रवृत्तो हि प्रयोजनं निश्चिनुयात्, निश्चितप्रयोजनश्च प्रवर्तेत। प्रथमवाक्ये एव प्रयोजनानिश्चयेन प्रवृत्त्यनुपपत्तेः। तत्रापि प्रवृत्त्यर्थं प्रयोजनान्तराभिधानेऽनवस्था" (ता० परि० पृ० ३६)। एवमेव "यावत् प्रयोजनं नोक्तं तावत् तत्केन गृह्यते" (श्लो० १।१२) इति कौमारिले वचने स्थितं धर्मोत्तरं निराचष्ट भट्टार्चटो हेतुबिन्दुटीकायाम्। तस्याशयमाविष्कुर्वन् दुर्वेकमिश्रोऽब्रवीत्—"यद्यर्थसंशयं प्रकरणे प्रवृत्त्यङ्गं कर्तुमभिधेयादीन्यभिधीयन्ते, तर्हि तत्रैवादिवाक्ये कथं प्रवृत्तिः? व्याख्यातृवचनात् तत्र प्रवृत्तौ प्रकरणेऽपि का क्षतिः?" (हे० बि० आ० पृ० २४२)।

सातः[1] [2]का(य)पीडयापि प्रवृत्तेः सम्भवात्। [3]उत्तरोत्तरप्रवृत्तौ पुनः प्रयासभूयस्त्वं मन्यमानः सम्बन्धाद्यभिधानं प्रेक्षावानपेक्षते। न च सम्बन्धादिमात्रं निःश्रेयसार्थिनां प्रवृत्तिनिमित्तं, किं तर्हि ? तदभिप्रेतं प्रयोजनं प्रयोजनोपायादिसंज्ञितं चाभिधेयम्। [4]ताभ्यां शिष्याचार्याभ्यां च सह शास्त्रस्य सम्बन्धश्चेति। तथा च [5]सूत्रम्--"प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगमः" इति। अत्र शास्त्रशिष्याचार्याणां न्यायलभ्यत्वान्नाभिधानं कृतम्, व्याख्यात्रा तु

---

१. तामिमामनवस्थां भञ्जयति भासर्वज्ञः—प्रथममिति। किमस्मिन् आदिवाक्ये निहितमिति जिज्ञासामान एव प्रवर्तमानः प्रेक्षावान् नापेक्षतेऽपरं प्रयोजनपरं वाक्यम् अतो नानवस्था। यद्वा आदिवाक्यस्य मृत्युञ्जयनमस्कारात्मत्वात्, तत्र कामपि कायपीडां शमयितुमपि प्रवर्तिष्यते।

उदयनाचार्यास्तु प्राहुः—साधनविषयिणी येच्छालक्षणा प्रवृत्तिस्तत्रेष्टसाधनत्वज्ञानमपेक्ष्यते, किन्तु सुखादिप्रयोजनावगाहिनी, सा स्वरसवाहिनी, नापरं प्रयोजनवत्ताज्ञानं प्रतीक्षते। तदिदमेव समाधानमन्वावादीत् हरिभद्रोऽप्यभिसमयालङ्कारालोके—"अनवस्थापि नैवम्, तथा ह्यभिमतार्थपरिसमाप्त्या पुरुषस्याकाङ्क्षाविच्छेदादतो नापरमूर्ध्वं प्रयोजनं मृग्यमिति" (प्र०पा० अभि० पृ० ३)।

२. कायपीडेति सन्दिग्धः पाठः। कापीडयेति पाठे ईषत् पीडा=कापीडा तयेत्यर्थः।

३. स्यादेतत्—आदिवाक्ये चेज्जिज्ञासा प्रवर्तयित्री, तर्ह्युत्तरत्र प्रवृत्तावपि कस्तां रोत्स्यति ? तथा च सम्बन्धाद्यभिधानमपार्थमित्यत आह—उत्तरोत्तरेति। अयमत्राभिप्रायः—सुखादिप्रयोजनस्येच्छा स्वरसोत्था यथा, तथा न सर्वस्य। जिज्ञासा हि ज्ञातुमिच्छा। सापि कुत्रचिद् भवन्ती भवेत् स्वकारणग्रामादेव। तत्कल्पने महद्गौरवम्। किञ्चानुपन्यस्तप्रस्तावप्रयोजनादिके निबन्धे स्वाभिमतप्रयोजनोपायताविभ्रमेण प्रवर्तमानो मत्वा शीर्त्वा सुदूरं गतो ग्रन्थान्तेऽनभिमतं प्रयोजनं भावयन् व्यर्थश्रममात्मानं मत्वा लोको ग्लायत्येव केवलम्। एतेन यदर्चटप्रलपितम्—"अपि च किमिदं निष्प्रयोजनमुत प्रयोजनवत्, अथास्मदभिमतेन प्रयोजनेन तद्वदिति जिज्ञासोः प्रवृत्तिसम्भवे व्यर्थ एव प्रयोजनवाक्योपन्यासः" ( हे० वि० पृ० २ ), तन्निरस्तं वेदितव्यम्।

४. ताभ्याम्=अभिधेयप्रयोजनाभ्याम्, अस्य शास्त्रेण सम्बन्ध इत्यनेनान्वयः।

५. सूत्रमिति दण्डकमादिसूत्रं संक्षिप्यानुवदति। वार्तिककारोऽप्येवमेव परामृशति—"प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्येतच्छास्त्रस्यादिसूत्रम्" ( न्या० वा० पृ० १ )।

कर्त्तव्यम्; येन[1] प्रयोजनादिसम्बद्धमिदं शास्त्रम्, अयमाचार्य एतच्छास्त्रव्याख्याने योग्यः, अहमप्यत्र श्रवणाधिकारीत्येवं सम्भाव्यात्रैवाभिप्रेतार्थसिद्धिर्भविष्यतीति मन्यमानः श्रोता प्रवर्तते। [2]परं प्रयोजनं व्यवहितं निःश्रेयसाख्यं तदेव मुख्यं प्रवृत्त्यङ्गत्वेन संग्रहे[3] कस्मान्नोक्तमिति चेत्, न; प्रबोधाख्यस्य[4] प्रयोजनस्याभिधानादेव लब्धत्वात्, तदर्थत्वात्प्रबोधस्य; तदर्थत्वं चोत्तरत्र वक्ष्यामः। वेदसूत्रश्रुतितो वा तत्त्वज्ञानं निःश्रेयसहेतुत्वेन निश्चितं तेन तत्त्वज्ञानहेतावेव जिज्ञासा तदनुरोधेनापरमेव प्रयोजनमुक्तमिति।

सम्यगध्यात्मज्ञानरहितानामन्यशास्त्रोपाध्यायानामप्यत्रोपसन्नानां पुत्रवद् व्युत्पाद्यत्वज्ञापनार्थं शिशुग्रहणम्।

## ❀ अभिधेयभेदाः ❀

द्विविधमत्राभिधेयम्—प्रधानमप्रधानं च। तत्र प्रधानं प्रमाणादयः पदार्थाः, तल्लक्षणमप्रधानं; तन्निश्चयार्थत्वात् लक्षणस्य। प्रमाणादिष्वपि प्रधानं प्रमेयं, तत्राप्यात्मतत्त्वं; तदर्थत्वादितरेषामिति। लक्षणमेव प्रधानं प्राप्तं, [5]तत्पुरुषस्योत्तरपदप्राधान्यादिति चेत्, न; पूर्वपदप्राधान्यस्यापि दृष्टत्वात्, यथा

---

१. येनेत्यस्य श्रोता प्रवर्ततेत्यनेनान्वयः। अत्रत्यं शिष्याचार्यादिसम्बन्धाभिधानमालोचयद्भिरुदयनाचार्यैरुदीरितम्—"यावत्प्रतिपादिते प्रेक्षावत्प्रवृत्तिर्न स्यात् तावत्प्रदर्श्यते। न च शिष्याचार्यादिसम्बन्धास्तत्प्रवृत्त्यङ्गम्" (ता० परि० पृ० २३)। तन्नातीव मनोरमम्, यतः खलु "तदिदमभिधेयसम्बन्धप्रयोजनप्रतिपादनार्थत्वं प्रथमसूत्रस्य" (ता० टी० पृ० ३) इति वाचस्पतिवचसो नाभिधेयादित्रिकमात्रार्थत्वप्रदर्शने तात्पर्यम्, प्रेक्षावत्प्रवृत्त्यङ्गानुबन्धचतुष्टयज्ञानेऽवश्यापेक्षितस्याधिकारिणो "विनिश्चिताप्तभावाश्च" इत्यनुपदोपन्यासात्। तस्यैवाधिकारिणोऽधिकारसमुद्देशमिव विशारदीकरोति शिष्याचार्यादिसम्बन्धसंकीर्तनेनात्र। भगवान् सूत्रकारोऽप्यसूचयत्—"तं शिष्यगुरुसब्रह्मचारीत्यादि" (न्या० सू० ४।२।४८)।

२. प्रयोजनमिह द्विविधम्—परम्, अपरं च। परम्—निःश्रेयसम्, अपरम्—प्रकरणश्रवणायत्तं तत्त्वज्ञानम्। तत्र न्यायसारस्य प्रस्तावनवाक्ये परं प्रयोजनं कस्मान्नोपन्यस्तमित्याशंकते परमित्यादि।

३. संग्रहे=न्यायसारापरपर्यायस्य न्यायसंग्रहस्यारम्भे।

४. प्रबोधाख्यस्य=शिशुप्रबोधायेतिपदनिर्दिष्टस्येत्यादिः।

५. तत्पुरुषस्य=प्रमाणतद्भेदतदन्यलक्षणमिति समासभेदस्य।

[1]छात्रशतं भोजितमिति। भवतु वा लक्षणस्य प्राधान्यं तथा च सूत्रकारः प्रमाणादीनां तत्त्वमिति शैषिक्या षष्ठ्याऽर्थान्तरं तत्त्वमुक्त्वा "तत्त्वज्ञानान्निःश्रेयसाधिगम" इत्याह। तत्त्वं च प्रमाणादीनां लक्षणमेवोच्यते। प्रमाणादीनामविज्ञेयत्वमव्याख्येयत्वं च प्राप्तमित्येतदप्यचोद्यम्, न हि गोलक्षणे खुरककुदगोत्वसास्नादिसंज्ञिते गौरनिश्चितो भवति, प्रत्युत सुनिश्चित एव भवति। तथा हि—[2]स्वनिश्चयसामर्थ्यात् [3]पदार्थानां परस्परासंकरेण निश्चायको धर्मो लक्षणमित्युच्यते तदनिश्चये पदार्थानामप्यनिश्चय एवेत्यतः प्राधान्यं लक्षणस्येति।

## ※ प्रमाणादिलक्षणाभिधाने चार्वाकस्य निष्प्रयोजनत्वाशंका ※

ननु चोक्तम्—

**प्रसिद्धानि प्रमाणानि, व्यवहारश्च तत्कृतः।**
**प्रमाणलक्षणस्योक्तौ, ज्ञायते न प्रयोजनम्॥** (न्याया० २)

इत्येवं प्रमेयादिष्वपि वाच्यमिति। अनेनैतदुच्यते—नहि तावल्लक्षणेन लक्ष्यं क्रियते, गवादेः सास्नादिलक्षणैनैककालत्वदर्शनाद्, [4]आत्मादिलक्ष्यस्य च नित्यत्वात्। नापि ज्ञाप्यते, लक्षणाप्रसिद्धावपि लोके लक्ष्यप्रतीतिदर्शनात्, [5]अनवस्थाप्रसङ्गश्च दुर्निवारः स्यात्। अथ प्रवृत्तिनिवृत्तिरूपः, शाब्दो, बाध्यबाधकव्यवहारश्च प्रमाणादिषु लक्षणमन्तरेण न सिध्यतीति, न; तस्यापि सिद्धत्वात्। लोके बाध्यबाधकलक्षणोऽपि सिद्ध एवेति। संज्ञा नियमेनाप्रसिद्धेति चेत्, न; प्रसिद्धत्वात्। तथा हि स्त्रीशूद्रादयोऽपि ब्रुवन्तो दृश्यन्ते—त्वदीयं वचः प्रत्यक्षेणैव बाध्यत इत्येवमादि। तस्मात् प्रमाणादिलक्षणं निष्प्रयोजनमिति।

---

१. 'छात्रशतं भोजितम्'—अत्र पदार्थः पदार्थेनान्वेति नत्वेकदेशेनेति व्युत्पत्या भोजनपदार्थः छात्रपदार्थेनानुयन् छात्रपदार्थस्य प्राधान्यं गमयतीति भावः।
२. स्वम्=लक्षणम्।
३. पदार्थानाम्=लक्ष्यालक्ष्याणाम्। क्रियते = उत्पाद्यते।
४. ननु सास्नादीनामवयवानां गोश्चावयविनः कथमेककालत्वम्? जनका ह्यवयवा पूर्वक्षणभाविनो जन्यश्चावयवी परक्षणवर्तीति दोषान्तरमाह—आत्मादीति।
५. लक्ष्यं लक्षणाधीननिरूपणं लक्षणमपि लक्ष्यत्वादन्यलक्षणाधीननिरूपणं तदपि तथेत्यनवस्था।

## ❀ तस्या निरासः ❀

अत्र तावदुत्पत्तिपक्षेऽनभ्युपगम[1] एव परिहारः। प्रतिपत्तिस्तु लक्षणद्वारेण दृष्टैव गवादौ। तथा हि—बहुष्वपि गोष्वसाधारणलक्षण-दर्शनेनात्मीयां गां निश्चिनोति, लक्षणानभिज्ञस्तु [2]सन्दिह्यत इति। एवं सर्वत्र स्थावरजङ्गमरत्नादिविशेषेष्वप्युदाहरणं द्रष्टव्यम्। लक्षणस्यापि लक्षणान्तरेण निश्चये सत्यनवस्थेति चेत्, न; सन्देहविषय एव नियमाभ्युपगमात्। यत्रैव वस्तुनि सन्देहस्तत्रैव लक्षणोपलम्भपूर्वको निश्चय इत्ययं नियमोऽभ्युपगम्यते। न च सर्वत्र सन्देहोऽस्ति, न हि स्थाण्वादिष्विव [3]वक्रादि-विशेषेष्वपि सन्देह उत्पद्यते। तदभ्युपगमे च प्रत्यक्षादिविरोधः स्यात्। अथ कस्मात् स्थाण्वादिष्वेव सन्देहो भवति, न वक्रादिविशेषपरम्परा-स्वपीति? स्थाण्वादिषु सन्देहकारणसद्भावादितरत्रासद्भावादिति। न, अत्रापि [4]पर्यनुयोगाऽनिवृत्तेः, कस्मात् तद्विशेषपरम्परास्वपि सन्देहकारणं न भवतीति? वस्तुस्वभावैरत्रोत्तरं वाच्यम्।[5] ये एवं भवन्ति।

## ❀ अव्यापकादिधर्मस्यापि लक्षणत्वम् ❀

वयं तु यथादृष्टमर्थं ब्रुवाणा नोपलम्भमर्हामः। सन्देहविषयेऽपि निश्चयो विशेषदर्शनात्, न लक्षणदर्शनादिति चेत्, न; [6]विशेषाङ्कचिह्नलक्षण-शब्दानां पर्यायत्वात्। [7]अव्यापकातिव्यापकयोरपि लक्षणत्वप्रसङ्ग इति

१. अनभ्युपगम इति। लक्षणेन लक्ष्यं क्रियते इति पक्षो नाभ्युपगम्यत इति भावः।

२. सन्दिह्यते—सन्देग्धीति भावः।

३. वक्रादिविशेषे=वक्रकोटरादिविशेषे स्थाणुत्वस्य निश्चये सन्देहो न भवतीत्यर्थः।

४. पर्यनुयोगः = प्रश्नः।

५. ननु स्वभाववादनादप्रसारिकया सरण्या तु लक्षणं नितराम् निष्प्रयोजनं स्यात्। 'कस्मादत्र गोव्यवहारः ?' इति पर्यनुयोगे 'स्वभाव एष तस्य' इत्युत्तरमलं स्याल्लक्षणोपन्यासमन्तरैवेत्यत आह—ये इति। ये स्वभाववादनिर्भराः 'ते एवमुपलम्भमर्हन्तीति' शेषः।

६. विशेष इति। विशेषः, अङ्कः, चिह्नं, लक्षणम्—एते समानार्थका इत्यर्थः।

७. नन्वेवं यत्र कोऽश्वः, कश्च गौः ? इति प्रश्नयन्तं शिशुमुत्तरयति तत्पिता—'यो धावति सोऽश्वः, यो विषाणी स गौः।' तत्र धावनक्रियाऽश्वस्य विशेषः तल्लक्षणं स्यात्, स्याच्च विषाणित्वं विशेषो गोलक्षणम्। न च तत्सम्भवति, अव्यापकत्वातिव्यापकत्वात् तयोः। लक्षणं चाव्याप्त्यतिव्याप्तिरहितो धर्म उच्यते, इत्याशयवान् आशङ्कते—अव्यापकेत्यादि।

चेत्, न; अतिव्यापकस्यापि विशेषकत्वात्—विषाणाद्यपि केनचिद्वैलक्षण्येनावगम्यते यदा, तदा गोलक्षणत्वेनेष्टम्। अव्यापकोऽपि विशेषो लक्षणत्वेनाभ्युपगम्यते, यथा द्रव्यस्य क्रियावत्त्वम्; नहि क्रियावत्त्वमुपलभ्यमानं द्रव्यनिश्चयं न करोति। यदेव क्रियावत् तदेव द्रव्यमित्यभिप्रायवतः खल्वव्याप्तिदोष उद्भाव्यते निष्क्रियस्याकाशादेरद्रव्यत्वप्रसङ्ग इति। यत् क्रियावत् तद् द्रव्यमेवेत्यभिप्रायवतस्तु निरवद्यं लक्षणमिति। [1]एतेनेच्छाद्यात्मलक्षणम्, चेष्टाश्रयत्वं शरीरस्य, युगपज्ज्ञानानुत्पत्तिर्मनसः, विमृश्येत्यादि निर्णयस्य लक्षणं च व्याख्यातम्। लक्ष्यान्तरे तु मुक्तात्मादौ उक्तलक्षणाभावेऽपि लक्षणान्तरादात्मादिव्यवहारः सिध्यति। यथा क्रियावत्त्वाभावेऽपि आकाशादिषु गुणवत्त्वादिलक्षणाद् द्रव्यव्यवहारः, एवमात्मत्वान्मुक्तात्मस्वात्मव्यवहारः, [2]रण्डान्तःकरणेषु मनस्त्वान्मनोव्यवहारः, शिलान्तर्गतशरीरेषु शरीरत्वादिन्द्रियाश्रयत्वाच्च शरीरव्यवहारः, [3]करतलादिनिर्णयेष्वव्यभिचारिनिश्चयानुभवत्वान्निर्णयव्यवहारः—इत्येवमन्यत्राप्यूह्यमिति। [4]लक्षणान्तरमेवास्तु व्यापकत्वाद्, अनर्थकमव्यापकलक्षणाभिधानमिति चेत्, न; अस्यापि स्वलक्ष्यनिश्चये समर्थत्वात्, आत्मत्वादिप्रतिपत्ताविच्छादिलक्षणस्यैव समर्थत्वाच्च।

लक्षणेऽपि विप्रतिपत्तौ लक्षणान्तराभिधाने सत्यनवस्थेति चेत्, न; सर्वत्र विप्रतिपत्त्यसंभवात्। कथम्? यदि तावदयं विप्रतिपद्यमानः चेतनाचेतनोपायोपेयादिस्वरूपं प्रतिपद्यते, तदा पुरुषविशेषं प्रति तन्न्यायेनान्योऽप्यर्थः प्रसाधयितव्यः। अथ किंचिदपि न प्रतिपद्यते, तदा पुरुषविशेषं प्रति शब्दविशेषोच्चारणं न प्राप्नोति। कुतः? वृक्षादिकं दृष्ट्वापि यत्किंचिद् ब्रूयात्, ततश्चोन्मत्तवदुपेक्षणीयः स्यात्।

---

१. एतेन = अव्यापकातिव्यापकधर्मस्य लक्षणत्वेन।

२. रण्डान्तःकरणेषु = मुक्तात्मत्यक्तेषु।

३. करतलेति। करतलादिषु विमर्शाभावात् करतलादिविषयेषु "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" (न्या० सू० १।१।४१) इति निर्णयलक्षणाभावेऽपि अव्यभिचारिनिश्चयात्मकानुभवत्वमादाय निर्णयव्यवहार इति भावः।

४. नन्वव्यापकानां धर्माणामिच्छादीनामात्मलक्षणत्वमभ्युपगम्यापि मुक्तात्मसु तद्व्यवहारसम्पादनाय लक्षणान्तरमात्मत्वाद्यावश्यकं चेत्, तर्हि प्रथमतः तदेवावलम्ब्यताम्, कृतमव्यापकेनेत्याशंकते—लक्षणान्तरेति। लक्षणान्तरम्= आत्मत्वादिरूपम्। अव्यापकलक्षणम्=इच्छादिरूपम्।

न चेयं लक्षणपरम्पराऽभ्युपगम्यते, कस्मात्? लक्षणलक्षणस्य सकललक्षणवर्गव्यवच्छेदकत्वेन स्वात्मनोऽपि व्यवच्छेदकत्वात्। यथा अनित्यः सर्वः शब्द इत्येतद्वाक्यं स्वात्मनोऽप्यनित्यतामभिधत्ते। "स्वाध्यायोऽध्येतव्यः"[1] इत्ययं विधिः स्वात्मनोऽप्यध्येयत्वं विधत्त इति। [2]कर्मकरणयोरेकक्रियायामेकत्वमयुक्तमिति चेत्, न; [3]प्रमातृ-प्रमेयवत् क्वचिद् दृष्टत्वात्। तद्दृष्टान्तेनैव सर्वदाप्यभेदप्रसङ्ग इति चेत्, न; पटतुरीवेमादीनां भेदस्य प्रत्यक्षादिसिद्धत्वात्। तदेवं सर्वत्र सन्देहविषये निश्चयहेतुत्वात् न लक्षणवचनं निष्प्रयोजनमिति। लक्षणस्यैव निश्चय-हेतुत्वे निरर्थकं प्रमाणमिति चेत्, न; लक्षणस्यापि निश्चयसाध्यत्वेन प्रमाणत्वात्। अथ लक्षणं किं प्रमाणपर्यायः, उत प्रत्यक्षादीनाम-न्यतमत्तदर्थान्तरं[4] वेति? केवलव्यतिरेकीत्येके[5]। अस्माभिस्त्वभिहितमेव "विशेषाङ्कादिशब्दाः पर्याया" इति। अत एव न प्रमाणपर्यायः प्रमाणसाधनस्य सर्वस्यापि प्रमाणत्वात्, लक्षणं तु प्रमेयविशेषकमेव। [6]तच्चेन्द्रियादि-सहकारित्वेन प्रत्यक्षादिव्यपदेशमपि लभते। [7]तस्यावयवादिवत् प्रयोजन-वशात् [8]पृथग् अभिधानम्।

---

१. "स्वाध्यायोऽध्येतव्यः" (तै० आ० २।१९) स्वाध्यायः=स्वकीया वेदशाखा। इदं विधिवाक्यं स्वशाखाया अध्ययनं विदधत् तदन्तर्गतस्य स्वस्याऽप्यध्ययनं विधत्ते।

२. नन्वेवं लक्षणं स्वलक्ष्यं व्यावर्तयत् स्वमपि व्यावर्तयति चेत्, तर्हि व्यावृत्ति-क्रियायाः तदेव कर्म करणं च स्यात्, तच्च न सम्भवति लोके तथा-ऽदृष्टत्वादित्याशंकते—कर्मकरणयोरिति।

३. प्रमातृप्रमेयेति। प्रमाता यदा एवं प्रमिस्येति तदा प्रमितिक्रियायाः प्रमातैव कर्त्ता कर्म च भवति, प्रमाणेन यदा स्वयं प्रमीयते, तदा प्रमाणमेव प्रमितेः कर्म भवति करणं च, तदेतत् "न प्रदीपप्रकाशवत् सिद्धेः" (न्या० सू० २।१।१९) सूत्रे भाष्यवार्तिकादौ विस्तरेण प्रतिपादितम्।

४. अर्थान्तरम् = प्रत्यक्षानुमानागमेभ्यो भिन्नं चतुर्थम्।

५. एके = वाचस्पतिप्रमुखाः। उक्तं हि टीकायाम्—"लक्षणं नाम व्यतिरेकि-हेतुवचनम्; तद्धि समानासमानजातीयेभ्यो विभिद्य लक्ष्यं व्यवस्थापयति" (ता० टी० पृ० ९८)।

६. तत् = लक्षणम्।

७. तस्य = लक्षणस्य।

८. पृथगभिधानम् = सूत्रे तत्त्वपदेनेत्यादिः।

## ❀ लक्षणाभिधानस्य भ्रान्तिनिवर्तकता ❀

शास्त्रमन्तरेणापि प्रमाणादिलक्षणं प्रसिद्धमेव। अन्यथा लौकिका कथं प्रमाणादिव्यवहारं कुर्वन्तीत्यतोऽनर्थकं तदर्थं शास्त्रमिति चेत्, न; [1]भ्रान्तिनिवृत्तयेऽनुवादकरणात्। दर्शनान्तराभिनिविष्टैः खलु भ्रान्तैरन्यथाऽन्यथा लक्षणाभिधानेन लोकेऽपि प्रमाणादिषु विसंवाद्यते, अतः प्रसिद्धमेव लक्षणमनूद्य तद्भ्रमो निवर्त्यते भ्रान्तपितृदर्शनस्य तच्चिह्नानुवादेन भ्रमनिवृत्तिवत्, तथा हि—प्रत्यक्षादिलक्षणमनूद्य यत्र भ्रान्ताः सम्यक् प्रमाणेष्वप्यात्मादिविषयेषु प्रमाणाभासतामनर्थान्तरेष्वप्यर्थापत्त्यादिष्वर्थान्तरतां च प्रतिपद्यन्ते, तत्र [2]विधीयते। यत्र पुनः प्रमाणाभासेष्वप्यद्वैतक्षणिकत्ववेदा नित्यत्वात्माद्यसत्त्वादिविषयेषु प्रत्यक्षादिप्रमाणतामर्थान्तरेष्वप्यनर्थान्तरतां च प्रतिपद्यन्ते, तत्र प्रतिषिध्यते[3]—इत्येवमात्मादिलक्षणेषु संशयादिलक्षणेषु चानुवादप्रयोजनं द्रष्टव्यमिति। एतेनात्मादिज्ञानमुपायत्वेन निःश्रेयसं चोपेयत्वेनोपनिषत्स्वन्येषु च योगशास्त्रेषु प्रसिद्धमतोऽनर्थकं तद्विधायकमेतच्छास्त्रमित्येतदपि परिहृतम्; न [4]ह्यत्रात्मादिविज्ञानं निःश्रेयसं वा विधीयते किं तर्हि? तत्प्रसिद्धमेवानूद्य शाक्यादिदर्शनापहृतचेतसामात्मादिज्ञानं मिथ्यात्वेन संसारकारणं सात्मकं निःश्रेयसमविद्यमानं च प्रतिपद्यमानानां भ्रमनिवृत्त्यर्थमात्मादिसमर्थनद्वारेणाशेषप्रतिपक्षप्रतिषेधद्वारेण च प्रमाणोपपन्नत्वं [5]तस्य विधीयते, येनोपनिषदाद्यभिहितमेव सर्वं तथ्यमेवेति निश्चित्य निराशंकस्य प्रेक्षावतः तत्प्रसिद्धमेवोपायमनुतिष्ठतोऽपवर्गप्राप्तिर्भवतीति।

## ❀ प्रमाणसामान्यलक्षणम् ❀

तथा चात्मादीनां प्रमाणोपपन्नत्वं प्रतिपाद्य "अध्यात्मविध्युपायैः"[6] इत्युक्तं श्रीमत्सूत्रकृतेति। येऽपि तर्हि [7]शिवमुष्टिन्यायेनाध्यात्मशास्त्रार्थं गृहीत्वाऽनु-

---

१. भ्रान्तिनिवृत्तये इति तदुक्तं बाह्यैरपि—"शास्त्रं मोहनिवर्तनम्" (प्र० वा० २।५)।

२. विधीयते = यत् सम्यगनुभवसाधनम्, तत् प्रत्यक्षं प्रमाणमित्येवं सर्वत्र लक्षणमनूद्य प्रत्यक्षादिप्रमाणता विधीयते।

३. प्रतिषिध्यते = यन्नैवंलक्षणम्, तत् प्रमाणम् न।

४. अत्र = न्यायशास्त्रे।

५. तस्य = आत्मज्ञानादेः।

६. अध्यात्मविध्युपायैः—"तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः" (न्या० सू० ४।२।४६) इति समग्रं सूत्रम्।

७. शिवमुष्टिन्यायः—तात्पर्यपरिशुद्धौ शवमुष्टिन्यायः। द्रष्टव्योऽयं परिशिष्टे।

**सम्यगनुभवसाधनं प्रमाणम्। सम्यग्ग्रहणं संशयविपर्ययापोहार्थम्॥**

तिष्ठन्ति, तेऽप्यपवर्गं प्राप्नुवन्त्येवातोऽनर्थकमिदं शास्त्रमिति न, न्यायकांक्षिणः सार्थकत्वात्। नहि सर्वानुग्रहार्थं शास्त्रमारभ्यते, सर्वपुरुषानुग्रहस्याशक्यत्वात्, आनन्त्यादव्यवस्थिताभिप्रायत्वाच्च प्राणिनाम्। किन्तु अधिकारिपुरुषानुग्रहार्थम्। अधिकारिणश्चात्र सन्त्येव न्यायकांक्षिणः सन्दिग्धादिविशेषाः, येषामप्युक्तिमात्रादध्यात्मशास्त्रार्थनिश्चये सति विप्रतिपत्तिं शृण्वतामपि कुतश्चिन्निमित्तात् सन्देहो न भवति, तेषामपीदं शास्त्रं श्रोतुं युक्तं परानुग्रहार्थं स्वनिश्चयपालनार्थं च। तथा चोक्तम्—[1]"तत्त्वाध्यवसायसंरक्षणार्थमित्यादि"। एवं च सर्वाण्युद्देशलक्षणपराणि सूत्राण्यनुवादार्थानि, परीक्षासूत्राणि त्वनुवादार्थफलेन विधिप्रतिषेधसंज्ञकेनार्थवन्ति द्रष्टव्यानीत्येवंपरताऽस्य शास्त्रस्येति।

ननु च कृष्यादिषु शास्त्रश्रवणे च यद्वदर्थसंशयादेवार्थिनां प्रवृत्तिर्भवत्येवं मोक्षसाधनेऽपि भविष्यतीत्यतः किमनेन शास्त्रेणेति ? न; कृष्यादिफलस्य बाहुल्येन दृष्टत्वादत्यन्तादृष्टत्वेनासंभाव्यत्वादपवर्गस्य। न च कृष्यादिषु पूर्वोपार्जितसमस्तवित्तदारादित्यागेन प्रवृत्तिः फलविप्रतिपत्तिर्वाऽस्ति, विपर्यस्त्वपवर्गसाधनेऽतोऽनर्थसंशयनिवृत्तिहेतुः ससाधनोऽपवर्गनिश्चयः प्रार्थ्यते प्रेक्षापूर्वकारिभिः। स च निश्चयः प्रमाणनिश्चयात्, प्रमाणनिश्चयस्तु लक्षणनिश्चयाद् अतो लक्षणमेवादावुच्यते—

"सम्यगनुभवसाधनं प्रमाणम्" इति। अनेन समानजातीयेभ्यः प्रमाणाभासेभ्योऽसमानजातीयेभ्यश्च प्रमेयादिभ्यो व्यवच्छेदः प्रसाध्यते। एवं प्रत्यक्षादिलक्षणानामपि समानासमानजातीयव्यवच्छेदकत्वं व्याख्यातव्यमिति।

## ❀ सम्यक्पदस्य प्रयोजनम् ❀

प्रमाणस्य समानजातीयानि व्यवच्छेद्यानि नैव सन्तीति यो[2] मन्यते तं प्रत्याह—"सम्यग्ग्रहणं संशयविपर्ययापोहार्थम्।" संशयविपर्ययोः प्रमाणफलत्वेन व्यावृत्तिर्निराकरणमपोहस्तदर्थम्। अथवा संशयविपर्ययाभ्यां सकाशादपोहो व्यावृत्तिरनुभवस्य तदर्थमित्यर्थः। ततः[3] तत्साधनानामपि

१. तत्त्वेति—( न्या० सू० ४।२।५० )।

२. यः = प्रभाकरः।

३. तत्साधनानाम् = तयोः संशयविपर्ययोः साधनानाम्।

**तत्रानवधारणज्ञानं संशयः।**

प्रमाणत्वं व्यवच्छिन्नं भवति। फलस्य हि सम्यक्त्वासम्यक्त्वाभ्यां प्रमाणतदाभासयोः सम्यक्त्वासम्यक्त्वे निश्चेतुं शक्येते, तेन सम्यगित्येतत् फलविशेषणत्वेन व्याख्यायते—सम्यक् चासावनुभवश्चेति। तथाभूतार्थनिश्चयस्वभावत्वं सम्यक्त्वम्, तद्विपरीतानुभवस्वभावत्वमसम्यक्त्वम्।

## ❀ संशयलक्षणम् ❀

[1]तच्च संशयविपर्ययोरस्ति लोकशास्त्रयोस्तथाव्यवहारदर्शनादिति। नाज्ञातस्वरूपं हातुमुपादातुं वा शक्यमित्यतस्तयोः[2] स्वरूपं वक्तव्यमिति। अथेदमुच्यते—"तत्रानवधारणज्ञानं संशयः"[3]। अनवधारणं च तज्ज्ञानं चेति। [4]व्याघातान्न युक्तमिति चेत्, न; गोशब्दादिवज्जातिनिमित्तत्वाज्ज्ञानशब्दस्य। यथा गोपङ्कजादिशब्दा न व्युत्पत्तिवशेन स्वार्थेषु रूढाः, किं तर्हि? जातिनिमित्तत्वेन तथा ज्ञानशब्दोऽपि ज्ञानत्वजातिनिमित्तः स्वार्थे निरूढः। सा च ज्ञानत्वादिजातिर्निश्चयानिश्चयस्वभावासु व्यक्तिषु वर्तते। अनिश्चयज्ञानं चानवधारणमित्युक्तम्। अत एव निर्विकल्पकप्रत्यक्षस्य संशयत्वं न प्रसज्यते, तस्यापि

१. तच्च = असम्यक्त्वं च।

२. तयोः = संशयविपर्ययोः। मूले तत्र = तयोः संशयविपर्ययोर्मध्ये संशय इति।

३. संशयपदस्यानेका व्युत्पत्तयो दृश्यन्ते—"संशीतिः संशय इति भावसाधनम्, करणसाधनं वा संशेतेऽनेनात्मा सुप्त इव भवति" (न्या० वा० पृ० ६१)। "सर्वात्मना शेते इवात्मा यस्मिन् सति स संशयः" (प्र० मी० पृ० ५)। "संशेरते मुह्यन्तीन्द्रियाण्यस्मिन्निति संशयः" (ता० दी० पृ० ५७)।

४. ननु ज्ञायते प्रतीयतेऽवधार्यतेऽर्थोऽनेनेति व्युत्पत्त्या, "ज्ञानान्निःश्रेयसाधिगमः" (न्या० सू० १।१।१), "ज्ञानं मोक्षैककारणम्" (कौलो० १), "मोक्षे धीर्ज्ञानम्" (अमर०) इत्यादिकोषाप्तवचोभिर्ज्ञानपदस्य निश्चयवचनताऽवसीयते, अनवधारणशब्दश्चानिश्चयवचनः प्रसिद्ध एव। तथा चानवधारणज्ञानमित्युक्तं भवति—अनिश्चयो निश्चय इति। तच्च व्याहतमित्याशंकते—व्याघातान्न युक्तमिति। वार्तिकेऽप्येवं ज्ञानमवधारणं प्रत्ययश्चेत्यनर्थान्तरं मत्वाऽचूचुदत—"अनवधारणात्मकश्च प्रत्ययश्चेति व्याहन्यते" (न्या० वा० पृ० १२)। एतद्व्याघातपरिहारपरवार्तिकस्याशयमाविरकार्षीत् टीकाकारः—"परमार्थस्तु प्रत्ययशब्दो ज्ञानपर्यायः, ज्ञानत्वं तु सामान्यं संशयादिष्वप्यस्तीति न विरोधः (ता० टी० पृ० २४४)। तथैव भूषणकारोऽपि समाधत्ते—गोशब्दादिवदिति।

स च समानधर्माऽनेकधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धिकारणभेदात् पञ्चधा भिद्यते—

तद्यथा—समानधर्मात् किमयं स्थाणुः स्यात् पुरुषो वेति ?

निश्चयात्मकत्वात्। निश्चयात्मकत्वं च तत्प्रभवस्मृत्यनुमेयम्। तथाहि—इदं वस्तु तत्र नास्त्येव, अनेन सदृशमेव तद्वस्तु, एतस्मादधिकं न्यूनं चेत्येवमात्मिका स्मृतिः पूर्वानुभवं निश्चयात्मकं सूचयति। यतश्चानुभवादनिश्चयात्मिका स्मृतिरुत्पद्यते स संशय एवानिश्चयात्मकत्वात्। अनुभवाकारानुकारिणी हि स्मृतिः, सा कथमन्यथा भवेदिति ? प्रथमाक्षदर्शनजं ज्ञानं विशेषदर्शनादिनिमित्तमन्तरेणोपजायमानं निश्चयात्मकं संशयात्मकं वा कथं भवितुमर्हतीति चेत्, न; [1]अदृष्टादिसामग्रीवशात् तथोत्पत्तेः। अन्यथाऽनवस्थाभयाद् विशेषदर्शनमन्तरेणोपजातं विशेषदर्शनमनिश्चयात्मकं स्यात्। तस्य च अनिश्चयात्मकत्वे विशेषवतोऽप्यनिश्चय इत्यनिश्चयात्मकं जगत् स्यात्। न हि शिरःपाण्यादिविशेषानिश्चयज्ञानात् पुरुषेऽनिश्चयो दृष्टः। अदृष्टादेश्च सामर्थ्याभ्युपगमे ततः एव निश्चयो भवतु, किमनिश्चयात्मकेन विशेषदर्शनेनानुपपन्नप्रमाणकेनेति ? तदेवं विशेषदर्शनादिनिमित्तमन्तरेणापि क्वचिन्निश्चयात्मकमनिश्चयात्मकं च ज्ञानमस्तीत्यतो निरवद्यं लक्षणम्—"अनवधारणज्ञानं संशयः" इति।

## ॐ संशयस्य भेदाः तल्लक्षणानि च ॐ

यद्येतावतैव संशयलक्षणं निरवद्यं "समानानेकधर्मोपपत्तेः" इत्यादि [2]सूत्रं (न्या० सू० १।१।२३) तर्ह्यनर्थकम् ? नानर्थकं विभागार्थं विशेषलक्षणार्थं च। तदर्थमेवाह—"स चेत्यादि। [3]पञ्चधा भिद्यते" इति। समानधर्मादि-

१. अदृष्टादिरिति। वाचस्पतिमिश्रोऽपि समवादीत्—"अनेन दृष्टस्य हेतोः समानत्वेऽप्यदृष्टं हेतुरुक्तः" ( भा० पृ० १५२ )।

२. सूत्रम् = न्यायसूत्रम् ( १।१।२३ )।

३. पञ्चधेति। पञ्चविधान् संशयान् बभाषे भाष्यकारः, वार्तिककारस्तु संशयस्य त्रैविध्यं विदधे पाञ्चविध्यं च प्रत्याचचक्षे—"त्रिविध एव संशयः" ( न्या० वा० पृ० ८७ ), "अपरे पुनः समानधर्मोपपत्त्यादिभिः पदैः पञ्चविधं संशयं वर्णयन्ति। तन्न युक्तम्" ( न्या० वा० पृ० ९६ )। वार्तिकपक्षमेवाररक्ष टीकाकारः—"त्रिविध एवेति ये पञ्चविधमाचक्षते, ते निराकृताः" ( ता० टी० पृ० २४३ )। तदेतन्मतमपनयन्निव भाष्योद्घोषमनुघोषयति भासर्वज्ञः। काश्यपीया अप्येनमेव न्यायमतं मन्वते—"समानतान्त्रिकैः पञ्चविधः संशयो वर्णितः" ( न्या० कं० पृ० ४२१ )।

मात्रादसंभवी संशय इति चेत्, न; अनवधारणात्। न ह्येवमवधार्यते समानधर्मादेव संशय इति, किं तर्हि? इन्द्रियार्थसन्निकर्षवदसाधारणकारणवचनं समानजातीयव्यवच्छेदार्थम्, विजातीयव्यवच्छेदस्तु सामान्यलक्षणेनैव कृतत्वान्नानुक्रियते, सामान्यलक्षणानुवादेन हि विशेषलक्षणं द्रष्टव्यम्। तेनायमर्थः सिद्ध्यति—समानधर्मात् सामग्र्यन्तःपतितादनवधारणज्ञानं भवति, तदनेकधर्माद्युपलक्षितसामग्रीजनितेभ्यः संशयेभ्योऽर्थान्तरमिति। एवमन्यत्रापि व्याख्यातव्यमित्यतो नातिव्याप्तिदोषोऽप्यस्ति।

सूत्रकारेण तूपलब्ध्यनुपलब्ध्यव्यवस्थादिग्रहणं कुचोद्यपरिहारार्थं सहकार्युदाहरणार्थं च कृतं, न त्वनेनैव सम्पूर्णा सामग्री प्रतिपाद्यते; अदृष्टान्तःकरणादेरनभिधानात्। कुचोद्यं पुनरत्रैवं भवति—समानधर्मोपलम्भोपि न संशयकारणं, सत्यपि तस्मिन् गच्छतस्तृणादिषु संशयानुपलब्धेरिति। तत्रोत्तरम्—विशेषापेक्षा इति विशेषेष्वपेक्षा[1] आकांक्षा स्मृतिरूपा यस्य संशयस्य कारणत्वेन स तथोक्तः। किमुक्तं भवति? विशेषाकांक्षा च यतः संशयकारणम्, अतः तामन्तरेणापि संशयो न भवति। न[2] च यस्य[3] सद्भावेऽपि सहकारिकारणाभावात्कार्यं नोत्पद्यते तस्याकारणत्वमेव, सर्वस्याप्यकारणत्वप्रसंगादिति।

नन्वेवमपि दूरस्थायां प्रियतमायामुभयसद्भावेऽपि संशयो न भवति, अतोऽकारणं विशेषाकांक्षासहितोऽपि समानो धर्म इति। अस्योत्तरम्—उपलब्ध्यनुपलब्ध्यव्यवस्थात इति। विधिप्रतिषेधत्वेन निश्चयकारणाभावादित्यर्थः। एतदुक्तं भवति—न विशेषाकांक्षैव सहकारिकारणं किन्तूपलब्ध्यनुपलब्ध्यव्यवस्थापीत्यतस्तदभावेपि संशयो न भवति। तथा वेगेन गच्छतः

---

१. 'अपेक्षा = स्मृतिः'। वार्तिकेऽप्येवम्—"विशेषापेक्षः = स्मृत्यपेक्षः" (न्या० वा० पृ० ९८)। टीकाकारस्तु स्मृतिं जिघृक्षां चेष्टापेक्षामाह—"विशेषाकाङ्क्षायां चेति विशेषस्मृतिर्दर्शिता" (ता० टी० पृ० २४६), "अपेक्षाशब्दश्च यद्यपीच्छायां वर्तते, तथापीह जिघृक्षायाम्, वाक्यसामर्थ्यात्" (ता० टी० पृ० २४४)।

२. नन्वेवं विशेषापेक्षायामसत्यां समानधर्मोपलम्भो यदि संशयं न करोति, कथं कारणमित्यत आह—न चेति।

३. यस्य = समानधर्मोपलम्भस्य। उभयसद्भावेऽपि = समानधर्मोपलम्भविशेषस्मरणयोः सद्भावेऽपि। अस्यैव = लक्षणसूत्रस्यैव।

अनेकधर्मादाकाशविशेषगुणत्वात्किमयं शब्दो नित्यः स्याद-नित्यो वेति ?

---

पनसादिषु वृक्षसमानधर्मोपलम्भेऽप्युपलब्ध्यनुपलब्ध्यव्यवस्थायामपि विशेषाकांक्षाभावान्न संशयो भवतीत्यतः सकलसहकार्युपेतस्यैव समानधर्मस्य संशयहेतुत्वमभ्युपगम्यत इति। अदृष्टादेश्च कार्यान्तरेष्वपि साधारणत्वादनभिधानेऽपि सहकारित्वं लभ्यते इत्यभिप्रायवताऽत्र नोक्तम्। समानधर्मवदनेकधर्मादेरप्यशेषसहकार्युपेतस्य संशयहेतुत्वं व्याख्येयमिति। अस्यैवार्थः परीक्षायां प्रपञ्चित इत्यपौनरुक्त्यम्। समानधर्म इत्यत्र समासद्वयं विकल्पेन द्रष्टव्यम्—कर्मधारयः षष्ठीतत्पुरुषश्चेति। यदा कर्मधारयस्तदा समानः= सदृशः परिमाणादिलक्षणो धर्मः प्रत्याश्रयं भिन्नो लभ्यते। यदा तत्पुरुषः तदा प्रत्याश्रयमभिन्नो धर्मः सामान्यावयवसंयोगादिलक्षणो लभ्यते इति। अत्रोदाहरणम्—तद्यथेति। ऊर्ध्वत्वं च दिग्विशेषावस्थिते दीर्घद्रव्ये ऊर्ध्वप्रत्ययनिमित्तम्। तच्च परिमाणं वा भवतु सामान्यं वा षट्पदार्थव्यतिरिक्तधर्मसंज्ञकं वा नास्य विचारः क्रियते अनुपयोगित्वादिति।

अनेकधर्मादिति। विवक्षितजातीयं तद्विपरीतं चानेकम्। अनेकस्माद् व्यावर्त्तको धर्मोऽनेकस्यासंबन्धी वाऽनेकस्मिन्प्रतिषिद्धो वाऽनेकप्रत्ययहेतुर्वा भेदसाधकत्वेनेत्यतोऽनेक धर्म इति सर्वत्र मध्यमपदलोपेन समासः, सर्वथाऽप्यसाधारणधर्मोऽभिप्रेतः। तथा चाकाशादिविशेषगुणत्वात् किमयं शब्दो नित्यः स्यादनित्यो वेत्युदाहरणम्। कथं पुनरसाधारणो धर्मः संशयं करोति ? नह्ययं विरुद्धविशेषैः सह कदाचिदुपलब्धोपि येनास्योपलम्भः तत्स्मृतिहेतुः स्यात्। न चाप्रतिबद्धार्थदर्शने स्मृतिर्युक्ता, सर्वदा सर्वानुभूतार्थस्मृतिप्रसंगात्। नच विरुद्धविशेषानुस्मृतिमन्तरेण संशयो भवति, अदृष्टत्वात्। अपि चायमसाधारणो धर्मः स्वधर्मिणां विशेष एव, विशेषदर्शनाच्चान्योपि संशयो निवर्त्तते, कथं ततः संशयो भवतीति ? नहि गोत्वदर्शनाद् गवि संशयः प्रादुर्भवन्नुपलभ्यते, अनुच्छेदप्रसंगाच्च। यस्तावत्समानधर्मदर्शनोत्पन्नः संशयः स विशेषदर्शनान्निवर्त्तते, यस्तु विशेषदर्शनादुत्पन्नः, स कुतः प्रध्वंसमासादयिष्यतीति ? तस्मान्नासाधारणो धर्मः संशयहेतुरिति।

अत्रैके प्रतिसमाधानं कुर्वन्ति—तुल्यजातीयेष्वर्थान्तरभूतेषु च विशेषस्योभयथा दृष्टत्वान्न विरुद्धविशेषैः सहादर्शनमसाधारणस्येति। एतदुक्तं भवति—यदा तुल्यजातीयत्वेनानित्याः पदार्था विवक्षितास्तदार्थान्तरभूता नित्या उक्ताः तेषु=तुल्यजातीयेषु घटादिषु अर्थान्तरभूतेषु चात्मादिषु विशेषस्य=घटत्वा-

देरात्मत्वादेश्च उभयथा=प्रकारद्वयेन नित्यत्वानित्यत्वसहचरितत्वेन दृष्टत्वात्=प्रमाणेनोपलब्धत्वादित्यर्थः। अस्ति च शब्दे विशेषः श्रावणत्वमाकाशविशेषगुणत्वं च। तन्न विद्मः, किं नित्यस्य सतः शब्दस्यायं विशेषः? उतानित्यस्येति? नेदं संशयकारणं समानधर्मादर्थान्तरं, कथम्? विशेषवत्त्वं हि विरुद्धविशेषस्मृतिहेतुत्वेन संशयनिमित्तं, तच्च सामान्यवत्त्वादिवन्नित्यानित्ययोः समानमिति कथमर्थान्तरं भवेत्? पूर्वं साधारणधर्मवत्त्वमुक्तमिदानीं त्वसाधारणधर्मवत्त्वमित्येतावतैव विशेषेण पृथग्वचनमित्येके। वयन्त्वसाधारणेनैव रूपेणास्य संशयहेतुत्वं वर्णयामः। कथमिति? नित्येभ्यो व्यावृत्तत्वम्, अनित्येष्वेव दृष्टं अनित्येभ्यो व्यावृत्तत्वं च नित्येष्वेव दृष्टम्, अयन्तु शब्दः श्रावणत्वादिविशेषेण नित्येभ्योऽनित्येभ्यश्च व्यावृत्तः, तन्न जानीमहे किं नित्येभ्यो व्यावृत्तत्वाद् घटादिवदनित्यः स्यादुतानित्येभ्यो व्यावृत्तत्वादात्मादिवन्नित्य इति? न च नित्यत्वानित्वयोरेकत्र संभवोऽस्ति परस्परपरिहारस्थितिधर्मत्वात्। न[1] चात्यन्तसंशयप्रसंगः, सहकारिकारणस्योपलब्ध्यनुपलब्ध्यव्यवस्थादेः सातत्येनासंभवात्। नाप्यनिवृत्तिप्रसंगः, कृतकत्वादिविशेषदर्शनान्निवृत्तेः। न च विशेषत्वसाम्याच्छ्रावणत्वादिवत्कृतकत्वादितोपि संशयप्रसंगः, कृतकत्वादेरनित्यत्वाविनाभावित्वेनान्यत्रोपलब्धत्वादिति। तस्मादसाधारणोऽपि धर्मः संशयहेतुरिति स्थितम्।

अथवानेकश्चासौ धर्मश्चेति कर्मधारयस्तेन विरुद्धानेकधर्मस्यैकत्रोपलभ्यमानस्य संशयहेतुत्वं लभ्यते, यथा किं नु क्रियावत्त्वात् शरवन्मूर्तं मनः स्यादुतास्पर्शत्वादाकाशवदमूर्त्तमिति? न च मूर्त्तत्वामूर्त्तत्वयोरेकत्र सम्भवः, परस्पर परिहारस्थितिधर्मत्वात्। उपलब्ध्यनुपलब्ध्यव्यवस्थादेश्चात्रापि सहकारित्वमतो न सर्वदा सर्वत्र वा संशयप्रसंग इति। [2]तुल्यबलत्वे तयोर्विरोधान्निर्णयानुत्पादकत्वं स्यान्न संशयोत्पादकत्वमिति चेत्, न; [3]अत एव तत्सिद्धेः[4]। नह्ययं निर्णयानुत्पत्तावचेतनकुड्यादिवदास्ते विपर्येति वा, किं तर्हि? पर्यालोचयन् प्रश्नं वा कुर्वन्नुपलभ्यते न च संशयमन्तरेण पर्यालोचनं प्रश्नकरणं वा युज्यते। अनध्यवसाय इति चेत्—

---

१. संशयानुच्छेदापत्तिमपाकरोति—न चेति।

२. वैशेषिकः शंकते—तुल्यबलेति।

३. अत एव=निर्णयानुत्पादकत्वादेव।

४. तत्सिद्धेः=संशयस्य सिद्धत्वात्।

**विप्रतिपत्तेः—एके भौतिकानीन्द्रियाण्याहुः, अन्ये त्वभौतिकानीति ।**
**उपलब्धेः – किं सदुदकमुपलभ्यते ? उतासदिति ?**
**अनुपलब्धेः—किं विद्यमानः पिशाचो नोपलभ्यते, उताविद्यमान इति ?**

---

[1]अथ मन्यसे निर्णयानुत्पत्तावनध्यवसायोऽस्य न तु संशय इति, तदयुक्तं, विप्रतिपत्तितोपि अनध्यवसायप्रसंगात्। न हि विप्रतिपत्त्या सहास्यानेकधर्मस्य विशेषः कश्चिदस्ति । किं चानध्यवसायस्यापि संशयेऽन्तर्भावप्रतिपादनात्। प्रदेशान्तरे च विरुद्धधर्मद्वयस्य संशयहेतुत्वेन [2]स्वयमुक्तत्वात्। तथा च "गमनत्वं किं कर्मत्वपर्याय आहोस्विदपरं सामान्यमिति ? प्रश्नं कुर्वतः कुतस्ते संशय इत्यनुयोगं च कृत्वा सर्वेषूत्क्षेपणादिषु कर्मत्ववदनुगतप्रत्ययहेतुत्वमुत्क्षेपणादिवत्पृथगभिहितत्वं च धर्मद्वयं संशयहेतुत्वेनोक्तमिति"। तस्मादनेकोपि धर्मः संशयहेतुरिति ।

विप्रतिपत्तिरिति, व्याहतः [3]प्रवादो विप्रतिपत्तिः। तां [4]शृण्वतः पूर्वोक्तसहकारिसद्भावे सति संशयो भवति—किं भौतिकानीन्द्रियाण्युताभौतिकानीति ? किं शरीरादिव्यतिरिक्त आत्मास्त्युत नास्ति ? नित्योऽनित्यो वेत्यादिविप्रतिपत्तयो द्रष्टव्या इति । [5]विधिमुखेन प्रवृत्तं ज्ञानम् उपलब्धिः । प्रतिषेधमुखेन प्रवृत्तं ज्ञानं

---

१. अनध्यवसाय इत्यापादयितुः पूर्वपक्षिणोऽभिसन्धिमेवोद्घाटयति—अथ मन्यसे इति ।

२. स्वयमिति वैशेषिकमाह। प्रशस्तपादभाष्यमाकाङ्क्षापूर्तिपुरःसरमनुवदति—तथा चेति । भाष्यानुपूर्वी तु—"अथ गमनत्वं कि कर्मत्वपर्यायः आहोस्विदपरं सामान्यमिति ? कुतस्ते संशयः ? समस्तेषूत्क्षेपणादिषु कर्मप्रत्ययवद् गमनप्रत्ययाविशेषात् कर्मत्वपर्याय इति गम्यते । यतस्तूत्क्षेपणादिवद् विशेषसंज्ञयाभिहितं, तस्मादपरं सामान्यं स्यादिति" ( प्र० भा० पृ० ७०८ )।

३. प्रवादः = वाक्यम् ।

४. शृण्वतः = पारिषद्यस्येति शेषः ।

५. "समानोऽनेकश्च धर्मो ज्ञेयस्थः, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे" ( न्या० भा० १।१।२३) इत्येतद्भाष्यं कटाक्षयन् वार्तिककृत्प्राचीकृतत्–"समानोऽनेकश्च धर्मो ज्ञेयस्थ इत्येतदपि न बुध्यामहे" ( न्या० वा० पृ० ९६ ) तत्र सत्यं यथोर्ध्वत्वादिकं सामान्यं स्थाणुपुरुषयोः संशयप्रयोजकम्, तथोपलब्ध्यादिकमपि सामान्यं सदसतोः । एतावानत्र विशेषः—यदाद्यं स्थाणुपुरुषादिज्ञेयेषु तिष्ठति, द्वितीयं तु ज्ञातृस्थम् । तदेतद् ध्वनयन् ज्ञातृस्थितियोग्यमुपलब्ध्यादेः स्वरूपं दर्शयति—विधिमुखेनेत्यादि ।

ज्ञानानुत्पादश्च अनुपलब्धिः, तयोः[1] पृथक् संशयहेतुत्वमव्यवस्थाविशेषणत्वं च, तेनात्र पंचसूत्री द्रष्टव्या—उपलब्ध्युपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशयः, अनुपलब्ध्युपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इति, एवं समानधर्मोपपत्तेरित्यादिष्वपि योज्यम्। एवं च सर्वत्राप्युपलब्धिविषयेऽनुपलब्धिविषये च संशयप्रसंग इत्यनुपपन्नं चोद्यम्, न ह्यत्रोपलब्धिमात्रमनुपलब्धिमात्रं वा संशयकारणमिष्टमिति। भवतु नामैवं तथाप्यनयोः समानधर्मादर्थान्तरत्वं नास्ति। कथं? यदि तावदुपलब्ध्यनुपलब्धिविषय एव सत्यासत्यत्वेन संशयस्तदोपलब्धित्वमनुपलब्धित्वं च सामान्यम्। अथोपलभ्यमानानुपलभ्यमानेषु जलपिशाचादिषु विद्यमानाविद्यमानत्वेन संशयः, तथापि ज्ञानावभासित्वमनवभासित्वं च सामान्यमिति। अत्रैके परिहरन्ति—समानोऽनेकश्च धर्मो ज्ञेयस्थः, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे, एतावता विशेषेण पृथग्वचनमिति। वयं[2] तु ब्रूमः—प्रयोजनवशात्पृथगभिधानम्। कथम्? अनुपलब्धिमात्रेण वादिनः[3] स्वर्गापूर्वदेवतादेरसत्त्वमिच्छन्ति, उपलब्धिमात्रेण [4]शब्दे स्थायित्वं [5]शरीरे चैतन्यादिकं [6]सामान्यादेः स्वाश्रयेणाभेदं चेच्छन्ति। तन्निराकरणार्थमुपलब्ध्यनुपलब्धिमात्रस्य संदेहनिमित्तमुक्तमिति।

---

१. उपलब्ध्यनुपलब्ध्यव्यवस्थायाः पृथक् संशयकारणत्वमते लोकविरोधमुदवीभवद् वार्तिककारः—"उपलब्ध्योर्द्वैविध्यात् संशयो भवतीति ब्रुवाणो लोकं बाधते। कथमिति? यत्किञ्चिदयमुपलभते सर्वत्रास्य संशयेन भवितव्यम्" (न्या० वा० पृ० ६७)। तमेतं विरोधमधरीकरिष्यन् उपलब्ध्यनुपलब्धिपदयोः तन्त्रेण द्विधाऽन्वयं विरचयन् प्रपञ्चयति संशयसूत्रम्—तयोः पृथक् संशयहेतुत्वमव्यवस्थाविशेषणत्वं चेति।

२. वार्तिककारैरापादितां समानधर्मोपपत्तित उपलब्ध्याद्यव्यवस्थाया अनर्थान्तरतां भाष्यभङ्ग्या भञ्जयित्वा स्वयं मृद्नाति—वयमिति।

३. वादिनः = चार्वाकादयः। तथा हि—स्वर्गादिरसत्त्रमिच्छन्ति चार्वाकाः, उक्तं हि भट्टवार्तिके—"सापवादा यतः केचन मोक्षस्वर्गावपि प्रति" (श्लो० वा० १।६)।

४. शब्दे स्थायित्वमिच्छन्ति पूर्वमीमांसकाः—"समं तु तत्र दर्शनम्" (मी० सू० १।१।१२) अर्थात् दर्शनम् = उपलब्धिर्यथा न्यायमतेऽस्थिरतायां तथा मीमांसकनये स्थिरतायाम्।

५. शरीरे चैतन्यादिकमिच्छन्ति लोकायतिकाः—

अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः।
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः॥ (सर्वद० पृ० ७)

६. सामान्यादेः स्वाश्रयेणाभेदमिच्छन्ति बौद्धा जैनाश्च—

अनवधारणत्वाविशेषादूहानध्यवसाययोर्न संशयादर्थान्तरभावः ।

## ❀ ऊहानध्यवसाययोः संशयादनर्थान्तरता ❀

सम्यग्ग्रहणेन संशयविपर्ययौ निराकृतौ । अथ ऊहाऽनध्यवसायौ केन निराकृतौ ? इति यश्चोदयिष्यते तस्येदमुत्तरं वक्तव्यम्—अनवधारणत्वेति । यदा तु न संशयादर्थान्तरभावस्तदा संशयनिराकरणेनैव तदात्मभूतयोरप्यूहाऽनध्यवसाययोः प्रमाणफलत्वं[1] निराकृतमित्यर्थः । तथा च सूत्रकारेण संशयव्यवच्छेदार्थं [2]व्यवसायात्मकग्रहणमेव कृतं नोहाऽनध्यवसायव्यवच्छेदार्थं पदान्तरमिति । विकल्पेनोभयार्थावलम्बी संशयस्तद्विलक्षणौ तूहानध्यवसायौ, तत्कथं तयोः संशयान्नार्थान्तरभाव इति चेत्, न; तदेकलक्षणसंगृहीतयोरवान्तरवैधर्म्यमात्रात्तदर्थान्तरत्वायोगात् । न हि मृद्वैलक्षण्यात्पाषाणस्य पृथिवीतोऽप्यर्थान्तरभाव इति न्याय्यम् । तथा च यद्यपि लोके भूभागविशेष एव पृथिवीव्यवहारस्तथापि शास्त्रे गन्धवत्त्वाविशेषात्पाषाणादावपि पृथिवीत्वमिष्टम्, तथानवधारणत्वाविशेषादूहानध्यवसाययोः संशयत्वमिष्टमिति ।

प्रमासाधनत्वाविशेषात्प्रत्यक्षादीनामेकत्वप्रसंग इति चेत्, अभ्युपगमाददोषः । एक एवायं प्रमाणवर्गस्तस्य प्रत्यक्षादिभेदोऽवान्तर इति । न च प्रत्यक्षव्यवहारनिमित्तमनुमानादावस्ति, अनुमानव्यवहारनिमित्तं चेतरत्रास्ति, यतः प्रत्यक्षादिभेदव्यवहारो निवर्त्तेत । एतेन परोक्षानुभवसाधनत्वाविशेषादनुमानागमयोरेकत्वं पर्युदस्तम् । न चैवं संशयव्यवहारनिमित्तमनवधारणज्ञानत्वमूहादौ नास्तीति ।

---

सास्ति सर्वत्र चेद् बुद्धेर्नान्वयव्यतिरेकयोः ।
सामान्यलक्षणेऽदृष्टश्चक्षूरूपादिबुद्धिवत् ।। ( प्र० वा० ३।५ )
प्रत्यक्षतः प्रसिद्धास्तु सत्त्वगोत्वादिजातयः ।
अक्षव्यापारसद्भावे सदादिप्रत्ययोदयात् ।।
असारं तदिदं कार्यं प्रक्रियामात्रवर्णनम् ।
न तु ज्ञापकं किञ्चित्प्रमाणमिह विद्यते ।। ( त० सं० ७१४,७२१ )
दव्वेण विणा ण गुणा गुणेहि दव्वं विणा ण संभवदि ।
अव्वतिरित्तो भावो दव्वगुणाणं हवदि तम्हा ।। ( पञ्चास्ति० ३ )

१. प्रमाणफलत्वम् = प्रमात्वम् ।

२. व्यवसायेति—"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" ( न्या० सू० १।१।४ ) इत्यत्रेति शेषः ।

**तद्यथा—वाह्याली(लि)प्रदेशे पुरुषेणानेन भवितव्यमित्यूहः। किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसायः।**

कश्चायमूहः[1] ? संशयनिर्णयान्तरालभावी भवितव्यतात्मकः प्रत्ययः। तद्यथा—[2]वाह्यालीति।

संशयस्तर्हि, अनवधारणात्मकत्वात्। अविकल्पात्मकत्वान्न संशय इति चेत्—अथ[3] मन्यसे विकल्पात्मकः संशयो भवति किमयं स्थाणुः पुरुषो वेति ? अयं तु वाधकप्रमाणात् कोट्यन्तराशंकायां निवृत्तायां पश्चाद्भवतीत्यतो न संशयः, नापि निर्णयः साधकप्रमाणाभावेप्युत्पत्तेः। न हि प्रतिपक्षनिषेधादेव निर्णयो भवति, पक्षप्रतिपक्षाभ्यामिति वचनात्, पृथगुद्दिष्टत्वाच्च न संशयो न निर्णयो वेति। [4]यत्तावद्विकल्पात्मकः संशय इति, तत् न; अन्यथापि संशयस्य दर्शनात्। यथावगतफलविशेषस्योपायविशेषं प्रति संशयो भवति—कोऽस्य फलस्योपायविशेष इति ? यथा वा जातस्य ध्रुवं मृत्युरिति निश्चित्य कालविशेषमजानानः संदेग्धि—कदा मृत्युर्मे भविष्यतीति ? अद्यतनश्वस्तनादिविकल्पोऽत्राननुभूयमानोपि न्यायलभ्य एव। तथा हि—पुरुषेण तावदनेन भवितव्यं, पुरुषसंभावने कारणभूयस्त्वदर्शनात्। पक्षान्तरमपि वा कदाचित्स्यात्, सर्वस्य पक्षान्तरस्याभावानिश्चयात्। निश्चये तु निर्णय एव स्यात्। सर्वपक्षान्तराभावोपलक्षितमूर्ध्वत्वमेव हि पुरुषस्य विशेष इति, तथा क्षेत्रविशेषं दृष्ट्वा मन्यते कश्चित्—अत्र क्षेत्रिणा सस्यबाहुल्येन भवितव्यं, गृहस्थविशेषं दृष्ट्वा भोजनप्राप्त्या भवितव्यमित्येवमादिषु, न पक्षान्तराभावनिश्चयोऽस्ति, अथ च भवितव्यतात्मकः प्रत्ययो दृष्ट इति। संशयादूर्ध्वमुत्पद्यमानत्वादित्ययं हेतुर्यदि वर्गापेक्षयोक्तस्तदा साध्याविशिष्टः, ऊहज्ञानस्यापि संशयविशेषत्वेनेष्टत्वात्। अथ व्यक्तिविवक्षया तदाऽनैकान्तिकः, संशयस्यापि संशयव्यक्त्युत्तरकालभावित्वात्। पृथगुद्दिष्टत्वादित्ययमप्यनैकान्तिकः, प्रमाणानर्थान्तरत्वेप्यवयवानां पृथगुद्दिष्टत्वात्। हेत्वाभासादीनां च निग्रहस्थानान्तर्भावेपीति। सूत्रविरोधोप्यत एव नास्ति, प्रयोजनान्तरवशेन

---

१. ऊहेति = ऊहः तर्कः प्रसंग इत्यनर्थान्तरम्।

२. वाह्यालीप्रदेशे = वाहाः (अश्वाः) वाह्यन्ते यस्मिन् प्रदेशे, स वाह्यालीप्रदेशः। तस्य निर्देशो वार्तिकेऽपि—"यथाऽस्मिन् देशेऽश्वा वाह्यन्ते" इति (न्या० वा० पृ० १४२)।

३. अविकल्पात्मकत्वाशंकामेव विभजते—अथेत्यादि।

४. उक्ताशंकामनूद्य परिहरति—यत्तावदिति।

पृथगभिधानात्। संशयस्य तावत् सामान्येन प्रयोजनं न्यायप्रवर्तकत्वम्। कथम् ? "नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्त्तते, किं तर्हि ? संशयिते" (न्या० भा० पृ० ४), किं कारणम् ? अनुपलब्धे तावदाश्रयासिद्धत्वप्रसंगः, निर्णीते च वैयर्थ्यप्रसंगः, इत्यतः सामान्यत उपलब्धे विशेषतश्चानिश्चिते न्यायः प्रवर्त्तते इति। किं[1] पुनरत्रावधार्यते ? यदि संदिग्ध एवार्थे न्यायः प्रवर्त्तते इति, तन्न; असंदिग्धेपि प्रवृत्तिदर्शनात्। न हि वादिनः प्रतिवादिनो वा न्यायं प्रवर्त्तयतः सन्देहोऽस्ति। स्वार्थानुमान एव नियमः इति चेत्, न; प्रयोजनान्तरेणाटव्यामटतो धूमाद्यनुमानप्रवृत्तिदर्शनात्। अथ संदिग्धेष्वर्थे न्यायः प्रवर्त्तते एवेत्यवधारणं, तदप्यसंभवि क्वचिदनर्थित्वादिनिमित्तादप्रवृत्तिदर्शनादित्यतोऽकारणं न्यायप्रवृत्तेः सन्देह इति। नैतदस्ति, योग्यतापेक्षया पूर्वावधारणाभ्युपगमात्। संशयित एवार्थे = संशययोग्य एवार्थे न्यायः प्रवर्त्तते इति विवक्षितम्। योग्यता च सामान्यत उपलब्धिर्विशेषानिश्चयसहिता विप्रतिपत्तिश्च वादादिष्विति। एवं च सति न संशयवद्विपर्ययस्यापि विचाराङ्गत्वेन प्रमाणप्रमेयपदसंगृहीतस्यापि पृथगभिधानं प्राप्तम्। न हि विपर्ययाध्यवसिते धर्मिणि हेतुः सम्यक्साधनतामासादयति। नापि सन्देहनिवृत्तिवद्विपर्ययनिवृत्त्यर्थं प्रवर्त्तमानः कश्चिदुपलभ्यते। योऽपि प्रतिवादिविपर्ययनिवृत्त्यर्थं प्रवर्त्तते, सोपि विप्रतिपत्तिनिराकरणबुद्ध्या स्वनिश्चयपोषणार्थं शिष्यादीनां निश्चयाधानार्थं च विप्रतिपत्तिविषये न्यायं प्रवर्त्तयति। स च विप्रतिपत्तिविषयसन्देहार्थ इत्यतः सन्देह एव विचाराङ्गत्वेनोक्तः सूत्रकारेणेति। तस्मादुपपन्नं न्यायप्रवर्त्तकत्वं सन्देहस्य प्रयोजनमिति।

सन्देहान्तर्भूतस्य तर्कस्य पृथगभिधाने तर्हि किं प्रयोजनान्तरम् ? तदुच्यते प्रमाणानुग्राहकत्वम्। "तर्कविविक्ते विषये प्रमाणानि प्रवर्तमानानि तर्केणानुगृह्यन्त इति" पूर्वाचार्याः[2]। वयं तु प्रतिपद्यामहे—वादादिप्रवृत्तिविशेषणार्थं तर्कः पृथगुपदिष्टः। कथमिति ? केचिदेवं मन्यन्ते—वादादिषु नैयायिकस्य प्रवृत्तिर्न युक्ता। किं कारणं ? विचारकस्य निश्चयमन्तरेण प्रवृत्तेरयोगात्। न चात्र निश्चयोऽस्ति अनेन दूषणेन साधनेन वा मयात्र प्रतिवादी पराजेतव्यः संबोधयितव्यो वेति, पराभिप्रायस्य दुरन्वयत्वात्। यस्यापि हि प्रज्ञा काले न परीक्षिता, तस्यापि कदाचिदुपाध्यायादिना प्रतिपाद्यमानस्याप्रतिपत्तिरन्यथाप्रतिपत्तिश्च दृश्यते।

---

१. किं पुनरत्रावधार्यते = सन्दिग्धे एव न्यायः प्रवर्तते, उत सन्दिग्धे न्यायः प्रवर्तते एवेति।

२. पूर्वाचार्याः = न्यायभाष्यकारादय इति प्राचीनटिप्पणम्।

तथोपाध्यायोऽपि क्वचिन्निरुत्तरीक्रियमाण उपलभ्यते। तेन स्वप्रतिपत्त्युपायोपि व्यभिचारीत्यतः परप्रतिपादनोपायानिश्चयाद्वादादिषु प्रवृत्त्यनुपपत्तेरनर्थकं वादादिपरिज्ञानमिति। तान् प्रति सूत्रकारः तर्कं पृथगुद्दिश्य लक्षयित्वा च वादादिषु प्रवृत्तिसाधनत्वेनोक्तवान्—"प्रमाणतर्कसाधनोपालम्भः" (न्या० सू० १।१।४०) इति। एतदुक्तं भवति—जयपराजयहेतुत्वेन प्रमाणनिश्चितौ वा साधनोपालम्भौ तर्कविषयीकृतौ वा वादादिषु नैयायिकेनाभिधातव्यौ। कस्मात्? [1]ततोऽर्थप्राप्त्यनर्थपरिहारयोः सम्भवात्। यदा तावत्प्रमाणेनार्थमवधार्य प्रवर्त्तते, तदास्य [2]सोऽर्थः सिध्यत्येव। यदा निश्चयाभावे सति कारणोपपत्तितः संभाव्यार्थं प्रवर्त्तते, तदापि सोऽर्थस्तावदस्य सिध्यत्येव। काकतालीयन्यायेन[3] यदि व्यभिचरति, यथा तन्तुषु प्रवृत्तस्य कुविन्दस्य पट इति। तस्मात्परैराक्षिप्तेनापि नैयायिकेन वादादिषु तावन्न प्रवर्तितव्यं यावन्न स्वात्मनः सामर्थ्यं ज्ञानाद्यतिशयलक्षणं, तद्विपरीतं च परस्याऽसामर्थ्यं, सभापतिप्राश्निकयोरन्यायप्रवृत्तिनिवारणसामर्थ्यं, माध्यस्थ्यं च सुनिश्चितं सुसंभावितं वा भवति। यः पुनरहंकारमात्रेण स्वसामर्थ्यादिकमविचार्यैव प्रवर्तते, स नैयायिक एव न भवति, अविचारकत्वात्। न हि बुभुक्षितोपि सविषत्वाशंकामनिवर्त्य प्रेक्षापूर्वकारी भोक्तुमन्नं प्रवर्त्तते इति।

अर्थसंशयस्यापि प्रवृत्तिहेतुत्वादिति चेत्—अथ[4] मन्यसे यथानर्थसंशयानर्थोहानर्थनिश्चयास्त्रयोपि अप्रवृत्तिहेतवः प्रसिद्धास्तथार्थसंशयार्थोहार्थनिश्चया अपि प्रवृत्तिहेतवः। कथं संशयस्य वादादिषु प्रवृत्तिहेतुत्वं नास्तीति? न, अन्यथार्थसंशयस्य प्रवृत्तिहेतुत्वात्। यदा दुःखार्तः कश्चिद्दुःखोपशमनहेतुषु [5]संदिह्यमानोऽन्यं दुःखोपशमनहेतुं न पश्यति, तदार्थसंशयादेव प्रवर्तते, प्रवर्त्तमानस्य हि दुःखनिवृत्तिर्भवति कदाचित्। अप्रवर्त्तमानस्य तदवस्थमेव दुःखमिति। यदापीष्टार्थहेतुषु संदिह्यमानोऽन्यमिष्टार्थहेतुं न पश्यति प्रयासभूयस्त्वमनर्थप्राप्तिं वा प्रवृत्तौ न संभावयति, तदार्थसंशयादेव प्रवर्तते इति।

---

१. ततः = तर्कप्रमाणाभ्याम्।

२. सोऽर्थः = जयपराजयात्मकः।

३. काकतालीयन्यायः—अयं न्यायोऽतर्कितोपनतेष्टानिष्टयोरुभयत्र प्रयुज्यते। तद्यथा—तालतरोरधो यर्हि काको गतः तर्ह्येव तत्फलं पतितं दलितं च, तज्जग्ध्वा तृप्यति परभृत्। एवं तालमूले यावदुपविशति काकस्तावदेव तच्छिरसि महत्तालफलं पतति, स वराकः कालं गतः।

४. संक्षिप्तं पूर्वपक्षं विवृणोति—अथ मन्यसे। ५. सन्दिहान इति भावः।

इत्थं विचारकस्यार्थसंशयोपि प्रवृत्तिहेतुर्न तु द्यूतादिष्विवेति। जल्पवितण्डयोस्तु पराजितस्य महाननर्थो भवति, अप्रवर्त्तमानस्य तु न काचिन्महती क्षतिरित्यतो विचारकेण संदेहाद्वादेपि प्रथमं न प्रवर्तितव्यम्। असत्साधनादिप्रयोगं कुर्वाणस्य हि जडबुद्धिविषयत्वेनानवधेयवचनत्वप्रसंगात्। योपि प्रथमं साधनसामर्थ्यादनिश्चयः, तन्निश्चयार्थं गुर्वादिभिः सह वादं करोति, सोऽपि शिष्य एव ज्ञानार्जनाभिप्रायत्वाच्छास्त्रार्थचिन्तनप्रवृत्तवन्न सम्यग्वादीति। तदेवं वादादिप्रवृत्तिविशेषणार्थं तर्कः पृथगुपदिष्टः संशयान्तर्भूतोपीति।

## ❀ अनध्यवसायस्य संशयेऽन्तर्भावः ❀

किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसायः संशयान्न भिद्यते। वृक्षसंज्ञाविषयो हि योऽर्थः सोऽपरसंज्ञाविषयोऽपि दृष्टो, यथाम्रादिरित्येवं सामान्येन विशेषसंज्ञामनुमाय तद्भेदमाम्रादिवदनुस्मरन्संदिह्यते किंसंज्ञकोऽयं वृक्ष इति ? संज्ञाभेदस्य हि प्रसिद्धस्याप्रसिद्धस्य च बहुत्वेन स्थाण्वादिसंशयवद्विशेषसंज्ञोल्लेखी नोत्पद्यते, यथा त्वदीयैका गौः प्रसूतेत्युक्ते प्रसिद्धगोविशेषसंज्ञस्यापि गोसहस्रपतेः कतमा गौः प्रसूतेत्येवमाकार एव संशयो भवति, न भद्रा न नन्देत्यादिविशेषविकल्पी। एतेन व्यासङ्गादनर्थित्वाच्च इषुकारादीनामनध्यवसायः संशयान्तर्भावितो द्रष्टव्यः। स्थाण्वादिसंशयेपि हि न जानीमः किमिदमित्युल्लेखो भवत्येवान्तराले[1] नैतावतार्थान्तरत्वं, सविकल्पकनिर्विकल्पकप्रत्यक्षज्ञानयोरिवावान्तरभेदेपि लक्षणैकत्वादिति। तदेवं स्थितमेतदनवधारणत्वाविशेषादूहानध्यवसाययोर्न संशयादर्थान्तरभाव इति।

## ❀ संशयनास्तित्वाशङ्का ❀

ननु च संशय एव नास्ति कुतस्तत्रान्तर्भावश्चिन्त्येत ? तथा हि—तस्मिन् संशयज्ञाने किं प्रतिभाति ? धर्मी[2] धर्मो[3] वा ? यदि धर्मी, स तात्त्विकोऽतात्त्विको वा ? यदि तात्त्विकः ? कथं तद्बुद्धेः सन्देहरूपता ? तात्त्विकार्थग्रहीतिरूपत्वात्करतलादिनिर्णयवत्। अथातात्त्विकस्तथाप्यतात्त्विकार्थविषयत्वात्केशादिज्ञानवद् भ्रान्तिरेव, न सन्देहः। अथ धर्मः, स्थाणुत्वलक्षणः ? पुरुषत्वलक्षणः ? उभयं वा ? यदि स्थाणुत्वलक्षणस्ततस्तात्त्विकातात्त्विकयोः पूर्ववद्दोषः। अथ

---

१. अन्तराले = हृदयमध्ये।

२. धर्मी = स्थाण्वादिः।

३. धर्मः = स्थाणुत्वादिः।

पुरुषत्वलक्षणः, तत्रापि पूर्ववदेव दोषः। अथोभयं, तथापि उभयस्य तात्त्विकातात्त्विकयोः स एव दोषः। अथैकस्य तात्त्विकत्वमन्यस्यातात्त्विकत्वं, तथापि तद्विषयं ज्ञानं तदेव भ्रान्तं तदेव चाभ्रान्तमिति प्राप्तम्। अथ संदिग्धोर्थोऽवभाति सन्देहज्ञाने, स संदिग्धोऽर्थो विद्यते ? न वा ? इत्येवमादि[1]–विकल्पगहने पतितः खल्वयं सन्देहस्तपस्वी, न तत्त्वज्ञानविपर्ययाभ्यामर्थान्तरं भूत्वात्मानमावेदयितुं समर्थ इति।

## ❀ तत्परिहारः ❀

सोऽयं गोमयपायसीयन्यायेन[2] संदेहं निराकुर्वाणः प्रकृतजनैरप्युपेक्ष्यते। सन्देहः खलु सर्वप्राणिनामनवधारणप्रत्ययात्मकत्वेन स्वात्मसंवेद्यः, स धर्म्मिविषयो वास्तु, धर्मविषयो वा, एकं वा ज्ञानं भवत्वनेकं वा, तात्त्विकातात्त्विकार्थविषयो वा, किमेभिर्विकल्पैरस्य वालाग्रमपि खण्डयितुं शक्यते[3] ? प्रत्यक्षसिद्धभेदस्यापह्नवे हि सुखदुःखभेदस्यापह्नवः स्यात्। इष्ट एवेति चेत्, कुतः कारणात् ? तत्त्वोपप्लवसिद्धेरिति चेत्, सापि कुतः सिद्धा ? यदि प्रमाणाभावात्, प्रमाणाभावोपि कुतः सिध्यति ? लक्षणाभावात्, इत्यत्रापि यदि लक्षणाभावसिद्धावुपपत्तिरुच्यते, तदा सैवोपपत्तिस्तत्त्वमिति कथं तत्त्वोपप्लवसिद्धिः ? [4]अथ नोच्यते तथाप्युपपत्त्यभावादसिद्धिः। वचनमात्रेण च सिद्धौ सर्ववादसिद्धिः स्यात्।

किं च लक्षणाभावस्यापि प्रमाणाभावप्रतिपादकत्वेन प्रमाणत्वात्, कथं सर्वप्रमाणाभावसिद्धिः ? अथ परपर्यनुयोग एव क्रियतेऽस्माभिर्न कस्यचित्सिद्धिरिति, तदप्ययुक्तम्; परस्वरूपानिश्चये पर्यनुयोगानुपपत्तेः ? सर्वप्रमाणानभ्युपगमान्न लोकः सिद्धो न तद्व्यवहारो न तस्याविचारितस्य रमणीयत्वमित्यतः प्रलापमात्रं सर्वमनर्थकमिति। अर्थान्तरस्य समानधर्मादिदर्शनादर्थान्तरे धर्मिणि संशयो न युक्त इत्येके। तदप्ययुक्तं, यतोऽर्थान्तरत्वाविशेषेपि तन्त्वादिवद्दृष्टम्।

---

१. इत्येवमादि—अत्रादिना तात्त्विकत्वातात्त्विकत्वादिविकल्पजालं संगृह्णाति।

२. गोमयपायसीयन्यायः—प्रत्यक्षपरिदृष्टं गोमयमभिलक्ष्य कश्चनोन्मत्तः प्रलपति नेदं गोमयम्, विकारप्रत्ययान्तगोशब्दवाच्यत्वात् पायसवत्। तद्वत्सर्वजनीनानुभवसमर्थितं संशयं निराकुर्वन्नुन्मत्तोऽप्युपेक्षणीय एव।

३. शक्यते इति काकुः, न शक्यते इति भावः।

४. लक्षणाभावसिद्धौ यदि काचनोपपत्तिर्नोच्यते, तदाऽप्याह—अथ नोच्यते।

**मिथ्याऽध्यवसायो विपर्ययः ।**
**तद्यथा—द्वौ चन्द्राविति, सुप्तस्य गजाविदर्शनं चेति ।**

---

किंचिदेव कस्यचित्सहकारि जनकं च, न सर्वं सर्वस्येति । [1]समानधर्मादिमद्दर्शनात्तस्मिन्नेव विशेषत्वेन संशय इत्याचार्योद्योतकरः । तस्मादस्ति संशयः समानधर्मादिजन्यश्चेति ।

## ❀ विपर्ययनिरूपणम् ❀

मिथ्याध्यवसायो विपर्ययः । विपरीतार्थनिश्चयोऽतस्मिँस्तदभिमानो विपर्यय इत्यर्थः । तद्यथा—द्वौ चन्द्रौ इति । सुप्तस्य गजादिदर्शनं च—इत्युदाहरणान्तरं किमर्थं ? सकलविपर्ययसंग्रहार्थं मतान्तरनिषेधार्थं च । [2]केचिदत्र स्वप्नज्ञानं प्रमाणफलस्मृत्यादिभ्योऽर्थान्तरमिच्छन्तीत्यतस्तन्निषेधः क्रियते । न हि विपर्ययलक्षणेन संगृहीतस्य ततोऽर्थान्तरत्वं युक्तम् । यदपि स्वप्नज्ञानं विपर्ययादिविलक्षणं, तदपि नाविद्यान्तरम् । किं कारणं ? यत्तावदनवधारणात्मकम्, तत्संशयान्तर्भूतम् । समानधर्मादिविषय(ज्ञान)कारणाभावान्न सुप्तस्य संशय इति चेत्, न; विषयशब्देन विषयिणस्तज्ज्ञानस्याभिधानात् । तच्च समानधर्मादिज्ञानं सम्यग्वा भवतु भ्रान्तं वा इत्युभयथापि सहकारिसहितं संशयकारणत्वेनेष्टं, कार्यदर्शनाद्धि कारणस्य सामर्थ्यमवधार्यत इति । यच्चानुभूतार्थमात्रावभासिस्वप्नज्ञानं, तत्स्मरणम् । यत्तु सम्यगनुभवात्मकं, तत्प्रत्यक्षादिफलं, यथा सुखादिसंवेदनमिति । एवं च यत्स्वप्नज्ञानं यल्लक्षणेन संगृहीतं तत्तत्रैवान्तर्भूतं द्रष्टव्यं जाग्रज्ज्ञानवन्न तेभ्योऽर्थान्तरमिति । निमित्तभेदेनाप्यनेकधा विपर्ययो भिद्यते, तद्यथा—सादृश्याद्रज्जौ सर्प इति, स्थाणौ पुरुष इत्येवमादि ज्ञानम्, द्रव्यान्तरसंसर्गाच्छुक्लेपि पटादौ रक्तादिज्ञानं स्फटिकादौ चोपाधिसंनिधानमात्रादिति, क्रमभाविष्वप्याशुभावाद् युगपज्ज्ञानं, नावादि-

---

१. 'समानधर्मज्ञानाद्धर्मिणि संशयो न युक्त' इति पूर्वपक्षस्य न्यायवार्तिकोक्तं समाधानं संक्षेपतोऽनुवदति—समानधर्मादिमद्दर्शनादिति (न्या० वा० पृ० ९८)। अर्थात् बहुव्रीहिसमासस्तत्राश्रितः—'समानो धर्मो यस्य, स भवति समानधर्मा, समानधर्मण उपपत्तिः समानधर्मोपपत्तिः ।' तदा किमुक्तं भवति ? समानधर्मवतो धर्मिणो दर्शनादिति ( न्या० वा० पृ० ९८ ) ।

२. केचित् = वैशेषिकाः । तेषां मतम्—"अविद्या चतुर्विधा—संशयविपर्ययानध्यवसायस्वप्नलक्षणा । उपरतेन्द्रियस्य प्रलीनमनस्कस्येन्द्रियद्वारेणैव यदनुभवनं मानसं तत् स्वप्नज्ञानम्" ( प्रशस्त० पृ० ४३६ ) ।

यानात् स्थिरेष्वपि चलद्बुद्धिः, मन्त्रौषधादिसामर्थ्यादिन्द्रजालादिज्ञानमित्येवमादि वाह्यनिमित्तप्रधानं विपर्ययज्ञानं द्रष्टव्यमिति। अथाध्यात्मिकनिमित्तप्रधानं—चक्षुरादेः पित्ताद्यभिभवाच्छङ्खादिषु पीतादिज्ञानं, तिमिरदोषात्केशाभावेपि केशोण्डुकज्ञानं, एकस्मिँश्चन्द्रादावनेकत्वावभासश्च, संस्कारातिशयादसत्यपि युवत्याद्यर्थे युवत्याद्यवभासः, असच्छास्त्राभ्यासादश्रेयस्यनुपायादिषु च विपरीतबुद्धिः, अदृष्टसामर्थ्याद्दिगादिमोहः, तथा निद्रासहितेभ्यः संस्कारातिशयादिभ्यः स्वप्नज्ञानं वेदितव्यमिति।

विषयद्वारेण तर्हि [1]विपर्ययो विचार्यताम् (१) किमख्यातिरेव ? (२) किं वा असत्ख्यातिः ? (३) अथ प्रसिद्धार्थख्यातिः ? (४) उतालौकिकार्थख्यातिः ? (५) किं वा स्मृतिविप्रमोषः ? (६) उतस्विदात्मख्यातिः ? (७) अथ सदसत्त्वाद्यनिर्वचनीयार्थख्यातिः ? (८) आहोस्विद्विपरीतख्यातिरिति।

## ❀ अख्यातिवादस्तन्निराकरणं च ❀

[2]तत्र प्रमाणाभावात्तावदख्यातिरयुक्ता, न; प्रमाणोपपत्तेः। तथाहि—जलावभासिनि ज्ञाने तावत् न जलसत्तावलम्बनीभूताऽस्त्यभ्रान्तत्वप्रसंगात्, जलाभावस्तु न प्रतिभात्येवातो नालम्बनं, अत एव मरीचयोपि नालम्बनं प्रतिभासाभ्युपगमेपि तद्ग्रहणस्याभ्रान्तत्वप्रसंग इति। तोयाकारेण मरीचिग्रहणमित्यप्ययुक्तं, तदन्यत्वात्, न हि घटाकारेण तदन्यस्य पटादेर्ग्रहणं दृष्टम्, तस्मान्निरालम्बनं जलादिविपर्ययज्ञानं[3] स्वप्नविपर्ययवदिति।

---

१. विपर्ययः—ख्यातिः = भ्रमज्ञानम्। तद्द्विविधम्—निरालम्बनं, सालम्बनं च। (१) तत्राद्यमिहाख्यातिपदेनोपात्तम् माध्यमिकैः। द्वितीयमालम्बनवैविध्यात्सप्तविधम्—(२) असदालम्बनमिति माध्यमिकैकदेशिनः। (३) प्रसिद्धार्थालम्बनमिति चार्वाकाः। (४) अलौकिकार्थालम्बनमिति भट्टोम्वेकप्रमुखाः। (५) प्रमुष्टतत्ताकरजतस्मरणमिति प्राभाकराः। (६) आत्मनो ज्ञानस्यैवाकारो रजताख्यस्तत्र प्रथत इति सौत्रान्तिकवैभाषिकौ। (७) अनिर्वचीयं रजतमालम्बते तदिति वेदान्तिनः। (८) अन्यं विषयमन्यथावगाहते तदिति नीतिनिपुणा ब्रुवते, यथोक्तम्—

एकान्तसत्त्वे का भ्रान्तिरसत्त्वे किं प्रकाशताम्।
द्वयानुगुण्याद् वृद्धानां सम्मता ख्यातिरन्यथा॥ (विभ्र० वि० ४६)

२. अख्यातिवादी परोपालम्भं परास्य स्वमतं स्थापयति—तत्रेति।

३. सामान्याभावे साध्ये विशेषाभावो हेतुरतः सम्भावितालम्बनरहितत्वादिति हेतुदलं पूरणीयम्।

तदेतदयुक्तं, विशेषतोऽनिर्देशप्रसंगात्। यत्र हि स्वात्मरूपं पररूपं वा न किंचिदपि प्रतिभाति, तत्केन विशेषेण जलज्ञानं रजतज्ञानमिति च व्यपदिश्येत ? भ्रान्तिसुषुप्तावस्थयोरविशेषप्रसंगश्च स्यात्। नह्यत्र प्रतिभासमानार्थव्यतिरेकेणान्योऽस्ति विशेषः, प्रतिभासमानश्चार्थस्तज्ज्ञानस्यालम्बनमित्युच्यते। कथमख्यातिरेव विपर्यय इति।

## ❀ असत्ख्यातिः ❀

[1]अन्यस्त्वाह—सत्यं भवतोक्तं तथापि स प्रतिभासमानोऽर्थः सद्रूपो वा असद्रूपो वा विचार्यमाणो नास्तीत्यतोऽसत्ख्यातिरेवेष्टा। शुक्तिकादिष्वपि न शुक्लादिप्रतिभासो भ्रान्तः, किं तर्हि ? रजतप्रतिभासः, स च रजताकारस्त नास्तीत्यतोऽसत्ख्यातिरेवेति।

## ❀ तत्खण्डनं प्रसिद्धार्थख्यातिनिरूपणं च ❀

तदप्ययुक्तमित्यपरः[2]। कस्मात् ? असतः खपुष्पादिवत् प्रतिभासासम्भवात्। भ्रान्तिवैचित्र्याभावप्रसंगश्च। नह्यसत्ख्यातिवादिनोऽर्थगतं ज्ञानगतं वा वैचित्र्यमस्ति, येनानेकाकारा भ्रांतिः प्रतीयेत, तस्मात्प्रमाणसिद्ध एव विचित्रोऽर्थः प्रतिभाति भ्रान्तावपि। न च तस्य विचार्यमाणस्यासत्त्वं, विचारस्य प्रतीतिव्यतिरेकेणान्यस्यासम्भवात्, प्रतीतिबाधितत्वाच्च। करतलादेरपि हि प्रतिभासबलेनैव सत्त्वं सिध्यति, स च प्रतिभासोऽन्यत्राप्यस्ति, यद्यप्युत्तरकालं तथा सोऽर्थो न प्रतिभाति, तथापि यदा प्रतिभाति तदा तावदस्त्येव। अन्यथा विद्युदादेरपि सत्त्वसिद्धिर्न स्यादिति। तस्मात् प्रसिद्धार्थख्यातिरेव युक्तेति।

## ❀ तत्प्रत्याख्यानमलौकिकार्थख्यातिवर्णनं च ❀

[3]नैतदप्युपपन्नम् यथाव्यवस्थितार्थग्रहणाविशेषे हि भ्रान्ताभ्रान्तव्यवहाराभावः स्यात्। अपि चोत्तरत्रोदकादेरभावेऽपि तच्चिह्नस्य भूस्निग्धतादेरुपलम्भः स्यात्। न हि विद्युदादेरिवोदकादेरप्याशुभावी निरन्वयो विनाशः क्वचिदुपलभ्यते, सर्वतद्देशद्रष्टृविसंवादेनोपलम्भश्च विद्युदादेरिव स्यात्। बाध्यबाधकभावश्च न प्राप्नोति, सर्वज्ञानानां प्रसिद्धार्थविषयत्वाविशेषादिति।

---

१. अन्यः = असत्ख्यातिवादी।

२. अपरः = प्रसिद्धार्थख्यातिवादी।

३. प्रसिद्धार्थख्यातिं व्युदस्य लौकिकार्थख्यातिं साधयति—नैतदिति।

तस्मादलौकिकोऽयमर्थ एवं प्रतिभाति, तेन अलौकिकार्थख्यातिरेवेष्टेत्याह [1]कश्चित् ।

## ❀ तन्निरसनपूर्वकं स्मृतिप्रमोषस्थापनम् ❀

[2]तदप्यसारम्, तस्यार्थस्य प्रमाणाभावादसिद्धेः । यस्तावत्तोयादिरर्थः प्रत्यक्षादिसिद्धः स भ्रान्तौ न प्रतिभात्येव, पूर्वोक्तदोषात् । प्रत्यक्षादिसिद्धाद्व्यतिरिक्तस्तु कुतः सिद्ध इति ? निष्प्रमाणकत्वादेवालौकिकोऽसाविति चेत्, न; प्रमाणाभावे व्यवस्थानुपपत्तेः । अन्यथा हि सर्वत्राप्यप्रमाणिकैव व्यवस्था भविष्यतीति किं प्रमाणैः कल्पितैरिति ? तदर्थसिद्धये[3] तर्हि विपर्ययाख्यं प्रमाणं कल्पनीयम्—न चासावर्थोऽनर्थक्रियाकारी दर्शनजार्थक्रियाकारित्वात् चन्द्रादिवदिति । न, चन्द्रादिदर्शनवदबाध्यत्वप्रसंगात् । न च लोके शास्त्रे वा बाध्यमानस्य प्रमाणत्वं दृष्टमिति । अपि च यथाभूत एवार्थः प्रत्यक्षादिभिः प्रतीयते, तथाभूत एव भ्रान्तिज्ञानेपि प्रतिभाति, नालौकिकोऽन्यः, तेनायं भ्रमः स्मृतिविप्रमोष[4] इत्युच्यते, दृष्टार्थानुकारित्वात्तदन्यस्मृतिवदित्यपरो मन्यते ।

## ❀ तत्खण्डनम् ❀

तदप्यनुपपन्नम्—न हि स्मृतिरिदं रजतमित्येवमाकारा भवितुमर्हति, अनुभवेनाविशेषप्रसंगात् । [5]न च स्मृतिः प्रत्ययान्तरेण बाध्यते, यथानुभवावेदि-

---

१. कश्चित् = उम्बेकः तेनोक्तं हि—"संवित्परामर्शकुशलस्त्वाह—सत्यमेकमेवेदं विज्ञानम् । अपरोक्षतया चात्र रजतमेवावभासते । तथापि नैवेदं विज्ञानमप्रमाणम्, प्रतिभासाविशेषाद्, इतररजतविज्ञानवत् । अत्राप्यपरोक्षरजतसद्भावात्, लौकिकालौकिकत्वे तु विशेषः । प्रतिभासाविशेषेऽपि व्यवहारप्रवर्तकं हि लोके संमतं रजतम् । यत्तु रजतव्यवहारं न प्रवर्तयति, अथ च रजतज्ञानसंवेद्यम्, तदलौकिकं रजतमिति" ( श्लो० वा० ता० पृ० ५२ ) ।

२. प्रमुष्टतत्ताकस्मृतिवादी प्राभाकरः अलौकिकार्थख्यातिमपनयते स्वमतमुन्निनीषया—तदप्यसारमिति ।

३. तदर्थसिद्धये = अलौकिकार्थसिद्धये ।

४. स्मृतिविप्रमोषः = रजतमिति ज्ञानं स्मृतिः, तत्र स्मृतित्वस्य विप्रमोषः = अभिमानाभावः, अभिहितं हि बृहत्याम्—"स्मरामीतिप्रमोषादिति" ( बृ० पृ० ६८ ) ।

५. रजतमितिज्ञानस्य स्मृतित्वे 'नेदं रजतम्' इतिबाधेन बाधो न स्यादित्याह न चेति ।

तार्थविषयत्वादिति। विप्रमुषितत्वादिति चेत्, कोऽयं विप्रमोषो नाम ? यदि मनोदोषादन्यविषय[१] उत्पादः, स स्मृतेरसम्भवी लेशतोपि ह्यपूर्वांशप्रतिभासित्वे प्रत्यभिज्ञानवदस्मृतित्वप्रसंगः स्यात्। यदि मनोदोषादन्यमेव विषयं स्वविषयाकारेणावभासयति स्मृतिस्तदा [२]विपरीतख्यातिरेव संज्ञान्तरेणेष्टा स्यात्। न च मनोदोषादेव भ्रान्तिः, तिमिरादिदोषादप्युत्पत्तेः। अतोपि न स्मृतिरियम्। अथानुभवेन सह क्षीरोदकवदविवेकेन स्मृतेरुत्पादो विप्रमोष इत्युच्यते। कोऽयमविवेकः क्षीरोदकयोरपि ? यदि भिन्नयोः सतोरभेदेन ग्रहणं, तदा विपरीतख्यातिः स्यात्। अथ संश्लेषविशेषः,[३] संज्ञानयोर्न संभवीति। अथानन्तर्येणोत्पादः, तदानुमेयशब्दार्थदेवदत्तादिज्ञानानां [४]स्मरणानन्तरभाविनां स्मृतिविप्रमोषत्वप्रसंगः। यदप्युक्तं स्मृत्यनुभवयोर्विवेकाग्रहणादख्यातिरेव स्मृतिविप्रमोषः। [५]तत उत्तरं ज्ञानं तयोर्भिन्नविषययोर्विवेकं कुर्वदुत्पद्यते न बाधकं कस्यचिदिति। तदपि प्रतीतिविरोधान्न युक्तं। तथा हि—यत्तद्रजतमित्यवगतं पूर्वं तच्छुक्तिकाशकलं न रजतमित्येवं बाध उत्पद्यमानोऽनुभूयते, न तु रजतं स्मृतं शुक्तिकाशकलमिदमनुभूतमिति। रजतमितिज्ञानस्येदमिति ज्ञानसमानविषयत्वेनानुभूयमानस्यापि स्मृतित्वे शुक्तिकेति ज्ञानस्यापि स्मृतित्वप्रसंगो, विशेषाभावात्। ततश्चेदमिति प्रतीयमानं न रजतं न शुक्तिकेत्यनुपाख्यमेव[६] प्राप्तं। न चैतदुपपन्नम्। किं चातिनिरन्तरोत्पन्नापि स्मृतिरनुभवबुद्धिश्च यदि यथावस्थिताकारेण स्वार्थमवभासयति, तदा कुतस्तत्र भ्रमव्यवहारः ? तदन्ययथावत्स्वार्थावभासिज्ञानवत्। अथान्यथावभासयति तदा विपरीतख्यातिरिति।

## ❀ आत्मख्यातिः ❀

अपरस्त्वाह—रजतज्ञानं जलज्ञानम् इत्येवमादिविशिष्टव्यवहारो विशेषाभावे सति न युक्तः, तेनावश्यं ज्ञानगतोऽर्थगतो वा विशेषो वाच्यः। तत्र रजतादेरर्थ-

---

१. मनोदोषाद्धेतोरन्यस्मिन् पुरोवर्तिनि विषये उत्पाद एव विप्रमोष इत्यर्थः।

२. विपरीतेति—अन्यत्र विषये न्यावभासरूपो भ्रमः स्वीकृतः स्यात्, तथा सत्यपसिद्धान्त इति भावः।

३. संश्लेषः = संयोगः। संज्ञानयोः = अनुभवस्मरणरूपज्ञानयोः, न सम्भवति, द्रव्ययोरेव संयोग इत्यभ्युपगमात्।

४. स्मरणानन्तरम् = संज्ञासंज्ञिस्मरणानन्तरम्।

५. यद्यविवेकग्रहणमात्रेणेदं रजतमिति व्यवहारस्तर्हि नेदमित्युत्तरज्ञानेन तयोर्विवेक एव करणीयो न रजतबाध इत्याह—तत इति।

६. अनुपाख्यम् = विशेषतोऽव्यपदेश्यम्।

स्याविद्यमानत्वेनानुपलम्भाद्विशेषकत्वमयुक्तम्। न हि यो यस्य संबन्धित्वेन विशेषो नावधारितः, स तस्य विशेषको भवितुमर्हति; स्मृत्युपस्थापितोपि पूर्वानुभवस्यैव विशेषकः स्यात्, नेदानीन्तनस्य तदसंबन्धित्वात्। अथ रजतादिभ्रान्तेः शुक्तिकादिरेव विषय इति, तदयुक्तम्; रजतादिप्रतिभासाभावप्रसंगात्। न हि रूपविषयं ज्ञानं रसमवभासयतीति युक्तम्। [1]अत एव भ्रान्तिरिति चेत्—अथ[2] मतं यत एवान्यदालम्बनमन्यच्च प्रतिभाति, अत एव भ्रान्तिरित्युच्यते। यस्मिंस्तु ज्ञाने तदेवालम्बनं तदेव च प्रतिभाति, तत्तत्वज्ञानमेवेति। तदिदमनुपपन्नम्; न हि प्रतिभासमानार्थव्यतिरेकेण ज्ञानस्यालम्बनार्थोऽन्यः क्रयक्रीतोऽस्ति। केन वा [3]विशेषेण [4]तस्यालम्बनत्वम्? यदि कर्मकारकत्वेन, तत्कर्मकारकत्वं जनकत्वेनाविशिष्टस्य प्रतिभासमानतामन्तरेण कथमवगन्तुं पार्यते? तद्देशं प्रति वर्त्तमानत्वादिति चेत्, न; तद्देशवर्तिनस्तृणादेरपि कर्मकारकत्वप्रसंगात्। न हि प्रतिभासमन्तरेण मरीच्याभिमुख एवायं प्रवृत्तो न तद्देशस्थतृणाद्यभिमुख इत्यत्र विशेषहेतुरस्ति। अपि चातीतानागतार्थप्रतिभासिज्ञानं प्रति कस्य कर्मकारकत्वम्? यदि तस्यैव, तत्राविद्यमानत्वात्। अथान्यस्य, तदा तज्ज्ञानस्य भ्रान्तत्वप्रसंगः। ततश्चातीताद्यर्थप्रतिपत्त्यभाव इति, तस्माद् यदेव प्रतिभाति तदेवावलम्बनं विषयश्चेत्युच्यते। न च शुक्तिकादिविषयविशेषितत्वेपि सति रजतं मे प्रतिभाति, रजतज्ञानमिदं जलज्ञानमित्येवमादिव्यवहारो युक्तः। तस्मादुपलम्भस्यैव रजताद्याकारोऽभ्युपगन्तव्यः। स चानाद्यविद्योपप्लवसामर्थ्याद्बहिरिव प्रतिभाति, अनादिविचित्रवासनाश्च क्रमविपाकवत्यः[5] पुंसां सन्ति। तेनानेकाकाराणि विज्ञानानि स्वाकारमात्रसंवेद्यानि[6] क्रमेण भवन्तीति तस्मादात्मख्यातिरेव सिद्धेति।

## ❀ आत्मख्यातिप्रत्याख्यानम् ❀

नैतदपि युक्तम्, स्वात्मसंवित्तिनिष्ठत्वे अर्थाकारत्वे च हि ज्ञानस्यात्मख्यातिः सिध्येत। तदुभयमप्युत्तरत्र निराकरिष्यामः। किं च सर्वज्ञानानां स्वात्माकार-

---

१. अन्यज्ञानस्य अन्यविषयत्वादेव।
२. अत एवेति पूर्वपक्षमेव विभजते—अथ मतमिति।
३. विशेषेण = प्रमाणेन।
४. तस्य = प्रतिभासमानादन्यस्य शुक्तिशकलादेः।
५. विपाकः = फलं कार्यमितियावत्।
६. स्वगतमाकारमात्रं संवेद्यं येषां ज्ञानानां तानि।

ग्राहित्वाविशेषे भ्रान्ताभ्रान्तविवेको बाध्यबाधकभावश्च न प्राप्नोति, स्वात्माकारव्यभिचाराभावादिति । यदि च ज्ञानात्मनि स्थित एव रजताद्याकारः संवेद्यते, तदा सुखाद्याकारवन्न बहिष्ठः प्रतीयेत । प्रतिपत्ताऽपि तदुपादानार्थं न प्रवर्तेत, अस्थिरत्वेन प्रवृत्त्यविषयत्वादिति । अथाविद्योपप्लववशाद्बहिष्ठस्थिरत्वाध्यवसाय इति मन्यसे । नन्वेवं तर्हि विपरीतख्यातिरेवेष्टा भवति । बोधाभिन्नस्यास्थिरस्यार्थाकारस्यान्यथाध्यवसायाभ्युपगमादिति[1] ।

## ❀ अनिर्वचनीयख्यातिः ❀

[2]अन्यस्त्वाह—न ज्ञानस्य विषय उपदेशगम्योऽनुमानसाध्यो वा, येन विपरीतोऽर्थः कल्प्येत । किं तर्हि ? यो यस्मिन् ज्ञाने च भाति, स तस्य विषय इत्युच्यते । जलादिज्ञाने च जलाद्यर्थ एव प्रतिभाति, न [3]तद्विपरीतः, जलादिज्ञानव्यपदेशाभावप्रसंगात् । स जलादिरर्थः सन्न भवति, तद्बुद्धेरभ्रान्तत्वप्रसंगात् । नाप्यसन्, खपुष्पादिवत् प्रतिभासप्रवृत्त्योरविषयत्वप्रसंगात् । नापि सदसदात्मकः, उभयदोषात्, सदसतोरैकात्म्यविरोधाच्च । दिगम्बरमतेनापि सर्वज्ञानानां सदसदात्मकार्थप्रतिभासित्वाविशेषाद् भ्रान्ताभ्रान्तव्यवस्थानुपपत्तिः, तस्मादयं बुद्धिसंदर्शितोऽर्थः सत्त्वेनासत्त्वेनान्येन वा धर्मान्तरेण निर्वक्तुं न शक्यते इति । अत एवाविद्या ब्रह्मणः किं भिन्नाथाभिन्नेत्यादिविकल्पो निरवकाशः । कस्मात् ? नह्यविद्या परमार्थतः केनापि रूपेण निर्वचनीया । यदि निर्वचनीया स्यात्, ततस्तत्त्वमेव स्यात् नाविद्येति । अतत्त्वरूपा ह्यविद्या सर्वैरिष्टा तस्मादनिर्वचनीयार्थख्यातिः सिद्धेति ।

## ❀ तत्प्रत्याख्यानमन्यथाख्यातिप्रख्यापनं च ❀

[4]एतदप्ययुक्तम्—अद्वैतसिद्धौ तत्सिध्यति, तच्चाद्वैतं निराकरिष्यामः । यच्चोक्तं न विज्ञानस्य विषय उपदेशगम्य इत्यादि, ननु भवतामेवोपदेशगम्यः प्राप्तः । तथा हि—जलादिभ्रान्तौ नियतदेशकालस्वभावः सदात्मकत्वेनैव जलादिरर्थः प्रतिभाति, तद्ग्रहणेप्सोस्तत्रैव प्रवृत्तिदर्शनात् । कथमसावनिर्वचनीयः स्यात् ? न ह्येवंभूते प्रतिभासप्रवृत्ती अनिर्वचनीयेऽर्थे सम्भवत

---

१. अन्यथा = भिन्नत्वेन स्थिरत्वेन च ।
२. अन्यः = अनिर्वचनीयख्यातिवादी वेदान्ती ।
३. तद्विपरीतः = जलादिभिन्नो मरीच्यादिः ।
४. अनिर्वचनीयख्यातिं तिरस्कुर्वन् नैयायिकः स्वमतं स्थापयितुं प्रक्रमते—एतदपीति ।

इति। अथ विचार्यमाण एवासौ सदसत्त्वादिभिरनिर्वचनीयः संपद्यते, नतु भ्रान्तिकाले तथा प्रतिभातीति। एवं तर्हि अन्यथाप्रतिभासाद्विपरीतख्यातिरेवेति।[1] ननु च विपरीतख्यातिरपि प्रतिभासविरोधान्न युक्तेति, न; अभिप्रायापरिज्ञानात्। न ब्रूमो विपरीतोऽयमर्थ इत्येवं ख्यातिः, किं तर्हि? पुरुषविपरीते स्थाणौ पुरुषोऽयमितिख्यातिर्विपरीतख्यातिरित्युच्यते। ननु च पुरुषावभासिनि ज्ञाने स्थाणोरप्रतिभासमानस्य विषयत्वमयुक्तं, सर्वत्राप्यव्यवस्थाप्रसंगादिति। नैतदस्ति स्थाणुरेव हि पुरुषोऽयमित्येतस्मिन् ज्ञाने प्रतिभाति, न पुरुषः, पुरुषावभासिज्ञानमित्येतदित्ययमपि भ्रमः स्थाणुप्रतिभासित्वात्। तथाहि—बाधोत्तरकालं प्रतिसंधत्ते—स्थाणुरयं मे पुरुष इत्येवं प्रतिभास इति। द्रव्यबुद्ध्या च केषांचिदपद्रव्यग्रहणं दृष्टं, तदपि विपरीतख्यातावेव युज्यते। तथा च हस्तेन गृहीत्वान्येषामपि कथयति—मयेदं सुवर्णं रजतं वा लब्धं क्रीतं वेति। तस्मात्स्थाण्वादिरेव तत्त्वस्याग्रहणादधर्मादिवशाच्च पुरुषाद्याकारेणाध्यवसीयते इति युक्तम्।

## ❀ स्वप्नार्थविमर्शः ❀

अथ[2] स्वप्नादिज्ञाने कस्तर्हि विपरीतोऽर्थ इति? तद्देशस्थः खट्वादिरित्येके। तन्न; प्रमाणाभावात्। न हि सन्निहितत्वादेव ज्ञानस्य विषयः, किं तर्हि? यः प्रतिभाति स चोत्तरकालं प्रतिसंधानबलेनापि व्यवस्थाप्यते। न च खट्वादौ प्रतिसंधानमप्यस्ति, तस्मान्नासौ विषयः, किं तर्हि? पूर्वोपलब्धोऽनुपलब्धो वा विद्यमानोऽविद्यमानो वा यः प्रतिबुद्धावस्थायां बाधकप्रत्ययेन स्थाण्वादिवदनुसंधीयते, स खलु देशकालस्वभावान्यत्वेन[3] स्वप्नज्ञाने प्रतिभासनात् विपरीत इत्युच्यते। तथाहि—प्रबुद्धः सन् कथयति—मयाद्य स्वप्ने मृतः पिता जीवतीति दृष्टः, पुत्रस्तु देशान्तरस्थित इहस्थित इति, अन्धो नान्ध इत्येवमादि। केशोण्डुकज्ञानेपि अविद्यमानः केशसमूहः सदाकारतया प्रतिभाति, बाधकोत्पत्तौ [4]तथानुसंधानात्। ननु चाविद्यमानस्यालम्बनत्वायोगान्निर्विषयो विपर्ययः प्राप्त इति। न, अतीतानागतयोरविद्यमानत्वेऽप्या-

---

१. विपरीतख्यातिः = अन्यथाख्यातिः।

२. स्वाप्नज्ञानेऽन्यथाख्यातिं निर्वाहयति—अथेति।

३. देशकालस्वभावान्यथात्वेनेत्यर्थः। कालान्यथात्वस्योदाहरणम्—मृतो जीवतीति। देशान्यथात्वस्य—देशान्तरस्थित इहेति। स्वभावान्यथात्वस्य—अन्धो नान्ध इति।

४. तथा = अविद्यमानत्वेन।

लम्बनत्वात्। निरालम्बनत्वे हि अख्यातिरेव स्यात्। तत्र च दोष उक्त इति। अतीतानागतस्वप्नादिज्ञानानामविद्यमानार्थालम्बनत्वाविशेषाद्, भ्रान्ता-भ्रान्तविशेषानुपपत्तिरिति चेत्, न; तद्रूपातद्रूपगृहीतत्वेन तत्त्वज्ञानेतरयोर्विशेषोपपत्तेः। न हि विद्यमानाविद्यमानार्थालम्बनत्वेन तत्त्वज्ञानेतरविभागः, किं तर्हि ? अविद्यमानोऽप्यर्थो यदा तथाभूतेनैवाविद्यमानाकारेण निश्चीयते, तदा तद्विषयं तत्त्वज्ञानमेव; तद्रूपाव्यभिचारात्। यदा तु विद्यमानेनान्येन वा विपरीताकारेणासन्नर्थोऽध्यवसीयते, तदा भ्रान्तिरिति।

एतेन यदाहुरेके—सत्योदकमसत्योदकं चेत्युदकप्रपंचोऽयं मधुरोदकादिवत्। तत्र यथा सत्योदकबुद्धौ नासत्योदकं प्रतिभाति, अनुदकं वा, एवमसत्योदकज्ञानेऽपि न सत्योदकं प्रतिभात्यनुदकं वेति। स्वविषये पर्यवसायिन्यो हि बुद्धयः। तस्मान्न विपरीतोऽस्तीति। तदपि निरस्तम्, नह्यसत्योदकं नाम किंचिदस्ति। विद्यमानमपि यदीदमसत्योदकमित्येवं निश्चीयते, तदा भवेदभ्रान्तज्ञानम्। यदा तु पानादिसमर्थोदकाकारेणाध्यवसीयते, तदा कथमभ्रान्तज्ञानम् ? विपरीतार्थाध्यवसायस्य सर्वलोकशास्त्रेषु भ्रान्तत्वेन प्रसिद्धत्वात्। तद्विरोधेन[1] च प्रवर्त्तमानोऽयं न लौकिको न परीक्षक इत्युपेक्षणीय एवेति।

## ❁ चार्वाकस्य भ्रान्तत्वगमकाभावाक्षेपः ❁

ननु च ज्ञानस्य भ्रान्तत्वं कुतोऽवगम्यते ? न प्रत्यक्षात्, तदर्थलिप्सया हि भ्रान्तस्य ज्ञातुः प्रवृत्तिर्न स्यात्, नापि बाधोत्पत्तिकाले तस्य[2] प्रत्यक्षत्वं, तदा भ्रान्तज्ञानस्यातीतत्वात्। न चातीतमस्मदादिप्रत्यक्षेण संवेद्यते इति तेन[3] चात्यन्ताप्रत्यक्षेण बाधोत्पत्तेरन्यस्य वा लिङ्गस्य व्याप्त्यप्रसिद्धेरनुमानमपि न प्रवर्त्तते, न हि सामान्यतोपि कार्यकर्त्रादिवदत्र व्याप्तिः क्वचिद् गृहीता। सर्वत्र चानुमानेन व्याप्तिग्रहणे त्वनवस्था स्यादिति। एतेनाभ्रान्तत्वस्यापि ग्रहणं प्रत्युक्तम्। अपि चाभ्रान्तत्वस्य लिङ्गं किमदुष्टकारकोत्पाद्यत्वमुत बाधानुत्पादः ? किं वा प्रवृत्तिसामर्थ्यमिति ? न तावददुष्टकारकोत्पाद्यत्वम्, नयनादृष्टादिकारणानामतीन्द्रियत्वेनादुष्टत्वस्यानिश्चयात्। न हि स्वयमसिद्धं लिङ्गं लिङ्गिनः प्रतिपादकम्। न च तदुद्भूतविशिष्टज्ञानादेव कारकादुष्टत्वसिद्धिः, इतरेतराश्रयत्वदोषेणोभयोरसिद्धेरिति[4]। नापि बाधानुत्पादस्तस्य लिङ्गं, बाधानुत्पादस्य

१. तद्विरोधेन = लोकशास्त्रविरोधेन।

२. तस्य = भ्रान्तत्वस्य।

३. तेन = भ्रान्तत्वेन।

४. उभयोः = विशिष्टज्ञानत्वकारकादुष्टत्वयोः।

पुरुषाप्रवृत्तिदेशान्तरगमनमरणादिनिमित्तादपि सम्भवात्। अपि च सर्वपुरुषबाधानुत्पत्तेरसर्वविदावगन्तुमशक्यत्वात्। प्रतिपत्तृबाधानुत्पत्तिस्त्वनैकान्तिकी[1] कतिपयपुरुषाणामपि अनेककालभ्रान्तत्वदर्शनात्। कदाचिदपि[2] बाधा नोत्पद्यते इत्येतन्नासर्वविदावगन्तुं पार्यते। तस्मान्न बाधानुत्पत्तिरपि लिङ्गम्। नापि प्रवृत्तिसामर्थ्यम्, प्रवृत्तिसामर्थ्यं ह्यर्थप्राप्त्यनर्थपरिहारलक्षणम्, तच्चेदनवगतं कथमसिद्धं गमकं भवेत्? अथावगतम्, तदवगतेरव्यभिचारित्वं कथमवगम्यत इति अपरिहार्या पूर्वोक्तविकल्पपरम्परा स्यादिति। अपि च चन्द्रादिप्रतिभासस्याभ्रान्तत्वं न सिध्येत्, चन्द्राद्यर्थस्य प्राप्त्यसंभवात्। न चोदकार्थस्यापि प्रतिभातस्य प्राप्तिः संभवति, तस्य वाय्वादिभिः [3]प्राणिविशेषैश्चावयवक्रियोत्पादनद्वारेण प्रतिक्षणं विनाश्यमानत्वात्, तज्जातीयार्थप्राप्तेस्त्वनैकान्तिकत्वान्न गमकत्वम्। [4]तद्वंशजार्थप्राप्तिर्गमिकेति चेत्, न; अन्त्यावयविनामजनकत्वेन तद्वंशजार्थासंभवात्। न च तदसिद्धौ तद्वंशजोऽयमर्थ इत्यनुमानं किंचिदस्ति, तदेवमादिभिर्दूषणैरव्यभिचारित्वस्य[5] लिङ्गं निराकृतमित्यतो न लिङ्गतोऽपि ग्रहणमिति।

## ❀ तत्समाधानम् ❀

अत्रोच्यते—यदि भ्रान्तत्वादिनिश्चयो नास्ति, कथं तर्ह्ययं लोकशास्त्रेषु व्यवहारः—सम्यगवगतं मया, मिथ्या ज्ञातं त्वयेति। न हि वस्तुतथात्वनिश्चयमन्तरेण तद्व्यवहारो युज्यते। मिथ्यानिश्चयपूर्वकोऽयं व्यवहार इति चेत्, ननु निश्चयस्य मिथ्यात्वानवगमे कथं जानीषे मिथ्यानिश्चयपूर्वको व्यवहार इति। यश्चात्र[6] प्रतिपत्त्युपायस्त्वयोच्यते, तत एवान्यत्रापि भ्रान्तत्वनिश्चयस्तद्विपर्ययाच्चाभ्रान्तत्वनिश्चयोपीति कथं सर्वत्र भ्रान्तत्वादिनिश्चयाभाव इति? न मया प्रमाणं क्वचिदुच्यते सर्वत्र सन्देहमात्रप्रदर्शनादिति चेत्, ननु सन्देहोपि उभयादर्शने सति भवति, ततश्च स्थाणुत्वपुरुषत्वादिवद् भ्रान्त-

---

१. कादाचित्की बाधानुत्पत्तिर्लिङ्गमुतात्यन्तिकी ? आद्यां निराकरोति—प्रतिपत्तृबाधेति। कदाचित् तस्यैव प्रतिपत्तुः बाधोत्पत्तेरनैकान्तिकता।

२. द्वितीयां निराह—कदाचिदपीति।

३. प्राणिविशेषैः = जलजन्तुभिः।

४. तद्वंशजः = तत्सन्ततिजः।

५. अव्यभिचारित्वस्य = अभ्रान्तत्वस्य।

६. अत्र = मिथ्यात्वनिश्चये।

त्वादिनिश्चयः क्वचिदभ्युपगन्तव्यः। तत्सिद्धौ[1] च तन्निमित्तं प्रमाणं यदुपपद्यते तदवश्यं त्वयापि चिन्तनीयं, प्रसिद्धव्यवहारनिमित्तचिन्तापरत्वात्परीक्षकाणाम्। सन्देहप्रदर्शनमपि नाप्रमाणेन युज्यते, येनैव प्रदर्श्यते तस्यैव प्रमाणत्वात्, कथं न प्रमाणं क्वचिदुच्यते ? अथानेकविकल्पैः परस्य सन्देहः क्रियते न तु प्रदर्श्यते[2] इति, न; अनेकविकल्पानां सन्देहजनकत्वानिश्चये सत्युपादानायोगात्। न हि कारणस्य सामर्थ्यानिश्चये कार्यविशेषं प्रत्युपादानं युक्तम्, यस्य कस्यचिदुपादानप्रसंगात्। सन्देहेऽपि तन्त्वादीनां कार्यविशेषं प्रत्युपादानं दृष्टमिति चेन्न; तन्त्वादीनामपि पटादिकार्योत्पादनयोग्यताया निश्चितत्वात्, तन्त्वाद्यभावे पटादिकार्यानुत्पादस्य च निश्चितत्वात् नियतोपादानं युक्तम्। भवतस्तु न क्वचिन्निश्चय इति अप्रवृत्तिरव्यवस्थितप्रवृत्तिर्वा प्रसक्तेति। तस्मादात्मनोऽसम्बद्धप्रलापित्वपरिहारार्थं क्वचिद्वाच्यं प्रमाणम्। तच्चानिश्चितं वक्तुमशक्यं तन्निश्चयश्च भ्रान्ताभ्रान्तविवेकनिश्चयाभावान्नोपपद्यत इत्यतोऽस्ति भ्रान्तत्वादिनिश्चयः। स तर्हि कुतः प्रमाणादिति चेत्, ननु पर्यालोचनीयमेतदावयोरपि। तत्र ज्ञानोदयानन्तरमेव निर्विकल्पकं प्रत्यक्षं भ्रान्तत्वादिविशिष्टज्ञानग्राहकमभ्युपगन्तव्यमन्यथा ह्ययं भ्रान्ताभ्रान्तव्यवहारो निर्मूलः स्यात्। न च [3]विपर्यस्तस्याप्रवृत्तिप्रसंगः, तद्भ्रान्तत्वग्रहणस्याव्यक्तत्वाद्भावतः कण्टकादिग्रहणवत्। व्यक्तं[4] हि ज्ञानं स्मरणात्मकमनुभवात्मकं वाऽनिष्टविषयनिवृत्तिनिमित्तं दृष्टम्। अव्यक्तग्रहणेपि निमित्तविशेषाद् व्यक्ता स्मृतिर्दृष्टा। यथा प्रथमगोपिण्डग्रहणकाले गोत्वस्यानुगतव्यावृत्तस्वरूपाव्यक्तग्रहणे सत्युत्तरकालं सजातीयविजातीयपिण्डदर्शनात् स्पष्टा स्मृतिर्भवति—अनेन सदृशो मया दृष्टः, एतद्विलक्षणो मया दृष्ट, एतत्सादृश्यं तस्यैतद्वैलक्षण्यमिति। एवं भ्रान्तत्वाभ्रान्तत्वयोरस्पष्टग्रहणोत्तरकालं वाधकसंवादकज्ञाननिमित्तात् स्पष्टा स्मृतिर्भवति—मिथ्या सम्यग् वा ज्ञानं तदिति। अथवा वाधकसंवादकज्ञानोत्पत्त्यनन्तरमेव तयोः[5] प्रत्यक्षत्वं, तदानीं तयोः प्रत्यक्षत्वमयुक्तमिति चेन्न, मनसस्त्रिकालविषयत्वात्। अन्यथा हि योगिनामप्यतीतानागतग्रहणं न स्यात्। योगिनां योगजधर्मसामर्थ्यादतीतादिप्रत्यक्षं युक्तमिति चेत्, नन्वस्मदादेरपि क्वचिद्विषये निमित्तविशेषसहितपूर्वोपार्जितादृष्टसामर्थ्यात् किं न युक्तम् ?

१. तत्सिद्धौ = भ्रान्तत्वादिसिद्धौ।
२. प्रदर्श्यते = उपन्यस्यते।
३. विपर्यस्तस्य = भ्रान्तस्य प्रथमत एव भ्रान्तत्वनिश्चयेऽप्रवृत्तिप्रसङ्ग इति भावः।
४. व्यक्तम् = सविकल्पकम्।
५. तयोः = भ्रान्तत्वाभ्रान्तत्वयोः।

कार्यानुमेयत्वाददृष्टसामर्थ्यस्येति। अथ बाधोत्पादाद्यनुमानेनैव भ्रान्तत्वादि निश्चीयते। व्याप्तिस्तर्हि केन गृहीता? ननु अनुमानान्तरेण तस्याप्यनुमानान्तरेणेति भूता तर्ह्यनवस्था। ततः को दोषः? संसारस्यानादित्वादिष्टैवेति। प्रथमं तावदाहारादिस्मरणवद्[1] व्याप्तिस्मरणमपि जन्मान्तरभाविसंस्कारादृष्टोपेताद् भवति। दृष्टान्तपरम्परासाधनोपक्षीणस्य न प्रकृतसाध्यसिद्धिरिति चेत्, न; दृष्टान्तस्य प्रागेव सिद्धत्वात्। नहि कश्चिदग्न्यनुमानकाले महानसादिष्वग्निधूमयोः सम्बन्धं प्रत्येति। अथ परं प्रत्यनुमानकालेऽवश्यं दृष्टान्तः साधनीय इति। स यदि परः सर्वत्र दृष्टान्तं प्रति विप्रतिपद्यते, तदास्य तन्मूलो[2] भ्रान्ताभ्रान्तनिश्चयो न प्राप्नोति, तदभावे[3] लोकशास्त्रप्रसिद्धस्तद्व्यवहारो निवर्त्तते। धूमादिव्याप्तिग्रहणस्यापि अपह्नवं कुर्वाणो हि लोकव्यवहारविरोधेनैव निराक्रियते नान्यथा। स च विरोधोऽत्रापि[4] समानः, तस्मात्परस्यापि क्वचित्प्रसिद्धो दृष्टान्तः तद्बलेनान्योपि साध्यते इति। अथवा आदौ तावत्सर्वप्रत्यक्षदर्शिना केनचिदसर्वविदः केचिद् व्याप्तिं ग्राहिताः, तैस्त्वाप्तोपदेशाद्यस्य ज्ञानस्य बाधा भवति तद्भ्रान्तं, यस्य तु संवादकं ज्ञानान्तरं भवति तदभ्रान्तमित्येवं व्याप्तिं गृहीतवान्ये ग्राहितास्तैरप्यन्ये तैरप्यन्य इत्येवं यावदस्मदादयो [5]घटादिदिव्यव्याप्तिवदिति। कार्यकारणयोरपि प्रत्यक्षानुमानाभ्यां व्याप्तिग्रहणमनयैवोपपत्त्या समर्थयितव्यमिति।

यच्चोक्तमदुष्टसामग्रीजन्यत्वमभ्रान्तत्वलिङ्गं न भवतीति। तदभ्युपगम्यत एव, बाधानुत्पत्तिस्तु गमिका क्वचिदिष्टैव यत्रावभातार्थाविपरीतत्वमन्तरेणान्यथा बाधानुत्पत्तिर्न संभाव्यते विचारकैरपि यथा देशकालावस्थादिविशेषोपेतस्य ज्ञातुश्चन्द्रैकत्वज्ञाने, यत्पुनरेतद्विपर्ययज्ञानं स्वकारणसामर्थ्यात्तथाविध-

---

१. बालस्य दुग्धपानादिरूपाहारस्मरणवदित्यर्थः।

२. तन्मूलः = दृष्टान्तमूलः।

३. तदभावे = भ्रान्ताभ्रान्तत्वनिश्चयाभावे।

४. यत्र बाधितत्वम्, तत्र भ्रान्तत्वमिति व्याप्तौ।

५. घटादिदिव्यव्याप्तिः—घटः = धर्मशास्त्रेषु प्रसिद्धः पुंसां शुद्धाशुद्धत्वसंसूचकः शपथप्रकारः तुलाविशेषः। पुरुषाधिष्ठिते तुलाफलकेऽवनतेऽशुद्धः पुमानन्यथा शुद्धः। तत्र शुद्धत्वफलकोन्नमनादेः व्याप्तिः केन गृहीतेति नियोगस्येदमुत्तरम्—आदौ केनचन महर्षिणाप्तधौरेयेण गृहीतव्याप्तिकेनाऽन्ये ग्राहिताः, तैरप्यन्ये तैरप्यन्ये। तादृशः क्रमोऽत्राप्यवसेय इति समाशयः।

मुत्पन्नं, यद्बाधकज्ञानोत्पादप्रतिबन्धकृत् तद्ध्वंसोपि[1] तथाविध[2] एव, [3]परेष्टसम्यग्ज्ञानवदिति ।

तदप्ययुक्तम्, नहि परेण सम्यग्ज्ञानं बाधकज्ञानोत्पादप्रतिबन्धकृदिष्टं, किं तर्हि ? यथाप्रतिभासविषयस्यावैपरीत्यं भ्रान्त्यनुत्पादो वा । न च कस्यचिदुत्पादस्य भूतस्याभूतस्य वा प्रतिबन्धः कर्तुं शक्यते, किं तर्हि ? कारणं प्रतिबध्यते, यत्कारणं सहकारिषु सत्स्वपि कस्यचित्सद्भावे कार्यं न करोति, अभावे तु करोति, तत्तेन प्रतिबद्धमुच्यते, यथा गुरुत्वादिकं संयोगादिना । बाधोत्पत्तौ च किं केन प्रतिबध्यते इति । न च यद् यस्य प्रतिबन्धकं तद्ध्वंसोपि तस्य प्रतिबन्धको भवति, नहि संयोगादिध्वंसोऽपि गुरुत्वादेः प्रतिबन्धकः, प्रत्युत सहकार्येवेति, तस्मात्तद्ध्वंसोपि तथाविध एवेत्यनुपपन्नम् । शुक्तिकेयं रजतमित्यादिज्ञानस्य प्रागुत्पन्नरजतमिदमित्यादिज्ञानबाधकत्वेन लोकशास्त्रेषु प्रसिद्धत्वात् । [4]तस्य किमर्थो बाध्यते, ज्ञानं वेत्याद्यनेकविकल्पैर्निराकरणं गोमयपायसीयन्यायमाक्षिपति । तथा च केयं ज्ञानस्य बाधा विषयापहारलक्षणा फलापहारलक्षणा वेत्यादि विचारोपि न क्वचिदुपयुज्यते । भ्रान्तिज्ञानस्यैव बाधा भवति न यथार्थज्ञानस्येत्येवं व्याप्तिप्रतिपादनमेवोपयुज्यते । तदेवं बाधानुत्पादेन क्वचिदभ्रान्तत्वं गम्यते क्वचित्पुनः प्रवृत्तिसामर्थ्येन यथोदकाद्यर्थप्राप्त्या पूर्वोदितोदकादिज्ञानस्येति[5] ।

ननु च प्रतिभातार्थस्य प्राप्तिर्न संभवतीत्युक्तं, न; पाषाणाद्यर्थस्य कस्यचिदवभातस्य प्राप्तिसंभवात्, उदकाद्यर्थस्य तु विनाशेऽपि तत्संतानभाविनः प्राप्तिर्गमिका । कः पुनरयं सन्तानः ? तत्सदृशनिरन्तरोत्पादः । तदेवेदमिति लौकिकाविसंवादिप्रत्ययहेतुः । नहि [6]भ्रान्त्यार्थमवधार्य प्रवर्त्तमानस्तत्सन्तानभाव्यर्थमपि यथा प्रतिभानं प्राप्नोति, तस्मादवभातार्थप्राप्त्या तत्सन्तानभाव्यर्थप्राप्त्या च पूर्वज्ञानस्याभ्रान्तत्वं गम्यते । एतेन तद्देशत्वं व्याख्यातम् ।

---

१. तद्ध्वंसः = तद्विपर्ययः ।

२. तथाविधः = बाधकज्ञानोत्पादप्रतिबन्धकृत् ।

३. परेष्टः = परैः नैयायिकैरिष्टः । उक्तं हि तत्वोपप्लवे—"विपर्ययज्ञानं बाधकज्ञानोत्पादप्रतिबन्धकृत्, ज्ञानत्वात्, सम्यग्ज्ञानवत्" । ( त० उ० पृ० )

४. तस्य = रजतज्ञानस्य ।

५. ज्ञानस्येति, अभ्रान्तत्वं गम्यते इति पूर्वेणान्वयः ।

६. भ्रान्त्या = विपर्ययेण ।

[1]तदनिश्चये कुतः तत्सन्तानभावित्वनिश्चय इति चेत्, न; अविसंवादतस्तन्निश्चयात्, नह्यवभातार्थस्यासम्भवेऽन्यथात्वे वायं प्रतिपत्ता प्रवृत्त्युत्तरकाले स एवायमिति तमर्थं व्यवसाय[2] अनेकेषु जनसमूहेषु व्यवहरन्नपि न विसंवाद्यते। तदेवमविसंवादान्निश्चीयते यथैवासावर्थः प्रतिभातस्तथैवेति।

यस्तु पुनरप्रवृत्तोऽप्यवभातार्थस्य विशेषानुपलभते स तद्देशस्थ एव तैर्विशेषैरर्थतथाभावं व्यवसाय पूर्वज्ञानस्याभ्रान्तत्वं प्रतिपद्यते पुरुषान्तरवचनसंवादाद्वेति। एवं च चन्द्रादिज्ञानानामभ्रान्तत्वं न सिध्येदित्युक्तम्, न हि प्रवृत्तिसामर्थ्यादिवेत्यवधार्यते, हुताशनादिवदभ्रान्तत्वस्यापि विकल्पेनानेकलिंगानुमेयत्वात् प्रमाणान्तरगम्यत्वाच्चेति।

अन्ये तु वर्णयन्ति—प्रवृत्तिसामर्थ्यमित्यनेन प्रमाणान्तरसंवादोऽभिप्रेतः। स चावभातार्थस्य नष्टस्यानष्टस्य वा विशेषोपलम्भात्संभावितानेकपुरुषाभिधानाद्वा भवति, तेन सर्वत्रापि संशयविषये प्रवृत्तिसामर्थ्यादेवाव्यभिचारित्वनिश्चयमभ्युपगच्छता न दोषः कश्चिदिति।

या पुनरियमनवस्था चोदिता तदवगतेरव्यभिचारित्वं कथमवगम्यत इत्यादिना, सापि निश्चयपूर्वकलोकव्यवहारबाधितत्वादनुपपन्ना। यतो द्वितीयेन तृतीयेन वा विशेषोपलम्भेन निराकांक्षा व्यवहर्तारो दृश्यन्ते इति। प्रागेव वानवस्था निराकृतेत्यतोऽनवस्थाभयात् स्वतःप्रामाण्यमपि नाभ्युपगन्तव्यम्।

## ❀ स्वतःप्रामाण्यवर्णनम् ❀

यदाहुरेके[3]—"यदा[4] स्वतःप्रमाणत्वं तदान्यन्नैव मृग्यते।
निवर्त्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः॥"

स्वतःप्रमाणत्वं च—प्रमाणानामुत्पत्तौ प्रवृत्तौ ज्ञप्तौ च निरपेक्षत्वम्।

---

१. तदनिश्चये = पूर्वोदकानिश्चये।

२. व्यवसाय = निश्चित्य।

३. एके = भाट्टाः।

४. परतःप्रामाण्यपक्षप्रोक्ताऽनवस्था न स्थातुमर्हति स्वतःप्रामाण्यवादे इत्याह—यदेति (श्लो० वा० २।५२)। अयमभिसन्धिः—ज्ञायमाना दोषाः प्रामाण्यं घ्नन्तोऽप्रामाण्यं लम्भयन्ति, दोषाज्ञानाद् अयत्नत एवाप्रामाण्यं नायातीति स्वस्थं प्रामाण्यमवतिष्ठते। अन्यत् किञ्चित्प्रमाणं गुणं दोषाभावं वा प्रमातुमत्र नापेक्ष्यते।

अप्रमाणानां त्वपेक्षात्रयोपेतत्वात्परतोऽप्रामाण्यमिति। यथाहि—मिथ्याज्ञानं बोधजनककारणकलापव्यतिरिक्तमिन्द्रियादिदोषमपेक्ष्योत्पद्यमानमप्रमाणं भवति, नत्वेवं सम्यग्ज्ञानं यथार्थत्वे बोधोत्पादकसामग्र्यतिरिक्तं किञ्चिदपेक्षते, स्वभावेनैव तत्कारणानां निर्मलत्वात्, न नैर्मल्यापेक्षापि युक्ता, दोषास्त्वागन्तुका इति अप्रामाण्यस्य युक्ता तदपेक्षा, अत एव दोषप्रोत्सारणे गुणानां व्यापारो, न तु प्रामाण्योत्पत्तौ। न ह्यजाततिमिरादिदोषाक्षस्यांजनादिगुणाभावे सति प्रामाण्यं नोत्पद्यते। न चादृष्टान्वयव्यतिरेकस्यापि सत्तामात्रेण कारणत्वं युक्तमतिप्रसङ्गात्। अञ्जनादिदृष्टान्तादन्येषामप्याप्तोक्तत्वादिगुणानां दोषनिराकरण एव व्यापारोऽनुमातव्य इति। तथा सम्यगर्थप्रकाशनाख्ये स्वकार्ये प्रवर्त्तमानं प्रमाणं [1]स्वात्मज्ञानं कारणगुणान् वा नापेक्षते। स्वज्ञप्तावपि बोधात्मकत्वव्यतिरेकेण न किंचिदपेक्षते, अनवस्थाप्रसङ्गात्। अप्रमाणं तु हेतूत्थदोषज्ञानमर्थान्यथात्वज्ञानं वापेक्षते इति।

## ❀ तन्निरासः परतःप्रामाण्यव्यवस्थापनं च ❀

यत्तावदुत्पत्तौ निरपेक्षत्वमिति तन्न, प्रकाशदेशादृष्टादिविशेषापेक्षत्वात्। नहि यथाभूताः प्रकाशादिविशेषाः सम्यग्ज्ञानोत्पत्तौ चक्षुरादिभिरपेक्ष्यन्ते, तथाभूता मिथ्याज्ञानोत्पत्तावपीति। न च तैर्दोषापगम एव क्रियते, तदभावे तत्त्वज्ञानोत्पत्तेरप्यसंभवात्। लिङ्गादितत्त्वज्ञानं चानुमेयादिबुद्धावन्वयव्यतिरेकावधारितसामर्थ्यमन्तःकरणादिभिरपेक्ष्यते। तत्कथं प्रमाणस्य निरपेक्षत्वम्? काचकामलादयस्तु गोलकादिसन्निविष्टानां धातूनां वैषम्यावस्थामात्रत्वात् कथं तदपेक्षया परतःप्रामाण्यम्? साम्यावस्थापेक्षया परतःप्रामाण्यप्रसंगात्। अपि च भाववदभावस्याप्यन्वयव्यतिरेकाभ्यां कारणत्वसिद्धेः, [2]पतनकर्मादिष्विव कथं न दोषाभावापेक्षित्वेपि चक्षुरादेः प्रामाण्योत्पत्तौ सापेक्षत्वम्, भावादर्थान्तरत्वं चाभावस्योत्तरत्र प्रतिपादयिष्यामः।

अथ भावात्मकमधिकं कारणं नापेक्षत इति स्वतःप्रामाण्यमुच्यते, न; समयमात्रत्वात्। अन्यथापि समयः शक्यते कर्तुमिति नैतावता काचिदर्थसिद्धिः। न च स्वतःप्रामाण्योत्पत्तौ किंचित्प्रमाणमस्ति, विपर्यये[3] तु इदं अनुमानं—प्रामाण्यं परतो भवति अभूत्वाभावित्वाद् अप्रामाण्यवदिति।

---

१. स्वात्मविषयेऽन्यदुपलम्भकं ज्ञानम्।

२. पतनकर्मादिषु संयोगाभाव इवेत्यर्थः।

३. परतःप्रामाण्योत्पत्तौ।

स्वकार्यप्रवृत्तावपि प्रामाण्यस्य सापेक्षत्वम्, विशिष्टबोधजनकस्य चक्षुरादेरेव प्रमाणत्वात्। तस्य[1] च [2]सापेक्षत्वं प्रतिपादितम्। सामग्र्यवस्थायां तु निरपेक्षत्वं अप्रामाण्येऽप्यस्ति न विशेषः कश्चित्। केवलस्यैव बोधस्य प्रामाण्यं निराकरिष्यामः तेन तस्य स्वतः परतो वा प्रवृत्तिर्न चिन्त्यते। योऽप्ययं दृष्टान्तः स्वतःप्रवृत्तावुक्तः--

[3]"**मृच्चक्रदण्डसूत्रादि घटो जन्मन्यपेक्षते।**
**उदकाहरणे तस्य तदपेक्षा न विद्यते॥"**

सोऽप्रामाण्येऽप्यविशिष्टः। किंच घटस्यापि संयोगाद्यपेक्षत्वान्निरपेक्षत्वमसिद्धमिति[4]। तथा च ज्ञप्तिरपि परतः, स्वतो ज्ञप्तिसिद्धौ प्रमाणाभावात्। विपर्यये पुनरिदमनुमानं—प्रामाण्यं परतो ज्ञायते ज्ञेयत्वाद् अप्रामाण्यवदिति। [5]बोधात्मकत्वेनैव प्रामाण्यसिद्धौ स्वतःप्रामाण्यमिति चेत्, न; बोधात्मकत्वस्याप्रामाण्येऽपि समानत्वात्। अथोत्सर्गापवादाभ्यां तयोः[6] सिद्धिः, यस्मादुक्तम्—

---

१. तस्य = चक्षुरादेः।

२. सापेक्षत्वम् = सन्निकर्षाद्यपेक्षित्वम्।

३. "लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु" (श्लो० वा० २।४८) इति भट्टपादप्रतिपादिते दृष्टान्तपद्यं शान्तरक्षितेनोपन्यस्तम्—

मृत्पिण्डदण्डचक्रादि घटो जन्मन्यपेक्षते।
उदकाहरणे त्वस्य तदपेक्षा न विद्यते॥ (त० सं० २८९१)

तदेतद् बृहट्टीकात उद्धृतं मन्ये।

४. समुदाचरद्वृत्तिनोऽर्थस्य जनकसामग्र्यनपेक्षत्वात् कार्ये स्वतस्त्वं तदा भवानवक्ष्यत्, यद्यहं तन्मात्रापेक्षत्वं परतस्त्वमवक्ष्यम्। अपेक्षतेऽतिरिक्तं च घटो जलाहरणे—अजत्रालाभुजनल्लरीवलितः श्रोणिप्रान्ताधिरूढ उपकूपमुपनीयते, ग्रीवायां रज्वावनद्धः कूपे प्रलम्बितो गलत्याजलतलम्, द्विस्त्रिरालोडितो वारिपूरितो बहिरुद्ध्रियते, दामाधिमुक्तग्रीवः शिरसि समारोपितः कुम्भोऽम्भो लम्भयति। अहो बत! तथापि निर्विण्णोऽयं तपस्वी!

५. अयमत्रानुमानप्रयोगो गमितः—विवादाध्यासितं प्रामाण्यं स्वाश्रयग्राहकसामग्रीग्राह्यम्, बोधात्मत्वाद्, ज्ञानत्ववत्।

६. तयोः = प्रामाण्याप्रामाण्ययोः।

[1]"तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ।"

इति तदयुक्तं, मिथ्याज्ञानस्यापि प्रागपवादाद् बोधात्मकत्वेन प्रामाण्यप्रसंगात् । प्रमाणभूते च बोधे बाधोत्पत्तिरयुक्ता, सर्वबोधेषु बाधोदयप्रसंगात् । न चैकस्यैव बोधस्य प्रामाण्याप्रामाण्ये युक्ते, विरुद्धस्वभावयोरेकत्वासंभवात् । कालभेदेन सक्रियत्वनिष्क्रियत्वादिवत्तयोरप्येकत्राविरोध इति चेन्न, बोधस्यास्थिरत्वेन तदसंभवात्, न हि नष्टस्य धर्मिणः पश्चाद्धर्मो भवितुमर्हतीति । अथ भविष्यन्तीमपि बाधामपेक्ष्य बोधस्य प्रामाण्यापवाद इष्यते, यस्मादुक्तम्—यस्य[2] देशान्तरे कालान्तरे पुरुषान्तरे अवस्थान्तरे च बाधो नोत्पद्यते स बोधः प्रमाणमिति । न तर्हि बोधात्मकत्वमात्रं प्रामाण्यनिश्चायकं, किं तर्हि ? त्रैकालिकबाधाभावविशिष्टं बोधत्वं, तच्चाशक्यनिश्चयं किमस्योत्तरकालं बाधा भविष्यति न वेति ? सम्यक्त्वेनाध्यवसितस्यापि पक्षमासादिकालविकल्पेन बाधोत्पत्तेरुपलम्भात् । [3]"दोषज्ञाने त्वनुत्पन्ने नाशंका निष्प्रमाणिका" इत्यपि न युक्तं, दोषज्ञाने तूत्पन्न एवाशङ्काया संभवात् । उत्पन्ने हि दोषज्ञाने सत्यप्रामाण्यनिश्चय एव स्यात् । अथादुष्टकारणजन्यत्वादिनिश्चयेनाप्रामाण्याशंका निवर्तते, नाऽदुष्टकारणजन्यत्वादिनिश्चयस्यापि पूर्वनिश्चयवदाशंकाविषयत्वात् । अथ तत्रापि तददुष्टकारणजन्यत्वादिनिश्चयेनाशंका निवर्त्यते, न; तन्निवर्त्तकस्यापि निश्चयस्य पूर्ववदाशंकाविषयत्वात् । तत्राप्याशंकानिवर्त्तकनिश्चयप्रार्थने सति कथं नानवस्था स्यात् । ननु चानवस्था भट्टेनैव पर्यह्रियत । यस्मादुक्तम्—

[4]"एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः ।
प्रार्थ्यते तावदेवैकं स्वतःप्रामाण्यमश्नुते ॥"

---

१. श्लो० वा० २।५३ । सर्वं ज्ञानमुत्सर्गतः प्रमाणमेव । यत्र अर्थान्यथात्वज्ञानम् = बाधनिश्चयः, यद्वा हेतूत्थदोषज्ञानम् = कारणनिष्ठदोषज्ञानम्; तत्र प्रामाण्यं बाध्यते इति भावः । तदुक्तं शाबरे—"यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्यः" ( शा० भा० पृ० २८ ) ।

२. शाबरभाष्यच्छायेयम् । आनुपूर्वी तु—"यो हि जनित्वा प्रध्वंसते नैतदेवमिति, स मिथ्याप्रत्ययः । न चैष कालान्तरे पुरुषान्तरेऽवस्थान्तरे देशान्तरे वा विपर्येति, तस्मादवितथः" ( शा० भा० पृ० १५ ) ।

३. श्लो० वा० २।६० ।

४. श्लो० वा० २।६१ । प्रथमज्ञानस्य यद्बाधकं ज्ञानम्, तस्य बाधके जाते प्रथमस्य प्रामाण्यं सुस्थिरं भवति । तृतीयस्यापि बाधे समुत्पन्ने द्वितीयस्य प्रमाणतानपोह्या । एवं त्रिचतुरज्ञानक्षणेभ्यो नाधिकं ज्ञानमपेक्ष्यतेऽतो नानवस्थेति तद्भावः ।

अधिका मतिर्न प्रार्थ्यते इति कुतः प्रतिपत्तव्यं ? सर्वत्र संशयाभावान्निराकांक्षत्वेन विचारकाणामपि व्यवहारदर्शनाच्चेति। नन्वयमेवानवस्थापरिहारोऽस्माभिरभिधीयमानः किमिति भवतां विद्वेषं जनयति ? येनैव प्रमाणेनाप्रामाण्यशंका निवर्त्यते तेनैव प्रामाण्यनिश्चयोऽपि क्रियते स्थाण्वादिनिश्चयवत्, प्रमाणद्वयव्यापाराऽननुभवात् तन्नाशंकानिवृत्तौ पश्चाद् बोधत्वेन प्रामाण्यनिश्चय इति। अथ प्रागेव बोधत्वेन प्रामाण्यं निश्चितं प्रमाणान्तरेण त्वाशंकैव निराक्रियत इति, तदयुक्तं; प्रागविशिष्टस्य बोधत्वस्योर्ध्वत्वादिवदनैकान्तिकत्वेन निश्चयजनकत्वायोगात्। निर्निमित्तश्च निश्चयो न भवति। किंच बुद्धिमात्रस्यापि भवन्मतेऽतीन्द्रियत्वानुमेयत्वाभ्युपगमात्,[1] कुतो बुद्धिविशेषस्य प्रामाण्यं स्वतः प्रतीयेत ? अथ प्रमाणमज्ञातमेवार्थं प्रकाशयति तेन स्वतःप्रामाण्यमुच्यते, अन्यथा हि ज्ञातस्यार्थप्रकाशकत्वेनानवस्था स्यात् तदुक्तम्—

[2]"जातेपि यदि विज्ञाने तावन्नार्थोऽवधार्यते।
यावत्कारणशुद्धत्वं न प्रमाणान्तराद् गतम्॥
तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात्।
यावद्धि न परिच्छिन्ना तावच्छुद्धिरसत्समा॥
तस्यापि कारणे शुद्धे तज्ज्ञाने स्यात्प्रमाणता।
तत्राप्येवमितीत्थं च न क्वचिद् व्यवतिष्ठते॥" इति।

तदयुक्तम्, न हि वयं [3]निश्चितस्य [4]प्रमाणस्यार्थप्रकाशकत्वमभ्युपगच्छामो येनायमर्थवानुपलम्भः स्यात्। ज्ञानोत्पादकत्वमेव हि प्रमाणस्यार्थप्रकाशकत्वं नैयायिकैरभ्युपगम्यते। तच्च ज्ञानम् अनिश्चितादेव प्रमाणाद् भवति,

---

१. तथैव भाष्ये भणितम्—"निराकारा तु नो बुद्धिः, आकारवान् बाह्योऽर्थः... ज्ञाते त्वनुमानादवगच्छति" ( शा० भा० पृ० ३२ )।

२. श्लो० वा० २।४९–५१। यद्युत्पन्नमपि ज्ञानं तावत्स्वार्थं नावधारयेद् यावत् स्वकारणगतदोषाशंकापरिशोधनं गुणावधारणरूपप्रमाणान्तरान्न भवेत्। तदपि प्रमाणान्तरं स्वकारणगुणावधारणार्थमन्यत् प्रमाणं प्रतीक्षते। तदप्यन्यदित्यनवस्था। अपरिच्छिन्नः = अज्ञातः गुणादिरसन्निवेति न प्रामाण्यं गमयिष्यतीति भावः।

३. निश्चितस्य = ज्ञातस्य।

४. प्रमाणस्य = चक्षुरादेः।

स्मरणाज्ञानव्यवच्छेदार्थमनुभवग्रहणम् ।

न केवलं प्रमाणाद् अप्रमाणादप्यनिश्चितादेव ज्ञानं भवति । प्रवृत्तिरपि पुरुषस्याभिलाषादिपूर्विकार्थप्राप्त्यनर्थपरिहारानुष्ठानलक्षणा भवन्ती प्रायेण प्रमाणतदाभासविवेकनिश्चयं नापेक्षते, किन्तु तथा प्रवृत्तोऽर्थप्राप्तिविप्रलंभाभ्यां संदिह्यमानः[1] क्वचिदैकान्तिकार्थप्राप्त्यर्थं प्रमाणनिश्चयमपेक्ष्य प्रेक्षापूर्वकारी प्रवर्त्तत इत्यर्थवत्त्वं तत्र प्रमाणनिश्चयस्येति । [2]बोधमात्रे यथा प्रथमं सम्यक्त्वाध्यवसायो निमित्तान्तरानुपलम्भादपि, न तथा क्वचिन्मिथ्यात्वाध्यवसायो भवति, तेन [3]प्रमाणाप्रमाणयोः स्वतःपरतस्तद्भाव इति चेत्, नाऽन्यनिमित्तत्वात् । यथा बाहुल्येन साधुपुरुषान् दृष्टवतः पुरुषमात्रे प्रथमं साधुत्वाध्यवसायो भवति, असाधुत्वाध्यवसायस्तु निमित्तान्तरोपलम्भात् । तथा बोधानां बाहुल्येन सम्यक्त्वदर्शनात्तदभ्यासजनितपटुसंस्कारस्य[4] बोधमात्रे प्रथमं सम्यक्त्वाध्यवसायो भवति, मिथ्यात्वाध्यवसायस्तु तत्संस्कारपाटवाभावान्निमित्तान्तरोपलम्भमपेक्षते । न चैतावता निमित्तेन स्वतःपरतःप्रामाण्याप्रामाण्यसंज्ञाकरणे प्रकृतार्थसिद्धिरित्यलं प्रसङ्गेन । तदेवं सम्यक्त्वासम्यक्त्वयोः संग्राह्यापोह्ययोः प्रमाणसिद्धत्वाद् अनुभवस्य सम्यगिति विशेषणम् सार्थकमिति ।

## ❋ अनुभवपदस्य प्रयोजनम् ❋

स्मरणाज्ञानेति । स्मरणस्य अज्ञानस्य[5] च यागादेः प्रमाणफलत्वं अनुभवग्रहणेन पर्युदस्तम्, नहि तयोर्भावव्युत्पत्तावनुभवशब्दवाच्यत्वं क्वचित् प्रसिद्धमिति ।

१. संदिह्यमानः = सन्दिहानः ।

२. गुणग्रहणादिनिमित्तान्तरोपलम्भमन्तरैव सम्यक्त्वनिश्चयात्स्वतःप्रामाण्यम् । दोषग्रहणादिनिमित्तमन्तरेणाप्रामाण्यानिश्चयात्परतःप्रामाण्यमित्याशंकते—बोधमात्रेति ।

३. प्रमाणस्य स्वतः तद्भावः = प्रामाण्यम् । अप्रमाणस्य परतः तद्भावः = अप्रामाण्यमित्यन्वयः ।

४. तदभ्यासेन जनितः पटुः संस्कारो यस्य सः, तस्य पुरुषस्य ।

५. "विद्यां चाविद्यां च" (ई० उ० ११) इत्यादिवद् अज्ञानपदेन यागादिकर्म गृह्यते ।

प्रमातृप्रमेयव्यवच्छेदार्थं फलाद्भेदज्ञापनार्थं च साधनग्रहणम् ।

## ❀ साधनपदस्य कृत्यम् ❀

साधनग्रहणमिति । कथं पुनरेतावानर्थः साधनशब्दादविशिष्टात्प्रतीयते ? नेष्टतः कारकपरिग्रहणेन विशिष्टत्वात्, यस्मादिष्टतः[1] कारकपरिग्रहं शब्दविदोऽभ्युपगच्छन्ति । तदयं साध्यतेऽनेनेति विवक्षितकारणार्थाभिधायी साधनशब्दः, प्रमातृप्रमेये कर्तृकर्मणी फलं च कारणजन्यं कथमभिधातुमर्हति ? साधकतमं हि करणम्, न च कर्मादीनां साधकतमत्वमस्ति । अथ किमिदं साधकतमं नाम ?

## ❀ केषाञ्चिन्मते करणत्वपदार्थः ❀

कर्तृव्यापारोऽशेषकारकजन्य इत्येके[2] । सर्वाणि खलु कारकाणि सव्यापाराणि भूत्वा कर्त्तुर्व्यापारं जनयित्वा चरितार्थानि भवन्ति, कर्तृव्यापारस्य[3] चाचरितार्थत्वादव्यवधानेन क्रियाजननाच्च साधकतमत्वम् । कर्तापि कारकान्तरव्यापारनिरपेक्षस्तेन व्यापारेण क्रियां निष्पादयन् स्वतन्त्रः कर्तेत्युच्यते । सम्भूय कारकाणां क्रियाजनकत्वे हि तुल्यव्यापारत्वात् कः साधकतमत्वार्थः स्वतंत्रार्थो वेति सर्वपारिषदं व्याकरणं विरुध्यते । अत एव ज्ञातृव्यापारस्य प्रमाणत्वमाहुः । स च ज्ञातृव्यापारश्चिद्रूपे ज्ञातरि तादात्म्येन स्थितत्वाद् बोधात्मक इति ।

## ❀ तन्निरासः ❀

तदेतदयुक्तं; कर्तृतादात्म्येन स्थितस्य व्यापारस्योत्पादे हि कर्तुरप्युत्पादः स्यात् । तदनुत्पादे वा व्यापारस्यानुत्पादस्तादात्म्यविरोधो वा व्योमजलादिवत् स्यात् । नित्यत्वे च व्यापारस्य क्रियानुपरमः स्यात् । अथ भिन्नाभिन्नत्वं तादात्म्यशब्दार्थः इति, न; अनेकान्तपक्षस्योत्तरत्र निराकरिष्यमाणत्वात् । अथ भिन्न एव व्यापारः, स किं चलनात्मकोऽचलनात्मको वा, अन्तिमसहकारिभूतो

---

१. इष्टतः = साधनत्वेनाभीष्टो योऽर्थः, तद्वाचकपदोत्तरकरणकारकविवक्षणादिति भावः ।

२. एके = भाट्टाः । बुद्धेरेव करणत्वं कथयन्ति ते—"करणत्वं भवेज्ज्ञाने" ( श्लो० वा० ४।७८ ) ।

३. तथा चोक्तं मिश्रेण—"प्रमातृप्रमेययोः प्रमाणे चरितार्थत्वमचरितार्थत्वं प्रमाणस्य तस्मात् तदेव फलहेतुः" ( ता० टी० पृ० २२ ) ।

वेति ? चलनात्मकत्वे [1]निश्चलानां निर्व्यापारत्वेन कारणत्वं न स्यात्। अथाचलनात्मकः स कार्यहेतुर्वा न वा ? यद्यहेतुस्तदा किं तेनाकिंचित्करेण कारकस्य। अथ करोति किंचित्स किं व्यापारान्तरापेक्षी वा न वा ? व्यापारान्तरापेक्षित्वे तद्व्यापारान्तरस्यापि पूर्ववदन्यव्यापारान्तरापेक्षित्वप्राप्तावनवस्थाप्रसंगः स्यात्। अथ निर्व्यापारस्तदा कारकाण्यपि निर्व्यापाराण्येव कार्यं करिष्यन्ति, न व्यापारः कल्पनीयः; तस्य निष्प्रमाणत्वात्। अपि च यदाश्रयो व्यापार उत्पद्यते तस्यावश्यं समवायिकारणत्वमभ्युपगन्तव्यं गुणं प्रति द्रव्यवत्। ततश्च तत्कारकं स्वव्यापारं कुर्वत् किं सव्यापारं इतिकृत्वा[2] करोति ? निर्व्यापारं वा ? सव्यापारत्वे व्यापारपरम्पराप्रसंगेनोपक्षीणस्य प्रकृतकार्यकरणं न स्यात्। निर्व्यापारत्वे च व्यापारकरणवत् कार्यकरणमपि निर्व्यापारस्यैवास्तु किं व्यापारकल्पनया ? ततश्च यदाहुः—[3]"सर्वाणि कारकाणि स्वक्रियोत्पत्तौ कर्तृणि, प्रधानक्रियोत्पत्तौ च कर्मकरणादिरूपाणि भवन्तीति" तदप्यपास्तम्। नह्यनेककारकजन्यक्रियाव्यतिरिक्तक्रियास्तित्वे प्रमाणं किंचिदस्ति, एकस्यैव जनकत्वायोगादिति।

नाप्यन्तिमं सहकारिकारणं व्यापारस्तस्यान्तिमान्तरासंभवेन निर्व्यापारत्वप्राप्तावकारणत्वप्रसंगात्। तस्मान्न कारकाणां परस्परसहकारित्वव्यतिरिक्तो व्यापारः कश्चिदस्ति। ततश्चेन्द्रियादिभ्य एवार्थसंवित्त्युपपत्तेः। क्षीणा ज्ञातृव्यापारं प्रत्यर्थापत्तिः, न च संवित्तिप्रमित्यादिशब्दैर्बोधादन्योऽर्थोऽभिधीयते, येनेन्द्रियादीनामर्थावबोधजनकत्वेपि जडस्वभावत्वेन अर्थप्रकाशकत्वं न स्यात्। न च बोधव्यतिरेकेण तेजःप्रभाव्यतिरेकेण वाऽन्योऽर्थधर्मः प्रकाशः प्राकट्यं वा प्रमाणेनोपलभ्यते, यस्यान्यथानुपपद्यमानत्वेन बुद्धिप्रतिपादकत्वं स्यात्। तस्मात् स्वरूपासिद्धेः फलाभावाच्च न बुद्धेरेव करणत्वमिति।

---

१. आत्मादीनाम्।

२. 'भूत्वा' इति पाठान्तरम् प्राचीनटिप्पणतोऽवगतम्।

३. भाट्टपदक्रमस्तु—"सर्वकारकाणां चावान्तरक्रियासु कर्तृत्वं प्रतिपद्यमानानां प्रधानक्रियासु कर्मादिविभागो जायते" ( तं० वा० पृ० ३७७ )। हरिणाप्युदीरितम्—

"निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके।
व्यापारभेदापेक्षायां करणादित्वसम्भवः॥"

( वा० प० ३।७।१८ )

## ❀ वैयाकरणमते करणत्वपदार्थः ❀

विवक्षातः[1] कारकाणि भवन्तीत्यन्ये। यथा मृत्पिण्डो घटं करोति, मृत्पिण्डमासाद्य घटो भवति, मृत्पिण्डेन घटं कुलालः करोति, मृत्पिण्डाद् घटो भवति, मृत्पिण्डस्य घटो विकारो, मृत्पिण्डे घट उत्पद्यते इति।

## ❀ तत्खण्डनम् ❀

त एवं प्रष्टव्याः किं विवक्षातः कारकमविद्यमानमपि भवत्युत कारकत्वे स्थिते पश्चाद्विवक्षातस्तदभिधायिशब्दप्रयोगो भवतीति ? प्रथमे पक्षे घटोत्पत्तौ मृत्पिण्डस्य सम्प्रदानत्वं कुलालस्य करणत्वमपि स्यात्, न कचित्कारकाप-प्रयोगदोषो भवेत्, सर्वत्र विवक्षायाः प्रतीघाताभावात्। अथोत्तरः पक्षः, तदा तेषां कारकाणां भेदव्यवस्थाहेतुः स्वरूपभेदो वाच्यो येन तल्लक्षणसमावेशे तुलादिष्विव शब्दसमावेशो युक्तः स्यादिति।

## ❀ शाक्यमते करणत्वपदार्थः ❀

[2]प्रमितिक्रियामपेक्ष्य तावदर्थाकारस्यैव ज्ञानगतस्य करणत्वमिति शाक्याः। तथा च तैरुक्तं—

> [3]अर्थेन घटयत्येनां नहि मुक्त्वार्थरूपताम्।
> तस्मात्प्रमेयाधिगतेः प्रमाणं मेयरूपता॥

न[4] हि क्रियायाः साधनमित्येव सर्वं सर्वस्याः साधनं, किन्तु या यतः

---

१. जैन० म० १।४।४१। वैयाकरणमतमेतत्तथैव वाक्यपदीयेऽपि प्रतिपादितम्—

> "धर्मैरभ्युदितैः शब्दे नियमो न तु वस्तुनि।
> कर्तृधर्मविवक्षायां शब्दात् कर्त्ता प्रतीयते॥
> क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
> विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम्॥"
> (वा० प० ३।७।१०३,९०)

२. सौगतसिद्धान्तमुपन्यस्यति—प्रमितीति।

३. प्र० वा० ३,३०६। ज्ञाननिष्ठा या अर्थाकारता, तां विहायान्यत् किमपि अर्थेन सह प्रमेयज्ञानं न घटयति, तस्मात् अर्थाकारतैव साधनमर्थज्ञानस्येति तदर्थः।

४. कीर्तिनैव कीर्तितम्—

> "क्रियासाधनमित्येव सर्वं सर्वस्य कर्मणः।
> साधनं न हि तत्तस्याः साधनं या क्रिया यतः॥

प्रसिद्धिमुपयाति[1]। तत्रानुभवमात्रेण सदृशात्मनो ज्ञानस्य सर्वत्र कर्मणि तेनात्मना भवितव्यं येनास्येदमिति प्रतिकर्म विभज्यते। [2]अनात्मभूतश्चास्येन्द्रियार्थसन्निकर्षादिषु हेतुषु विद्यमानोपि भेदो[3] भिन्ने कर्मण्यभिन्नात्मनो न भेदेन नियामकः, क्रियानिबन्धत्वात्करणत्वस्य। तदविशेषे तस्या[4] अपि विशेषासिद्धे सतोपि वा विशेषस्य [5]तदनङ्गतयाऽकारणत्वात्। तस्माद् यतोऽ[6]स्यात्मभेदादस्येयमधिगतिरित्ययमस्याः (अधिगतेः) कर्मणि नियमस्तत्साधनम्। न चेयमर्थघटना अर्थसारूप्यादन्यतो[7] ज्ञानस्य सम्भवति। नहि पटुमन्दाद्यादिभिः स्वभेदैर्भेदकमपीन्द्रियाद्यर्थैनैतद् घटयति, तत्र प्रत्यासत्तिनिबन्धनाभावात्। अस्त्यनुभवविशेषोऽर्थकृतो यत इयं प्रतीतिर्न सारूप्यादिति चेत्, अथ किमिदानीं सतोपि रूपं न निर्दिश्यते? नेदमिदन्तया शक्यं व्यपदेष्टुम्। अनिरूपितेनायमात्मना भावान् व्यवस्थापयति इदमस्येदं नेति सुव्यवस्थिता भावाः, तस्मात् प्रमेयाधिगतेः साधनं मेयरूपता इति।

## ❀ तन्निराकरणम् ❀

[8]यत्तावदर्थेन घटयत्येनामित्यादि, तत्र यदि घटयति सम्बन्धयतीति विवक्षितं, तदयुक्तम्; यतो नार्थसम्बन्धो ज्ञानस्यार्थरूपतया क्रियते, किन्तु स्वकारणैस्तज्ज्ञानमर्थसम्बद्धमेवोत्पादितम्। न हि ज्ञानमुत्पद्य पश्चादर्थे ८

---

तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मनः।
भाव्यं तेनात्मना येन प्रतिकर्म विभज्यते॥

अनात्मभूतो भेदोऽस्य विद्यमानोऽपि हेतुषु।
भिन्ने कर्मण्यभिन्नस्य न भेदेन नियामकः॥

तस्माद् यतोऽस्यात्मभेदोऽस्यावगतिरित्ययम्।
क्रियायाः कर्मनियमः सिद्धा सा तत्प्रसाधना॥" (प्र० वा० ३।३०२–५)

१. अस्य तस्याः तत् साधनमिति शेषः।
२. भेद इत्यग्रेणान्वयः।
३. इन्द्रियादिभेदः।
४. प्रतिकर्मविभागक्रियायाः।
५. ज्ञानभिन्नतया।
६. अस्य = ज्ञानस्य। आत्मभेदात् = अर्थाकारादित्यर्थः। अस्येयम् = घटादेरियम्।
७. कारणादिति शेषः।
८. सौगतसमयं मीमांसते—यत्तावदिति।

सम्बध्यते । न चार्थरूपता ज्ञानस्य कारणं, [1]तादात्म्याभावप्रसंगात् । अथार्थरूपता अर्थेन घटयति ज्ञानमर्थसम्बद्धं निश्चाययतीति विवक्षितम्, तदप्ययुक्तं, सम्बन्धाप्रसिद्धेः । न हि ज्ञानगतार्थरूपतार्थसम्बद्धेन ज्ञानेन सहचरिता क्वचिदुपलब्धा येन सा तत्प्रतिपादिका स्यात् ।

अथायमभिप्रायः—अर्थोत्पाद्यत्वमेव हि ज्ञानस्यार्थसम्बन्धः, स च ज्ञानादनर्थान्तरं तथाभूतेन च ज्ञानेनार्थाकारस्य तादात्म्यसम्बन्धोऽस्ति ! ततश्च ज्ञानस्य स्वसंवेद्यत्वेन प्रत्यक्षत्वात्, तदनर्थान्तरं सम्बन्धोऽपि प्रत्यक्षसिद्ध इति कथं सम्बन्धाप्रसिद्धिः ? न; तादात्म्यसम्बन्धस्य अनुमानविचारे विस्तरेण निराकरिष्यमाणत्वात् । एवं च नहि क्रियासाधनमित्येव सर्वं सर्वस्याः क्रियायाः साधनमित्यत्राविवाद एव, कारकविशेषस्यैव साधनत्वाभ्युपगमात् ।

यच्चोक्तं—किन्तु या यतः प्रसिद्धिमुपयातीति, तदयुक्तम् ; प्रसिद्धेरुत्पत्तिलक्षणाया ज्ञप्तिलक्षणायाश्च विचारितत्वादभिधानलक्षणायास्तु विवक्षासाध्यत्वं नत्वर्थाकारसाध्यत्वमिति । तत्रानुभवमात्रेणेत्याद्यप्ययुक्तम्, यतो वचनस्वभावेन सर्वकर्मकर्तृषु सदृशात्मनो वाचस्तदाकारविरहितत्वेऽपि प्रतिनियमो दृश्यते—नीलशब्दः, पीतशब्द इति देवदत्तवागियं ज्ञदत्तवागिति ।

यदप्यनात्मभूतश्चास्येत्यादि, तदप्ययुक्तम्, यतोऽनात्मभूतस्यैव नियामकत्वं दृष्टम्, यथा पितृभ्यां पुत्रो नियम्यते, स्वामिना भृत्यः, संयोगादिना दध्यादिकमिति । क्रियानिबन्धनत्वं च करणतत्त्वस्याभ्युपगम्यते ।

यत्तु तदविशेषे तस्या अपि विशेषासिद्धेरित्येतन्न युक्तम्, कर्मादिकारकविशेषादपि क्रियाविशेषोपपत्तेः । तस्माद् यतोऽस्यात्मभेदादित्याद्यपि न युक्तं स्वात्मन एव भेदासम्भवात्, भेदे ह्यभिन्नात्मकत्वं विरुध्येत । न च स्वात्मनियामकत्वे प्रमाणं किंचिदस्ति, विपर्यये त्वनुमानं—अर्थान्तरनियाम्येयमधिगतिर्नियाम्यत्वात् पुत्रादिवत् । यतेरप्यर्थान्तरेण ज्ञानप्रयत्नादिना नियामितत्वान्नानैकान्तिकत्वम् । न चेयमर्थघटनेत्याद्यपि न युक्तं, अर्थघटनायाश्चक्षुरादिभ्य एव सम्भवात् ।

नन्वत्रोक्तं नहि पटुमन्दतादिभिरित्यादि, तन्न; असिद्धत्वात् । तथाहि—चक्षुषा रूपं पश्यामीत्यादिव्यवहारादवगम्यते—चक्षुराद्येवादृष्टाद्युपकृतं रूपादौ

1. अयं भावः—सिद्धं साध्यायोपयुज्यते इतिनीत्या अर्थाकारता सिद्धाऽभ्युपेया ज्ञानोत्पादकत्वात् । एवं ज्ञानमसिद्धं वाच्यम्, जन्यत्वात्, सिद्धसाध्ययोश्च तादात्म्यं न सम्भवति ।

प्रतीतिं घटयति। प्रत्यासत्तिनिबन्धनाभावोऽप्यसिद्धः, सन्निकर्षविशेषस्य प्रतिपादनात्। अथास्येदं ज्ञानमित्यर्थसम्बद्धज्ञानप्रतीतिरेव घटना। साप्यन्तःकरणेनादृष्टादिसहकृतेन क्रियते, बाह्याध्यात्मिकार्थविषयत्वादन्तःकरणस्य। अपि च विशिष्टोत्पाद एव ज्ञानस्यार्थसम्बन्धो न तु संश्लेषात्मकः, तस्मिन्मनसोपलब्धे भवत्यस्येदं ज्ञानम्—इत्यधिगतिः।

यच्च अनुभवविशेषे दूषणमुक्तम्—अथ किमिदानीं सतोऽपि रूपं न निर्दिश्यते इत्यादिना, तदयुक्तं; सन्त्येव हि तथाभूताः केचिद्विशेषा ये प्रतीयमाना अपि विशेषतो निर्देष्टुं न शक्यन्ते, यथा रसादीनां (शुक्तानां ?) विशेषाः, उक्तञ्च—

इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्।
भेदस्तथापि नाख्यातुं सरस्वत्यापि शक्यते ॥ इति।

एवं च स्थिते 'तस्मात् प्रमेयाधिगतेः साधनं मेयरूपता' इति निगमनमयुक्तम्। अपि चाधिगतेरभिन्ना मेयरूपता कथं साधनम्? सिद्धासिद्धावस्थयोः स्वात्मनि क्रियानुपपत्तेः। स्यादेतदुक्तमेवात्र प्रतिसमाधानम्। यदाह—

"[1]साधनेऽन्यत्र[2] तत्कर्मसंबंधो[3] न प्रसिध्यति।
सा[4] च [5]तस्यात्मभूतैव तेन नार्थान्तरं फलम् ॥
दधानं [6]तच्च [7]तामात्मन्यर्थाधिगमनात्मना।
सव्यापारमिवाभाति [8]व्यापारेण स्वकर्मणि[9] ॥
[10]तद्वशात् [11]तद्व्यवस्थानादकारकमपि स्वयम्।" इति।

---

१. प्र० वा० ३।३०७–९।
२. अन्यत्र = अर्थाकारतातोऽन्यत्र।
३. कर्मणा = कर्मकारकेण घटादिना सम्बन्धः।
४. सा = अर्थाकारता।
५. तस्य = साधनस्य।
६. तत् = अर्थज्ञानम्।
७. ताम् = अर्थाकारताम्।
८. व्यापारेण = वस्तुपरिच्छेदरूपेण।
९. घटाद्यर्थे।
१०. तद्वशात् = अर्थाकारतावशात्।
११. तद्व्यवस्थानात् = प्रतिकर्मव्यवस्थानात्।

यत्तावत्साधनेऽन्यस्मिन्नभ्युपगम्यमाने [1]तत्क्रियाकर्मणोस्तत्साधनकर्मणोर्वा सम्बन्धो न प्रसिध्यतीति । तदयुक्तम्, भिन्न एव साधने सति छिदादिक्रियया कुठारादिसाधनेन च वृक्षादिकर्मणः सम्बन्धप्रसिद्धेः, कुठारेण वृक्षं छिनत्ति वृक्षस्य छेदनमिति । न च कुठारस्य छिदाऽनर्थान्तरत्वं वृक्षाकारत्वं वा तत्साधनत्वेऽपि प्रसिद्धम् । यत् पुनरेतत् दधानं तच्चार्थज्ञानं स्वात्मनि धारयन् तामर्थाकारतां स्वस्मिन्नर्थरूपे कर्मणि सव्यापारमिवार्थाधिगमस्वभावेन व्यापारेणाभाति स्वयमकारकमपि तदर्थाकारतावशात्तत्प्रतिकर्मव्यवस्थानादिति । तदप्यसाधु, यस्मादनेन गौणत्वं साधनस्य उक्तं स्यात् । तथा च मुख्यपूर्वकत्वाद् गौणस्य, मुख्यं किं साधनमिति वाच्यम् ? न हि क्रियामकुर्वदेव प्रतिभासमानत्वेन उत्पद्यमानत्वेन वा मुख्यं साधनं लोके शास्त्रे वा प्रसिद्धम् । तदयं [2]रिक्ताभिरेव वाग्भिः शास्त्राभासं रचयित्वा मन्दमतीन् प्रतारयन् लाभपूजाख्यातीरेव समीहते [3]डिण्डिकवन्न परोपकारं लेशतोऽपीति । सव्यापारमिवेत्युपमापि न युक्ता, सव्यापारासव्यापारभेदासम्भवाद् गोगवयवत् । नहि भवतां मते भूतिव्यतिरेकेण व्यापारः कारकत्वं वा कस्यचिदस्ति । अभिन्नस्तु व्यापारः सर्वत्राप्यविशिष्टोऽस्ति, क्रियाकारकयोर्भूत्यात्मकत्वाभ्युपगमात्[4] । तथाऽपि[5] उपमा न युक्ता, न हि भवति गौरिवायं सास्नादिमानर्थ इति । समानोपमेयमिति न युक्तम्, तस्याः प्रमाणशास्त्रेषु लोकव्यवहारेषु चाप्रयोगात् निष्प्रयोजनत्वाच्च । न हि यथा रामरावणयोरिवेत्यनेनानन्यवृत्तिर्युद्धातिशयः प्रतिपाद्यते, तथा सव्यापारमिवेत्यनेन कश्चिदर्थातिशय इति ।

लोकव्यवहारानुसारित्वं प्रयोजनमिति चेद्, [6]स्यान्मतिरेषा सर्व एव

---

१. क्रियाकर्मणोः = ज्ञानार्थयोः ।

२. रिक्ताभिः = निरर्थिकाभिः ।

३. डिण्डिकवत्—डिण्डिकाः = नग्नाचार्याः, ते निष्फलमुपर्युपरि नामलेखने प्रसक्ता इति भट्टार्चटः ( हे० वि० पृ० ७१ ) ।

४. भूतिः = भवनम् । तथा च कमलशीलः पञ्जिकायां ( त० सं० पृ० ११ ) भगवत्कृतित्वेनोद्दध्रे—

"क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया ।
भूतिर्येषां क्रिया सैव कारणं सैव चोच्यते ॥"

५. अपिरत्र चार्थे ।

६. पूर्वपक्षमेव विस्फावयति—स्यादिति ।

लोकाः परश्वादिकमुद्यमननिपातनादिक्रियाख्येन च व्यापारेण सव्यापारं प्रतिपद्यमानाः करणमिति व्यवहरन्ति। तद्व्यवहारमनुसरद्भिरस्माभिः[1] सव्यापारमित्युक्तम्। एतदुक्तं भवति—यथैव लोकैः सव्यापारप्रतीतिवशेन करणत्वं परश्वादेरभ्युपगम्यते, तथैवास्माभिरर्थाकारस्य ज्ञानस्यार्थाधिगमात्मना व्यापारेण सव्यापारत्वप्रतीतेः करणत्वमभ्युपगतम्। लोकव्यवहारस्यैव शब्दार्थं प्रति प्रमाणत्वात्। न च परश्वादेरप्युद्यमनादिक्रियात्मको व्यापारः स्वव्यतिरिक्तोऽस्ति, क्षणिकत्वेन सर्वभावानामनाश्रयत्वात्, तत्कृतोपयोगाभावाच्च। तथाहि—स्वहेतोरेव तद्द्रव्यं यदि सक्रियमुत्पन्नम्, तदार्थान्तरक्रियया न किञ्चित्प्रयोजनम्, वैयर्थ्यात्। अथ निष्क्रियम्, तदा अर्थान्तरक्रियोत्पादेऽपि कथं सक्रियं भवेदतिप्रसंगात्। तस्मात् [2]परश्वादेश्छत्रादिच्छायावन्निरन्तरदेशोत्पाद एव क्रियेत्युच्यते, तत्प्रतीतिवशेन तस्य करणत्वं यथा, तथा ज्ञानस्यापि क्रमभाविनीं नीलपीताद्यनेकाकारतां धरतः सव्यापारत्वं प्रतीयते तद्वशेन परश्वादिवत्तस्यापि मुख्यमेव करणत्वमिति।

[3]यत्तावत् क्षणिकत्वबलेन परश्वादेरर्थान्तरक्रियानिराकरणं, तन्न युक्तं; मनोरथमात्रत्वात्। यथा चाक्षणिकस्यैव सतः परश्वादेरर्थान्तरभूतयैव क्रियया सक्रियत्वं तथोत्तरत्र प्रतिपादयिष्यामः। यदि सव्यापारप्रतीतिमात्रेण करणत्वं तदा पुंसोपि छेदकस्य सव्यापारत्वं प्रतीयते इति करणत्वं स्यात्। अथ वृक्षादिद्वैधीभावक्रियां प्रति परशोः प्रत्यासन्नत्वेन साधकत्वं तेन तस्यैव करणत्वं न पुरुषस्येति; नन्वेवं तर्हि प्रत्यासन्नस्य क्रियासाधकस्य करणत्वमभ्युपगतं ततश्च द्वैधीभावक्रियावदर्थाकारज्ञानसाध्या क्रिया साधनाद् व्यतिरिक्ता वाच्येति, कथं नार्थान्तरं फलम्। अथ मन्यसे परशोरपि न द्वैधीभावसाधकत्वेन करणत्वम्, सर्वेषां तत्साधकानां करणत्वप्रसंगात्, किं तु द्वैधीभावनिमित्तमासाद्य विशिष्टाकारेण परशोरुत्पादोऽस्येदं साधनमिति प्रसिद्धिहेतुः, [4]तद्वशेन तस्य करणत्वं व्यवह्रियते, तथा ज्ञानस्यापीति, न; क्षणिकत्वासिद्धेः। क्षणिकत्वे ह्येषा प्रक्रिया शोभेत, तस्यासिद्धिं च वक्ष्यामः।

---

१. अस्माभिः = सौगतैः।

२. 'छत्रच्छाया गच्छति' अत्र निरन्तरदेशोत्पत्तिनिबन्धन एवं छायायां गतिव्यवहारो यथा, तथा प्रकृतेऽपि।

३. पूर्वपक्षमुन्मूलयति—यत्तावदिति।

४. तद्वशेन = विशेषाकारतावशेन।

अपि च द्वैधीभावक्रियां प्रति कस्य करणत्वम् ? न हि करणमन्तरेण क्रिया संभवति। न च द्वैधीभाव एव करणं तस्य छेद्यात्मकत्वे[1] कर्मत्वेनैव प्रसिद्धत्वात्। अर्थान्तरविश्लेषात्मकत्वेपि क्रियैकरूपत्वेन प्रसिद्धत्वात्। [2]ततोऽर्थान्तरमन्यत् करणं वाच्यम्, ततश्च तद्दृष्टान्तेन सर्वत्र क्रियाकरणयोर्भेदसिद्धेः कथं क्वचिदभेद इति।

[3]यच्च विशेषणविशेष्यज्ञानयोः साध्यसाधनभावानामुपपत्तिमभिधाय ज्ञानांशयोस्तु साध्यसाधनभावो व्यवस्थाश्रयत्वादित्युक्तम्, तदतिमहासु(शु)भाषितम्। भिन्नयोर्वस्तुनोः साध्यसाधनभावोऽनेकोदाहरणसिद्धोऽपि न युक्तः, एकज्ञानांशयोस्तु स्वरूपेणासतोरपि युक्त इति क एवं स्वपक्षरागमोहान्धीभूतादन्यो वक्तुमर्हति ? व्यवस्थापकमपि व्यवस्थाप्ये क्रियां कुर्वद् भवति, यथा शिंशिपात्वं वृक्षे निश्चयं कुर्वदित्यतो न व्यवस्थापकत्वेऽपि साधनस्य क्रियातोऽनर्थान्तरत्वम्, व्यवस्थाप्यं तु प्रमेयं न क्रियेति। नायं वस्तुसंनिवेशी व्यवहार इत्ययमपि न युक्तः परिहारः। सर्वथा निर्वस्तुकत्वे व्यवहारस्य यस्य कस्यचित् साधनत्वाभिधानप्रसंगात्। ततश्चान्यपक्षव्युदासेनार्थाकारज्ञानस्यैव प्रमाणत्वप्रतिपादनप्रयासो व्यर्थ इति। तस्माद् विशिष्टाकारत्वमेव करणव्यवहारे निमित्तम्। तच्चार्थान्तरक्रियानुत्पत्तौ न युक्तमिति।

[4]ननु च क्रियान्तरानुत्पादकत्वेऽपि सादृश्यविशिष्टोत्पादमात्रेण कर्मादिकारकव्यवस्था दृष्टा, तद् यथा—मातरमनुहरति पुत्रः पितरमनुहरतीति, नह्यत्र

---

१. द्वैधीभावः छेद्यवृक्षादेरभिन्नो भिन्नो वा ? आद्यं निराकुरुते—छेद्यो वृक्षः, तदभिन्नत्वे इत्यर्थः। द्वितीयं पक्षं प्रतिक्षिपति—अर्थान्तरेति। श्लेषः विभागः।

२. ततः = विभागात्।

३. यत्कीर्तिना प्रोक्तम्, तद्दूषयति—यच्चेति। तच्च—

"नेष्टो विषयच्छेदोऽपि क्रियासाधनयोर्द्वयोः।
एकार्थत्वे द्वयं व्यर्थं न च स्यात् क्रमभाविता ॥
साध्यसाधनभावः सकृद्भावे धियोंऽशयोः।
तद्व्यवस्थाश्रयत्वेन साध्यसाधनसंस्थितिः ॥" (प्र०वा० ३।३१५-१६)

४. यत्कीर्तिनैव प्रकीर्तितम्—

यथा फलस्य हेतूनां सदृशात्मतयोद्भवात्।
हेतुरूपग्रहो लोके क्रियावत्त्वेऽपि कथ्यते ॥ (प्र० वा० ३।३१० )

तदनूद्य दूषयति—नन्वित्यादिना।

पितृसदृशपुत्रोत्पादव्यतिरेकेणान्यानुहरणक्रिया विद्यते इति। यदि न विद्यते कारकव्यवस्थाऽप्यत्र तर्हि वास्तवी मा भूत्, यथा गवयो गामनुहरति इत्यादौ। सादृश्यप्रतिपत्तिक्रियायास्तु व्यतिरिक्तमेव करणं चक्षुरादि। एवं च यत्र क्रिया प्रमाणेनोपलभ्यते तत्रावश्यं छेदनक्रियावत् तद्व्यतिरिक्तेन करणेन भवितव्यमन्यथा ह्याकस्मिकी क्रिया स्यादिति। न चादृष्टे पितरि वस्तुतस्तत्सदृशपुत्ररूपदर्शनादेव पितू रूपं गृह्णातीति कश्चिदेवं प्रतिपद्यते। एतेनैककालजभ्रातृसदृशोदाहरणं वैभाषिकपक्षे निरस्तमिति।

अपि च ज्ञाने यो नीलाद्यर्थाकारः, स किं साधारणोऽसाधारण इति? यदि साधारणः सत्त्वादिलक्षणः, तदा कथं ततः प्रतिकर्मव्यवस्था सिध्यति? तदाकारकस्य सर्वत्राविशेषात्। अथासाधारणो नीलत्वादिलक्षणोऽतद्व्यावृत्तिलक्षणो वा, तदा ज्ञानस्य तत्संबन्धादबोधात्मकत्वप्रसंगः। कस्मात् नीलत्वसम्बद्धस्यानीलेभ्यो व्यावृत्तस्य वा नियमेनाबोधात्मकत्वोपलम्भात्। गोगवययोरेकाकारत्वेऽपि भिन्नजातीयत्वोपलम्भादनेकान्त इति चेत्, न; [1]तदाकारस्यावयवसन्निवेशविशेषलक्षणस्य साधारणत्वाद्दारुचित्रादिमयेष्वपि तदाकारदर्शनात्। एतेन पितृपुत्राद्युदाहरणमपि प्रत्युक्तम्, ज्ञानस्य हि रूपादिरहितत्वात् निरवयवत्वाच्च। तथाविधमपि सादृश्यं नास्ति। न च तथाविधसादृश्ययोगित्वेऽप्यबोधात्मकत्वप्रसक्तिर्व्यभिचरति, ततश्च न ज्ञानं नार्थ इति [2]गर्दभीक्षीरमथनवत् न किंचित् स्यादिति।

सर्वार्थानां बोधात्मकत्वाद्, अबोधात्मत्वे दृष्टान्त एव नास्ति, कुतो ज्ञानस्याबोधात्मकत्वप्रसक्तिरिति चेत्, नन्वेतदपि व्यसनं ते निवर्त्तयिष्यामो मा त्वरिष्ठाः। मुखाकारदर्पणवदित्यपि न युक्तं, तस्य भ्रान्तत्वात्। यदि नाम मुखज्ञानं तत्राभ्रान्तं तद्दर्पणाभेदज्ञानं तु भ्रान्तमेवेति। अपि च ततो ज्ञानस्यान्नीलाद्यर्थाकारात् क्षणिकत्वाद्याकारः किं भिन्नोऽथाभिन्न इति? यदि

---

१. अयमत्र निष्कर्षः—'विवादास्पदम् अबोधात्मकम्, अबोधसमानाकारत्वात्, नीलसमानाकारवत्।' इत्ययं न्यायप्रयोगो गूढाभिसन्धेर्नैयायिकस्य। तत्र 'यद् यत्समानाकारम्, तत् तज्जातीयम्' इति व्याप्तौ गवयस्य गोसमानाकारत्वेऽपि गोजातीयत्वाभावाद् अनैकान्तिकतेति योगाचारोपालम्भे नैयायिको गूढाभिसन्धिमुद्घाटयति—तदाकारस्येति। गवयादिकं द्रव्यम्, तत्रैवावयवसन्निवेशात्मन आकारस्य सम्भवो न तु ज्ञाने निरवयवे। अतो विमतम्, अबोधम्, साकारत्वाद् द्रव्यवदिति हृदयम्।

२. गर्दभीक्षीरे बहुगाहितेऽपि नवनीतलवोऽपि नाप्यते।

भिन्नस्ततो नीलाद्यर्थाकारस्याक्षणिकत्वादिप्रसंगः, क्षणिकाकारव्यावृत्तिलक्षणत्वादक्षणिकत्वस्येति । ततो वाह्यार्थस्यापि नीलत्वादिसिद्धिवदक्षणिकत्वादिसिद्धिरपि स्यात् । अथाभिन्नस्तथापि तेनार्थाकारेणार्थस्य नीलत्वादिसिद्धिवत् क्षणिकत्वादिसिद्धिरपि कृतेत्यनर्थकं तदर्थमनुमानं स्यात्, असिद्धौ वा क्षणिकत्वादेस्तदाकारान्नीलत्वादेरपि सिद्धिर्न स्यात्, तदुभयाकारज्ञानप्रतिबन्धाविशेषादिति ।

स्यादेतत्—निश्चायकं हि प्रमाणमिष्टं तेनानेकस्वभावार्थाकारत्वेऽपि ज्ञानस्य यस्मिन्नेवांशे संस्कारपाटवान्निश्चयोत्पादकत्वं तत्रैव प्रामाण्यं न सर्वत्रेति । स तर्हि निश्चयः साकारो वा निराकारो वेति ? साकारत्वे सोऽपि तदर्थाकारः क्षणिकत्वाद्याकारात् किं भिन्नोऽथाभिन्न इति पूर्ववत् प्रसंगः । तत्राऽपि निश्चयान्तरकल्पनायामनवस्था स्यात् । अथ निराकारः, तदापि निश्चयात्मना सर्वार्थेष्वविशिष्टस्य ज्ञानस्य अयमस्यार्थस्य निश्चय इति कर्मनियमः कुतः प्रसिध्येत् ? निराकारस्यापि कुतश्चिन्निमित्तात् प्रतिकर्मव्यवस्थासिद्धौ अन्यत्रापि तत एव [1]तत्सिद्धेः किमाकारकल्पनयेति । यदि च अर्थज्ञानस्यार्थाकारः प्रमाणम्, तदा केशादिज्ञानस्यापि भ्रान्तस्य केशाद्याकारः प्रमाणं स्यात् ।

ननु च अविसंवादिज्ञानस्यैवार्थाकारः प्रमाणमिष्यते यस्मादुक्तम् [2]"प्रमाणमविसंवादिज्ञानम्" इति । अथ किमिदमविसंवादित्वं नाम ? [3]नन्वर्थक्रियासमर्थवस्तुप्रापकत्वमित्युक्तम्, यदाह—"नह्याभ्याम्[4] अर्थं परिच्छिद्य प्रवर्त्तमानोऽर्थक्रियायां विसंवाद्यते" इति [5]लोकेपि पूर्वमुपदर्शितमर्थं प्रापयत् संवादकमुच्यते, तद्वज्ज्ञानमपि प्रदर्शितमर्थं प्रापयत् संवादकमिति । तथाभूतार्थप्रापकत्वं च ज्ञानस्य तदर्थप्रवृत्तिजनकत्वमेव, यतः प्रवृत्तौ सत्यां सोऽर्थः प्राप्यते । प्रवृत्तिजनकत्वमपि प्रवृत्तिविषयप्रकाशकत्वमेव, न हि

---

१. तत्सिद्धेः = प्रतिकर्मव्यस्थासिद्धेः ।

२. प्र० वा० २।१ ।

३. ननुरिह निश्चये । अर्थक्रिया—"अर्थस्य दाहपाकादेः क्रिया = निष्पत्तिः" (प्र० मी० पृ० ) ।

४. आभ्याम् = प्रत्यक्षानुमानाभ्याम् ।

५. धर्मोत्तरीयेऽप्येवम्—"लोके च पूर्वमुपदर्शितमर्थं प्रापयन् संवादक उच्यते । तद्वज्ज्ञानमपि प्रदर्शितमर्थं प्रापयत् संवादकमुच्यते । प्रदर्शिते चार्थे प्रवर्तकत्वमेव प्रापकत्वम्, नान्यत् । तथा हि—न ज्ञानं जनयदर्थं प्रापयति, अपि त्वर्थे पुरुषं प्रवर्तयत् प्रापयत्यर्थम् । प्रवर्तकत्वमपि प्रवृत्तिविषयप्रदर्शकत्वमेव, न हि पुरुषं हठात् प्रवर्तयितुं शक्नोति विज्ञानम्" ( ध० प्र० पृ० १८ ) ।

ज्ञानं ग्रीवां गृहीत्वा पुरुषं प्रवर्तयति। तस्मादर्थक्रियासमर्थवस्तुप्रदर्शकत्वमेव ज्ञानस्याविसंवादित्वं प्रमाणलक्षणमिति। तन्न; अनुमानलक्षणस्याप्रमाणत्वप्रसंगात्, न हि तस्यार्थक्रियासमर्थवस्तुप्रदर्शकत्वमस्ति। असत्सामान्यविषयत्वेन भ्रान्तत्वाभ्युपगमात्। भ्रान्तेरप्यर्थसंबन्धादविसंवादकत्वमित्यपि न युक्तम्, ग्राह्यार्थेनानुमानस्य सम्बन्धासंभवात्। अग्राह्यार्थसम्बन्धादविसंवादकत्वे तु स्वप्नेन्द्रजालादिज्ञानानामपि केनचिदर्थेन सम्बन्धादविसंवादित्वं प्रसज्येत। अध्यवसितार्थसम्बन्धादविसंवाद इति चेत्। [1]स्यादेतन्मतम्—द्विविधो हि प्रमाणानां विषयो ग्राह्यश्चाध्यवसेयश्चेति। तत्र यद्यप्यनुमानस्य ग्राह्यार्थापेक्षयार्थप्रापकत्वं न भवति, तथाप्यध्यवसितार्थप्राप्तिरस्ति, यतोऽनुमानेनापि दाहार्थक्रियासमर्थ एवाग्निरध्यवसीयते; तदर्थक्रियार्थिनां ततः प्रवृत्तिदर्शनात्। तस्मात् प्रत्यक्षवदध्यवसितार्थप्रापकत्वेनानुमानस्याप्यविसंवादित्वमिति।

[2]स पुनरध्यवसायः किं दृष्टमेवार्थमध्यवस्यति अथादृष्टमपीति? दृष्टाध्यवसायित्वे दाहादिसमर्थोऽग्निर्नानुमानेनाध्यवसीयेत, तेन तस्यादृष्टत्वात्। दृष्टत्वे वा प्रत्यक्षवन्न भ्रान्तत्वम्। अदृष्टाध्यवसायित्वे तु त्रैलोक्याध्यवसायोऽपि स्याददृष्टत्वाविशेषात्। अथ मन्यसे स्मरणाध्यारोपसामर्थ्यान्न त्रैलोक्याध्यवसायः, यथा प्रदीपदर्शने मणिरेवाध्यवसीयते न त्रैलोक्यम्। भ्रान्तेरेवं स्वभावत्वाद् यदन्यदर्शनेऽन्यदध्यवसीयत इति। एवं तर्हि प्रत्यक्षस्यापि भ्रान्तत्वं प्राप्तं दृष्टव्यतिरिक्तक्षणाध्यवसायात्, न हि नश्वरक्षणाध्यवसायेऽर्थक्रियार्थिनां प्रवृत्तिरुपपद्यते। न च नीलांशोऽपि क्षणादन्योऽस्ति यत्र प्रवृत्त्याद्यविसंवादः स्यात्। ज्ञानमात्रं तु केशादिष्वपि अविशिष्टत्वात् नाविसंवादीति। य एव सन्तानः प्रत्यक्षेण दृष्टः स एवाध्यवसीयते इति न च युक्तम्, क्षणव्यतिरेकेण सन्तानस्यापि वस्तुतोऽसंभवात्। [3]संवृतिसद्विषयत्वं च प्रत्यक्षस्य नेष्टम्,

---

१. पूर्वपक्षमेवोत्तानीकरोति—स्यादेतदिति।

२. पूर्वपक्षं प्रतिविधत्ते—स पुनरिति। ( द्र० ध० प्र० पृ० ७१ )।

३. संवृतिः—शांकरवेदान्तसौगतार्हतानां नये सत्यद्वयमुपकल्प्यते—व्यावहारिकं पारमार्थिकं च। व्यावहारिकं सत्यमेव सौगता संवृतिसत्यं संगिरन्ते। गौड़पादाचार्या अप्येवमेव व्याहरन्ति—"संवृत्या जायते सर्वम्" ( गौ०का० ४।५७ )। नागार्जुनीयं पद्यम्—

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।
लोकसंवृतिसत्यं च सत्यं च परमार्थतः॥ ( म० का० २४ )

चन्द्रकीर्तिरर्थापयति—समन्ताद्वरणं संवृतिः, अज्ञानं हि समन्तात् सर्वपदार्थ-

अनुमानेनाऽविशेषप्रसंगात्। लोकसंव्यवहारमात्रेण प्रत्यक्षस्य दृष्टाध्यवसायित्वेनाभ्रान्तत्वे तत[1] एवानुमानस्यापि तथाभावः[2] स्यादविशेषात्। आस्तां तावदियं महती कथा।

तथा [3]योगिज्ञानानामपि न वस्तुसदर्थप्रदर्शकत्वमस्ति, अतीतानागतयोरसत्त्वेनार्थक्रियाकारित्वायोगात्। तथा[4] स्वसंवेदनस्यापि प्रवृत्तिविषयाप्रदर्शकत्वेनाविसंवादित्वं न स्यात्। तदेवमविसंवादित्वमपि न सौगतमते विचारक्षमम्। तस्मादर्थाकारमात्रस्य भ्रान्तिज्ञानेपि संभवात् न प्रमाणत्वम्।

अपि च वाह्यार्थस्यावोधस्वभावः प्रतीयते वा न वा? यदि न प्रतीयते वाह्यार्थवार्त्तापि तर्हि निवृत्ता,[5] बोधविलक्षणस्वभावाप्रतीतेः। अथ प्रतीयतेऽसौ तदाकारेण ज्ञानेन, तदाकारेण वाऽतदाकारेण वा? यद्यतदाकारेण तद्वन्नीलादेरप्यनीलाद्याकारेणैव ज्ञानेन प्रतीतिरस्तु, किं नीलाद्याकारेण ज्ञानस्य कल्पितेनेति? अथावोधस्वभावोऽपि तदाकारेणैव ज्ञानेन प्रतीयते, [6]नन्वेवमवोधस्वभावाकारतादात्म्याद्विज्ञानस्याऽप्यवोधस्वभावत्वं प्राप्तम्। अथावोधाकारतादात्म्येऽपि विज्ञानस्यावोधस्वभावत्वं नेष्टं, एवं तर्हि बोधाकारतादात्म्येऽपि नीलाद्याकार-

---

तत्त्वाच्छादनात् संवृतिरित्युच्यते। परस्परसंभजनं वा संवृतिरन्योऽन्यसमाश्रयेणेत्यर्थः। अथवा संवृतिः संकेतो लोकव्यवहार इत्यर्थः। स चाभिधानाभिधेयज्ञानज्ञेयादिलक्षणः।" (म० शा० पृ० २१५)। शान्तिदेवोऽपि शंसति—"संवृतिः परमार्थश्च सत्यद्वयमिदं गतम्" (बो० अ० ९।२)। अत्रत्या पंजिका—"संव्रियते आव्रियते यथाभूतपरिज्ञानं स्वभावावरणादावृतप्रकाशनाच्चानयेति संवृतिः, अविद्या मोहो विपर्यय इति पर्यायाः" (बो० अ० पं० पृ० ३५२)। बुद्धघोषस्याप्ययं घोषः—"दुवे सच्चानि अक्खासि सम्बुद्धो वदतां वरो" (दी० नि० पोट्ठपादसूत्रे)।

१. लोकव्यवहारादेव।

२. अभ्रान्तत्वम्।

३. संवित्साकारवादी योगिज्ञानस्यापि प्रमाणतामजह्यादित्याह—योगिज्ञानानामिति।

४. अर्थक्रियासमर्थवस्तुनिर्भासकत्वाभावात् कल्पनापोढमपि न प्रमाणं स्यादित्याह—तथा स्वसंवेदनस्येति।

५. एतेन यदुक्तं रत्नकीर्तिना भूषणमालोचयता—"न्यायभूषणस्यापि योगाचारापेक्षया दूषणमप्रस्तुतम्, वहिरर्थाभ्युपगमेनैव साधनक्रमादिति" (र० नि० पृ० १९)। तन्निरस्तं वेदितव्यम्।

६. अवधारणे ननुरयमिह।

स्याज्ञानात्मकत्वमेवास्तु, अविशेषात्। ज्ञानाज्ञानस्वभावयोश्च विरुद्धत्वादेकत्वमनुपपन्नम्। तथा च धर्मकीर्तिनैवोक्तम्—"अयमेव हि भेदो भेदहेतुर्वा भावानां यद्विरुद्धधर्माध्यासः कारणभेदश्च" इति। ततश्चेन्न भेदसिद्धिर्न कस्यचित् कुतश्चिद् भेद इत्येकं द्रव्यं विश्वं स्यादिति। तदेवं ज्ञानार्थाकारयोर्भिन्नत्वान्न प्रमाणफलयोस्तादात्म्यं शाक्यमते ह्युपपद्यते। ततश्च यदुक्तम्—

[1]अविभागोपि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥
[2]यथानुदर्शनं चेयं मानमेयफलस्थितिः।
क्रियतेऽविद्यमानापि ग्राह्यग्राहकसंविदाम्॥ इति।

तन्निरस्तम्, ग्राह्यग्राहकसंवित्तिभेदस्य वास्तवत्वेन प्रतिपादनात्। यदि च विपर्यस्तदर्शनानुसारेण मानमेयफलस्थितिरविद्यमानाऽपि क्रियते, ततः केशादिभ्रान्तीनामपि किं न सा क्रियते, विपर्यस्तदर्शनाविशेषात्। ततश्च प्रमाणाप्रमाणविभागानुपपत्तिरिति। ननु चोक्तमेवात्र प्रतिसमाधानम्। किं तदिति? उच्यते—विज्ञप्तिमात्रवाद्यपि उपप्लववासनाऽभिसन्धिदोषादप्रबुद्धस्याप्यनाश्वासिकं व्यवहारमुत्पश्यन्नेकमप्रमाणमाचक्षीत, अपरमासंसारमविश्लिष्टानुबन्धदृढवासनत्वादिह व्यवहाराविसंवादापेक्षया प्रमाणं, सांव्यावहारिकस्य चैतत्प्रमाणस्य रूपं युक्तम्। अत्रापि [3]परे विमूढा विसंवादयन्ति लोकमिति चिन्तामयीमेव प्रज्ञामनुशीलयन्ते[4] विभ्रमविवेकनिर्मलमनपायि पारमार्थिकं प्रमाणमभिमुखीकुर्वन्तीति। तदयुक्तम्, सर्वस्य हि लोकप्रसिद्धप्रमाणस्यापारमार्थिकत्वे विभ्रमविवेकनिर्मलं पारमार्थिकं कुतो निश्चीयते? न प्रत्यक्षेण, योगिज्ञानस्यास्मदादिप्रत्यक्षाविषयत्वात्। अथ स्वसंवेदनमेवैकं पारमार्थिकं प्रत्यक्षं, तथापि न तेन पारमार्थिकेतरविवेकसिद्धिः, तस्याविशिष्टस्वसत्तावेदनमात्रत्वात्। नाप्यनुमानेन, तस्य त्रिरूपलिंगावगमापेक्षत्वात्। न च निरंशस्य ज्ञानस्यार्थस्य वा त्रैरूप्यं वास्तवमस्ति, कल्पितत्रैरूप्याद्वास्तवार्थसिद्धौ तु परपरिकल्पितानुमानादपि

---

१. प्र० वा० ३।३५४ बुद्ध्यात्मा = बुद्धेःस्वभावः, अविभागः = न विद्यते विभागो यत्र, सोऽविभागः—अभिन्नः। तथापि भ्रान्तैः नैयायिकादिभिः ग्राह्यग्राहकभेदवान् इव लक्ष्यते' इति तदर्थः।

२. प्र० वा० ३।३५७। इयं प्रमाणप्रमेयप्रमितिव्यवस्था यथानुदर्शनम् = दर्शनानुरूपविकल्पानुसारेण क्रियते इति भावः।

३. परे = नैयायिकादयः।

४. योगाचारा इति शेषः।

वास्तवार्थसिद्धिः स्यात्, विशेषाभावाद् लोकव्यवहाराविसंवादस्य तु प्रमाण-प्रमित्यादिभेदानुमानेपि संभवात्। अपि [1]चाक्षणिकत्वाद्यर्थानां सर्वलोकाविसंवादेन दहनाद्यनुमानवत् प्रतीयमानत्वात् किमित्यभ्युपगमो न क्रियते। [2]विचारकैर्बाधकोद्भावनादिति चेत्, न; बाधकस्योत्तरत्र निराकरिष्यमाणत्वात्। यदि च लोकव्यवहाराविसंवादेन प्रतीयमानस्यापि विचारकैः बाधकप्रतिपादनादभ्युपगमो न क्रियते, ज्ञानगतार्थाकारोऽपि तर्हि नाभ्युपगन्तव्यस्तद्बाधकस्य त्वयैवोक्तत्वात्। तदुक्तम्—

[3]अन्यथैकस्य भावस्य नानारूपावभासिनः।
सत्यं कथं स्युराकारास्तदेकत्वस्य हानितः॥ इति।

आत्माद्वैतवादिनं प्रत्येतद् वाक्यमिति चेत्, न; समानत्वादिति वक्ष्यामः। विस्तरेणाप्युत्तरत्र ज्ञानस्यार्थाकारं निराकरिष्याम इत्यतः शाक्यमतेऽपि साधकतमोऽर्थो नोपपद्यते।

## ❀ अतिशयेन साधकं करणम् ❀

[4]अन्ये त्वन्यथा वर्णयन्ति— [5]बहूनां साधकानां मध्येऽतिशयेन यत् साधकं, तत् साधकतममुच्यते "अतिशायने तमबिष्ठनौ" इति वचनात्। सत्यम्, किन्तु तमेवातिशयं न कस्यचित् साधकस्य पश्यामः सर्वकारकाणामेकक्रियायां व्यापाराविशेषादिति। ननु [6]तमोऽरिणानेकधाऽतिशयो व्याख्यातः।

---

१. 'अर्थानाम् अक्षणिकत्वादि'—इत्यभ्युपगमः किं न क्रियते इत्यन्वयः।

२. विचारकैः = बौद्धैः।

३. प्र० वा० ३।३५८। नानारूपावभासिनः = चित्ररूपादिज्ञानस्य।

४. अन्ये = न्यायैकदेशिनः।

५. "अतिशायने तमबिष्ठनौ" (पा० सू० ५।३।५५)। अतिशयितार्थकात् प्रातिपदिकात् तमप् इष्ठन् च प्रत्ययौ बहूनामेकस्य निर्धारणे भवेताम्। तथा चेदमेषामतिशयेन साधकं साधकतममुच्यते। द्व्यवयवके समूहे यदैकस्यावधारणं विवक्ष्यते, तदा तरबीयसुनावपवादकावनयोरतः बहूनां मध्ये निर्धारणं तमबिष्ठनयोः क्षेत्रमित्याकलय्य बहूनां साधकानामित्युक्तम्।

६. तमोऽरिः = उद्योतकरः। तत्प्रणीतवार्तिकानुपूर्वीयम्—"भावाभावयोस्तद्वत्ता—न प्रमातरि प्रमेये वाऽसति प्रमा भवति, सति तु भवति, न पुनः सति भवत्येव, प्रमाणे तु सति भवन्ती भवत्येव। यद्वान् वा प्रमिमीते, सोऽतिशयः, किंवान् प्रमिमीते? प्रमाणवान् प्रमिमीते—प्रमाणे सति प्रमिमीते नाऽसतीति। सतोर्वाऽकर्तृत्वं यदभावात्—यस्य चाभावात् प्रमातृप्रमेये न प्रमां कुरुतः

कथमिति ? भावाभावयोस्तद्वत्ता—प्रमाणे सति प्रमा भवन्ती भवत्येव, प्रमातरि प्रमेये तु सति भवति, न तु भवत्येवेति। सतोर्वा प्रमातृप्रमेययोः प्रमानुत्पादकत्वं यदभावात्सोऽतिशयः। चरमभावो वा। प्रतिपत्तेरानन्तर्यं वा—यदनन्तरमेव प्रतिपत्तेर्जन्म, सोऽतिशय इत्यर्थः। असाधारणकारणभावो-वाऽतिशयः। प्रमाजनकसंयोगानुग्राहकत्वं वा। [1]अचरितार्थता वा—प्रमातृप्रमेये प्रमाणं कृत्वा चरितार्थे भवतः, प्रमाणं त्वचरितार्थं प्रमां कुर्वत् साधकतम-मुच्यते इत्यर्थः। यद्वान् वा प्रमिमीते, सोऽतिशयः इति। शिष्यस्य संशय-निवृत्त्यर्थं प्रवृत्तेनाचार्येण अव्यवस्थिताननेकपक्षान् प्रदर्श्य अभिवर्द्धित[2] एव संशयः —किमत्र साधकतममिति ?

## ❀ उद्योतकरोक्तपक्षेष्वन्तिमः पक्षस्तत्खण्डनं च ❀

सर्वपक्षेष्वन्तिमस्यैव कारणस्य साधकतमत्वं विवक्षितमित्येके। तच्च नैवम्—प्रमेयस्यापि सुखदुःखादेः स्वोपलब्धौ चरमभावदर्शनात्, न हि तत्र सम्बन्धोपि पश्चाद् भवति। तत्रापि सुखत्वादिज्ञानस्य चरमभाव इति चेत्,

---

सोऽतिशयः। संयोगवच्चरमभाविता वा—यथा संयोगः पश्चाद्भावी द्रव्यशक्ति-र्भवति, तथा प्रमाणं चरमभावि प्रमातृप्रमेययोः प्रमाशक्तिर्भवति, पश्चाद्भावोऽ-तिशयः। प्रतिपत्तेरानन्तर्यं वा—यद्वा प्रमाणानन्तरं प्रतिपत्तेर्जन्म, स चायमतिशय इति। असाधारणकारणता वा—प्रमाता साधारणं कारणं सर्वप्रतिपत्तीनाम्, प्रमेयमप्यशेषपुरुषसाधारणत्वात् तथाभूतम्, प्रमाणं त्वसाधारणकारणत्वात् प्रधानम्' प्राधान्याच्च साधकतमत्वेनाभिधीयत इति। प्रमाकारणसंयोगविशेषकत्वं वा—यो वा प्रमाकारणं संयोगस्तस्य प्रमाण-मनुग्रहे वर्तमानमतिशयशब्दवाच्यम्'' ( न्या० वा० पृ० ६-७ )।

१. अयं पक्षः टीकायां मिश्रैरेवमुपवर्णितः—''सिद्धमिन्द्रियादि, असिद्धं च तत्सन्नि-कर्षादि व्यापारयन् उत्पादयन् ( कर्त्ता ) करण एव चरितार्थः, करणं त्विन्द्रियादि तत्सन्निकर्षादि वा नाऽन्यत्र चरितार्थमिति साक्षादुपलब्धावेव फले व्याप्रियते'' ( ता० टी० पृ० २२ )।

२. स्वयमुपकल्पयन्नपि विकल्पजालमुपाभलते परम्। चित्रमेतत् ! व्याख्या-विकल्पानां विषयव्याप्त्यादि प्रयोजनम्, न तु सन्देहाभिवृद्धिः। तथैव भट्टमिश्राः श्रावयन्ति—

''सर्वत्रव्याख्याविकल्पानां द्वयमेव प्रयोजनम्।
पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा॥'' (तं० वा० पृ० १८६)

निर्विकल्पकप्रत्यक्षे [1]सामान्यग्रहणपूर्वकत्वानभ्युपगमात्, तथा च वक्ष्यामः। स्वगतरूपाद्युत्पत्तौ चावयविनां चरमभावोऽस्ति, तेषां त्वधिकरणत्वान्न करणत्वं युक्तम्। रूपाद्युपलब्धौ च नयनादेः करणत्वानभ्युपगमे तत्सत्त्वसिद्धिः क्रियात्वानुमानान्न[2] स्यात्। लोकेऽपि परश्वादेः करणत्वं प्रसिद्धम्, न चास्तवार्थसिद्धिः स्यात्, विशेषाभावाद् लोकव्यवहाराविसंवादस्य तु प्रमाण-तत्संयोगस्यैव, [3]तुलासूत्रविरोधाच्च न चरमस्यैव करणत्वमिति। अनेकपक्षो-पन्यासे यदत्र युक्तं तदेव ग्राह्यम्, स्वयं वान्यदभ्यूह्यमिति रुचिकारः तमोऽरे-रभिप्रायं मन्यमानः कर्मकर्तृविलक्षणस्य सर्वस्यापि कारणस्य साधकतमत्व-मुक्तवान्। एतच्च यद्वान् वा प्रमिमीते सोऽतिशय इत्यनेनोक्तम्। कथं? यानि सहकारीणि विद्यन्तेऽस्येति यद्वान्, यैः सहकारिभिरुपेतः कर्ता कर्मणि क्रियां निष्पादयति, तान्येव साधकतमानि, न कर्त्ता कर्म वेत्यर्थः। स्वयं वाभ्यूह्योक्तं कर्मकर्तृविलक्षणं सर्वं कारकं करणमिति।

## ❀ सामग्र्या एव साधकतमत्वं तन्निरासश्च ❀

अन्ये तु वैलक्षण्यमात्रेण कारकाणाम् अतिशयानुपपत्तिं मन्यमानाः सामग्र्या एव साधकतमत्वमाहुः। सा हि निष्पत्त्यनन्तरमेव क्रियां जनयति, नैकदेशवत् किंचिदपेक्षत इत्ययमस्यास्तदेकदेशेभ्योऽतिशयः साधकतमत्वेनोच्यते इति। तदप्ययुक्तम्, कर्तृकरणादिकारकसाकल्यं हि [4]सामग्री, कथं सा करण-

---

१. विशिष्टज्ञाने एव हि विशेषणज्ञानमपेक्ष्यते, न तु निर्विकल्पज्ञाने, अतः सुखत्वरूप-विशेषणज्ञानमन्तरैव सुखस्य निर्विकल्पकं भविष्यतीति भावः।

२. अयमाशयः—रूपाद्युपलब्धौ चरमभावित्वाद् नयनादिसंयोग एव करणं स्यान्न तु नयनादि। तथा सति क्रियात्वहेतुकानुमानाद् नयनादेः करणत्वेन रूपेण सिद्धिर्न स्यात्, सिद्धिस्तु तस्येष्यत एव—रूपाद्युपलब्धिः सकरणा, क्रियात्वात्, छिदादिक्रियावदित्यनुमानात्। यत्तत्कारणम्, तदिन्द्रियमेवेति।

३. "प्रमेयता च तुलाप्रामाण्यवत्" (न्या० सू० २।१।१६) इति तुलासूत्रम्। तुलामानेन यदा द्रव्यान्तरं तोल्यते, तदा तुलामानं प्रमाणम्, द्रव्यान्तरं च प्रमेयं भवति। यदा तेन द्रव्यान्तरेण किमप्यन्यद् द्रव्यं परिच्छिद्यते, तदा तद् द्रव्यान्तरं प्रमाणमेवं प्रमाणता प्रमेयता चाव्यवस्थितेति तदर्थः। एवं यदेन्द्रियं करणं, तदा तत्संयोगादि कार्यम्, यदा तत्संयोगादि करणं तदार्थज्ञानं कार्यमिति सापेक्षमनवस्थितं करणत्वं विरुध्येत, यदि चरमभावस्य संयोगस्यैव करणत्वं नियम्येत।

४. समग्राणां भावः सामग्रीति व्युत्पत्त्या ज्ञेयम्।

मेवेति ? न च कर्त्रादेरजनकावस्थायामेव कर्त्रादिरूपत्वम्, जनकावस्थायां च करणत्वं युक्तम्, कर्त्रादिभावस्यापि क्रियानिबन्धनत्वात्। नापि जनकावस्थायामेव समुदायापेक्षया करणत्वं एकदेशापेक्षया च कर्त्रादिभावः, तस्य काल्पनिकत्वेन शाक्याभ्युपगतवदपारमार्थिकत्वप्रसंगात्। अथ कर्त्रादिभ्योऽर्थान्तरं सामग्री तस्याः करणत्वमिति, न; कर्त्रादेरजनकत्वप्रसंगात्। सामग्रीत एव कार्योत्पत्तेरिष्टत्वात्, चरमकारणपक्षोक्तदूषणादुष्टत्वाच्च, धर्ममात्रत्वेनाकारणत्वेनाभ्युपगताया अपि सामग्र्याः करणत्वमयुक्तं साधकतमत्वविरोधादिति। एवं तर्हि रुचिकारमतमेवास्तु, न; सम्प्रदानादिकारकाभावप्रसंगात्। [1]तृणोलपन्यायेन करणभेदेषु सम्प्रदानादिव्यवहार इति चेत्, न; प्रतीत्यभावात्। नहि यथोलपादिषु तृणप्रतीतिर्दृष्टा, तथा सम्प्रदानादिष्वपि करणप्रतीतिरिति। [2]समयमात्रेण तथा व्यवहाराभ्युपगमे कर्तृकर्मणोः करणभेदत्वाभ्युपगमोऽप्यनिवार्यः स्यात्। ततश्च वास्तवी कारकव्यवस्था क्वचिदपि न स्यात्। न च कर्तृकर्मभ्यां वैलक्षण्यमात्रेण कारकाणामतिशयवत्त्वं युक्तम्, तयोरपि परस्परवैलक्ष्येण साधकतमत्वप्रसंगात्।

## ❀ भूषणकाराभिमतं साधकतमत्वम् ❀

किमिदानीं तर्हि साधकतमत्वं भवेदिति ? साक्षात्कर्त्रधिष्ठितस्यासाध्यस्य सतः क्रियासाधकत्वम्। न चैतत्सम्प्रदानादिष्वस्ति, न हि गोदानादिक्रियां कुर्वता साक्षादुपाध्यायादयोऽधिष्ठीयन्ते। किन्तु हस्तो वा, वाग् वा, मनो वा, अन्यद् वा किंचिदिति। यत्र चैतन्निमित्तं नास्ति तत्र करणव्यवहारो भवन्नपि न मुख्यः, कर्मादिषु कर्तृव्यवहारवत्। न हि स्वतंत्रतामन्तरेण मुख्यं कर्तृत्वं युक्तम्। स्वातन्त्र्यं पुनः स्वेच्छया क्रियासाधकत्वम्। तच्च चेतनेष्वौपचारिकं कल्पनासमारोपितं वा, यथा कुड्यं [3]पतितुमिच्छतीति।

सुखादिकर्मणोपि साक्षात्पुरुषाधिष्ठितस्य स्वोपलब्धिक्रियासाधकत्वात्करणत्वप्रसंगः इति चेत्, न; असाध्यस्येति विशेषितत्वात्। त्रिविधमपि हि कर्मात्र साध्यशब्देनोक्तं—निर्वर्त्यं च विकार्यं च प्राप्यं चेति। न तल्लक्षणसमावेशमन्तरेण कस्यापि कर्मणः करणत्वं प्रसज्यते। तल्लक्षणसमावेशस्तु कारकाणां

---

१. तृणम् = तृणसामान्यम्, उलपः = तृणविशेषः। तन्न्यायः = सामान्यविशेषभावन्यायः।

२. समयः = संकेतः।

३. 'कुड्यं पिपतिषति' अत्र कुड्ये इच्छां समारोप्यैव तद्व्यवहारो निर्वहति।

**सम्यगनुभवः प्रमा । प्रमाश्रयः प्रमाता । प्रमाविषयः प्रमेयमिति ।**

---

वस्तुतोऽपि क्वचिदस्ति, यथा स्वात्मप्रतिपत्तिक्रियायां तस्यैवात्मनः कर्तृत्व-कर्मत्वमधिकरणत्वं चेति । तदेवं कारकाणां व्यवस्थितलक्षणभेदसिद्धेर्वास्तव एव कर्मादिव्यवहारस्तदाभासेषु गौण एव । यत्र पुनरुपचारनिमित्तमपि नास्ति, तत्रापि तल्लक्षणकल्पनाध्यारोपेण व्यवहार उपपद्यते । वास्तवाभावे तु कल्पना-ध्यारोपेणापि न स्यात्, नहि सर्वथाप्यदृष्टोऽर्थः कल्पयितुं शक्यते, विषाणादेरपि गवादौ दृष्टस्यैव शशादिमस्तके कल्पनेति । तदेवं वास्तवमेव प्रमां प्रति साधकतमं यत्, तद् बोधस्वभावमबोधस्वभावं च प्रमाणमित्युच्यते । तत्र तदभिधायिना साधनशब्देन प्रमाप्रमातृप्रमेयान्यभिधीयन्त इति स्थितम् ।

## ❀ प्रमात्रादीनां लक्षणानि ❀

प्रमाप्रमातृप्रमेयाणामपि भेदो नावास्तवस्तल्लक्षणानां वास्तवभेदात् । तथा च सम्यगनुभवः प्रमा । प्रमाश्रयः प्रमाता, प्रमासमवायिकारणमित्यर्थः । प्रमाविषयः प्रमेयम्—प्रमायां योऽर्थश्चकास्ति स प्रमाया विषयः प्रमेयमिति ।

## ❀ प्रमातृदिक्कालादीनां प्रमेयेऽन्तर्भावः ❀

यद्येवं प्रथमसूत्रे तर्हि प्रमाणाद् भिन्नलक्षणत्वात् प्रमेयादिवत्प्रमाताऽपि पृथगुपदेष्टव्य इति, न; प्रमाणोद्देशादेव तत्सिद्धेः । न हि प्रमातारमन्तरेण प्रमाणं सम्भवति तुल्ययोगक्षेमत्वज्ञापनार्थत्वाच्च । येनैव न्यायेन प्रमाणस्य सत्त्वं विशिष्टाविशिष्टफलजनकत्वं च साध्यते, तेनैव प्रमातुरपीति, अतो नास्य पृथगुद्देशः कृतः । प्रमेयस्यापि तर्हि पृथगुद्देशो न प्राप्नोति, सत्यम्; प्रमेय-मात्रस्य पृथगुद्देशानभ्युपगमात् । प्रमेयविशेषस्योद्देशः कृतः, प्रयोजनवशात् । तच्च प्रयोजनमुत्तरत्र विशेषलक्षणोपवर्णने दर्शयिष्यामः । प्रमितिमात्रस्यापि प्रमेयमात्रवत् प्रमाणोद्देशादेवोद्देशः । तत्त्वज्ञानपदेन तु तद्विशेषस्योद्देशोऽपवर्ग-हेतुत्वज्ञापनार्थमिति । यदि प्रमेयपदेन प्रमेयविशेषस्योद्देशः क्रियते । नन्वेवं तर्हि दिक्कालपरमाण्वादीनां संग्रहो न प्राप्नोति । ततश्च समस्तस्य जगत्कारण-स्याप्रतिपादनादध्यात्मशास्त्रत्वमस्यानुपपन्नमिति । नैष दोषः, प्रमाणोद्देश-सामर्थ्योद्दिष्टप्रमेयमात्रे सर्वस्यान्तर्भावात् । एवं च सति सद्रूपमसद्रूपं वा न किंचिदत्रानुद्दिष्टमस्ति प्रमाविषयत्वेन सर्वस्य प्रमेयत्वादिति । संशयादीनामपि तर्हि पृथग्वचनमनर्थकम्, प्रमाणेषु प्रमेये वाऽन्तर्भावादिति, न; अन्तर्भावेऽपि प्रयोजनवशेन पृथगुद्देशकरणात् । तथा च संशयस्य प्रतिपादितं प्रयोजनं

न्यायप्रवृत्तिहेतुत्वमिति। पृथगुद्देशनिर्देशाभ्यां खलु सुनिश्चितस्वरूपाणां संशयादीनां पृथक्प्रयोजनवत्त्वं सुखाववोधं भविष्यतीत्यभिप्रायवता श्रीमत्सूत्रकृता सूत्रलाघवमनादृत्य [1]दण्डकसूत्रं रचितमिति। तत्र संशयस्यैव स्वरूपं प्रयोजनं तु प्रागुक्तम्, न तु प्रयोजनादीनाम् अतस्तेषामिति वक्तव्यम्।

## ※ प्रयोजनस्य प्रयोजनोपवर्णनम् ※

अथ प्रयोजनस्य तावत् किं प्रयोजनमिति? नायं युक्तः प्रश्नः, तदात्मकत्वात्। अप्रयोजनात्मकस्योपादाने हि प्रयोजनप्रश्न उपपद्यते किमनेन प्रयोजनमिति? प्रयोजनात्मकस्य तु प्रयोजनप्रश्नानुपपत्तिः, न हि भवति सुखेन किं प्रयोजनमिति, न; अभिप्रायापरिज्ञानात्। न ब्रूमः प्रयोजनेन किं प्रयोजनमिति, किं तर्हि? प्रमाणप्रमेयान्तर्भूतस्यापि प्रयोजनस्य पृथगभिधाने किं प्रयोजनमिति? तत्र भाष्यकृदब्रवीत्—"तेनानेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ताः, तदाश्रयश्च न्यायः प्रवर्त्तते" (न्या० भा० पृ० ४) इति। वयं त्वेतन्न सहोदर! बुध्यामहे प्रयोजनव्याप्तेरन्यत्रापि लोके शास्त्रे च प्रसिद्धत्वात्। तथाहि—सर्वे शास्त्रज्ञा लौकिकाश्च सर्वप्राणिकर्मविद्यानां [2]न्यायस्य च प्रयोजनवत्त्वं सामान्येनावगच्छन्तस्तद्विशेषं प्रति पर्य्यनुयोगं कुर्वन्ति—केन प्रयोजनेनायं पुमान् प्रवृत्तः? किमर्थमिदं कर्म? किमर्थमिदं शास्त्रम्? किमनेनानुमानेनेति? तस्मादन्यत्प्रयोजनमुच्यते।

[3]केचिदत्र परमात्मज्ञानं निःश्रेयसनिमित्तं निराचिकीर्षवः परमेश्वरस्यैव प्रयोजनाभावात् प्रवृत्त्यसम्भवेनाभावं प्रतिपादयन्तः सर्वप्राणिनिग्रहानुग्रहलक्षणं [4]प्रयोजनं नैयायिकेनोक्तं न प्रतिपद्यन्ते किल, नान्यदीयं सुखं दुःखाभावो वाऽन्यस्य प्रयोजनं युक्तम्। परनिग्रहोऽपि वीतरागस्य न प्रयोजनमिति, तत्[5] समर्थनार्थं सूत्रकारः प्रसिद्धमेव प्रयोजनस्वरूपं पृथगुद्दिश्यानुवदति—"यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनम्"। एतदुक्तं भवति—लोकेऽपि यस्माद् यो यमर्थं स्वात्मनः परेषां वा संपादयिष्यामि निवर्त्तयिष्यामि वेत्युररीकृत्य प्रवर्त्तते, तत्तस्य प्रयोजनं सिद्धम्। तस्माद् भगवानपि यमर्थमधिकृत्य

---

१. दण्डवद्दीर्घं प्रमाणप्रमेयेत्यादि (न्या० सू० १।१।१) सूत्रम्।

२. पञ्चावयववाक्यस्य।

३. केचित् = निरीश्वरवादिनः।

४. असतो निगृह्णाति, सतोऽनुगृह्णातीश्वरः इति प्रसिद्धम्।

५. तत् = ईश्वरस्य प्रयोजनम्।

प्रवर्त्तते, तदेवास्य प्रयोजनम्। स हि भगवान् निरतिशयज्ञानवैराग्यैश्वर्योपेतोऽप्येवंस्वभावो येन सर्वसंसारिणां कर्मानुरूपार्थानर्थसम्पादनमधिकृत्य प्रवर्त्तते, तस्मात् तदेव भगवतः प्रयोजनं, प्रयोजनलक्षणोपपन्नत्वात्, उभयाभिमतसुखादिवदिति।

## ❀ दृष्टान्तस्य स्वरूपं प्रयोजनं च ❀

अथ दृष्टान्तस्य किं स्वरूपं प्रयोजनं चेति? [1]बहिर्व्याप्तिस्थानं दृष्टान्त इत्येके। साध्यधर्मिव्यतिरिक्तः साध्यसाधनधर्मवांस्तद्रहितश्च दृष्टान्त इत्येके। [2]प्रत्यक्षविषयोऽर्थो दृष्टान्त" इति भाष्यम्। [3]"यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं स दृष्टान्तः" इति सूत्रम्। यत्र बहिर्व्याप्तिस्थाने, यत्र चोदाहरणे, यत्र वा साध्यसाधनधर्मवति, तद्रहिते चेत्यध्याहार्यं, लौकिकपरीक्षकाणां [4]प्रतिपाद्यप्रतिपादकानां बुद्धिसाम्यं सम्प्रतिपत्तिः, स दृष्टान्त इति। स्वार्थानुमानकाले प्रतिपाद्यप्रतिपादकाभावात् कथं तद्बुद्धिसाम्यविषयो दृष्टान्तः इति चेत्, न; तत्रापि [5]पर्यालोचयतस्तस्यैवोभयरूपत्वाच्छास्त्रकर्तृवत्। योग्यतापेक्षया वा समर्थनीयम्, लक्षणान्तरं वानेन लक्षणेनासंगृहीतस्य द्रष्टव्यम्, क्रियावत्त्वेनासंगृहीतस्येव द्रव्यस्येति।

अन्ये तु वर्णयन्ति—लौकिकाः = साध्यधर्माः, परीक्षकाः = साधनधर्माः, तेषां व्यापकव्याप्यभावसिद्धौ अविप्रतिपत्तिर्यत्र, स दृष्टान्त इति। तस्य पृथगभिधाने भाष्यकृता प्रयोजनमुक्तम्—[6] "तदाश्रयौ अनुमानागमौ, तस्मिन् सति स्यातां अनुमानागमौ, असति च न स्याताम्। तदाश्रया च न्यायप्रवृत्तिः। दृष्टान्तविरोधेन परपक्षप्रतिषेधो वचनीयो भवति। दृष्टान्तसमाधिना च स्वपक्षः स्थापनीयो भवति। नास्तिकश्च दृष्टान्तमभ्युपगच्छन् नास्तिकत्वं जह्याद्,

---

१. तथा चाह हेमचन्द्रः—"स व्याप्तिदर्शनभूमिः" (प्र० मी० १।२।२०) दृष्टान्तदृष्टबहिर्व्याप्तिबलेनान्तर्व्याप्तिप्रतिपत्तिर्भवतीति (प्र० मी० पृ० ४८)।

२. न्या० भा० पृ० ५।

३. न्या० सू० १।१।२५।

४. प्रतिपाद्यः = शिष्यः, प्रतिपादकः = आचार्यः।

५. पर्यालोचनम् = जिज्ञासा तदुपशमश्च। जिज्ञासावस्थापन्नः स एव प्रमाता प्रतिपाद्यः, तदुपशमयिता प्रतिपादकश्च भवति। यथा शास्त्रकाराः स्वयं जिज्ञासां कारं कारं समादधते।

६. न्या० भा० पृ० ५।

अनभ्युपयन् किंसाधनः परमुपालभेत ? निरुक्ते च दृष्टान्ते शक्यमभिधातुं "साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणं तद्विपर्ययाद्वा विपरीतमिति।" अस्माभिस्तु प्रागेवोक्तम्--उद्देशलक्षणाभिधानमनुवादार्थम्, अनुवादे च विपर्यस्तानां भ्रान्तिनिवृत्तये दृष्टान्ततदाभासयोर्विधिप्रतिषेधौ प्रयोजनम्। तदविरुद्धं भाष्यकारोक्तमपि प्रतिपत्तव्यमिति।

## ❀ सिद्धान्तस्य स्वरूपप्रयोजने ❀

सिद्धान्तस्य तर्हि स्वरूपं प्रयोजनं च वाच्यमिति। स्वयमभ्युपगतोऽर्थः सिद्धान्तः। अर्थग्रहणं पूर्वपक्षत्वेन प्रौढिवादित्वेन वा स्वयमभ्युपगतस्यापि स्वसिद्धान्तत्वनिषेधार्थं वर्त्तमानकालेऽप्यभ्युपगम्यमानस्य सिद्धान्तत्वज्ञापनार्थं च। [1]"अस्त्ययमित्यभ्यनुज्ञायमानोऽर्थः सिद्धान्तः" इति भाष्यम्। सामान्यविशेषवानर्थः प्रमाणमूलेनाभ्युपगमेनाभ्युपगम्यमानः सिद्धान्त इति टीकाकाराः। ते भाष्यमप्येतस्मिन्नर्थे व्याचक्षते। [2]तत्र सामान्यविशेषवानिति विशेषणमनर्थकं वर्तमानाभिधानं च, न हि प्रागभ्युपगतो न सिद्धान्तः। अनवधारणादभ्युपगतोपि सिद्धान्त इति चेत्, एवं तर्हि अभ्युपगमग्रहणमेवास्तु किमक्षरगौरवेण ? प्रमाणमूलेनेति किमर्थम् ? यदि बौद्धाद्यभ्युपगतार्थानामसिद्धान्तत्वम्, एवं तर्हि तेषां सिद्धान्तविरोधो नोद्भावयितव्यः। सिद्धान्तासम्भवे हि कुतस्तद्विरोधः ? प्रमाणशब्दवत्तदाभासेऽपि सिद्धान्तशब्दः प्रवर्त्तत इति चेत्, न; व्यवहारमात्रप्रवृत्तेः। न हि जानन्नपि कश्चिदनुन्मतः प्रमाणाभासेनापि विरोधमुद्भावयति। तदुद्भावयितुरेवादोषोद्भावननिग्रहस्थानप्रसंगात्। तस्माद् बौद्धाद्यभ्युपेतार्थानामपि तदभिप्रायसिद्धत्वेन सिद्धान्तत्वमभ्युपगन्तव्यम्। तथा च लोके शास्त्रेप्ययं व्यवहारोऽस्ति —बौद्धानामयं सिद्धान्तः, सांख्यानामयम्, मीमांसकानामयमिति। किं च सामान्येनैषां सिद्धान्तत्वे सति प्रमाणोपपन्नत्वानुपपन्नत्वविशेषोऽपि स्यादिति। [3]"तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः" इति सूत्रम्। संस्थितिरिति सिद्धान्तपर्यायः। तन्त्रसंस्थितिः, अधिकरणसंस्थितिः, अभ्युपगमसंस्थितिरिति त्रिविधः सिद्धान्तः, तन्त्रभेदादुत्तरसूत्रेण चतुर्विध उक्त इति भाष्यकारमतम्। टीकाकारास्त्वाहुः— [4]तन्त्रं

१. न्या० भा० पृ० ५।

२. तदेतट्टीकाकारमतं दूषयति भूषणकारः—तत्रेति।

३. न्या० सू० १।१।२६।

४. तुलना—न्या० वा० ता० पृ० २६२।

प्रमाणं तदधिकरणं मूलं यस्या अर्थविशेषाभ्युपगमसंस्थितेः सा तथोक्ता, ततश्च सामान्यविशेषवानित्यादिलक्षणमनेनोक्तं भवतीति मन्यन्ते। भाष्यं त्रैविध्याभिधायकमेकदशीयमतेन व्याचक्षते।

अस्मदभिप्राये त्वभ्युपगमसंस्थितिरित्येतदेव लक्षणम्। कथं? अभ्युपगमपदेन कर्मसाधनेनाभ्युपगतोऽर्थ उक्तः, तस्य संस्थितिः=व्यवस्था। यो येनार्थोऽभ्युपगतः स तस्य सिद्धान्त इत्यर्थः। सा च संस्थितिः त्रिविधा भवति—तन्त्रविशेषिता, अधिकरणविशेषिता, निर्विशेषिता चेत्यतस्त्रिविधः सिद्धान्तः। तन्त्रमनभ्युपगम्य विवादं कुर्वतामधिकरणाभ्युपगमसिद्धान्ताभ्यां विरोधेनैवापसिद्धान्तो भवति, न तन्त्रार्थविरोधेनेत्यस्यार्थस्य ज्ञापनार्थं त्रैविध्याभिधानम्। तन्त्रभदविवक्षया तु चतुर्विधस्तदर्थं [1]"सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावादिति" सूत्रम्। अर्थान्तरभावोऽसिद्ध इति चेत्, न; लक्षणभेदेन प्रतीयमानत्वात्। तदर्थं सूत्रचतुष्टयम्। तत्र [2]"सर्वतन्त्रविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः।" तद् यथा—माननिबन्धना मेयस्थितिः, कारणात्कार्योत्पत्तिः, प्रसिद्धसंकेतवाक्यश्रवणाद्वक्तृविवक्षितार्थावगतिरिति। न ह्येतदनभ्युपगमे कस्यचिदनुन्मत्तस्य शास्त्रप्रणयनश्रवणव्याख्यानेषु विवादे वा प्रवृत्तिरुपपद्यते इति।

"[3]समानतन्त्रप्रसिद्धः परतन्त्राप्रसिद्धः प्रतितन्त्रसिद्धान्तः।" समानं तन्त्रं कापिलानां पातञ्जलं, पातञ्जलानां च कापिलमित्येवं प्रकारकमुदाहरणं [4]केचिदिच्छन्ति। टीकाकारास्तु नेच्छन्ति, अप्रमाणोपपन्नत्वादिति मन्यमानाः। तन्मते त्वेतदेवोदाहरणं—समानं तन्त्रं नैयायिकानां वैशेषिकशास्त्रं, वैशेषिकाणां न्यायशास्त्रमिति। वयं त्वन्यथा व्याचक्ष्महे—अनेकेषामुपनिबन्धकाराणां व्याख्यातृश्रोतॄणां च मूलभूतमेकं तन्त्रं साधारणं सामानमित्युच्यते। यथा समानं गृहं समानं धनमिति, तस्मिन् समानतन्त्रे यः सिद्धोऽर्थः परतन्त्रे तु क्वचित्सर्वत्र वा न सिद्धः, स प्रतितन्त्रसिद्धान्तः। एवं च स्वशास्त्रासिद्धोऽर्थः सदृशतन्त्रसिद्धोऽपि प्रतितन्त्रसिद्धान्तो न भवतीति गम्यते। ततश्च तद्विरोधेऽपि नापसिद्धान्तः प्रसज्यते इति।

---

१. न्या० सू० १।१।२७।

२. न्या० सू० १।१।२८।

३. न्या० सू० १।१।२९।

४. केचित् = उद्योतकरादयः।

"[1]यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः" यस्यार्थस्य सिद्धौ सामर्थ्याक्षिप्तायां तदन्यस्य प्रकरणस्य = प्रक्रियते इति प्रकरणं, तस्य प्रकृतार्थस्य सिद्धिर्निरवद्या भवति सोऽधिकरणसिद्धान्तः। यथा क्षित्यादिकार्यस्य बुद्धिमत्कर्तृ-पूर्वकत्वसिद्धिस्तत्कर्तुः सर्वज्ञत्वादिधर्मसिद्धौ सामर्थ्याक्षिप्तायां निरवद्या भवति। न हि सर्वज्ञत्वादिधर्मरहितः प्राणिकर्मविपाकानुरूपाणि तनुभुवनादिकार्याणि उत्पादयितुं समर्थः। तदेवं साध्यानुषंगी ज्ञातोऽर्थोऽधिकरणसिद्धान्त इति अथवा साध्योऽधिकरणसिद्धान्तः। कथम्? यस्य साध्यस्य सिद्धौ क्रियमाणायां तदन्येषां विशेषाणां प्रकरणात् तत्साधनादेव सिद्धिर्भवति, स साध्योऽर्थस्तान् विशेषान् गृहीत्वा सिद्धोऽधिकरणसिद्धान्त इति। हेत्वर्थ एवाधिकरणसिद्धान्त इति टीकाकारः। कथम्? यस्य धूमादेः सिद्धौ सत्यां तदन्यस्याग्न्यादेः सिद्धिः, स धूमादिरधिकरणसिद्धान्त इति।

"[2]अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः।" साध्य-मेवाभ्युपगमसिद्धान्त इति टीकाकाराः। कथम्? अपरीक्षितस्यानित्यत्वादि-रूपेणाविचारितस्य शब्दादेः धर्मित्वेनाभ्युपगमात्तद्विशेषोऽनित्यत्वादिधर्मः परीक्षत इति परीक्षणमभ्युपगमसिद्धान्तश्चेति। भाष्यस्य तु यथाश्रुतार्थ-परीक्षिताद्विपरीतोऽर्थोऽपरीक्षितोऽस्वशास्त्रकः स एवाभ्युपगमविशिष्टोऽभ्युपगम-सिद्धान्तः, तेन अपरीक्षिताभ्युपगमोऽभ्युपगमसिद्धान्त इत्येतदेव लक्षणार्थं सूत्रं विभजनीयम्। तत्र यदि कश्चिदाह—किमर्थं जानन्नप्यस्वशास्त्रकमर्थमभ्युप-गच्छतीति? तत्रोत्तरम्—अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणं कर्तुमिच्छतीत्य-ध्याहार्यं। किमन्यथा तद्विशेषपरीक्षणं कर्त्तुं न शक्नोतीति? क एवमाह? किन्तु स्वबुद्ध्यतिशयख्यापनं च वीतरागस्य मुमुक्षोरयुक्तमिति चेत्, न; बौद्धादीना-मर्थलाभपूजाख्यात्यर्थमेवं प्रवर्तमानत्वात्तेषामभ्युपगमसिद्धान्तेन विरोधं ब्रुवता-मपसिद्धान्तोद्भावनं मुमुक्षुणापि क्रियते इत्येतदर्थमस्य निरूपणम्। स्वपक्षस्या-नेकन्यायपुष्टत्वज्ञापनार्थं विदुषामभ्युपगमवादेन प्रवृत्तिर्दृष्टा। यथा वेदानां नित्यत्वमभ्युपगम्यापि आप्तप्रामाण्यादेव प्रामाण्यं साध्यते। नह्यव्याख्यातादेव वेदात्तदर्थप्रतिपत्तिर्भवति, व्याख्यानं चाऽप्रकृतमेव सम्यगर्थावबोधनमिति। विदुषां चाभ्युपगमवादं कुर्वतामपसिद्धान्तपरिहारः प्रयोजनम्। सिद्धान्त-भेदाभिज्ञो हि तद्विरोधं स्ववाक्येषु परिहर्त्तुं परवाक्येषूद्भावयितुं शक्नोत्येतदर्थं सर्वे सिद्धान्तभेदा निरूपिता इति। भाष्यकारः पुनरिदं प्रयोजनमाह— [3]"सिद्धान्तभेदेषु सत्सु वादजल्पवितण्डाः प्रवर्तन्ते नातोऽन्यथेति।"

---

१. न्या० सू० १।१।३०। २. न्या० सू० १।१।३१। ३. न्या० भा० पृ० ५।

## ❀ न्यायावयवानां स्वरूपं लक्षणं च ❀

अथावयवानां किं स्वरूपं प्रयोजनं चेति ? "[1]साधनीयस्यार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते, तस्य पञ्च भागाः—प्रतिज्ञादयः। समूहमपेक्ष्या-वयवा इत्युच्यन्ते" इत्यवयवस्वरूपमुक्तं भाष्यकारेण, तदिष्टमस्माकम्। तेषां पृथगभिधाने प्रयोजनमुक्तम्। तेषु प्रमाणसमवायः—आगमः प्रतिज्ञा, हेतुरनुमानं, प्रत्यक्षमुदाहरणं, उपमानमुपनयः, सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनार्थं निगमनमिति। सोऽयं परमो न्यायः। एतेन वादजल्पवितण्डाः प्रवर्त्तन्ते तदाश्रया च तत्त्वव्यवस्थेति, तदस्माकं स्वमताविरोधेनेष्टम्। स्वमते तु प्रतिज्ञादिलक्षणानुवादपूर्वकौ प्रतिज्ञादितत्त्वतदाभासयोर्विपर्यस्तान् प्रति विधिप्रतिषेधौ प्रयोजनमिति।

## ❀ तर्कनिरूपणम् ❀

तर्कस्य तु स्वरूपं प्रयोजनं च पूर्वमेव निरूपितम्। तस्य लक्षणार्थमिदं सूत्रम्—"[2]अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इति। अविज्ञातं तत्त्वं निर्णयनिमित्तं विशेषणं यस्यार्थस्य सोऽविज्ञाततत्त्वः, तस्मिन्नर्थे कारणोपपत्तित इति बाधकप्रमाणसम्भवाद् ऊहः तर्कपर्यायो भवति। स च तत्त्वज्ञानार्थः, तत्त्वज्ञानविषयविवेचकत्वादिति पूर्वाचार्याः। वयं पुनर्ब्रूमः—कारणोपपत्तिः=साधनसम्भावना, यत्साधनं स्वसाध्यं प्रति कदाचिदेव यदि व्यभिचरति, तद्दर्शनादनेन भवितव्यमिति साध्यविषयो भवत्यूहः। स च पुरुषप्रवृत्तिद्वारेण तत्त्वज्ञानार्थोऽपि भवति, तथा वादादिप्रवृत्तिद्वारेण पूर्वोत्पन्नतत्त्वज्ञानपालनार्थो जयपराजयतत्त्वज्ञानस्योत्पत्त्यर्थश्च भवति। योगार्थं च प्रवर्तमानस्याऽप्रसिद्धेऽन्तरायोपशमसाधनविशेषे चित्तस्थितिसाधनविशेषे चोहः पारम्पर्येणात्मदर्शनार्थो भवत्येवमन्यत्रापि प्रवृत्तिद्वारेण [3]स्वविषये [4]विषयान्तरे वा तत्त्वज्ञानार्थत्वमूहस्य द्रष्टव्यमिति।

## ❀ निर्णयनिरूपणम् ❀

"[5]विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" इति सूत्रम्। विमृश्य=

१. न्या० भा० पृ० ५।

२. न्या० सू० १।१।४०।

३. स्वविषये=योगसधनादौ सम्भाविते।

४. आत्मादावसम्भाविते। ५. न्या० सू० १।१।४१।

संशयं कृत्वा पुरुषेण निर्णयः क्रियते, कुतः पक्षप्रतिपक्षाभ्याम्––पक्षविषयं साधनं पक्षशब्देनोक्तम्, प्रतिपक्षविषयं दूषणं प्रतिपक्षशब्देनोक्तम्। किमुपचारे प्रयोजनम् ? विषयविभागसिद्धिः––पक्षविषयमेव साधनम्, प्रतिपक्षविषयमेव दूषणम् इति। साधनदूषणाभ्यामित्युच्यमाने हि तयोरेकविषयत्वमप्याशंक्येत। अर्थावधारणमिति पर्यायाभिधानम्। विमृश्येत्ययुक्तम्, विमर्षाभावेऽपि हि करतलादिष्वग्न्यादिषु चाक्षजो लैङ्गिकश्च निश्चयो दृष्ट इति, न; अतीन्द्रियार्थ-निर्णयस्य लक्ष्यत्वेनाभिप्रेतत्वात्। कुतः ? निःश्रेयसार्थत्वाच्छास्त्रस्य, निःश्रेयसं चात्मादिनिर्णयादेवेत्यतः स एव लक्ष्यते। आत्मादिनिर्णयोऽपि केषाञ्चिदागमादेव स्वपक्षसाधनादेव वा भवतीत्यतः पक्षप्रतिपक्षाभ्यामित्युक्तम्। न, विचारकं प्रति शास्त्रारम्भात्––न्यायशास्त्रत्वादत्र विचारकोऽधिक्रियते, तस्य च विप्रति-पत्तिनिरासमुखेन निर्णयः कर्तव्यः, स च तथा निर्णयो न साधनमात्रात्, उभयपक्षसाधनोपपत्तौ विरुद्धाव्यभिचारित्वप्रसंगात्। नापि दूषणमात्रात्, साधनाभावे साध्यसिद्धेरयोगात्। किं तर्हि ? प्रतिपक्षदूषणसहितात्स्वपक्षसाधनात् समर्थितात् भवतीत्यतः पक्षप्रतिपक्षाभ्यामित्युक्तम्। निर्णयमात्रलक्षणविवक्षायां तु अर्थावधारणं निर्णय इत्येतावदेव सूत्रं द्रष्टव्यमिति।

ननु च निर्णयस्य प्रमाणफलत्वात्तदुद्देशादेवोद्देशः सिद्धः, [1]तद्विशेषोऽपि तत्त्वज्ञानपदेनोपदिष्टः, तत् किमर्थं पृथगस्यारम्भः ? न, अनन्यपरत्वेन निःश्रेय-सहेतुत्वज्ञापनार्थत्वात्। प्रमाणादीनां तत्त्वम्=लक्षणमुक्तम्, तन्निश्चयात्प्रमा-णादिनिश्चयः। प्रमाणादिनिश्चयादात्मादिनिर्णयः, इत्यनेन क्रमेण प्रमाणादि-तत्त्वज्ञानं निश्रेयसकारणमुक्तम्। यदापि प्रमाणादिनिश्चय एव प्रमाणादि-तत्त्वज्ञानम्, तदापि आत्मादिनिर्णयद्वारेणैव तन्निःश्रेयसकारणं भवति, [2]न त्वेवमात्मादिनिर्णयोऽन्यत्रनिश्चयं कुर्वन्निःश्रेयसहेतुरित्यतोऽस्य[3] युक्तः पृथगारम्भः तत्त्वज्ञानविशेषणार्थः— [4]नौपदेशिकवदात्मादितत्त्वज्ञानमात्रं

१. तद्विशेषः = आत्मतत्त्वनिर्णयः।

२. आत्मादिनिर्णयः साक्षादेव निःश्रेयससाधनम्, न त्वन्यं कमपि द्वारीकृत्येत्याह—नत्विति।

३. अस्य = निर्णयस्य।

४. तत्त्वज्ञानं विशिनष्टि—नौपदेशिकवदिति अयमाशयः—न्यायशास्त्रमेतत्, न तु धर्मशास्त्रम्, येन केवलोपदेशाल्लब्धमलं भवेत् तत्त्वज्ञानम्। अत्र तु शतशः परीक्षितमेव तत्त्वमाद्रियन्ते विचारचतुरा यथोक्तम्—"विचारशास्त्रोऽस्मिन् परीक्षोपेक्ष्यते कुतः" ( जै० न्या० मा० १।१।३ )। एवंविशेषकंनिर्णयमवद्यो-तयितुं निर्णयस्य पृथक् सूत्रणमिति।

विचारकस्य निःश्रेयसकारणम्, किं तर्हि ? यन्निर्णयात्मकम्, तद्विप्रतिपक्ष-निराकरणसहितात् सुविचारितात् साधनादुत्पन्नं न विचलतीति । भाष्यकारस्तु प्रयोजनमाह-- [१]"तदवसानो वादस्तस्य पालनार्थं जल्पवितण्डे । तावेतौ तर्कनिर्णयौ लोकयात्रां वहत इति ।"

## ❀ वादादीनां प्रयोजनम् ❀

वादादीनां स्वरूपमुत्तरत्र वक्ष्यामः । प्रयोजनं तु वादस्य तावत् [२]"पृथगभिधानम् उपलक्षणार्थम् । उपलक्षितेन व्यवहारः तत्त्वज्ञानार्थं भवतीति" भाष्यम् । वादस्वरूपमनूद्य तत्त्वज्ञानार्थिनः कर्तव्यत्वेनाभिधीयते, लाभाद्यर्थतास्य प्रतिषिध्यत इति मन्मतम् । तथा च सूत्रम्—"तं [३]शिष्य-गुरुसब्रह्मचारिशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयात्" इति । तत्रोत्तमप्रज्ञैः सह संशयोच्छेदार्थम् [४]अवसिताभ्यनुज्ञानार्थम्, अनवसितावबोधार्थं च विनीतो भूत्वा वादं कुर्यात्, समानप्रज्ञैर्मध्यस्थैः सह निरहंकारस्य वादं कुर्वतः प्रज्ञापरिपाकः, पूर्वोक्तं च फलम्, न्यूनप्रज्ञैः साधुभिः सह परानुग्रहः फलं पूर्वोक्तं चानु-षंगादिति । जल्पवितण्डयोस्तु तत्त्वाध्यवसायसंरक्षणार्थत्वमुक्तम्, तच्चोपरि-ष्टाद्विचारयिष्यामः ।

## ❀ निग्रहस्थानानां प्रयोजनम् ❀

हेत्वाभासच्छलजातिनिग्रहस्थानानां तु स्ववाक्येषु परिवर्जनं परवाक्येषु चोद्भावनं प्रयोजनम् । हेत्वाभासादिलक्षणं चानूद्य तत्स्वरूपेतरयोर्विप्रति-पद्यमानं प्रति विधीयते प्रतिषिध्यते चेति । [५]"निग्रहस्थानेभ्यः पृथगुपदिष्टा हेत्वाभासा वादे चोदनीया भविष्यन्तीति" भाष्यम् । [६]न, उभयथापि व्याप्तेरसम्भवात् । यदि तावद् ये ये निग्रहस्थानेभ्यः पृथगुपदिष्टास्ते ते वादे चोदनीयाः, तदा संशयादयोऽपि वादे चोदनीयाः स्युः । अथ ये ये वादे

---

१. न्या० भा० पृ० ६ ।

२. न्या० भा० पृ० ७ ।

३. न्या० सू० ४।२।४८ । तम् = वादम् ।

४. अवसिताभ्यनुज्ञा = अवधारितस्य संवादः ।

५. न्या० भा० पृ० ७ ।

६. "पृथगुपदिष्टा हेत्वाभासा वादे चोदनीया भविष्यन्तीति" एकदेशिमतं वार्तिक-दिशा प्रत्यादिशति—नेति ।

चोदनीयाः, ते ते निग्रहस्थानेभ्यः पृथगुपदिष्टाः, तदापसिद्धान्तादिभिरनेकान्तः, [1]तेषां वादे चोदनीयत्वेऽपि [2]पृथगनुपदिष्टत्वादिति। निग्रहस्थानान्तर्भूता सन्तो ये ततः पृथगुपदिष्टास्ते वादे चोदनीयाः छलादिवदित्येके परिहरन्ति। न, प्रयोजनानभिधानात्। छलजात्योरपि निग्रहस्थानत्वाभ्युपगमे निग्रहस्थानेभ्यस्त्रयाणामपि पृथगभिधाने प्रयोजनं वक्तव्यम्, तच्च नोक्तम्। वादे चोदनीयत्वं चापसिद्धान्तादिवदपृथगुपदेशेऽप्युपपद्यत इत्यतोऽनर्थकं[3] पृथगभिधानं प्राप्तमिति। विशेषलक्षणप्रपंचद्वारेण हेत्वाभासानां भेदप्रपंचप्रतिपत्यर्थं निग्रहस्थानेभ्यः पृथगुपदेश इति मतं मे। न हि प्रतिज्ञाहान्यादीनामपृथगुपदिष्टानामित्थं प्रपंचोऽस्ति। हेत्वाभासभेदप्रपंचभेदप्रतिपत्तौ च अनुमातुरतिनैपुण्यं भवति नान्यथा इति। छलजात्योरपि यदि निग्रहस्थानान्तर्भावित्वं तदैतदेव पृथगभिधाने प्रयोजनं द्रष्टव्यमिति।

## ❀ न्यायविद्यायाः सर्वोत्तमत्वप्रतिपादनम् ❀

सेयमान्वीक्षिकी न्यायविद्या प्रमाणादिभिः पदार्थैः प्रविभज्यमाना—

[4]"प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे परीक्षिता॥" इति भाष्यम्।

तच्चेदं विचार्यते—किं विषयभेदाद् विद्यानां भेदः? उत प्रयोजनभेदादिति? यदि विषयभेदात्, न तर्हि [5]चतस्र एव विद्याः चतुर्दशानां विद्यानां भिन्नविषयत्वात्, तदुक्तम्—

[6]"अंगानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥" इति।

चतुर्दशावधारणमपि न युक्तम्, शैवसिद्धान्तादीनां वैद्यशास्त्रादीनां च भिन्नविषयत्वादिति।

---

१. अपसिद्धान्तादीनाम्।
२. पृथगिति। निग्रहस्थानेभ्य इत्यादिः।
३. हेत्वाभासानामित्यादिः।
४. न्या० भा० पृ० ७।
५. कामन्दकप्रोक्ताः—
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः॥
६. वि० पु० ३।६।२८।

अथ प्रयोजनभेदाद् भेदः, तथाऽपि [1]दण्डनीतिवार्त्तयोरप्येकप्रयोजनत्वाद-भेदः, तथोपनिषदान्वीक्षिक्योरप्यभेद एवेति, कथं त्रय्यादिभेदेन चतस्रो विद्याः स्युः ? तस्माद् मुख्यगौणपुरुषार्थभेदेन चतस्रो विद्या द्रष्टव्याः, धर्मार्थ-काममोक्षशास्त्राणीति। तत्र काममोक्षौ [2]सुखदुःखोपगमापगमावुक्तौ, तदुपायौ दृष्टादृष्टभेदेनार्थधर्मावुक्ताविति। नन्वेवं तर्हि त्रय्यान्वीक्षिक्योरपवर्गार्थत्वादभेदः प्राप्नोति। सत्यम्, तथापि विचारकविषयत्वेन सर्वविद्यानुग्राहकत्वेन चास्याः सर्वविद्याभ्यः प्राधान्यमवान्तरभेदश्चास्ति। सर्वविद्यानुग्राहकत्वं च न्यायशास्त्र-त्वात्। न्यायेन हि सर्वविद्यानां प्रामाण्यं समर्थ्यते प्रत्यक्षादिविषयत्वेऽपि न्यायशास्त्रमेवेदं कुतः प्रतिपत्तव्यमिति चेदुच्यते—[3]न्यायप्रवृत्तिशुद्ध्यङ्गत्वेनात्र संशयादीनामुद्देशादिभिः प्रतिपादनात्। अत एवान्यशास्त्राणामनुमानाभिधेय-त्वेऽपि न न्यायशास्त्रत्वम्। न ह्यन्यशास्त्रेष्वित्थं संशयादयो निग्रहस्थानान्ता निरुपिताः। तदेवं न्यायप्रधानत्वादियमेव न्यायविद्या सर्वविद्यानुग्राहकत्वान्निः श्रेयसहेतोस्तत्त्वज्ञानस्य च निमित्तत्वादुत्तमा चेति।

## ❀ तत्त्वज्ञानात् क्रमेण मोक्षः ❀

तत्खलु वै तत्त्वज्ञानं किमात्मलाभानन्तरमेव निःश्रेयसं सम्पादयतीति ? उच्यते—न, किं तर्हि ? तत्त्वज्ञानाद् [4]"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानाना-मुत्तरोत्तरापाये तदन्तरापायादपवर्गः।" भवतीति वाक्यशेषः। अत्र दुःखजन्म-प्रवृत्तिदोषमिथ्याज्ञानानामनादिः कार्यकारणभावः संसार इत्यध्याहारेण द्वितीयं सूत्रं द्रष्टव्यम्। तत्त्वज्ञानानुत्पादोत्पादाभ्यां हि संसारापवर्गयोः सम्भव इत्येत-दनेन सूत्रेण परीक्ष्यते, येन तत्त्वज्ञानस्यापवर्गावाप्तिसामर्थ्यमवधार्य तदुत्पत्तये खल्वयं मुमुक्षुरादरेण प्रवर्त्तेत। संसारस्यानादित्वज्ञापनार्थं मिथ्याज्ञानादीनां विपर्ययेणात्राभिधानं कृतम्।

तत्रात्मादौ प्रमेये मिथ्याज्ञानमनेकप्रकारं वर्त्तते—सत्यात्मान्तःकरणादौ नास्तीति ज्ञानम्, अनात्मन्यात्मेति, भिन्नेष्वभिन्नमिति, अशुचौ शुचिरिति, स्वकृतेषु दुःखेष्वन्यः कर्त्तेति, परकृतेष्वहं कर्त्तेति, जुगुप्सितेऽभिमतमिति,

---

१. दण्डनीतिः = अर्थशास्त्रम्, वार्ता = कृषिवाणिज्यादिविद्या, एतयोरर्थैक-प्रयोजनत्वम्।

२. सुखोपगमः = कामः, दुःखापगमः = मोक्षः।

३. न्यायप्रवृत्त्यङ्गम्—संशयः, न्यायशुद्ध्यङ्गम्—दृष्टान्तादिरिति विवेकः।

४. न्या० सू० १।१।२।

अनित्ये नित्यमिति, हातव्ये प्रतिपत्तव्यमिति—एवंविधान्मिथ्याज्ञानादनुकूलेष्वर्थेषु रागः, प्रतिकूलेषु द्वेषः, ताभ्यां प्रयुक्तस्य वाक्कायमनोभिः प्रवर्तमानस्य धर्माधर्मसंचयौ भवतः। कथम्? दिव्यविषयेषु जन्मान्तरभोग्येषु, अदिव्यविषयेषु वा रागात्प्रवर्त्तमानो विहितयागाद्यनुष्ठानद्वारेण धर्मसंचयं करोति। दृष्टेषु पुनर्विषयेषु रागात्प्रवर्तमानः प्रतिषिद्धानुष्ठानविहितातिक्रमद्वारेणाधर्मसञ्चयं करोति। द्वेषादपि प्रायेण विहितानुष्ठानसंभवादधर्मसंचयमेव करोति। तावेतौ धर्माधर्मसंचयौ प्रवृत्तिसाधनत्वादत्र प्रवृत्तिशब्देनोक्तौ, ताभ्यां देवमनुष्यतिर्यक्स्थानेषु शरीरेन्द्रियसम्बन्धलक्षणं जन्म भवति, ततो गर्भवासाद्यनेकप्रकारं दुःखं मिथ्याज्ञानं च भवति, ततः पुनर्दोषादिसम्भव इत्येवं मिथ्याज्ञानादीनामविच्छेदेन कार्यकारणभावः संसार इत्युच्यते। यदा तु तत्त्वज्ञानात् मिथ्याज्ञानमपैति, तदा मिथ्याज्ञानापाये दोषा अपयन्ति, दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्मापैति, जन्मापाये दुःखापायोऽत्यन्तमपवर्गो भवति।

## ॐ मिथ्याज्ञानादिनिवृत्तावाक्षेपः ॐ

अथ कोऽयं मिथ्याज्ञानस्यापायः—किमनुत्पत्तिः? किं वा प्रध्वंस इति? अनुत्पत्तिस्तावन्न तत्त्वज्ञानाद् भवति, न ह्यनुत्पत्तिरनादिः सती केनचित्कर्तुं शक्यते। अथ प्रध्वंसः, स तत्त्वज्ञानानुत्पादेऽपि भवति सर्वज्ञानानामाशुतरविनाशित्वात्, न च नाशेऽपि कारणकृतो विशेषः कश्चिदुपलभ्यते। तत्त्वज्ञानान्निवृत्ते मिथ्याज्ञाने, मिथ्याज्ञानान्तरं नान्यदुत्पद्यत इत्येतदपि नास्ति। तथाहि—रज्वादौ सर्पादिज्ञाने तत्त्वज्ञानान्निवृत्तेऽपि पुनः कालान्तरे तत्रापि रज्वादौ सर्पादिज्ञानं प्रादुर्भवदुपलभ्यते; तथा च कारणप्रतिबन्धोऽपि निरनुमान इति। मिथ्याज्ञानापाये दोषापाय इत्येतदप्ययुक्तम्, तत्त्वज्ञानवतामपि रागद्वेषान्धीभूतत्वदर्शनात्। न ते तत्त्वज्ञानवन्तो ये रागाद्यभिभूता इति चेत्, तत्किमिदानीं न्यायशास्त्रमपि[1] व्याकुर्वतां न तत्त्वज्ञानोत्पत्तिः सम्भाव्यते? सा तर्हि किंसाधना भवेत्? रागाद्युपशमस्तु कंचित्कालं तत्त्वज्ञानरहितानामपि केषांचिदुपलभ्यते, आत्यन्तिकस्तु न केषांचिदप्यस्ति, महायोगिनामपि हरिहिरण्यगर्भप्रभृतीनां क्वचिद्विषये कदाचिद्रागाद्यभिभवश्रवणात्। अतश्च न चिन्तामयमपि तत्त्वज्ञानं रागाद्युपशमकारणमिति। दोषापाये प्रवृत्त्यपाय इत्यप्ययुक्तम्, न ह्ययं जीवन्नेव पाषाणवदवस्थातुं शक्नोति। यदि च धर्मपरिहारार्थं विहितं न करोति, प्रतिषिद्धाच्च न निवर्त्तते, तदावश्यमधर्म्मेण भवितव्यं, विहताति-

---

१. अपिरयं भिन्नक्रमः, व्याकुर्वतामित्यनेनान्वेति।

क्रमप्रतिषिद्धाचरणयोरधर्महेतुत्वात्, तद्विपर्याच्च धर्म इति कथमुभयपरिहारः कर्त्तुं शक्यते ? तदेवं प्रवृत्त्यपायासम्भवान्न जन्मनोऽप्यपायः, तदसम्भवान्नात्यन्तिकदुःखापायलक्षणोऽपवर्ग उपपद्यत इति ।

## ॐ तत्समाधानम् ॐ

अत्र प्रतिविधीयते—मिथ्याज्ञानस्यापायस्तावद् [1]अनागतस्यानुत्पत्तिरुत्पन्नस्य ध्वंसश्चेति । यच्चोक्तमनादित्वादनुत्पत्तेः कथं तत्त्वज्ञानाद्भाव इति ? तन्न, अनभ्युपगमात् । न ब्रूमः प्रागसती तत्त्वज्ञानादनुत्पत्तिर्मिथ्याज्ञानस्य भवतीति, किं तर्हि ? तदनुत्पत्तेर्निवर्त्तको यो हेतुरधर्मादिः, तस्य प्रतिबन्धः तत्त्वज्ञानाद् भवति । न च कारणप्रतिबन्धो निरनुमानः, तत्त्वज्ञानविषये स्थाण्वादौ मिथ्याज्ञानोत्पत्तेरनुपलम्भात् । न हि मिथ्याध्यवसायः क्वचित्तत्त्वाध्यवसायं बाधित्वा प्रादुर्भवन्नुपलभ्यते । तत्त्वज्ञानमिथ्याज्ञानयोरिव तत्संस्कारयोरपि[2] बाध्यबाधकभावोऽनुमेयः, तथा हि—सकृदुत्पन्नतत्त्वज्ञानजनितोऽपि संस्कारस्तत्समानविषयं मिथ्याज्ञानजसंस्कारसमूहमपि बाधित्वा विशिष्टव्यवहारसमर्थां तत्त्वज्ञानाकारानुकारिणीमेव स्मृतिं जनयति, ततश्च तत्त्वज्ञानाभ्यासात्तज्जः संस्कारः प्रतिदिनमुपचीयते, मिथ्याज्ञानजश्चापचीयते तावद्, यावत्सर्वोऽपि मिथ्याज्ञानजः संस्कारः प्रक्षीयते । ततश्चाधर्मोऽपि सहकारिकारणाभावात्तत्त्वज्ञानेन तत्संस्कारेण वा प्रतिबद्धत्वाच्च मिथ्याज्ञानमकुर्वन्नेव कुतश्चिन्निमित्तात्कदाचिदत्यन्तं विनश्यति, तन्नाशे च मिथ्याज्ञानं कारणाभावान्न कदाचिदुत्पद्यते, ततश्च मिथ्याज्ञानानुत्पत्तिः कदाचिदपि न निवर्त्तते, सा तथा पालिता सती तत्त्वज्ञानेन कृता इत्युपचर्यते । ध्वंसपक्षे तु यदुक्तं न विनाशे विशेषः कश्चिदिति, तन्न, दृष्टत्वात्—प्रदीपस्य हि प्रतिक्षणं विनाशेऽपि न तत्कार्यस्य चाक्षुषव्यवहाराञ्जनक्षयादेर्निवृत्तिर्भवति । यदा पुनरुदकादिना विनाशः क्रियते तदा सर्वस्यापि प्रदीपकार्यस्याप्रवृत्तिः प्रदीपाभावव्यवहारश्च भवति । [3]कन्दोत्पाटवद्वा—यथा कन्दविटपस्य खनित्रादिना समूलोत्पाटने कृते पुनस्तत्र न सम्भवः, तथा

---

१. तत्र भगवतः पतञ्जलेरप्येवंभूतं सूत्रम्—"हेयं दुःखमनागतम्" ( यो० सू० २।१६ )।

२. "तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी" ( यो० सू० १।५० ) इति सूत्रसूत्रितयोः समाधिसंस्कारव्युत्थानसंस्कारयोर्यथा बाध्यघातकभावस्तथा प्रकृतेऽपि बोध्यम् ।

३. कन्दः = वनस्पतीनां प्रधानं मूलम् ।

तत्त्वज्ञानेन मिथ्याज्ञानस्य ससंस्कारस्य विनाशे कृते पुनर्न सम्भवः, समूलोच्छिन्नत्वात्। तत्त्वज्ञानस्य तु मिथ्याज्ञानसंस्कारनिवृत्तौ अस्ति सामर्थ्यं प्रतिपक्षज्ञानविरोधित्वात्संस्कारस्येति।

[1]एकत्र मिथ्याज्ञाननिवृतावप्यन्यत्रोत्पत्तिरनिवार्येति चेत्, [2]न वै सर्वं मिथ्याज्ञानं संसारनिमित्तं येन सर्वस्यापि निवृत्तिरन्विष्यते। किं तर्हि? आत्मादिविषयमेव तस्मिँश्चात्मादौ प्रमेये तत्त्वतो निश्चिते स्थाण्वादाविव न मिथ्याज्ञानं पुनरुत्पद्यत इति। ननु चोक्तं तत्रापि कालान्तरे मिथ्याज्ञानं प्रादुर्भवदुपलब्धमिति। सत्यं, [3]भ्रष्टविशेषानुसन्धानस्य प्रादुर्भवति न पुनरात्मादिविषये, मुमुक्षोर्विशेषानुसन्धानं निवर्त्तते। तस्य हि संसारभयादहर्निशं भावनास्थिरीकरणे प्रवृतिः। तथा च भगवानक्षपादः—"[4]तत्त्वज्ञानपरिपालनार्थं तद्विद्यैश्च सह संवादः" इत्यादिना सतताभ्यासेन भावनास्थिरीकर्त्तव्येत्युपदिष्टवानिति। [5]प्रमेयविशेषस्याऽप्यनन्तव्यक्तित्वात् कथं तत्राप्येकान्तेनाज्ञाननिवृतिरिति चेत्, न; सामान्योपादानेन सर्वस्यात्मादेस्तथाभावनिश्चये सति संसारमूलस्याज्ञानस्य निवृत्तेः। न हि प्रमेयविशेषेऽपि सर्वं मिथ्याज्ञानं निवर्त्तयितव्यम्, किं तर्हि? यो दोषनिमित्तद्वारेण संसारमूलम्। यद्यात्मादिमिथ्याज्ञानं संसारनिमित्तं, प्रलयाद्यवस्थायां तर्हि तस्यासम्भवादपवर्गः प्राप्नोति, न; [6]तत्संस्कारावस्थाने तदत्यन्तोच्छेदासम्भात्। अत एव सर्वशरीरिणामपि मिथ्याज्ञाननिमित्तः संसारः। कस्यचित्त्वीदृशं हि मिथ्याज्ञानं समस्ते व्यस्ते वात्मादिप्रमेये विद्यते यद्दोषनिमित्तद्वारेण संसारं प्रतनोति। तच्च सामान्योपादानेन सर्वस्मिन् प्रमेये तत्त्वतो निश्चिते पुनर्न भवति, यथैकत्रामृतविषयोरर्थानर्थहेतुत्वं विनिश्चित्य सर्वत्रापि तज्जातीयत्वनिश्चयं कुर्वाणो न विपर्ययेण प्रवर्त्तते, तथा इन्द्रियार्थत्वसामान्येन सर्वे विषया विषवन्निश्चिताः, पुनस्तेषु न रागनिमित्तं मिथ्याज्ञानं भवति। दुःखहेतवस्तु सर्वे स्वकर्मफलदायकत्वेना-

---

१. आत्मादिज्ञानेन तन्मिथ्याज्ञाननिवृत्तावपि रजतादिविषयमिथ्याज्ञानानामुत्पत्तिर्भवत्येव, तथैव बद्धो जीवः कथं नु निःश्रेयसभाग् भवितेत्याशङ्कते—एकत्रेति। एकत्र = आत्मादौ। अन्यत्र = रजतादौ।

२. उक्ताशंकां निराकुरुते—नेति।

३. भ्रष्टं विशेषानुसन्धानं यस्य, स तस्य।

४. न्या० सू० ४।२।४७।

५. प्रमेयविशेषस्य = आत्मादेः।

६. तदिति = मिथ्याज्ञानम्।

शक्यपरिहारा इति निश्चिताः पुनस्तेषु न द्वेषनिमित्तं मिथ्याज्ञानं भवति। तथा शरीरादिव्यतिरिक्ते परलोकिनि[1] सत्त्वनित्यत्वादिधर्मके निश्चिते पुनरपि व्यतिरेकादिज्ञानं मोहनिमित्तं न भवति। एवं सर्वत्र प्रमेयविशेषे मिथ्याज्ञानस्यानर्थमूलस्य तत्त्वज्ञानादपायो द्रष्टव्य इति।

## ❀ मिथ्याज्ञानापायाद् दोषापायस्य समर्थनम् ❀

यत्पुनरेतत्—तत्त्वज्ञानवतामपि रागादिदोषसम्भवात् न मिथ्याज्ञानापाये दोषापाय इति, तदप्ययुक्तम्, दृष्टत्वात्। दृष्टस्तावदिह मिथ्याज्ञानापाये दोषापायः। तथा हि—मित्रादौ शत्रुरिति मिथ्याध्यवसायादुत्पन्नो द्वेषस्तत्त्वज्ञानात्तच्छत्रुप्रत्ययनिवृत्तावपैति। मात्रादौ च प्रियतमेति मिथ्याध्यवसायादुत्पन्नो रागस्तत्त्वोपलम्भात् तद्विपर्ययनिवृत्तौ निवर्त्तत इत्येवं बहुधाप्युदाहरणं द्रष्टव्यमिति। मिथ्याध्यवसायाभावे तु न क्वचिद्रागादिसम्भवो दृष्टः। तथा चोक्तम्—"[2]तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः" इति। ननु च शास्त्रार्थविदामपि केषांचिद्रागाद्यभिभवो दृष्टः। सत्यम्, किन्तु [3]तेषामप्याध्यात्मिकदोषो बलिष्ठः, तत्त्वज्ञानमभिभूय रंजनीयकोपनीयौ मिथ्याध्यवसायौ जनयति, ताभ्यां रागद्वेषौ प्रादुर्भवत इति। दृष्टश्च तत्त्वज्ञानवतोऽप्याध्यात्मिकदोषसामर्थ्यान्मिथ्याध्यवसायः। तद् यथा—अर्कोदयादिलिंगेनावधारितदिग्विभागस्यापि कस्यचिद् अधर्मसामर्थ्याद् दिङ्मोहो भवति। निश्चितचन्द्रैकत्वस्यापि तिमिरादिदोषसामर्थ्यादनेकचन्द्राध्यवसायः। इत्येवं रसनादिदोषजनितोऽपि उदाहर्त्तव्यो मिथ्याध्यवसाय इति। यथा च तत्रेन्द्रियदोषादयं मे मिथ्याध्यवसाय इत्येवं विद्वान् औषधविशेषेणेन्द्रियादिदोषापगमं कुर्वन् मिथ्याध्यवसायं निवर्त्तयति। तद्वदयमपि शास्त्रार्थतत्त्वज्ञो मुमुक्षुरिष्टानिष्टविषयेषु अदृष्टसामर्थ्यादिमौ रंजनीयकोपनीयौ मिथ्याध्यवसायौ मे प्रादुर्भवत इत्येवं प्रतिपद्य प्रसंख्यानपरो भूत्वा योगांगानुष्ठानाभियोगेनादृष्टसंस्कारक्षपणद्वारेण तावपि रंजनीयकोपनीयौ मिथ्यासंकल्पौ निवर्त्तयति। तथा च सूत्रम्—"[4]तदर्थं यमनियमाभ्याम् आत्मसंस्कारो

---

१. परलोकिनि = परलोकभाजि आत्मनि अस्ति नित्यश्चेति निश्चिते पुनस्तत्र नास्तित्वानित्यत्वज्ञानं न भवतीति भावः।

२. न्या० सू० ४।१।६ तेषाम् = रागादीनां मध्ये मोहः पापीयान् भवति, यतो मोहरहितस्य इतरौ = रागद्वेषौ न भवत इति तदर्थः।

३. आध्यात्मिको दोषः = अधर्मादिः।

४. न्या० सू० ४।२।४६। तदर्थम् = अपवर्गार्थम्। योगात् = योगशास्त्रात्।

योगाद्याध्यात्मविध्युपायैः" इति । ये पुनः प्रमादालस्योपहतास्तैरन्योऽपि पुरुषार्थः साधयितुं न शक्यते किमुतापवर्ग इति । तदेवं तत्त्वज्ञानादप्रमादिनः प्रसंख्यानाभियुक्तस्य मिथ्याज्ञानोच्छेदे दोषा अप्युच्छिद्यन्त इति । तत्त्वज्ञानरहितानां तु बालोन्मत्तादिवद्दोषबीजेन मोहान्विततत्वात् कुतो रागाद्युच्छेदः ? यथा चोक्तं—

"अज्ञानेषु यद्वैराग्यं पराधीनेषु यत् सुखम् ।
अभ्रच्छाया तृणाग्निश्च क्षिप्रमेव विनश्यति ॥" इति ।

## ❀ योगिनां रागाद्यभिभूतत्वाक्षेपनिरासः ❀

यदप्युक्तम्—योगिनामपि रागाद्यभिभवश्रवणान्न चिन्तामयमपि तत्त्वज्ञानं रागाद्युपशमनिमित्तमिति । तदप्ययुक्तम्, चिन्तामयतत्त्वज्ञानस्वरूपानवबोधात् । यस्मादात्मादौ प्रमेये [1]हेयादिरूपेण चतुर्धा भावना स्थिरीभूता चिन्तामयं तत्त्वज्ञानमुच्यते, न तु योगिज्ञानमात्रम् । न हि सर्वेऽपि योगिनो मुमुक्षवस्तत्त्वज्ञानवन्तो वा, बहूनामपि ज्ञानसिद्धये तावन्मात्रोपदेशेनापि योगाभ्यासप्रवृत्तेः । तथा जैगीषव्यादिशास्त्रेषु बह्व्यो धारणा भो (यो ?) गार्थं व्याख्याताः । सनत्कुमारश्च योगैश्वर्यातिशयेन हरिहिरण्यगर्भाद्यभ्यधिकोऽपि परमेश्वरं प्रति विप्रतिपद्यमानो भगवताक्षपादेन पराजित इति श्रूयते । तस्मान्न योगित्वादेव तत्त्वज्ञानवत्त्वं रागादिहीनत्वं वा सिद्ध्यतीति । तस्मादुक्तस्वरूपादेव तत्त्वज्ञानान्मोहोच्छित्तौ दोषोच्छेद इति स्थितम् ।

यत् पुनरिदमुक्तम्—दोषापायेऽपि प्रवृत्त्यपायो न युज्यत इति, तदप्ययुक्तम्; प्रवृत्त्यपायस्वरूपानवबोधात् । न ह्यत्र क्रियामात्रनिवृत्तिः प्रवृत्त्यपायोऽभिप्रेतः, किं तर्हि ? धर्माधर्मयोरनागतयोः [2]कारणाभावादनुत्पत्तिः संचितयोश्च कार्यावसायाज्ज्ञानाग्निदाहाच्च प्रक्षय इति । ननु चानागतयोः साधनपरिहाराशक्यत्वादनुत्पत्तिरयुक्तेत्युक्तम्, न; दोषपरिहारस्योक्तत्वात् । दोषो हि प्रधानं साधनं तदभावे च धर्माधर्मयोरितरकारणसद्भावेऽप्यनुत्पत्तिः शालिबीजाभावे

---

१. अभिधर्मकोशे ( ६।५ ) त्रिविधा प्रज्ञा निबद्धा बन्धुना—श्रुतमयी, चिन्तामयी, भावनामयी । तत्राप्तश्रुतिफलिता श्रुतमयी, युक्तिभिर्नितीर्णा चिन्तामयी, समाधिभावनोद्भूता भावनामयी । अत्र भावनामयीमेव ये चिन्तामयीं मन्वते, तेषां भ्रमं निराह—हेयादिरूपेणेति । हेयम्, तन्निदानम्, हानम्, तदुपायः—इति चत्वार्यर्थपदानि ।

२. कारणाभावात् = रागाद्यभावात् ।

तदङ्कुरानुत्पत्तिवत्। तथा च सूत्रम्—[1]"न प्रवृत्तिः प्रतिसंधानाय क्षीणक्लेशस्य" इति। पातंजलमपि सूत्रम्—[2]"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः।" [3]"सति मूले तद्विपाको जात्यायुर्भोगाः" इति तथानुमानमप्यत्रोच्यते—'विवक्षितः पुरुषः प्रवर्त्तमानोऽपि न धर्माधर्माभ्यां सम्बध्यते, दोषरहितत्वात्, महेश्वरवद्', इति। प्रक्षीणदोषस्यैव च तत्त्वज्ञानमतिनिर्मलं धर्माधर्ममलापगमेऽपि समर्थं, नाप्रक्षीणदोषस्य योगिनोऽपि कलुषितोदकवत्। यथा वा समिद्धोऽप्यग्निः कार्पासादिदाह्यम् ओषधीविशेषेण सम्बद्धं न दहति, एवं ज्ञानाग्निरपि दोषसम्बद्धं कर्म दग्धुं न शक्नोतीति। कर्मदाह्यत्वं च सर्वयोगशास्त्रेषु वेदान्तेषु च प्रसिद्धं तेनाप्रमाणकमपि न भवतीति।

## ❀ नाभुक्तं क्षीयते कर्मेति केषाञ्चिन्मतं तदालोचनं च ❀

स्वकार्यावसायादेव कर्मणां नाश [4]इत्येके किल—" [5]नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति। ज्ञात्वा प्राप्तैश्वर्यः खलु योगी सर्वस्थानेषु कर्मानुरूपाणि सेन्द्रियाणि शरीराणि निर्माय युगपदिष्टानिष्टभोगानुपभुङ्क्त इति।

एवं तर्हि ब्रह्महत्याश्वमेधादिप्रापकाभ्यां कर्मभ्यां तत्कार्यं कृत्वा निवर्तितव्यम्, ततः पुनः कर्मसंचय इति कथमत्यन्तोच्छेदः? प्रक्षीणक्लेशत्वमपि न प्राप्नोति यतो रागादिहेतुना कर्मणा रागादिकं कृत्वा निवर्तितव्यमिति प्रायाश्चित्तादि-

---

१. न्या० सू० ४।१।६४। रागद्वेषमोहरहितस्य पुरुषस्य प्रवृत्तिः = धर्माधर्मात्मिका प्रतिसन्धानाय = पुनर्जन्मनः कारणं न भवतीति तदर्थः।

२. यो० सू० २।१२।

३. यो० सू० २।१३। सति मूले = अविद्यास्मितारागद्वेषात्-के मूले सत्येव तेषाम् = धर्माधर्माख्यानां कर्माशयानां विपाकः = फलम्—जातिर्देवत्वादिरूपा, आयुर्जीवितकालः, भोगः सुखादिलक्षणो भवतीति तदर्थः।

४. एके = वार्तिककृत्प्रमुखाः। तथाहि—"वर्तमानयोः पुनः कार्यावसानात् प्रक्षयः" (न्या० वा० पृ० २६) इति वार्तिकम्। "पूर्वोपचितस्य विपाकप्रतिसंवेदनात्प्रक्षयः" (न्या० भा० ३।२।६७) इति भाष्यम्। "योगर्धिवशाच्चायमनियतविपाकफलान्यपि दीर्घकालफलान्यपि कर्माणि पिण्डीकृत्य भूतेन्द्रियविजयितया युगपदेव भुङ्क्ते। अचिन्त्यो हि समाधिप्रभावः इत्युक्तम्" (न्या० वा० ता० पृ० ८०) इति टीका।

५. ब्र० वै० पु० उ० ४।८१।५५।

त्रिविधं प्रमाणं—प्रत्यक्षमनुमानमागम इति ।

विरोधश्च प्राप्नोति । अथ [1]रागाद्यर्थोऽप्यधर्मो दुःखमात्रमेव कृत्वा निवर्त्तते, धर्मस्तु सुखमात्रमेव कृत्वेति, तन्त्वादीनामिव सहकारिवैगुण्यात् कार्यवैगुण्योपपत्तेः, [2]कर्मविपाककालानियमाच्चेति । भवत्येषापि कल्पना न कश्चिद्दोषः । परमात्मदर्शनमेकमंगीकृत्य शास्त्रश्रवणादौ योगांगानुष्ठाने च प्रवृत्तस्य सन्तोषजखेदजे सुखदुःखे कृत्वा निःशेषावेव धर्माधर्मौ प्रणश्यत इत्याहुराचार्याः । योगिनो युगपद्भोगभुक्तिरप्यागमबलेनैवाभ्युपगम्यते, कस्तर्हि ज्ञानाग्निकर्मदाहेनापराधः कृतः, सर्वागमसिद्धत्वेऽपि येनासौ नाभ्युपगम्यते ? "नाभुक्तं क्षीयते कर्म"—इत्यादिरागमोऽपि[3] यदि अयं तथापि अकृतप्रायश्चित्तातत्त्वविद्विषयत्वेनास्यार्थवत्त्वं द्रष्टव्यमिति ।

कर्मदाहकत्वे ज्ञानस्य योगजधर्मोपचयविरोध इति चेत्, न; अक्षीणदोषावस्थायां तदुपपत्तेः । संस्कारवद्वा प्रतिपक्षस्यैव निवृत्तिः—यथैकविषयज्ञानाभ्यासात्तत्संकारस्योपचयः तत्प्रतिपक्षसंस्कारस्य प्रक्षयश्च भवति एवं संसारजिहासोः परमात्मज्ञानाभ्यासात्संसारनिमित्तयोर्धर्माधर्मयोः समाधिप्रतिपक्षत्वात्प्रक्षयो भवति । समाधिनिमित्तस्य धर्मस्य चोपचयस्तावत्, यावत् परमात्मदर्शनं भवति । सोऽपि धर्मः स्वकार्यावसायान्निवर्त्तते । प्रहीणदोषत्वाच्च नास्यानागतयोर्धर्माधर्मयोः कदाचिदप्युत्पत्तिः, ततः कारणस्यात्यन्तोच्छेदाजन्मनोऽप्यत्यन्तोच्छेदः, तदत्यन्तोच्छेदाच्च दुःखानामप्यत्यन्तोच्छित्तिरित्युपपन्नोऽपवर्ग इति ।

## ❀ प्रमाणभेदनिरूपणम् ❀

अथेदानीं तत्त्वज्ञानोत्पत्त्यर्थं प्रमाणादिसंख्याविशेषलक्षणानि [4]जिज्ञासमानं

१. रागादिजनितः ।

२. विपक्षे बाधकमुपन्यस्यति—कर्मविपाकेति । अर्थाद् यदि रागादिजनितोऽधर्मादिः सुखादिमात्रकं कृत्वा न निवर्तते, तर्हि तस्यानादिभवसंचितस्यासंख्यातत्वेन अनियतविपाकदेशकालत्वेन च योगान्न प्रक्षीयेत ।

३. 'अपि यदि'—इति विपरीतक्रमेण 'यद्यपि' पठितव्यम् ।

४. कियन्ति प्रमाणानि, किंलक्षणकानि, किंविषयाणि, किंफलानि चेत्येवं प्रकाराजिज्ञासा समुदेत्येव तत्त्वबुभुत्सूनाम्, प्रमाणेषु विप्रतिपत्तिदर्शनात् । तथा चोक्तं धर्मोत्तरेण—"चतुर्विधा चात्र विप्रतिपत्तिः संख्यालक्षणगोचरफलविषया" (न्या० वि० पृ० ३५) । शालिकानाथोऽप्यचकथत्—

"स्वरूपसङ्ख्यार्थफलेषु वादिभिः ।
यतो विवादा बहुधा वितेनिरे ॥" (प्र० पं० पृ० ११२)

प्रति प्रमाणसंख्या तावदुच्यते—त्रिविधमिति। त्रिविधग्रहणमवधारणार्थम्, सर्वासां प्रमाणव्यक्तीनां प्रत्यक्षादिलक्षणैस्त्रिभिरेव संगृहीतत्वात्। तथा चोपमानादीनमत्रैवान्तर्भावं प्रतिपादयिष्यामः।

## ❀ प्रत्यक्षैकप्रमाणवादिचार्वाकमतखण्डनम् ❀

प्रत्यक्षमेवैकं प्रमाणमित्येके,[1] तदयुक्तम्, प्रत्यक्षेण [2]प्रमाणेतरविभागासिद्धेः, सुख-दुःखादिसाधनाप्रतिपत्तेश्च। तन्मूले प्रवृत्तिनिवृत्ती अपि न स्याताम्। नाप्रत्यक्षं प्रमाणमस्तीत्यभ्युपगम्य परप्रत्यायनार्थं शास्त्रं प्रणयन् वाक्यं वोच्चारयन् स्वामेव प्रवृत्तिं स्ववाचा विडम्बयतीत्यहो भद्रं पाण्डित्यमात्मनः प्रकटितवानिति।

## ❀ अनुमानैकप्रमाणवादिनो निराकरणम् ❀

[3]अनुमानमेवैकं प्रमाणमित्येतदपि न युक्तम्, प्रत्यक्षाभावेऽनुमानोत्थानासम्भवात्। सुदूरमपि गत्वा धर्मिलिङ्गदृष्टान्तानामनुमानप्रवृत्तिमिच्छतावश्यं प्रत्यक्षेण ग्रहणमभ्युपगन्तव्यम्। एतेनागम एवैकं प्रमाणमित्येतदपि निरस्तम्, तत्रापि प्रत्यक्षेणानुमानेन वा पदवाक्याद्यप्रसिद्धावागमार्थप्रतिपत्तेरसम्भवादिति।

## ❀ जैनमतनिरासः ❀

[4]प्रत्यक्षपरोक्षभेदेन द्विविधमेवेति चेत्, न; तद् व्यवहाराप्रसिद्धेः। न हि परोक्षेणाहं जानामीति व्यवहारः क्वचित्प्रसिद्धो, यथा प्रत्यक्षेणाहं जानामि, अनुमानेन वाऽगमेन वेति। निष्प्रयोजनत्वाच्च—यथा पृथक्-पृथक् प्रामाण्यप्रतिपत्त्युपायप्रतिपादनं प्रत्यक्षादीनां भेदेनाभिधानप्रयोजनम्, नैवं परोक्षत्वेनानुमानागमयोः संग्रहे प्रयोजनं किंचिदस्ति। यदि पुनरयं स्वपक्षरागेण द्वैविध्यमात्रसिध्यर्थं परोक्षं सामान्यमभिधाय तद्विशेषावनुमानागमौ भिन्नलक्षणौ

---

१. एके = लोकायतिकाः।

२. व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति नीत्या प्रमाणलक्षणेनैव प्रमाणे तदितरव्यावृत्तिरनुमेया, किन्तु प्रत्यक्षैकप्रमाणपरायणाः कथं तामनुमिमीरन्?

३. बौद्धैकदेशीयमतमेतदिति चिरन्तनटिप्पणम्।

४. जैनमुनयः प्राहुः—"प्रत्यक्षं च परोक्षं च द्विधा मेयविनिश्चयात्" (न्याया० १।१)। इति, तन्निरस्यति—प्रत्यक्षेति।

ब्रूयात्, ब्रवीतु कोऽस्य निवारयिता ? न त्वेवमप्यस्मदुक्तं त्रैविध्यं निवर्त्तते, त्रयाणां परस्परतोऽसंकीर्णलक्षणप्रतिपादनादिति। अथ प्रत्यक्षमनुमानमिति योऽर्थः स एवार्थः प्रत्यक्षं परोक्षमिति, तथापि न द्विविधमेव, ततोऽर्थान्तरस्यागमस्यापि प्रमाणत्वात्। तस्य चानुमानेऽन्तर्भावं निषेत्स्यामः, ततो न प्रत्यक्षानुमानभेदेनापि द्विविधम्। तस्मात् त्रिविधमेवेति।

## ❀ विभागसूत्रविरोधपरिहारः ❀

विभागसूत्रविरोधान्न हि त्रिविधमिति चेत्, स्यान्मतिरेषा—"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति विभागसूत्रमेतत्, विभागस्य च न्यूनाधिकसंख्याव्यवच्छेदः फलम्, अन्यथा हि लक्षणचतुष्टयाभिधानादेव चतुष्ट्वसिद्धिरित्यनर्थको विभागः स्यात्। न चायमुद्देशः, परीक्ष्यमाणत्वात्। न हि प्रमाणादीनामुद्देशः परीक्षितः, विभागस्तु "न [1]चतुष्ट्वम्" इत्यादिना परीक्षितः; तस्माच्चत्वार्येव प्रमाणानीति।

तदेतत्सर्वं [2]घ्राणादिसूत्रेण व्यभिचारित्वाद् अयुक्तम्। घ्राणादिसूत्रे हि इन्द्रियाणां विभागः कृतः, [3]"त्वगव्यतिरेकाद्" इत्यादिना परीक्षितश्च। न च पञ्चैवेत्यवधारणं, मनसोऽपीन्द्रियत्वाभ्युपगमात्, परीक्ष्यमाणत्वाविशेषेऽपि प्रत्यक्षादिसूत्रमेव विभागार्थं, घ्राणादिसूत्रं तु अनुवादार्थमित्यत्र [4]कोशपानमेव कर्त्तव्यम्। न हि विशेषहेतुः कश्चिदस्तीति। तस्माद्यथेन्द्रियाणां न्यूनत्वमेवाशंक्य सूत्रकृता निराकृतमित्यधिकत्वाभ्युपगमो न विरुध्यते, तथा प्रमाणानामधिकत्वमेवाशंक्य निराकृतमित्यतस्त्रैविध्याभ्युपगमो न विरुध्यते, न्यायलभ्यत्वस्योभयत्रापि समानत्वात्। न्यायलभ्यत्वं च प्रमाणत्रैविध्यस्य सूत्राविरोधेनोत्तरत्रोपपादयिष्याम इति।

## ❀ प्रमाणानां संप्लवो व्यवस्था च ❀

प्रमाणमित्येकवचनं किमर्थम्? त्रयाणामप्येकविषयत्वज्ञापनार्थम्—यथा

---

१. न्या० सू० २।२।१।

२. न्या० सू० १।१।१२।

३. न्या० सू० ३।१।५५।

४. कोशपानम् = शपथविशेषः। दुर्गाद्युग्रदेवं संपूज्य तत्स्नपनपानीयं मन्त्रैरभिमन्त्र्य सन्दिग्धं जनं पाययेत्। चतुर्दशदिवसाभ्यन्तरे स दैवकोपाविष्टश्चेद् दुष्टः, अन्यथा निरवद्य इति निर्णीयते तेन।

पर्वतादिप्रदेशेऽग्न्याप्तवचनादग्निं प्रतिपद्य प्रवर्त्तमानस्तमेव धूमं दृष्ट्वा प्रतिपद्यते। ततोऽतिप्रत्यासन्नः तमेवाग्निं प्रत्यक्षेण प्रतिपद्यते। तथा आप्तोपदेशादात्मस्वरूपं प्रतिपद्य इच्छादिलिङ्गेनापि प्रतिपद्यते, पुनः समाधिबलेन प्रत्यक्षेण, इति [1]संप्लवसिद्धिः।

'प्रत्यक्षमनुमानमागम' इति व्यस्ताभिधानं क्वचिदेकैकशोऽपि नियतविषयत्वज्ञापनार्थं, यथा "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्याद्यागमार्थेऽस्मदादीनां न प्रत्यक्षं नानुमानमिति। स्तनयित्नुशब्दे श्रूयमाणे शब्दहेतावश्रुतागमस्यास्मदादेरनुमानमेवैकं प्रवर्त्तत इति। पाणौ प्रत्यक्षत उपलभ्यमानेऽनुमानागमयोराकांक्षाभावादप्रवृत्तिः। [3]प्रत्यक्षोपलब्ध एवार्थे प्रमाणान्तराकांक्षा निवर्त्तते, नागमोपलब्धेऽनुमानोपलब्धे वा [4]इत्यप्रमाणमिति चेत्, न; प्रत्यक्षस्यैव निर्देश्यानिर्देश्यानेकविशेषविशिष्टार्थप्रदर्शकत्वेनाकांक्षानिवृत्तिहेतुत्वात्, न हि यावद्विशेषविशिष्टोऽर्थः प्रत्यक्षेण प्रदर्श्यते, तावद्विशेषविशिष्टोऽ-

---

१. एकस्मिन् प्रमेयेऽनेकेषां प्रमाणानामवतारः संप्लवः। प्रमाणविभागसूत्रे (न्या० सू० १।१।३) भाष्यादितोऽस्य विस्तरोऽवसेयः।

२. 'अग्निहोत्रसमाख्येन होमेन स्वर्गं भावयेद्' इति भाट्टनयेनान्वयबोधः। अत्र विधीयमानो होमो न केनाप्यन्येन प्रमाणेन गृह्यत इत्यागमैकवेद्यत्वव्यवस्था। स्यादेतत्—व्रीह्यादिद्रव्यम्, यागहोमादिक्रिया, आरुण्यादिगुणाश्च धर्मो मीमांसकानाम्। एवंरूपो धर्मस्त्विन्द्रयादिभिरपि विषयीक्रियतेऽतः कथमागमैकगम्यत्वं तस्य ? कथं च न सम्प्लवः ? मैवं भाषिष्ठाः, द्रव्यादीनां श्रेयःसाधनत्वेन रूपेण धर्मताऽभिमता, तेन रूपेण चेन्द्रियग्राह्यत्वाभावात्। तथा चोक्तम्—

द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता॥
श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः॥ (श्लो० वा० २।१३,१४)

३. 'मानानि क्वचित् संप्लवन्ते, क्वचिद् व्यवतिष्ठन्ते'—इत्यनैकान्तवादोऽयुक्त इत्याशङ्कते परः—प्रत्यक्षोपलब्धेति।

४. इत्यप्रमाणम् = इत्यत्र विनिगमकप्रमाणाभावः। अर्थात् प्रत्यक्षोपलब्धे एवार्थे सर्वाकाङ्क्षोपशमाद् इतराणि प्रमाणानि न प्रवर्तन्ते, अनुमानागमोपलब्धेऽर्थे त्वाकाङ्क्षासत्त्वादितरप्रमाणप्रवृत्तिः—इत्यत्र विनिगमकाभावः।

नुमानादिनापीति । एवं तर्हि अतुल्यविषयत्वादनुमानादिना प्रत्यक्षस्येत्यनुपपन्नः संप्लव इति, नैदस्ति; कियद्धर्मविशिष्टधर्म्यपेक्षया संप्लवोपपत्तेः । य एव हि देशादिविशिष्टो वह्निरागमेन प्रतिपादितः, स एवानुमानेन प्रतीयते, स एव च प्रत्यक्षेण—इति । यद्यपि प्रत्यक्षोपलब्धेऽप्यर्थे क्वचिदतीन्द्रियविशेषविशिष्टत्वे-नोपलब्धिमिच्छतोऽनिच्छतो वा प्रमाणान्तरप्रवृत्तिर्भवति, तथापि सर्वत्र न भवति ततश्च यत्र प्रमाणान्तरं न प्रवर्त्तते तत्र व्यवस्था सिध्यति, अन्यत्र तु संप्लव इति । एकेनोपलब्धेऽर्थे द्वितीयस्य व्यर्था प्रवृत्तिरिति चेत्, न; सुख-दुःखविशेषजनकत्वात् संस्कारातिशयजनकत्वाच्च । न च सर्वत्र पुरुषार्थायत्ता प्रमाणानां प्रवृत्तिः, निष्प्रयोजनेऽपि तृणादावनिष्टेऽपि च बन्धनादौ प्रमाण-प्रवृत्त्युपलम्भादिति ।

## ❁ सौगतानां संप्लवानुपपत्तिशंका तन्निरासश्च ❁

ननु च [1]स्वलक्षणविषयमेव प्रत्यक्षं, सामान्यविषयमेवानुमानमित्यनुप-पन्नः संप्लव इति, सत्यम्; अस्त्ययं बौद्धानां मनोरथः, स तु अलीकार्थ एवेत्यु-परिष्टान्निवेदयिष्यामः ( वेदयिष्यामः ) । तस्मादस्ति संप्लवः, क्वचिद् व्यवस्था चेति । सूत्रकृताऽपि प्रमाणानां [2]समस्तेनैकपदेनाभिधानादभिन्नविषयत्वं सूचितम्, [3]बहुवचनेनाभिधानाद् व्यवस्थितविषयत्वं सूचितमिति । तदर्थ-प्रतिपादनप्रकारप्रदर्शनार्थमिहान्यथा संप्लवव्यवस्थे सूचिते इति । इतिशब्द उक्तप्रकारावधारणार्थः—अनेनैव प्रकारेण त्रिविधमित्यवधार्यते । अन्यथा हि सम्यगनुभवसाधनत्वाविशेषेणैकविधमेव । प्रत्यक्षादीनामवान्तरभेदविवक्षया तु सप्तविधमभ्यधिकविधं चेति । तस्मात्प्रत्यक्षादिभेदेनैव त्रिविधमिति ।

---

१. "स्वम् = असाधारणम्, लक्षणम् = तत्त्वम् स्वलक्षणम् । वस्तुनो ह्यसाधारणं च तत्त्वमस्ति सामान्यं च । तत्र यदसाधारणम्, तत् प्रत्यक्षस्य ग्राह्यम्" ( धर्मोत्तर० पृ० ७० ) "एतस्मात् स्वलक्षणाद् यद् अन्यत्, तत् सामान्य-लक्षणम् । सामान्येन लक्षणं सामान्यलक्षणं साधारणं रूपमित्यर्थः । समारोप्य-माणं हि रूपं सकलवह्निसाधारणम् । तच्चानुमानस्य ग्राह्यम्" ( धर्मोत्तर० पृ० ७७ ) ।

२. प्रमाणप्रमेयेतिप्रथमसूत्रस्थेन प्रमाणपदेनेत्यर्थः ।

३. 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' ( न्या सू० १।१।३ ) इति सूत्रे प्रमाणानीति बहुवचनेनेत्यर्थः ।

**तत्र सम्यगपरोक्षानुभवसाधनं प्रत्यक्षम् ।**

## ❀ प्रत्यक्षलक्षणम् ❀

तत्र सम्यगिति । सम्यक् पदवदपरोक्षपदस्याप्यनुभवपदेन कर्मधारयः । [1]प्रत्यक्षमिति कः समास ? यदि अक्षम् अक्षं प्रति वर्त्तत इत्यव्ययीभावः क्रियते, तदा पंचमीतृतीयासप्तमीव्यतिरिक्तानां विभक्तीनां 'अम्'[2]भाव एव स्यात्, ततश्च प्रत्यक्षस्य लक्षणम्, प्रत्यक्षो घटः, प्रत्यक्षा नारी—इत्यादि व्यवहारो न स्यात् । तेन [3]प्रतिगतमक्षं प्रत्यक्षमिति [4]"कुगतिप्रादयः" इत्यनेन तत्पुरुषः समास इष्यते । एवमपि [5]"परवल्लिंगं द्वन्द्वतत्पुरुषयोः" इत्यनेन [6]परवल्लिंगत्वप्राप्तेः प्रत्यक्षो घटः इत्यादेरनुपपत्तिरिति, नैतदस्ति; गतिसमासे हि परवल्लिङ्गत्वप्रतिषेधादभिधेयलिंगत्वमिष्टम् । तथा च [7]"प्राप्तापन्नालंगतिसमासेषु परवल्लिंगप्रतिषेधः" इति वचनम् ।

## ❀ प्रत्यक्षपदस्य व्युत्पत्तिप्रवृत्तिनिमित्तयोर्भेदः ❀

कथं पुनरक्षं प्रतिगतम् ? [8]तज्जन्यत्वेन तत्सहकारित्वेन तद्विषयत्वेन चेति । [9]फलं तावदक्षजन्यत्वेनाक्षं प्रति गतम्, [10]फलसाधनं च [11]तत्सह-

---

१. 'अक्षमक्षं प्रति वर्तते'—इति दिङ्नागीयं व्युत्पत्तिप्रकारं न्यक्करिष्यन् प्रश्नयति-प्रत्यक्षमिति कः समासः ?

२. नाव्ययीभावादतोऽम् त्वपञ्चम्याः (पा० सू० २।४।८३) 'तृतीयासप्तम्योर्बहुलम्' (पा० सू० २।४।८४) इत्याभ्यां सूत्राभ्यामित्यादिः ।

३. तुलना—"प्रति गतमाश्रितमक्षम्" ( धर्मोत्तर पृ० ३८ ) ।

४. पा० सू० २।२।१८ ।

५. पा० सू० २।४।२६ ।

६. प्रतिशब्दापेक्षया परस्थानस्थितस्याक्षपदस्येन्द्रियवचनस्य नित्यक्लीबत्वम्—"क्लीबं तुत्थे सौवर्चलेन्द्रिये" इति मेदिनीमानात् । तथा च प्रत्यक्षशब्दो नित्यनपुंसकः स्यात् ।

७. का० वा० १५४५ ।

८. प्रत्यक्षशब्देनेह ज्ञानम्, तत्साधनमिन्द्रियं तत्सन्निकर्षः, घटादिर्विषयश्चोच्यते । तत्र ज्ञानमिन्द्रियस्य जन्यम्, सन्निकर्ष इन्द्रियस्य सहकारी, घटादिरिन्द्रियस्य विषयः । जनकत्वादिसम्बन्धैः ज्ञानादीनामिन्द्रियगतत्वमेष्टव्यमितिभावः ।

९. ज्ञानम् । १०. सन्निकर्षादि । ११. इन्द्रियसहकारित्वेन ।

कारित्वेन, तदर्थस्तु तद्विषयत्वेनेति। यद्यक्षसहकारित्वेन प्रत्यक्षं साधनमिष्टम्, नन्वक्षस्य प्रमाणत्वं न प्राप्नोति, न हि तदेव तस्य सहकारीति युक्तं, प्रमातुश्चाक्षसहकारित्वेन [1]प्रत्यक्षत्वं प्राप्तम्, तथा संशयादेः सुखादेश्चाक्षजन्यत्वेन प्रत्यक्षफलत्वं प्रसज्यत इति, न; व्युत्पत्तिद्वारेण, शब्दार्थप्रतिपादनमात्रत्वात्। न तु [2]व्युत्पत्तिरेव शब्दानां नियतार्थप्रवृत्तिनिमित्तत्वेनाभ्युपगम्यते, तथा हि—गोपङ्कजादिशब्दानां न व्युत्पत्तिवशान्नियतार्थत्वं, किन्तु गोत्वादिलक्षणवशात्। प्रत्यक्षप्रमाणफलयोरप्यस्ति लक्षणभेदः—सम्यगपरोक्षानुभवः प्रत्यक्षफलम्, तस्य साधनं प्रत्यक्षं प्रमाणमिति।

नन्वनुमानागमयोरपि प्रत्यक्षत्वप्रसंगः, तत्फलस्यापि सुखादिवदपरोक्षत्वादिति न; अपरोक्षशब्दस्य जातिनिमित्तत्वेन विवक्षितत्वात्, सुखादेश्चापरोक्षानुभवविषयत्वेनापरोक्षत्वम्, न तु विषयेष्वपरोक्षत्वं जातिरस्ति, सर्वपुरुषापरोक्षत्वप्रसंगात्, जातेः साधारणत्वात् न हि नीलत्वजातियुक्तं कस्यचिदेव तन्नीलम्, न सर्वस्येति। यदा त्वपरोक्षत्वजातियुक्तं ज्ञानमेवाभ्युपगम्यते, तदार्थस्य न सर्वपुरुषापरोक्षत्वं प्रसज्यते, यदीयस्यैवापरोक्षज्ञानस्य विषयोऽर्थः तस्यैवापरोक्ष इति। यथा न सर्वेषां सन्दिग्धोऽर्थः, किन्तु यस्यैव तस्मिन्नर्थे संदिग्धं ज्ञानं भवतीति। तन्न सन्दिग्धत्ववदपरोक्षत्वजातिरर्थेष्वस्तीति, एवं चानुमानादिज्ञानस्य परोक्षस्यापि संदिग्धज्ञानविषयत्वेन संदिग्धत्ववदपरोक्षज्ञानविषयत्वेनापरोक्षत्वम्, न त्वपरोक्षत्वजातियोगेनेति।

## ❀ विरोधिमतनिरासपूर्वकं प्रत्यक्षत्वादेर्जातित्वव्यवस्थापनम् ❀

[3]योऽपि परोक्षत्वापरोक्षत्वजातिविशेषावेव ज्ञानेषु नाभ्युपगच्छतीति, तेनापि तद्व्यवहारनिमित्तं वाच्यम्। न चेन्द्रियार्थसन्निकर्षजत्वमपरोक्षत्वव्यहारनिमित्तम्, तस्यापरोक्षत्वासिद्धावसिद्धेः, असिद्धस्य च विशेषकत्वमयुक्तम्। न चार्थानुभवमात्रं तस्य लिङ्गम्, विशिष्टश्चानुभवोऽपरोक्षत्वजात्यभावान्न सम्भवति, साक्षात्का-

---

१. प्रत्यक्षप्रमाणत्वम्।

२. प्रकृतिप्रत्ययविश्लेषेण शब्दस्वरूपनिष्पत्तिः = व्युत्पत्तिः। सेयं यौगिकानां पदानां प्रवृत्तिनिमित्तभूता भवन्त्यपि न भवति सर्वत्र। गच्छतीति, गौरिति गोदस्य व्युत्पत्तिमात्रं न तु प्रवृत्तिनिमित्तम्। प्रवृत्तिनिमित्तन्तु गोत्वमेव, अतो यो यो, गोत्वविशिष्टोऽर्थः स स गोपदास्पदं भवति, न तु यो योऽर्थो गमनविशिष्टः स स गौरितिभावः। प्रवृत्तिरर्थाभिधानम्

३. यः = उद्योतकर इति प्राचीनटिप्पणम्।

रित्वं चापरोक्षत्वस्यैव पर्याय इति। [1]प्रत्यक्षलैङ्गिकात्मानुभवयोरप्यात्मनः सन्निकर्षजत्वापरोक्षत्वादिजात्यभावे विशेषानुपपत्तिः। निर्देश्यानिर्देश्यविशेषविशिष्टार्थावभासित्वं ज्ञानधर्मोऽपरोक्षत्वं, न जातिरिति चेत्; ननु तमप्यवभासित्वशब्दवाच्यं ज्ञानस्य जातिविशेषादन्यं धर्मं न पश्यामः, किंच निर्विशिष्टविशेषणावभासिज्ञानस्यापरोक्षत्वं न स्यात्। कारणजन्यत्वेनापि विशिष्टव्यवहारविषयत्वाभ्युपगमे, घटवृक्षादिव्यवहारोऽपि तत एव स्यात्, न घटत्ववृक्षत्वादिजातितः। [2]ततश्च पूर्णमनोरथः तथागताः स्युरिति। तस्मात्सत्स्वपि कारणविशेषेषु घटवृक्षादीनामिव ज्ञानव्यक्तीनामनुगतव्यावृत्तव्यवहारहेतवोऽवान्तरजातिविशेषा अभ्युपगन्तव्याः, येनासज्जातिवादिनामप्यवकाशो न भवेदिति। तदेवमनुभवत्वापरोक्षत्वादिजातिविशेषैः स्मरणानुमानादिज्ञानेभ्यः [3]प्रत्यक्षफलं व्यवच्छिन्नं प्रत्यक्षमतीन्द्रियं समानासमानजातीयेभ्यो व्यवच्छिनत्तीत्यनेनाभिप्रायेण सूत्रकारोऽपि इन्द्रियार्थसन्निकर्षोत्पन्नत्वादिविशेषणं फलस्यैवोक्तवानिति।

## ❀ अपरोक्षत्वादिजातेः सूत्रपदैः समर्थनम् ❀

अत्र "इन्द्रियार्थसन्निकर्षोत्पन्नम्" इत्यनेनानुभवत्वापरोक्षत्वविशिष्टमित्यभिप्रेतं तद्विशिष्टत्वस्य प्रत्यक्षसिद्धत्वेन लक्षणभावोपपत्तेः। फलविशेषासिद्धौ हीन्द्रियार्थसन्निकर्षस्यैवासिद्धत्वात्तदुत्पाद्यत्वं कथमनिश्चितं लक्षणं स्यात्? न च[4] व्यवहितार्थानुपलब्धिरिन्द्रियार्थसन्निकर्षानुमापिका, सा हि तदभावानुमापिका यदि स्याद्, अथाव्यवहितस्यैव याऽर्थस्योपलब्धिः सा तत्सद्भावानुमापिकेति।

किमिदं व्यवधानम्? दूरदेशावस्थानं, तदाऽर्कादेरपि व्यवधानं स्यात्। अथान्तराले घनाद्यवयविद्रव्यसद्भावः, तदा काचाभ्रस्फटिकाद्यन्तरितस्यापि व्यवधानं स्यात्। अथ यस्मिन्नेवान्तरस्थे यस्यानुपलब्धिः, तदेव तस्य व्यवधानम्। एवं तर्हि कुड्यन्तरितस्याग्न्यादेरनुमानागमाभ्यामुपलब्धेरव्यवहितत्वं स्यात्।

---

१. प्रत्यक्षस्यात्मानुभवस्य लैङ्गिकस्यात्मानुभवस्य च।

२. घटत्वादिजातिनिराकरणाद् बौद्धमतप्रवेश इति भावः।

३. प्रत्यक्षज्ञानं स्वयं व्यवच्छिनत्तीत्यन्वयः।

४. 'यद् व्यवहितम्, तन्नोपलभ्यते' अत्र व्यापिका अनुपलब्धिः स्वविरुद्धयोपलब्ध्या निवर्त्यमाना स्वव्याप्यमसन्निकर्षात्मकं व्यवधानं निवर्तयन्ती सन्निकर्षं गमयतीति भावः।

अथाक्षजोपलब्धिरव्यवहितत्वे लिङ्गं, ननु किं मनोऽक्षं न भवति? किं चानुमानादिज्ञानं मनोजनितं न भवतीति? क एवमाह? किन्त्वर्थासन्निकृष्टेन मनसा जनितमित्यनक्षजं तदुच्यते। नन्वेवमपि चक्रकं दुरुत्तरं स्यात्—अक्षार्थसन्निकर्षजत्वेनाक्षजत्वम्, अक्षजत्वेन चाव्यवहितार्थोपलब्धित्वं तेन चाक्षार्थसन्निकर्षजत्वम्—इत्येकस्यादावसिद्धौ सर्वासिद्धिरिति।

करणस्य च सतो मनसः कथमनुमेयादिकर्मण्यसम्बद्धे क्रियाजनकत्वं? जनकत्वे चाभ्युपगमविरोधः[1] स्यात्। अथानुमेयादिना मनसः संयोगादिलक्षणः सन्निकर्षो नास्तीति असंनिकृष्टं मन उच्यते, न; आत्माद्यनुमेयादिना संयोगाद्युपपत्तेः। अथात्मादेरिन्द्रियार्थत्वमेव नास्ति, तेन तत्सम्बन्धो नेन्द्रियार्थसन्निकर्ष इति। एवं तर्हि तद्विषयं योगिप्रत्यक्षम्, इन्द्रियार्थसन्निकर्षजं न स्यात्। अथ योगापेक्षयात्मादेरिन्द्रियार्थत्वमिष्यते। किमत्र कारणं? योगीन्द्रियं तत्र विशिष्टं ज्ञानं जनयतीति चेत्, कोऽपरोक्षत्वसामान्यादन्यो विशेषः? साक्षात्कारित्वमपि तस्यैव पर्यायः। सम्बन्धस्मरणाजन्यत्वं विशेष इति चेत्, न; तस्याप्यनिश्चयात्।

[2]तदनुपलम्भे [3]तदुत्पादादेव [4]तन्निश्चय इति चेत्, न; आशुभावित्वेऽपि सम्बन्धस्मरणानुपलम्भस्य सम्भवात्। प्रणिधानेनाविनाभावादिसम्बन्धस्मरणे सत्यनन्तरमेव क्वचिदर्थप्रत्यक्षोऽपि भवति, नैतावता [5]तस्याऽनिन्द्रियार्थत्वम्। तस्माद् यत्रैवार्थे यस्य पुंसो परोक्षत्वविशिष्टज्ञानमदृष्टादिवद्शा भवति, स एव तस्येन्द्रियार्थः इति युक्तमुत्पश्यामः।

## ❀ प्रत्यक्षज्ञानेऽर्थजत्वविशेषणस्य प्रयोजनम् ❀

यद्यपि स्मरणव्यवच्छेदार्थमर्थजत्वं विशेषणमुपादीयते कैश्चित्तदपि न युक्तम्, अनर्थजस्याप्यतीताद्यर्थज्ञानस्य प्रमाणफलत्वेनेष्टत्वात्। अन्यथा ह्यतीताद्यर्थस्य जनकत्वाभावान्न विज्ञानविषय(विषय)त्वमित्यप्रमेयत्वमेव प्राप्तं जनकत्वेनावर्त्तमानतैव स्यात्, विद्यमानस्यैव जनकत्वसम्भवात्। तस्मान्न

---

१. सम्बद्धमेव करणं कुठारादिक्रियां कुर्वदुपलभ्यतेऽभ्युपगम्यते च।

२. सम्बन्धस्मरणानुपलम्भे।

३. ज्ञानोत्पादादेव।

४. सम्बन्धस्मरणजन्यत्वनिश्चयः।

५. आत्मादेः।

[1]जनकत्वेनैवार्थस्य प्रमेयत्वम्। [2]योगिप्रत्यक्षविषयत्वात् न प्रत्यक्षेऽप्ययं नियम इति।

## ❀ अतीताद्यर्थस्य भावत्वम् ❀

ननु चातीतानागतार्थौ नाशानुत्पत्तिलक्षणावभावावेव तयोश्चेह शास्त्रे जनकत्वमिष्टमेवातः कथं तज्ज्ञानस्यानर्थजत्वमिति? नैतदस्ति, यन्निष्पत्त्यर्थं हि कारणोपादानं क्रियते, तदनागतमुच्यते न चेत्थं प्रागभावः, तस्यानादित्वात्। तथा यदेव निवृत्तं तदेवातीतमुच्यते न प्रध्वंसाभावः, तस्यानिवृत्तत्वात्।

किंस्वभावस्तर्हि सोऽतीताद्यर्थ इति? न भावः सत्त्वादिरहितत्वात्, नाप्यभावः प्रागभावादिविलक्षणत्वात्; अतस्तृतीयं प्रमेयं इत्येके। तच्च नैवं, घटाघटवत्सर्वव्याप्तेः—यो हि घटो न भवति, स सर्वोऽप्यघट एव, [3]तन्निषेधे च घट एव स्यान्न गत्यन्तरम्। एवं यः कश्चिद् भावो न भवति स सर्वोऽप्यभाव एव [4]प्रतिषेधद्वये हि भाव एव स्यात्। न चाधर्मवद्[5] अभावस्य जातिविशेषो लक्षणं येन तृतीयं प्रमेयं स्यात्। इदमेव हि अभावस्य लक्षणम्—यद् भावादर्थान्तरत्वम्। विधिप्रतिषेधव्यतिरिक्तव्यवहाराभावाच्च न तृतीयं प्रमेयमस्तीति।

अतीताद्यर्थस्य तर्हि किं स्वरूपं? भावस्वरूपमेव। सत्त्वादिरहितत्वादयुक्त-

---

१. न जनकत्वेन प्रमेयत्वं किन्तु प्रतिभासमानत्वेन।

२. स्यादेतत्—ज्ञानजनकत्वमेव प्रमेयत्वमित्यध्यक्षे एव निर्बन्धो न सर्वत्रेत्यत आह—योगिप्रत्यक्षेति। प्रत्यक्षेऽपि नायं नियमः कर्तुं पार्यते, यतोऽजनकत्वेऽप्यतीताद्यर्थस्य योगिप्रत्यक्षे प्रतिभासमानत्वेन प्रमेयत्वमिष्यत एव।

३. तन्निषेधे = अघटनिषेधे।

४. योऽभावो न भवतीति प्रतिषेधद्वयम्।

५. ननु यथाऽधर्मो न धर्माभावमात्रम्, अपि तु दुष्कृतत्वजातिविशिष्टः तृतीयो राशिर्धर्मतदभावाभ्यामन्यः। तथैव प्रकृतेऽपि भावाभावाभ्यामन्यत् तृतीयं प्रमेयमतीतादि किं न स्यादित्यत आह—न चाधर्मवदिति। सत्यम्, अधर्मोऽधर्मत्वजातिविशिष्टः, सा जातिर्धर्माभावे नास्त्यतो धर्मोऽधर्मो धर्माभावश्चेति राशित्रयं व्यवतिष्ठते। तथा प्रकृते नाभावत्वं जातिविशेषः, किन्तु, भावभिन्नत्वमात्रमतो भावोऽभावश्चेति राशिद्वयमेव प्रमेयवर्गस्येत्येतावन्मात्रमिह प्रतिपिपादयिषितम्, न पुनरतीताद्यर्थमभावेऽन्तर्गमयितुमपि समीहतेऽनुपदमेव तस्य भावत्वं वक्ष्यति।

मिति चेत्, न; असिद्धत्वात्। तथा हि—घटादिरर्थ एवातीतोऽनागतो वर्तमानश्चोच्यते, कथं तस्य सत्त्वादिरहितत्वम् ? सर्वदा सत्त्वाद्युपेतत्वान्नित्यत्वप्रसंग इति चेत्, न; आश्रयासिद्धत्वात्। घटादिधर्म्येव न सर्वदास्ति कुतस्तस्य सत्त्वादिधर्म इति ? न हि विनष्टोऽनुत्पन्नो वा घटोऽस्तीति शक्यं वक्तुम्। नन्वतीतानागतरूपेण विद्यते। अथ किमयं घटो नटवदनेकरूपतां धत्ते ? सत्यं, कुत एतत् ? तथोपलम्भात्।

नन्वेवमनेकरूपतां दधानः कथं नास्तीत्युच्यते ? सत्त्वादिधर्माभावादिति चेत्, सोऽपि सत्त्वादिधर्मः प्राक् पश्चाद् घटवदनेकरूपतां दधानः कथं नास्ति ? तद्घटसम्बन्धाभावादिति चेत्, न; अत्रापि चोद्यस्य समानत्वात्। एतेन वर्त्तमानत्वाभावोऽभिव्यक्त्यभावश्च प्रत्युक्तः, तस्मादसन्नेव घटोऽनुत्पन्नो नष्टश्च न केनापि रूपेण विद्यत इति।

## * अतीताद्यर्थस्यारोपितत्वेनाभावविशेषकत्वम् *

अविद्यमानस्य घटस्य प्रागभावादिविशेषकत्वं कथमिति चेत्, शशविषाणवत् कल्पनासमारोपितस्य इत्येके। यथाऽन्यत्र विषाणमुपलभ्य तज्जातीयं शशमस्तकोत्पन्नत्वेन कल्पयित्वा तदभावमुपलभमानः शशविषाणस्याभाव इति प्रतिपद्यते, न पुनः शशविषाणं क्वचिदस्ति। यदि पुनः [1]तद्विशेषणत्वेन गृहीतं स्यात्तदा सामान्यादिवत्तभावो न स्यात्। अत एव शशविषाणव्यवहारो मिथ्या न तदभावव्यवहारोऽपि, चन्द्रादौ द्वित्वादितदभावव्यवहारवत्। अभावव्यवहारस्य मिथ्यात्वे भावसिद्धिरेव स्यात्। एवं घटादेरपि प्राक्पश्चादभावव्यवहारो न मिथ्या, भावव्यवहारस्तु मिथ्यैव, भावे सत्यभावव्यवहारवत्। तस्मादन्यत्र दृष्टस्य पटादेरिह कल्पनासमारोपितस्याभावविशेषकत्वं न तु परमार्थत इति।

## * अतीताद्यर्थस्य स्मृतत्वेनाभावविशेषकत्वम् *

[2]नैतदस्ति। शशविषाणं हि न क्वचिद्देशे काले वा केनाप्युपलब्धमतस्तस्यात्यन्तासतः कल्पनासमारोपितत्वं युक्तं, न घटादेस्तस्य कदाचिदुपलम्भात्, तस्यैव च विशेषकत्वप्रतीतेः। तथा हि—योऽसौ घटो दृष्टः, तस्ये-

---

१. तद्विशेषणत्वेन = अभावविशेषणत्वेन।

२. भूषणकारः स्वमतमुपस्थापयितुं पूर्वं परं परास्यति—नैतदिति।

दानीं निवृत्तत्वान्नास्तीति प्रतीतिः, अभावकाले तु तस्य स्मर्यमाणत्वं स्यान्न कल्पितत्वं। स्मृतिरेव कल्पनेति चेत्, कस्त्वां संज्ञां कुर्वन्तं निवारयति? लोके त्वयथार्थसमारोपस्य कल्पनात्वं प्रसिद्धं, यथा स्वात्मनि गरुडादिकल्पना, चित्रादौ राजाश्वादिकल्पनेति। न चैवं स्मरणेनान्यार्थः कल्प्यते, तस्य यथा-दृष्टार्थानुसन्धानरूपत्वादिति। स्मृतिरेव तर्ह्यतीताद्यर्थस्यानुभवोऽस्तीति चेत्, न; अनुभवाभावे स्मृतेरभावात्। यो हि यमर्थं न प्रागनुभूतवांस्तस्य कथमादौ तत्र स्मृतिः? [1]पाण्डवादिष्विव। न चान्यार्थानुभवेऽन्यार्थस्मरणम् अति-प्रसंगात्। तस्मात् स्मृतिनिमित्तस्यार्थस्यादौ ग्रहणमभ्युपगन्तव्यमिति।

## * भावस्य सतोऽतीतादेरतीतत्वादि नियामकम् *

[2]तद्रूपेण गृह्यमाणस्य कथमतीतानागतत्वमिति चेत्, न; कालव्यवधानात्तदुपपत्तेः। यथा स एव तथाभूतः स्थाणुर्देशव्यवधानाव्यवधानाभ्यां दूरस्थः सन्निकृष्टश्चेत्युच्यते, तथा स एवार्थः प्रागभावकालेन व्यवधानादनागतः, प्रध्वंसाभावकालेन व्यवधानादतीतः, तदुभयाऽव्यवधानाद्वर्त्तमान इति। देशव्यवहितस्य चन्द्रादेरिव कालव्यवहितस्यापि अर्थक्रियाकारित्वप्रसंग इति चेत्, न; सम्बन्धाभावात्। चन्द्रादेः खलु देशव्यवहितस्यापि पुरुषाक्ष-कुमुदादिभिः सह सम्बन्धोऽस्तीति युक्तमर्थक्रियाकारित्वम्। कालव्यवहितस्य तु स्वरूपेणैवाविद्यमानत्वान्न सम्बन्धः केनचिदस्तीति, अतो नार्थक्रियाकारित्वम्। विद्यमानत्वे वा कालव्यवहितत्वं विरुध्येत—न हि प्रागभूतं विनष्टं च विद्यमानमिति युक्तम्, अविद्यमानत्वेनाजनकत्वे सम्बन्धाभावे च 'तस्येदं ज्ञानम्' इत्ययं नियमः कुत इति चेत्, अदृष्टादिसामग्र्याः। [3]तत्प्रतिभा-सित्वेन [4]नियमितस्यैव ज्ञानस्योत्पत्तेः [5]तद्दर्शनादजनकस्यापि [6]तज्ज्ञानेन सह विषयविषयिभावः सम्बन्ध इति व्यवह्रियते। यच्च न ज्ञाने प्रतिभाति तस्य जनकस्यापि न विषयत्वं यथेन्द्रियादेः।

---

१. यथा पाण्डवानामद्यत्वे दर्शनाभावात् तन्मूलकं स्मरणं नास्ति।

२. तद्रूपेण = भावरूपेण।

३. तत्प्रतिभासित्वेन = अतीताद्यर्थप्रतिभासित्वेन।

४. नियमितस्य = विषयनियन्त्रितस्य।

५. तद्दर्शनात् = अतीताद्यर्थप्रतिभासित्वानुभवात्।

६. तज्ज्ञानेन = अतीतादिविषयकज्ञानेन।

## * अतीताद्यर्थस्याजनकस्यापि ज्ञानकर्मता *

ननु चातीताद्यर्थं जानामीति—अजनकस्य कथं[1] कर्मकारकत्वं ? न, वक्तुर्विवक्षामात्रेण अकारकेष्वपि कारकव्यवहारदर्शनात्। यथा घटं जनयामि घटो जायत इति, यथा चात्र कारकत्वमेवाविद्यमानमारोप्यते न जनिक्रिया, तथातीताद्यर्थस्य ज्ञानक्रिया नावास्तवीति।

नन्वेवं तर्हि खपुष्पबुद्धिरपि नावास्तवीति खपुष्पसिद्धिरपि स्यात्। नैतदेवं, यदि हि खपुष्पं नास्तीत्येषा बुद्धिः, खपुष्पबुद्धिः सा तत्प्रतिषेधिका, कथं तद्विधायिका स्यात् ? अथ खपुष्पमस्तीति बुद्धिः, सापि बाध्यमानत्वेन भ्रान्तत्वान्न तत्साधिका। अथ खपुष्पशब्दादेवोत्पन्ना साऽपि तत्सत्त्वाध्यवसायिनी वा, संदिग्धा वा, तत्प्रतिषेधिका वेति, नान्यथार्थबुद्धिरुपलभ्यते। अतीताद्यर्थबुद्धिरप्येवमिति चेत्, न; तस्यास्तदर्थाध्यवसायित्वेऽपि [2]अबाध्यमानाभ्रान्तत्वात्। [3]न ह्यतीतोऽर्थो नासीदनागतश्च भविष्यतीति। यदि पुनरिदानीमप्यस्ति [4]सोऽर्थ इत्येवं प्रतीतिः स्यात्, तदा तस्या इष्टमेव भ्रान्तत्वं, तद्रूपव्यभिचारात्।

## * अतीताद्यर्थस्य भावत्वानभ्युपगमेऽनुमानस्य त्रिकालविषयत्वविरोधः *

किंचातीतार्थज्ञानस्याप्यसम्यक्त्वे त्रिकालविषयमनुमानं विरुध्येत। स्यादेतत्—[5]कारणशक्त्यनुमानुमेवानागतानुमानम्, नद्या उपरि वृष्टिमद्देशसम्बन्धित्वानुमानमतीतानुमानमित्यतो न विरोध इति, तर्हि कारणस्य कार्योत्पादन सामर्थ्यं नद्या उपरि वृष्टिमद्देशसम्बन्धित्वं च यदीदानीं विद्यमानमेवानुमीयते,

---

१. प्रमेयं कर्मकारकम्, तच्च क्रियाजनकं भवति। अजनकस्यातीताद्यर्थस्य कथंकारं कर्मकारकत्वम् ? इति पर्यनुयोगः। "विवक्षातः कारकाणि भवन्ति" ( जैने० महा० १।४।४१ ) इति नीत्या वक्तुर्विवक्षापेक्षं कारकत्वं न तु क्रियाजनकत्वाधीनमितिपर्यनुयोगभङ्गः।

२. अबाध्यमानत्वेनाभ्रान्तत्वादित्यर्थः।

३. अतीतोऽर्थो नासीद्—इति न, किन्तु आसीदेव। अनागतोऽर्थो न भविष्यतीति न, किन्तु भविष्यत्येवेत्यर्थः।

४. सः = अतीतोऽनागतश्चार्थः।

५. जलकारणमेघादिगतशक्तिविशेषानुमानमित्यर्थः।

तदा वर्तमानविषयमेवानुमानं स्यात्, कथमतीताद्यर्थानुमानम्? अथाविद्यमानमनुमीयते, तदा कथं नाऽजनकस्य प्रमेयत्वम्। कारणशक्त्यादावनुमिते सामर्थ्यादेवानागताद्यर्थप्रतीतिरिति चेत्, सामर्थ्यादपि प्रतीत्यभ्युपगमे कथं नाजनकस्य प्रमेयत्वम्? मिथ्यैव सा प्रतीतिरिति चेत्, सुसमर्थितं त्रिकालविषयमनुमानम्। देशादिविशेषाणां जनकत्वात्तद्विशेषणत्वेऽनागतार्थानां विषयभाव इति चेत्, नैतदस्ति; देशादिविशेषाणामेव हि जनकत्वेन विषयभावोऽस्तु न [1]तद्विशेषाणां, ततोऽन्यत्वात्, अन्यस्य जनकत्वेनान्यस्य विषयभावे ह्यतिप्रसंगः स्यात्।

अथ नातीतानागतार्थानां विषयभाव इष्यते, तज्ज्ञानस्य निर्विषयत्वेनाप्रमाणफलत्वप्रसंगाद्; अपि तु तदुपसर्जना देशादिविशेषा एव योगिप्रत्यक्षज्ञानस्य अस्मदाद्यनुमानज्ञानस्य वाऽलम्बनीभवन्तीति, नैतदप्युपपन्नम्; यदि ह्यतीतार्थज्ञानं निर्विषयत्वेनाप्रमाणफलमिष्टम्, एवं तर्हि [2]तद्विशिष्टदेशादिज्ञानमप्यसद्विशेषणावच्छेदेनोत्पन्नं भ्रान्तमेव प्रसक्तम्। '[3]द्वौ चन्द्रौ', 'सुखी स्तम्भः' इत्यादिज्ञानवदभ्रान्तत्वे चावश्यं विशेषणत्वेनातीताद्यर्थस्य ग्रहणमभ्युपगन्तव्यमगृहीतस्य विशेषणत्वायोगात्, तदभ्युपगमे वाऽजनकस्यापि विषयभाव इति सिद्धम्। न चातीताद्यर्थज्ञानं निर्विषयत्वेन भ्रान्तम्, तद्रूपेण ग्रहणस्याव्यभिचारित्वात्। [4]अन्यथाग्रहणं खलु विद्यमानेऽप्यर्थे व्यभिचार्यभिधीयते स्थाणौ पुरुषज्ञानवत्। यदा त्वसन्तोऽप्यर्थाः 'पाण्डवादयोऽभूवन्निति', 'भविष्यन्ति घटादय' इत्यव्यभिचारेणैव गृह्यन्ते, तदा तज्ज्ञानं बाधकाभावादभ्रान्तमेवास्ति, अयं घट इति ज्ञानवत्। न चाजनकस्य जनकत्वे सर्वेषां सर्वज्ञत्वप्रसंगः, संसारिपुरुषज्ञानानां धर्मादिसामग्रीविशेषनियमितानां नियतार्थविषयत्वेनोत्पादात्। यत्तु ज्ञानं कारणसामग्र्या न नियमितं तदरूपेव नित्यं सर्वार्थविषयं भगवतो महेश्वरस्येति।

---

१. तद्विशेषाणाम् = तद्देशविशेषणानामतीताद्यर्थानाम्।

२. तद्विशिष्टेति = अतीताद्यर्थविशिष्टेत्यर्थः।

३. सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे च विपर्ययः"—इसि स्थित्या "द्वौ चन्द्रौ"—इति ज्ञानं चन्द्रविषयकत्वेनाभ्रान्तं द्वित्वविषयकत्वेन च भ्रान्तमिति मतेनाह—द्वौ चन्द्राविति।

४. अन्यथाग्रहणम् = भ्रमज्ञानम्।

## ❀ स्मृतेरप्यर्थजन्यत्वम् ❀

अपि च स्मृतेरपि कथमनर्थजत्वम्? अर्थाभावेऽपि स्मृत्युत्पत्तेरिति चेत्, कुतः पुनरसावसन्नर्थः स्मृतिं न जनयति? असत्त्वादेवेति चेत्, अतीताद्यर्थज्ञानस्य तर्हि कथमर्थजत्वम्? अपि च यथा स्मृतेः [1]प्रणिधानादिसहितात्संस्कारादुत्पद्यमानायास्तदर्थभावाभावानुविधायित्वं नास्ति, तथा [2]सम्बन्धस्मृतिसहिताच्छब्दादिज्ञानादुत्पद्यमानस्यानुभवस्यापि नार्थानुविधायित्वं पश्यामः, सन्निहितासन्निहितार्थयोस्ततः प्रतिपत्तेरविशेषात्। अर्थाभावे सत्युत्पद्यमानं शब्दादिज्ञानमेव भ्रान्तं स्यात् न स्मृतिरिति चेत्, न; [3]अन्यथार्थावभासित्वेनैव भ्रान्तत्वात्। तथा च स्मृतिरपि अन्यथार्थावभासित्वेनोदयमासादयन्ती मिथ्यैव। यथा शत्रुसदृशदर्शने भवति मिथ्या स्मृतिः—'किं न स्मराम्यहं योऽनेन ममापकारः कृत' इति। एवं पाठव्याख्यानादिष्वप्यन्यथा स्मृतिर्द्रष्टव्या। तस्मात्तुल्ययोगक्षेमत्वादायातं स्मृतेरप्यर्थजत्वम्, शब्दादिज्ञानस्यापि चानर्थजत्वमिति तत्रार्थजत्वविशेषणं स्मृतिव्युदासार्थं युक्तमिति। तस्मादिन्द्रियार्थसन्निकर्षोत्पन्नत्वेनैकार्थसम्बद्धेनापरोक्षानुभवत्वमेव प्रत्यक्षफलस्य लक्षणं सूत्रकर्तुरभिप्रेतम्।

## ❀ स्वमतेन प्रत्यक्षलक्षणम् ❀

लक्षणप्रतिपत्तेरेवमपि दृष्टत्वात्—यथा योऽयं शुक्लो गच्छति स गौरिति, यस्योपरि अयं छत्री पुरुषो दृश्यते सोऽश्व इत्येवमाद्यभिधानेऽपि गमनाद्युपलक्षितं तदनन्यसाधारणं गोत्वाद्येव लक्षणत्वेन प्रतिपद्यन्ते व्यवहर्त्तारस्तथात्रापि चक्षुरादीन्द्रियघटाद्यर्थसम्बन्धभावाभावानुविधानेन यदयं घट इत्यादिज्ञानमुत्पद्यते तत्प्रत्यक्षमित्यभिहितेऽपि तदन्यसाधारणं सन्निकर्षजत्वेनोपलक्षितमपरोक्षानुभवत्वमेव लक्षणं विचारकैः प्रतिपत्तव्यम्, न तु सन्निकर्षजत्वं, तस्यानन्यसाधारणत्वासम्भवाद्[4] इत्युक्तम्।

---

१. सुस्मूर्षया मनसो धारणं प्रणिधानम्। प्रणिधानादीनां स्मृतिनिमित्तानां निदर्शनम्—"प्रणिधान...निमित्तेभ्यः" (न्या० सू० ३।२।४१) इति सूत्रतोऽवगन्तव्यम्।

२. वाच्यवाचकभावादिसम्बन्ध इह सम्बन्धपदेन ग्राह्यः।

३. अन्यथार्थावभासित्वेन = अन्यथाख्यातित्वेनेत्यर्थः।

४. अनन्यसाधारणत्वासम्भवात् = अन्यसाधारणत्वात् स्मृतिज्ञानगतत्वेनातिव्याप्तत्वादित्यर्थः। योगिज्ञानेऽव्याप्तिरप्युपलक्षणीया, तस्येन्द्रियार्थसन्निकर्षजन्यत्वाभावात्।

## ❀ सौत्रलक्षणस्य प्रयोजनम् ❀

किमर्थं तर्हि तदेवापरोक्षानुभवत्वं न साक्षादुक्तमिति ? प्रत्यक्षभेदज्ञापनार्थं यदस्मदादिप्रत्यक्षं तदिन्द्रियार्थसन्निकर्षजमेवेति वक्ष्यामः। सन्निकर्षादिविप्रतिपत्त्युत्थानज्ञापनार्थं वा, विप्रतिपत्तौ हि परीक्षोपपत्तेः, तन्निश्चयो भवति ततश्च क्षणभंगवादिनो विज्ञानवादिनश्चात्मादितत्त्वज्ञानविप्लावने निरवकाशा भवेयुरिति। तथा च ते क्षणभङ्गादिसिद्ध्यर्थं संयोगादिसम्बन्धं निराकृत्यैकसामग्र्यधीनत्वं भिन्नानामेककार्योत्पादने प्रतिबन्धमाहुः, ग्राह्यग्राहकभावं च विज्ञानवादसिद्ध्यर्थमिति। तत्र सर्वसन्निकर्षाभावे दृष्टान्तसिद्ध्यर्थं तावदाहुः—

## ❀ इन्द्रियाणामप्राप्यकारित्वमिति सौगतं मतम् ❀

न प्राप्यकारिणी चक्षुःश्रोत्रे सान्तरग्रहणात्—प्राप्यकारित्वे हि चक्षुरर्थयोः श्रोत्रशब्दयोश्चान्तरालग्रहणं न स्यात् परशुवृक्षवत्। प्राप्तिश्च कथम् ? किं चक्षुर्देशमागत्य सम्बध्यतेऽर्थः ? उतार्थदेशं गत्वा चक्षुः सम्बध्यते इति ? प्रथमे पक्षे प्रतीतिविरोधः, अग्निदर्शने चक्षुरादिदाहप्रसंगश्च। द्वितीयेऽपि पक्षे प्रतीतिविरोधः—न हि शरवदर्थसंगतं चक्षुः केनचिदुपलभ्यते। सूक्ष्मत्वादनुपलब्धिरिति चेत्, नैतदस्ति; गोलकमेव हि चक्षुरिति सर्वलोकप्रतीतं, तदुपघातेऽर्थदर्शनाभावाच्च। सूक्ष्मत्वाभ्युपगमेऽपि किं तदाकाशवदमूर्तत्वेन सूक्ष्मम् ? उताल्पप्रमाणत्वेनेति ? प्रथमे पक्षे सर्वार्थसम्बद्धत्वाद्युपग्राहकत्वं स्यात्, अमूर्तद्रव्यस्य व्यापकत्वाभ्युपगमात्। अथाल्पपरिमाणत्वेन सूक्ष्मं, तदयुक्तम्; पृथुतरग्रहणात्—यावतैव प्रदेशेन सम्बन्धं दृष्टं नखनिकृन्तनादि, तावत्येव प्रदेशे क्रियां कुर्वदुपलब्धं ततश्चाल्पपरिमाणस्य चक्षुषः पर्वतादिग्राहकत्वं नोपपद्यते इति। इतश्च न प्राप्यकारि चक्षुः, शाखाचन्द्रमसोस्तुल्यकालग्रहणात्, गच्छतो हि चक्षुषः क्रमसम्बन्धार्हस्य क्रमेणैव ग्राहकत्वं युक्तं, न चैतदस्ति। नाप्याशुभावाद् युगपदभिमानः, चन्द्रमसोऽतिविप्रकर्षादवश्यं चिरकालव्यवधानेन सम्बन्ध इति। शब्दस्य तर्हि सन्तानेनागतस्य श्रोत्रसम्बन्धादुपलब्धिरस्तु, न; दिग्देशव्यपदेशात्। न हि कर्णदेशे शब्दोपलब्धौ पूर्वापरादिदिग्व्यपदेशो ग्रामारण्यादिग्देशव्यपदेशो वा युज्यत इति। ततसिद्धं श्रोत्रस्याप्राप्यकारित्वं, तस्मादनेन दृष्टान्तेन सर्वेन्द्रियाणां प्राप्यकारित्वं निषेद्धव्यमिति।

## ❀ तन्निरसनम् ❀

अत्रोच्यते—यत्तावत्सान्तरग्रहणादिति, तदसिद्धत्वादसाधनं, चक्षुरादेर-

तीन्द्रियत्वात्। कथं ततोऽर्थस्य विश्लेषः प्रत्यक्षग्राह्यः स्यात् ? [1]अनुमानेन त्वर्थसंश्लिष्टस्यैव चक्षुरादेः प्रदीपादिदृष्टान्तादर्थप्रकाशकत्वं गम्यते। यच्चोक्तं प्राप्तिः कथमित्यादि, तत्रोच्यते—चक्षुरेव [2]रश्मिद्वारेणार्थदेशं गत्वा प्रदीपवत्सम्बध्यते, तद्रश्मयश्चानुद्भूतरूपत्वात् [3] न दृश्यन्ते। अनुद्भूतरूपाणामर्थप्रकाशकत्वमयुक्तमिति चेत्, न; [4]प्रदीपादिप्रकाशसहितानां तदुपपत्तेः। अत एव येषामदृष्टसामर्थ्यादुद्भूतरूपा नायनरश्मय उत्पन्नास्तेषां बाह्यप्रकाशनिरपेक्षया एवार्थं प्रकाशयन्ति यथा नक्तंचराणाम्, तथा च केषांचिन्नक्तंचराणां[5] नायनरश्मयः प्रत्यक्षेणैव दृश्यन्त इति।

## ❀ नयनरश्मीनामुद्भूतरूपवत्त्वम् ❀

अथवाऽलोकावयवसहितेभ्यः [6]तदवयवेभ्य उद्भूतरूपा एव नायनरश्मय उत्पद्यन्ते। दृष्टौ हि तेजसामाशुतरविनाशोत्पादौ रूपस्पर्शौ चोद्भूतत्वानुद्भूतत्वधर्मविकल्पोपेताविति। उद्भूतरूपत्वेनोत्पन्नानामपि रश्मीनामन्यस्मिन्समावेशाद्विवेकेनाग्रहणं, यथानेकप्रदीपरश्मीनामेकार्थसम्बद्धानामिति।

## ❀ पृथुतरग्रहणोपपादनम् ❀

पृथुतरग्रहणादित्येतदनैकान्तिकं, न हि यावत्परिमाणः [7]प्रदीपस्तावत्परिमाणमेवार्थं प्रकाशयति रश्मिद्वारेण पृथुतरस्यापि व्यापकत्वादिति।

## ❀ शाखाचन्द्रमसोरेककालग्रहणत्वनिरासः ❀

यत्पुनः शाखाचन्द्रमसोस्तुल्यकालग्रहणादिति, तदप्यसिद्धत्वादसाधनं,

---

१. अनुमानाकारस्तु—चक्षुरादि सन्निकृष्टार्थप्रकाशकम्, प्रकाशकत्वात् प्रदीपवद्।
२. तथा च सूत्रम्—'रश्म्यर्थसन्निकर्षविशेषाद् ग्रहणाम्' ( न्या० सू० ३।१।३५ )
३. भाष्यकाराः प्राहुः—'अनुद्भूतरूपश्चायं नायनरश्मिः, तस्मात् प्रत्यक्षतो नोपलभ्यते' ( न्या० भा० ३।१।३९ )
४. अत्रार्थे न्यायसूत्रम्—'बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ( न्या०सू० ३।१।४४ )।
५. अत्र सूत्रम्—'नक्तश्चरनयनरश्मिदर्शनाच्च' ( न्या० सू० ३।१।४६ )।
६. तदवयवेभ्यः = नयनावयवेभ्यः।
७. टीकायामपि—'बहिर्देशे पिण्डितमपि तेजः प्रसर्पत्प्रासादोदरं 'व्याप्नोति' ( ता० टी० पृ० ११९ )।

आशुभावित्वेन [1]युगपदभिमानात्। चन्द्रमसोऽतिविप्रकृष्टत्वादिति चेत्, न; लाघवातिशयेन रश्मीनामतिशीघ्रगतित्वादर्करश्मिवत्—न हि भानुरश्मयोऽर्थैः सह सम्बध्यमानाः क्रमेणोपलभ्यन्त इति।

## ❀ दिग्देशव्यपदेशोपपादनम् ❀

यच्चोक्तं दिग्देशव्यपदेशादिति, तन्न; तस्यान्यथापि सम्भवात्। तथा हि—यदा पूर्वदिग्विशिष्ट कर्णशष्कुल्यवयवावच्छिन्ने नभोदेशे शब्दमुपलभते तदा पूर्वस्यां दिशि शब्द उत्पन्न इति प्रतिपद्यते। एवं दक्षिणादिदिग्विशेषेष्वपि द्रष्टव्यम्। कर्णशष्कुल्यवयवैरवच्छिन्नो हि नभोदेशः श्रोत्रम्। ते चावयवाः सर्वदिक्षु विद्यन्त इति युक्ता दिग्विशेषावच्छेदेन शब्दोपलब्धिरिति। इयति दूरे शब्द उत्पन्न इति प्रतिपत्तिश्चानुमानिकी। कथम्? यावतो दूरात् प्रत्यक्षागमोपलब्धकारणव्यापारभाविनः शब्दस्य सन्तानेनागतस्य यान् विशेषानुपलब्धवांस्तावद् दृष्टकारणकस्यापि शब्दस्य विशेषानुपलभमानस्तावति दूरे शब्दोत्पादं प्रतिपद्यते। यथा कैश्चिदेव विशेषैः शंखादिकं वक्तृविशेषं च प्रतिपद्यते इति। यस्तु तथाभूतान् विशेषान्न लक्षयति तस्य संशय इति दृश्यते—कस्य कुतो वायं शब्द इति? तस्मिंश्च दिग्देशविशेषेऽनुमिते ग्रामादिकं सम्भाव्य तत्र शब्दोत्पादं व्यपदिशति, न तु देशादीनां श्रोत्रग्राह्यत्वमिति। तस्माद् बाह्येन्द्रियत्वाद्रसनादिवच्चक्षुःश्रोत्रयोरपि प्राप्यकारित्वं सिद्धम्।

## ❀ अप्राप्यकारित्वे सर्वार्थोपलम्भापत्तिः ❀

प्राप्त्यभावे हि सर्वार्थोपलम्भः स्यात्, न हि प्राप्त्यभावेऽन्या काचिद्योग्यतास्ति, येनोच्यते योग्यदेशावस्थितस्यैव ग्रहणमिति।

## ❀ [2]अयस्कान्तादेरपि प्राप्यकारित्वम् ❀

अयस्कान्तादिवदिति चेत्, न; दृष्टान्तमात्रेण सन्देहानिवृत्तेः। किमयस्कान्तादिवदप्राप्यकारित्वमिन्द्रियाणाम्? उत प्राप्यकारित्वं वाश्यादिवदिति?

---

१. टीकायाम्—युगपद् ग्रहणमसिद्धम्, तदभिमानस्त्वन्यथासिद्धः (ता० टी० पृ० १२०)।

२. टीकाकारोऽप्याह—'अयस्कान्तमणेरपि चक्षुष इव वृत्तिभेद एषितव्यः' (ता० टी० पृ० १२२)।

नात्र विशेषहेतुरुच्यते। अपि चायस्कान्तसंश्लिष्टं वायुद्रव्यं विशिष्टमुत्पन्नं शरीरे प्राणवत्, [1]तच्चायः प्राप्येवाकर्षति प्राण इव तोयतूलादिकं, तत्स्पर्शानुपलम्भेऽपि तत्कार्येणैव तथाभूतस्य तस्योत्पन्नस्य सद्भावोऽवगम्यते इति। मन्त्रोऽपि सम्बद्धमेव देवतात्मानमाराधयति। स च देवताविशेषः प्राप्यैव जपितुरभिप्रेतमर्थं करोतीति न कस्यचिदप्राप्यकारित्वम्।

## ❀ भूषणकारमते प्राप्यकारित्वपदार्थः ❀

शब्दान्तःकरणादेरतीताद्यर्थेनाप्राप्तस्यापि [2]तज्ज्ञानजनकत्वात्कथं प्राप्यकारित्वमिति चेत्, न; अपरिज्ञानात्। सहकारिणं प्राप्य कारणस्य कार्यजनकत्वं प्राप्यकारित्वमुच्यते। तच्च शब्दान्तःकरणादेरप्यस्ति। अतीताद्यर्थस्य तु कारणत्वमेव नास्तीत्युक्तं, तेन तदप्रापकत्वेऽपि [3]नाप्राप्यकारित्वम्। न चैवं चाक्षुषाद्यर्थस्याप्यजनकत्वं, तस्यालोकादिवदन्वयव्यतिरेकाभ्यां कारणत्वसिद्धेः। प्राप्तस्याप्यञ्जनादेरनुपलब्धिरित्येतदपि न युक्तम्, न हि यदिन्द्रियेण प्राप्तं तदुपलभ्यत एवेति नियम्यते, किं तर्हि? यद् बाह्येन्द्रियेणोपलभ्यते तत्प्राप्तमेवेति नियमः। किं कारणं? बाह्येन्द्रियाणां भौतिकत्वेन प्रदीपवत्प्राप्तार्थप्रकाशकत्वात्। इन्द्रियत्वान्मनसोऽपि प्रसंग इति चेत्, [4]क्वचित्तथाभावात्। सिद्धसाधनं, नियमपक्षे त्वतीताद्यर्थैरुक्तो विरोधः। किं चान्वयव्यतिरेकाभ्यां बाह्येन्द्रियेण विद्यमानं जनकमेवोपलभ्यते जनकानां च घटादिहेतूनामिव परस्परसम्बद्धानामेवैककार्यहेतुत्वमिति सिद्धः सन्निकर्षः, तज्जनितत्वं ज्ञानस्येति।

## ❀ अव्यपदेश्यपदस्य प्रयोजनम् ❀

अथाव्यपदेश्यपदं किमर्थं? [5]उभयजज्ञानव्यवच्छेदार्थमित्येके[6], तदसम्भवादयुक्तमित्यपरे[7]। तथाहि—श्रोत्रमधिष्ठाय मनः शब्दोपलब्धिं कृत्वा क्रियाविभागद्वारेण गत्वा यावच्चक्षुरधितिष्ठति, तावच्छब्दो निवर्त्तत एवेति न

---

१. तत् = वायुद्रव्यम्।
२. अतीताद्यर्थस्य तदा परामर्शः।
३. नाप्राप्यकारित्वं शब्दादेरिति शेषः।
४. क्वचित् = आत्मादिग्रहणे।
५. उभयजज्ञानम् = शब्देन्द्रियोभयजन्यं ज्ञानम्।
६. एके = त्रिलोचनप्रमुखा इति प्राचीनटिप्पणम्।
७. अपरे = रुचिकारादय इति पुरातनटिप्पणम्।

व्याप्रियेत। न च मनोऽनधिष्ठितानां बाह्येन्द्रियाणां व्यापारः सम्भवति। नापि युगपदधिष्ठातृत्वं मनसोऽणुत्वात्। वयं पुनरभ्युपगम्यापि ब्रूमः—किं तदुभयजं ज्ञानं? साक्षात्कारि, न वा? यदि साक्षात्कारि, तदा [1]तदपोह्यं न युक्तं, साक्षात्कार्यनुभवस्य प्रत्यक्षफलत्वेन सर्वत्र प्रसिद्धत्वात्। अथ न साक्षात्कारि, तथापि [2]तद्विषयो [3]नेन्द्रियार्थ इति कथं तदिन्द्रियार्थसन्निकर्षजम्? न हीन्द्रियसम्बद्धत्वादेवेन्द्रियार्थः, किन्तु य एव साक्षात्कारिज्ञानविषयः। अन्यथानुमेयस्यापि [4]कस्यचिदिन्द्रियसम्बद्धत्वादिन्द्रियार्थत्वप्रसंग इति, [5]तज्ज्ञाननिवृत्त्यर्थमपि विशेषणान्तरं कर्त्तव्यं स्यात्। कथं वा शब्दभावाभावानुविधायिनो ज्ञानस्येन्द्रियार्थसन्निकर्षजत्वं गम्यते? इदन्तयोत्पत्तेरिति चेत्, तन्न; स्पर्शानुमेयेऽग्नावपीदन्तया ज्ञानोदयदर्शनात्। अपि च तदुभयजं ज्ञानं उभयफलमस्तु, प्रमाणान्तरफलं वा, कथं शाब्दमेवेत्युच्यते? सूत्रकृतैव खल्वेवमुपदिष्टत्वादिति चेत्, न खलु वै सूत्रकारनियोगभयात्पदार्थाः स्वधर्मं हातुमर्हन्ति। यदि चाविचारितमेव सूत्रकारवचः प्रमाणं, परीक्षासूत्राणां तर्हि वैयर्थ्यं स्यात्। तस्मादुभयजस्य शाब्दत्वे न्यायो वाच्यः। तद्व्यपदेशादिति चेत्, न; अन्यथा तद्व्यपदेशोपपत्तेः। अस्य शब्दस्यायमर्थोऽभिधेय इत्ययं सम्बन्धो देवदत्तेनाख्यात इति मन्यमानो व्यपदिशति—देवदत्तेनायं समाख्यात इति। अन्यथा हि तत्सम्बन्धप्रतीतिः कुतः स्यात्? दृष्टश्चायं सम्बन्धप्रतिपत्तावेव व्यपदेशो यथा कश्चिदप्रसिद्धसमयो[6] नैकपुरुषमध्ये चैत्रं पश्यन्नप्ययं चैत्र इत्यप्रतिपद्यमानः पृच्छति—कोऽत्र चैत्र इति? ततः कश्चित्तस्यांगुल्यादिनिर्देशमात्रं करोति, ततोऽसौ अंगुल्यादिदर्शनादेव समयं प्रतिपद्य व्यपदिशत्यनेनायं चैत्रो ममाख्यात इति। न च [7]सम्बन्धप्रतिपत्तिरिन्द्रियार्थसन्निकर्षजा, तस्मान्न तद्व्यवच्छेदार्थम् अव्यपदेश्यपदम्।

अपरस्त्वाह—गौरित्यादिज्ञाने संज्ञाविशिष्टोऽर्थः प्रतिभाति विशेषण-

---

१. तत् = उभयजं ज्ञानं प्रत्यक्षं भवल्लक्ष्यमेवातः तद्व्यावृत्तिरयुक्ता, तद्व्यावर्तकमव्यपदेश्यपदं व्यर्थं चेत्यर्थः।

२. उभयजन्यज्ञानस्य विषयः।

३. प्रत्यक्षलक्षणसूत्रघटकेनेन्द्रियार्थपदेनावर्जयितुमनर्हः।

४. कस्यचित् = वारिस्थोषर्बुधादेः।

५. तज्ज्ञाननिवृत्त्यर्थम् = उक्तानुमितिज्ञानस्य व्यावृत्त्यर्थम्।

६. अप्रसिद्धः समयः = संकेतो यस्य पुरुषस्य, स इत्यर्थः।

७. सम्बन्धपतिपत्तिः = संज्ञासंज्ञिसम्बन्धज्ञानम्।

विशेष्ययोश्चैकज्ञानावलम्बनत्वं, तेन तस्येन्द्रियार्थसन्निकर्षजत्वं[1] न युक्तम्। तथाप्यभ्युपगतं कैश्चिद्, अतस्तन्निराकरणार्थमाह—अव्यपदेश्यमिति।

यद्येवमानुमानिकस्यापि कस्यचिज्ज्ञानस्य सन्निकर्षजत्वं कैश्चिदभ्युपगतं तन्निराकरणार्थं किं विशेषणम्? सन्निकर्षजत्वमेवेति चेत्, गौरित्यादिज्ञान-निराकरणार्थमपि तदेवास्तु किमव्यपदेश्यपदेनेति।

[2]येऽपि शब्दाद्वैतनिराकरणार्थं अव्यपदेश्यपदं वर्णयन्ति, तैरपि ब्रह्मा-द्वैतादिनिराकरणार्थं विशेषणान्तरं कर्तव्यं, तुल्ययोगक्षेमत्वादिति।

## ❀ भूषणकारमतेऽव्यपदेश्यपदप्रयोजनम् ❀

किमिदानीमनर्थकमेवाव्यपदेश्यपदम्? नानर्थकं, निर्णयवद्विशिष्टप्रत्यक्ष-लक्षणार्थत्वात्। यत्तन्निर्विकल्पकं प्रत्यक्षं तदनेन लक्ष्यते। तद्धि सर्वयो-गिभिः प्रार्थ्यते, [3]विकल्पवतश्चित्तस्थितेरसम्भवात्। सर्वमूलं च तत्, तदभावेऽन्यप्रमाणप्रवृत्तेरसम्भवात्। न हि प्रत्यक्षाभावेऽनुमानादेः प्रवृत्तिः सम्भवति। न च निर्विकल्पकाप्रवृत्तौ सविकल्पस्य प्रवृत्तिः, तस्य संज्ञा-स्मृतिपूर्वकत्वात्। स्मृतिस्तु तदर्थदर्शनादुद्भूता गौरयमित्यादिज्ञानहेतुर्न स्मृतिमात्रं, तस्य सामर्थ्यानवधारणात्। विशेषणविशेष्यतत्सम्बन्धानां स्वरूप-ग्रहणे हि पश्चाद् दण्डीत्यादिज्ञानमपि भवति, तस्मान्निर्विकल्पपूर्वकमेव सविकल्पकम्। एवं च यत्प्रत्यक्षं तत्सर्वं सविकल्पकमेव प्रमाणत्वात्, अनुमानवदित्येतद्बाधितविषयत्वादयुक्तमिति। न निर्विकल्पकं प्रमाणं व्यवहारानिमित्तत्वात्, अनध्यवसायवदिति चेत्, न; असिद्धत्वात्। तथा हि—सर्पकण्टकादेरपरिमितस्यानिष्टस्याभावं निर्विकल्पकप्रत्यक्षेणैव पश्यन्नि-राशंकः प्रवर्त्तते। तथाभावात्मकं वाऽपरिमितमर्थं सकृद् दृष्ट्वा क्रमेण स्मृतिनिमित्तं प्राप्य स्मृत्वा स्मृत्वान्यस्यापि कथयतीदं दृष्टमिदं न दृष्टमिति। न च तदपि दर्शनं सविकल्पकमेव, तस्य नीलमिदमित्याकारेणानुत्पत्तेरिति। तदेवं प्रमाणत्वान्निर्विकल्पकस्य युक्तं लक्षणं, तदाह—अव्यपदेश्यमिति। देवदत्त इति ज्ञानं दण्डीति ज्ञानमित्येवमादि व्यपदेशार्हं न भवतीत्यर्थः।

---

१. विशिष्टार्थप्रत्यक्षे विशेष्यविशेषणाभ्यामुभाभ्यामेवेन्द्रियसन्निकर्षोऽपेक्ष्यते। विशेष्येण सन्निकर्षसत्त्वेऽपि चक्षुषः संज्ञारूपविशेषणेन सन्निकर्षाभावान्न सञ्ज्ञाज्ञानमिन्द्रियार्थसन्निकर्षजमित्यर्थः।

२. येऽपि = उद्योतकरप्रमुखा इति प्राचीनटिप्पणम्।

३. विकल्पवतः = सविकल्पकज्ञानादित्यर्थः।

सविकल्पमपि प्रत्यक्षं "[1]पृथिव्यादिगुणास्तदर्थाः" इत्यनेन "[2]व्यक्त्याकृतिजातयस्तु पदार्थाः" इत्यनेन च लेशतः[3] सूचितम्। [4]प्रत्यक्षविषयस्य विशेष्यत्ववाच्यत्वप्रतिपादनादधिगतविषयस्यापि प्रमाणत्वाभ्युपगमाच्चेति। अथवा व्यवसायात्मकपदेनैव सविकल्पकमप्यवरुद्धमिति[5] सम्यगिति कर्त्तव्ये यदव्यभिचारि व्यवसायात्मकमित्यक्षरगौरवं करोति तेनासम्यग्ज्ञानस्य व्यभिचार्यव्यवसायभेदेन द्वैविध्यमेव, न [6]चातुर्विध्यमिति ज्ञापयति, एतच्च प्रागेव प्रपंचितम्। [7]अव्यभिचारि व्यवसायात्मकं यत्तज्ज्ञानमेव प्रसिद्धमतो न ज्ञानं पृथग्वाच्यम्, सत्यम्, तथापि [8]केचिदज्ञाननिवृत्तेः प्रमाणफलत्वमाहुः। तदाशंकापनोदनार्थं विशेष्यप्रतिपत्त्यर्थं च पृथग्ज्ञानम् [9]अपदिष्टमिति न दोषः।

## * प्रत्यक्षस्य द्वैविध्यकथनम् *

तदेवं प्रत्यक्षस्य लक्षणमभिधाय सूत्राविरोधेन भेदज्ञापनार्थमिदमुच्यते—

---

१. न्या० सू० १।१।१४ तदर्थाः = इन्द्रियार्थाः।

२. न्या० सू० २।२।६५।

३. लेशतः सूचितमिति। अयमाशयः—जातिगुणक्रियानामद्रव्यस्वरूपपञ्चकल्पनाविशिष्टं ज्ञानं सविकल्पमुच्यते। तत्र जातिगुणस्वरूपकल्पनाद्वयविशिष्टं ज्ञानमेवोक्तसूत्रयोः सूचितमिति।

४. प्रत्यक्षविषयस्य पृथिव्यादेर्गुणनिष्ठप्रकारतानिरूपितविशेष्यत्वं "पृथिव्यादिगुणास्तदर्था" (न्या० सू० १।१।१४) इत्यनेन सूत्रेण प्रतिपादितम्, एवं प्रत्यक्षविषयस्य व्यक्त्यादेर्वाच्यत्वं "व्यक्त्याकृतिजातयः" (न्या० सू० २।२।६५) इत्यनेन सूत्रेण प्रतिपादितमिति भावः।

५. अवरुद्धम् = सङ्गृहीतम्।

६. अन्वाशिषन् हि वैशेषिकाश्चतुर्विधामविद्याम्—"तत्राविद्या चतुर्विधा—संशयविपर्ययानध्यवसायस्वप्नलक्षणा" (प्र० भा० पृ० ४११)। सैवात्र व्यक्तता वेदितव्या।

७. प्रत्यक्षलक्षणसूत्रे ज्ञानपदं सार्थकयितुमाशङ्कते—अव्यभिचारीति।

८. केचित् = जैनमुनयः। तथा चाहुः—"प्रमाणस्य फलं साक्षादज्ञाननिवर्तनम्" (न्याया० २८)। वेदान्तिनोऽपि ब्रुवते—"ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्ष्यते"।

९. अपदिष्टम् = उपात्तम्, सूत्रकारेणेति शेषः।

तद् द्विविधम्—योगिप्रत्यक्षम्, अयोगिप्रत्यक्षं चेति।

तद्द्विविधं योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति। चशब्दात्सविकल्पनिर्विकल्पकभेदेनापि द्विविधमिति सिद्धम्। द्विविधग्रहणं चतुर्विधनिराकरणार्थं मानसरागादिप्रत्यक्षयोरसम्भवात्।

## ❀ सौगतसम्मतमानसात्मसंवेदनयोर्निराकरणम् ❀

[1]परमते हि "[2]स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन जनितं ज्ञानं मानसं" प्रत्यक्षम्। सुखादीनां [3]स्वसंवेदनम्। सुखादिग्रहणं

१. परमते = बौद्धमते। धर्मकीर्तिना हि चतुर्विधं प्रत्यक्षं प्रतिपादितम्—इन्द्रियज्ञानम्, मनोविज्ञानम्, आत्मसंवेदनम्, योगिज्ञानं च (न्या० वि० पृ० ५६–६७)।

२. "स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं तन्मनोविज्ञानम्" (न्या० वि० ११९) इत्यानुपूर्वीकं सूत्रम्। तदर्थस्तु स्वम् = इन्द्रियज्ञानम्, तस्य विषयः = घटादिक्षणः, तस्यानन्तरः = घटादेर्द्वितीयक्षणः, स चासौ विषयः—स्वविषयानन्तरविषयः, स सहकारी यस्य इन्द्रियज्ञानस्य, तत् तेन। इन्द्रियज्ञानं स्वविषयसन्तानद्वितीयक्षणस्य सहकारितामासाद्य मनोविज्ञानं जनयतीति भावः। हेतुप्रत्ययः, समनन्तरप्रत्ययः, आलम्बनप्रत्ययः, अधिपतिप्रत्ययश्चेति "चत्वारः प्रत्यया उक्ताः" (अभि० को० २।६१)। तत्रेन्द्रियज्ञानं मनोविज्ञानस्य समनन्तरप्रत्ययः। कुतः? ज्ञानत्वेन समत्वाद्, अव्यवहितत्वेनानन्तरत्वात्, जनकत्वेन प्रत्ययत्वाच्च। समश्चासावनन्तरश्चेति समनन्तरः, शकन्ध्वादिगणपाठान्न सवर्णदीर्घः।

३. स्वसंवेदनम् = आत्मसंवेदनम्। तल्लक्षणन्तु—"सर्वचित्तचैत्तानामात्मसंवेदनम्" (न्या० वि० १।१०) इति। चित्तानि च चैत्ताश्च = चित्तचैत्ताः सर्वे च ते चित्तचैत्ताश्चेति विग्रहः। चित्तं मनोविज्ञानमिति पर्यायः—

चित्तं विकल्पो विज्ञप्तिर्मनोविज्ञानमेव च।

आलयश्चिभवश्चेष्टा एवं चित्तस्य पर्यायाः॥ (लं० सू० १०, ४५९)

चित्तं विषयमात्रावग्राहि ज्ञानम्। चित्तस्यावस्थाविशेषाः चैत्ता विषयविशेषाकाराः। सुखादयो ज्ञानस्यावस्थाविशेषाः स्वयंप्रकाशाः। "सुखादय एव स्फुटानुभवत्वात् स्वसंविदिताः" (धर्मो० पृ० ६४) इति धर्मोत्तरः। तत्र

**तत्रायोगिप्रत्यक्षम्–प्रकाशदेशकालधर्माद्यनुग्रहाद् इन्द्रियार्थसम्बन्धविशेषेण स्थूलार्थग्राहकम् ।**

---

स्पष्टसंवेदनप्रदर्शनार्थं, सर्वज्ञानानामपि स्वसंवेदनमित्यनेन गृहीतं तच्चैतदुभयमपि प्रत्यक्षं निष्प्रमाणकत्वान्न युक्तम्। क्षणभङ्गनिषेधाच्च मानसं निषिद्धम्। [1]स्वसंवेदननिषेधात्सुखादेरबोधात्मकत्वाच्च रागादिसंवेदनमपि निषिद्धम्। मनसश्चेन्द्रियत्वान्नेन्द्रियप्रत्यक्षादन्यप्रत्यक्षमस्ति, तस्मादेतावदेव युक्तं योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति ।

## ❀ अयोगिप्रत्यक्षनिरूपणम् ❀

यद्यपि योगिप्रत्यक्षस्यातिप्रकृष्टत्वादादावुद्देशस्तथाप्ययोगिप्रत्यक्षसिद्धावेव तदस्मदादिनावगम्यते इति दृष्टान्तसिध्यर्थं तत्र = तस्मिन् प्रत्यक्षसमुदाये तावदादौ निर्द्धार्यायोगिप्रत्यक्षं व्याख्यायते "[2]प्रकाशदेशधर्माद्यनुग्रहादिन्द्रियार्थसम्बन्धविशेषेण स्थूलार्थग्राहकमिति" । प्रकाशः=प्रदीपादिलक्षणः [3]चित्तसमाधानलक्षणश्च देशः=पुरोवर्त्यादिलक्षणः। धर्म इष्टोपलब्धौ, अनिष्टोपलब्धौ त्वधर्मः, अन्यदप्यत्रानुक्तं निमित्तं येन विनार्थो न गृह्यते

---

"स्फुटो व्यक्तोऽनुभवः प्रकाशो यस्य, तस्य भावस्तस्माद्" (दुर्वेक० पृ० ६४) इति विवेको दुर्वेकस्य। घटादयो यदेन्द्रियेण गृह्यन्ते, तदा सुखादिरूपमान्तरं विज्ञानं स्वतो भाति। अतः सुखदुःखोपेक्षाद्याकारा विज्ञानस्यैवान्तरस्य सन्तीति सौगतानामभिमानः ।

१. सुखादीनां स्वसंवेदनता संवेदनात्मता च राद्धान्तिता बौद्धबन्धुभिः—
"अशक्यसमयो ह्यात्मा रागादीनामनन्यभाक्।
तेषामतः स्वसंवित्तिर्नाभिजल्पानुषङ्गिणी ॥" ( प्र० वा० ३।२५० )
"सुखादीनामपि स्वसंवेदनं मानसं प्रत्यक्षम्" ( प्र० वा० अ० पृ० ३०७ )
"न खलु विज्ञानाद् भेदेन प्रतीयन्ते सुखादयः" ( प्र० वा० अ० पृ० ३०९ ),
"सुखादय एव स्फुटानुभवत्वात् स्वसंविदिताः" ( ध० प्र० पृ० ६४ ) इति।
तदेतत्प्रत्यादिशति—स्वसंवेदनेत्यादिना ।

२. प्रकाशदेशकालधर्माद्यनुग्रहादिति क्वाचित्कः पाठः कालपदाधिकः, कालपदं हि विभजते जयसिंहः—"कालो वर्त्तमानादिः" ( न्या० ता० दी० पृ० ७२ )।

३. चित्तसमाधानम् = चेतसः समीहितेन्द्रियेण सन्धानम् ।

तत् सर्वमादिग्रहणादवगन्तव्यम् । तदेवं प्रकाशादिलक्षणं निमित्तमनुग्रहो गृह्यते अनेनेति कृत्वा तदनुग्रहादक्षं साधकतमं, साधकतमत्वं चाक्षस्यार्थेन सह सन्निकर्षविशेषस्तेनोपेतं तदिन्द्रियमर्थग्रहीतिं साधयतीति ।

ननु च प्रदीपेन पश्यामीति प्रदीपस्यापि साधकतमत्वं प्रतीयते, न चात्र बाधकं किंचिदस्ति, तत् कथमक्षमेव साधकतमं प्रदीपश्च निमित्तमिति ? सत्यम्, किन्तु प्राधान्यापेक्षयाक्षं [1]प्रत्यक्षमुक्तं, प्राधान्यं च तत्फलस्य [2]तद्व्यपदेश्यत्वं यवांकुरादिवत् । प्रदीपस्यापि साधकतमत्वमितरनिमित्तानुग्रहाद्, अर्थसम्बन्धे एव (सम्बन्धानेन) फलोत्पत्तेः, सम्बन्ध एव साधकतमत्वमुच्यते । तद्यथा—चक्षुःस्पर्शसंयोगादनन्तरमेव घटादिद्रव्यज्ञानमिति । यद्यपि क्वचिद् अचरमस्यापि[3] सम्बन्धस्य ज्ञानहेतुत्वमस्ति, तथापि बाहुल्यादपेक्षयैतदुक्तम् । परमार्थस्तु यदेव चरमं तदेवेन्द्रियादेः साधकतमत्वमिति 'त्व' प्रत्ययवाच्यम् ।

यदि तर्हि सम्बन्धः साधकतमत्वं, तदा [4]सर्वात्मनार्थग्रहणप्रसंगः, सर्वात्मनार्थस्य सम्बद्धत्वादिति, न; कारणस्य नियतविषये सामर्थ्यात्—न हि परशुः सम्बद्धत्वादेव वृक्षवत् तद्धर्मानाकाशादिकं चापि छिनत्ति, धूमश्चाग्निधर्मानशेषान्न गमयति । [5]भवत एव पक्षे धर्मधर्मिणोरभेदाभ्युपगमात्सर्वात्मनार्थेन जनितस्यार्पितस्वाकारस्य ज्ञानस्य सर्वात्मनार्थ-

---

१. प्रत्यक्षम् = प्रत्यक्षप्रमाणम् ।

२. अत्र सूत्रं प्रमाणम्—"तैश्चापदेशो ज्ञानविशेषाणाम्" (न्या० सू० २।१।२७) । "तैः = इन्द्रियैरर्थैश्च व्यपदिश्यन्ते ज्ञानविशेषाः कथं ? घ्राणेन जिघ्रतीत्यादि भाष्यम् । यथा क्षेत्रसलिलादिविपुलसामग्रीसमुद्भूतोऽप्यङ्कुरो यवादिपदैरेव व्यपदिश्यते—यवाङ्कुरः कोद्रवाङ्कुर इति । तत् कुतः ? यवादीनां प्राधान्यात्, तथा प्रकृतेऽपि बोध्यम् ।

३. यत्र सन्तमसादौ प्रथमत एवेन्द्रियार्थसन्निकर्षे सति प्रदीपादिरानीयते, तत्रेन्द्रियार्थसन्निकर्षोऽचरमोऽपि ज्ञानहेतुरिष्यत एव ।

४. सर्वात्मना = सर्वधर्मेण, घटादिषु यावन्तो घटत्वरूपादयो धर्मा विद्यन्ते, तैः सर्वैः सहितो धर्मी युगपदेवानुभूयेतेति भावः ।

५. भवतः = सौगतस्य । पक्षे = मते । कथयन्ति हि सौगतपुङ्गवाः—वैश्वरूप्याद् धियामेव भावनां विश्वरूपता ( प्र० वा० ३।२०४ ) इत्यादि ।

निश्चायकत्वप्रसंगः। सोऽयम् [1]उष्ट्रलकुटन्यायमनुतिष्ठन् कथं नोपहासविषयः स्यादिति ? धर्मिधर्माणां खलु भेदे सति यस्यैवेन्द्रियग्रहणार्हत्वं स एव धर्मो धर्मी वा सम्बद्ध इन्द्रियेण गृह्यते। यस्य तु नेन्द्रियग्रहणार्हत्वं स सम्बद्धोऽपि न गृह्यते तदर्थमेवोक्तं स्थूलार्थग्राहकमिति।

## ❀ अवयविनिरासः ❀

[2]ननु [3]चास्थूलस्यार्थस्य ग्राहकम्, [4]न तु ज्ञानाकारस्य स्थौल्यमस्तीत्यतो न ज्ञानात्मकं स्थूलं ग्राह्यमिति (ननु च) ज्ञानादर्थान्तरं स्थूलं सुतरां न सम्भवति, तथा हि—न तावदेकोऽवयवी, तथा सति तस्य [5]पाण्यादिकम्पे सर्वकम्पप्राप्तेः, अकम्पने वा चलाचलयोः पृथक्सिद्धिप्रसंगात्, वस्त्रोदकवत्। एकस्य चावरणे सर्वस्यावरणप्रसंगादभेदात् न वा कस्यचिदावरणमित्यविकलं दृश्येत। अवयवस्यावरणं नावयविन इत्यभ्युपगमेऽप्यर्द्धावरणेप्यनावृतत्वात्प्रागिवास्य दर्शनप्रसंगः। अवयवदर्शनद्वारेणावयविदर्शनमित्यस्मिन्नपि पक्षे सर्वथावयविनोऽप्रतिपत्तिप्रसंगः, सर्वावयवानां द्रष्टुमशक्यत्वात्। कतिपयावयवदर्शनादवयविदर्शने यद्वदत्रावयवदर्शनेऽपि तथाभूतस्यैव दर्शनप्रसंगः। रक्ते चैकस्मिन्नवयवे यद्यवयवी रक्तस्तदान्यावयवस्थोपि रक्त एव दृश्येत, नोचेत्तदा सर्वावयवरागेऽप्यवयव्यरक्त एवोपलभ्येत। [6]वृत्त्यनु-

---

१. उष्ट्रलकुटन्यायः—उष्ट्रः = क्रमेलकः, लकुटः = लगुडः। यथोष्ट्रः स्वपृष्ठोह्यमानेनैव लगुडेन ताड्यते, तथा तत्रभवान् भदन्तोऽपि स्वेनापादितेन दोषेण दूषितो भवतीति भावः।

२. अयोगिप्रत्यक्षं स्थूलार्थग्राहकमिति वाचोयुक्तिममृष्यमाणः शङ्कते सौगतः—नन्विति।

३. अस्थूलार्थस्य ग्राहकम् = प्रत्यक्षं स्थूलार्थस्य ग्राहकं न सम्भवतीत्यर्थः।

४. स स्थूलार्थो भवन् कुत्र भवेत्—विज्ञाने ? बहिर्देशे वा ? तत्राद्यं प्रत्यादिशति—न त्विति। न तावदित्यर्थः। द्वितीयं निरस्यति—ज्ञानादर्थान्तरेति।

५. अवयवेभ्यो भिन्नमवयविनं निराकुर्वाणः कवयति स्म कीर्तिरेवम्—
पाण्यादिकम्पे सर्वस्य कम्पप्राप्तेर्विरोधिनः।
एकत्र कर्मणोऽयोगात् स्यात् पृथक्सिद्धिरन्यथा॥
एकस्य चावृतौ सर्वस्यावृतिः स्यादनावृतौ।
दृश्येत रक्ते चैकस्मिन् रागोऽरक्तस्य वा गतिः। प्र० वा० २।८५,८६॥

६. न्या० सू० ४।२।६।

पपत्तेश्चावयवी नास्ति, तथा हि—[1]गवि शृंगमिति लौकिकम्, शृंङ्गे गौरित्यलौकिकम् ततो यद्यवयविन्यवयवा वर्त्तन्ते तदैकेनैवावयवेनाखण्डस्यावयविनोऽवरुद्धत्वादन्येऽवयवाः क्व वर्त्तेरन् ? न हि मूर्त्तानामेकदेशावस्थानमस्ति । न चावयवव्यतिरेकेणावयविनः प्रदेशभेदोऽस्ति, येनावयवानामेकदेशत्वं न प्रसज्येत । एकद्रव्यवृत्तित्वे च द्रव्यस्याभ्युपगमे [2]युक्तिबाधापि स्यात् । [3]अथावयवेष्ववयवी वर्तते इति पक्षः । [4]तत्राप्येकस्मिन्नेवावयवे यदि सर्वात्मना वर्त्तते, तदाऽन्येऽवयवास्तदनाश्रयाः स्युः; एकाश्रयत्वे च द्रव्यस्य सदोत्पत्तिरविनाशश्च स्यात् । [5]अथैकदेशेनैकत्रावयवे वर्त्तते, न; तस्याखण्डस्यावयव-

---

१. वृत्त्यभ्युपगमे किमवयविनि अवयवा वर्तन्ते ? उतावयवेषु अवयवी वर्तते ? तत्र प्रथमं पक्षमुपपाद्य निराकुरुते—गवि शृङ्गमिति । शान्तरक्षितस्येमे आक्षेपाः–
वृक्षे शाखाः शिलाश्चागे इत्येषा लौकिकी स्थितिः ।
तौ पुनस्तास्विति ज्ञानं लोकातिक्रान्तमुच्यते ।। ( त० सं० ८३१–३२ )

२. युक्तिबाधाऽपि—युक्तिबाधामनुपदं दर्शयिष्यति । अपिना शास्त्रबाधां समुच्चिनोति, अनेकद्रव्याश्रितत्वं तस्य हि शास्ति वैशेषिकं शास्त्रम्—"अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम्" (वै० सू० १।२।११) ।

३. उक्तविकल्पे द्वितीयं पक्षं प्रत्याक्षिपति—अथेति ।

४. 'अवयवेष्ववयवी वर्तते' इति कल्पेऽपि द्वापरो भवति—एकस्मिन् अवयवे सर्वात्मना वर्तते ? एकदेशेन वा ? आद्येऽवयवान्तरेऽवयविनोऽसत्त्वापातः, उक्तं हि शान्तरक्षितेन—

नैव धात्र्यन्तरक्रोडमध्यास्ते हि यथा शिशुः ।
एकक्रोडीकृतं द्रव्यं नाश्रयेत तथाऽपरम् ।। (त० सं० ६०९)

५. 'एकस्मिन्नवयवे एकदेशेनावयवी वर्तते' इति पक्षं निराचष्टे—अथैकेति । अस्मिन् पक्षेऽनवस्थां शीलयस्ति स्म कमलशीलः—"अथैकदेशेनेति पक्षस्तदाऽनवस्था स्यादेकदेशानाम् । तथा हि—यैरेकदेशैस्तद्द्रव्यमवयवेषु वर्तते, तेऽपि तस्यैकदेशा इति, तेष्वप्यनेन (अवयविना) वर्तितव्यम् । तथैवापरेष्वित्यनिष्ठा ।" (त० सं० पं० पृ० २०३) । जैनमुनयोऽप्येवमेव वृत्त्यनुपपत्त्याऽवयविनमवयवव्यतिरिक्तं निराकुर्वते—"अवयवेषु अवयवी सामस्त्येन वा वर्तेत, एकांशेन वा ? सामस्त्यवृत्तावेकस्मिन्नेवावयवे परिसमाप्तत्वादनेकवृत्तित्वं न स्यात् । एकद्रव्यं च द्रव्यं स्यात् । नाप्यंशेन, निरंशस्य तस्योपगमात् ।" (न्याया० सू० वा० वृत्ति० पृ० ३९) ।

व्यतिरिक्तदेशासम्भवात्। तदभ्युपगमे वा तेष्वपि देशेष्वन्यैर्देशैर्वृत्तिरित्यनवस्था स्यात्।

इतश्च नास्त्यवयवी, [1]बुद्ध्या विवेचनेऽनुपलम्भात्। न हि अयं तन्तुः, अयं तन्तुः—इत्येवं बुद्ध्या पृथक्क्रियमाणेष्ववयवेषु तदन्योऽवयवी प्रतिभाति। [2]एतेनावयवधर्मोऽवयवीत्ययमपि पक्षो निरस्तः। तस्मान्नास्त्येकोऽवयवी यः स्थूलप्रतिभासविषयः स्यात्। नापि परमाणुसमूह एव स्थूलप्रतिभासविषयः, तस्य परमाणुव्यतिरिक्तस्यावयविन्यायेनापास्तत्वात्। परमाणूनां च प्रत्येकं न स्थूलत्वमस्तीति, समुदितानामपि कथं स्यात्? न हि प्रत्येकमरक्तानां समुदायावस्थायां रक्ताकारतोपलभ्यते। मरीचीनामुदकाकारतावद् भ्रान्तोपलम्भः स्यात्।

अथैवमुच्यते—यदि स्थूलं ज्ञानादर्थान्तरं ग्राह्यं न सम्भवति, सूक्ष्ममेव तर्हि ग्राह्यं भविष्यतीति। तदप्यसद्, यतः;

[3]षट्केन युगपद् योगात् परमाणोः षडंशता।
षण्णामप्येकदेशत्वे पिण्डः स्यादणुमात्रकः॥ इति

---

१. न्या० सू० ४।२।२६।

२. साङ्ख्यादयोऽस्मिन् विषये उभयं बौद्धं नैयायिकं चालोचयन्तः स्वमतं रचयन्ति—"बौद्धपक्षे तु भूयान् दोषः। कथं तर्हि द्रव्यान्तरं पटो नेष्यते? तन्तुष्वेव तथास्थेषु पट इत्यादिबुद्धय इत्येवमादिना न्यायेनावयविप्रतिषेधात् संयोगोपसंयोगिभ्यस्तेषामर्थान्तरमिष्टम्। तत्रैतावती परिकल्पना स्याद्, यदुत तन्तुसंयोगो वा पटः, संयोगकरणं वा द्रव्यान्तरम्, उभयं च तेषां नार्थान्तरम्। अथोत्पत्तिविनाशौ न कस्यापीति मायाकारचेष्टितम्। तदपि चित्रतरोऽयमुपन्यासः। कारणोपादानं तु द्रव्यान्तरोत्पत्तिविनाशाभ्युपगमात् न तार्किकसदृशो विचारः। तस्मात् पारमर्ष एव पक्षो ज्यायान्" (यु० दी० पृ० ६५)। पारमर्षश्च पक्षः—"कारणभावाच्च सत्कार्यम्" (सां० का० १।३।९)। अवयवी समस्ति, न तु नास्ति; किन्तु सोऽवयवेभ्यो भिन्नो नेष्यते। तदेतन्मतं तिरयति—एतेनेति।

३. न्या० सू० ४।२।२४। परमाणवो निरवयवास्तेभ्यः संयुक्तेभ्योऽवयवी महान् स्थूलः समुत्पद्यते इति तार्किकसमयं समुत्पाटयन्निव बन्धुः (विज्ञप्ति० विं० १२) कवयाञ्चकार—षट्केनेत्यादि। कोशस्थः परमाणुः स्वपार्श्वस्थैः षडाशाधस्थैः षड्भिः परमाणुभिः सह एकदेशेन युज्यते, कात्स्न्येन वा? आद्ये

मूर्तस्य च दिक्प्रविभागेनावश्यं दशांशतयापि भवितव्यं, न च स्वरूपेणानुपलभ्यमानस्यास्तित्वं शक्यमभिधातुम्। किं [1]चाकाशव्यतिभेदादाकाशासर्वगतत्वं वेत्यतो न परमाणुरप्यस्ति, तस्मान्न बाह्यं ग्राह्यमुपपद्यते। तदुक्तम्—

[2]नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते॥ इति।

स्वव्यतिरिक्तग्राह्यग्राहकविरहात्तदुभयाकारा बुद्धिः स्वयमेवात्मस्वरूपप्रकाशिका प्रकाशवदिति समुदायार्थः। अपि च

[3]सहोपलम्भनियमादभेदो नीलतद्धियोः।

---

एकस्य परमाणोः षड्भिर्युगपत् सम्बन्धात् षडवयवत्वापत्तेः, दूरनिरस्तं निरवयवत्वम्। द्वितीये षण्णामपि परमाणूनानेकस्मिन्नेव परमाणुकोशे निवेशात् संपिण्डितोऽर्थोऽणुमात्रमेव स्यात्। तथा सत्यवयविनः स्थूलताशा विशीर्येत। तस्मात् न स्थूलं नापि सूक्ष्मं बाह्यं वस्तु विमर्दसहं वसतीत्यभिसन्धिर्वसुबन्धोः।

१. न्या० सू० ४।२।१८।

२. बन्धुं धर्मेण योजयति सौगतः—नान्य इति। प्रमाणवार्तिके (३।३२८) कियत्पाठान्तरेणेदं पद्यं विद्यते। ज्ञानाद् भिन्नं किञ्चिद् ग्राह्यं ग्राहकं नास्ति। न चैवं ज्ञानं कस्य कुत्र? इति जिज्ञासाऽनुत्तरा स्यादिति वाच्यम्, सर्वत्र तज्जिज्ञासाया अनुत्थानात्। न हि सूर्यं चन्द्रमसं वोपलभ्य कस्यायमिति जिज्ञासन्ते जनाः। स्वयंप्रकाशा संवित्, परापेक्षागन्धमपि न सहते इति तद्भावः।

३. धर्मकीर्तेरिदं सुप्रसिद्धं पद्यं बहुत्र समुद्धृतम्—ब्र० सू० शां० भा० २।२।२८, त० सं० पं० पृ० ५६७, भामती० २।२।२८, स्या० र० पृ० १४९, न्याया० वा० वृ० पृ० ८०, प्र० पं० पृ० १७५। दलसुखभाईमालवणीया कमलशीलस्य (त० सं० पृ० ५६७) आचार्यीयत्वोल्लेखाद् दिङ्नागस्येदं पद्यमनुमिनोति। किन्तु श्रीविद्याभूषणमहाशयः स्वकीये न्यायशास्त्रस्येतिहासे (पृ० ३०८) धर्मकीर्तेः प्रमाणविनिश्चयस्य साधयतीमानि पद्यानि—

नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते॥
सहोपलम्भनियमाद् अभेदो नीलतद्धियोः।
अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥ (प्र० वि० परि० १)

न हि भिन्नावभासित्वेऽप्यर्थान्तरमेवंरूपं नीलस्यानुभवात्तयोः सहोपलम्भ-नियमात्, द्विचन्द्रादिदर्शनवत्। न ह्यनयोरेकानुपलम्भेऽन्योपलम्भोऽस्ति न चैतत्स्वभावभेदे युक्तं, प्रतिबन्धकारणाभावात्।

अथ पश्चादर्थोपलम्भस्य ज्ञानान्तरेण संवेदनम्, तदप्ययुक्तम्; यस्मात्
"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति।"

न हि विषयसत्तया विषयोपलम्भः, किं तर्हि? तदुपलम्भसत्तया, सा चाप्रामाणिकी न सत्तानिबन्धनाँस्तद्व्यवहाराननुरुणद्धि। तदप्रसिद्धौ विषयस्याप्यप्रसिद्धिरिति सद्व्यवहारोच्छेदः स्यात्, न हि सदप्यनुपलभ्यमानं सदिति व्यवहर्तुं शक्यते।

अथार्थसंवेदनमन्येन संवेदनेन संवेद्यते, तदपि संवेदनमसिद्धसत्ताकम-सद्रूपं कथमन्यस्य साधकं स्यात्? तत्रापि संवेदनान्तरान्वेषणेऽनवस्था स्यात्, तथा च न कस्यचिदर्थस्य सिद्धिरिति अन्धमूकं जगत्स्यात्। क्वचिन्निष्ठाभ्युपगमे च स्वयमात्मानं विषयाकारं युगपदुपलभत इति तदन्येऽपि तथा भवन्तु, विशेष-हेत्वभावात्। तत्सिद्धः सहोपलम्भः, तस्मात्सहोपलम्भादभेदोऽर्थतद्धियोरिति। एवं च नीलोपलम्भ इति नीलस्वभावोपलम्भ इत्येतावदुक्तं भवति—अनादिवासनावशाद् बुद्धिरेवानेकाकारोत्पद्यमाना संवेद्यते स्वप्नबुद्धिवदिति। अपि च—

धियो नीलादिरूपत्वे बाह्योऽर्थः किन्निबन्धनः।
धियोऽनीलादिरूपत्वे बाह्योऽर्थः किंनिबन्धनः॥

यद्ययं नीलाकारो बुद्धेरेव धर्मस्तदात्मभूतोऽवभासते, ततस्तद्व्यतिरिक्तो नीलादिरर्थोऽस्तीति न किंचित् प्रमाणम्। अथ नायं बुद्धेराकार इष्यते, तथापि सा निराकारान्यथाकारा वा बुद्धिः कथं नीलादेः साधिका स्यात्? न हि [1]प्रतिबन्धमन्तरेणार्थान्तरादर्थान्तरस्य सिद्धिः, अतिप्रसंगात्। तदुत्पत्तिप्रतिबन्धे तु नयनादृष्टादीनामपि विषयभावः स्यात्। स्वाकारानर्पकत्वे जनकत्वविशेष-स्याप्यसिद्धेः। कथं जनकत्वाविशेषेऽपि कर्मकारकत्वं? स्वविषयज्ञानजनकत्वं वा [2]तस्यैव? उच्यते—येऽप्येकसामग्र्यधीनत्वं प्रतिबन्धमाश्रित्य समानकाल-योरेव ग्राह्यग्राहकभावमिच्छन्ति, [तन्मतेपि नयनादृष्टादीनां तदेकसामग्र्यधीनानां ग्राह्यत्वं प्रसज्यते विशेषाभावात्।

१. प्रतिबन्धः = सम्बन्धः तादात्म्यादिलक्षणः।
२. तस्यैव = नीलाद्यर्थस्यैव।

अथार्थाकारत्वं विशेषस्तथापि बाह्यार्थः किंनिबन्धनः ? एकः खल्वयं नीलाकार उपलभ्यते, स ज्ञानात्मैवेष्टः तद्द्वितीयस्त्वाकारो न दृश्यते, सोऽदृश्यमानः कथं बाह्यत्वेनावतिष्ठेत ? व्याप्त्यसिद्धेरनुमानगम्योऽपि न सम्भवति। अन्ये त्वेवं पठन्ति—

धियो नीलादिरूपत्वे बाह्योऽर्थः किंप्रमाणकः।
धियोऽनीलादिरूपत्वे स तस्यानुभवः कथम्॥ (प्र० वा० ३।४३३)

अत्राप्ययं तात्पर्यार्थः—बुद्धेर्निराकारत्वे प्रतिकर्मव्यवस्थानुपपत्तिः, साकारत्वे च बाह्योऽर्थोऽप्रमाणक इति। अथ ब्रूयादर्थाकारो ग्राह्यत्वेनैव प्रतीयते, बोधाकारस्तु ग्राहकत्वेनैवेति। कथमनयोरैक्यम् ? एकत्वे हि व्यत्ययेनापि तयोः प्रतिभासः स्यादिति, नैतदस्ति; अनाद्युपप्लववासनासामर्थ्यादेवं प्रतीतिव्यवस्थोपपत्तेः। तदुक्तम्—

अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते।
विभक्तलक्षणा ग्राह्यग्राहकाकारविप्लवा॥
तथाकृतव्यवस्थेयं केशादिज्ञानभेदवत्।
यदा तदा न संचोद्यग्राह्यग्राहकलक्षणा॥ इति। (प्र.वा. ३।३३१, ३३२)

अस्यार्थः—स्वरूपेणाविद्यमानवेद्यवेदकाकारापि बुद्धिर्यथा भ्रान्तैर्व्यवहर्तृभिर्निरीक्ष्यते, तथैव कृतव्यवस्थेयं व्यवह्रियते। तैस्तु भ्रान्तैरियं विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा निरीक्ष्यते। विभक्तलक्षणाविव ग्राह्यग्राहकाकारावेव विप्लवो यस्याः सा तथोक्ता, किमिव ? केशादिज्ञानभेदवत्। यथा तिमिराद्युपप्लुताक्षाणामविद्यमाना एव केशादयो बोधात् भिन्ना इव प्रतिभान्ति, तद्वन्नीलादयोऽपीति। यदायमविद्यानिबन्धन एव बुद्धेः प्रविभागः, तदा एवं न संचोद्यग्राह्यग्राहकलक्षणा—संचोद्ये=पर्यनुयोज्ये, ग्राह्यग्राहकलक्षणे यस्याः सा तथा न भवति। न ह्यविद्यासमारोपिताकारः पर्यनुयोगमर्हतीति। तदेवं बुद्धिव्यतिरिक्तग्राह्यग्राहकासम्भवाद्, बुद्धिरेवानादिवासनावशादनेकाकाराऽवभासते तस्मादयुक्तमुक्तम्—स्थूलार्थग्राहकमिति।

## ※ अवयविनस्तत्स्थौल्यादीनां च समर्थनम् ※

अत्र प्रतिविधीयते—यत्तावन्नास्त्येकोऽवयवी, तस्य पाण्यादिकम्पे सर्वकम्पप्राप्तेरिति, तदयुक्तं; व्याप्तेरसिद्धत्वात्। [1]न हि यस्य पाण्यादिकम्पे

१. व्याप्तिर्द्विधा भवति—अन्वयव्याप्तिः, व्यतिरेकव्याप्तिश्च। तत्राऽन्वयव्याप्तिं तयोर्निरस्यति—न हीति।

सर्वकम्पप्राप्तिः, तस्याभाव इत्येवं व्याप्तिः क्वचिद् गृहीता। [1]नापि यस्य सत्त्वं, तस्य न पाण्यादिकम्पे सर्वकम्पप्राप्तिरित्येवं व्याप्तिः परेण दृष्टा, न च दृष्टान्ताभावे स्वपक्षसिद्धौ परपक्षनिराकरणे वा क्वचिद्धेतोः सामर्थ्यं दृष्टम्। [2]प्रसंगोऽप्युभयोर्व्याप्तिसिद्धावात्मानं लभते, प्रभाप्रदीपप्रसङ्गवत्। अकम्पने वा चलाचलयोः पृथक्सिद्धिप्रसङ्ग इत्यपि बाह्यार्थासम्भवेऽनुपपन्नम्। न ह्येवं कश्चिदनुन्मत्तः प्रत्यवतिष्ठते—नास्त्येको वन्ध्यापुत्रस्तस्य पाण्यादिकम्पे सर्वकम्पप्राप्तेः, अकम्पने वा चलाचलयोः पृथक्सिद्धिप्रसङ्गः; खपुष्पखरशृंगवदिति। चलाचलयोरेकत्वविरोधादेकत्वमभ्युपगच्छताऽवयविनश्चलत्वमेव सर्वात्मनाभ्युपगन्तव्यम्। चलाचलत्वमभ्युपगच्छता चैकत्वं नाभ्युपगन्तव्यमित्ययं प्रसंगार्थं इति चेन्न, वैयर्थ्यात्। न हि नैयायिको वैशेषिको वा कश्चिदेकस्यावयविनश्चलाचलत्वमभ्युपगच्छति, यं प्रत्ययं प्रसङ्गोऽर्थवान् भवेत्।

नन्वेकावयवकम्पनेऽप्यन्यावयवानामकम्पनादस्ति चलाचलत्वं, तेन भेदसिद्धिः। ततः किमनिष्टम्? यदि नामावयवानां चलाचलत्वेन भेदः [3]ततोऽर्थान्तरस्यावयविनः किमायातम्? यदा खल्ववयविनश्चलत्वमुत्पद्यते तदावयवस्य कस्यचिदचलत्वेऽपि न तस्याचलत्वम्। यदा तु नोत्पद्यते तदावयवस्य चलत्वेऽपि नावयविनश्चलत्वम्। तयोरवयवावयविचलनयोर्भिन्नसामग्रीजन्यत्वेन युगपदुत्पत्तिनियमायोगात्। अर्धावयवचलनकाले तर्हि किमवयविनश्चलत्वमस्ति वा न वेति न विद्मः, तथा प्रत्ययस्योभयथापि

---

१. व्यतिरेकव्याप्तिमपाकरोति—नापीति।

२. स्यान्मतम्—अवयविनं निरस्यता सौगतेनावयवयी स्वीक्रियते? न वा? आद्ये कथं तन्निराकरणम्? द्वितीये पक्षाभावाद् हेतोराश्रयासिद्धता स्यादिति। तदेतामुभयतःपाशां परिहरन् स प्रत्याह—प्रसङ्गतद्विपर्ययसाधनाभ्यां तन्निरासं मन्ये—यदनेकवृति, तदनेकम् यथा जलानलादिकम्। अनेकेष्ववयवेषु वर्तमानः तार्किकाभ्युपगतोऽवयवी अनेकः प्रसज्यते—इति प्रसङ्गः। न चानेकरूपोऽभ्युपेयतेऽतो नानेकवृत्तिरिति प्रसङ्गविपर्ययः। तदेतत्प्रसङ्गभङ्गाय भूषणो यतते—प्रसङ्गोपीति। प्रभाप्रदीपवदिति प्रभायां सत्यां प्रदीपः प्रसज्यते। तत्कुतः? यतः प्रभाप्रदीपयोर्व्याप्तिः सिद्धा। एवं प्रकृतेऽपि अनेकवृत्तित्वानेकत्वयोर्व्याप्त्या भाव्यम्। न च सा सम्भवति, जात्यादेरनेकवृत्तित्वेऽप्यनेकत्वाभावात्, दृष्टान्ताभावेन पाण्यादिकम्पप्रयुक्तसर्वकम्पप्राप्त्यसत्त्वयोर्व्याप्त्यसिद्धेश्चेति निष्कर्षः।

३. ततोऽर्थान्तरस्य = अवयवेभ्यो भिन्नस्य। न हि तार्किकमतेऽवयवात्मकोऽवयवी स्वीक्रियते, अपि तु तेभ्यो भिन्नः।

सम्भवात्। तथा निश्चलेऽपि चलत्स्वाश्रयेषु दृश्यमानेषु चलनप्रत्ययो रूपादिष्विवोपपद्यते, चलत्यपि निश्चलावयवसमवायनिमित्तेन चलनस्याग्रहणान्निश्चचलप्रत्ययः सम्भवति, दूरादिनिमित्तादगृहीतचलनवत्। न चैवं सर्वत्रानाश्वासः, संशयनिमित्तानुपलब्धौ तन्निश्चयोपपत्तेः। अन्यथा हि चलाचलव्यवहारस्य निर्मूलतैव स्यादिति।

अथवा संयोगवच्चलनस्यापि[1] प्रदेशवृत्तित्वं तेनैकस्यापि चलाचलप्रत्ययविषयत्वं न विरुध्यते, धावति पुरुषे चलनस्याप्रदेशवृत्तित्वोपलम्भादयुक्तमिति चेत्, एवं तर्हि वस्त्रोदकादिसंयोगस्याप्रदेशवृत्तित्वोपलम्भात्संयोगस्यापि प्रदेशवृत्तित्वमयुक्तम्।

तत्रोदकादिना सर्वावयवसंयोगैः सह वस्त्रादेः संयोगोपलम्भादप्रदेशवृत्त्यभिमान इति चेत्, समानमत्राऽपि सर्वावयवचलनैः सहावयविनश्चलनोपलम्भादप्रदेशवृत्त्यभिमान एवेति कुड्यादिना अङ्गुलिसंयोगे शरीरस्यापि संयोगोऽस्ति, न तु हस्तचलनेऽपि शरीरस्य चलनमित्यत्र विशेषनिश्चये प्रमाणं न पश्यामः, प्रक्रियामात्रात्तु सर्ववादसिद्धिः स्यात्। तस्माच्चलनस्यापि प्रदेशवृत्तित्वादेकस्मिन्नवयविनि संयोगोपलम्भानुपलम्भवच्चलनस्याप्युपलम्भानुपलम्भावविरुद्धाविति। एतेन वृतानावृतत्वं प्रत्युक्तम्। न वावयव्युपलम्भेऽवयवोपलम्भोवयवात्तसन्निकर्षो वा कारणं येनार्धत्रिभागाद्यवयवाऽवरणेऽवयविनोप्यग्रहणम्, किं तर्हि? तत्सन्निकर्षोऽशेषसहकारिसहितः, स च तदुपलम्भानुमेयस्तदनुपलम्भेन तु सहकार्यसमग्रतैवानुमीयते।

अर्धावरणेऽप्यविकलोऽवयवी किन्न दृश्यते इति चेत्, न; अभिन्नात्मनस्तस्याविकलस्यैव दृष्टत्वात् तस्मिंस्तथावयवे दृष्टेऽवयवादिविशेषाविशेषापेक्षया सन्देहोप्यविरुद्धः तदवयवाद्युपलम्भानां चावयव्युपलम्भस्य च प्रतिनियतकारणत्वान्न सहभावनियमः, तस्मादवयवानुपलम्भेऽप्यवयवी गृह्यत इति।

यदप्युक्तम्—रक्ते चैकस्मिन्नित्यादि। तदप्ययुक्तं, नह्यवयवरक्ततारक्तताभ्यामवयविनस्तथाभावस्तस्य तेभ्योऽर्थान्तरत्वाद्, अपि त्ववयविन एव रक्तद्रव्यसंयोगो रक्तता तदभावश्चारक्ततेति संयोगस्य चाव्याप्यवृत्तित्वे न रक्तारक्तत्वमप्येकस्यावयविनो विरुध्यते। कथमेकस्याव्याप्तिरिति चेत्, न; संयोगस्यैव ह्येवं धर्मो येन यत्र यत्रावयवे सम्बद्धोऽवयवी दृश्यते तत्र-तत्र रूपादिवत्तदुप-

---

१ प्रदेशवृत्तित्वम् = अव्याप्यवृत्तित्वम्।

लम्भकारणावैगुण्येऽपि[1] संयोगो नोपलभ्यते। तथा यत्र यत्राकाशमस्ति तत्र तत्र न कर्णशष्कुल्याकाशसंयोगेनाऽवच्छिद्यते, सर्वशब्दानां तत्समवायेनैकश्रोत्रविषयप्रसङ्गात्। अत एव शब्दस्यापि न व्याप्यवृत्तित्वं, क्वचिदुत्पन्नस्यापि सर्वश्रोत्रविषयत्वप्रसङ्गात्। [2]एवंधर्मकत्वं संयोगशब्दादीनां प्रदेशवृत्तित्वशब्देनापि व्यवह्रियते न पुनराकाशादेरखण्डस्य प्रदेशोऽस्ति। यद्यप्यवयविनोवयवः प्रदेशोऽस्ति, तथापि न तत्रावयविसंयोगो वर्त्तते, सर्वस्याप्यवयविनः संयोगानाश्रयत्वप्रसङ्गात्। परमाणोस्तु प्रदेशाभावात्संयोगो न स्यात्। ततश्च शरीराद्यनुत्पत्तौ सर्वस्याग्रहणप्रसङ्गः, तस्माद् यथा त्वन्मते निर्विकल्पेन ज्ञानेन तदेव सविकल्पकं ज्ञानमात्मसदृशं [3]कथंचिदुत्पादितं कथंचिन्नेत्यभिन्नस्यैवांशः परिकल्प्यते, तथा संयोगाद्याधारस्यापीत्यदुष्टं संयोगादेः प्रदेशवृत्तित्वम्। तस्मादेकस्यापि रक्तारक्तत्वमविरुद्धमिति।

## ❀ चित्ररूपानुपपत्तिः ❀

यस्तर्हि रक्तारक्तैरेवावयवैरवयवी निष्पादितस्तस्य किं रूपमिति ?[4]विशेषानारम्भादनिर्देश्यमेव विशेषतो विरुद्धविशेषाणां कारणरूपाणां विशेषारम्भे तु विरोधो न सामान्यारम्मे नीलपीतादिषु सर्वत्र [5]रूपात्मनः सम्भवात् नीलादिविशेषरहितमपि रूपमुत्पन्नमित्यवयविदर्शनादेवावगम्यते नीरूपद्रव्यस्य दर्शनायोगादन्यरूपेणान्यदर्शने चातिप्रसङ्गात्। तस्माद्विशेषतोऽनिर्देश्यं रूपमात्रमेव ततोत्पन्नमिति, चित्रप्रतिभासस्तु तत्र चित्रावयवसम्बन्धात् स्फटिके नीलादिप्रतिभासनवत्। यद्येवं द्व्यणुकरूपमपि विरुद्धविशेषरूपारम्भादनिर्देश्यं प्राप्तं ततश्च तत्पूर्वकस्य सर्वस्याप्यवयविरूपस्यानिर्देश्यत्वं स्यात्ततः पररूपविशेषस्यातीन्द्रियत्वाद्रूपविशेषनिर्देशोच्छेद एव स्यादिति।

---

१. तदुपलम्भककारणावैगुण्येऽपि = संयोगोपलम्भकसामग्रीसद्भावेऽपि।

२. एवंधर्मकत्वम् = अव्याप्यवृत्तित्वम्।

३. अयभाशयः—सविकल्पकं ज्ञानमेकं निरंशं च निर्विकल्पेन विजातीयेन कथमुत्पादितम् ? इति पर्यनुयोगे सौगतैरिदमेवोत्तरं वितीर्यते, यत् सामान्यतो बोधांशमेवोत्पादितमपि विकल्पांशेन नोत्पादितं निर्विकल्पेनातो न कार्यकारणयोर्वैजात्यापत्तिः। एवं निरंशेऽप्यंशमारोप्य सर्वत्र व्यवहारः प्रसाध्यते।

४. योगाचारस्य प्रश्नं नैयायिकैकदेशी समुत्तरयति—विशेषानारम्भादित्यादिना।

५. रूपात्मनः = रूपसामान्यस्य।

## ❀ चित्ररूपोपपादनम् ❀

[1]नैतदेवं, सर्वारम्भस्यादृष्टायत्तत्वाददृष्टस्य च पुरुषार्थोपयोगिकार्यारम्भकत्वात्, तथारम्भे तु न पुरुषार्थोपयोग इति न, सर्वत्र तथारम्भे रूपविशेषोपलम्भविरोधाच्चेति[2]। अथवा चित्रमेव तद्रूपमुत्पन्नं तथैवाबाधितप्रतिभासात्। एकं तच्चित्रं चेति विरोधादयुक्तमिति चेत्, न; एकस्याप्यनेकनीलत्वादिधर्माधिकरणत्वेन चित्रप्रतिभासविषयत्वसम्भवात्; यथा गैरिकाद्यनेकवर्णसम्बद्धं वस्त्रं चित्रमिति प्रतीयते। नीलत्वादिजातीनां विरुद्धत्वादेकत्रसमवायो न युक्त इति चेत्, न; विरोधस्यासिद्धत्वात्। अन्यत्र सहादर्शनात्तत्सिद्धिरिति चेत्, न; नीलत्वोत्पलत्वयोरपि विरोधप्रसङ्गात्। तयोरेकत्र दर्शनादविरोध इति चेत्, समानमेतत्। [3]युक्त्यापि भिन्नजातीयरूपारब्धस्यावयविरूपस्यानेकजात्यधिकरणत्वं सम्भाव्यते, अवयवरूपाणां नियमेनावयविनि समानजातीयरूपारम्भकत्वदर्शनादिति। [4]परमतेऽप्यनेकवासनाखचितं ज्ञानं चित्रमित्यस्त्युदाहरणम्। जातिभेदा एव हि [5]व्यावृत्तिभेदशक्तिभेदशब्दाभ्यामभिलप्यन्ते। तेषामाश्रयेभ्योऽन्यत्वमनन्यत्वं वेति विवादान्तरमेतत्। तस्मादनेकजात्यधिकरणमेकं रूपं विचित्रम्। तच्च तथाभूतमपि यदा कुतश्चिन्निमित्तादनेकजात्यदर्शनादेकैकेनैव जातिविशेषेण विशिष्टं गृह्यते, तदा शुक्लमिति वा रक्तमिति वा गृह्यते, न चित्रमिति, यथा धरणिरूपम्। अथ शुक्लमिति रक्तमिति वावयविरूपमेव गृह्यते। अवयविरूपस्य तु चित्रमिति ग्रहणकाल एव प्रत्यक्षत्वमिष्यते। एवमस्तु नात्र निर्बन्धोऽस्माकम्, शाक्योक्तदूषणपरिहारस्य सर्वथोपपत्तेः।

ये त्ववयविनं नाभ्युपगच्छन्ति, तैरपि चित्रादिप्रतिभासस्य विषयो

---

१. एकदेशिसमाधानं विधूय चित्रमेकं रूपं साधयितुं प्रक्रमते––नैतदेवमिति।

२. विरोधाच्चेति = विरोधो वेति पाठान्तरमिति प्राचीनटिप्पणम्।

३. युक्त्या = अनुमानेन। अनुमानप्रयोगस्तु––नीलत्वाद्यनेकजातिमद्रूपारब्धम् अवयविनो रूपम्, नीलत्वाद्यनेकजातिसंवलितम्, तज्जातीयरूपारब्धत्वात् श्वेतांशुकरूपवदिति। चित्रचेलकरूपम् एकम्, अवयविरूपत्वात्, नीलनीरजरूपवत्––इत्यनुमानेन च चित्रस्यैकत्वं प्रसाध्यते।

४. परमते = सौगतमते। तथैव प्रज्ञाकरः शिक्षते––
यथैव बुद्धिर्भवता चित्राकारोपगम्यते।
तथैव यदि बाह्योऽपि विद्वेषस्तत्र किं कृतः॥ (प्र० वा० भा ३।२०६)

५. व्यावृत्तिभेदः = अतद्व्यावृत्तिरूपः, अन्यापोहो वा। शक्तिभेदः = वासनात्मकः।

वक्तव्यः, परमाणुविलक्षणावयवविषयाभ्युपगमे स एवावयव्यभ्युपगतो भवति। [1]परमाणूनां त्वतीन्द्रियत्वान्नाक्षविषयत्वं विषयलक्षणरहितत्वाच्च, स्वाकारज्ञानजनकत्वं हि विषयलक्षणं तैरिष्टम्। न च परमाणूनां स्वाकारजनकत्वमस्ति, सर्वत्र स्थूलाद्याकारस्यैव संवेदनात्। विलक्षणाकारजनकस्यापि विषयभावे चक्षुरादेरपि विषयत्वं स्यात्।

अथ नीलाद्याकारार्पकत्वं परमाणूनामस्ति तद्वशेनैव विषयत्वम्, तदयुक्तम्; यतो नीलाद्याकारः स्थूलाद्यात्मकत्वेनैव संवेद्यते, नान्योऽसंश्लिष्टपरमाण्वात्मको नीलाद्याकारः प्रतिभाति। कुतश्चायं विशेषोऽवधार्यते [2]नीलाद्याकारस्यैव बाह्योपादानत्वं न स्थूलाद्याकारस्येति? नह्याकारवादिना स्थूलाद्याकारवन्नीलाद्याकारोऽपि ज्ञानस्थादाकारादर्थान्तरभूतो दृष्टः। तत् कथं प्रत्यक्षानुपलम्भाभ्यामर्थविशेषतदाकारयोर्हेतुफलभावो व्यवस्थाप्यते? अर्थापत्त्या तु स्थूलाकारस्यापि बाह्योपादानत्वसिद्धिः, समानयोगक्षेमत्वादिति। बहवः सन्निविष्टाः परमाणव एव स्थूलत्वेनावभासन्त इति चेत्, न; उक्तत्वात्। प्रत्येकमसंचितास्थूलेषु परमाणुषु तथाकारं ज्ञानं भ्रान्तमेव स्यात्। अपि च ते बहवः परमाणवः किमेकमेवाकारमर्पयन्ति? उत प्रतिपरमाणु भिन्नमिति? यद्येकमेवाकारं ज्ञानेऽर्पयन्ति, तदा प्रत्यक्षस्यापि साधारणाकारग्राहकत्वेन सामान्यविषयत्वं प्राप्तम्, भ्रान्तत्वं च प्रत्येकं भिन्नाकाराणामेकाकारेण ग्रहणात्। चित्रप्रतिभासश्च न स्यात्, न ह्येकाकारस्य चित्रता नाम। [3]अथ प्रतिपरमाणु भिन्नाकारं ज्ञानं, तदप्ययुक्तम्; अभिन्नज्ञानस्याकारभेदासम्भवात्। आकारभेदे हि ज्ञानस्यापि भेदः स्यात्, [4]तादात्म्यविपर्ययो वा, गत्यन्तराभावादिति। इष्ट एवाकारभेदे ज्ञानभेद इति चेत्, न; अनुभवविरोधात्। एकमेव स्तम्भादिज्ञानमनुभूयते न प्रतिपरमाणु भिन्नान्यपरसंख्यातानि ज्ञानानीति। एकैकाकारपर्यवसितत्वे च ज्ञानानां भिन्नसन्तानज्ञानानामिव [5]परस्परासंविदिताकारत्वात् कथं बहुष्वपि स्थूलाद्याकारत्वेन प्रतिपत्तिरिष्यते?

---

१. परमाणूनां विषयलक्षणरहितत्वाच्च नाक्षविषयत्वमित्यन्वयः।

२. नीलाद्याकारस्येति ज्ञानगतस्येत्यादिः।

३. एकदेशी प्राह—अथेति।

४. आकाराणामनेकत्वेऽपि ज्ञानस्यैकत्वमिति चेत्, तदाह—तादात्म्यविपर्ययः। ज्ञानाकारयोस्तादात्म्यमभ्युपगतं बाध्येतेत्यर्थः।

५. परस्परं न संविदिता आकारा यैः, तानि परस्परासंविदिताकाराणि ज्ञानानि, तस्य भावस्तस्मात्। परस्परवार्तानभिज्ञत्वादित्यर्थः:

अथ नैव बाह्योऽर्थोऽस्तीति सर्वत्र बुद्धिरेव तदाकारावभासते इति, तदप्य-युक्तम्; बुद्धिरप्येका सती कथं चित्राकारा भवेत् ? अभिन्नात्मनश्चित्रत्वाभ्युपगमे, खल्ववयविना कोऽपराधः कृतो, येनासौ सर्वलोकप्रसिद्धोऽपि निराक्रियते ?

अथ नाभिन्नात्मनश्चित्राकारतेष्यते, किन्तु प्रतिनियताकारं युगपदुत्पन्न-मनेकं विज्ञानं चित्रमित्युच्यते इति, तदपि न युक्तम्; स्वसंवेदननिष्ठत्वेनैकस्यै-वाकारस्यानुभवान्न जातु ज्ञानं ज्ञानान्तराकारमनुभवति। अननुभवे च युगपद-नेकाकारज्ञानोत्पादकस्य कथं चित्रत्वं भिन्नसन्तानानेकाकारज्ञानवत् ? अथ तैरेकसन्तानोद्भवैरेको विकल्पश्चित्राकाराध्यवसायी जन्यत इति, न; स्पष्टाव-भासिनोऽपि चित्रज्ञानस्य दर्शनात्। न च विकल्पस्य स्पष्टावभासित्वं भवद्भिरिष्टम्। विकल्पोऽपि यद्येकाकारः, तदा कथं चित्राकाराध्यवसायी ? भिन्नाकारश्चेत् कथमभिन्नस्य भिन्नाकारतेति ? वासनाप्रपंचोऽप्यनेनैव[1] निरस्तः।

अथ युगपदुत्पन्नानेकज्ञानानाम् [2]एकोपादानजन्यत्वेनान्योन्यसंवेद्यत्वमिष्यते, तेनानेकाकारोपलम्भ एव चित्रप्रतिभास इति। नैतदस्ति, यदि हि ज्ञानं ज्ञाना-न्तराकारं स्वीकुर्वदुपलभ्यते, ततः कथमेकाकारं तदाकाररहितं च ? कथं तत्रास्य संवेदनम् ? तद्वदर्थस्यापि स्यात्। अतदात्मभूतश्चेदाकारः[3] संवेद्यते निष्प्रामाणिक्येवाकारकल्पना स्यादिति।

## ❋ चित्राद्वैतसिद्धिः ❋

अस्तु तर्हि [4]चित्राद्वैतम्। न चैवं बाह्यम्, तस्य [5]विवेच्यमानस्य भिन्नात्म-नोऽसम्भवात्। न च ज्ञानस्यापि विवेचनं सम्भवति, न हि ज्ञानेन स्वयमात्मा विविच्यते, तस्याभिन्नात्मस्वरूपस्यैव वेदनात्। नापि ज्ञानान्तरेण, तस्यापि स्वात्मसंवेदनमात्रत्वात्। अथ पूर्वज्ञानाकारादप्रतिभासमानादिदानीं केवलः प्रतिभासमानोऽन्य इति विवेचनम्, न, पूर्वस्य परोक्षत्वेनासंवेदनात्। तदप्रतीतौ च ततोऽहं भिन्नमिति कथं प्रतिपद्यते ? अथ स्मृत्या ज्ञायते, न, स्मृतेरप्रमाणत्वात्। अनुभवजन्यत्वेन प्रमाणमेवेति चेत्, न; तज्जन्यत्वे प्रमाणाभावात्। न ह्यनुभवमविदित्वैव स्मृतिः 'अनुभवादहमुत्पन्ना'—इति

---

१. अनेनैव = विकल्पज्ञाननिरासेनैव।

२. एकोपादानजन्यत्वेन = आलयविज्ञानात्मकैकोपादानजन्यत्वेन।

३. आकारः = ज्ञानान्तरस्याकार इत्यर्थः।

४. चित्राद्वैतम्—एकमेव ज्ञानं चित्राकारं भवतीति चित्राद्वैतवादिनः।

५. विवेच्यमानस्य = बुद्धया पृथक्क्रियमाणस्य।

जानाति। अनुभववेदने त्वनुभव एव स्यान्न स्मृतिरिति। एतेनानुमानादिज्ञानं निरस्तम्, तस्यापि स्वसंविन्निष्ठत्वान्नान्यसंवेदने सामर्थ्यमस्ति। अन्यवेदने हि तदाकारापत्तौ तदेव स्यादिति। तस्मादशक्यविवेचनत्वाद् ग्राह्यग्राहकनीलाद्याकारचित्रबुद्धिरेकैवेति सिद्धं चित्राद्वैतम्। प्रमाणत्वेनेत्थं स्वभावस्योपलम्भाद् विरोधोऽपि नास्तीति।

## ❀ चित्राद्वैतनिरासः ❀

[1]अत्रोच्यते—[2]संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् इत्यनेनैव सूत्रेण सर्वस्याप्यद्वैतवादस्य निरस्तत्वादनुपपत्तिस्तथा चैतदुत्तरत्र प्रपंचयिष्यामः। किन्त्वेतावदिह पर्यनुयुज्यते—यदि चित्राद्वैतवाद एवाभिप्रेतो भवतः, तदा किमर्थं वेदनिराकरणे [3]महाप्रयासः? तत्रापि हि बोधस्वभाव एक एवात्मा विश्वाकार इति परमार्थः। तथा च [4]सर्वं खल्विदं ब्रह्मेति, [5]ज्ञानघन एवायं पुरुषः, इति [6]एकमेवेदं न द्वितीयम् इति च श्रुतिः। एतस्यैव वेदार्थस्य निश्चयार्थमिदं शास्त्रमित्येवमेव भवतोपि वक्तुं युक्तम्। [7]शारीरकादिशास्त्रकारवत्

---

१. चित्राद्वैतं प्रतिविधत्ते—अत्रोच्यत इत्यादिना।

२. न्या० सू० ४।१।४१। सर्वमेकम्, द्वेधा, त्रिधा— इत्यादयः सख्यैकान्तवादाः। तेषामसिद्धिः, कारणाभावात्। यदि कारणं स्वीक्रियते तदापि कारणस्य नियतप्रख्यातो व्यतिरेकात् सर्वं नियतसंख्याकमिति न सिद्ध्यतीति तदर्थः।

३. वेदनिराकरणं समन्तात् सामन्तभद्राः प्रयेतिरे—

नापौरुषेयमित्येव यथार्थज्ञानसाधनम्।
दृष्टोऽन्यथापि वह्न्यादिरदुष्टः पुरुषागसा॥ (प्र० वा० ३।२८४)
अपौरुषेयतापीष्टा कर्तॄणामस्मृतेः किल।
सन्त्यस्याप्यनुवक्तार इति धिग्व्यापकं तमः॥ (प्र० वा० ३।२३९)
तेनाग्निहोत्रं जुहुयात् स्वर्गकाम इति श्रुतौ।
खादेत् श्वमांसमित्येष नार्थ इत्यत्र का प्रमा॥ (त० सं० ३५२७)
दुर्भणत्वानुदात्तत्वक्लिष्टत्वाश्रव्यतादयः।
वेदधर्मा हि दृश्यन्ते नास्तिकादिवचस्स्वपि॥ (त० सं० का० २७८८)

४. छां० उ० ३।१४।१ इदं सर्वं जगद् ब्रह्मात्मकमेवेति तदर्थः।

५. बृ० उ० २।४।१२ विज्ञानघन एवेति श्रुत्यानुपूर्वी।

६. छां० उ० ६।२।१ एकमेवाद्वितीयमिति वाक्यानुपूर्वी।

७. शारीरकम्—दुःखबहुलत्वात् कुत्सितं शरीरम् = शरीरकम्, तत्र भवः =

न तु तदप्रामाण्यं वक्तुं न्याय्यम् । तदभिन्नार्थत्वेन त्वच्छास्त्रस्यापि अप्रामाण्यप्रसंगादिति । [1]स्यादेतत्—

चित्राकारतापि प्रतिपत्तुमशक्यत्वादवास्तवी एव, तथा हि—स्वसंविदितं ज्ञानं स्वसंवेदनाकारवेदन एव निमग्नत्वाद् नाकारान्तरवेदनम् । तद्वेदनेऽपि को विरोध इति चेत्, स्वरूपपररूपासम्भव एव । तद्धि वेदनं स्वरूपेणाकारान्तरं वेत्तीति न युक्तम्, स्वरूपस्य स्वात्मनि व्यवस्थानात् । स्वरूपे निविष्टं यद्रूपं तत् स्वाभिमुखमेव कथं परं वेत्ति ? अन्याभिमुखं तदिति चेत्, तेन तर्हि स्वात्मा न प्रतीयते, ततः सन्तानान्तरवेदनवन्न द्वयप्रतीतिः । यस्य[2] तदाभिमुख्यद्वयं स एक एवेति चेत्, द्वयमेतदिति कः प्रतिपत्तिमान् ? स एवेति चेत् पुनराभिमुख्यद्वयं स्वसंवेदनं च तृतीयं प्रसज्यते । ततस्त्रयवेदनेऽपर आत्माभ्युपगन्तव्यः, तस्याभिमुख्यत्रयं स्वसंवेदनं च चतुर्थं प्रसज्यते । पुनरपरः पुनरपर इति महत्यनर्थपरम्परा स्यात् । तस्मादेकमेव वेदनं तत्र भेदावभास [3]उपप्लव एव इति । ज्ञानमपि स्वरूपेणाप्रतिपन्नमसदेवेति शून्यतैवावशिष्यते । न हि तदन्याप्रतिपत्रा तद्रूपपरावृत्तं शक्यं प्रतिपत्तुम् । न चावेदनाद् व्यावृत्तत्वानवगमवेदनमिति व्यवस्थापयितुं शक्यमिति । तदुक्तम्—

[4]इदं वस्तुबलायातं यद्वदन्ति विपश्चितः ।
यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा ॥ इति ।

यदि [5]स्वयमेवार्थानामेतदभिप्रेतं यद्विचार्यमाणो निवर्तते इति । ततः किमत्र

---

शारीरको जीवः, तस्य पारमार्थिकस्वरूपबोधकं शास्त्रं शारीरकम् = वेदान्तदर्शनम् । यद्वा शरीरे भवः शारीरो जीवः, तं ब्रह्मरूपतया कायतीति शारीरकं वेदान्तदर्शनम् ।

१. माध्यमिकः शङ्कते—स्यादेतदिति ।

२. यस्य = ज्ञानक्षणस्य ।

३. उपप्लवः = विपर्ययः, समारोपः, कल्पना, विप्लवो वा, तथा चाहुः कोशकाराः—"उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि" ।

४. प्र० वा० ३।२१० वस्तुबलायातम्—वस्तुस्वभावेनैव आयातम् = सिद्धमेतद् वक्ष्यमाणम् । वादिराजस्त्वन्यथार्थमाह—"वस्तु तात्त्विकं बलमभिमतसाधनसामर्थ्यं यस्य, स वस्तुबलः, आगमो ज्ञानं वचनं वा" (न्या० वि० वि० पृ० २।१४) ।

५. तुलना—"तस्माद् यथा यथा वस्तु चिन्त्यते तथा तथा विशीर्यते एवेति

वयं कुर्मः ? न चाविचारितं वस्तु न्यायवादिना प्रतिभासमात्रेणाभ्युपगन्तुं युक्तम्, स्वप्नाद्यर्थस्याप्यभ्युपगमप्रसङ्गादिति । कथं तर्हि परपक्षव्युदासेन प्रत्यक्षादि-स्वरूपप्रतिपादनम् ? उक्तमत्र सांव्यावहारिकस्येत्यादि । तस्मादिह सर्वधर्मशून्यं प्रतिभासमात्रमद्वैतं न ब्रह्माद्वैतादितुल्यमिति ।

तदेतदप्ययुक्तम्, यतो वेदेऽपि एकमेवेदमित्यवधारणात्, न चित्रत्वं वस्तुतः परिणामित्वं वाभिप्रेतम् । यथा भवतां सांव्यावहारिकमात्रेण साकारत्वक्ष-णिकत्वादयो धर्मा उक्तास्तथा वेदेऽपि नित्यत्वव्यापकत्वादयो धर्मा इति । यथा च भवतान्यव्यावृत्तिमुखेन चाद्वैतमुक्तं तथा वेदेपि अगन्धमरसमरूपम् इत्यादि-नोक्तमिति । अथ न किंचिदप्यस्तीति शून्यमभिप्रेतम्, तदयुक्तम्, स्ववचनो-च्चारणविरोधात् । उपप्लव एवोच्चारणमिति चेत्, तथापि येन यच्चोपप्लूयते, तदस्त्येव । अन्यथा हि तमोऽकाश्यमेवेदं सर्वं स्यादिति । यदि नामास्ति किंचित्ततः किम् ? ननु वेदनिराकरणं न कर्त्तव्यम्, तत्रापि विद्याविद्ययोः प्रतिपादनात् । अथ वेदेऽन्यनिराकरणेनाद्वैतम्प्रतीतम्, अत्र पुनरन्यन्न विधीयते न प्रतिषिध्यते, अपि तु भेदप्रतिभासस्य मिथ्यात्वप्रतिपादनादेवाद्वैतमिति । तदयुक्तम्, यावद्धि भेदो न प्रतिषिध्यते तावत् [1]तत्प्रतिभासस्य कथं मिथ्यात्व-प्रतिपादनम् ? ननु [2]परामर्शादिव भेदवेदनमतथ्यम्, तथा हि—स्वपरवेदनं यदि भेदवेदनं, तदा स्वसंवेदनं परवेदनं चेत्युक्तं स्यात्, तथा च स्वसंवेदनं स्वात्मनिष्ठं परवेदनमपि परस्य स्वात्मनिष्ठमिति नैकमपि भेदवेदनम् । अथ नीलपीतादिवेदनं भेदवेदनम्, तदप्यसद्, यतो नीलवेदनं नीलात्मनिष्ठं पीतवेदनं पीतात्मनिष्ठमिति सर्वं वेदनं स्वसंवेदनमेवेति किमत्र भेदवेदनम् ? अथानेकनीलाद्यर्थविषयमेकं वेदनं भेदवेदनम्, तथापि तदेव नीलवेदनं तदेव पीतवेदनमित्यभिन्नवेदनस्यैव पर्यायाभिधानमात्रं स्यात् । न चाभिन्नवेदनाद् भिन्नव्यवस्था युक्ता, अतिप्रसंगात् । तस्मान्न भेदप्रतिभासः सम्यगिति ।

तदेतदाकाशचर्वणमिव [3]सौगताभिधानमसम्बद्धमेव प्रतिभाति । तथा

---

किमत्र कुर्मः ? तस्मादाह—विज्ञानं विज्ञानरूपतया शून्यमिति सकलधर्म-शून्यतैव न्याय्या" (वार्तिकालङ्कार, पृ० २८६) ।

१. तत्प्रतिभासस्य = भेदप्रतिभासस्य ।

२. भेदवेदनशब्दोच्चारणाद् यत्परामृश्यते तन्मिथ्येति भावः ।

३. आकाशचर्वणम् = गगनरोमन्थः । यथा वियतश्चर्वणमसम्भवि निरर्थकं च तथा भेदप्रतिभासस्य निरासायासोऽसम्भाव्योऽर्थक्रियाविरहितश्च । वेदान्तिब्रुवाणां हि भेदं निराकुर्वतां स्यादप्यभेदज्ञानान्मुक्तिः प्रयोजनं कथञ्चित् । सौगताप-सदानां तु तदपि नास्तीति भावः ।

हि—भेदप्रतिभासस्तावत् सर्वेषां भवति, तस्यासत्यता कुतः प्रतीयते—किं तत एव प्रतिभासाद् ? उत प्रतिभासान्तरादिति ? तत एवेति, न युक्तम्, तस्य भेदविषयत्वात्। न हि भिन्ना एतेऽर्था इति प्रतिभासः स्वात्मनोऽसत्यतां निश्चिनोति, तन्निश्चये हि विपर्ययात् प्रवृत्तिर्न स्यात्। अथ ज्ञानान्तरेणासत्यत्वं निश्चीयते, तदपि ज्ञानान्तरं स्वसंवेदननियतं कथमन्यस्यासत्यत्वं वेत्ति ? अथोभयविषयं कथं न भेदावगतिः ? उभयविषत्वेऽपि न भेदावगतिरिति स्ववचनविरोधः। पराभ्युपगमेनाभिधानादविरोध इति चेत्, स पराभ्युपगमः किं स्वाभ्युपगमाभेदेनावगतः ? अथ भेदेनेति ? यद्यभेदेनावगतः, तदासौ स्वाभ्युपगम एव स्यात्। अथ भेदेनावगतः, तदवस्थ एव विरोधः। लोकव्यवहारानुवाद एष इति चेत्, न; स खलु लोकव्यवहारः तत्त्वदृष्टेरर्थान्तरम् ? अनर्थान्तरं वेति ? यदि नार्थान्तरं, ततस्तत्त्वदृष्टिरेव [1]लोकव्यवहारः, ततस्तद्व्यहारादेव भेदसिद्धिः। अथ तत्त्वदृष्टेरर्थान्तरं लोकव्यवहारः, ततः कथं न भेदः ? उपप्लव एष इति चेत्, सोपि तत्त्वदर्शनाद् भिन्नः ? अथाभिन्नः इति ? पूर्ववत्प्रसंगः।

[2]सांवृतोऽस्ति भेद इत्यपि न युक्तम्, संवृतिरपि तत्त्वदृष्टेरन्यानन्या वा ? इत्यनिवृत्तः प्रसंगः। तस्माद्द्वैतवादिनां वरं मौनं ज्यायः। पुनरप्यद्वैतं विस्तरेण निराकरिष्यामः।

## ❀ स्वसंवेदनतानिरासः ❀

स्वसंवेदनवादी तावदनुयुज्यते—वेद्यवेदनभेदाध्यवसायस्य मिथ्यात्वं केन निश्चीयते ? न तावत् तेनैव, तस्य भेदनिश्चयरूपत्वात्। नापि ज्ञानान्तरेण, ज्ञानस्य [3]ज्ञानान्तरविषयत्वानभ्युपगमाद्, अभ्युपगमे वा ग्राह्यग्राहकवैधुर्यादित्ययं हेतुरसिद्धः स्यात्। अथ भ्रान्त्या ज्ञानस्य ज्ञानान्तरविषयत्वम्, न; भ्रान्तेरप्रमाणत्वात्[4]। एतच्चानुमाने प्रतिपादयिष्यामः।

का चेयं भ्रान्तिः—किं स्वाकारग्रहणमात्रम् ? किं वान्यत्र स्वाकारारोपणम् ? उत स्वात्मनि अन्याकारारोपणमिति ? न तावत् स्वाकारग्रहणमात्रं भ्रान्तिः, सर्वज्ञानानां भ्रान्तत्वप्रसंगात्। नाप्यन्यत्र स्वाकारारोपणं भ्रान्तिः, तदन्यस्मिन्नदृष्टे

---

१. तत्त्वदृष्टेरर्थान्तरम् = तत्त्वदर्शनात्मकाद् व्यवहाराद् भिन्नमित्यर्थः।

२. सांवृतः = संवृत्या निर्वृत्तः, अविद्याविजृम्भित इति यावत्।

३. ज्ञानान्तरावेद्यत्वं स्वसंवेदनत्वमित्यभ्युगमः सौगतानाम्।

४. तथा च तया वेद्यवेदनाध्यवसायस्य मिथ्यात्वं निश्चेतुं न पार्यत इति भावः।

स्वाकारारोपणासम्भवात्। न हि सर्वथानुपलब्धेऽर्थे कस्यचिदाकारस्यारोपणं दृष्टम्। अथ स्वात्मनि अन्याकारारोपणं भ्रान्तिः, तत्रापि किं दृष्टाकारारोपणम्? अथादृष्टाकारारोपणमिति? दृष्टाकारारोपणं तावन्न युक्तम्, मिथ्याकारस्यादृष्टत्वात्। न हि भवतां मते ग्राह्यग्राहकभेदाध्यवसायस्य मिथ्यात्वं क्वचिद्ध्यक्षेणोपलब्धं यदाकारारोपणं ज्ञानान्तरे स्यात्। अथादृष्टाकारारोपणम्, तन्न; अदृष्टाकारारोपणादर्शनात्। सर्वत्र हि भ्रान्तौ [1]दृष्टस्यैव पीताद्याकारस्य शंखादावारोपणं दृश्यते। चन्द्रादिष्वपि द्वित्वादिधर्मस्यान्यत्र दृष्टस्यैवारोपणमिति। यदि चादृष्टाकारारोपणं भ्रान्तिः, तदा सा द्विचन्द्रादिभ्रान्तिवत् तदाकाराविसंवादिनी न स्यात्। ततश्च ग्राह्यग्राहकभेदाध्यवसायस्य मिथ्यात्वज्ञानमप्रमाणमेव स्यात्। तदप्रामाण्ये च ग्राह्यग्राहकभेदाध्यवसायः सम्यगेवेति। बाह्यार्थभ्रान्तावपि सर्वथानुपलब्धौ बाह्यार्थाकारः कथमारोप्यते? न हि राजकोशरत्नविशेषाकारोऽतद्दर्शिना क्वचिदारोपितो दृश्यते। अपि च भ्रान्तौ बाह्यार्थाकारः किं ज्ञानान्तरेणारोप्यते? अथ सैव तदाकारेति? ज्ञानान्तरेण तावन्नारोप्यते, तदविषयत्वात्, न ह्यविषये रसादिष्विव चक्षुषा कश्चिदाकारः केनचिदारोप्यते। न च त्वन्मते ज्ञानं ज्ञानान्तरस्य विषयः। अथ भ्रान्तिरेव तदाकारेति, न; [2]अभिन्नात्मनो भिन्नानेकाकारविरोधात्। अथाविद्यमानैवानेकाकारतावभाति, न; सर्वशून्यतावकाशप्रसंगात्। तत्र च [3]दोष उक्तः। असत्ख्यातिवादश्च स्यात्। [4]स च भवतः स्वकृतान्तविरोधी। अथानेकाकारत्वं ज्ञानस्यैव स्वभाव इष्यते, न चात्मीयेनैव स्वरूपेण कस्यचिद्विरोध इति। नन्वेवं तर्हि किं समस्तमर्यादातिक्रमेण? वरं बाह्यार्थस्यैव तद्रूपमिष्यताम्। तदभ्युपगमे हि न लोकविरोधो न युक्तिविरोध इति। न हि धर्मधर्मिणोरेकत्वमभ्युपगच्छतैकस्यानेकाकारत्वविरोधः परिहर्तुं शक्यते। सर्वजगत्स्वभावाभ्युपगमेऽप्येकस्य विरोधाभावप्रसंगात्। [5]तस्माद्, अनेकधर्माधिकरणमेकमेवावयविनो रूपमित्यभ्युपगमे न कश्चिद्विरोधोऽस्ति।

---

१. आरोपस्य लक्षणमेवं प्राहुरद्वैतवादिनः—"स्मृतिरूपः परत्र पूर्वदृष्टावभासः" (शां० भा० पृ० १८)

२. एकं भ्रान्तिज्ञानं कथं बाह्यघटपटाद्यनेकाकारं भवेत्? एकस्यान्तरिकस्य बाह्यैरनेकैः तादात्म्यानुपपत्तेरिति भावः।

३. तथा सति वचनोच्चारणमपि न स्यादित्युक्तो दोषः।

४. सः = असत्ख्यातिवादः, भवतः = योगाचारस्य, स्वकृतान्तविरोधी = स्वसिद्धान्तविरोधी, यतः किल तत्रभवन्त आत्मख्यातिवादिन इति स्मारयामि।

५. अनेकधर्माधिकरणम् = रक्तारक्तकम्पाकम्पादिप्रत्यनीकानेकधर्माधिकरणम्।

## ❀ न विवेचनादभावोऽवयविनः ❀

यच्चेदमुक्तं धिया विविच्यमानस्य बाह्यस्यासम्भवात्, न तु ज्ञानस्य विवेचनं सम्भवतीति, तदपर्यालोचिताभिधानम्; स्वसंवेदनपक्षे हि ज्ञानं तावदुपलब्धियोग्यत्वात् कदाचिद् विवेचयितुं शक्यते। बाह्यं पुनरत्यन्तानुपलम्भस्वभावं कथं विवेच्यते? नह्यदृष्ट्वा राजान्तःपुराभरणादिकं विवेचयितुं शक्यते। ज्ञानाकारस्य बाह्यत्वेनाभिमतस्य दृश्यत्वाद् विवेचनोपपत्तिरिति चेत्, किं [1]तद्विवेचनात् तस्यैवाभावोऽथान्यस्येति? तस्यैवेति न युक्तं, ज्ञानस्य निराकारत्वप्रसंगात्। ततश्च चित्रैकत्वविरोधः। नाप्यन्यस्याभावः, अन्यविवेचने ह्यन्याभावसिद्धौ त्रैलोक्याभावः स्यात्। अथ तस्यैव ज्ञानादर्थान्तरत्वं निषिध्यते, न; अप्रस्तुतत्वात्। नात्र ज्ञानादर्थान्तरत्वानर्थान्तरत्वं वा प्रस्तुतं, किन्तु चित्राकारता कथमेकस्येति प्रस्तुतम्। तत्र ज्ञानादर्थान्तरत्वे चित्राकारतायाः सुतरामनुपपत्तिरित्युक्तम्। अथ बाह्यस्यानेकैः पुरुषैर्विवेचनादनुपपत्तिः, ज्ञानं पुनः स्वसंवेदनमात्रत्वाद् अनेकाकारमात्मानं विदित्वा निवृत्तं केन विवेच्यते? तदयुक्तम्; ज्ञानस्य ज्ञानान्तराविषयत्वे ह्यद्वैतवाद एव स्यात्। [2]कथंचिद्विषयत्वे वा तथैव विवेचनमपीति कथं विवेचनानुपपत्तिः। बाह्यस्यानेकैः पुरुषैर्विवेचनादनुपपत्तिरिति—इत्येतदपि व्याहतत्वादयुक्तम्, यस्य ह्यनेकपुरुषज्ञानविषयत्वं तस्य कुतोऽसत्त्वम्? भ्रान्तितस्तस्यानेकपुरुषज्ञानविषयत्वमिति चेत्, भ्रान्तं तर्हि विवेचनं ततोऽप्रमाणत्वान्नासत्त्वसाधकम्। भ्रान्तिरपि अर्थसम्बन्धतः प्रमेति चेत्, तदयुक्तम्; बाह्यार्थेन हि भ्रान्तेः सम्बन्धाभावात्। तत्सम्बन्धे वा न तस्यासत्त्वमिति।

अपि च किमवयविबुद्ध्या अवयवी विविच्यते? अथावयवबुद्ध्येति? न तावदवयविबुद्ध्येति, विविच्यमानस्यावयविनोऽसत्त्वं सिध्यति; [3]तस्यास्तत्सत्त्वगृहीतिरूपत्वान्नीलादिबुद्धिवत्। यदि पुनस्तत्सत्त्वबुध्या तदसत्त्वं व्यवस्थाप्यते, तदा[4] तदसत्त्वबुध्या तत्सत्त्वं व्यवस्थाप्यत इति स्यात्। ततः साध्वी व्यवस्थितिः। अथ तदसत्त्वबुध्या विविच्यमानस्य तस्यासत्त्वम्, भवत्वेवं यत्र तदसत्त्वबुद्धिर-

---

१. तस्य = घटादिबाह्याकारस्य ज्ञानतो विवेचनात् तस्यैव = घटाद्याकारस्यैवाभावोऽन्यस्य वेति विकल्पार्थः।

२. कथञ्चिदिति, संवृत्या विषयविषयिभावमारचय्येति भावः।

३. तस्याः = अव एव बुद्धेः, तत्सत्त्वगृहीतिरूपत्वात् = अवयविसत्त्वग्रहणरूपत्वात्।

४. अयं भावः—यद्यवयविसत्त्वबुद्ध्याऽवयविनोऽसत्त्वं व्यवस्थाप्यते, तदाऽस्थिरत्व-

भ्रान्तास्ति, न सर्वत्र घटाद्यसत्त्वबुद्धिर्भवति, ततो न सर्वत्रासत्त्वसिद्धिः। अथावयवबुध्या विवेच्यमानस्य तस्यासत्त्वम्, तदप्ययुक्तम्; यतोवयवबुद्धिरवयवानामेव सत्त्वं विधत्ते, नावयविनः सत्त्वं विधातुं प्रतिषेद्धुं वा शक्नोति, तदविषयत्वात् तस्याः।

अथावयवेषूपलभ्यमानेष्वयवी नोपलभ्यते, ततोऽसौ नास्त्येवेति, एवं तर्हि गन्धस्पर्शरूपेषूपलभ्यमानेषु रसो नोपलभ्यते पुरुषान्तराज्ञानं च, ततस्तयोरप्यभावः प्राप्नोति। इन्द्रियान्तरेण रसस्य पुरुषान्तरेण तज्ज्ञानस्य चोपलम्भान्नाभाव इति चेत्, एवं तर्हि अवयविनोप्युपलम्भान्तरेणोपलम्भान्नाभावः। तथा हि— भिन्नाकारप्रतिभासोऽवयवेष्वेव भवति, अवयविनि त्वभिन्नाकारः प्रतिभास इति। अभिन्नेन्द्रियविषयत्वान्न भेद इति चेत्, न; नीलपीतादिभिरनैकान्तात्। अपि चेन्द्रियाणामेव कथं भेदः? प्रतिभासभेदादिति चेत्, स एवान्यत्राप्यस्तु किमिन्द्रियभेदोपन्यासेन? अथावयवी यद्यस्ति किमित्यवयवव्यावृत्तः कस्यचिदपि न प्रतिभाति? क एवमाह? ममैव तावत् प्रतिभाति। भ्रान्तिरेषा तवेति चेत्, तथैवाभेदप्रतिपत्तिर्भ्रान्तिः सर्वलोकव्यवहाराविसंवादिनी खल्वेषा मम प्रतीतिः— बहुभिस्तन्तुभिरयमेकः पटो निष्पादित इति, कथं भ्रान्तिः स्यात्? तथोत्पादोऽपि, क्षणभंगनिषेधादनुपपत्तेः, तस्मान्न विवेचनादभावोऽवयविनः। एतेन तन्त्वपकर्षणेन पटबुद्धिरनुपपन्नेति निरस्तम्। यदि हि तन्तूनां विश्लेषणमपकर्षणं विवक्षितं, ततः संयोगविनाशादभावस्तस्येष्यत एव। न च यस्य प्रध्वंसः तस्यात्यन्तासत्त्वं, ज्ञानस्याप्यत्यन्तासत्त्वप्रसंगात्। बुध्यापकर्षणं तु विवेचनेनाभिन्नार्थत्वात्तन्निषेधेनैव निषिद्धमिति।

## ❋ संवेदनस्य स्वाभिमुख्यनिरासः ❋

यदपि स्वसंवेदनमात्रसिध्यर्थं स्वाभिमुख्यं पराभिमुख्यं चेत्यादिकमुक्तं, तत्र

---

बुद्धया स्थेमा, असातत्वबुद्धया सातता, अनात्मबुद्धया चात्मा सिद्धयेत। एवं सर्वः सर्वस्मात् फलेत्, तदुक्तम्—

अन्यत्प्रतीत्य यदि नाम परोऽभविष्यत्,
जायेत तर्हि बहुलः शिखिनोऽन्धकारः।

सर्वस्य जन्म च भवेत् खलु सर्वतश्च,
तुल्यं परत्वमखिलेऽजनकेऽपि यस्मात्॥

(मध्यमकाव० ६।१४)

ज्ञानस्य स्वसंवेद्यत्वं नास्तीति वक्ष्यामः। तेन स्वाभिमुख्यं नेष्यते, पराभिमुख्यं ज्ञानधर्मोऽभ्युपगम्यत एव, यस्य विषयविषयिभावसंज्ञा। तद्वेदनेऽप्यर्थस्य वेदनादनवस्थापि नास्ति। धर्मधर्मिणोश्च भेदान्न धर्मभेदे धर्मिणोऽपि भेद इति वक्ष्यामः। यतश्चाभिन्नेऽपि ज्ञाने नीलपीतादयोऽनेकार्थाः केचिदवभान्ति तस्मादिदमप्ययुक्तम्। न चाभिन्नवेदनाद् भिन्नार्थव्यवस्था युक्ता, अतिप्रसंगादिति। तस्मादेकस्यापि ज्ञानस्यानेकार्थवेदने कोऽपि न दोष इति।

## ❀ वृत्त्यनुपपत्तिनिराकरणम् ❀

यदप्यवयविनिराकरणे वृत्त्यनुपपत्तिरित्युक्तम्। तत्र किमिदं [1]स्वतन्त्रसाधनम्? अथ प्रसंगापादनमिति? स्वतन्त्रसाधनं तावन्न युक्तम्, न हि भवतां पक्षे कस्यचिदपि कात्स्न्येनैकदेशेन वा क्वचिद् वृत्तिरस्तीत्यतो वृत्त्यनुपपत्तेः सर्वस्याप्यभावः प्राप्नोति। नापि प्रसंगसाधनम्, प्रदीपप्रभावद् व्याप्त्यसम्भवात्। व्याप्त्यभ्युपगमे वा प्रदीपवदेव न कृत्स्नैकदेशाभ्यामवयविवृत्तेरत्यन्ताभावः, व्यापकाभावसिद्धौ हि व्याप्याभावसिद्धिर्युक्ता। न चात्यन्तानुपलब्धाया वृत्तेर्व्यापकत्वं शक्यमवगन्तुं, तत्कथं वृत्त्यभावादवयविनोऽसत्त्वं? क्वचिद् व्यापकत्वावगमेपि नावयविनोत्यन्ताभावः? [2]परेण वृत्तेरवयविव्यापकत्वाभ्युपगमादिति चेत्, तदयुक्तम्; एवं हि [3]परेण मूलप्रकृतेरशेषकार्यव्यापकत्वाभ्युपगमात् तन्निवृत्तौ सर्वस्यापि बोधाबोधस्वभावस्य कार्यस्याभावः स्यात्। न च [4]परैरवयविनः कृत्स्नैकदेशाभ्यां [5]वृत्तिरभ्युपगता इत्यतः पराभ्युपगमविरोधोद्भावनमपि नोपपद्यते। भिन्नेष्ववयवेष्वभिन्नोऽवयवी समवायवृत्त्यैव वर्तते इति पराभ्युपगमः। समवायोऽस्यास्तीति वक्ष्यामः।

वंशोऽपि स्तम्भेषु संयोगवृत्त्या वर्तते, नैकदेशेन, एकदेशस्यावृत्तित्वात्। कथं तर्हि वंशस्तम्भेष्वेकदेशेन वर्तत इति प्रतीतिः? नेयं दुर्घटा, देशोऽवयविनः खल्ववयवस्तेनैकेनावयवेन सह संयुक्तं च संपश्यतस्तथा प्रतीतिरिति। न

---

१. स्वतन्त्रसाधनम् = स्वसिद्धान्तसाधनम्।

२. परेण = नैयायिकेनेत्यर्थः।

३. साङ्ख्याः प्रधानाख्यां मूलप्रकृतिं व्यापिकां प्राहुः—"प्रकृतेर्विभुत्वयोगात्" (सां० का० ४२)।

४. परैः = नैयायिकैः।

५. वृत्तिः = संयोगः।

पुनरेकदेश एव वृत्तिर्वृत्तिहेतुर्वा [1]परमाण्वाकाशादेः संयोगाभावप्रसंगात्, ततः सर्वकार्यानुत्पाद एव स्यादिति ।

अथ यदेकं तदेकत्रैव वर्तते यथा रूपमित्यतोऽवयव्यादेरेकत्वमभ्युपगच्छतानेकवृत्तित्वं नाभ्युपगन्तव्यमिति, न; तुल्यप्रमाणसिद्धत्वात् । यत एव प्रमाणाद् रूपस्यैकवृत्तित्वं सिद्धं तत एवावयव्यादेरनेकवृत्तित्वं सिद्धं किं नेष्यते ? यथा वा रूपाश्रयस्यानेकैर्गन्धरसादिभिः सह समवायस्तथावयव्यादेरपि अनेकाश्रयैः सहेति कोऽत्र विरोधः[2] ?

ननु च वृक्षे शाखा गवि शृङ्गमिति सर्वेषां प्रतीतिः, तत्कथमवयवानामाश्रयत्वमिति ? न, अन्यथा तत्प्रतीतेः । वृक्षाद्यवयविनि यथावस्थिते [3]तदधस्तनावयवसम्बन्धप्रतिबन्धादपतन्तं शाखाद्यवयवं पश्यतां वृक्षादौ तदाश्रयत्वबुद्धिर्भवति । अवयवानां त्वाश्रयत्वं तेषु सत्स्वेवावयविनोऽवस्थितिरसत्सु चाभाव एवेति । [4]एतेन रूपादीनामपि द्रव्याश्रितत्वं व्याख्यातम् । तद्दर्शनाद् नित्यानामपि आश्रितत्वं कल्प्यते । तथा सामान्यानां नित्यानामपि पिण्डेष्वेवोपलम्भान्न व्यवहारविषयत्वं नासत्सु पिण्डेष्वित्यतस्तदाश्रितत्वं व्यवह्रियते । तस्माद्—

---

१. परमाण्वाकाशादेरिति । अवयवाभावेनेति शेषः ।

२. अयमिहाभिसन्धिः—एकस्यानेकवृत्तिता निषिध्यत इत्यत्र केयमनेकवृत्तिता ? अनेकेषां वृत्तिता वा ? अनेकेषु वृत्तिता वा ? नाद्यः, अनेकेषां रूपाद्याकाराणामेकस्मिन् ज्ञाने वृत्तिता भदन्तैरप्यभ्युपगमात् । न द्वितीयः, तुल्ययोगक्षेमत्वात्—येनैवानुभवेनानेकेषां वृत्तिता सिध्यति, तेनैवैकस्यानेकेषु वृत्तिताऽपि । उभयनियामकस्यैकत्वाच्च—य एव समवायोऽनेकेषां वृत्तित्वस्य नियामकः, स एवावयविनोऽनेकत्र वृत्तित्वस्य नियामक इति ।

३. तस्य = वृक्षाद्यवयविनो येऽधस्तना अवयवाः, तैः सह शाखाया यः संयोगसम्बन्धः, स एव शाखापतनस्य प्रतिबन्धः, 'प्रतिबन्धो विसामग्री' ( न्या० कु० का० १।१० ) इति वचनात् । पतनप्रतिबन्धकत्वमेषामधस्तनावयवानां शाखाधारत्वमिह वृक्ष उपचर्य वृक्षे शाखा' इति व्यवहरन्ति । एतेन 'धारणादाधारः धारणं च पततः । यश्च पतति न तस्य धारणम्, यस्य च धारणं, न तस्य पतनोपलम्भः, परस्परविरोधात् ( प्र० वा० अ० पृ० ८१ )' इति प्रज्ञाकरोदीरितं प्रत्यादिष्टं भवति ।

४. एतेन = तदधीनस्थितिकत्वमेव तदाधारत्वमिति व्यवस्थापनेन ।

[1]स्यादाधारो जलादीनां गमनप्रतिबन्धनः।
अगतीनां किमाधारैः गुणसामान्यकर्मणाम् ॥

इत्येतदपि अपर्यालोचितार्थाभिधानम्, नहि गुरुत्वप्रतिबंधक एवाधारो लोके प्रसिद्धः किन्त्वन्यथापि। यथा दर्पणे मुखं, शरीरे दुःखादयः, खड्गे दीप्तिरिति तस्मादवयव्यादेस्तावदेकस्यानेकैः सह द्रव्यस्यैकस्य रूपादिभिरनेकैरिव संबंधविशेषो यत्नेन साध्यते। तत्राधाराधेयभावो यथासंभवं कल्प्यताम् इति।

अथ रूपादीनामपि द्रव्ये समवायो नेष्यते, किमाश्रयस्तर्ह्ययं प्रसंगः—यदेकं तदेकत्रैव वर्त्तत इति। अपि च रूपं रूपान्तरमुत्पादयति किं सर्वात्मनाऽथैकदेशेनेति ? यदि रूपान्तरोत्पादने सर्वात्मना रूपं पर्यवसितं, तदास्य ज्ञानादिजनकत्वं न स्यात्—न हि तस्यात्मभेदोऽस्ति, नाप्येकदेशेन निर्भागस्य देशाभावात्। देशस्यैव जनकत्वप्रसंगाच्च। ज्ञानमपि किं सर्वात्मना रूपादुत्पन्नं, उतैकदेशेनेति ? सर्वात्मना चेद्रूपादुत्पन्नं ज्ञानान्तरादुत्पन्नं, तर्हि न प्राप्नोति। नाप्येकदेशेन तस्य देशाभावात्।

विज्ञानमात्रवादिनो नाऽयं प्रसंग इति चेत्, न; तत्राप्येकस्य ज्ञानस्यानेकज्ञानजन्यत्वेऽनेकज्ञानजनकत्वेऽनेकाकारवेदकत्वे च प्रसंगो न निवर्त्तते। तदनभ्युपगमे चाद्वैतमेव स्यात्तत्र चोक्तं दोषजालं वक्ष्यते च। एतेनाधि-[2]पतिप्रत्ययसमनन्तरप्रत्ययभावोऽप्यनुपपन्नो द्रष्टव्यः। तस्माद् वृत्तिविकल्पेनाव-

---

१. प्र० वा० २।६९ अगतीनाम्=निष्क्रियाणां रूपादिगुणानां, द्रव्यत्वादिजातीनाम्, उत्क्षेपणादिकर्मणां चाधारैः किं प्रयोजनम् ? इत्याक्षेपः।

२. ज्ञानस्येन्द्रियमधिपतिप्रत्ययः, पूर्वज्ञानक्षणमनन्तरप्रत्ययश्चोच्यते। तिकपट्ठाने चतुर्विंशतिः प्रत्यया उक्ताः, नागार्जुनादिभिस्तु चत्वार एवावधारिताः—

चत्वारः प्रत्यया हेतुश्चालम्बनमनन्तरम्।
तथैवाधिपतेयं च प्रत्ययो नास्ति पञ्चमः ॥ (मा० का० १।४)

कोशेऽपि 'चत्वारः प्रत्यया उक्ताः' (अभि० को० २।६१) चतुर्णामिव प्रत्ययानां रूपभेदानुदाजहार माधवार्योऽतिविशदम्"—चत्वारः प्रत्ययाः प्रसिद्धाः—आलम्बनसमनन्तरसहकार्यधिपतिरूपाः। तत्र ज्ञानपदवेदनीयस्य नीलाद्यवभासस्य चित्तस्य नीलादालम्बनप्रत्ययात् नीलाकारता भवति, समनन्तरप्रत्ययात् प्राचीनज्ञानाद् बोधरूपता, सहकारिप्रत्ययादालोकात् स्पष्टता, चक्षुषोऽधिपतिप्रत्ययाद् विषयग्रहणप्रतिनियमः—उदितस्य ज्ञानस्य रसादिसाधारण्यप्राप्तेर्नियामकं चक्षुरधिपतिर्भवितुमर्हति" ( स० द० सं० पृ० ३९ )

यविनं निराकुर्वतः स्वशास्त्रार्थोऽपि निवर्तते इति। [1]एकस्यैव ज्ञानस्य तादृक्स्वभावश्चेद् अवयविनोपि तर्हि तथाभूतः स्वभावः समानयोगक्षेमत्वान्न पर्यनुयोज्यः।

यश्चोभयोः समो दोषः परिहारश्च तत्समः।
नैकः पर्यनुयोज्यः स्यात् तादृगर्थविचारणे॥ (श्लो० वा०पृ०३४१)

इतस्तर्हि नावयवी पृथगस्ति अवयवाग्रहे तदग्रहादिति। यस्याग्रहे यन्न गृह्यते, तन्न पृथगस्ति, यथा चन्द्राग्रहे चन्द्रान्तरमिति। [2]नायं हेतुरनैकान्तिकत्वात्। तथा हि—[3]कृत्तिकान्तराग्रहणे कृत्तिकान्तरं न गृह्यते, अथ च भिन्नाः कृत्तिकाः सन्ति असिद्धत्वाच्च हेतोः। तथाहि—दूरात् तन्त्वाद्यवयवानामग्रहेपि पटादिरवयवी गृह्यते। न च तत्त्वादिरूपेणाप्रतिभासनेपि तन्त्वादिग्रहणं कल्पयितुं शक्यम्, अतिप्रसंगादिति। [4]सेनावनवद् ग्रहणमिति चेत्, न; अतीन्द्रियत्वादणूनाम्। स्यान्मतिरेषा—यथा हस्त्यश्वरथादीनां वृक्षाणां च दूरात्तद्रूपाग्रहणेपि न ततोऽन्यत्र सेनेति वनमिति च ग्रहणम्। तथा दूरात्तन्त्वादिरूपेणाग्रहेपि तेष्वेव पटादिबुद्धिरिति। परमाणुव्यतिरिक्तास्तन्त्वादयोऽप्यवयव्यनभ्युपगमान्न विद्यन्ते, कथं तेष्वपि पटादिबुद्धिः? परमाणुष्वेवेति चेत्, न; अतीन्द्रियत्वादणूनां। न हि भ्रान्तिरप्यतीन्द्रियेषु इन्द्रियाद्भवितुमर्हति। न हि चाक्षुषं ज्ञानं रसादिषु भवति। यथा च परमाणुष्वतीन्द्रियेष्विन्द्रियजं ज्ञानं न भ्रान्तं नाप्यभ्रान्तं युक्तं, तथा तद्गतेषु गुणादिष्वपीति। अवयवाभावाच्छब्दसुखादेरप्युत्पत्तिर्न भवतीति तद्ग्रहणमपि न स्यादेतदेवाह—"[5]सर्वाग्रहणमवयव्यसिद्धेरिति"। केशसमूहे तैमिरिकोपलब्धिवदिति चेत्, अथ मनुषे यथा तिमिरोपहतचक्षुषः प्रत्येकं न केशाः प्रतिभान्ति, संहतास्तु प्रतिभान्त्येव, तथा परमाणवोऽपीति। यथा चानुपहतचक्षुषः प्रत्येकमपि केशाः

---

१. समानदोषतामापादयन् आत्मनोऽपर्यनुयोज्यतामाशङ्कते सौगतः—एकस्यैवेति।

२. 'तदग्रहेऽग्रहणाद्'—इति हेतुः साध्यसाधको न भवति, अनैकान्तिकत्वादित्युत्तरयितुराशयः।

३. कृत्तिका—मेषवृषराश्यन्तर्गतं नक्षत्रं कृत्तिका। तारापुञ्जात्मकत्वाद् अस्या घटिका प्रत्येकं तारिका कृत्तिका, तदन्यतमाग्रहणेऽन्यतमाग्रहणादिति भासर्वज्ञस्याशयः।

४. न्या० सू० २।१।३६

५. न्या० सू० २।१।३४ सर्वेषां द्रव्यगुणकर्मसामान्यविशेषसमवायानां ग्रहणं नोपपद्यते, तदाश्रयस्यावयविनोऽसिद्धेरिति तदर्थः।

प्रतिभान्ति, ततो न सर्वथातीन्द्रियास्तथा योगिनः परमाणवः प्रत्येकं प्रतिभान्ति ततस्तेपि न सर्वथातीन्द्रिया इति। एवं तर्हि न किंचिदतीन्द्रियमस्तीति प्राप्तं, सर्वेषां योगीन्द्रियविषयत्वात्। ततः सर्वेप्यर्थाः परमाणुवदस्मदादिभिः कदाचिदिन्द्रियेणोपलभ्येरन्। न चोपलभ्यन्ते, तस्मादतीन्द्रियत्वाददृष्टादिवन्नास्मदादिभिः परमाणवः प्रत्यक्षेणोपलभ्यन्ते, केशास्तु तिमिरोपहतचक्षुषोपि नातीन्द्रियाः, केशसमूहोऽयमिति प्रतीतेः। न त्वेवं परमाणुसमूहोऽयमिति कस्यचित्प्रतीतिरस्ति। यदि च सर्वत्राणुसंघात एव दृश्यते, तदा वृक्षसंघाते वनप्रतिपत्तिवदनेकधा जातिभेदप्रतिपत्तिर्न स्यात्। समुदायिनां भिन्नाकारत्वात् तत्समुदायेष्वनेकधा जातिभेदग्रहणमिति चेत्, पटतन्त्वादीनां तर्हि यद्यन्ये समुदायिनस्ततः सिद्धं पटतन्त्वादीनामन्यत्वम्।

अथ य एव पटस्य समुदायिनस्त एव तन्त्वादीनामिति कथं तर्हि जातिभेदोपलब्धिः? न हि सेनासमुदायेपि सेनादिलक्षणोपलब्धिरस्ति। [1]जातिप्रद्वेषिभिरपि तत्स्थाने व्यावृत्तिभेदोऽभ्युपगतः, सोपि अवयव्यनभ्युपगमे न स्यात्। न हि केशपुञ्जेभ्यस्तत्समुदायो व्यावृत्तस्तन्तुपटवत्प्रतिभाति। अर्थक्रियाभेदानुरोधात्प्रतिभासभेद इति चेत्, न; तददर्शनेपि प्रतिभासभेददर्शनात्।

योग्यतादर्शनादिति चेत्, काऽन्या खलु योग्यता जातिभेदं मुक्त्वा? अभिन्नाश्रयासौ योग्यतेति चेत्, न; तदवयवेष्वपि पटादिप्रत्ययप्रसंगात्। तस्यास्तत्रादर्शनादिति चेत्, अतीन्द्रिया तर्हि सा योग्यता येनाश्रये गृह्यमाणेऽपि न गृह्यते, ततश्च न कदाचिदपि पटादिप्रत्ययः स्यात्। समस्तावयवैस्तदर्थक्रिया साध्यते तेन समस्तोपलब्धावेव सा योग्यतोपलभ्यत इति चेत्, न; सर्वावयवानां द्रष्टुमशक्यत्वात्। तस्मादवयविसद्भावादेव जातिशब्दग्रहणं युक्तम्। तेन वृक्षत्वजात्युपलब्धौ तदाश्रयसमूहे वनसंज्ञा। संकेताद्वनं वनमिति प्रत्ययोऽप्युपपद्यते। तन्निमित्ताभावे हि संकेतोपि कर्तुं न पार्यत इति वनप्रत्ययस्याप्यभावः स्यादिति।

[2]अन्ये तु नाभिन्नप्रत्ययः क्वचिद्भिन्नेष्वर्थेष्वस्तीति मन्यमानाः

---

१. जातिप्रद्वेषिभिः सौगतैः सामान्यमपोहरूपमिष्यत एव। व्यावृत्तिः = अपोहः।

२. अन्ये = उद्योतकरादयो बहुत्वसङ्ख्याविषयं वनप्रत्ययमाहुः—"किं पुनरिदं वनं नाम? नेदं दुर्वचम्, उक्तमेतद्—बहुत्वसंख्या सविशेषणेति" (न्या० वा० पृ० २२३)।

सेनादिप्रत्ययोपि बहुत्वसंख्याविषय इत्याहुः । सत्ताविषय इत्यपरे। न तावत्सेनादिबुद्धौ बहुत्वसंख्या सत्तादिकं वा प्रतिभाति। अभिन्नप्रतिभासान्यथानुपपत्त्या चेत्कल्प्यते, पटादिप्रत्ययस्य तर्हि संख्यादिरेव विषयोऽस्तु। तस्यावयवविषयत्वेपि बाधकाभावादिति चेत्, साधकाभावेपि कथं [1]तद्विषयत्वम्। अवयवप्रतिभासवैलक्षण्यमेव साधकमिति चेत्, न; संख्यादिविषयत्वेपि तद्वैलक्षण्योपपत्तेः। तस्माद् यथा पटादिप्रत्ययस्य क्रियागुणविशिष्टप्रत्ययसामानाधिकरण्यान्न संख्यादिविषयत्वं, तथा सेनादिप्रत्ययस्यापि। तथा च सूत्रकृता सेनावनादिवद् ग्रहणमिति चोद्यस्य न सेनादिरप्यभिन्नत्वात्सैनिकादिभ्योऽर्थान्तरत्वाद्वेति प्रतिसमाधानं नोक्तं, किन्तु नातीन्द्रियत्वादणूनामित्युक्तम्। "भिन्नेष्वभिन्नव्यवहारो न भवतीति" ब्रुवाणस्य सूत्रविरोधोपि स्यात्। "[2]ते विभक्त्यन्ताः पदम्" इत्यन्तेन, न हि अवयवा अपि वर्णा एकं पदमित्युक्तम्। यदि च पुष्पितं छिद्यते वनं, महती गच्छति सेनेत्येवंभूतस्यापि प्रत्ययस्य गुणक्रियैकार्थसमवायनिमित्तत्वेन संख्यादिविषयत्वं समर्थ्यते। तदा [3]जातिपदार्थवाद्यपि शुक्लो गौर्गच्छतीत्यादिसामानाधिकरण्यं प्रत्यासत्तिविशेषमाश्रित्य समर्थयितुं शक्नोत्येव। ततश्च "[4]व्यक्त्याकृतिजातयस्तु पदार्थाः" इत्यप्रमाणमेव स्यात्। तस्माद् "[5]गुणक्रियाश्रय एव सेनादिबुद्धौ प्रतिभाति अभिन्नप्रतिभासस्तु तत्र भ्रान्त एव, दूराद्भेदस्याऽग्रहणाद् ग्रामे वृक्षा इति प्रतिभासवत्। पटादिप्रत्ययोप्येवमिति चेत्, न; विचारितत्वात्। यत्र वा रूपादिमति अभिन्नप्रतिभासो न भ्रान्तः स एवावयवीति। न च सर्वत्रैव भ्रान्तत्वम्। भेदग्रहणेन ह्यभेदप्रतिभासो बाध्यते। न च सर्वत्राभिन्नस्याग्रहणे भेदग्रहणमपि वास्तवं युक्तम्, भेदस्याभिन्नानेकाश्रयत्वात्। परमाणावभेदग्रहणमिति चेत्, न; अतीन्द्रियत्वात्। अपि चैते पटादिप्रत्ययाः परमाणुविषयाः, महत्प्रत्ययेन सामानाधिकरण्यादाकाशादिप्रत्ययवत्। अतो यत्रापि अणुव्यतिरिक्ते पटादिप्रत्ययः सोऽवयवीति। परमाणुधर्म एवासावित्याहुरन्ये। स किं रूपादियुक्तस्तद्रहितो वा? यदि रूपादिमानणुव्यतिरिक्तस्तदा न विवादः कश्चित्, कार्यस्य कारणधर्म-

१. तद्विषयत्वम् = अवयविविषयत्वम्।
२. न्या० सू० २।२।५७ ते = वर्णा विभक्त्यन्ताः पदसंज्ञां लभन्त इत्यर्थः।
३. जातिपदार्थवादी = जातिशक्तिवादी भाट्टः।
४. न्या० सू० २।२।६५
५. गुणक्रियाश्रयः = बहुत्वादिगुणाश्रयो धावनादिकर्माश्रयो हस्त्यश्वादिः।

त्वाविरोधात्। अथ रूपादिरहितः, तदाध्यक्षविरोधः; प्रत्यक्षेणैव रूपाद्युपेतस्य पटादेरुपलंभात्। सांख्यपक्षेऽपि धर्मधर्मिणोरभेदाभ्युपगमादतीन्द्रियधर्मस्य प्रत्यक्षत्वमयुक्तम्। प्रत्यक्षत्वे हि तदभिन्नस्य धर्मिणोपि प्रत्यक्षत्वप्रसंगः, तादात्म्यविपर्ययो वेति।

## ❀ देवकुलादीनामवयवित्वम् ❀

द्वौ इमौ घटौ संयुक्तौ इति च प्रतीतिर्न बहवः परमाणवस्तद्धर्मो वेति। तद्देवकुलादिप्रत्ययवदिति चेत्—अथ मन्यसे यथेष्टकादीनां संयोगविशेष एव [1]देवकुलं प्राकारश्चोच्यते। अथ च तत्र रूपादिमन्तौ देवकुलप्राकारौ संयुक्ताविव्येवं प्रत्ययो भवति, तथा घटादिष्वपीति, न; देवकुलादेरप्यवयवित्वाभ्युपगमात्। तमोऽरिणा तु सांख्याभिप्रायेण देवकुलादिप्रत्ययः संयोगविषय उक्तः, सर्वथा बौद्धपक्षे दृष्टान्तो नोपपद्यत इति ज्ञापनार्थम्। न च सर्वव्याख्यातृमताविरोधेन शास्त्रं व्याख्यातुं शक्यते। सर्वशास्त्रेषु विरुद्धाभिप्रायव्याख्यातृभेदसंभवात्, अन्योऽन्यव्याख्यातृणां दोषप्रतिपादनात्। तस्मात्प्रमाणविरोध एव यत्नेन परिहर्त्तव्यः। प्राकारादेः खलु संयोगात्मकत्वेन केवलं [2]पूर्वोक्तप्रत्ययो न संभवत्यभिन्नप्रत्ययो न स्यादिष्टकादिसंयोगानां बहुत्वादिति।

ननु च समानजातीयानामेव द्रव्यारंभकत्त्वात् कथं विजातीयैः काष्ठेष्टकादिभिरारब्धस्य देवकुलादेरवयवित्वं प्रमाणविरुद्धं न भवतीति ? न, विजातीयानामपि शरीरारंभकत्त्वदर्शनात्। कथंचित्तेषां समानजातीयत्वे काष्ठेष्टकादीनामपि पार्थिवत्वादिरूपेण समानजातीयत्वमस्तु, किमत्राविरुद्धम् ? ननु च पार्थिवादिरूपत्वेपि तन्तुवीरणादीनां किमिति पटारंभकत्वं नास्ति ? ननु केवलानामपि वीरणानां समानजातीयानां किमिति पटाद्यनारंभकत्त्वम् ? असामर्थ्यादिति चेत्, असामर्थ्यमेव तर्हि वाच्यम्, न विजातीयत्वम्। [3]रज्ज्वाद्यारंभे तु तन्तुवीरणादीनामपि सामर्थ्यमस्ति तस्मात् समानजातीयानां वा यत्र कार्येऽन्वयव्यतिरेकाभ्यां सामर्थ्यमवधारितं तत्कार्यारम्भकत्त्वमभ्यनुज्ञेयम्। नायमेकान्ताग्रहः करणीयः—समानजातीयानामेवारम्भकत्वमिति।

नन्वेवं पञ्चानामपि भूतानामेककार्यारंभकत्त्वेप्यविरोधः स्यात्। भवतु, यदि

---

१. देवकुलम् = देवमन्दिरम्।

२. पूर्वोक्तप्रत्ययः = "रूपादिमन्तौ देवकुलप्राकारौ"—इति प्रत्ययः।

३. रज्ज्वाद्यारम्भे = रज्ज्वादिस्वरूपस्यावयविन आरम्भे।

तथाभूतं कार्यमुपलभ्यते। तत्कार्यमेव न पश्याम इति नाभ्यनुज्ञायते। ननु शरीरं पञ्चात्मकमस्ति, न; तस्य पंचनिमित्तत्वेन पंचात्मकत्वोपचारात्, न तु पञ्चसमवायित्वेन। तथा हि—व्यापकत्वादस्पर्शवत्त्वाच्चाकाशस्य तावद् द्रव्यारंभकत्वमेव नास्ति, तत्समवायिकारणत्वे शरीरस्य व्यापकत्वं रूपादिविहीनत्वं च स्यात्, वायुजन्यत्वेपि स्पर्शैकगुणत्वम्। तेजोजन्यत्वेपि गन्धरसगुरुत्वयोगित्वं न स्यात्। उदकजन्यत्वे च गन्धवत्त्वं न स्यात्। [1]विरुद्धरूपादिग्रहणं च स्यात्, अवयविनोऽवयवरूपाद्यनुविधानात्। अतो नानेकभूतजन्यत्वं शरीरस्य। प्रत्यक्षतश्च पार्थिवावयवानामेव ग्रहणात् क्लेदोष्मोच्छ्वासादीनां घटादिष्विव संयुक्तसमवेतानामेव ग्रहणादिति।

एवं झषाद्यारंभेपि पार्थिवानां समवायिकारणत्वमितरेषां तु निमित्तत्वमिति। यदि तु चित्ररूपादियुक्तं कार्यं दृश्यते, तदा तदवयवानां विरुद्धधर्मकारणानामप्येककार्यारंभकत्वमिष्यत एवेति प्रागुक्तम्। तदेवं काष्ठेष्टकादीनां देवकुलाद्यारंभे केषांचित्समवायिकारणत्वं केषांचिन्निमित्तत्वं सर्वेषां वा समवायिकारणत्वं यथादर्शनमभ्युपगन्तव्यम्। तत्सिद्धं देवकुलादेरप्यवयवित्वमिति।

ग्रामादिलक्षणोप्यवयवी तर्ह्यभ्युपगन्तव्यः, सत्यमित्येके। परस्परमसंयुक्तानां गृहादीनां ग्रामाद्यारंभकत्वमयुक्तमित्यपरे। संयुक्तसंयोगेनारंभकत्वे देशान्तरावस्थितावयवानामप्यारंभकत्वप्रसंगात्। तस्माद् गृहादिसमुदायेष्वेव ग्रामादिव्यवहारो द्रष्टव्यः। परिषदादिव्यवहारोपि एतेनैव व्याख्यातः। परमाणुसमुदायेष्वित्थंभूतोपि व्यवहारभेदो न संभवतीत्युक्तम् प्रागेव। तस्मादस्त्यवयवीति। यदपि षट्केनेत्यादि परमाणुनिराकरणार्थमुक्तम्, तदप्ययुक्तम्, [2]तत्कार्योपलंभेनैव बाधितत्वात्। न ह्युपादानकारणाभावे कार्यस्य सत्त्वमुपलभ्यते। प्रसाधितं चावयविनः सत्त्वम्, तस्योपादानेनावश्यं भाव्यम्। यत्तस्य मूलमुपादानं स परमाणुः, अस्य सावयवत्वमनुपपन्नम्। सावयवत्वे हि मूलत्वमेव न स्यात्। अथ नास्त्येव मूलोपादानं, तथापि मूलाभावात् सर्वस्याप्यभावः स्यात्। अथावयवपरम्परा सावधिर्नेष्यते, तथाप्यनन्तावयवत्वाविशेषे [3]त्रुटिपर्वतादेः परिमाणगुरुत्वविशेषो न स्यात्। तस्माद्

---

१. विरुद्धरूपादीति। सर्वभूतजन्यत्वे इत्यादिः।

२. तत्कार्योपलम्भेनैव बाधितत्वात्—तस्य = परमाणुनिराकरणवादस्य द्व्यणुकादिकार्योपलब्ध्या परमाणुसत्त्वसाधकानुमानेन बाधितत्वादित्यर्थः।

३. त्रुटिपर्वतादेः = त्रसरेणुभूधरादेः।

[1]अल्पतरतमादेरस्त्यवधिस्तस्य क्षणिकत्वनिषेधादकृतकत्वं सिद्धम्। न हि निरुपादानस्य तुल्याधिकपरिमाणोपादानाद्वा कस्यचिदुत्पत्तिरस्ति परमाणोः षडंशतेति [2]स्ववचनविरोधादयुक्तम्, माता मे वंध्येति यथा। यतो ह्यणुतरं नास्ति स परमाणुरुच्यते, तस्य कुतः षडंशता? तदंशस्यैवाणुतरत्वाद् अंशवतः खलूपचारेण परमाणुत्वं, मुख्यस्तु निरंश एव परमाणुरिति। "षण्णामेकदेशत्वेपि पिण्डः स्यादणुमात्रकः"—इत्येतदप्ययुक्तम्, यतोऽवयवपरिमाणादवयविनः परिमाणातिशयो दृश्यते ततः परमाण्वारब्धस्याप्यधिकपरिमाणत्वमनुमीयते[3]। तत्परिमाणाच्च तत्कार्यस्याधिकपरिमाणत्वमिति कथमणुमात्र एव पिण्डः स्यादिति।

## * परमाणोर्दशांशतानिराकरणम् *

यच्चोक्तम्—दिग्विभागेन दशांशतेति, तदप्ययुक्तम्; यतोऽन्यस्मिन्नवधिभूतेऽन्यान्येव द्रव्याणि दिग्भिः प्रविभज्यन्ते यथा प्रयागादुत्तरेण स्थितो हिमालयो, दक्षिणेन विन्ध्य इत्यादि।

ननु चावधिभूतस्यापि प्रविभागो दृश्यते, यथास्यायं पूर्वो भागोऽयं पश्चिमोऽयं दक्षिणोऽयं चोत्तर इति, न; तत्राप्यवयवान्तरावधित्वेनावयवान्तराणां प्रविभागोपपत्तेः। निरवयवश्च परमाणुरतो न तस्य पूर्वादिदिग्विभागविकल्पः।

अथ द्रव्यान्तरेभ्योऽवधिभूतेभ्यः स परमाणुः पूर्वो दक्षिणः पश्चिम उत्तरश्चेति विकल्प्यते, तदा न कश्चिद्विरोधः; उपाधिभेदेनाभिन्नेऽपि वस्तुनि व्यपदेशभेददर्शनादिति।

---

१. अल्पतरतमादेरित्यादिना सूचितमनुमानम्—'अणुपरिमाणतारतम्यं क्वचिद् विश्रान्तम्, परिमाणत्वाद्, आकाशादिविश्रान्तमहत्परिमाणवत्।' यत्र तद्विश्रान्तिः, स परमाणुः। तस्य च क्षणिकत्वनिषेधात् निरवयवत्वाच्च नित्यत्वं सिद्धम्।

२. स्ववचनविरोधः—'परमाणुः षडंशः' इति वाक्ये परमाणुरित्युक्तं भवति—अन्तिमोऽणुरवयवो यस्यावयवान्तरं नास्ति निरवयवो निरंश इति। तस्य कथं षडंशत्वमिति भावः।

३. अनुमानाकारस्तु—परमाण्वारब्धोऽवयवी, परमाण्वधिकपरिमाणः, अवयवित्वात्, त्रसरेण्वादिवत्। एवं परमाणुपरिमाणात् तत्कार्यस्याधिकपरिमाणत्वमित्यङ्गीकारे कथं पिण्डः = अवयवी अणुमात्रकः स्यात्?

## ❀ आकाशव्यतिभेदनिरासः ❀

आकाशव्यतिभेदादित्यपि न युक्तं, नित्यनिरवयवस्याशक्यभेदात्। अथ यद्यन्तस्तस्याकाशं नास्ति, ततोऽसर्वगतमाकाशं प्राप्नोतीति, न; सर्वगतस्वरूपापरिज्ञानात्। तथा हि—यस्याभिन्नात्मनः सर्वमूर्तिमद्भिः सम्बन्धः, तद् द्रव्यं सर्वगतमुच्यते। अस्ति चाकाशस्यैतद्रूपं सर्वत्र शब्दोत्पादानुमितं, तस्मात्तदपि सर्वगतमेव। परमाणुमध्येनासंबंधादसर्वगतमिति चेत्, न; तस्य शशविषाणवदत्यन्ताभावात्। न हि निरंशस्यैकस्य बाह्यान्तरभावोऽस्ति। यच्चास्ति मूर्त्तं तेन सर्वेण संयुज्यत इति कथमसर्वगतम्? तस्माद् [1]अकृतबुद्धिव्यामोहनमात्रमेतदपीति। एवं चावयव्यादिसद्भावाद् ग्राह्यग्राहकवैधुर्यादित्यसिद्धो हेतुः।

## ❀ ज्ञानार्थयोः सहोपलम्भनिरासः ❀

यदप्युक्तम्—सहोपलम्भनियमादभेदोर्थतद्बुध्योर्द्विचन्द्रादिदर्शनवदिति। तत्रानैकान्तिकत्वं तावदस्य हेतोः, तथा हि—कृत्तिकानां सहोपलम्भनियमोऽस्ति, न चाभेदः, तद्भेदस्य सर्वाविसंवादेन प्रसिद्धत्वात्। तथा च विचारयतः कृत्तिकानां विवेकेनोपलम्भस्तथा ज्ञानार्थयोरपीति। [2]विरुद्धश्चायं हेतुः सहशब्दार्थस्य भेदे सत्येव संभवात्, न ह्येकस्मिन्नेव सहार्थः कश्चिदस्ति। [3]भ्रान्त्यपेक्षया सहार्थोऽस्तीति चेत्—अथ मनुषे भ्रान्त्यैव अभिन्नमपि भेदेनाध्यवसीयते, तदपेक्षया सहोपलंभ इत्युच्यते द्विचन्द्रोपलम्भवत्, वस्तुस्थित्या त्वेकस्यैवोपलम्भ इति, न; तत्र भिन्नाकारस्यारोपितस्यावभासनात्, तेन चारोपिताकारेण वस्तुभूतस्याकारस्याभेदसाधनं न युक्तं। न हि पीताकारेण शंखरूपस्याभेदः संभवति,

---

१. अकृतबुद्धिव्यामोहनमात्रम् = असंस्कृतबुद्धीनां बालानां सम्मोहनमात्रम्।

२. भदन्तशुभगुप्तस्योद्भावनमिदमित्याह कमलशीलः—"भदन्तशुभगुप्तस्त्वाह—विरुद्धोऽयं हेतुः, यस्मात्—

> सहशब्दश्च लोकेऽयं नैवान्येन विना क्वचित्।
> विरुद्धोऽयं ततो हेतुर्यद्यस्ति सहवेदनम्॥ इति।

३. सहशब्दप्रयोगोपपत्तिं कलयति स्म श्रीकमलशीलः—"चन्द्रद्वयस्य सहोपलम्भाभिमानोऽस्ति लोके, न च तयोर्भेदोऽस्ति परमार्थतः। अथ च सह शशिद्वयोपलम्भात् सहेति वक्तारो भवन्ति। एवमिहापि ज्ञानादव्यतिरिक्तमपि बहिरिव भासमानाकारं द्वितीयं कृत्वा कल्पितभेदनिबन्धनः सहशब्दः प्रयुक्तः" (त० सं० पं० पृ० ५६७)। तामेतामुपपत्तिमपाकुरुते—भ्रान्त्यपेक्षयेति।

तथा हि—भिन्नाकारता तत्र विद्यमाना वा प्रतिभाति अविद्यमाना वेत्युभयथाप्यभेदसाधनविरोधः। परमार्थतो हि भिन्नाकारता ययोस्तयोरभेदः कुतः ? अपारमार्थिकी चेद् भिन्नाकारता, तस्याः परमार्थेन सहाभेदः कथं ? भिन्नाकरत्वेनोपलभ्यमानयोरेवाभेदः साध्यते। ननु भिन्नाकारतायास्तस्यास्तुच्छरूपत्वादिति चेत्, तथाप्यनैकांतिको हेतुः; यतोऽर्थान्तरभूतापि भिन्नाकारता बोधाकारेण सहैवोपलभ्यते, तदनर्थान्तरत्वे वा तदात्मभूतस्य बोधाकारस्यापि तुच्छात्मकत्वप्रसंग इति। एकेनैवोपलम्भाद् इत्ययमपि हेत्वर्थोऽसिद्धत्वादयुक्तोऽर्थस्यानेकपुरुषैरुपलभ्यमानत्वादिति।

[1]योऽप्याह—सहोपलम्भनियमादित्यस्यायमर्थः—एकस्यैवोपलम्भादिति। तेनापि वक्तव्यम्—किं ज्ञानस्यैवोपलम्भादुतार्थस्यैवेति ? यदि ज्ञानस्यैवोपलम्भात्, तदा तस्यानुपलभ्यमानेनार्थेन सह कथमभेदः ? त्रैलोक्येनाप्यभेदप्रसंगात्। [2]तदात्मनैव तस्याभेदसाधने व्यर्थो हेतुः, तत्र विवादाभावात्। एतेनार्थस्यैवोपलम्भादिति प्रत्युक्तम्। असिद्धत्वं च, ज्ञानस्यार्थस्य चोपलम्भादिति। अथार्थोपलम्भकाले ज्ञानं नोपलभ्यते, ज्ञानोपलम्भकाले वा नार्थः, तेनैकस्योपलम्भः सिद्ध्यति, तथापि [3]स्वसिद्धान्तविरोधः परपक्षाभ्युपगमश्च प्रसज्येत।

अथ ज्ञानार्थयोरेक एवोपलम्भस्तत एकोपलम्भान्न भेदव्यवस्थितिः, स तर्हि तयोः किं भेदग्राही वा, न वा ? यदि न भेदग्राही, तदभेदात् कथं ज्ञानार्थयोरित्युच्यते ? भेदग्राही चेत्, कथं ततो न भेदव्यस्थेति ? द्विचन्द्रादिज्ञानवदिति चेत्, न; [4]तत्रारोपिताकारेणाभेदानुपपत्तेरित्युक्तत्वात्। कुतश्च ज्ञानार्थयोरेक एवोपलम्भः सिद्ध्यति ? ननूक्तम्— [5]"अप्रत्यक्षोप-

---

१. शुभगुप्तस्यैव विकल्पान्तरं निर्दिष्टम्—"पुनः स एवाह—यदि सहशब्द एकार्थस्तदा हेतुरसिद्धः" तमेतमन्यथा प्रस्तौति—योऽप्याहेत्यादि।

२. तदात्मनैव = ज्ञानात्मनैव।

३. स्वसिद्धान्तविरोधः = सौगतस्य स्वसंवेदनज्ञानमात्रतासिद्धान्तस्य भंगः।

४. तत्र = द्विचन्द्रादिभ्रमे आरोपिताकारेण = द्वित्वरूपेणेत्यर्थः।

५. प्रमाणविनिश्चयस्येदं पद्यमामन्वते। अप्रत्यक्षीभूतस्योपलम्भस्यार्थग्रहणं न सम्भवतीति तदर्थो विपञ्चितः शान्तरक्षितेन तदनुवदता—

अप्रसिद्धोपलम्भस्य नार्थवित्तिः प्रसिद्ध्यति।
तन्न ग्राह्यस्य संवित्तिर्ग्राहकानुभवाहृते॥ (त० सं० २०७४)

लम्भस्य नार्थदृष्टिः प्रसिद्ध्यतीति ।" [1]केयमर्थदृष्टेः प्रसिद्धिः—किमुत्पत्तिः आहोस्विदुपलब्धिः ? कश्चोपलम्भोऽपि यस्यार्थप्रत्यक्षत्वे सत्यर्थदृष्टिर्न प्रसिद्ध्यति—किं सैवार्थदृष्टिरुत तज्जनकं ज्ञानमिति ? तद्यदि सैवार्थदृष्टिरुपलम्भस्तस्याप्रत्यक्षत्वे सत्युत्पत्तिर्न संभवतीति, तदयुक्तम्; उत्पादे हि सति पश्चादर्थदृष्टेः प्रत्यक्षत्वं युक्तं न पूर्वमेव, न हि प्रत्यक्षेण पश्चादुत्पत्तिरित्ययं क्रमः क्वचिदुपलभ्यते । अथार्थदृष्टिजनकं ज्ञानमुपलम्भः तस्याप्रत्यक्षत्वेऽर्थदृष्टिर्नोत्पद्यत इति, तदयुक्तम्; चक्षुरादिवदप्रत्यक्षस्याप्युत्पादजकत्वसम्भवात्, तीव्रस्पर्शादिना सुषुप्तप्रबोधे पूर्वज्ञानासंवेदनाच्च, न चार्थदृष्टेः प्रत्यक्षोपलम्भजन्यत्वेऽप्यर्थज्ञानयोरेकोपलम्भनियमः सिद्ध्यति । अथार्थदृष्टेः प्रसिद्धिरुपलब्धिः, तथाप्ययं वाक्यार्थो भवति—'अप्रत्यक्षोपलम्भस्य नार्थोपलम्भः प्रत्यक्षः' इति, न वा तेन किञ्चित् साधितं भवति । अथ दृश्यते इति दृष्टिरर्थ एव, ततश्चाप्रत्यक्षोपलम्भस्यार्थोऽपि प्रत्यक्षो न भवतीत्ययं वाक्यार्थः, न; उप-

---

१. अयं खण्डलको वादिराजसूरिणैवमनूद्य निराकृतः—"केयमर्थदृष्टेः प्रसिद्धिः—किमुत्पत्तिः, आहोस्विदुपलब्धिः ? कश्चोपलम्भोऽपि यस्याप्रत्यक्षत्वे सत्यर्थदृष्टिर्न प्रसिद्धयति—किं सैवार्थदृष्टिः, उत तज्जनकं ज्ञानमिति ? तत्र यद्यभिमतिः सैवार्थदृष्टिरुपलम्भः, तस्याप्रत्यक्षत्वे सत्युत्पत्तिर्न सम्भवतीति, तदयुक्तम्; उत्पादे सति पश्चादर्थदृष्टेः प्रत्यक्षत्वं युक्तं न पूर्वमेव, अन्यथा अतिप्रसङ्गात् । अथार्थदृष्टिजनकं ज्ञानमुपलम्भः, तस्याप्रत्यक्षत्वेऽर्थदृष्टिर्नोत्पद्यत इति, तदयुक्तम्; चक्षुरादिवदप्रत्यक्षस्याप्युत्पादकत्वसम्भवात्, तीव्रस्पर्शादिना सुषुप्तप्रबोधे पूर्वज्ञानासंवेदनात् । अथार्थदृष्टेः प्रसिद्धिरुपलब्धि, तदाप्ययं स्याद् वाक्यार्थो भवति—अप्रत्यक्षोपलम्भस्य नार्थोपलम्भः प्रत्यक्ष इति । न चानेन किञ्चित् साधितं भवति । अथ दृश्यत इति दृष्टिः = अर्थ एव, ततश्चाप्रत्यक्षोपलम्भस्यार्थोऽपि प्रत्यक्षो न भवतीत्ययं वाक्यार्थः, न; उपलम्भादर्थान्तरत्वात् । न चैकस्याप्रत्यक्षत्वेन अन्यस्याप्यप्रत्यक्षत्वम्, अतिप्रसङ्गात् । अथोपलम्भस्याप्रत्यक्षत्वे सति अर्थो दृष्ट इत्येवम्प्रतीतिर्न भवतीत्यभिमतमेतदस्माकम्, नागृहीतं विशेषणं विशिष्टप्रतीतौ निमित्तम् । न च सर्वत्र दर्शनविशिष्ट एवार्थो गृह्यते, न हि 'शुक्लो गच्छति गौः' इत्यत्र गोदर्शनमनुभूयते, अपि तु गुणक्रियाविशिष्टो गौरेवानुभूयते । ततो नार्थदर्शनस्य स्वसंवेदनसिद्धावुपायत्वम्, अन्यथानुपपत्तिवैधुर्यादिति'—तदेतद् व्यामोहविजृम्भितं भासर्वज्ञस्य, स्वप्रकाशनाभावे ज्ञानस्य विषयनियमानुपपत्तेः "नार्थदृष्टिः" इति निवेदनात् ( न्या० वि० वि० पृ० २०९–२१० ) ।

लम्भादर्थान्तरत्वात्[1]। न चैकस्याप्रत्यक्षत्वे तदन्यस्याप्रत्यक्षत्वं न्याय्यं, अतिप्रसंगात्, अथोपलम्भस्याप्रत्यक्षत्वे सत्यर्थो दृष्ट इत्येवं प्रतीतिर्न भवति। एतदस्माकमप्यभिमतम् 'नागृहीतं विशेषणं विशिष्टप्रतीतौ निमित्तमिति'। न च सर्वत्र दर्शनविशिष्ट एवार्थो गृह्यते, शुक्लो गच्छति गौरिति—नात्र गो(ज्ञानं) दर्शनमनुभूयते, अपि तु गुणक्रियाविशिष्टो गौरेवोपलभ्यते।

[2]नन्वत्रोक्तं न हि विषयसत्तया विषयोपलंभः, किं तर्हि ? तदुपलम्भसत्तयेति। ततः किं ? ननूक्तं सा चाप्रामाणिकी न सत्तानिबन्धनान् व्यवहाराननुरुणद्धीति। कोऽस्य वाक्यस्यार्थः—किमप्रतीतायाः सत्ताया व्यवहारमात्रं प्रवर्त्तकत्वमपि नास्त्युत स्वविशिष्टव्यवहारप्रवर्त्तकत्वं नास्तीति ? न तावदाद्यः पक्षः, अप्रतीताया अपि चक्षुरादिसत्तातो रूपादौ ज्ञानाभिधानां नयनादिव्यवहाराणां प्रवृत्तिदर्शनात्। तदप्रतीतौ ततोऽमी व्यवहाराः प्रवृत्ता इति कुतोऽवगम इति चेत्, तद्व्यवहारदर्शनादेवांकुरदुःखादिदर्शनाद्, बीजादिधर्मादिनिश्चयवत्। अथाप्रतीतसत्त्वस्य तद्विशिष्टव्यवहारप्रवर्त्तकत्वं न संभवतीति, नात्र विवादः, किंतु सर्वत्र तद्विशिष्टव्यवहारानुपलंभान्नावश्यमर्थोपलंभस्योपलम्भ इति। तदप्रसिद्धौ विषयस्याप्रसिद्धिरिति चेत्, किमत्र कारणम् ? न हि तदुपलंभः स्वविषयं लिंगवत् साधयति, येन तदप्रसिद्धौ विषयस्याप्यप्रसिद्धिः स्यात्, किं तर्हि ? तद्गृहीतितयोत्पादनमात्रेण तं विषयव्यवहारयोग्यं करोति। तदप्रसिद्धावपि विषयः प्रसिद्ध एवेत्युच्यते। तदुपलंभस्याप्युत्तरकालं प्रत्यक्षतो वाऽनुमानतो वाऽधिगम इष्यते। न चैवमनिष्टापत्तिः, सर्वस्योपलंभस्य वेदनानभ्युपगमात्। य एवोपलंभः संवेद्यते तस्य संवेदनं ज्ञानान्तरमुच्यते, न पुनरविदितो नास्त्येवोपलंभः स्वकार्यं वा न करोतीति। एतावत्तु युक्तं यावन्न वेद्यते तावदस्तीति व्यवहर्तुं न शक्यते दहनादिवदिति। न चाविदिते दहनादौ तत्कार्यस्य धूमादेः अनुत्पत्तिरप्रतिपत्ति र्वेति। तदेवमग्न्यादिवदसंविदितादेवोपलंभात्तन्निमित्तस्य विषयस्मरणाभिधानानयनादिलक्षणस्य कार्यस्य संभवान्न तदुपरोधेन स्वसंवेदनमभ्युपगन्तव्यम्।

यदि न स्वसंविदितं ज्ञानं, अप्रकाशात्मकं तर्हि प्राप्तं, स्वयमप्रकाशात्मकं च घटादिवदन्यस्यापि कथं प्रकाशकं भवेदिति।

---

१. अर्थान्तरत्वादिति। अर्थस्येत्यादिः।

२. यथा नीलादिरूपत्वान्नीलाद्यनुभवो मतः।
तथाऽनुभवरूपत्वात् तुल्योऽप्यनुभवो भवेत्॥ (प्र० वा० ३।४३६)
इति शंकाया निराकरणमयुक्तमित्याह—नन्विति।

किमिदमप्रकाशात्मकत्वं नाम--किं बोधाजनकत्वं ? उताप्रभत्वम् ? आहोस्विदबोधस्वभावत्वमिति ? बोधाजनकत्वं तावदयुक्तम्, चक्षुरादेरस्वसंविदितस्यापि बोधजनकत्वात्। अथाप्रभत्वं, ततस्तेजोविलक्षणत्वादेवाप्रभत्वं अभास्वररूपत्वं, न स्वसंविदितत्वादिति। अथाबोधस्वभावत्वं प्रसज्यते, न; अविदितस्यापि स्वरूपात्यागान्न हि यो यस्य स्वभावः स तस्यास्वसंवेदनादेव निवर्त्तयत इति।

स्वसंवेदनाभावे कोऽन्यो बोधस्य स्वभाव इति चेत्, बोधत्वमेव बोधस्य स्वभावः। तदेव स्वसंवेदनमिति चेत्, न; संज्ञान्तरमात्रेण स्वात्मावभासकत्वासिद्धेः। स्वात्मावबोधकत्वाभावे कथमसौ बोधस्वभाव इति चेत्, स्वात्मदाहकत्वाभावेपि यथाग्नेर्दहनस्वभावः, स्वात्मदीपकत्वाद्यभावेपि यथा दात्रादिकं दात्रादिस्वभावमिति।

## ❀स्मृतेरपि न सहोपलम्भनियमः❀

[1]ननु च दृष्टं मयेति सर्वदर्शनविशिष्टस्यैवार्थस्य स्मरणात्कथं नानुभवार्थयोरेकोपलंभनियम इति, नैतदस्ति; केवलस्याप्यर्थस्य स्मृतिदर्शनात्। तथा हि—मातरं पितरं शुश्रूषितवानहं, सन्ति मे पञ्च भृत्या दश गावश्च गृहेऽस्ति देवदत्त इत्यादावर्थ एव स्मर्यते, नानुभव इति।

नन्वनुभवोऽप्यत्र स्मर्यते यस्मादसौ पृष्टः सन्नाह--मयैव दृष्टो देवदत्त इति, न; अन्यथाऽपि तदुपपत्तेः। केवलस्याप्यर्थस्मरणात्तस्य दृष्टत्वमनुमाय तथाभिधत्त इति। यदि पुनरेवं नाभ्युपगम्यते, तदा चक्षुरादेरपि सहोपलंभनियमः स्यात्। तथा हि--कथं त्वयासौ ज्ञातः इत्येवं पृष्टः सन्नाह–चक्षुषैव दृष्ट इति। भवतु तथापि सहोपलंभनियम इति चेत्, न; प्रतीतिस्वशास्त्रविरोधात्। न हि तावन्नीलाद्यर्थग्राहिणि ज्ञाने चक्षुरादिप्रतीतिः कस्यचिदस्ति। नापि चक्षुराद्याकारः स्वशास्त्रेऽभ्युपगत इति। किं वाभिलापसंसर्गस्यापि[2] सहोपलंभनियमप्रसंगः, तत्संसृष्टस्यैव स्मरणात्। न हि सुशिक्षितोपि [3]कश्चिच्छुद्धमर्थं स्मरणेनोपस्थापयितुं शक्नोति, पृष्टो वाऽन्येषां

---

१. तत्कीर्तितं कीर्तिना—

दृष्टया चाज्ञातसम्बन्धं विशिनष्टि तथा कथम्।

द्वयोः संसृष्टयोर्दृष्टौ स्याद् दृष्टमिति निश्चयः॥ (प्र० वा० ३।४४१–४४२)

२. अभिलापसंसर्गः = शब्दसम्बन्धः।

३. शुद्धम् = शब्दसंसर्गरहितम्।

कथयितुमिति। अभिलापसंसृष्टस्य चानुभवे कल्पनापोढमित्यादिविरोधः शब्दाद्वैतवादप्रसंगश्च। तस्मान्न स्मरणादपि सहोपलंभनियमसिद्धिः।

## ❀ ज्ञानस्य बाह्यत्वापत्तिनिरासः ❀

स्वसंवेदनाभावे ज्ञानस्य रूपादिवद् बाह्यत्वं प्रसज्यते स्वात्मीयाभावश्च सन्तानान्तरज्ञानवदिति चेत्, किमिदं तावद् बाह्यत्वं? यदि स्वशरीराद् बहिर्देशावस्थानं, तदयुक्तं; यतो न रूपादेरप्यस्वसंवेदनत्वाद् बाह्यत्वं, किन्तु स्वसामग्रीसामर्थ्यात्तत्रोत्पन्नत्वात्। ज्ञानसुखादेस्तु शरीरान्तर्देश एवोत्पादिका सामग्री विद्यते, ततो न बहिरुत्पादः। एतेन बहिष्ठत्वेन संवेदनं बाह्यत्वमपास्तम्।

नापि ज्ञानवर्गादर्थान्तरत्वं बाह्यत्वं, तज्जातीयस्य तद्वर्गादर्थान्तरत्वायोगात्। सुखादेस्तु ज्ञानवर्गादर्थान्तरत्वं बाह्यत्वमिष्टमेव। तथापि स्वसामग्रीसामर्थ्याच्छरीरान्तर्देश एवोत्पन्नं वेद्यत इति बाह्यं नोच्यते। यद्वा आत्मसमवायित्वादबाह्यत्वं, तत्समवायित्वं च स्वहेतुनियमितत्वात्, न तु स्वसंविदितत्वादिति।

## ❀ अनात्मीयत्वप्रसंगभङ्गः ❀

यदप्यनात्मीयत्वप्रसंगः सन्तानान्तरज्ञानवदिति उक्तं, तदप्यनुपपन्नम्; यतो न स्वसंवेदनास्वसंवेदनाभ्यामात्मीयत्वानात्मीयत्वे, किं तर्हि? स्वात्मसंबंधासम्बन्धाभ्याम्। त्वन्मते तु सर्वज्ञानानां स्वसंवेदनत्वान्न किंचिदनात्मीयं ज्ञानं स्यात्। अथ यद्यस्य स्वसंवेदकं न भवति, तत्तस्यानात्मीयम्। एवं तर्हि [1]पूर्वोत्तरज्ञानं जन्मान्तरोपार्जितादृष्टं चात्मीयं न स्यात्, न हि सर्वज्ञानानुयायी स्वसंवेदकः सन्तानोऽप्यस्ति, यस्य तत्सर्वं स्वात्मीयं स्यात्।

अथोपकार्योपकारकभावेनास्वसंविदितमप्यात्मीयमुच्यते, हन्त! तर्हि न वक्तव्यं सन्तानान्तरज्ञानवदस्वसंविदितत्वादनात्मीयमिति।

## ❀ स्वप्रकाशतासाधकानुमाननिरासः ❀

यदप्यन्यदुक्तम्—[2]स्वात्मप्रकाशकं ज्ञानं, प्रकाशत्वात् प्रदीपवदिति।

---

१. पूर्वोत्तरज्ञानम् = अतीतानागतज्ञानम्।

२. धर्मकीर्तिनोक्तम्—

प्रकाशमानस्तादात्म्यात्स्वरूपस्य प्रकाशकः।
यथा प्रकाशोऽभिमतस्तथा धीरात्मवेदनी॥ (प्र० वा० ३।३३०)

अत्रापि स्वात्मप्रकाशकमिति कोऽर्थः ? यदि स्वसंवेद्यत्वमेव विवक्षितम्, तदा साध्यशून्यं निदर्शनम्—न हि भवन्मतेपि स्वरूपात्मकस्य प्रदीपस्य स्वसंवेद्यत्वमस्ति। ज्ञानात्मकत्वं च प्रदीपस्योभयोरसिद्धत्वान्नोदाहरणं युक्तम्। अथास्वात्मवेदनं प्रति सजातीयानपेक्ष्यं स्वात्मप्रकाशकत्वमुच्यते, तदा स्पर्शादेरपि स्वात्मप्रकाशकत्वं स्यात्। न च स्वात्मसंवेदनोत्पादने सजातीयं सहकारिणमपेक्षत इत्येतावतैव स्वसंवेद्यत्वसिद्धिः। [1]प्रकाशकस्यापि सजातीयानपेक्षत्वमसिद्धं तदवयवावयविरूपयोरन्योन्यसहकारित्वान्नयनरूपापेक्षित्वाच्चेति, कुत एतत्? प्रकाश्यमानस्य तदर्थान्तरेण प्रकाशनाद् घटादिवदिति।

यत्पुनरत्रोक्तम्—[2]"न च घटोपि प्रदीपेन प्रकाश्यते, अपि तु तथाभूतस्यैव उत्पत्तिरिति," न; क्षणभंगस्य निराकरिष्यमाणत्वात्। तथोत्पादेपि, अन्यतस्तथोत्पत्तेः पूर्वं घटस्य सिद्धमप्रकाशात्मकत्वं, तद्दृष्टान्तात्प्रदीपस्य ज्ञानस्य चेति कथमसंवेद्यं ज्ञानं नास्तीत्युच्यते? ननु च यथा चक्षुषि स्वावयवे रूपे च सत्यपि घटः प्रदीपं प्रकाशकं अपेक्षते, तथा दीपोऽपि स्याद्। अथ दीपो नापेक्षते, घटोप्येवं स्यात्, एवञ्चक्षुरादिव्यतिरेकेण नान्यं प्रकाशकमपेक्षेत। [3]"अथ घटस्य द्वयं प्रकाशकं प्रदीपश्चक्षुश्च, प्रदीपस्य तु चक्षुरेवेति, एवं तर्हि,

एकं कस्यचिद् अन्यस्य द्वयमेव प्रकाशकम्।
यथासंभवतोऽन्यस्य नैकमप्यस्तु का क्षतिः॥

---

१. प्रकाशस्य = प्रदीपस्य।

२. प्रज्ञाकरगुप्तेनोक्तम्—"न च घटोऽपि प्रदीपेन प्रकाश्यते, अपि तु तथाभूतस्यैव तत उत्पत्तिः।" (प्र० वा० अ० पृ० ३५३)

३. (प्र० वा० अ० पृ० ३५३) प्रज्ञाकरोदीरितम्—"अथ द्वयमपि प्रकाशकं घटादेः, प्रदीपादेस्त्वेकमेव। एवं तर्हि—

एकं कस्यचिदन्यस्य द्वयमेव प्रकाशकम्।
यथासम्भवतोऽन्यस्य नैकमप्यस्तु का क्षतिः॥

अत्यन्तमशक्तस्य द्वयमपरस्यैकमन्यस्य नैकमपीति वस्तुस्वभाव एव इति का वात्र क्षतिः? अथ स्वात्मनि क्रियाविरोध इत्युच्यते।

यदा स्वरूपं तत्तस्य तदा कैव विरोधिता।
स्वरूपेण विरोधे हि सर्वमेव प्रलीयते॥"

न हि स्वेनैव रूपेण कस्यचिद्विरोधः। तथा चेत्, न किञ्चिद्भवेत्।

अत्यन्तमशक्तस्य द्वयं, अपरस्यैकं, अन्यस्य नैकमपीति वस्तुस्वभाव एष इति। कैवात्र क्षतिः?

अथ स्वात्मनि क्रियाविरोध इत्युच्यते, तदयुक्तमित्याह--

यदा स्वरूपं तत्तस्य तदा कैव विरोधिता।
स्वरूपेण विरोधे हि सर्वमेव प्रलीयते॥

यत्तावत्--एकं 'कस्यचिद्' इत्यादि, तदयुक्तम्--यदि नाम क्वचिदेकं सहकारिसमर्थं क्वचिदनेकं तथाप्याकस्मिकी क्रिया न युक्ता। तथा हि--

[1]नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवात्॥

न च समस्तसहकारिविकलस्य वृक्षाश्मादेः स्वात्मचलनादिक्रियायां सामर्थ्यं दृष्टं सहकारिसंख्याविकल्पस्त्वन्वयव्यतिरेकाभ्यां दृष्टोऽभ्युपगम्यते। यदा स्वरूपं तत्तस्येत्याद्यप्ययुक्तम्, तथा स्वरूपस्यैवासिद्धत्वात्। न हि दृष्टान्त-हेत्वोरनुपपत्तौ स्वात्मसंवेदकत्वं सिद्ध्यति। प्रकाशकत्वादित्यस्यापि कोऽर्थः किं भास्वररूपत्वात्? उत वेद्यसहकारित्वात्? आहोस्विद् बोधस्वभावत्वादिति? भास्वररूपत्वं बोधस्यासिद्धम्, वेद्यसहकारित्वं तु चक्षुरादिभिरनैकान्तिकम्। बोधस्वभावत्वं पुनरसाधारणमेव।

न चानिरूपितादर्थस्य हेतोर्गमकत्वं युक्तम्, शब्दसाम्यादभेदिनस्तु स्वयमेव शाक्यैरनुमितिसाधकत्वं निराकृतमिति।

## ❀ ज्ञानान्तरवेद्यत्वे प्रमाणोपन्यासः ❀

ज्ञानान्तरवेद्यत्वेपि ज्ञानस्य किं प्रमाणमिति चेत्, यदेव देवार्यैरुक्तम्--"ज्ञानं स्वव्यतिरिक्तवेदनवेद्यं वेद्यत्वात्, रूपादिवदिति"। तद्वद् बाह्यत्वाबोधत्वादि-प्रसंग इत्युक्तम्, विशेषविरुद्धस्यादूषणत्वेन वक्ष्यमाणत्वात्। अनैकान्तिकत्व-परिहारार्थं परमेश्वरस्य ज्ञानद्वयमभ्युपगन्तव्यम्। तद्व्यतिरेकेण वा सर्वज्ञत्वम्। अनित्यत्वे सतीति वा विशेषणं कर्त्तव्यमिति। तदेवं स्वसंवेदनस्यासिद्धेः सहोपलम्भनियमोऽप्यसिद्ध इति न ज्ञानार्थयोरभेदसिद्धिः।

ततश्चैतदप्ययुक्तम्--

[2]नीलादिरूपस्तस्यासौ स्वभावोऽनुभवश्च सः।
नीलाद्यनुभवः ख्यातः स्वभावानुभवोपि सन्॥

---

१. प्र० वा० २।१८०।

२. प्र० वा० ३।३२९ नीलाद्यनुभवः इत्यस्य स्थाने नीलाद्यनुभवाद्--इति पाठः।

अपि चायं सहोपलम्भनियमः किमन्वयव्यतिरेकोपपन्नोऽथ तद्विकल इति ? न तावदन्वयव्यतिरेकविकलस्य गमकत्वमतिप्रसंगात्। अन्वयव्यतिरेकोपपन्नत्वं च भेदाग्रहणे कथं प्रतीयते ? न हि स्वात्मन्येव कश्चिदन्वयव्यतिरेकौ प्रतिपत्तुं शक्नोति। न च भ्रान्तेनैव भेदोपलम्भेन व्यतिरेकादिव्यवस्था युक्ता, अतिप्रसंगात्। न च सर्वथैव भेदाप्रतिपत्तौ भ्रान्त्यभ्रान्तिव्यवस्थापि घटते, वाङ्मात्रेण च सर्ववादसिद्धिः स्यात्।

अथ ज्ञानार्थयोरेव भेदो न गृह्यते, न तु ज्ञानयोरपीति, तदयुक्तम्; यतः स्वसंवेदनपक्षे ज्ञानयोरपि भेदः प्रत्येतुं न शक्यत इत्युक्तं चित्रविचारप्रस्तावे। अपि च ज्ञानयोः प्रत्यक्षेण भेदस्तावन्न गृह्यते, स्वात्मवेदनमात्रत्वात्। न हि पराप्रतीतौ स्वपरयोर्भेदप्रतीतिर्युक्ता। परप्रतीत्यभ्युपगमे च नान्योऽनुभाव्य इत्यादेर्व्याघातप्रसंगः, सहोपलंभश्चानैकान्तिकः स्यात्। न चातदाकारेण ज्ञानान्तरस्य ग्रहणं युक्तम्, नीलादेरप्यनीलाद्याकारेणैव ज्ञानेन ग्रहणप्रसंगात्। तदाकारत्वे च तदेव स्यात्, कथं ज्ञानयोरपि ग्राह्यग्राहकयोर्भेदसिद्धिः ? सिद्धौ वा तद्वदर्थज्ञानयोरपि स्यात्[1]। तस्मान्न प्रत्यक्षेण ज्ञानयोरेव भेदो गृह्यते, नाप्यनुमानेन, तस्य प्रत्यक्षपूर्वकत्वात्। न हि सर्वथा प्रत्यक्षेण व्याप्त्यग्रहणेऽनुमानमात्मानमासादयति। तदेवं ग्राह्यग्राहकयोरभेदवादिनां स्वसन्ताने ज्ञानान्तरग्रहणं नास्ति, कुतः सन्तानान्तरसिद्धिः ? ततश्च परलोकबुद्धादिवार्तापि दूरोत्सारितैवेत्यसमंजसं सर्वमेव सौगतं शास्त्रमिति। न हि भेदाद्यसिद्धौ साधनदूषणादिव्यवहार उपपद्यते।

## ॐ ग्राह्याध्यवसेययोर्भेदनिरासः ॐ

अथ मतम्—ग्राहकस्य ग्राह्येणैव सहाभेदोऽभ्युपगम्यते, न त्वध्यवसेयेनेति। अथ [2]ग्राह्याध्यवसेययोः को भेदः ? उच्यते—यो बुद्धौ वस्तुतः प्रतिभास्याकारः, स ग्राह्यः। यस्त्वारोपितः सोऽध्यवसेयः। अथवा यद् बुद्धौ प्रतिभाति, तद् ग्राह्यं, यस्मिंस्तु अप्रतिभातेपि गृहीतताभिमानः, तदध्यवसेयम्। तदध्यवसायादेव प्रवृत्तिः। तदुक्तम्—स्वप्रतिभासेनार्थेऽर्थाध्यवसायेन प्रवर्त्तना। भ्रान्तिरप्यर्थसंबंधेन तदव्यभिचारात्प्रमाणमिति। तदप्ययुक्तम्—यथैव हि बाह्याध्यवसायस्य बाह्यार्थेनात्यन्तादृष्टेन संबंधाग्रहणादव्यभिचारासिद्धेः, प्रमाणत्वानुपपत्तिः। तथा स्वपरसन्तानज्ञानभेदाध्यवसायस्यापि। लोक-

१. स्याद् भेद इति शेषः।
२. धर्मो० पृ० ७१।

व्यवहाराविसंवादमात्रेण प्रमाणत्वे बाह्यार्थाध्यवसायस्यापि लोकव्यवहाराविसंवादमात्रेण तदर्थव्यवस्थापकत्वमस्तु समानयोगक्षेमत्वात्।

अथ स्वज्ञानान्तरं सन्तानान्तरज्ञानं च तदात्मनैव दृष्टं न तदुत्पन्नस्य भ्रान्तस्यापि तदध्यवसायस्य प्रमाणत्वं युक्तम्। बाह्यस्त्वर्थो न केनापि दृष्ट इति कथं तदध्यवसायस्य तदुत्पन्नत्वं प्रमाणत्वं च शक्यं व्यवस्थापयितुमिति? न; तदध्यवसायेन तदभावानवगमात्। यथैव बाह्याध्यवसायेन स्वात्मैकग्राहिणा न बाह्यार्थस्य स्वयंवेद्यत्वमसंवेद्यत्वं वाऽवगन्तुं पार्यते, तथा ज्ञानान्तरस्यापि तदध्यवसायेनेति, न ह्यत्र विशेषः कश्चिदस्ति। स्मृतिस्त्वध्यवसाय एवेति न स्मरणमपि ज्ञानान्तरव्यवस्थापकं ज्ञानान्तरादुत्पन्नं स्वरूपमात्मनो गृह्णत् स्वसंवेदनं कथं न ज्ञानान्तरं व्यवस्थापकमिति चेत्, बाह्यार्थादुत्पन्नमात्मनः स्वरूपं गृह्णत् कथं न बाह्यार्थव्यवस्थापकमिति समानः प्रसंगः। न च स्वसंवेदनमेवैनं विशेषं जानाति—ज्ञानान्तरादेवाहमुत्पन्नं न बाह्यार्थादिति। तदेवं ज्ञानान्तरस्थापनेन बाह्यार्थस्थापनस्य समानयोगक्षेमत्वान्न बाह्यार्थासंभवो न वानयोरपि भेदसिद्धिः। ततश्च सहोपलंभादिको हेतुस्त्रैरूप्यावगमस्य मूलं भेदोपलंभस्तन्निराकुर्वन्नात्मानमेव हन्तीति कथं ततो बाह्याभावसिद्धिः? एतेन "धियो नीलादिरूपत्वे' इत्याद्यपि निरस्तम्। तथा हि—

बुद्धेर्बुद्ध्यन्तराभत्वे तद्भेदः किंप्रमाणकः।
बुद्ध्यन्तरास्वरूपत्वे सा तस्य ग्राहिका कथम्॥ १॥

यद्वत्संबंधसंवादौ बाह्येष्वर्थेषु दुर्घटौ।
बुध्यन्तरेपि तद्वन्तौ स्वसंविन्निष्ठवादिनः॥ २॥

लोकप्रसिद्धिसंवादाद् बुद्धिभेदप्रसाधने।
बाह्यार्थस्यापि संसिद्धिस्तत एव प्रसज्यते॥ ३॥

यथा बाह्यस्य संसिद्धिर्न सूक्ष्मेक्षिकयेष्यते।
तथा बुद्ध्यन्तरस्यापि तत्तद्भेदोपि दुर्घटः॥ ४॥

अगृहीताद्यथा बाह्यान्न बुद्धिर्भेदमात्मनः।
वेत्ति बुद्ध्यन्तरात्तद्वत्परोक्षत्वाविशेषतः॥ ५॥

बुद्धेर्विलक्षणाकारस्यान्यथानुपपत्तितः।
बुद्धिभेदप्रसिद्धिश्चेद् बाह्यस्यापि कथं न सः॥ ६॥

इति संग्रहश्लोकाः।

## ❀ ग्राह्यग्राहकभेदनिराकरणे दोषः ❀

तदेवं ग्राह्यग्राहकयोर्भेदं निराकुर्वाणेनाद्वैतमेवाभ्युपगन्तव्यम्। तदनभ्युपगमे हि [1]अवेद्यवेदकाकारा यथा भ्रान्तैः इत्यादेरप्यनुपपन्नत्वम्। ज्ञानान्तरग्रहणेन बाह्यार्थग्रहणस्य समानयोगक्षेमत्वेन दर्शितत्वात्। अद्वैताभ्युपगमेपि विरोधोऽपरिहार्य एवेत्युक्तं सोऽयं [2]गड्डुप्रवेशाक्षितारकविनिर्गमन्यायः शाक्यानामापतितः। तस्मादित्थं विरोधपरिहाराय बाह्यार्थोऽतदाकारेणैव ज्ञानेन वेद्यत इत्यभ्युपगन्तव्यम्। स च बाह्योऽर्थः प्रायस्तावद् यथा व्यवस्थितेनैवाकारेण गृह्यते। क्वचित्त्वारोपितेनाप्याकारेणावभासते तिमिरादिसामर्थ्यादतो भ्रान्त्यभ्रान्तिव्यवस्थापि युक्ता। न त्वन्योपाधिविनिर्मुक्तज्ञानसंवेदने सतीति।

## ❀ निरालम्बनत्वानुमाननिरासः ❀

अपरस्त्वाह—"[3]सर्वे विवादास्पदीभूताः प्रत्यया निरालंबनाः प्रत्ययत्वात्, स्वप्नादिप्रत्ययवदिति। यथा च स्वप्नावस्थायां बाह्यार्थासंभवेपि ज्ञानाकारमात्रसंवेदनादेव बाह्यार्थाध्यवसायो भ्रान्त्यभ्रान्तिव्यवस्था च भवति, तथा जाग्रदवस्थायामपि, भेदावभासोपि तद्वदेव द्रष्टव्यः। एवं च निरालंबनत्वमेव साध्यते न तु भेदावभासो निषिध्यते। ततोनुमाने भेदवित्या विरोधोपि नास्ति। भेदावभासस्य च भ्रान्तत्वेपि व्यवहाराविसंवादापेक्षया प्रमाणत्वान्नान्वयाद्यसिद्धिरिति।

संदिग्धानैकान्तिकस्तावदयं हेतुः—प्रत्ययत्वसालम्बनत्वयोर्विरोधासिद्धेः। न च केषांचित्प्रत्ययानां यथाध्यवसितमालंबनं न दृष्टमित्येतावतैव व्यतिरेकसिद्धिः त्वद्दर्शनेऽप्यनभ्युपगमात्। तथा चोक्तम् :—

न युक्ताऽदृष्टिमात्रेण विपक्षेऽव्यभिचारिता।
संभाव्यव्यभिचारत्वात्स्थालीतण्डुलपाकवत् ॥

---

१. चर्चितपूर्वं ग्राह्यत्वाध्यवसेयत्वे द्र० न्या० बिं० पृ० ७१।

२. गड्डुः = मांसग्रन्थिविशेषः, तस्याक्षिणि प्रवेशेऽक्षितारकस्य बहिर्निःसरणं यथा भवति, तथा ग्राह्यग्राहकभेदे निरस्ते अद्वैतवादोष्ट्रः प्रविष्टः सन् सौगतसिद्धान्तजवनिकामेवोदपाटयदिति भावः।

३. तथा चोक्तम्—

जाग्रतः प्रत्ययो मिथ्या प्रत्ययत्वात्तथा हि यः।
प्रत्ययः स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा ॥

यस्यादर्शनमात्रेण व्यतिरेकः प्रदर्श्यते ।
तस्य संशयहेतुत्वाच्छेषवत्तदुदाहृतम् ॥

अथान्यदन्यस्यालम्बनं न युक्तम् । कोऽत्र विरोधः ? सर्वास्यालम्बनत्वप्रसंगोऽन्यत्वाविशेषादिति चेत्, न; अन्यत्वेपि कारणवन्नियमसम्भवात्, न हि धूमस्य स्वात्मैव कारणं सर्वं वाऽन्यत्वाविशेषादिति । बोधोत्पादेपि प्रागिवाप्रकाशोऽर्थः कथं प्रकाशतां यायात् ? प्रकाशात्मोत्पादे वा स एव बोधस्तस्य प्रकाशलक्षणत्वादिति चेत्, न; अक्षणिकत्वसिद्धौ तद्विषयप्रकाशसम्बन्धादेव तस्य प्रकाश्यत्वात् प्रदीपघटवत् । किं चानेकज्ञातृसंवेद्यं न ज्ञानं, तद्विपरीतस्तु बाह्योऽर्थः । तथा हि—नर्तकी नर्तिष्यति इति श्रुत्वा तद्दर्शनोत्सुका बहवो लोकाः प्रवृत्तास्तामविशेषेण पश्यन्ति । स्वप्नेप्येतदस्तीति चेत्, न; तत्रोत्तरोत्तरसंवादानुपपत्तेः । 'सर्व एव प्रत्यया निरालम्बना इति ब्रुवाणस्य स्ववाक्योपन्यासविरोधः, तथा हि—इदं वाक्यं साधनत्वेन भवता परप्रत्यायनार्थमुपन्यस्तं, न च भवतः परावबोधोऽस्ति, अवबोधे वा, परावबोधस्यैव सालम्बनत्वात् तेनैवानैकान्तः । पराप्रतिपत्तौ च कथं सर्वप्रत्ययानां प्रत्ययत्वं गृह्यते ? न चागृहीतं पक्षधर्मत्वं गमकम्, तथा दृष्टान्तासिद्धावगमकत्वं, तत्सिद्धौ वानैकान्तिकत्वम् । तथानुमानमपि यदि सर्वप्रत्ययविषयं, तदा तस्यैव सालम्बनत्वं नो चेत्तदा कथं सर्वप्रत्ययानां निरालम्बनत्वसिद्धिः ? सर्वानुमानस्य निरालम्बनस्यैव प्रमाणत्वाभ्युपगमादयमदोष इति चेत् ? तदयुक्तम्; निरालम्बनस्य प्रमाणत्वायोगात् । न हि पारिभाषिकं ज्ञानस्य प्रमाणत्वं निरालम्बनत्वं च । किं तर्हि ? प्रमेयं परिच्छिद्यते येन तत्प्रमाणम्, यत्र तु न किंचित्प्रतिभाति तन्निरालम्बनमुच्यते । तत्कथं नानयोर्विरोधः ?

स्वात्मालम्बनस्याप्यर्थान्तरालम्बनत्वाभिधानादविरोध इति चेत्, न; किमिदानीं स्वात्मापेक्षयैव तस्यानुमानत्वम् । न च स्वात्मैकविषयेणार्थान्तराणां सालम्बनत्वं वा सिद्ध्यत्यविषयत्वात् । न हि यो यस्य न विषयः, स तेन साधयितुं शक्यते, तत्साधने हि स एव तस्य विषयः स्यात्, आत्मस्वरूपवत् साध्यलक्षणत्वाद्विषयस्य । मणिवदविषयस्याप्यविसंवादादेव सिद्धिरिति चेत्, न; अविसंवादिनो मणिज्ञानस्य प्रभाविषयत्वासिद्धेः, सिद्धौ वा स एव विसंवाद इति कथं तस्याविसंवादित्वम् ? तदुत्तरमेव मणिज्ञानं प्रमाणमिति वक्ष्यामः । प्रत्ययान्तरसिद्ध्या च बाह्यासिद्धेः सामानयोगक्षेमत्वं प्रागेव दर्शितम् । तेन च प्रत्ययान्तरसिद्धिवन्नीलादेरप्यबोधात्मकत्वसिद्धिः । कस्यचिद् बाह्यार्थज्ञानस्य प्रमाणाभासत्वदर्शनात्सर्वबाह्यार्थज्ञानानां प्रमाणाभासत्वमयुक्तम्, स्वप्नावस्थानुमानदृष्टान्तेन सर्वानुमानानां प्रमाणाभासत्वप्रसंगात् । ततः किमत्रानुपपन्नम् ?

निरालम्बनानुमानमेव नान्यत्किंचित् । निरालम्बनानुमानस्याप्यप्रमाणत्वे भवतः काऽर्थसिद्धिरिति चेत्, न काचिदभिप्रेतार्थसिद्धिं मुक्त्वा । स्यादेतद्—यथा कदाचिद्रजतप्रत्ययबाधकस्य शुक्तिकाप्रत्ययस्य प्रत्ययान्तरेण बाधितस्यासत्त्वेपि नैव स्वप्नेन्द्रजालादिषु रजतप्रत्ययस्य सत्यतोपपद्यते । तद्वन्निरालम्बनानुमानस्यासत्त्वेपि तद्बाधितस्य सालम्बनज्ञानस्य सत्यता न युक्तेति । किमनेन वक्तुमभिप्रेतम् ? यदि प्रमाणमन्तरेण प्रमाणाभासेन चात्यन्तादृष्टानां प्रत्ययान्तराणामसत्यतैव व्यवस्थाप्यत इति, तदयुक्तम्; प्रमाणमन्तरेण प्रमेयव्यवस्थासिद्धेरयोगात् ।

बाह्यार्थव्यवस्थासिद्धिरपि तत एव स्यात् तत्सिद्धिनिमित्तस्यैवाभ्रान्तप्रमाणत्वात् । न हि प्रमाणाभ्रान्तावस्य विषाणे स्तः, किं तर्हि ? येनैव पदार्थस्तथात्वेन व्यवस्थाप्यते तदेवाभ्रान्तं प्रमाणम्, त्वन्मते स्वसंवेदनवत् । न च रजतज्ञानस्याप्यसत्यत्वं भ्रान्तेन शुक्तिकाज्ञानेन व्यवस्थाप्यते, किं तर्हि ? तदुत्तरेणाभ्रान्तेनैव ज्ञानेनोभयोरपि रजतशुक्तिकाज्ञानयोरसत्यत्वं व्यवस्थाप्यते ।

यद्वा शुक्तिकाज्ञानस्य शुक्तिकाविषयत्वेनैव भ्रान्तत्वं मिथ्यात्वविशिष्टरजतज्ञानविषयत्वेन भ्रान्तत्वमेव तत्राविसंवादित्वादविसंवादिनश्च भ्रान्तत्वे स्वसंवेदनस्यापि भ्रान्तत्वं स्यात्, ततश्च पारिभाषिकं ज्ञानानां भ्रान्तत्वमुक्तं स्यात । अथ रजतज्ञानादिदृष्टान्तेन सर्वप्रमाणप्रमेयानामव्यवस्थैव साध्यते । तथा सति [1]सुरगुरुमतानुप्रवेशः ततश्च परलोकादिविचारस्तन्निमित्तप्रमाणविचारश्चानुपपन्न एवेति ।

ननु चाव्यवस्थाप्यप्रतीतानां प्रत्ययान्तराणां साधयितुं न शक्यते, स्वसंवेदनैकनिष्ठस्तु भवान् न प्रत्ययान्तरं पश्यति । स्वसंवेदनवेद्यस्य चात्मनो निरालम्बनत्वं भ्रान्तत्वं वा साधयन्तं न कश्चित्त्वां निवारयति, किन्तु सर्वशब्दोऽनर्थकः, प्रत्ययान्तरावगमे वानैकान्तिकत्वमुक्तम्, विरुद्धो वाऽयं हेतुः । तथा हि—सर्वे प्रत्ययाः सालम्बनाः प्रत्ययत्वात्, प्रत्ययान्तरालम्बनप्रत्ययवदिति । धर्म्यसिद्धो दृष्टान्त इति चेत्, तत्किमिदानीं स्वप्नादिप्रत्ययाः पुरुषान्तरप्रत्ययाश्च न प्रतीयन्त एव ? अप्रतीतैश्च तैः कथं व्यवहार इति ? क एवमाह—न प्रतीयन्त इति, किन्तु नालम्बनीभवन्तीति ब्रूमः । प्रतीयन्ते न चालम्बनीभवन्तीति सुव्याहृतम् । न हि प्रतीयमानादन्यदेवालम्बनं, स्वसवेदनस्यापि निरालम्बनत्वप्रसंगात् । यद्वस्तु यस्मिन्ननुभवे स्वरूपेण प्रतिभाति तत्तस्यालम्बनं न प्रतीयमानमात्रं, स्मर्यमाणस्यापि आलम्बनत्वप्रसंगादिति चेत्, न; आलम्बनविपरीताविपरीत-

१. सुरगुरुमतानुप्रवेशः = चार्वाकमतप्रवेशः ।

सन्दिग्धाद्यनेकलक्षणोपपन्नत्वात्, यतो ज्ञेयमालम्बनं विषयोऽर्थः प्रत्ययावभासीति पर्यायाः। यच्चाविसंवादिनि ज्ञाने प्रतिभाति तत्स्वरूपेणैव प्रतिभातीति कथं न प्रत्ययान्तराण्यालम्बनीभवन्ति ?

ननु च प्रत्ययान्तराणां सामान्याकारेण प्रतीतेः कथं स्वरूपप्रतीतिः ? न हि तेषां साधारणं स्वरूपमस्ति, यच्च तेषामसाधारणं स्वरूपं तत्परोक्षत्वान्न प्रतिभात्येवातो नालम्बनमिति, तदयुक्तम्; साधारणरूपस्यापि वास्तवत्वात्तदनुमानस्य चेति वक्ष्यामः।

यदि च प्रत्ययान्तरासंसर्ग्यवास्तमेव रूपं प्रतिभाति तस्यैव निरालम्बनत्वं साध्यते, ततः शशविषाणतैक्ष्ण्यसाधकानुमानवदनर्थकमेवेदं स्यात्। न हि शशविषाणवदत्यन्तानुपलब्धैः परमार्थसद्भिः प्रत्ययान्तरैः सह पारम्पर्येणापि सम्बन्धोऽवगन्तुं पार्यते। [1]मणिदृष्टान्तोप्यत्र न साधीयान्, यतो मणिस्वरूपं परमार्थसदेव तेनैव प्रमात्रा प्रवृत्त्युत्तरकालमुपलभ्यते नैवं प्रत्ययान्तराणां स्वरूपं, तदुपलम्भे वा कथं न तदुपलम्भस्य सालम्बनत्वम् ?

## ※ स्वाप्नजागरितप्रत्ययवैलक्षण्यम् ※

यदप्युक्तम्—लोकप्रतीत्यैव जाग्रत्स्वप्नादिप्रत्ययानां भेदसिद्धेः, तदाश्रयेण तावत्साधनव्यवहारः, ततः पश्चाद् यदि परामृशता किंचिदत्र विभागकारणमुपलक्ष्यत इत्यभेदं साधयति, तथा सति कः परस्य दोषः ? एवं हि दोषे वेदप्रामाण्यसाधनेपि दोषः स्यात्। तथा हि—यावद्वेदस्याप्रमाणेभ्यो लौकिकवाक्येभ्यो न पृथग्ग्रहणं तावन्न धर्मिस्वरूपसिद्धिः, तदसिद्धौ च न तत्प्रामाण्यमपि सिद्धमिति निष्फलमनुमानं स्यात्। न च स्वरवर्णानुपूर्वीविशेषाद्विशेषसिद्धिः, तदन्येषामपि परस्परतस्तथा भेदसम्भवात्।

अथास्ति तावदयं [2]प्रबन्धः—किमयं वेदः, उत न ? इति विचार्यमाणो यदि प्रमाणं भविष्यति तदायं वेद एव, अथान्यथा नानेन प्रयोजनमिति परित्यजामः। समानमत्रापि। प्रत्ययस्तावदीक्ष्यते स्वप्नप्रसिद्धिरस्मात् किं भिन्ना, न वा ? इति विकल्पने यथा परं भविष्यतः तदा द्रक्ष्याम इत्यपि यदि पश्चाद्विचार्यमाणं स्वप्नज्ञानमन्यद्वा परस्परं भिन्नं भवेत्तदा भेदं ग्रहीष्यामः। अथ

१. मणिदृष्टान्तः—

मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति॥ (प्र० वा० ३।५७)।

२. प्रबन्धः = वाक्यनिचयः।

भेदकारणं न किमप्यस्तीत्यभेदं तदा प्रतिपत्स्यामहे। ततः कोऽत्र विरोध इति ? तदेतदन्धविजृम्भितं 'वेदप्रामाण्यवादिनः खलु तावल्लोकं पश्यन्ति तत्प्रतीतिं च जानन्ति, ततः सामान्येन लोकप्रसिद्धस्य वेदाख्यस्य धर्मिणः प्रमाणत्वादिविशेषपरीक्षणं युक्तम्। त्वं पुनः स्वसंवेदनव्यतिरेकेण किंचिदपि न पश्यसि। प्रमाणाभासेन च पक्षादिग्रहणे कथमलीकाङ्गो हेतुः प्रमाणं स्यादिति।

## ॐ प्रज्ञाकरसमाधाननिरासः ॐ

ननु च अलंकारे प्रज्ञाकरगुप्तेनैव स्वयमेतदाशंक्य परिहृतम्। यदाह—[1]"पूर्वं भेदग्राहकमप्रमाणमिति चेत्, भवतु को दोषः ? पक्षादिप्रविभागो न भवेदिति चेत्, मा भूदिदानीं किं नो विघटितम् ? इदमेव—यदप्रमाणत्वमभेदसाधनस्येति (चेत्,) एवं तर्हि वेदलक्षणप्रमाणाप्रमाणसाधारणासाधारणधर्मिप्रतिपत्तिरप्रमाणमेव स्यात्, पश्चात्प्रमाणत्वसाधनेन निवर्त्तनात्। ततो धर्मिसाधनस्याप्रमाणत्वात्तद्द्वारेण प्रामाण्यसाधनमपि अप्रमाणं भवेदिति न वेदप्रामाण्यसिद्धिः। ततः सकलसाध्यसाधनव्यवहारो विशीर्येत।

अथ धर्मिणः साधारणस्य ग्रहणेपि न तद्ग्राहकमप्रमाणम्, प्रामाण्यस्याधिकस्य तत्रैव साधनादिति। तदप्यसत्, यतः—

[2]प्रमाणत्वं हि तस्यैव स्वरूपं धर्मिणो यदा।
तस्य तत्परिहारेण ग्रहणेपि कथं प्रमा ॥६६५॥

प्रमाणस्वरूपं हि वेदवचनं तस्य तद्विपर्ययग्रहणे तद्विपर्ययोन्मूलने परेण कृते कथमप्रमाणता न भवेत् ?

## ॐ धर्मधर्मिभेदनिरासपरिहारः ॐ

अथ व्यतिरिक्तधर्माभ्युपगमान्नैतद्दूषणम्, न; अनवस्थाप्रसंगात्। तथा हि—

व्यतिरिक्तो यदा धर्मस्तेन योगः परो भवेत्।
तेन योगः पुनस्तेनेत्यनन्तो धर्मविप्लवः ॥६६६॥

तद्युक्तत्वं तयोरेव स्वरूपं यदि सम्मतम्।
प्रमाणत्वं तथा प्राप्तमस्माकं का विरोधिता ॥६६७॥

---

१, प्र० वा० अ० पृ० ३६१ पं० ३—पृ० ३६१ पं० २३।

२. अभेदप्रतिपत्तुः = भवतोऽभेदं प्रतियतः इति प्रज्ञाकरपाठः। अभेदं मन्वानस्य योगाचारस्येति तदर्थः।

भेदेनापि गृहीतस्य समारोपस्य भावतः ।
परामर्शादभेदस्य प्रतिपत्तिः किमप्रमा ॥६६८॥

अभेदप्रतिपत्तुः पक्षादिविभागेन साधनं न प्रवर्त्तत इत्यपि नाशंकनीयम्, यतः परप्रत्ययापेक्षयेदमनुवादमात्रकं स्वयमपि चापूर्वाभ्यासेन साधनप्रयोग इत्यनवद्यम् । ममाप्येवमासीदिति परः प्रतिपाद्यते इति ।"

तदेतदीर्ष्याशल्यवितुद्यमानमर्म्मायं विक्लवं क्रोशतीति पश्यामः । तथा हि—वेदस्य तावत्सामान्यविशेषलक्षणौ धर्मौ यदि व्यतिरिक्तौ साधयिष्यामस्तथा सति अनवकाश एव त्वदर्शनस्य ।

अथाप्यतद्व्यावृत्तिनिबन्धनौ, तथापि दृष्टे धर्मिणि सदृशात्मना निश्चिते सति धर्मान्तरादर्शनसमारोपव्यवच्छेदार्थमनुमानं प्रवर्त्तत इति युक्तम् । यदा तु धर्मिण एव प्रत्ययान्तरलक्षणाः कदाचिदपि न दृष्टिगोचरास्तदा किमाश्रयमनुमानं प्रवर्त्तेत ? न हि सुशिक्षितोऽपि कश्चिदाकाशे चित्रविन्यासं शक्तः कर्त्तुं । यदि हि धर्मिणः प्रत्ययान्तरलक्षणाः स्वरूपेण दृष्टा भवन्ति, तदा तद्दर्शनबलोद्भूतेन प्रत्ययत्त्वनिश्चयेन निरालम्बनत्वादर्शनसमारोपव्यवच्छेदार्थमनुमानं प्रवर्त्तत इत्येषापि प्रक्रिया संभाव्येत, न च पिशाचवददृष्टेषु धर्मिषु ।

न च स्वसंवेदनव्यतिरेकेण भवतः प्रत्ययान्तरोपलम्भोऽप्यस्तीत्युक्तम् । यत्पुनरेतद्भेदेनापि गृहीतस्येत्यादीदं विस्मृतप्रकरणस्याभिधानम्, यतः सर्वप्रत्ययानां निरालम्बनत्वसाधनं प्रक्रान्तं नाद्वैतसाधनम् । अथ सर्वप्रत्ययानां निरालम्बनत्वेनाविशेष एवाभेदोभिप्रेतो न त्वद्वैतम्, तथापि प्रत्ययान्तराग्रहणेऽनुमानाप्रवृत्तिः तद्ग्रहणे त्वनैकान्तिकत्वं हेतोरित्युक्तम् ।

अथानेन क्रमेण स्वसंवेदनस्यैव भेदसमारोपव्यवच्छेदः साध्यते, न; प्रागेव विचारितत्त्वात् । अपि च किं येनैव भेदः समारोप्यते, तेनैव व्यवच्छिद्यते ? प्रत्ययान्तरेण वेति ? तेनैवेति न युक्तं, समारोपणव्यवच्छेदकाकारयोरेकात्मत्वविरोधात् ।

अथ प्रत्ययान्तरेण, न प्रत्ययान्तराद्भिदा ।
एवं तावद्वचः कोऽन्यो भदन्ताद्वक्तुमर्हति ॥

परप्रत्ययापेक्षयेदमनुवादमात्रकं, स्वयमपि पूर्वाभ्यासेनेत्याद्यपि अभेदविरुद्धादयुक्तमेवेति । न चाप्रतिपन्नप्रत्ययः पूर्वाभ्यासश्च हेतुत्वेनाभिधातुं युक्तः । केशादिवदनालंबनेनैव प्रतायत इति चेत, न; केशादिज्ञानस्याप्रमाणत्वात् ।

१. प्र० वा० ३।३३१, ३३२ ।

अत एव 'अवेद्यवेदकाकारा' इत्यादिश्लोकद्वयं प्रमाणीकुर्वता शाक्येनाद्वैतमेवाभ्युपगन्तव्यमन्यथा तद्विरोधः स्यात्। प्रत्ययान्तरवद् बाह्यार्थसिद्धिरपि निरालंबनप्रत्ययादेव भविष्यतीति दुस्तरे व्यसने बतायं भिक्षुः पतित इति।

यदि च स्वात्मालंबनत्वं निरालम्बनत्वमभिप्रेतं, तदा साध्यविकलो दृष्टान्तः स्वप्नादिप्रत्ययानामपि स्वात्मालम्बनत्वासिद्धेः, स्वसंवेदने प्रमाणाभावस्योक्तत्वात्, अन्यसंवेदनस्य च साधितत्वात्।

अथ न किंचिदालम्बनमस्तीति विवक्षितं, तदा घटादिवद् बोधस्याप्यसिद्धिस्ततः [1]स्वदृष्टिविरोधोऽस्तं जगत्स्यात्। अथ बाह्यालम्बनमेव विवक्षितम्, तदयुक्तं; विपरीतख्यातिसमर्थनात्, स्मृतेरपि स्मर्त्तव्यालम्बत्वप्रतिपादनात्। यथा प्रतिभातार्थालम्बनत्वं स्वप्नादिज्ञानवदिति चेत्, एवं तर्हि बोधावभासितेपि प्रत्ययस्य तदालम्बनत्वं न स्यात्। ततश्च बाह्यार्थवद् बोधस्याप्यसिद्धिरित्यायातमान्ध्यमशेषस्य जगतः, न हि कस्यचित्तत्त्वतोऽसिद्धौऽभ्रान्त्युपप्लवोपि सिद्ध्यति परिभाषामात्रप्रसंगात्। अथ बाह्यत्वेन प्रतीतस्य केशादेरर्थप्राप्त्यनुपलम्भेनासत्त्वसिद्धेस्तत्प्रतिभासस्य निरालम्बनत्वसिद्धौ तत्समानरूपोपलक्षणात् सर्वप्रत्ययानां निरालम्बनत्वसिद्धिर्न पुनरात्मालम्बनत्वे बाधकं किंचिदस्तीति, तदप्ययुक्तम्; समानरूपोपलक्षणासिद्धेः, सर्वत्रार्थप्राप्तौ हि समानरूपत्वं सिद्ध्यति। यदा तु क्वचिदर्थः प्राप्यते, तदा कुतः समानरूपत्वम्? अथ नैव क्वचिदर्थप्राप्तिरस्ति, तत्प्रतिषेधस्तर्हि कथं? न हि पिशाचादिवदत्यन्तादृष्टार्थस्य प्रतिषेधः शक्यः कर्त्तुम्। ज्ञानादस्य भेदः प्रतिषिध्यते, न त्वर्थ एव तस्य ज्ञानात्मकत्वादिति चेत्, भेदोप्यत्यन्तादृष्टः कथं प्रतिषिध्यते? दृष्टश्चेन्न तर्हि तस्यात्यन्तासत्त्वम्। खरविषाणप्रधानादेः कथं प्रतिषेध इति चेत्, न; तत्रापि हि दृष्टस्यैव विषाणजातीयस्य खरमस्तकोद्भूतत्वं प्रतिषिध्यते। सुखदुःखमोहान्वितं च जगदुपादानत्वं प्रतिषिध्यते। जगदुपादानस्य वा परमाणुन्यायेनानुमितस्य सुखाद्यात्मकत्वमेकत्वं च निषिद्ध्यत इत्येवमन्यत्रापि दृष्टस्यैव देशकालसामर्थ्यादिप्रतिषेधो द्रष्टव्य इति। स्वसंवेदनपक्षे च भेददर्शनं न क्वचिदस्तीत्युक्तम्।

## * प्रत्यक्षेण भेदप्रतिषेधनिरासः *

प्रत्यक्षेणापास्तविषयत्वाच्च न भेदप्रतिषेधः प्रमाणम्। तथा हि—ज्ञानमन्तर्मुखाकारास्थिरत्वादिरूपेण वेद्यते, नीलाद्यर्थस्तु बहिष्ठत्वस्थिरत्वादि-

---

१. स्वदृष्टिः = स्वदर्शनम्, स्वमतमिति यावत्।

रूपेणेति। प्राणभृन्मात्रव्यवहारविरोधाच्च—न हि क्षणध्वंसिज्ञानमात्रावगमे कश्चिदिष्टानिष्टप्राप्तिपरिहारार्थं प्रवर्तत इति। स्वप्नादिवदेतत् सर्वमिति चेत्, न; उत्पन्नबाधकानां भवतामपि प्रवृत्त्यादिदर्शनात्।

ननु च ज्ञानादर्थान्तरत्वेऽर्थस्य कथं कश्चिदेवार्थस्तेन दृष्टः। यदि दर्शन-सम्बन्धात्, सोऽपि सम्बन्धो यद्यर्थान्तरं, तदा तत्सम्बन्धस्यापि सम्बन्धान्तर-कल्पनेत्यनवस्था स्यात्। अथानर्थान्तरं, ततः कथं ज्ञानादर्थान्तरमर्थः प्रत्यक्षेण सिद्ध्यति। तस्मात्संवेदनान्तःप्रविष्टः सन्नर्थः संवेद्यत इति युज्यते, न तु तदसंस्पर्शी। तदुक्तम्—

संवेदनेन बाह्यत्वमतोऽर्थस्य न सिध्यति।
संवेदनाद् बहिर्भावे स एव तु न सिध्यति॥
यदि संवेद्यते नीलं कथं बाह्यं तदुच्यते।
न चेत्संवेद्यते नीलं कथं बाह्यं तदुच्यते॥
अन्येन वेदने तेन तेनैत्येषानवस्थितिः।
अन्येन वेदने चैतत्कुतोऽवसितमात्मना॥ इति।
(प्र० वा० अ० ७१७–७१९)

तदेतदप्ययुक्तम्—प्रागेव हि सर्वस्यापि वेद्यस्य वेदनान्तरवेद्यत्वं साधितम्। धर्मधर्मिणोश्चार्थान्तरत्वं वक्ष्यामः।

## ❀ अनवस्थापरिहारः ❀

किं च निश्चयवन्नानवस्था। यथा त्वद्दर्शने विकल्परूपो निश्चयः, स चात्मान-मनिश्चिन्वन्नेवार्थान्तरं निश्चिनोति, न च निश्चयानवस्था। तथान्यस्यापि ज्ञातस्याज्ञातस्यैवार्थान्तरज्ञेयव्यवस्थापकत्वमदुष्टं, निश्चयस्य चार्थान्तरव्यवस्था-पकत्वं त्वयैवाभ्युपगतम्। यस्मादुक्तम्—"केशज्ञाने सति पूर्वानुभूतस्मरणादेवं-भूतप्रतिभासानन्तरं प्राप्तिरासीत्। तद्विकल्पो ग्राह्यग्राहकोल्लेखेनोत्पत्तिमान्, सोऽपि स्वरूपेण ग्राह्यग्राहकरूपरहित एवापरेण तथा व्यवस्थाप्यते। न तस्यापि स्वतोऽव्यवस्थेति।" (प्र० वा० अ० पृ० ३६०) विकल्पः स्मृतिरूपत्वादनालम्बन एवेति चेत्, भवतु तथापि तावदस्य ग्राह्यग्राहकक्षणिकत्वाद्यात्मकत्वेनार्थान्तर-व्यवस्थापने सामर्थ्यमिष्टमेव। तद्वत् स्थिरत्वादिकबाह्यार्थव्यवस्थापने निरालम्ब-नमेव सामर्थ्यं भवतु इति नास्माकं ग्रहः। स्यादेतत्—विकल्पस्य स्मृतिरूपत्वाद् यथानुभूतार्थव्यवस्थापकत्वेनैव प्रामाण्यसम्भवात्। स्वविदितज्ञानधर्मव्यवस्था-पकस्यैव विकल्पस्य प्रमाणत्वं युक्तम्, न त्वनुभूतबाह्यार्थधर्मव्यवस्थापकस्येति।

[1]'कुत एतत् प्रतिपत्तव्यम् ? न खलु तावन्निर्विकल्पकेनैवात्मनः क्षणिकत्वादिस्वभावोऽनुभूयमानः प्रतीयते ? निश्चयस्तु बाह्येप्यस्तीति कथं तस्याननुभूतत्वम् ? न च त्वन्मते गृहीतग्राहिणः प्रामाण्यमिष्टम्, यथादृष्टाकारग्रहणान्न प्रमाणमिति वचनात्' [2]'अज्ञातार्थप्रकाशो वेति विशेषणाच्च ।

## * स्वाप्नार्थानामपि नासत्त्वम् *

अपि च स्वप्नादिज्ञानेष्वपि विच्छेदेनावभातानामर्थानामसत्त्वं कथं निश्चितम् ? यदि विसंवादादर्थक्रियादनुपलब्धेर्वेत्युच्यते, तदयुक्तम्; यदि ह्यविसंवादेनार्थक्रियया वा व्याप्तोऽर्थः क्वचिदुपलब्धो भवति, तदा तदभावादर्थाभावः सिद्ध्यति; दहनाभावाद्धूमाभाववत् । यदा तु बाह्यार्थस्यानपह्नवस्तदा न तस्य केनापि सह व्याप्यव्यापकभावः प्रतिपन्न इति कथं विपर्ययव्याप्तिः स्यात् ? स्यान्मतम्—स्वप्नादिबुद्धीनां विषयाभावः सर्वलोकसिद्धत्वान्नास्माभिः साध्यत इति, न; लोकप्रसिद्धेः प्रमाणत्वानभ्युपगमात् । अभ्युपगमे वा तत एव जाग्रद्बुद्धीनां पक्षीकृतानां विषयसिद्धिरिति कथं सर्वप्रत्ययानां निरालम्बनत्वसिद्धिः ? स्वयं वा प्रतिपद्यमानस्य परप्रसिद्धिमात्रेण दृष्टान्तोपादानमयुक्तम्, परार्थानुमानस्य स्वदृष्टार्थप्रकाशनलक्षणत्वात् । तथा चोक्तम्—"[3]यथैव हि स्वयं त्रिरूपाल्लिङ्गाल्लिङ्गिनि ज्ञानमुत्पन्नं तथैव परत्र लिङ्गिज्ञानोत्पिपादयिषया त्रिरूपलिंगाख्यानं परार्थमनुमानम्, कारणे कार्योपचरात्स्वदृष्टार्थग्रहणमागमात्, परदृष्टं न साधनं नाप्यनर्थतः सिद्धिरिति ज्ञापनार्थमिति। तस्मान्न परप्रसिद्धिमात्रेण स्वप्नादिज्ञानानां दृष्टान्तत्वं युक्तम्, सहोपलम्भादिसाधनं च प्रागेव निराकृतमिति न ततो दृष्टान्तसिद्धिः । सिद्धौ वा तत एव साध्यसिद्धेरप्युपपत्तिरिति व्यर्थं प्रत्ययत्वम् । अपि च योऽयं नीलाद्याकारः स्वप्नादिज्ञानेषु प्रतिभाति तस्यैवासत्त्वं बाधकात् प्रतिपद्यन्ते व्यवहर्त्तारः । तद् यदसौ ज्ञानादर्थान्तरं न भवति, तदा ज्ञानस्यैवासत्त्वं प्राप्तम् । न वा नीलाद्याकारं स्वप्नादिज्ञानम् । ततश्च निराकाराः सर्वे प्रत्ययाः प्रत्ययत्वात्, स्वप्नादिप्रत्ययवदिति वाक्यार्थो निरालंबनानुमानस्य प्राप्तः । यदा चैवं न व्यतिरिक्तो नाप्यव्यतिरिक्तो नीलाद्याकारोऽस्ति ज्ञानस्य तदा सर्वव्यवहारोच्छेद एव प्रसज्यत इति । यदि च सर्व एव प्रत्यया निरालंबनास्तदा व्यवहर्तॄणां क्वचिद्

१. प्रतिविधत्ते—कुत एतदिति ।
२. प्र० वा० ३।५ ।
३. न्या० वि० पृ० १५० ।

विसंवादः क्वचित्तु देशकालादिव्यवधानेपि संवाद एवेति कुतोऽयं नियमः ? वासनाभेदादिति चेत्—अथ मन्यसे, यत्राऽदृढवासनानिमित्तं तत्र विसंवादः, यत्र तु दृढवासनानिमित्तं तत्र संवाद इति, न; प्रमाणाभावात्।

## ❀ बाह्यार्थकल्पनमेव ज्यायः ❀

अपि च वरमेवं बाह्यार्थानामेव [1]दृढादृढभेदेन निमित्तत्वकल्पनं, तेषां व्यवहारविषयत्वोपपत्तेः, न तु वासनानाम्। वासनादृढत्वे च किं निमित्तम् ? न तावत् पटुः प्रत्ययः, अपूर्वार्थविशेषानभ्युपगमात्। अकस्माच्च प्रत्ययविशेषो ज्ञानमात्रान्नोपपद्यते। अथादरप्रत्ययोऽभ्यासप्रत्ययो वा निमित्तम्, न; व्यभिचारात्। तथा हि—कामशोकाद्यभिभूतानां कामिन्यपत्याद्यर्थेष्वत्यादराभ्यासातिशयप्रतीतेष्वपि पुनः कदाचित्तथार्थप्रत्ययस्य विसंवादित्वं दृश्यते, क्वचित्पुनरत्यन्तापूर्वेर्थेनाश्चर्यकारिण्यपि प्रत्ययः संवाद्येवेति। तत्रापि जन्मान्तरोद्भववासनास्तीति चेत, न; अतद्विपरीतप्रत्ययाभ्यासात्तस्यास्तिरोभावसंभवात्। अन्यथा हि नैरात्म्याद्यभ्यासाद्रागादिवासनानामपि तिरोभावो न स्यात्। न च ज्ञानव्यतिरिक्तार्थासंभवे नियतवासनाप्रबोधकं कारणमस्ति। पूर्वज्ञानविनाशे हि सांप्रतमनेकवासनात्मकमेव ज्ञानमस्ति कथं तत एव नियतप्रतिभासोदयः ? उत्तरत्रापि वासनानिमित्तं विचारयिष्याम इत्यास्तां तावत्।

इतश्च न ज्ञानात्मक एव नीलादिरर्थः, स्वपरसंवेद्यत्वात्। न हि ज्ञानस्वभावस्यानेकपुरुषसंवेद्यत्वमुपपद्यते। कथं पुनरर्थस्यानेकपुरुषवेद्यत्वं गम्यते ? वचनप्रवृत्त्याद्यविसंवादिलिंगात्। तैमिरिकद्वयवचनादेस्तु पुरुषान्तरविसंवादित्वादलिंगत्वम्। यदि च परावबोधः प्रत्येतुं न शक्यते ततः शास्त्रप्रणयनादिष्वप्रवृत्तिरेव प्राप्ता। न ह्युन्मत्तोपि कश्चिदात्मावबोधार्थमेव शास्त्रं व्याचष्टे साधनाद्युपन्यासं च वादे करोति असाधनांगवचनाद्युद्भावनेन चात्मानमेव निगृह्णातीति।

अथ बाह्यार्थाभावेपि परावबोधव्यापारव्यवहारप्रतिभासलिंगानुमेयत्वाददोषः, तथा हि—स्वगतप्रयत्नविवक्षानिरपेक्षयोश्चेष्टावाक्यप्रतिभासयोरन्याधिपत्येनोत्पत्तिरनुमीयत इति, नैतदस्ति; स्वसंवेदनमात्रवादिनां स्वज्ञानान्तरावगमोऽपि न सम्भवति, कुतः परावबोधावगमः ? इति प्रागेव प्रपंचितम्।

---

१. दृढादृढभेदेन = तात्त्विकारोपितभेदेन।

## ❀ निरालम्बनवादे सन्तानान्तरासिद्धिः ❀

अपि च स्वप्नवत् सर्वप्रत्यया निरालम्बना इति ब्रुवाणस्य कथं सन्तानान्तरसिद्धिः ? न हि स्वप्नदृष्टान्ताभ्यां गमनवचनप्रतिभासाभ्यां वास्तवी पुरुषान्तरसिद्धिरुपपद्यते, नापि स्वप्नवद् बुद्धाख्यानवादादिकरणे परानुग्रहजयपराजयादिकं वा किंचिदुपपद्यते। धर्मापवर्गादिसाधनानुष्ठानं न प्राप्नोति। न हि स्वप्ने कृतं बुद्धाश्रयादिकर्म ब्रह्मचर्यादिकं वा धर्मसाधनं, अभक्ष्यभक्षणागम्यगमनादिकं वाऽधर्मसाधनं युक्तम्। न च निर्विषयत्वाविशेषे स्वप्नजाग्रदवस्थयोर्विशेषः कश्चिदस्ति।

## ❀ सर्वभ्रान्तत्वे बुद्धादीनामाडम्बरता ❀

येनैकत्र धर्मादिसाधनव्यवस्था नान्यत्रेति धर्मादिसाधनेऽपि भ्रान्तित एव प्रवृत्तिरिति चेत्, भवन्तस्तर्हि तत्त्वदर्शिनः सन्तः किमर्थं बुद्धधर्मसङ्घदानाद्युपदेशेनोपासकप्रतिबोधनाय प्रवर्त्तन्ते। पूर्वसंस्कारादित्येतदप्यसदुत्तरम्, न हि विकलवत्प्रतिबुद्धोऽपि कश्चिदमेध्यादिभक्षणे प्रवर्त्तते। तस्मादिमे सौगताः शून्यताभिधानेनासारतां प्रदर्श्य बुद्धाय देयं, धर्माय देयं, संघाय देयमित्येव लोकान् विप्रतार्य मिष्टान्नपानाद्युपयोगं कुर्वन्तः पूर्वसंस्काराविशेषेपि अमेध्यभक्षणादिकं परिहरन्तश्चक्रभ्रमणवदस्माकं पूर्वसंस्कारादेव प्रवृत्तिरित्येवं ब्रुवाणाश्च धूर्ततामेवात्मनः प्रकटयन्तीति।

यथैव हि चक्रस्याभ्रान्तौ सत्यां भ्रमणसंस्कारो न भवति। एवं मिष्टान्नादिभ्रान्तिनिवृत्तौ तद्धेतुः संस्कारो न युज्यते। न हि जलादिभ्रान्तिनिवृत्तौ तत्संस्कारादेव तदर्थक्रियासिद्ध्यर्थं प्रवर्तमानः कश्चिदुपलभ्यते। अपि च नीलाद्यर्थाभावे कथं नीलादिज्ञानं, न हि निर्हेतुकं कार्यं सम्भवति, नित्यं सत्त्वमसत्त्वं चेत्यादिबाधकात्।

न च ज्ञानमात्रादविशिष्टादेव विलक्षणप्रतिभासः सम्भवति। कार्यानुमानविरोधप्रसंगात्। न हि नीलादिज्ञानानां प्रत्येकमविच्छेदेनानादिः सन्तानो गृह्यते, येन कारणानुविधानं कार्यस्य प्रतीयेत। एकार्थप्रतिभासप्रवाहे खलु तद्विलक्षणहेतुसंनिपातमन्तरेण कथं तद्विलक्षणः प्रतिभासः प्रादुर्भवति ? बाह्यार्थपक्षे त्वदुष्टसहकारिणः पुंसो जलाद्यर्थसन्निपातादवितथं जलादिज्ञानं तदर्थानुविधानेनैव भवति। दुष्टसहकारिणस्तु विपर्यय इति। यथा नीहारेष्वदृष्टाद्युपप्लुताक्षाणां गन्धर्वनगरज्ञानम्। मन्त्राद्युपप्लुताक्षाणां मायाविप्रयुक्तद्रव्यविशेषे

भोजनादिज्ञानम्। स्वप्नादिज्ञानमपि निमित्तान्तरोपनिपाताद् बाह्य एवार्थे भवतीति प्रागेव प्रपञ्चितम्।

## ❀ विज्ञप्तिमात्रपक्षे वासनादिहेतुवैचित्र्याभावः ❀

न चैवं हेतुवैचित्र्यं विज्ञप्तिमात्रपक्षेऽस्ति, तत्कुतः प्रतिभासवैचित्र्यमिति ? वासनावशात्प्रतिभासवैचित्र्यमिति चेत्, ज्ञानव्यतिरिक्तार्थानभ्युपगमे का वासना ?

ननु चोक्तम्[1]—वासनेति पूर्वज्ञानजनितां शक्तिमामनन्ति वासनाविद इति। अथ किं पूर्वज्ञानेनात्मतुल्यज्ञानोत्पादिका शक्तिर्जन्यते, विलक्षणज्ञानोत्पादिका वेति ? पूर्वस्मिन् पक्षे नीलज्ञानोत्पादिका नीलज्ञानान्नीलज्ञानस्योत्पत्तिः, ततोपि नीलज्ञानस्यैवेति नीलज्ञानसन्तानः, एकस्मिन् सन्तानेऽनेकाकारज्ञानोदयो न स्यात्। उत्तरस्मिन् पक्षे तु कियन्तमपि कालमेकाकारज्ञानप्रवाहो न स्यात्। कालान्तरे च तत्सदृशोत्पादकत्वमित्यप्ययुक्तम्; क्षणिकत्वेन नष्टस्य जनकत्वासम्भवात्। कार्पासे रक्ततावदित्येदप्युत्तरत्र निराकरिष्यामः।

किं चोपादानादन्येन वास्यमानं दृष्टं यथा [2]लाक्षादिना कर्पासादिकं पुष्पादिना वस्त्रं चेति। न च ज्ञानस्योपादानादन्यकारणमिष्टं सन्तानान्तरज्ञानं तु बाह्यार्थवदविदितं कथं वासकत्वेन कल्प्येत ? यदि च वासनैव निमित्तं स्यात्ततः स्मृतिरिव स्यान्न स्पष्टाभता। न हि केवलवासनातः स्पष्टज्ञाने स्पष्टाभतायाम्, उभयप्रसिद्धौ दृष्टान्तोस्ति, विपर्यये तु स्मृतिरिव दृष्टान्तः। कामाद्यभिभूतानां स्त्र्यादिनिर्भासज्ञानं साध्यत्वादनुदाहरणम्, तस्यापि स्तम्भाद्यालम्बनत्वान्निमीलिताक्षस्यानुत्पादाच्चेति।

यदप्युच्यते—स्वप्नोपलब्धार्थानां यथा जाग्रदवस्थायामनुपलम्भादसत्त्वं तथा जाग्रदुपलब्धानां स्वप्नावस्थायामनुपलम्भादसत्त्वमिति। तदप्ययुक्तम्—

---

१. प्रज्ञाकरगुप्तेन वासनास्वरूपमेवं प्रतिपादितम्—

वासना पूर्वविज्ञानकृतिका शक्तिरुच्यते।
तस्या अमूर्तताभावात् कथमर्थसमानता॥ ६४५॥

वासनेति हि पूर्वविज्ञानजनितां शक्तिमामनन्ति वासनास्वरूपविदः ( प्र० वा० अ० पृ० ३५६ )।

२. तथा चोक्तम्—

कुसुमे बीजपूरादेर्यल्लाक्षाद्युपसिच्यते।
तद्रूपस्यैव संक्रान्तिः फले तस्येति वासना॥ ( प्र० वा० अ० ६८१ )।

**तद् यथा—चक्षुःस्पर्शनसंयोगाद् घटादिद्रव्यज्ञानम् ।**

---

स्वप्नोपलब्धार्थानां स्वप्नावस्थायामपि विप्लवदर्शनात् । तथा हि—प्रभूतमुदकं पिबतोपि तर्षोपशमो न भवति, भोज्यं भुंजानस्यापि क्षुन्न निवर्त्तते । मृता छिन्नशिरसश्च जीवन्तो ब्रुवन्तः, अश्वगवादयोपि ब्रुवाणा दृश्यन्ते, तिर्यङ्मानुषादीनां च क्षणमात्रेण जातिविपर्ययः कार्यकारणभावविपर्ययश्चेत्येवमादिविप्लवो दृश्यते । न च जाग्रदुपलंभाः स्वप्नावस्थायामप्यसत्यत्वेनैवानुसन्धीयन्ते ।

ननु स्वप्नोपलब्धः शुक्रविसर्गो न व्यभिचरति । ततः किं ? तत्कारणस्यापि स्त्रीसंपर्कस्य सत्यत्वप्रसंग इति चेत्, न; मिथ्याज्ञानजादपि रागातिशयाद्रेतःस्पन्दस्य संभवात्, स्रग्विलेपननखक्षतादिकार्यानुपलम्भाच्च । तस्माज्जाग्रतः स्वपतो वा यदविसंवादि ज्ञानं तत्सत्यार्थमेव, यस्य तु विसंवादो भवति तदसत्यार्थं विपरीतालंबनमित्यर्थः ।

अपि च भावनान्वयव्यतिरेकानुविधायित्वं यस्योपलभ्यते, तद्वासनानिमित्तं युक्तं यथा कामक्रोधादि । धनधान्यादिकं तु भावनातिशयादपि कृष्याद्युपायहीनस्य न सम्पद्यते । विनापि भावनां इष्टानिष्टापूर्वार्थप्राप्तिरुपलभ्यते ।

अथ वैजात्यादपूर्वार्थो नैवोपलभ्यते, तदुच्यते—तदा मोक्षशास्त्रोपलम्भोप्यपूर्वो न स्यात्ततश्च मोक्षोपायवासनापि संसारनिमित्तवासनावदतात्त्विकत्वान्न मोक्षसाधिका, न हि कदाचिदपूर्ववासनाधायकं निमित्तमुपलभ्यते यद्वशादपूर्वोऽपवर्गः स्यादिति । तदेवं प्रत्यक्षादिभिः प्रमाणैः स्वशास्त्रार्थेन च विरुद्धत्वादयुक्तमेवोक्तं सर्वं निरालम्बनमेव ज्ञानमिति । तस्मादर्थस्य स्थूलाकारता न ज्ञानस्येति युक्तमुक्तम् ।

## ❀ द्रव्यप्रत्यक्षनिरूपणम् ❀

अर्थस्यापि न परमाणुसमूहात्मकस्य स्थूलत्वं, किं तु तदुत्पादितस्यावयविविशेषस्येति ज्ञापनार्थं घटादिग्रहणम् । 'आदि'ग्रहणं तु सर्वस्यास्मदादीन्द्रियविषयस्यावयविनः संग्रहार्थं, तस्यापि रूपादिभ्योऽर्थान्तरत्वज्ञापनार्थं 'द्रव्य'-ग्रहणम् । आदिग्रहणं तदर्थान्तरत्वं च घटादेः प्रत्यक्षेणैव गृह्यते, यस्मादिन्द्रियव्यापारभावाभावानुविधानेन घटोऽयमित्यादिज्ञानं रूपादिप्रतिभासविलक्षणं सर्वेषामुत्पद्यमानं दृष्टम् । अत्र कश्चिदाह—

अविद्यमानाभेदेपि तदक्षागोचरत्वतः ।
स्पृशतोप्यस्ति सा बुद्धिर्द्रव्यं तत्स्पार्शनं यदि ॥

नायं घट इति ज्ञाने वर्णप्रत्यवभासनाद् ।

अस्यार्थः—अविद्यमानेनाभेदेप्यविशेषेपि घटस्य कथं प्रत्यक्षत्वमित्यध्याहार्यम् । यथैवाविद्यमानस्येन्द्रियज्ञानोत्पत्तावसामर्थ्यं तथा घटस्येत्येषोऽविशेषः, तस्मात् तदक्षागोचरत्वतः, न हि नयनाविषयस्य स्वात्मनि चक्षुर्ज्ञानोत्पादने सामर्थ्यमस्ति । तदक्षागोचरत्वं च नासिद्धं यतः स्पृशतोप्यस्ति सा बुद्धिः, चक्षुर्विषये स्पार्शनबुद्धिर्न युक्ता स्पर्शनविषये तच्चक्षुर्बुद्धिर्न युक्तेति मन्यते । विशेषकस्त्वाह—द्रव्यं तत्स्पार्शनं यदि । धीन्द्रियग्राह्यत्वं घटस्य यद्यस्ति, ततः सिद्धं रूपादिभ्योऽर्थान्तरत्वमित्यभिप्रायः । अत्रोत्तरम्—'नायं घट' इत्यादि, न ह्ययं घट इति ज्ञानं स्पर्शनेन्द्रियजं युक्तं, नीलादिवर्णस्याप्यत्र प्रत्यवभासनात्, तेन रूपस्पर्शविज्ञानान्वयो मानस एव स्मार्त्तो विकल्प इति । तदिदं व्यामूढभाषितम्—न हि स्पार्शने घटज्ञाने रूपप्रतिभासः कस्यचिदस्ति, किं तु घटज्ञानानन्तरमानुमानिकं रूपज्ञानं भवति । न चैतावतैव घटज्ञानस्य स्पर्शनेन्द्रियाजन्यत्वं, स्पर्शज्ञानस्याप्यतज्जन्यत्वप्रसंगात् ।

ननु च स्पार्शनं ज्ञानं सविकल्पकं न भवति, निर्विकल्पकज्ञाने तु नैव घटः प्रतिभाति स्पर्शस्यैव प्रतिभासनादिति कोशपानमेवात्र कर्तव्यं, न हि न्यायः कश्चिदस्ति । भवतोपि तुल्यमिति चेत्, न; भिन्नाकारप्रतिभासस्य भिन्नाकारनिश्चयेन व्यवस्थापितस्य नीलपीतादिवदर्थनिबन्धनार्थत्वात् । अभिन्नेप्यर्थे कामिनीकुणपादिनिश्चयभेदादनेकान्त इति चेत्, न; तत्रापि धर्मभेदस्य वास्तवत्वात् । य एव दृष्टो मया स एव स्पृश्यते इति च प्रत्ययः कथं ? रूपस्पर्शविलक्षणवस्त्वग्रहणे भवितुमर्हति ।

ननु च दर्शनयोगी दृष्ट इत्युच्यते, स च कथं स्प्रष्टुं शक्यत इति ? अत्रैके परिहरन्ति—दर्शनस्पर्शनविशिष्ट एकोर्थो मनसैवाध्यक्षीक्रियते, मनसः सर्वार्थत्वात् । न च सर्वज्ञत्वप्रसंगः चक्षुरादिवैयर्थ्यं वा, यथादृष्टसहकार्यनुविधानेन मनसः प्रवृत्त्यभ्युपगमात् । अन्ये तु वर्णयन्ति—दर्शनविशिष्टार्थस्मृतिसहितेन स्पर्शनेन्द्रियेण स एव दृष्टो मया स्पृश्यत इति ज्ञानमुत्पद्यते, सामग्रीभेदादेकस्मिन्नेवार्थे प्रत्ययवैलक्षण्योपपत्तेरिति । न चेदं प्रत्यभिज्ञानं भ्रान्तमबाध्यमानत्वात् । भ्रान्तमपि प्रत्यभिज्ञानं सादृश्यादुत्पद्यते यथा प्रदीपादिषु, न च रूपस्पर्शयोः सादृश्यं मनागपि विद्यते । न च भ्रान्त्यापि प्रत्यभिज्ञारूपस्पर्शविषयत्वेन संवेद्यते । न ह्येवं कश्चित्प्रत्यभिजानाति—यदेवाहं शौक्ल्यमद्राक्षं तदेतर्हि स्पृशामि, यच्चौष्ण्यमस्प्राक्षं तदेवेदानीं पश्यामीति । रूपादिभ्योऽर्थान्तरं घटादिद्रव्यमनेकेन्द्रियसंबंधित्वेन प्रतिसंधीयमानत्वात्, अहंकार-

**संयुक्तसमवायात् ताभ्यां घटत्वसंख्यापरिमाणादिज्ञानम्। चक्षुषैव रूपज्ञानम्। रसनेनैव रसज्ञानम्। घ्राणेनैव गन्धज्ञानम्। स्पर्शनेनैव स्पर्शज्ञानम्। श्रोत्रेणैव शब्दज्ञानम्। मनसैव सुखादिज्ञानमिति।**

---

वदित्यनुमानमपि कुतर्काभिनिविष्टप्रतिबोधनार्थमुच्यते। रूपाद्यग्रहेपि च द्रव्यं गृह्यते--यथा स्पर्शाग्रहेप्युदकं, रूपाग्रहेपि स्फटिकादिकमिति। अथाग्निसंबंधादुदकस्पर्श एवोष्ण उत्पद्यते स्फटिकादिरूपं च निमित्तान्तर-सन्निधानात्तद्रूपसदृशमिति, न; क्षणिकत्वात् सिद्धे अक्षणिकत्वे वावयविनि च सिद्धे सति आशुतरविनाशिनोपि न निरन्वयो विनाशः कारणगुणानु-विधानेनैव च कार्यगुणोत्पत्तिरिति, कथं तथोत्पादः? तस्माद्रूपादिभ्योऽन्यदेव स्फटिकादिद्रव्यमिति स्थितम्। एवं चास्याप्यनवकाश एव—

सर्व एव घटो दृष्टो? रूपे दृष्टे न जायते।
तस्मात्कस्तत्त्ववित् ब्रूयाद् घटः प्रत्यक्ष इत्यपि॥ इति।

एवं तावद् द्रव्यविषयं प्रत्यक्षं व्याख्यातम्।

## ❀ गुणादीनां प्रत्यक्षम् ❀

इदानीं गुणादिविषयं व्याख्यातुमुक्रम्यते—संयुक्तसमवायादित्यादिना। चक्षुषा संयुक्ते घटादिद्रव्ये समवेतानां सामान्यविशेषाणां संख्यापरिमाणपृथक्त्व-संयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगकर्मणां चाक्षुषं ज्ञानं, स्पर्शनेन संयुक्ते च द्रव्ये समवेतानां तेषामेव स्पार्शनं ज्ञानमिति। 'चक्षुषैव' संयुक्तसमवाया-दित्यनुवर्त्तते। रूपज्ञानस्यान्येन्द्रियजन्यत्वनिषेधार्थं चक्षुषैवेत्यवधारणम्। यद्यपि मनसोपि व्यापारोऽस्ति, तथापि चक्षुष एव प्राधान्यम्, साक्षादर्थ-संबद्धत्वाच्चाक्षुषं ज्ञानमिति व्यपदेशाच्च। स्पर्शनानुवृत्तिनिषेधार्थत्वाद्वा इत्येवमुत्तरत्रापि द्रष्टव्यम्। स्पर्शनैव स्पर्शज्ञानं, घ्राणेनैव गन्धज्ञानं, रसनेनैव रसज्ञानं, मनसैव सुखादिज्ञानम्। सर्वत्र संयुक्तसमवायादित्य-नुवृत्तं द्रष्टव्यम्।

ननु च सुखादीनां ज्ञानात्मकत्वात्स्वसंवेद्यत्वमेव। ज्ञानात्मकत्वं तुल्यहे-तु जत्वात्। तदुक्तम्—

[1]तदतद्रूपिणो भावाः तदतद्रूपहेतुजाः।
तत्सुखादिकमज्ञानं विज्ञानाभिन्नहेतुजम्॥ १॥

---

१. प्र० वा० ३।२५२।

**एतेषु संख्यादिषु समवेतानां सामान्यानां स्वाश्रयग्राहकैरिन्द्रियैः संयुक्तसमवेतसमवायाद् ग्रहणम् ।**

---

तदयुक्तम्—ज्ञानस्यापि हि स्वसंवेद्यत्वं नास्तीति हि प्रागेव प्रपंचितम् । सुखादेस्तु ज्ञानात्मकत्वमेव नास्ति, कुतः स्वसंवेद्यत्वम् ? तुल्यहेतुजत्वं च नाभेदसाधनं, पाकजैरनेकान्तिकत्वात् । त्वन्मतेपि घटादिभंगजः शब्दः कपालखण्डादितुल्यहेतुजो न च तद्रूप इत्यनैकान्तः । सर्वथा तुल्यहेतुजत्वं चासिद्धम्, सुखादेरभिलाषानभिलाषादिप्रतिनियतनिमित्तत्वादिति । प्रत्यक्षेणानन्दतापादिभेदग्राहिणाऽपास्तविषयत्वाच्च भेदसाधनमयुक्तम् । संशयविपर्ययनिर्णयादिवदवान्तरभेदोऽयमिति चेत्, न; संशयादिष्विव सुखादिषु ज्ञानं ज्ञानमित्यनुवृत्तप्रत्ययानुपलम्भात् । न चार्थविषयत्वेन संशयादिवत्सुखादयः संवेद्यन्ते, तस्मान्न ज्ञानरूपाः सुखादय इति । अबोधात्मकत्वे तु सुखादीनां बाह्यत्वं साधारणत्वं च प्रसज्यत इति चेत्, न; आत्मसमवायित्वेन तदनुपपत्तेः । चेतनाश्चैते सुखादयः संवेद्यत्वाद्रूपादित्ययं रूपादिभिरनैकान्तिकत्वादहेतुः । प्रतिकर्मव्यवस्था च निराकारत्वेपि साधिता, विज्ञानवादोपि निराकृतः इत्यपरिहार्यमनैकान्तिकत्वम्, स्वसंवेदनस्य च विस्तरेण निराकृतत्वान्न स्वसंवेद्याः सुखादय इति ।

एतेषु संख्यादिषु समवेतानां सामान्यानां स्वाश्रयग्राहकैरिन्द्रियैः संयुक्तसमवेतसमवायाद् ग्रहणम्—इत्यत्र संख्यादिवचनं घटत्वादिनिषेधार्थम्, सामान्येषु समवेतसामान्यानभ्युपगमात् । आदिग्रहणेन सुखादिपर्य्यन्तं गृह्यते । तेषु समवेतानां सत्तागुणत्वसंख्यादीनां सुखाद्यन्तानां सामान्यानाम् । स्वाश्रयग्राहकैरिति संख्यादिकर्म्मान्तेषु समवेतानां चक्षुषा स्पर्शनेन वा संयुक्तसमवेतसमवायाद् ग्रहणम् । रूपाश्रितानां चक्षुषैव, स्पर्शाश्रितानां स्पर्शनेनैव, गन्धाश्रितानां घ्राणेनैव, रसाश्रितानां रसनेनैव, सुखाद्याश्रितानां मनसैव, सत्तागुणत्वयोस्तु सर्वगुणाश्रितत्वात् सर्वेन्द्रियैर्ग्रहणमिति ।

ननु च सत्तायाः प्रत्यक्षत्वं कदाचिद्भवति, सर्वत्र सत्सदिति प्रत्यक्षदर्शनात्, गुणत्वस्य तु कथं प्रत्यक्षत्वम् ? न हि वैशेषिकैरप्रतारितानां रूपादिष्वनुगतं गुणत्वं प्रतिभाति । लोके शास्त्रान्तरेषु चान्यत्रापि गुणव्यवहारो दृष्टः कथं रूपादिष्वेव गुणत्वम् ? यदि च रूपादिष्वेव गुणत्वं स्यात्ततो रूपे रसे वा गुणसंकेतग्रहणात् सर्वत्र गुणव्यवहारः स्याद्, गवादिव्यवहारवत् । न हि सामान्यं स्वव्यवहारार्थं प्रत्याधारं संकेतमपेक्षते ।

यदप्यनुमानं कैश्चिदुक्तम्—"रूपादयः सत्ताव्यतिरिक्तापरसामान्यसंबंधिनः, अपरसामान्यसंबंधिदत्वात्, उत्क्षेपणादिवत् ।" इति तदपि गुणत्वस्य प्रत्यक्षत्व-साधकं न भवति । अथ त्यक्तं प्रत्यक्षत्वं, सत्त्वमेवानेन साध्यते, न; कर्मणा-नैकान्तिकत्वात् । न हि कर्मसु सत्ताव्यतिरिक्तं कर्मत्वात्परं सामान्यमस्ति । कर्मत्वमेवोत्क्षेपणत्वादिभ्यः परमिति चेत्, एवं तर्हि नीलत्वादिभ्यः परं रूपत्वमेवास्तु मधुरत्वादिभ्यः परं रसत्वमित्येवं सर्वत्र योज्यम् ।

## ※ गुणकर्मानुस्यूतगुणत्वनिरूपणम् ※

अथ रूपरसादिष्वनुगतेन सत्ताव्यतिरिक्तेन प्रयोजनम्, कर्मरूपादिष्वनु-गतेनापि तर्हि प्रयोजनमिति कर्मवर्गोपि पंचविंशतितमो गुणभेद एवास्तु न कंचिदत्र विशेषं पश्यामः । किमेषां[1] गुणत्वमिति चेत्, गुणलक्षणमेव । तच्चास्पर्शत्वे[2] सामान्यवत्वे च सति द्रव्याश्रितत्वं सर्वेषामस्ति रूपादीनाम् । सर्वेन्द्रियप्रत्यक्षं तु गुणत्वं पूर्वाचार्यैरिष्टम् । तच्च तथास्तु मा भूद् वेति, नात्र निर्बन्धोऽस्माकम्, प्रयोजनाभावात् । द्रव्यलक्षणं च द्रव्यत्वं गुणाश्रयत्वं च भवतु मा भूद्वा, समवायिकारणत्वं तु केन वार्यते ? गुणलक्षणं संख्यादिषु न युक्तं लक्ष्यासिद्धत्वादिति चेत्, न; यौक्तप्रत्ययसिद्धत्वात् । तथा हि—एकादि-प्रत्यया विशेषणग्रहणापेक्षाः, विशिष्टप्रत्ययत्वात्, दण्डीति प्रत्ययवत् ।

## ※ एकत्वादेर्गुणत्वसिद्धिः ※

एवमपि सत्त्वादिवदेकत्वादेः कथं गुणत्वसिद्धिः ? न हि सदादिप्रत्यय-वदेकादिप्रत्ययः क्वचिन्न भवति । को वात्र विशेषो येन सत्त्वादीनां गुणादिष्वपि वृत्तिः सामान्यानाधारत्वं चेष्यते, नैकत्वादीनाम् ? एकादिव्यवहारश्च गुणादिषु तदेकार्थसमवायात् तदाध्यारोपाद्वा । नत्वेवं सदादिव्यवहार इति । अथ मन्यसे—यदि संख्या गुणो न स्यादनित्यत्वमसमवायिकारणत्वं च न स्यात्, अस्ति च तदुभयम्, तथा चोक्तम्—[3]"एकादिव्यवहारहेतुः संख्या, सा पुनरेक-

---

१. एषाम् = गुणकर्मणाम् ।

२. एतल्लक्षणमालोचयद्भिरुदयनाचार्यैरुदीरितम्—"सामान्यवान् स्पर्शरहितो द्रव्याश्रितो गुणः" इत्यतिव्यापकं, कर्मण्यपि गतत्वात् ( प्र० भा० किर० पृ० १६१ ) । कर्मणो गुणत्वं न विवक्षितं वैशेषिकाचार्यैरित्यपि तत्रैव विपश्चितम् ।

३. प्र० भा० पृ० १६२ ।

द्रव्या चानेकद्रव्या च। तत्रैकद्रव्यायाः सलिलादिपरमाणुरूपादीनामिव नित्यानित्यत्वनिष्पत्तयः, अनेकद्रव्या तु द्वित्वादिका परार्धान्ता। तस्याः खल्वेकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिः, अपेक्षाबुद्धिविनाशाच्च विनाशः।" कदाचिदाश्रयजनाशादुभयविनाशाच्चेति चार्थः। तथा द्वित्व-बहुत्वयोः परिमाणं प्रत्यसमवायिकारणत्वमुक्तमिति। 'यत्तावदेकत्वस्य नित्या-नित्यत्वनिष्पत्तयः इति, तन्न; भेदवदसम्भवात्।

यथा न कार्यभिन्नतायां कारणभिन्नतानामसमवायिकारणत्वं कल्प्यते, भिन्नतायाः सत्त्वादिवदुत्पत्त्याद्यसम्भवात्, तथैकत्वस्यापि तस्याभेदपर्यायत्वात्। अभेदभेदौ च स्वात्मपरात्मापेक्षौ रूपादिष्वपि भवत इति न तयोर्गुणत्वादि-कल्पनेति। यथा चैकमभिन्नमिति पर्यायस्तथानेकं भिन्नमिति च पर्यायस्ततश्च द्वित्वादिरप्यनेकपर्यायः तस्योत्पत्त्यादिकल्पना न कार्या।

कथं तर्हि द्वे त्रीणीत्यादिप्रविभागः? कथं च न स्यात्? अनेकत्वस्या-विशिष्टत्वात्, न; अपेक्षाबुद्धिविशेषवत्तत्सिद्धेः—यथानेकविषयित्वाविशेषेपि काचिदपेक्षाबुद्धिर्द्वित्वोत्पादिका, काचित् त्रित्वोत्पादिकेति। न चापेक्षाबुद्धेः पूर्व-वद् द्वित्वादिगुणोऽस्ति, अनवस्थाप्रसंगात्। अपेक्षाबुद्धिजनितस्य च द्वित्वा-देरानर्थक्यप्रसंगात्। यत एव विशेषादपेक्षाबुद्धिविशेषस्तत एव द्वित्वादि-व्यवहारोऽस्त्विति किमन्तर्गडुना द्वित्वादिगुणेन कल्पितेनेति? एवं हि गुणादि-ष्वपि द्वित्वव्यवहारोऽकष्टकल्पनः स्यात्। तथा गणितव्यवहारोपि षड्भि-र्विंशतिभिः सार्धं शतमित्येवमादिः सुगमः स्यात्। तस्मादभिन्नं तावदेक-मित्युच्यते, तदपरेणाभिन्नेन सह द्वे इति, ते तदपरेणाभिन्नेन सह त्रीणीति, तान्यपरेणाभिन्नेन सह चत्वारीत्येवमादिः समयो गणितशास्त्रप्रसिद्धश्च द्वित्वादिव्यवहारहेतुर्द्रष्टव्य इति।

यदपि परिमाणं प्रत्यसमवायिकारणत्वमुक्तम्, तदप्यप्रमाणकमेव। न हि संख्यायाः परिमाणासमवायिकारणत्वे प्रमाणं किंचिदस्ति। [1]परिशेष इति चेत्, न; कारणपरिमाणस्यैवासमवायिकारणत्वसंभवाद्रूपादिवत्। परमाणु-परिमाणजन्यत्वे द्व्यणुकेऽपि परमाणुत्वप्रसंग इत्ययुक्तम्, कार्यकारणयोस्तुल्य-

---

१. परिशेषप्रकारस्तावत्—त्रसरेणुपरिमाणं केन जन्यते—द्व्यणुकपरिमाणेन वा? द्व्यणुकगतसंख्यया वा? नाद्यः, कारणपरिमाणस्य स्वसजातीयोत्कृष्ट-परिमाणजनकत्वात्। तथा सति त्रसरेणुपरिमाणस्याणुतरत्वेनाप्रत्यक्षत्वं स्यात्। अतः पारिशेष्यात् संख्यैव तत्परिमाणारम्भिकोपेयते इति।

परिमाणत्वे दृष्टान्ताभावात्। सर्वत्र हि कारणपरिमाणादधिकमेव कार्यपरिमाणं दृश्यते।

अथ तन्तुद्वितन्तुकादीनां महत्त्वेन तुल्यपरिमाणत्वमेवेति, परमाणुद्व्यणुकयोरप्यणुत्वेनाविशेषेप्यणुतरविशेषः केन वार्यते? परमाणुसंख्या परिमाणस्य कारणं न भवति, संख्यात्वात्, पटादिसंख्यावत्। तथा विवादगोचरापन्ना संख्या महत्त्वारम्भिकापि न भवति, संख्यात्वादुभयाभिमतसंख्यावत्। एतेन ह्रस्वत्वदीर्घत्वारम्भनिषेधः कृतो द्रष्टव्यः। सन्निवेशविशेषश्च दीर्घत्वमहत्वयोः कारणं प्रतीयते, तस्यासमवायिकारणत्वं निमित्तत्वं वा कल्प्यमिति नास्माकमाग्रहः। तुल्यपरिमाणैर्बहुभिरारब्धे महत्त्वातिशयदर्शनात् कथं संख्या न कारणमिति चेत्, न; अनैकान्तात्। तुल्यप्रयत्नैर्बहुभिः पाषाणोत्थापनाद्यतिशयदर्शनेपि, न तत्र संख्यायाः कारणत्वम्। तत्रापि निमित्तत्वाभ्युपगमादिति चेद्, अत्रापि निमित्तत्वं केन वार्यते? सामान्यादीनामपि निमित्तत्वादिति।

## ❀ परिमाणस्यागुणत्वम् ❀

अन्ये तु परिमाणस्यापि गुणत्वं नेच्छन्ति। महदादिव्यापारस्यापेक्षानिबन्धनत्वात्। न च गुणेष्वेवं व्यवहारोऽस्ति, न हि रूपादिषु शुक्लादिव्यवहारः कृष्णाद्यपेक्षया इति। ननु च समिदिक्षुवंशादिषु भाक्तो ह्रस्वव्यवहार इत्युक्तम्, न; अत्र मुख्यगौणविभागस्याप्रमाणकत्वात्। न हि यथा सिंहमाणवकादिषु मुख्यगौणविवेकप्रतिपत्तिः सर्वेषामस्ति, तथा द्व्यणुके एवाणुत्वह्रस्वत्वे मुख्येऽन्यत्र भाक्ते इति कस्यचित्प्रतिपत्तिरस्ति। प्रक्रियामात्रस्य च सर्वशास्त्रेषु सुलभत्वान्न तत एव विवादनिवृत्तिरिति।

## ❀ पृथक्त्वस्य भेदरूपत्वम् ❀

पृथक्त्वस्यापि गुणत्वमयुक्तम्, भिन्नत्वस्यैव पृथगिति व्यवहारहेतुत्वात्। यदा तावदेकं वस्त्वितरेभ्यो भिन्नं पश्यति तदैकं पृथगिति प्रतिपद्यते। यदा द्वे वस्तुनीतरेभ्यो विलक्षणैकधर्मयोगाद्भिन्ने पश्यति, तदा द्वे पृथगिति मन्यते। यदा त्वेकदेशत्वादिना धर्मेणेतरेभ्यो बहूनि भिन्नानि पश्यति, तदैतान्येतेभ्यः पृथगिति प्रतिपद्यते, यथा रूपादयो द्रव्यात् पृथगिति। एवं च भेदप्रत्यायकधर्मव्यतिरेकेण नान्यदस्ति पृथक्त्वम् ततश्च तत्प्रक्रियागहनमपि निस्तीर्णं भवतीति।

## ❀ विभागस्य संयोगाभावत्वम् ❀

विभागोऽपि संयोगाभावलक्षणत्वान्न गुणः, चिरनिवृत्तेपि संयोगे क्वचिदनुत्पन्नेपि विभक्तप्रत्ययदर्शनात्। तद्व्यतिरिक्तविभागस्वरूपानुपलम्भान्नोपचारकल्पनापि साध्वीति। विभागाभावे कुतः संयोगनिवृत्तिरिति चेत्, न; कर्मण एव संयोगनिवर्त्तकत्वात्। कर्ममात्रादपि संयोगनिवृत्तिप्रसंग इति चेत्, संयोगमात्रनिवृत्तिरिष्टैव। कर्मविशेषात्तु संयोगविशेषनिवृत्तिः त्वन्मतेपि विभागविशेषोत्पत्तिवदिति। संयोगोत्पादकस्य कथं निवर्त्तकत्वमिति चेत्, कर्मोत्पादकस्य तर्हि संयोगस्य कर्मनिवर्त्तकत्वं न प्राप्नोति। अन्यस्य तन्निवर्त्तकत्वमिति चेत्, समानम्, संयोगान्तं कर्मेतिवचनात्। न हि येनैव कर्मणा यः संयोगो जनितः, स तेनैव निवर्त्त्यत इति। गुणानामेव कार्यकारणोभयविरोधित्वं न कर्मण इति चेत्, न; वचनमात्राद्विवादनिवृत्तेरसम्भवात्। अन्वयव्यतिरेकाभ्यां हि यद् यथा दृश्यते, तत्तथाभ्युपगन्तव्यम्। कर्मणोपि च गुणत्वमेव सामान्यवतः स्पर्शानाधारत्वे सति द्रव्याश्रितत्वाद्, रूपादिवदिति। विभागजविभागस्य शब्दं प्रत्यसमवायिकारणत्वात् कथं न गुणत्वमिति चेत्, न; असिद्धत्वात्। वंशपाटनादिषु वायुसंयोगविशेषादेव शब्दविशेषोत्पत्तेः, अंगुलिमुक्ततन्त्रीवत्। वायुसंयोगविशेषोपि द्रव्यविशेषसामर्थ्यात् क्वचिदीदृशो भवति घण्टादिवत्, तन्न शब्दलिंगोपि विभागः।

यदप्युक्तम्—विवक्षितावयवक्रियाऽकाशादिदेशेभ्यो विभागं न करोति द्रव्यारम्भकसंयोगविरोधिविभागोत्पादकत्वात्। या पुनराकाशादिदेशविभागकर्त्री सा संयोगविशेषनिवर्तकविभागजनिकापि न भवति यथांगुलिक्रियेति। एवं ( वाकाशा ) चाकाशादिदेशविभागोत्पादकोवश्यं विभागोऽभ्युपगन्तव्यः। कर्मणो हि विभागोत्पादने विरम्य व्यापारानुपलब्धेरिति, न; विभागोत्पादकत्वस्यासिद्धत्वात्। क्रियात एव संयोगनिवृत्तिरित्युक्तम्।

अथाकाशादिदेशसंयोगं सा न निवर्तयति, द्रव्यारम्भकसंयोगनिवर्तकत्वादिति विवक्षितम्। तथाप्यसाधारणो हेतुः, सपक्षेप्याकाशादिदेशसंयोगानिवर्तके रूपादौ न वर्तत इति। विरोधाभावश्च यथा काचिदवयवक्रियाऽकाशादिदेशसंयोगं द्रव्यारम्भकसंयोगं च युगपन्न करोति, अथ च विशिष्टक्रिया करोति तथोभयसंयोगविनाशमपि। यद्यपि काचित्क्रिया कुर्वती न दृष्टा, तथापि विशिष्टा करिष्यतीति।

यदि विभागजविभागो नास्ति हस्तकुड्यसंयोगविनाशेपि तर्हि शरीरकुड्यसंयोगविनाशो न प्राप्नोति, न वै हस्तकुड्यसंयोगव्यतिरेकेण शरीरकुड्य-

संयोगं पश्यामः। स दृश्यमानः कथं कल्प्यते ? हस्तकुड्यसंयोगदर्शनादेव कल्प्यत इति चेत्, हस्तकर्मदर्शनात्तर्हि शरीरेऽपि कर्म कस्मान्न कल्प्यते तुल्ययोगक्षेमत्वात्। अपि च हस्तकुड्यसंयोगनाशादेव शरीरकुड्यसंयोगनाशो भविष्यति, न विभागजविभागेन प्रयोजनम्।

ननु प्रतिबद्ध एव विनाशो विनाशहेतुरिष्टो न सर्वः। प्रतिबद्धत्वं खलु नोपदेशगम्यं किन्त्वन्वयव्यतिरेकसमधिगम्यम्, तच्चात्राप्यस्तीति न संयोगाभावव्यतिरिक्तो विभागः।

## ❀ परत्वादेरगुणान्तरत्वम् ❀

[1]नापि परत्वापरत्वे, संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वयोः पूर्वोत्तरजन्मनोश्च परापरव्यवहारहेतुत्वात्। विप्रकृष्टं परमिति वानयोर्भेदं न पश्यामः तथा सन्निकृष्टमपरमिति वानयोरप्येकार्थत्वम्। तस्माद्विप्रकृष्टसंनिकृष्टबुद्धिभ्यां परत्वापरत्वयोरुत्पत्तिरित्यपि न युक्तम्, न हि घटबुद्धिमपेक्ष्य कुम्भ उत्पद्यत इति युक्तम्। अपि चैवं सामान्येष्वपि महदल्पाधारत्वबुद्ध्यपेक्षयोः परत्वापरत्वयोरुत्पत्तिः कल्पनीया स्यात्, अविशेषात्। तस्मात्सामान्यादिष्विव संकेतनिबन्धनोऽयं परापरव्यवहारः, संकेतनिमित्तं च संयुक्तसंयोगभूयस्त्वादि चिंतितमेवेति। किं च परत्वापरत्वयोर्गुणत्वमभ्युपगच्छताऽन्यत्वं च गुणोऽभ्युपगन्तव्यः, कालकृतदिक्कृतान्यव्यवहारस्यासमानत्वादिति।

## ❀ वेगस्य क्रियारूपत्वम् ❀

वेगोपि न गुणान्तरं, क्रियाणां शीघ्रोत्पादमात्रे वेगव्यवहारात्। वेगेन गच्छतीति प्रतीतेः क्रियातोऽर्थान्तरं वेग इति चेत्, न; वेगेन गच्छतीति शीघ्रं गच्छतीत्येकार्थत्वात्। तद्यथा वेगेन शास्त्रं जानाति, वेगेन [2]षष्ठिकाः पच्यन्त इति। सन्तानेनागतः शब्द इत्यत्रापि न शब्दव्यतिरिक्तो गुणः संतानाख्योऽभ्युपगम्यते। शब्दधर्मः कारणशब्दो वा सन्तान इति चेत्, एवं तर्हि कर्मकर्म, कारणकर्म वा वेग इत्यस्तु। कर्मणः कर्मारंभकत्वेऽनुपरमप्रसंग इति चेत्, न; शब्दवत्तदुपरमोपपत्तेः। "कर्म कर्मसाध्यं न विद्यते" ( वै० सू० १।१।१० ) इत्यस्य विरोध इति चेत्, न; वचनमात्रविरोधस्याविरोधात्।

ननु सर्वज्ञत्वात् काणादसूत्राणां वचनमात्रत्वमयुक्तम्। अस्य मुष्टिना

---

१. नापि परत्वापरत्वे इत्यस्यानन्तरं न गुणान्तरे इत्यध्याहार्यम्।

२. "षष्टिकाः षष्टिरात्रेण पच्यन्ते" ( पा० सू० ५।१।९० )। षष्टिको धान्यविशेषः, सांठीति भाषायां प्रसिद्धः।

वज्रं धृतवतः शक्रः प्रत्यक्षोऽभूदिति श्रूयते, स तथा चास्य भगवान्महेश्वरः प्रत्यक्षोऽभूदिति श्रूयते। सत्यं, जैमिनेरपि सर्वज्ञत्वात्तत्सूत्राणामपि वचनमात्रत्वमयुक्तं, तथा चास्यापि मुष्टिना वज्रं धृतवतः शक्रः प्रत्यक्षोऽभूदिति श्रूयते। तथा शारीरकसूत्रप्रणेतुरपि सर्वज्ञत्वं, अतीन्द्रियज्ञानदातृत्वात्। तदुक्तम्—

दृष्टिश्चातीन्द्रिया राजन् दूराच्छ्रवणमेव च।
पितुः प्रसादान्मे प्राप्तं पाराशर्यस्य धीमतः॥ इति।

तथा कपिलस्यापि सर्वज्ञत्वं, नैसर्गिकज्ञानातिशयप्रभावातिशययुक्तत्वात्। तथा चास्य दृष्टिनिपातमात्रादेव महावीर्यपराक्रमाणां सगराणां षष्टिसहस्राणि भस्मीभूतानीति श्रूयते। तथाक्षपादस्यापि साक्षादुपेत्य प्रत्यक्षीभूत्वा भगवता महेश्वरेण न्यायशास्त्रकरणेऽभ्यनुज्ञा दत्तेति श्रूयते। एवमेतेषां महर्षीणां शास्त्राणि सर्वज्ञोक्तत्वेन किं नास्माभिः श्रद्धीयन्ते ? किन्तु मन्दबुद्धिभिरस्माभिरविरुद्धार्थत्वेन व्याख्यातुं न शक्यन्ते। अन्यैरपि यथा व्याख्यातानि तथा परस्परविरुद्धार्थान्येव प्रतीयन्ते, विरुद्धार्थानां च सर्वेषां प्रामाण्यं वक्तुमशक्यम्। कतमस्यात्र पक्षपातं कुर्मः ? सर्वेषां सर्वज्ञत्वात् पूज्यत्वाच्च। तस्माद् यथाश्रुतार्थानामेव येषां न्यायविरुद्धत्वं प्रतिभाति, तेषां वेदवाक्यानामिव केषांचिद्वचनमात्रत्वेनाप्रामाण्यमुक्तमिति दोषः। न्यायशास्त्रं च व्याख्यातुं वयं प्रवृत्तास्तेनास्माकं वैशेषिकतन्त्रेण विरोधो न दोषाय। न च न्यायसूत्रं कर्मणः सजातीयारंभकत्वगुणत्वप्रतिषेधकं संख्यादीनां गुणत्वविधायकं चास्तीति।

यद्येवं संख्याद्याश्रितानां सामान्यानां संयुक्तसमवेतसमवायाद् ग्रहणमित्येतद्विरुध्यते, न; विचारणार्थमन्यमतेनास्योपक्षेपात्। अस्माकं पुनरयमभिप्रायः—प्रधाने वस्तुनि यत्नः करणीयः, प्रधानं च वस्तु निःश्रेयसाङ्गं वक्ष्यमाणकं, यदसिद्धौ तन्न सिद्ध्यति, तदपि यत्नतः साधनीयम्, यत्सिद्धौ च तस्यासिद्धिस्तच्च प्रतिषेद्धव्यमेवेति। संख्यादिप्रतिषेधेपि नास्माकं प्रयोजनम्, किन्तु विभागजे विभागे [1]द्वित्वे चाभिनिवेशः कर्तव्य इत्युपदेशश्रवणादत्रैव मुमुक्षुभिराग्रहो न कर्तव्यः, संख्यादीनां गुणत्वासिद्धावपि मुमुक्षूणां न काचित् क्षतिरित्येतद् ज्ञापनार्थं तत्प्रतिषेधोपि दर्शित इति। तथातीन्द्रियगुरुत्वमित्यत्राप्याग्रहो न कर्तव्यः। करतलाद्युपरि स्थिते द्रव्यविशेषे पतनानुपलंभेपि गुरुत्वस्य प्रतिभासनात्। रजःप्रभृतीनामपि गुरुत्वं कस्मान्न गृह्यत इति चेत्,

१. तथा च प्राचां श्लोकः—

द्वित्वे यस्य विशेषोऽस्ति विभागे च विभागजे।
तं वै वैशेषिकं ब्रूयाच्छेषाः स्युर्वातरोगिणः॥

ग्रहणायोग्यत्वात्। योग्यायोग्यत्वे च तद्ग्रहणाग्रहणानुमेये, रसादीनामिव। अन्यथा गन्धरसादीनामपि अतीन्द्रियत्वं स्यात्, तदाश्रयप्रत्यक्षेपि क्वचिद्-ग्रहणादिति। तैजसस्याप्यस्ति द्रव्यत्वमित्यत्राप्याग्रहो न कर्त्तव्यः, सुवर्णादीनामागमतस्तैजसत्वसिद्धावपि पार्थिवस्यैव द्रवत्वस्य रसादिवत्तत्र संयुक्तसमवेतस्यापि ग्रहणसंभवात्। सर्वं तेजो द्रवत्वयुक्तं रूपित्वात्तोयवदिति चेत्, न; प्रत्यक्षेण स्पंदनकर्मानुपलंभेन च बाधितविषयत्वात्। इत्थंधर्मकं तत्तेजसि द्रवत्वं जातं यत्प्रत्यक्षं च भवति स्पंदनक्रियां च न करोतीति चेत्, गुरुत्वरसावप्येवंधर्मकौ रूपित्वादेव किन्न तेजसोऽभ्युपगम्येते? तुल्यदोषपरिहारत्वादिति।

## ❀ स्नेहोऽपि नापां गुणः ❀

स्नेहोऽपामेव गुण इत्यत्राप्याग्रहो न कर्त्तव्यः, घृतादेरपि लोके वैद्यकादिशास्त्रे च स्निग्धत्वेन प्रसिद्धत्वात्। घृतादावन्यनिमित्त औपचारिको वा स्निग्धप्रत्यय इति चेत्, विपर्ययः कस्मान्नेष्यते? तथा हि—तोयसंपर्केऽप्योदनादौ गात्रादौ च स्निग्धप्रत्ययो नास्ति, घृतादिसंपर्के तु स्निग्धप्रत्ययः सर्वेषामपि भवत्येवेति। [1]मृजादिहेतुत्वं च वाय्वग्न्यादिवद् द्रव्यविशेषसामर्थ्यात्, संग्रहहेतुत्वमपि स्नेहरहितस्यापि क्षीरजत्वादेर्दर्शनान्न स्नेहनिमित्तम्। तस्मान्नापां विशेषगुणः स्नेह इति।

## ❀ मृदुत्वादिस्वरूपविचारः ❀

यदि पुनः काठिन्यमार्दवादिवत् स्निग्धतापि न गुण इति कश्चिदुपपादयति, तत्रापि नास्माकं ग्रहः, प्रयोजनाभावात्। ननु च काठिन्यादेरपि संयोगविशेषवत्वात्कथं न गुणत्वम्? तथा चोक्तम्—"अवयवानां प्रशिथिलसंयोगे मृदुत्वमित्याख्यायते, काठिन्यमपि संयोगविशेष एवेति", तदयुक्तम्, चक्षुषा संयोगेषु गृह्यमाणेष्वपि मार्दवादेरप्रतिभासनात्। कटाद्यवयवानां प्रशिथिलसंयोगेपि मृदुत्वाप्रतीतेः, विशिष्टचर्माद्यवयवानामप्रशिथिलसंयोगित्वेपि मृदुत्वोपलब्धेः। कथं तर्हि कठिनमेव द्रव्यं मर्दनादिना क्वचिन्मृदुत्वमापद्यते? न चैतदेव द्रव्यं मृदु भवति। किं तर्हि? पूर्वद्रव्यनिवृत्तौ द्रव्यान्तरं तद्धर्मकमुत्पद्यते। संयोगविशेषमृदुत्ववादिनापि पूर्वद्रव्यनिवृत्तिरभ्युपगन्तव्यैव। द्रव्यधर्मत्वे मृदुत्वादेः घटत्वादिवद् द्वीन्द्रियग्राह्यत्वप्रसंग इति चेत्, न; सुवर्णा-

---

१. मृजा = शुद्धीकरणम्, तथा चाहामरः—"स्यान्मार्ष्टिर्मार्जना मृजा।" मध्येमार्गं चाण्डालस्पृष्टोऽपि वायुसम्पर्केण शुद्धो भवतीति धार्मिकाः।

**श्रोत्रसमवायाच्छब्दग्रहणम्। तदाश्रितसामान्यग्रहणं समवेतसमवायादिति।**

---

दीनां स्थावरजातिविशेषाणां च केषांचिद् द्वीन्द्रियग्राह्यत्वादर्शनात्। स्पर्शधर्मो वास्तु मृदुत्वादिः, मृदुस्पर्शः कठिनस्पर्श इति प्रतीतेः। अत एव स्पर्शस्य पाकजत्वं सिद्धयति, घटादिषु रूपादिवद्विलक्षणस्पर्शोपलंभात्। न च काठिन्यादिव्यतिरेकेण स्पर्शस्यान्यद्वैलक्षण्यं शक्यं व्यवस्थापयितुम्। अवैलक्षण्येपि पाकजत्वमयुक्तम्, परिमाणादेरपि पाकजत्वप्रसंगात्। काठिन्यादेश्चाग्निसंयोगानुविधायित्वदर्शनात्। अन्यत्रापि स्पर्शान्तरप्रादुर्भावदर्शनेनादृष्टोप्यग्निसंयोगो द्रव्यान्तरप्रादुर्भावदर्शनेनैवानुमातव्य इत्यलं प्रसंगेन।

## ❀ शब्दस्वरूपविचारः ❀

शब्दाश्रितानि सामान्यानि शब्दत्वकत्वादीनि, तेषां श्रोत्रेन्द्रियसमवेता ये शब्दाः तेषु समवायेन ग्रहणमित्यर्थः। श्रोत्रेन्द्रिये समवायः शब्दानां कुतः सिद्ध इति चेत्, आकाशस्यैव श्रोत्रत्वात्। नन्वाकाशमेव तावदसिद्धं कुतस्तस्य श्रोत्रत्वमिति, न; आकाशस्य शब्दलिंगत्वात्। तथा हि—क्वचित्समवेतः शब्दो गुणत्वात्, रूपादिवत्। यत्र समवेतस्तस्याकाशमिति संज्ञा क्रियते। गुणत्वं कुत इति चेत्, उच्यते—गुणः शब्दः सामान्यवत्त्वे सति सामान्यवदनाधारत्वात्, रूपादिवदिति। देशान्तरगतिप्रतीतेः (त्रिषु) द्रव्यं शब्द इति चेत्, न; उत्पत्तिसन्तानाच्छायावद्देशान्तरप्रतीतेः। दुःखविशेषहेतुत्वात्स्पर्शवाञ्छब्दः कण्टकादिवदिति चेत्, न; तीव्रत्वादिविशेषनिमित्तत्वात् दुःखविशेषस्य, तस्मात्स्पर्शवाञ्छब्दः इति भ्रान्तिः। स्वर्शवत्वे हि शब्दस्य प्रतिवाते पर्णादिवदागमनं न स्यात्। कुड्यादिपरतोऽवस्थितस्य च शरवाय्वादिवदागमनं न स्यात्। तृणादीनां च शब्दजः कम्पो गृह्यते, वेगवद् द्रव्यविशेषसंबंधस्य क्रियाहेतुत्वात्, तस्मात्सन्तानवान् गुणः शब्द इति। पूर्वाचार्यैस्त्वयं हेतुरुक्तः—सामान्यवत्त्वे सत्यनित्यत्वे सति बाह्यनियतैकेन्द्रियग्राह्यत्वादिति। अत्रास्पर्शवत्त्वे सतीत्यपि विशेषणं कर्तव्यम्, अन्यथा वायुनानैकान्तिको हेतुः स्यात्। स हि त्वगिन्द्रियेणैव गृह्यते। न हि स्पर्शमात्रग्रहणे वायुरयमिति प्रत्ययः संभवति। चाक्षुषोपि प्रसक्त इति चेत्, न; अरूपिद्रव्यस्याचाक्षुषत्वात्, तृणधूलिवृक्षपर्णादिक्रियादेस्तु लिंगस्यानुपलंभे वायुप्रतिभासाभावाच्चेति। त्वगिन्द्रियेणापि स्पर्शग्रहणाद्वायुरनुमीयत इति चेत्, न; उष्णादिस्पर्शनाभिभूतस्य वायुस्पर्शस्याग्रहणेपिं वायुप्रतिभासदर्शनात्, स्वशरीरादिक्रियानुपलंभेपि सक्रियवायुप्रतिभासमानाच्चेति। पृथिव्यां स्पर्शभेदस्य दृष्टत्वात्तद्विशेष

एव वायुरित्येके, तदयुक्तम्; जलतेजसोरपि पृथिवीविशेषत्वप्रसंगात्। प्रत्यक्षेण भिन्नजातीयग्रहणस्यात्रापि समानत्वात्। गुरुत्वरहितत्वाच्च न पृथिवीविशेषः। तदेव कुत इति चेत, तदुच्यते—यावदेव गुरुत्वं रिक्ताया भस्त्रायास्तावदेव वाय्वापूरिताया अप्युपलभ्यत इत्यलं प्रसंगेन। तत्र तावदसिद्धं शब्दस्य गुणत्वमतोऽस्ति कश्चिदाश्रयोऽस्येति।

## ❀ शब्दाश्रयनिरूपणम् ❀

स तर्हि पृथिव्यादिविलक्षण इति कुतोऽवगम्यते? न पृथिव्याद्याश्रयः शब्दः श्रोत्रग्राह्यत्वात्, शब्दत्वादिवत्। पृथिव्यादिगुणत्वश्रोत्रग्राह्यत्वयोः को विरोध इति चेत्, उच्यते—यदि भेर्यादिशब्दो भेर्याद्याश्रयस्तदा भेर्यादौ विप्रकृष्टे व्यवहिते वा तच्छब्दश्रवणं न स्यात्। न हीन्द्रियेणासंयुक्ते गुणिनि तद्गुणो ग्रहीतुं शक्यते गन्धवदिति चेत्, न; गन्धवद्द्रव्यावयवानामागत्य घ्राणेन्द्रियेण सम्बद्धानां तद्गन्धोपलब्धेः प्रतिवाते च गन्धाग्रहणात्। न चैवं भेर्या अवयवानामागमनं, तदवयवेषु तादृच्छब्दानुपलब्धेः प्रतिवातेपि तच्छब्दश्रवणाच्च। नापीन्द्रियाणां व्यापकत्वं, सर्वार्थग्राहकत्वप्रसंगात्। व्यापकत्वेऽपीन्द्रियाणां तदधिष्ठानार्थयोरवश्यं प्रत्यासत्तिरपेक्षणीयेति। तस्मान्न भेर्यादिसमवेतः शब्दः। व्यक्त्यन्तरे शब्दः समवेत इति चेत्, न; व्यक्त्यन्तरं खलु किं भेर्यादिदेशस्थम्, उत श्रोत्रदेशस्थम्? भेर्यादिदेशस्थत्वे पूर्ववद्दोषः। श्रोत्रदेशस्थत्वे कथमन्यत्रावस्थितं भेर्यादिकं श्रोत्रसम्बद्धे द्रव्ये शब्दं जनयेत्? अतिप्रसंगात्। एतेनैव मनोगुणत्वं निरस्तम्।

व्यापकं तद् व्यक्त्यन्तरमिति चेत्, तदेवाकाशम्। व्यापकस्पर्शाद्यसम्भवाद् आत्मा इति चेत्, न; आत्मनोऽनन्तत्वादिति वक्ष्यामः। तद्गुणत्वे चानन्तो गकारः सकृदुपलभ्येत। दिक् कालो वा शब्दस्याश्रय इति चेत्, न; संज्ञाभेदमात्रत्वात्। यदि हि दिक्कालौ शब्दाश्रयाद्भिन्नौ साधयितुं शक्यावस्तस्तावदभ्युपगमिष्यामो नो चेत्तदा न ताभ्यां प्रयोजनम्। शब्दाश्रयस्त्वाकाशमिति सिद्धम्।

## ❀ आकाशस्यैव श्रोत्रत्वम् ❀

तथापि तदेव श्रोत्रमिति कुतः सिद्ध्यति? परिशेषात्। तथा हि—पार्थिवं तावन्न श्रोत्रं, इन्द्रियत्वे सति गन्धाग्राहकत्वात्, रसनादिवत्। एवं रसाग्राहकत्वान्नाप्यं, रूपाग्राहकत्वान्न तैजसम्। स्पर्शाग्राहकत्वान्न वायवीयमिति विपर्ययेण उदाहर्त्तव्यम्। घ्राणस्य तु पार्थिवत्वमेव रूपरसगन्धस्पर्शेषु मध्ये गन्धस्यैव

**एतत्पञ्चविधसंबंधसम्बद्धविशेषणविशेष्यभावाद् दृश्याभावसमवाययोर्ग्रहणम् ।**

व्यञ्जकत्वात्, उभयप्रसिद्धपार्थिवद्रव्यवत् । ग्रीष्मवर्षोदकेनानैकान्त इति चेत्, न; तस्य रसस्यापि व्यञ्जकत्वात् । तथाप्यमेव रसनं तेषु मध्ये रसस्यैव व्यंजकत्वात्, दन्तोदकवत् । तथा तैजसमेव चक्षुः तेष्वेव मध्ये रूपस्यैव व्यंजकत्वात्, प्रदीपवत् । तथा वायवीयमेव स्पर्शनं तेष्वेव मध्ये स्पर्शस्यैव व्यंजकत्वात्, व्यजनानिलवत् । बाह्येन्द्रियग्राह्यगुणसमवायि श्रोत्रं बाह्येन्द्रियत्वात्, रसनादिवत् । तद्वत्स्वगुणाग्राहकत्वप्रसंग इति चेत्, न; विशेषविरोधस्यादूषणत्वात् । स्वतन्त्रं चेत्साधनं, न; शब्दोपलब्ध्यैव बाधित्वात् । निर्गुणेनैवेन्द्रियेण शब्दोपलब्धिरिति चेत्, न; निर्गुणस्येन्द्रियत्वे मनोवन्नियतविषयत्वाभावप्रसंगात् । भौतिकानामेव प्रदीपादीनां नियतविषयत्वदर्शनात् । "दिक् श्रोत्रम्" इत्यागमविरोधान्न भौतिकं श्रोत्रमिति चेत्, न; अन्यार्थत्वादागमस्य । दिगिति देवता काचिदुच्यते । तथा च जैगीषव्यादिशास्त्रेषु चेतना दशभुजा च श्रोत्राधिष्ठात्री देवता सा ध्येयत्वेन दिव्यश्रोत्रार्थे व्याख्याता । तदाधिष्ठितं श्रोत्रं दिक्छ्रोत्रमित्युपचर्यते । यथा मनश्चन्द्रमा इत्यादि । तस्मादाकाशस्य कर्णशष्कुल्यवच्छिन्नस्य श्रोत्रत्वात्तत्समवायादेव शब्दग्रहणमिति युक्तमुक्तम् ।

## ❀ विशेषणविशेष्यभावसम्बन्धः ❀

एतदिति पूर्वोक्ताः—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायश्चेति पञ्चसम्बन्धास्तैः सम्बन्धैः सम्बद्धा येऽर्थास्तैः सह अभावस्य समवायस्य च विशेषणविशेष्यभावः षष्ठः सम्बन्धः ।

कुतः पुनः षड्विधसम्बन्धसिद्धिः ? 'सं'शब्दोपादानात्, निकर्षग्रहणादेव सम्बन्धमात्रसिद्धेः, 'सं'शब्दोऽनर्थकः स्यात् । तस्मात् संभवी निकर्षः, संभवी च षड्विध एवेति [1]आचार्याध्ययनपादः, [2]विश्वरूपप्रभृतयोप्येवमेव-व्याचक्षते । तैस्तु 'नि'ग्रहणस्यापि प्रयोजनान्तरं वाच्यम् । कर्षग्रहणादेव सम्बन्धमात्रसिद्धेरनेकार्थत्वाच्च धातोरिति । सम्बन्धार्थत्वेन कर्षशब्दस्याप्रसिद्धत्वादिति चेत्, निकर्षशब्दः क्व सम्बन्धवाचकत्वेन प्रसिद्धः ? किन्तु निकृष्टि-

१. आचार्याध्ययनपादः—अक्षपादसूत्राणामपरो भाष्यकर्त्ता—इति प्राचीन टिप्पणम् ।

२. विश्वरूपः—पक्षिलस्वामिभाष्यस्यापरः टीकाकार इति प्राचीनटिप्पणम् ।

**तद् यथा – घटशून्यं भूतलम्; इह भूतले घटो नास्तीति। एवं सर्वत्रोदाहरणीयम्। समवायस्य तु क्वचिदेव ग्रहणम्, यथा—रूपसमवायवान् घटः, घटे रूपसमवाय इति।**

निकर्ष इति निकृष्टताभिधायकत्वेनैव प्रसिद्धः। तस्मादुपसर्गद्वयसहितस्य कृषेः सम्बन्धवाचकत्वं यथा समवाभ्यां सहितस्येणः। शिष्टप्रयोगदर्शनानुरोधेन हि धातूनां व्यस्तसमस्तोपसर्गसामर्थ्यादन्यार्थत्वं स्वार्थावद्योतनं वाभ्युपगन्तव्यम्। यदृच्छाशब्दश्चेदुपसर्गविचारेण तर्हि किं? कुतस्तर्हि षडविधसम्बन्धसिद्धिः? प्रकाशादिसहकारिसिद्धिवदन्वयव्यतिरेकाभ्यां न्यायसिद्धस्यापि सूत्रकारानुमतत्वादिति।

तत्र संयुक्तविशेषणभावेनाभावस्य ग्रहणम्—यथा 'घटशून्यं भूतलमिति' अत्र घटाभावः इन्द्रियसंयुक्तभूतलविशेषणत्वेन प्रतीयते, 'भूतले घटो नास्ति' इत्यत्र विशेष्यत्वेनेति। विशेषणविशेष्यभावस्यानियतत्वादुभयथाप्युदाहरणं युक्तम्। एवं सर्वत्रोदाहरणीयम्। अनुष्णोऽयं स्पर्श इति संयुक्तसमवेतविशेषणभावेनौष्ण्याभावो गृह्यते। तोयस्पर्शे नास्त्यौष्ण्यमिति संयुक्तसमवेतविशेष्यभावेनेति। अशुक्लं नीलत्वसामान्यं, नीलत्वे शौक्ल्यं नास्तीति संयुक्तसमवेतसमवेतविशेषणविशेष्यभावाच्छौक्ल्याभावो गृह्यते। अतीव्रो वीणाशब्दो, वीणाशब्दे तीव्रत्वं नास्तीति समवेतविशेषणविशेष्यभावात्तीव्रत्वाभावः। भेदशून्यं शब्दत्वं, शब्दत्वे भेदो नास्तीति समवेतसमवेतविशेषणविशेष्यभावाद्भेदाभावः शब्दत्वे गृह्यते।

संयुक्तविशेषणादिभावेन सर्वार्थानां ग्रहणप्रसंग इति चेत्, नैतद्; इष्टकार्यं दृष्ट्वा हि कारणसामर्थ्यं कल्प्यते, न तु कारणसद्भावादविद्यमानमपि कार्यं कल्प्यते, चक्षुःसंयोगादञ्जनाकाशादेरपि प्रत्यक्षत्वकल्पनाप्रसंगात्। दृश्याभावस्येति विशेषितत्वात्तेन यथाभूते देशे यथाभूतोऽर्थो दर्शनयोग्यः, तथाभूते देशे तथाभूतार्थाभावः प्रत्यक्षेण गृह्यत इति संयोगाद्यभावोपीन्द्रियसन्निकृष्टेनार्थेनाभावस्य सन्निधिविशेषोऽस्त्येव यस्तद्दर्शनहेतुः, तद्दर्शनेनैव चानुमेयः। स च सहकारिविशेषाद् विशेषणविशेष्यभावहेतुत्वाद्विशेषणविशेष्यभाव इत्युच्यते संयोगादिसंबंधवैलक्षण्यज्ञापनार्थम्, न तु विशेषणविशेष्यभाव एव संबंधः, संयोगसमवायानर्थक्यप्रसंगात्, विशेषणविशेष्यभावस्य सर्वत्र विद्यमानत्वादिति।

[1]न चादृष्टविशेष एव संबंधः, तस्यातीन्द्रियत्वात्। संबंधग्रहणस्यापि

१. व्योमशिवाचार्यं निराकर्त्तुं प्रक्रमते—न चेत्यादिनेति प्राञ्चः।

विशिष्टप्रत्ययोत्पत्तावन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यत्वात्। तथा हि—दण्डोऽस्यास्तीति दण्डीति प्रतीयते, दण्डपुरुषसंबंधाप्रतीतौ च न दण्डीति प्रतीतिरस्ति, अत एव प्रत्यक्षः समवायः। तदप्रत्यक्षत्वे हि शुक्लः पट इत्येवं गुणविशिष्टे गुणिनि प्रत्ययो न स्यात्। समवायोपि विशेषणत्वेन तद्विशेष्यत्वेन वा गृह्यते। ततस्तत्संबंधान्तरग्रहणप्रसंग इत्यनवस्था स्यादिति चेन्न, समवायस्य सम्बन्धग्रहणाक्षेपकत्वेनाप्रतिभासनात्। न हि प्रत्यक्षादनयोः समवाय इति, इदमत्र समवेतमिति वा, समवाय्येतदिति वा कस्यचित्प्रतीतिरस्ति, यथा भूतले घटो नास्तीति सर्वेषामस्ति प्रतीतिः।

## ❀ समवायस्यापरसम्बन्धानपेक्षा ❀

अत एव समवायस्यापि संबन्धो नेष्यते। न हि यथानयोः संयोग इति संयुक्तमेतदिति च प्रत्ययः संयोगसंयोगिसंबन्धग्रहणाक्षेपकोऽस्ति, तथा समवायसमवायिसंबन्धग्रहणाक्षेपकं किंचिदस्ति। यौक्तिकेनाप्यनयोः संबंध इति ज्ञानेन संबन्धान्तरं व्यवस्थाप्यत इति चेत्, न; अनवस्थाप्रसंगात्। इष्यत एवानवस्थेति चेत्, एवमस्तु यदि घटयितुं शक्यते। एकसंबन्धनिराचिकीर्षयानन्तान् सम्बन्धानभ्युपगच्छतात्मनोऽनिष्टपरिहारकौशलं ख्यापितं भवति। न मया सम्बन्धानन्त्यमभ्युपगम्यते, किन्तु मौलसंबंधसाधकस्य हेतोरनैकान्तिकत्वमुद्भाव्यत इति चेत्, न; अक्षजप्रत्ययस्य हेतुत्वेनोक्तत्वात्, विशिष्टप्रत्ययोऽक्षजो विशेषणतत्संबंधग्रहणमन्तरेण न भवतीत्युक्तं। अनक्षजस्तु प्रत्ययः स्वरूपभेदकल्पनयापि भवति, यथा द्रव्यादिषु सती सत्तेति। न हीन्द्रियादेवं प्रतिभासो भवति, अश्रुतशास्त्राणामपि भवेत्। तस्मात् "समवायस्य तु क्वचिदेव ग्रहणं, यथा घटे रूपसमवायः" इत्येतदेकदेशीयमतेन द्रष्टव्यम्। ममैव वा स्खलितमेतद्, अपर्यालोचितग्रन्थकरणात्। ननु च यथेन्द्रियेण घटाभावो भूतलविशेषणत्वेन विशेष्यत्वेन वा गृह्यते, तथा समवायोपि घटादिविशेषणत्वेन विशेष्यत्वेन वा गृह्यत इत्युक्तं कैश्चित्ततस्तस्यापि संबंधोऽभ्युपगन्तव्य इति, नैतदस्ति; यतः समवायस्य तु क्वचिदेव बुद्धौ तथावभासनं, यथा घटे रूपसमवाय इति। असदुपदेशविपर्यासितबुद्धावेव समवायस्य तथावभासनं न त्वभावस्येव सर्वव्यवहर्तृबुद्धावित्यर्थः। तस्माद् यौक्तिकमेव समवायस्य प्रत्यक्षत्वम्। असंबद्धस्य समवायस्य कथं ग्रहणमिति चेत्, न; प्रत्यक्षयोग्योभयसंबंधीन्द्रियसंनिकर्षादेवादृष्टादिसहितात्संबंधग्रहणोपपत्तेर्न संबंधस्यापि संनिकर्षान्तरमन्विष्यते, सत्तायां सत्तान्तरवत्, स एव च समवायसमवायिनोरिन्द्रियसंनिकृष्टयोर्निर्विशेषणविशेष्ययोः प्रत्ययनिमित्तत्वात् संयुक्ते

**योगिप्रत्यक्षं तु देशकालस्वभावविप्रकृष्टार्थग्राहकम्। तद् द्विविधम्—युक्तावस्थायामयुक्तावस्थायां चेति। तत्र युक्तावस्थायामात्मान्तःकरणसंयोगादेव धर्मादिसहितादशेषार्थग्राहकम्।**

**विप्रयुक्तावस्थायां चतुष्टयत्रयद्वयसन्निकर्षाद् ग्रहणं यथासंभवेन योजनीयम्। अत्रैवार्षमन्तर्भूतं प्रकृष्टधर्मजत्वाविशेषात्।**

---

विशेषणभावादीनामन्यतमं व्यपदेशमपि लभते। तत्संबन्धाभ्युपगमे वानवस्थाभ्युपगन्तव्येति।

ये तु न्यायशास्त्रार्थनिराकरणार्थं महता प्रपंचेन समवायं निराकुर्वन्ति, तान् प्रति नैयायिकैरपि समवायसमर्थनार्थं महता प्रपञ्चेन गुणिगुणादीनां तादात्म्यं निराकर्त्तव्यं, तन्निराकरणन्यायं चान्यापोहदूषणप्रस्तावेऽनैकान्तदूषणप्रस्तावे च दर्शयिष्यामः। ततः संयोगादिसंबंधसिद्धिः सकलशास्त्रार्थसंसिद्धिश्च।

## ❀ संयोगनिरूपणम् ❀

तत्र युतसिद्धयोः संश्लेषः संयोगः, युतसिद्धिस्तु—द्रव्ययोः पारम्पर्येणाप्यवयवावयविभावरहितत्वम्। [1]एवं "युतसिद्ध्यभावान्नास्ति विभूनां संयोगः" इत्ययुक्तं, हेतोरसिद्धत्वात्। प्रमाणसिद्धश्च विभूनां संयोगः। तथा हि—आकाशेन संयुक्त आत्मा शरीरसंयुक्तत्वात्, भूतलादिवत्। अयुतसिद्धयोः संश्लेषः समवाय इति। एवं च न भूतलघटाभावादिसंबंधेनाविशेषः समवायस्येति।

## ❀ योगिप्रत्यक्षनिरूपणम् ❀

देशविप्रकृष्टाः सत्यलोकादयोऽतिदूरस्था व्यवहिताश्च नागभुवनादयः, कालविप्रकृष्टास्त्वतीतानागताः, स्वभावविप्रकृष्टाः परमाण्वाकाशादय इति, तेषां त्रिप्रकाराणां विप्रकृष्टानां समस्तानां व्यस्तानां वा ग्राहकं प्रत्यक्षं योगिप्रत्यक्षमित्युच्यते। तच्चावस्थाद्वये भवति—युक्तावस्थायामयुक्तावस्थायां च। तत्र युक्तावस्थायामात्मान्तःकरणसंयोगादेव धर्मादिसहितादशेषार्थग्रहणम्। एतच्च परमयोगिविवक्षयोक्तम्, न तु योगिमात्रस्याशेषार्थस्य ग्रहणं भवति। आत्मान्तःकरणसंयोगादेव इत्यवधारणमर्थसंनिकर्षनिषेधार्थम्, न तु सहकारिमात्रनिषेधार्थं, धर्मादिसहितादित्युक्तत्वात्। अर्थसंनिकर्षनिषेधोपपत्तयः प्रागेवोक्ता इति।

तत्र रसनचक्षुस्त्वचामन्यतमेनार्थग्रहणे चतुष्टयसन्निकर्षः=चतुर्णां संयोग इत्यर्थः। आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति।

---

१. प्रशस्तपादैः प्रतिपादितम्—"विभूनां तु परस्परतः संयोगो नास्ति, युतसिद्ध्यभावादिति।" तदेतन्निराचष्टे—एवमिति।

श्रोत्रेणार्थग्रहणे त्रयाणामात्ममनःश्रोत्राणां सन्निकर्षः। मनसार्थग्रहणे द्वयोरात्ममनसोः सन्निकर्ष इति। एवं चार्षमत्रैवान्तर्भूतं, न प्रमाणान्तरं; योगिप्रत्यक्षलक्षणेन संगृहीतत्वात्। देशादिविप्रकृष्टेष्वर्थेषु सम्यगपरोक्षानुभवो हि योगिप्रत्यक्षस्य लक्षणम्। व्यासादीनामप्येवंभूत एवानुभवः प्रकृष्टाद् धर्माद्भवति। प्रकृष्टधर्मस्तु योगाङ्गानुष्ठानाद्वा भवतु, तपःप्रकर्षाद्वा, यज्ञादि-साधनप्रकर्षाद्वेति। न तद्विशेषादेव प्रमाणभेद, अतिप्रसंगादिति। योगिसद्भावस्तु श्रुतिस्मृतिपुराणेतिहासानेकयोगशास्त्रेषु प्रसिद्ध इति। तदपलापः पापातिशयमेव नरकाद्यनन्तयातनादिनिमित्तं जनयति। अनुमानमपि योगिसद्भावावेदकमुत्तरत्र वक्ष्यामः।

## ❀ बौद्धसम्मतं योगिप्रत्यक्षम् ❀

[1]अन्ये त्वन्यथा योगिप्रत्यक्षं व्याचक्षते—

भावनाबलतस्पष्टं भयादाविव भासते।
यज्ज्ञानमविसंवादि तत्प्रमाणमकल्पकम्॥

योगिनामपि [2]प्रश्रुतमयेन ज्ञानेनार्थान् गृहीत्वा युक्तिचिन्तामयेन व्यवस्थाप्य भावयतां तन्निष्पत्तौ यत्स्पष्टावभासि ज्ञानं तत्प्रत्यक्षं, तच्चाविसंवादित्वात्प्रमाणं स्पष्टाभत्वादविकल्पकमिति। भयादाविवेति अर्थसामर्थ्येन समुद्भवाभावेनापि भावनाबलादेव स्पष्टं ज्ञानमुत्पद्यत इत्यत्र निदर्शनार्थम्। तदेव स्पष्टयति—

[3]कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः।
अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव॥

तत्र कामाद्युपप्लुतानामभूतभावनातः स्पष्टमपि ज्ञानं विसंवादित्वान्न प्रमाणम्।

---

१. अन्ये = सौगताः।

२. श्रुतमयादिज्ञानानां स्वरूपं प्राङ्निरूपितम् ( पृ० ७७ टि० १ )
श्रुतं भावयतो योगिनः यदभ्रकपत्रान्तरितमिव वस्तुज्ञानं जायते, तद्, भावना-परिपाकजं भवति। तस्यैव करतलामलकवद् दर्शनं योगिनः प्रत्यक्षं कीर्त्यते—

प्रागुक्तं योगिनां ज्ञानं तेषां तद्भावनामयम्।
विधूतकल्पनाजालं स्पष्टमेवावभासते॥
( प्र० वा० ३।२८२ )।

३. प्र० वा० ३।२८३। अभूतम् = अविद्यमानम्।

योगिनां तु भूतभावनातः [१]चतुरार्यसत्यपरलोकादिदर्शनमविसंवादित्वात् प्रमाणम्। तदेवोक्तम्—

तस्माद् भूतमभूतं वा यद्यदेवाविभाव्यते।
भावनापरिनिष्पत्तौ तत्स्फुटाकल्पधीफलम्॥
तत्र प्रमाणसंवादि यत्प्राङ्निर्णीतवस्तुवत्।
तद्भावनाजं प्रत्यक्षमिष्टं शेषा उपप्लवा॥ इति।

## ❀ तन्निराकरणम् ❀

अत्रेदं विचार्यते—

सर्वज्ञानानां निरालम्बनत्वे स्वसंवेदनमात्रत्वे च योगीतरप्रत्यक्षयोः को विशेषः? शुद्धाशुद्धत्वं विशेष इति चेत्—अथ मन्यसे योगिप्रत्यक्षं—"विधूतकल्पनाजालं स्पष्टमेवाभासते" (प्र० वा० ३।२८२)। भवतु नामैवं, तथापि चतुरार्यसत्यादिविषयत्वं न युक्तं, न हि स्वात्ममात्रसंवेदनेन चतुरार्यसत्यादिकं साक्षात्कृतमिति युक्तमतिप्रसंगात्। तदाकारत्वात् तद्विषयत्वमिति चेत्, तत्किमिदानीं सौत्रान्तिकमतमभ्युपगतम्? सत्यं; तथाप्यतीतानागतविषयत्वं कथम्? न ह्यसतः कश्चिदाकारोऽस्ति। दृष्टश्रुतानुमिताकारश्च यदि भावनाबलतः स्पष्ट एव प्रतिभाति, तथा सति भ्रान्तमेव योगिप्रत्यक्षं स्यादविद्यमानस्य विद्यमानाकारतया प्रतिभासनात्, स्वप्नादिज्ञानवत्। अथाविसंवादित्वान्न भ्रान्तं, न; अनुमान-

---

१. चतुरार्यसत्यम्—(१) दुःखम्, (२) समुदयः = दुःखकारणम्, (३) निरोधः, (४) मार्गश्चेति चतुःसत्यम्—

(१) "इदं खो पन भिक्खवे! दुक्खं अरियसच्चं—जाति पि दुक्खा, जरा पि दुक्खा, व्याधि पि दुक्खा, मरणं पि दुक्खं, अप्पियेहि सम्पयोगो दुक्खो, पियेहि विप्पयोगो दुक्खो, यं पि इच्छं न लभति तं पि दुक्खं, सङ्खित्तेन पञ्चुपादानक्खन्धा पि दुक्खा।

(२) इदं खो पन भिक्खवे! दुक्खसमुदयं अरियसच्चं—या यं तण्हा पोनोभविका नन्दिरागसहगता तत्र तत्राभिनन्दिनी, सेय्यथीदं कामतण्हा, भवतण्हा, विभवतण्हा।

(३) इदं खो पन भिक्खवे! दुक्खनिरोधं अरियसच्चं—यो तस्सा येव तण्हाय असेसविरागनिरोधो चागो मुत्ति अनालयो।

(४) इदं खो पन भिक्खवे! दुक्खनिरोधगामिनी पटिपदा अरियसच्चं—अयमेव अरियो अट्ठङ्गिको मग्गो।

**तच्च द्विविधं सविकल्पकं निर्विकल्पकं चेति। तत्र संज्ञादिसम्बन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पकम्। यथा—देवदत्तोऽयं दण्डीत्यादि।**

जातस्याविसंवादित्वेपि भ्रान्तत्वाभ्युपगमात्। अथ भ्रान्तस्यापि संवादित्वे न प्रामाण्यं, तथापि प्रत्यक्षस्याभ्रान्तत्वविशेषणं विरुध्यते। न चाविसंवादित्वमपि तन्मते युक्तं, यतः प्राप्यार्थप्रदर्शकत्वं, प्रवृत्तिविषयप्रदर्शकत्वं वा, अवभातार्थादर्थक्रियानिष्पत्तिर्वा, भवतामविसंवादित्वमभिप्रेतम्? न चैतदतीताद्यर्थज्ञानस्य संभवति वर्त्तमानार्थज्ञानस्यापि क्षणिकत्वपक्षे नोपपद्यत एव; तस्मात् सौगतानां योगिप्रत्यक्षोपवर्णनमप्यसंगतमेवेति।

## ❀ सविकल्पकं प्रत्यक्षम् ❀

तदिति योगिप्रत्यक्षं चशब्दादयोगिप्रत्यक्षमपि द्विविधमित्यर्थः। तत्र संज्ञादिसम्बन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पकं प्रत्यक्षम्। तच्चातीन्द्रियत्वात्तत्साक्षादुदाहर्तुं न शक्यते, तत्फलमेवोदाह्रियते—यथा देवदत्तो दण्डीत्यादि, देवदत्त इति ज्ञानं केवलसंज्ञासम्बन्धोल्लेखेनोत्पद्यते, दण्डीति विशेषणसंबद्धोल्लेखीत्येवं गुणादिविशेषणत्वसंबंधोल्लेख्यपि ज्ञानमुदाहर्तव्यमिति।

अथ विशेष्यज्ञानं किं केवलविशेष्यालम्बनं? आहोस्विद् विशेषणविशेष्यालम्बनमिति? किं चातः? केवलविशेष्यालम्बनत्वे दण्डीति प्रत्ययो न स्याद्-दण्डे पुरुषे यथा, सतोप्यनवभासमानस्यासत्कल्पत्वात्। स्वज्ञानविशिष्टेन दण्डेन जनितं पुरुषज्ञानं कथमविशिष्टमिति चेत्, तदयुक्तम्; स्वज्ञानविशिष्टे हि लिंगादिनानुमेयादिज्ञानं जन्यते, न च तद्धूमीयेत्यादिरूपेणोत्पद्यमानमुपलभ्यते। किं चाग्निमानयं प्रदेश इति ज्ञानं प्रत्यक्षफलं प्रसज्यते केवलप्रदेशस्येन्द्रियसंनिकृष्टत्वादिति। उभयालंबनत्वेपि दण्डपुरुषाविति स्यात्। तदेकज्ञानालम्बनत्वाविशेषे गुणप्रधानभावोपि न स्यात्। देवदत्तादिप्रत्ययेनासमानाधिकरणत्वप्रसंगाच्चेति।

यथादर्शनमित्यन्ये[1]। [2]सुरभि द्रव्यमित्यादिज्ञानस्य विशेष्यमेवालंबनं अनुमेयादिज्ञानस्योभयालंबनमिति, न; विशेष्याभ्युपगमस्य निष्प्रमाणकत्वात्। अनुमेयादिप्रत्ययस्यापि पर्वतादिप्रत्ययेन सामानाधिकरण्योपलम्भात्। राष्ट्रसेनादिप्रत्ययस्य तन्नायकप्रत्ययेन सामानाधिकरण्यादनैकान्त इति चेत्, न; तत्रापि राष्ट्रादिव्यवहारोपचरितस्य राजादिविषयत्वानभ्युपगमात्। दण्डीति

१. अन्ये = वैशेषिकाः।
२. द्र० न्या० कं० पृ० २७६।

प्रत्ययो दण्डविषयो न भवति, पुरुषप्रत्ययेन समानाधिकरणत्वात्, देवदत्तादिप्रत्ययवदित्येवं सर्वे प्रत्यया विशेषणालंबनाः साधयितव्या इति। भ्रान्तं सामानाधिकरण्यमिति चेत्, आयातं तर्हि शाक्यदर्शनम्। तत्र च सर्वकल्पनाज्ञानानां निर्विषयत्वादालम्बनचिंतानुपपन्नैवेति। शाक्यदृष्टिनिषेधे च यथा दण्डीति ज्ञानमभ्रान्तं, तथा स एव दण्डी भुङ्क्त इत्यादि ज्ञानमप्यभ्रान्तमेव। अवयवे समुदायोपचारादिति चेत्; तदुपचारज्ञानं भ्रान्तमभ्रान्तं वेति? भ्रान्तमिति न युक्तम्, निषिद्धत्वात्। अभ्रान्तं चेत्, यद्युपचारादपि दण्डीति ज्ञानमभ्रान्तं केवलपुरुषालम्बनं सिद्धं तदा मुख्यमन्यदुभयालम्बनमस्तीति किमत्र प्रमाणम्? न च तदन्यस्य मुख्यस्य सिद्धावुपचारत्वकल्पना न्याय्या, अतिप्रसंगात्। प्रधानापेक्षया सामानाधिकरण्यमिति चेत्—अथ मन्यसे यदेव दण्डीति ज्ञाने प्रधानं तदेव देवदत्तादिज्ञानेऽपीत्युपपद्यते सामानाधिकरण्यमिति, न; अप्रतिभासनात्। न ह्येवं प्रतीतिः कस्यचिदस्ति यद्दण्डीतिज्ञाने प्रधानं तद्देवदत्त इति ज्ञानेपीति। अपि तु देवदत्त एव दण्डीति दण्ड्येव च देवदत्त इति। प्रधाननिर्देश एवायमिति चेत्; कः प्रतिकूलोऽनुकूलमाचरति। यदा दण्डीत्यनेन प्रधानमेव निर्दिश्यते प्रधानमेवालम्बनमिति सिद्धं नः समीहितम्। तथा च दण्डो यस्यास्ति स एव दण्डीति व्यपदिश्यते 'यथाव्यपदेशं च प्रतीतिरिति'।

यच्चोक्तम्—स्वज्ञानविशिष्टेन लिंगादिनाऽनुमेयादिज्ञानं जन्यते न च तद्धूमीयेत्यादिरूपेणोत्पद्यत इति, तदयुक्तम्; न ह्येतावदेव कारणं विशिष्टज्ञानोत्पत्तौ नियम्यते, किं तर्हि? समयस्मरणसहकारिणा विशेषणतत्संबंधज्ञानेन विशिष्टं ज्ञानं जन्यते, व्याकरणप्रसिद्धमत्वर्थादिसमयभेदानुविधानवत्। स्मृतिनिमित्तं चानियतं प्रणिधानादिसूत्रेऽभिहितम्। तेनैकस्मिन्नर्थेऽनेकधा समयोपयोगेपि यथा यथा संस्कारप्रतिबोधात् स्मृतिर्भवति तथा तथा सहकारिणेन्द्रियेण तस्मिन्नेवार्थे प्रत्ययविशेषो जन्यते, न च सहाग्निसंबंधेन प्रदेशस्थो धूमो गृह्यते येन तस्याग्नौ धूमीतिज्ञानजनकत्वप्रसंगश्चोद्यते। यदप्यग्निमानयं प्रदेश इति ज्ञानं प्रत्यक्षफलं प्रसज्यत इत्युक्तं, तत्र यदीन्द्रियार्थसंनिकर्षादग्निमानयं प्रदेश इति विज्ञानं भवति, तदा किमिति प्रत्यक्षफलं नेष्यते? अनुमानत्वेन प्रसिद्धेरिति चेत्, न; उपचारतोपि प्रसिद्धिसंभवात्। अनुमेयाग्निविशिष्टः प्रदेशोऽप्यनुमेय इत्युच्यते। न च धूमस्यापक्षधर्मत्वप्रसंगः, साध्यधर्मविशिष्टो हि धर्मी पक्ष इत्युच्यते स चानुमेयो भवतु वा मा वा भूत् तत्स्थो हेतुपक्षवृत्तिरेव तत्रस्थस्यैवाग्नेरनुमीयमानत्वात्, न व्यधिकरणत्वमपि, न; महती ज्ञानमाला इतरेतराश्रयत्वं वा प्रसज्यते विशेषणग्रहणस्य विशेषणान्तरग्रहणपूर्वकत्वनियमानभ्युपगमात्। अतोऽनुमानादग्नितत्संबंधविषय-

मेकमेव ज्ञानमनिर्देश्यमुत्पद्यते ततोऽग्निमानयं प्रदेश इति ज्ञानं प्रत्यक्षतोपि भवति। ये त्वतीन्द्रियविशेषणविशिष्टार्थस्य प्रत्यक्षत्वमयुक्तमिति मन्यन्ते, तन्मते सविकल्पकं प्रत्यक्षं न प्राप्नोति, देवदत्तसंज्ञाविशिष्टो हि पुरुषो देवदत्त इति प्रतीयते। न च तदा देवदत्तसंज्ञाप्रत्यक्षः संज्ञायाश्च विशेषणत्वं, दण्डादिव्यवच्छेदकत्वात्। तद्यथा ब्राह्मणेषु दण्डिनमाहूय भोजयेदिति ब्राह्मणान्तरेभ्यो ब्राह्मणो दण्डेन व्यवच्छिद्यते, तथा पुरुषेषु देवदत्तं व्याहरेदिति पुरुषान्तरेभ्यः पुरुषः संज्ञयैव व्यवच्छिद्यते। काकवदुपलक्षणमात्रत्वादिति चेत्, न; पर्यायत्वात्। उपलक्षणं विशेषणं व्यवच्छेदकमिति पर्याया एव। देवदत्तगृहं काकीति प्रतीतिप्रसंगादिति चेत्, न; उक्तत्वात्। यथासमयं प्रतीतिरिति दण्डेन परिव्राजकः, काकेन देवदत्तगृहमिति नानयोर्व्यवच्छेदकत्वे विशेषोऽस्ति। तस्मात्सजातीयाद्वा विजातीयाद्वावस्थान्तराद्वा यद् व्यवच्छेदकं तत्सर्वं विशेषणमित्युच्यते। तस्माद् गवादिसंज्ञातत्संबंधावपि स्मर्यमाणौ गौरित्यादि विशिष्टं ज्ञानं जनयन्तौ विशेषणमेव भवतः। गोत्वमेव तत्र विशेषणमिति चेत्, न; गोत्वदर्शनेऽप्यप्रसिद्धसमयस्य गौरित्यादिज्ञानानुत्पत्तेरित्युभयंविशेषणम्।

अत्रैके वदन्ति—संज्ञाविशेषणत्वे गोसंज्ञकोऽयं गोशब्दवाच्योऽयमिति ज्ञानं स्यात्तच्चानुमानिकमेवेष्यते। गोशब्दसहकारिबलेन हि स्वविषयज्ञानजनकत्वं गोसंज्ञकत्वमुच्यते तच्चातीन्द्रियमेवेति। गौरिति ज्ञानं च गोत्वविशेषणादेवोत्पन्नं तेन प्रत्यक्षमिष्यते। तथा हि—गौरयं गोत्ववानयमित्येकोऽर्थः, संकेतोप्येवमेव प्रतिपाद्यते प्रतीयते चेति, तदयुक्तम्; यतो न कश्चिद् गोत्वयोगित्वं संकेतकाले प्रत्येति प्रतिपादयति वा तस्य संकेताग्रहणेपि प्रत्यक्षसिद्धत्वादगृहीतसंकेतो हि महिषादिभ्यो व्यावृत्ततां शावलेयादिपिण्डानां सादृश्यं पश्यत्येव। तस्मादभिधानाभिधेयसंबंध एव समयं ग्राहयित्वा प्रतिपाद्यते गौरयं गोसंज्ञकोऽयं गोशब्दवाच्योऽयमित्येकार्थाभिधायिनान्यतमशब्देन प्रतिपत्त्रापि तथैव प्रतीयते। तस्माद् गौरित्यादि ज्ञानं प्रत्यक्षफलमिच्छता न विशेषणविशेष्ययोरेकज्ञानालंबनत्वमभ्युपगन्तव्यम्। नाप्यतीन्द्रियविशेषणजनितं विशेष्यज्ञानप्रत्यक्षफलमेवेति। अनेकविशेषणविशिष्टार्थज्ञानं चित्रमेतद् इत्यादिरूपं कथमिति चेत्? नेदं दुर्घटं, यतो विशेषणविशेष्ययोरेव क्रमेण ग्रहणमभ्युपगम्यते न तु विशेषणतत्संबंधानामपि, तेषामेकैकज्ञानालंबनत्वाभ्युपगमात्। क्वचित्क्रमगृहीतानामप्येकस्मरणविषयीकृतानां विशेषणत्वमिति। क्रमगृहीतानां त्वेकस्मरणविषयत्वं यथा तथा वाक्यविचारे वक्ष्यामः। तदेवं स्थितमेतद् विशेष्यज्ञानं नोभयालम्बनं किन्तु विशेष्यालंबनमेवेति। कल्पनाज्ञानत्वान्नाक्षजं शब्दादिसंयोजनज्ञानं नाप्यर्थालंबनमिति चेत्, न; विकल्पज्ञानस्याप्यक्षजत्वे

**वस्तुमात्रावभासकं निर्विकल्पकम्, यथा प्रथमाक्षसंनिपातजं ज्ञानम्, युक्तावस्थायां योगिज्ञानं च ।**

**॥ इति भासर्वज्ञप्रणीते न्यायसारे**
**प्रथमः परिच्छेदः ॥**

---

अर्थालंबनत्वे च विरोधाभवात् । याश्चोपपत्तयस्त्वया व्याख्यातास्ता अग्रत एव दूषयिष्यामः । तत्सिद्धं सविकल्पकं प्रत्यक्षम् ।

## ❀ निर्विकल्पकज्ञाननिरूपणम् ❀

प्रथमाक्षसंनिपातजं हि ज्ञानं समयस्मरणविशेषणग्रहणनिरपेक्षमुत्पन्नं तेन तन्निर्विकल्पकम् । योगः समाधिः एकाग्रतोच्यते । तत्र स्थितस्य योगिनो निर्विकल्पकमेव प्रत्यक्षमिति विकल्पतायामेकाग्रतानुपपत्तेरिति ।

## ❀ सौगतप्रत्यक्षम् ❀

यत्प्रत्यक्षं तत्सर्वं निर्विकल्पकमेवेति शाक्याः । तथा च प्रत्यक्षं कल्पनापोढमिति दिङ्नागोक्तं लक्षणम् । सामान्यलक्षणानुवादेनैतद् द्रष्टव्यं । तेन यदविसंवादिज्ञानं कल्पनापोढं तत्प्रत्यक्षमित्युक्तं भवति । कल्पनाया अपोढं = अपेतं कल्पनापोढं, कल्पनास्वभावरहितमित्यर्थः । अथ केयं कल्पना ? नामजात्यादियोजना, नामादिसंसर्ग इत्यर्थः । तत्र देवदत्त इत्यादि नामयोजना, गौरित्यादि जातियोजना, गच्छतीत्यादि क्रियायोजना, शुक्लः इत्यादि गुणयोजना, दण्डीत्यादि द्रव्ययोजना, इत्येषा पञ्चविधा कल्पना परप्रसिद्ध्योदाहृता । स्वमते तु सर्वैवेयं नामकल्पनेति । तथा चाह कीर्त्तिः—[१]"अभिलापिनी प्रतीतिः कल्पना ।" "अभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः कल्पनेति ।" संसर्गस्त्वभिधानाभिधेयत्वाकारयोरेकत्र ज्ञानग्राह्याकारतया मीलनं नामादिनैकत्वापादनप्रतिपत्तिरित्यन्ये । योग्यग्रहणेनाव्युत्पन्नस्यापि कल्पना संगृहीता । बालोपि हि स्तनादिकं दृष्ट्वा पूर्वदृष्टेन स एवायमित्येकत्वमापाद्य संतुष्यति । तेनास्यापि कल्पनास्तीत्यवगम्यते ।

---

१. आद्या कल्पना शान्तरक्षितस्य, द्वितीया धर्मकीर्तेः—

प्रत्यक्षं कल्पनापोढमभ्रान्तमभिलापिनी ।
प्रतीतिः कल्पना क्लृप्तिहेतुत्वाद्यात्मिका न तु ॥

(त० सं० का० १२१४)

"अभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः कल्पना" (न्या० बि० ११५) ।

[1]यदि निर्विकल्पकं ज्ञानं प्रत्यक्षं, तदा द्विचन्द्रादिज्ञानमपि प्रत्यक्षं प्राप्तम्। तस्य चाविकल्पकत्वमक्षजत्वात्। तथा स्वप्नज्ञानमपि स्पष्टत्वान्निर्विकल्पकं गमनप्राप्त्यादिप्रतिभासनिमित्तत्वादविसंवाद्यपि तत्, अतः प्रत्यक्षं प्राप्तम्, तद्व्यवच्छेदार्थं धर्मकीर्त्तिः "प्रत्यक्षं कल्पनापोढमभ्रान्तम्" इत्येवं लक्षणं चकार। अन्यथाप्रतिभासित्वं भ्रान्तत्वम्, ग्राह्ये रूपे विपर्यस्तत्वमित्यर्थः। नैव द्विचन्द्रादिभ्रान्तिरिन्द्रियजा इत्येके—किलैकं चन्द्रं दृष्ट्वा द्वित्वेन कल्प्यते। ज्ञानस्थं केशाकारं दृष्ट्वा बाह्यत्वेन कल्प्यत इत्येवमन्यत्रापि द्रष्टव्यम्। अत्र दूषणमाह धर्मकीर्त्तिः—तन्न, इन्द्रियभावाभावानुरोधस्य तत्त्वप्रयोजकत्वात् तस्येहापि तुल्यत्वात्। इन्द्रियविकारे च विकारात् तन्निबन्धनत्वाच्चाश्रयस्थितेः, सर्पादिभ्रान्तिवन्मनोभ्रान्तेरक्षविकृतावपि निवृत्तिप्रसंगात्, तथाक्षविकारनिवृत्तावप्यनिवृत्तिप्रसंगात्। तस्मादिन्द्रियजमप्येतद्[2] भ्रान्तेरप्रत्यक्षमिति।

दिङ्नागस्याप्यभ्रान्तत्वं विशेषणमभिप्रेतमिति दर्शयति—अत एवेतिकरणव्यवच्छिन्नाद्विकल्पवर्गात्पृथक् तिमिरोपलक्षितं विप्लवं प्रत्यक्षाभासमाह—

[3]भ्रान्तिसंवृत्तिसंज्ञानमनुमानानुमानिकं ।
स्मार्त्ताभिलाषिकं चेति प्रत्यक्षाभं सतैमिरम् ॥ इत्यत्र।

अस्य तात्पर्यमाह—

[4]त्रिविधं कल्पनाज्ञानमाश्रयोपप्लवोद्भवम्।
अविकल्पकमेकं च प्रत्यक्षाभं चतुर्विधम् ॥

आश्रयो = विषयः, तस्योपप्लवः = तत्सदृशस्मरणम्। अथवा कारणज्ञानमाश्रयः तस्योपप्लवः = वासनाविशेषः ततस्त्रिविधं कल्पनाज्ञानं भवति—रज्जुमरीचिकादिषु सर्पजलादिज्ञानमेकं भ्रान्तिशब्देनोक्तम्। घटादिज्ञानं द्वितीयं संवृतिसंज्ञानशब्देनोक्तम्। अनुमानज्ञानमानुमानिकं च लिङ्गिज्ञानं—एतदुभयं पूर्वाभ्यामेव संगृहीतम्। किंतु पूर्वयोरनक्षजत्वसिद्ध्यर्थं दृष्टतत्त्वेन पृथगुक्तम्। स्मार्ताभिलाषिकं चेति तृतीयं दर्शनं एष्वभाविनो विधिप्रतिषेधविकल्पयोरिदन्तयोत्पद्यमानयोः स्मार्तशब्देनाभिधानम्। प्रत्यभिज्ञानस्याप्यनक्षजत्व-

---

१. कीर्त्तेरभ्रान्तत्वविशेषणं सार्थकयितुमाह—यदि निर्विकल्पकं ज्ञानं प्रत्यक्षम् = यदि निर्विकल्पकमेव ज्ञानं प्रत्यक्षमित्यर्थः।

२. एतद् = द्विचन्द्रादिज्ञानम्। भ्रान्तेः = भ्रान्तित्वादित्यर्थः।

३. प्र० वा० अ० पृ० ३३२ का० ५८८।

४. प्र० वा० ३।२८९।

सिद्ध्यर्थमाभिलापिकं पृथगुक्तम्। एतस्माद्विकल्पवर्गात्पृथक् तैमिरग्रहणं कल्पनापोढत्वस्यापवादत्वसूचनार्थमुक्तम्, तैमिरग्रहणं चोपघातजोपलक्षणार्थं सर्वमेवोपघातजं ज्ञानं भ्रान्तमित्येवाह धर्मकीर्त्तिः—[1]"तिमिराशुभ्रमणनौयानसंक्षोभाद्यनाहितविभ्रममविकल्पकं ज्ञानं प्रत्यक्षम्" इति। केशादिचन्द्रादिबुद्धेस्तु स्फुटप्रतिभासित्वान्न कल्पनात्वम्। तस्मादुक्तम्—

[2]न विकल्पानुविद्धस्य स्पष्टार्थप्रतिभासिता। इति। तथान्यत्राप्युक्तम्—

[3]सुप्तस्य जाग्रतो वापि यैव धीः स्फुटभासिनी।
सा निर्विकल्पोभयथाऽप्यन्यथैव विकल्पिका॥ इति।

कल्पनारहितत्वं च प्रत्यक्षस्य प्रत्यक्षेणैव गम्यत इत्याह—

[4]प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिद्ध्यति।
प्रत्यात्मवेद्यः सर्वेषां विकल्पो नाम संश्रयः॥

संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना।
स्थितोपि चक्षुषा रूपमीक्षते साक्षजा मतिः॥

पुनर्विकल्पयन्किंचिदासीन्मे कल्पनेदृशी।
इति वेत्ति न पूर्वोक्तावस्थायामिन्द्रियाद् गतौ॥

कल्पनाज्ञानमप्यतथार्थावभासित्वाद् भ्रान्तमेव, तथापि विप्रतिपत्तिनिवृत्यर्थं पृथगुक्तम्। यतः सविकल्पकमपि गौरित्यादिज्ञानमक्षजत्वाद् भ्रान्तत्वाच्चाध्यक्षं प्रमाणमिति परेषामभिनिवेशस्तत्प्रतिषेधार्थं कल्पनापोढमित्युक्तम्। न हि नामसंसर्गप्रतिभासित्वमिन्द्रियज्ञाने संभवति, अर्थस्य सामर्थ्येन समुद्भवाद् अर्थसामर्थ्येनोत्पद्यमानं तद्रूपमेवानुकुर्यात्। न ह्यर्थे शब्दाः सन्ति तदात्मानो वा, येन तस्मिन् प्रतिभासमाने प्रतिभासेरन्। न चायम्[5] अर्थासंसर्शासंवेदनधर्मा, अर्थेषु तन्नियोजनात्, ततोर्थानामप्रतीतिप्रसंगात्। तस्मादय-

---

१. न्या० बि० १।६ तिमिरम् = अक्ष्णोर्विप्लवः, आशुभ्रमणम् अलातादेः, नावा गमनम्, संक्षोभो वातपित्तश्लेष्मणाम्।

२. न विकल्पानुविद्धस्य स्पष्टार्थप्रतिभासिता।
स्वप्नेऽपि स्मर्यते स्मार्त्तं न च तत् तादृगर्थवत्॥ (प्र० वा० ३।२८४)

३. प्र० वा० ३।३००।

४. प्र० वा० ३।१२३,१२४,१२५।

५. अयं = शब्दः। ततः = शब्दात्।

मुपनिपत्य विज्ञानं जनयन्नर्थः स्वात्मानुरूपमेव जनयितुं युक्तो नार्थान्तराकारम्। न हि नीलं शुक्लाकारं रसाद्याकारं वा ज्ञानं जनयति, नापि तद्वलेनोदीयमानं विज्ञानमर्थान्तरमनुसर्त्तुं युक्तम् रसादिज्ञानवत्, सतोपि तदात्मन इन्द्रियान्तरज्ञानोत्पत्तावसामर्थ्यादतिप्रसंगाच्च। विकल्पकं तु मनोविज्ञानमर्थसन्निधानानपेक्षं विकल्पवासनोत्थापितमनियतेन्द्रियार्थग्राहि कुतश्चिदनुभवसंबंधात् सह पृथग्वा गृह्णीयात्।

अपि च—

अर्थोपयोगेपि पुनः स्मार्त्तं शब्दानुयोजनम्।
अक्षधीर्यद्यपेक्षेत सोऽर्थो व्यवहितो भवेत्॥

न हि संकेतकालभाविनमभिलापसामान्यमस्मरतस्तद्योजना संभवति शब्दान्तरवत्। न चार्थाभिपातकृते अस्त्यान्तरे विकारे शब्दविशेषे स्मृतिर्युक्ता, [1]तस्यातत्कृतत्वे तन्नामग्रहणप्रसंगात्। तत्स्मृत्या व्यवधानान्नार्थोपयोगोऽनन्तरव्यापारफलः[2] स्यात्, ततश्च "यः प्रागजनको बुद्धेरुपयोगाविशेषतः"। स पश्चादपि स्यादात्माभेदेन सामार्थ्याविशेषात्। नैकस्यैकत्र क्रियाक्रिये संभवतः। "तेन स्यादर्थापायेपि नेत्रधीः।" अर्थस्य साक्षाद्बुद्धावनुपयोगात् स्मृतिप्रबोधे चोपयुक्तत्वात् नास्यानुपकारिणो बुद्धिर्भावमपेक्षेत। अर्थाभिपातकृते च बुद्धिजन्मन्यभिलापस्मृत्यन्तराभावात्, मा भून्नाम विकल्पस्याक्षजत्वं, जात्यादिविकल्पस्य तु भविष्यतीत्याशंकानिषेधार्थमाह—

[3]विशेषणं विशेष्यं च संबंधं लौकिकीं स्थितिम्।
गृहीत्वा संकलय्यैतत्तथा प्रत्येति नान्यथा॥

किंचित्केनचिद्विशिष्टं गृह्यमाणं विशेषणविशेष्यतत्संबंधलोकव्यवस्थाप्रतीतौ तत्संकलनेन गृह्यते दण्डादिवत्। नान्यथा अर्थसंबंधाभिधानव्यवस्थाऽपरिज्ञानेऽभावाद् जातिगुणक्रियावतामेतन्न संभवत्येव रूपविवेकसंबंधयोरप्रतिभासनेन घटनायोगात्। क्षीरोदकवदतद्वेदिनि यत्रापि विवेकप्रतिपत्तिरस्ति तस्यापि ग्रहणम्।

---

१. तस्य = आन्तरविकारस्य, अतत्कृतत्वे = अर्थाकृतत्वे।

२. अनन्तरव्यापारफलः = अनन्तरं व्यापारफलं सविकल्पकं यस्य, सः।

३. प्र० वा० ३।१४५।

[1]संकेतस्मरणोपायं दृष्टसंकलनात्मकम् ।
पूर्वापरपरामर्शशून्ये तच्चाक्षुषे कथम् ॥

न हीदमियतो व्यापारात्कर्तुं समर्थं संनिहितविषयबलेनोत्पन्नेऽविचारकत्वात्, विचारकत्वे चेन्द्रियमनोज्ञानयोरभेदप्रसंगात् । अभेदे चातीतानागतवस्तुप्रभेदग्रहणाग्रहणोहानूहार्थभावापेक्षानपेक्षादिप्रसंगः । मनोविज्ञानाभिसंस्कृतमिन्द्रियज्ञानं प्रत्येतीति चेत्, न; यथोक्ताग्राहिणस्तथा प्रवृत्त्ययोगात्, अविषयेऽप्रवृत्तेः, जात्यादिसंबंधातीतशब्दव्यवहारादीनामिन्द्रियज्ञानविषयत्वात् । तस्मान्नेद्रियज्ञानमर्थसंयोजनां कल्पनामाविशति ।

विकल्पोत्थापिता सा च न वर्त्ततेच्छया मतिः । नार्थसंनिधिमीक्षेत । अपि चेयं विशेषणादिविकल्पोत्थापिता सती प्रवृत्तापि समग्रसामग्रीकस्य पुनरिच्छया निवर्तेत, तदन्यविकल्पवत् ।

शक्यन्ते हि कल्पनाः [2]प्रसंख्यानेन निवारयितुं, नेन्द्रियबुद्धयः । सामग्रीसाकल्ये विनिवर्त्य गोबुद्धिमश्वमपि कल्पयतो गोदर्शनात् नापीयमर्थसन्निधिमीक्षेत, न हिं गवादिविकल्पोऽर्थसन्निधावेव भवतीति । तस्मादविकल्पकमेव ज्ञानं प्रत्यक्षम् । तत्र बाह्यार्थपक्षेऽर्थाकारः प्रमाणम्, तदर्थाधिगमः फलम् । विज्ञप्तिमात्रतायां स्वसंवित्तिः फलम्, ग्राहकाकारः प्रमाणम्; तद्वशेन स्वसंवेदनव्यवस्थापनात् ।

तत्रात्मविषये माने यथा रागादिवेदनम् ।
सव्यापारप्रतीतत्वात्प्रमाणं फलमेव सत् ॥ (प्र० वा० ३।३६५)

इत्येतत्पक्षद्वयेपि समानमिति ।

## ❀ सविकल्पकस्यापि प्रत्यक्षत्वस्थापनम् ❀

अत्रोच्यते--प्रमाणफलविचारस्य शाक्यादिमतव्युदासेन प्रागेव कृतत्वान्नेह स पुनः क्रियते । किन्त्वत्र गौरित्यादि ज्ञानस्याक्षजत्वमेव साध्यते । यत्तावदर्थसामर्थ्येनोत्पद्यमानं तद्रूपमेवानुकुर्यादिति, तन्न; ज्ञानेऽर्थाकारस्य प्रागेव निरस्तत्वात् । यदपि न ह्यर्थे शब्दाः सन्तीत्यादि, तदपि विशेषणविशेष्ययोरेकज्ञानालम्बनत्वप्रतिषेधेनैव निरस्तम् । न चायं गौरिति ज्ञाने शब्दः प्रतिभाति, किं तर्हि ? सास्नादिमानर्थः, शुक्लोऽयं पीनो विषाणी गच्छति इत्यादि सामानाधि-

१. प्र० वा० ३।१७४ ।
२. प्रसंख्यानेन = विवेकज्ञानेन ।

करण्यप्रतीतेः। महिषादिषु चायं गौरित्यादि संवादिप्रतीत्यनुत्पत्तेः। "सविकल्पकत्वादयं मिथ्या प्रत्ययः तदन्यसविकल्पवद्" इत्ययुक्तम्, निर्विकल्पकत्वात्तदन्यनिर्विकल्पवदित्यस्यापि प्रसंगात्, तुल्याक्षेपपरिहारत्वात्।

यच्चात्रोक्तम्—

[1]मनसो युगपद्वृत्तेः सविकल्पाविकल्पयोः।
विमूढो लघुवृत्तेर्वा तयोरैक्यं व्यवस्यति॥

तत्रेदं विचार्यते—किं तावेव युगपदुत्पन्नौ क्रमोत्पन्नौ वा सविकल्पाविकल्पावेकत्वेनाध्यवस्यति? अथ तयोर्विषयाविति? किं चातः? प्रत्ययमात्राध्यवसाये विषयोन्मुखा प्रवृत्तिस्तत्प्राप्तिश्च न स्यादविसंवादिप्रत्ययस्य च भ्रान्तत्वायोगान्न भ्रान्तितोपि प्रवृतिप्राप्ती। अथ सविकल्पाविकल्पार्थयोरैक्यं व्यवस्यति, यथोक्तम्—दृश्यविकल्प्यावर्थावेकीकृत्य तदध्यवसायेन प्रवर्तनादिति। तदयुक्तम्, महिषादिपिण्डेष्वपि गौरित्यध्यवसायेन प्रवृत्तौ ह्यविसंवादप्रसंगात्। गकारादिवर्णैः संबंधाभावस्योभयत्राविशेषात्। तदेकत्वाध्यवसायस्याप्युभयत्राविशेषादिति। तदपि पण्डितम्मन्येनोक्तम्—[2]"इदमिति पुरोवर्त्तिन्यर्थे यद्विज्ञानं तत्स्वविषयानन्तरविषयसहकारिणाक्षज्ञानेन जनितं मानसं प्रत्यक्षमिष्यत" इति, तदपर्यालोचिताभिधानम्; यदेव हि गौरिति ज्ञानं गकारादिवर्णविषयत्वात्सविकल्पकं भवतेष्टं, तथेदमित्यपीकारादिवर्णविषयत्वात्सविकल्पकमेव शब्दसंसर्गप्रतिभासत्वाविशेषात्। इदमिति पुरोवर्त्तिस्पष्टाकारत्वान्न गौरिति ज्ञानमिति चेत्, दिव्यमत्रग्राह्यं न्यायाभावात्। क्वचिदर्थाभावेपि गौरित्युत्पत्तेर्न तदर्थापेक्षेति चेत्, इदमित्यपि ज्ञानं क्वचिदर्थाभावे भवत्येव। अर्थाभावे भवद् भ्रान्तमन्यत्र सम्यगेवेत्येतदुभयत्रापि समानम्। इकारादिशब्दसंसर्गप्रतिभासीदमिति ज्ञानं निर्विकल्पमिति चेत्, तदिदं व्याहतम्[3]।

---

१. प्र० वा० ३।१३३ मनसो युगपद्वृत्तेः, लघुवृत्तेर्वेत्यन्वयः।

२. तुलना—मानसमपीन्द्रियविज्ञानेन स्वविषयानन्तरविषयसहकारिणा जनितं प्रत्यक्षम्।...इदमिति पुरोवर्तिनि साक्षात्कारणाकारेण प्रवर्तमानं मानसं प्रत्यक्षम् (प्र० वा० अ० पृ० ३०५)। "स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं तन्मनोविज्ञानम्" (न्या० बि० १।९७)।

३. इदमित्युच्यतेऽथ चेदंशब्दसंसर्गप्रतिभासीति व्याहतम्।

अपि च गकारादिशब्दसंसर्गप्रतिभासि गौरित्यादिज्ञानं निर्विकल्पकं मानसं प्रत्यक्षमित्येतदपि भवताभ्युपगन्तव्यं, तुल्यन्यायत्वात्। ततश्च गौरित्यादिज्ञानस्य कल्पनात्वेनाप्रत्यक्षत्वाभ्युपगमोऽनुपपन्न एवेति।

यदप्युक्तम्—[1]"इदमित्येव कृत्वा प्रवर्त्तते तेन प्रवर्तकत्वात् प्रमाणमिति, तदप्ययुक्तम्; यतो नेदमित्येव कृत्वा प्रवर्त्तते, किन्त्वभीष्टनिश्चयादेव जातमात्रस्यापि प्रवृत्तिरिति वक्ष्यामः। तस्मादेतदेवोत्तरं युक्तम्—न मानसं प्रत्यक्षमिन्द्रियप्रत्यक्षादर्थान्तरम्। अर्थान्तरमागमोक्तत्वेनैवोक्तम्, न त्वत्र प्रमाणं किंचिदस्तीति।

यदप्युक्तम्—सतोपि तदात्मन इन्द्रियान्तरज्ञानोत्पत्तावसामर्थ्यादिति, तदनभ्युपगमेनैव परिहृतम्। न हि चक्षुरादिज्ञानविषयत्वं शब्दस्याभ्युपगम्यते किंतु संकेतानुभवसहकारिणा तत्स्मृतिसहकारिणा वा चक्षुरादिना स्वस्मिन्नेव विषये गौरित्यादिज्ञानमुत्पाद्यते।

यदप्युक्तम्—अर्थोपयोगेपीत्यादि। तत्र यदि स्मृत्यपेक्षित्वेऽर्थस्य क्षणिकत्वेन व्यवधानमुच्यते, तन्न; क्षणिकत्वासिद्धत्वात्। क्षणिकवादिनापि सहकारिवैलक्षण्यादेकसन्तानस्य विलक्षणकार्योत्पादकत्वमभ्युपगतमेव। ततश्च यथैक एवाग्निसन्तानः कस्यचिदेकस्य मृत्सन्तानस्याश्मसन्तानस्य वा सहकारिभेदानुरोधेन रूपाद्याकारविशेषं प्रति व्यवहितत्वेनाकारणत्वमिष्यते, तथार्थसन्तानस्येन्द्रियसन्तानस्य च निर्विकल्पकं ज्ञानं जनयित्वा पश्चाल्लब्धसहकारिविशेषस्य गौरित्याद्याकारजनकत्वं भविष्यतीति कथं व्यवधानं? एतेन—"यः प्रागजनको बुद्धे"रित्याद्यपि निरस्तम्। न हि यस्याकारस्य प्रागजनको वह्निस्तस्याकारस्य पश्चादप्यजनक एवेति युक्तम्, उपयोगाविशेषत इत्यसिद्धम्, सहकारिविशेषप्राप्तेरेवोपयोगविशेषत्वादिति। नैकस्यैकत्र क्रियाक्रिये संभवत इत्येतदप्यक्षणिकत्वप्रस्तावे विचारयिष्यामः। किं च तत्सन्तानस्याकृतकार्यस्यापि तत्कार्यकर्तृत्वं प्रदशितमेवेति। एवं चार्थस्य साक्षाद् बुद्धावनुपयोगादित्यसिद्धम्। स्मृतिप्रबोधे चोपयुक्तत्वादित्यनेन किमुच्यते न तावदर्थस्य स्मृतिजन्मन्युपयोगः, स्मृतेरनर्थजत्वाभ्युपगमात्।

अथ तज्जनकानुभवजन्मन्युपयोगः, ततः किम्? अत्रोपयुक्तस्यान्यत्रानुपयोग इति चेत्, न; वह्नेः क्रमेणाङ्गारभस्मादिभावेषूपयोगदर्शनात्। तथा मानसप्रत्यक्षे प्रागनुपयुक्तस्यार्थस्य पश्चादुपयोगदर्शनात्, भवति मानसेऽर्थस्य

1. प्र० वा० अ० पृ० ३०५ पं० ६।

पश्चादुपयोगः। किंतु तदक्षजं न भवतीति चेत्, अक्षजत्वे तर्हि विवादो नार्थजत्वे, यथा चार्थस्य प्रागर्थाक्षबुद्धावेव सामर्थ्यं तत्सहकारिणः पश्चान्मानसप्रत्यक्षेपि सामर्थ्यमिष्टं, तथेन्द्रियार्थयोः प्रागविकल्पबुद्धावेव सामर्थ्यम्। पश्चादासादितसहकारिविशेषयोः सविकल्पकबुद्धावपि सामर्थ्यं किं नेष्यते? कोऽत्र विरोधः? तदाकारप्रसंग इति चेत्—अथ मन्यसे यदीन्द्रियार्थाभ्यां पश्चादपि ज्ञानं जन्यते, तदा तदपि ज्ञानं प्रागुदि(त)ज्ञानेन तुल्याकारं प्रसज्यत इति, नैतदस्ति; विलक्षणसहकार्युपकृतैककारणजन्यानामप्येकाकारत्वदर्शनात्। अन्यथा चक्षुःप्रकाशाभ्यां जनितानां सर्वज्ञानानामेकाकारतैव स्यात्। कथंचिदेकाकारत्वे सविकल्पाविकल्पयोरप्येकाकारत्वमस्त्येव।

यदपि विशेषणविशेष्यमित्याद्यभिधायेदमुक्तं जातिगुणक्रियावतामेतन्न संभवत्येव रूपविवेकसंबन्धयोरप्रतिभासनेन घटनायोगादिति। तदप्ययुक्तम्, अप्रतिभासनत्वस्यासिद्धत्वात्। तथा हि—अगृहीतसमयोपि महिषादिपिण्डेभ्यो व्यावृत्तान् शावलेयादिपिण्डानेकाकारांश्च विविक्तगोत्वस्वरूपतत्संबंधोपलंभेनैव प्रतिपद्यते। व्यावृत्तेभ्योऽन्या नैव व्यावृत्तिरिति चेत्, न; अपोहस्य निराकरिष्यमाणत्वात्, तन्निषेधे सिद्ध्यत्येव जातिगुणक्रियाणां तत्संबंधस्य चाश्रयादर्थान्तरत्वम्।

क्षीरोदकवदतद्वेदिनि इत्यप्यसिद्धम्। येनापि हि क्षीरोदके पृथगाधारे न दृष्टे, तस्यापि प्रभूतेनोदकेन मिश्रितं क्षीरं क्षीरोदकमेतदिति प्रतिपत्तिर्भवत्येव। स्वल्पेनाप्युदकेन मिश्रितं क्षीरं तज्ज्ञस्य प्रतिभात्येव। यस्तु स्वभावो वा पदार्थानामेषो येन केचिदासद्भावं संसृष्टाः, केचित्पश्चात्कियन्तं कालं, केचित्संसृष्टा अपि पदार्थाः सर्वेषामेव द्रष्टॄणां विवेकेन प्रतिभान्ति केचित्तज्ज्ञानामेव, केचित्स्वसंसृष्टावस्थायामेवास्मदादीनां विवेकेन प्रतिभान्ति संसृष्टावस्थायां त्वविवेकेनैवेति।

यदपि संकलनाज्ञानमित्युक्तम्। तत्र यदि तावदनेकार्थस्मरणमात्रमेव संकलनाज्ञानमभिप्रेतम्, तन्न युक्तम्; दण्डीतिज्ञानस्यानुभवाकारत्वेन संवेद्यमानत्वात्। स्मरणमपि दण्डीत्युनुभवं सूचयति। न हि पुरुषदण्डगवादीनां स्वरूपमात्रग्रहणे दण्डी दृष्टो गोमान् दृष्टः इत्याद्याकारा स्मृतिर्भवितुमर्हति।

अथ भ्रान्तिज्ञामेव संकलनाज्ञानमभिप्रेतम्, तदप्ययुक्तम्; नीलादिप्रतिभासवदस्यापि सर्वदा सर्वेषामविसंवादेनोत्पत्तेः। किं च भ्रांतिनिमित्ताभावात् न तावदिन्द्रियदोषाद्वातादिवैषम्याद्वा भ्रांतिः, सर्वव्यवहर्तॄणां

संनिकृष्टानामप्यनियतदेशकालाविशेषेणोत्पत्तेः। वासनाप्यनेनैव प्रत्युक्ता। सादृश्यादिनिमित्तमप्यत्र न संभवत्येवेति।

अथ विशेषणादिग्रहणपूर्वकत्वेन संकलनाज्ञानं तदिष्यत एव दृष्टसामर्थ्यस्य कारणत्वाभ्युपगमात्। विशेषणादिग्रहणस्येवाक्षस्यापि सामर्थ्यावधारणविशेषाज्ञानतज्जं दण्डीत्यादिज्ञानम्। न हि यत्रैकस्य सामर्थ्यं तत्रान्यस्य नास्त्येवेति।

यदपि 'संकेतस्मरण' इत्यादि, तदप्ययुक्तमेव; संकेतस्मरणोपायत्वचाक्षुषत्वयोर्विशेषाभावात्। संनिहितविषयत्वमप्यस्त्येवायं दण्डीत्यादिज्ञानस्य प्रत्यभिज्ञानस्यापि च।

ननु च स इत्यनेनासंनिहितः पूर्वदृष्टः परामृश्यते, न; तस्यानेनाभिन्नस्य संनिहितत्वानुपपत्तेः। तदभिन्नत्वं केन गृहत इति चेत्, चक्षुषैव। पूर्वदर्शनविशिष्टत्वमिति स्मृतिसहितेन चक्षुषा गृह्यते। तद्विषयं प्रत्यभिज्ञाज्ञानमुत्पाद्यत इत्यर्थः। तस्मिंश्च प्रत्यभिज्ञाज्ञानेन सकारादयो वर्णाः प्रतिभान्ति, न पूर्वदर्शनं चावभाति। किन्तु स एवार्थः स च यादृशो दृष्टः तादृशस्यैव परप्रत्याख्यानार्थं तदभिधायकं स एवायमिति शब्दं स्मृत्योच्चारयति। एवं दण्डीत्यादिज्ञानेपि द्रष्टव्यम्।

यदि पुनरभिलापादिसंसर्गशिष्टोऽर्थः कदाचिदपि न गृह्यते, तदा परप्रतिपादनार्थं नियतस्यैव शब्दस्योच्चारणं न स्यात्। भ्रान्तितश्च यस्य कस्यचिदुच्चारणं स्यात् सर्वव्यवहर्तृसंवादाभावप्रसंगाच्च।

यदपि पूर्वापरपरामर्शशून्यत्वमविचारकत्वमिन्द्रियज्ञानस्योक्तं, तत्र अविचारकत्वं किमुच्यते? यदा स्मृतिरूपत्वं तेन हेतुनाक्षज्ञानस्य विशेषणविशिष्टार्थविषयत्वं निषिध्यते, तदा स्मृतिरेव तथार्थविषयाऽभ्युपेया ततश्च निर्विषयत्वाभ्युपगमविरोधः। न चानुभवविषयादन्यो विषयः स्मृतेः शक्यो व्यवस्थापयितुं, सर्वत्र दृष्टार्थविषयत्वेन स्मृतेः संवेदनात्।

अथ स्मृतिरपि न विशेषणविशिष्टार्थविषया, न; तद्व्यवहारोच्छेदप्रसंगात्। यदा तद्विशिष्टार्थः स्मृत्यानुभवेन च नैव विषयीक्रियते, तदा कथमप्रतिपन्नोऽसौ व्यवहर्तुं शक्यते? भ्रान्तित इति चेत्, न; भ्रान्तेः प्रतिषिद्धत्वात्।

अथ परामर्शजन्यत्वमविचारकत्वं हेतुः, तथाप्यसिद्धत्वादयुक्तः। परामर्शो हि स्मृतिः स्यादानुमानिकं वा ज्ञानं, संशयादिरूपं वा? सर्वस्यापि विशिष्टानुभवोत्पत्ताविन्द्रियसहकारित्वं प्रसाधितमेवेति।

यदप्युक्तम्—विचारकत्वे चेन्द्रियमनोज्ञानयोरभेदप्रसंगादित्यादि, तदप्यनुक्तम्; निर्विकल्पकत्वाद्यविशेषवदसंभवात्। यथा त्वन्मते चतुर्विधानां प्रत्यक्षाणां निर्विकल्पकत्वाभ्रान्तत्वाविशेषेपि अवान्तरधर्मभेदोऽस्ति विषयभेदः कारणभेदश्चास्ति, तथा विचारकत्वाविशेषेपीन्द्रियमनोज्ञानयोर्नाभेद एव। नाप्यतीतानागतवस्तुभेदग्रहणादिप्रसंग इति।

यदप्युक्तम्—जात्यादिसंबंधातीतशब्दव्यवहारादीनामिन्द्रियज्ञानाविषयत्वादिति, तदप्यसारम्; जात्यादिसंबंधस्येन्द्रियविषयत्त्वेनासाधितत्वाद् विशिष्टज्ञानस्य च केवलविशेष्यालंबनत्वेन प्रसाधितत्वात्, नातीतशब्दादिविषयत्वप्रसंगः। यदपि विकल्पोत्थापिता सा चेत्यादि, तदप्यसत्; कामाद्युपेतस्य पुरोवस्थिते कामिन्याद्यर्थे तद्विकल्पस्येच्छातोऽप्यनिवृत्तिदर्शनात्। अथ प्रसंख्यानाभ्यासात् कामिन्यादिविकल्पोपि निवर्त्तते। एवं तर्हि चित्तवृत्तिनिरोधाभ्यासादिन्द्रियबुद्धयोपि निवर्तन्त इत्याहुः पतञ्जलिप्रभृतयः। किं च सुतव्यासक्तमनसां चेन्द्रियसंनिकृष्टार्थस्याप्यप्रतिभासनान्न मनोनिरपेक्षस्येन्द्रियस्यापि व्यापारः संभवति।

यच्चोक्तम्—सामग्रीसाकल्ये विनिवर्त्त्य गोबुद्धिमश्वं विकल्पयतो गोदर्शनादिति, तदसंबद्धमेव प्रलपितम्। तथा हि—अयं गौरिति ज्ञानं संकेतस्मृतीन्द्रिययोरन्यतराभावेपि नोपपद्यत इत्येवं परेणोक्ते सामग्रीसाकल्ये विनिवर्त्येत्यादि क्वोपयुज्यते?

यदप्युक्तम्—नार्थसंनिधिमीक्षेत। न हि गवादिविकल्पोऽर्थसंनिधावेव भवतीति, तदप्यसमीक्षिताभिधानम्; विशिष्टविकल्पस्यार्थसंनिधिमन्तरेणोत्पत्तेरदर्शनात्। शब्दसाम्यादभेदिनश्च भवतैवानुमितिसाधनत्वस्यानिराकृतत्वात्। किं च केशादिज्ञानवदक्षजत्वसाम्यात्सर्वाक्षजज्ञानानामर्थसंनिधिनिरपेक्षाणामेवोदयप्रसंगात्। ततश्च न कस्यचिदर्थसामर्थ्येनोद्भव इत्यर्थसामर्थ्योद्भवत्वमसिद्धं स्यात्। यथा वा भावनाजत्वाविशेषेपि योगिज्ञानमेवाविसंवादित्वादभ्रान्तं प्रत्यक्षमिष्यते, न तु स्वप्नाद्युप्लवज्ञानम्। तथा सविकल्पकत्वेऽप्ययं गौरित्यादिज्ञानमेवाविसंवादित्वादर्थसाक्षात्करणप्रवृत्तत्वाच्च प्रत्यक्षमिति।

यदप्युक्तम्—संकेतबलेनार्थेषु शब्दः प्रवर्त्तते। संकेतस्तु न व्यक्तौ शक्यते कर्त्तुं ग्रहीतुं च, नापि सामान्ये। यस्माद—

[1]एकत्र दृष्टो भेदो हि क्वचिन्नान्यत्र दृश्यते ।
न तस्माद्भिन्नमस्त्यन्यत् सामान्यं बुद्धयभेदतः ॥

तदप्यसत्, यस्माद् व्यक्तौ सामान्ये च (तद्वस्तु च) संकेतस्य करणं ग्रहणं यथा संभवति, तथोपरिष्टाद्विस्तरेण प्रतिपादयिष्यामः। तत्सिद्धं सविकल्पकमपि प्रत्यक्षम् ।

संशयादेरपि विप्रतिपत्तिविषयस्यानेनैव न्यायेनाक्षजत्वमर्थविषयत्वं च साधयितव्यमिति ।

निर्विकल्पकाधिगतविषयत्वात्सविकल्पकस्याप्रमाणत्वमिति चेत्, न; अन्यथा तदधिगमात् । योगिज्ञानस्य च दृष्टश्रुतादिविषयस्याप्रमाणत्वप्रसंगात् । संप्लवस्य च प्रागेव साधितत्वादधिगतविषयत्वेपि न सविकल्पकमप्रमाणम् । न चाधिगतविषयत्वेन स्मृतिरेव, स्मरणानुभवयोर्धर्मभेदस्याधिगतविषयत्वेपि

१. प्र० वा० ३।१२६ अयमत्राशयः—किं सामान्यम् ? किं च तद्ग्राहकं प्रमाणम् ? समानानां स्वलक्षणानां भावः सामान्यम् । प्रत्यक्षं च तद्ग्राहकमिति जातिप्रत्ययिनः । उभयं चैतदन्वयिरूपम् । निरन्वयविनाशसाम्राज्ये कस्तयोरवसरः ? भेदः = विशेषः स्वलक्षणमिति यावत् । तद्ग्राहकं प्रत्यक्षं चैतदुभयं स्वकालमात्रपरिच्छिन्नस्वभावम्—यत् स्वलक्षणमेकत्र दृष्टं, तन्नान्यत्र दृश्यते । यच्च प्रत्यक्षमेकत्र, तन्नान्यत्र, तथा चोक्तम्—"न पूर्वं परत्र, न परं पूर्वत्र प्रत्यक्षम्" ( प्र० वा० अ० पृ० २४६ ) तस्मात् स्वलक्षणतो भिन्नं सामान्यं न शक्यते आत्मानमुपलब्धुमुपलम्भयितुं च । सामान्यसाधकानां मनोरथनन्दिनी प्रत्यभिज्ञा तु प्रमाणतामेव नाश्नुते, नतरां प्रत्यक्षप्रमाणतां, तदुक्तम्—"प्रत्यभिज्ञाया अप्रत्यक्षत्वात् तत्रेन्द्रियव्यापाराभावात्" (प्र०वा०अ०पृ०२४६) इति । अत्राभिदध्महे—

सामान्यलक्षणाभावे सामान्यप्रत्ययः कथम् ।
सामान्यप्रत्ययाभावे गोभिश्वोर्भिदा कथम् ॥

अक्षव्यापारराहित्ये प्रत्यभिज्ञा क्व जायते ।
न हि प्रत्यभिजानन्ति सुषुप्तौ स्कन्धदुःखताम् ॥

मात्रादिषु प्रविश्वास-जनित्र्या प्रत्यभिज्ञया ।
साधितमिह सामान्यं को निवारयितुं क्षमः ॥

इति प्रत्यक्षपरिच्छेदटिप्पणम् ॥

—:०:—

संशयादिभेदवत् साधितत्वात् । अनधिगतविषयत्वाविशेषात् प्रत्यक्षादीनामप्यभेदप्रसंग इत्यलमतिप्रसंगेनेति ।

इति श्रीमदाचार्यभावसर्वज्ञविरचिते ।

न्यायभूषणे संग्रहवार्तिके

प्रथमः परिच्छेदः

समाप्तः ॥

—:o:—

: २ :

# अनुमानपरिच्छेदः

## ❀ अनुमानस्वरूपम् ❀

[१]अथेदानीमनुमानस्वरूपं विचार्यते—

"[२]तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टञ्च" इति सूत्रम्। अत्र तत्पूर्वकमनुमानमित्येतावदेव लक्षणार्थम्, परिशिष्टं तु विभागार्थमित्येके, तदपव्याख्यानम्; तदित्यनेन यदि प्रत्यक्षमेव परामृश्यते, तदातिव्याप्त्यव्याप्तिदोषौ भवतः—प्रत्यक्षपूर्वके संस्कारे संशयादिज्ञाने चातिव्याप्तिरनुमानादिपूर्वकानुमाने चाव्याप्तिरिति। तेनाव्याप्तिपरिहारार्थं विभागसूत्रप्रक्रान्तानि सर्वप्रमाणानि [३]परामृश्यन्ते। विग्रहविशेषाश्रयणाद् अतिव्याप्तिपरिहारोऽपि सिद्धः। ते च तानि चेति विग्रहः। स्वरूपाणामेकशेषात् तानीति भवति। तानि पूर्वं यस्य तदिदं तत्पूर्वकम्। तत्र ते इत्यनेनाविनाभावसम्बन्धदर्शनं लिङ्गदर्शनञ्चाभिसम्बध्यते। तानीत्यनेन सर्वप्रमाणफलानि। एतदुक्तं भवति—प्रत्यक्षाद्यन्यतमप्रमाणजनितमविनाभावसम्बन्धदर्शनं लिङ्गदर्शनञ्च पूर्वं यस्य तत्तथोक्तम्। अनुमितिरनुमानम्। फललक्षणे हि सिद्धे तत्साधनलक्षणं सिद्ध्यत्येव।

[४]अथवा तत्पूर्वकं यतः=कर्मकर्तृवैलक्षण्याद्भवति, तदनुमानमिति।

---

१. अथेत्यानन्तर्ये, स्थानसामर्थ्यात् प्रत्यक्षनिरूपणानन्तरमित्यर्थः।

२. न्या० सू० २।१।५।

३. परामृश्यन्ते। सूत्रस्थेन तत्पदेनेत्यादिः। तथा च वार्तिकटीके—"तानि ते तत् पूर्वं यस्य, तदिदं तत्पूर्वकम्" (न्या० वा० पृ० ४३)। "अत्र प्रथमे विग्रहे तानीत्यनन्तरं सूत्रमुल्लङ्घ्य विभागसूत्रगताः प्रत्यक्षादयः सम्बन्धनीया योग्यत्वात्" (न्या० वा० ता० टी० पृ० १५७)।

४. अनुमानपदं प्रमां प्रमाणं च व्युत्पत्तिवैचित्र्याद् अभिधत्ते। तत्राद्ये प्रमालक्षणमेव प्रस्तुतं मत्वाऽभिहितम्। द्वितीयेऽनुमानप्रमाणं लक्षणीयमित्याह—अथवेति। अस्मिन् पक्षे 'यतः' इत्यध्याहृत्य सूत्रं व्याख्येयमिति भावः।

तच्छब्देनापि यदा प्रत्यक्षादिप्रमाणान्येव परामृश्यन्ते, तदैकस्य पूर्वकशब्दस्य लुप्तनिर्देशो द्रष्टव्यः। तत्पूर्वकपूर्वकं जा...त्यादि व्याख्येयम्।

## ❀ अनुमानत्रैविध्यम् ❀

त्रिविधग्रहणं नियमार्थम्—देशकालजात्यवस्थादिभेदादनन्तमप्यनुमानं त्रिविधमेवेति। प्रकारान्तरेण त्रैविध्याशंकानिवृत्त्यर्थम्—पूर्ववदादिग्रहणम्। पूर्ववदिति कारणानुमानम्। कथं? पूर्वशब्देन कारणाख्यमिह लिङ्गमुक्तम्, तद्विद्यते यस्यालम्बनीभूतं लिङ्गिज्ञानसाधनस्य ज्ञानस्य तत्पूर्ववत्। फलविवक्षया तु पूर्वं विद्यते जनकं यस्य लिङ्गिज्ञानस्य तत् पूर्ववत्।

शेषवदित्यत्राप्येषैव व्युत्पत्तिः। शेषवदिति कार्यानुमानम्। कार्यकारणयोः कारणं व्याख्यातम्, अतः कार्यं शिष्यत इति शेषः।

सामान्यतोदृष्टं नाम यदकार्यकारणत्वेऽप्यविनाभूतमर्थान्तरस्य गमकम्। यथा गन्धविशेषो रसादिविशेषस्येति। चशब्दः समानन्यायत्वं सूचयति। एतदुक्तं भवति—[1]शाक्यैरर्थान्तरस्य कार्यमेव गमकमिष्यते, न कारणम्, नाप्यकार्यकारणमिति। तत्र कार्यस्य गमकत्वे यो न्यायस्तैरव्यभिचारलक्षणोऽपदिष्टः, स इतरत्राप्यस्तीति चशब्देन सूच्यते। तथा चोत्तरत्र प्रपञ्चयिष्यामः।

अथवा पूर्ववदिति केवलान्वयि अनुमानम्, शेषवदिति केवलव्यतिरेकि, सामान्यतोदृष्टमित्यन्वयव्यतिरेकीति। कथं? पूर्वशब्देनान्वयो व्यपदिश्यते, प्रागध्यवसीयमानत्वात्। न हि यावन्नाग्निभावे धूमभावोऽध्यवसीयते, तावदग्न्यभावे धूमाभावो दृष्टोऽप्यध्यवसातुं शक्यते। विध्यध्यवसायपूर्वकत्वात् निषेधाध्यवसायस्य। पूर्वमेव विद्यते, अन्वय एवास्ति यस्यानुमानस्य तत्पूर्ववत्। शेषो व्यतिरेकः स एवास्ति यस्य तच्छेषवत्। बाधकोपलक्षितस्य केवलव्यतिरेकस्य गमकं न व्यतिरेकमात्रस्येति प्रदर्शनार्थं शेषवदित्युक्तम्, न व्यतिरेकवदिति। अन्वयव्यतिरेकयोः साधनाङ्गयोः सामान्येन यदनुमानं दृष्टं, तत्सामान्यतो दृष्टम्। एतदुक्तं भवति—यथान्वयेनैतदनुमानमुपकृतं तथा व्यतिरेकेणापीति। चशब्दोऽन्वयव्यतिरेकिवदितरयोरपि गमकत्वमस्तीति सूचयति।

शाक्याः खलु केवलान्वयिनः केवलव्यतिरेकिणश्च गमकत्वं नास्तीत्याहुः, तन्निषेधोऽपि सूचितः, तच्चोपरिष्टाद् वर्णयिष्यामः।

---

१. तथा चाह—"त्रिरूपाणि च त्रीण्येव लिङ्गानि—अनुपलब्धिः, स्वभावः, कार्यं चेति" (न्या० वि० २।१०,११)।

अत्र तत्पूर्वकमित्येतावदेवानुमानलक्षणमिति न बुध्यामहे, संस्कार-संशयादेरपि प्रत्यक्षादिफलपूर्वकत्वात्। अथ तत्पूर्वकमव्यभिचारादिविशिष्टज्ञानमित्यध्याह्रियते, तथापि प्रत्यक्षागमज्ञानाभ्यां व्यभिचारस्तन्निवृत्त्यर्थमप्यध्याहारान्तरं यद्याश्रीयते, तदा तत्पूर्वकग्रहणं व्यर्थं स्यात्। अध्याहारैरेव लक्षणसिद्धेरिति।

ननु च ते इति विग्रहाश्रयणादेव सर्वव्यभिचारनिवृत्तिः सिद्धा। न ह्यविनाभावदृष्टानुकारिस्मृतिसहितेन लिङ्गज्ञानेन संशयादिज्ञानं प्रत्यक्षागमज्ञानं वा जन्यत इति, न; अप्रक्रान्तत्वात्। न हि प्राक् क्वचिदविनाभावदर्शनलिङ्गदर्शने प्रक्रान्ते येन तयोरेव 'ते' इत्यनेन परामर्शः स्यात्। अप्रक्रान्तस्यापीच्छामात्रेण परामर्शाभ्युपगमे विशिष्टलिङ्गिज्ञानस्यैव परामर्शः स्यात्। ततश्च पूर्वकग्रहणमनर्थकं स्यात्तदित्येतावतैवाध्याहारसहितेनानुमानलक्षणसिद्धेरिति।

## ❀ अन्येषां मतेऽनुमानलक्षणं तन्निरासश्च ❀

अन्ये तु तत्पूर्वकं त्रिविधमनुमानमित्येतावल्लक्षणवाक्यं वर्णयन्ति।

अस्यार्थः—प्रत्यक्षादिप्रमाणपूर्वकं केवलान्वय्यादिलिङ्गत्रयालम्बनं ज्ञानमनुमानमिति, नैतदपि युक्तं; [1]ज्ञानस्यैव प्रमाणत्वानभ्युपगमात्। सर्वं ह्यनुमितिसाधनं ज्ञानमज्ञानञ्चानुमानमिष्यते। किं च संशयादि ज्ञानं जनयदपि तत्पूर्वकं त्रिविधं लिङ्गालम्बनं ज्ञानमनुमानं स्यात्। अध्याहारैरव्याप्त्यतिव्याप्तिनिवृत्तौ तत एव लक्षणसिद्धेरनर्थकं सूत्रं स्यादिति।

## ❀ अपरेषां मतेऽनुमानलक्षणम् ❀

अपरे तु पूर्ववदादिपदानि लक्षणार्थत्वेन वर्णयन्ति किल—पूर्वमुपादानात् पक्षः पूर्वशब्देनोच्यते, सोऽस्त्येव यस्य तत्पूर्ववत् पक्षव्यापकं लिङ्गमुच्यते। शेष इति सपक्षः, उक्तात्पक्षाच्छिष्यमाणत्वादतः शेषवदिति सपक्षवदित्युक्तं भवति।

सामान्यतोदृष्टं विपक्षे इत्यध्याहार्य्यम्। विपक्षे समान्येनादृष्टं विपक्षशब्दाभिधेये सर्वत्रादृष्टमित्यर्थः। चशब्दोऽसत्प्रतिपक्षत्वाबाधितविषयत्वे समुच्चिनोति। एवञ्च पञ्चरूपलिङ्गमुक्तं भवति। केवलव्यतिरेकिकेवलान्वयिनोर्लक्षणं शेषवत्सामान्यतोदृष्टपदयोरन्यतरलोपेन व्याख्येयमिति।

---

१. ज्ञानस्यैवेति। ज्ञानभिन्नमपि अनुमानप्रमाणं भवितुमर्हति, न केवलं ज्ञानमिति भावः।

## ❀ तत्पूर्वकमिति सूत्रस्य स्वाभिमतोऽर्थः ❀

भवत्वेवं कष्टकल्पनया त्रिविधं लिंगलक्षणम्। तथाप्यनुमानलक्षणं प्रस्तुतमनभिधायाप्रस्तुतं लिङ्गलक्षणमेवाभिदधतोऽप्रस्तुताभिधायित्वं स्यात्। न हि लिंगमेवानुमानं, सर्वकरणग्रामस्यानुमितिसाधकस्य अनुमानत्वात्, संशयादिजनकस्य च लिंगस्याननुमानत्वात्। अतीतानागतलिंगज्ञानादप्यनुमितिसंभवादकारणमपि लिङ्गमनुमितेस्तत्कथं लिगलक्षणादेवानुमानलक्षणं सिद्ध्यतीति? तस्मात् त्रिविधमित्यस्य पूर्ववदादिपदानाञ्च प्रागुक्तमेव व्याख्यानं ज्यायः। तत्पूर्वकग्रहणञ्च स्वकीयानुमानभूषणार्थं परकीयानुमानदूषणार्थं चोक्तम्।

## ❀ साङ्ख्यानुमानखण्डनम् ❀

कथमिति? यत्तावत्सांख्यैः [1]गुणपुरुषविषयमनुमानमुक्तं, तन्न युक्तम्; प्रत्यक्षपूर्वकं ह्यनुमानं तैरप्यभ्युपगतं, न च तन्मते प्रत्यक्षं प्रमाणमुपपद्यते। केशोण्डुकादिज्ञानवदलीकार्थविषयत्वेन भ्रान्तत्वात्। तथा च तैरुक्तं—

गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम्॥ इति।

एवञ्च [2]मायाधूमादिदर्शनपूर्वकानुमानवदलीकविकारदर्शनपूर्वकं प्रधानाद्यनुमानमप्रमाणमेव।

## ❀ अद्वैत्यनुमाननिरासः ❀

अद्वैतवादिनामप्यद्वैतविषयावनुमानागमावन्वयादिग्राहकस्य प्रत्यक्षस्याप्रमाणत्वेनायुक्तौ प्रमाणत्वेऽपि तेनैव बाधिताविति। न च ताभ्यां प्रत्यक्षं बाध्यते यतस्तत्पूर्वकं तयोः सत्त्वमित्येवं योज्यम्।

---

१. गुणम् = प्रधानम्, तद्विषयमनुमानमुक्तम्—
"सौक्ष्म्यात् तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः" (सां० का० ८)
इत्यत्र। पुरुषः = चेतन आत्मा। तद्विषयमनुमानम्—
संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥ (सां० का० १७)

२. मायाधूमः = ऐन्द्रजालिकनिर्मितो धूमः।

## ❀ चार्वाकमतनिरासः ❀

येपि प्रत्यक्षमेवैकं प्रमाणमित्याहुस्तैरपि स्वार्थं परार्थञ्च हिताहितप्राप्तिपरिहारानुष्ठानमभ्युपगच्छद्भिस्तद्धेतुसाधनसामर्थ्यनिश्चयो न प्रत्यक्षात्सम्भवति, इत्यतस्तत्पूर्वकमनुमानमवश्यमभ्युपगन्तव्यमतोऽविनाभावसम्बन्धस्य ग्रहीतुमशक्यत्वादित्याद्यनुपपन्नमिति ।

## ❀ सौगतानुमानलक्षणनिरासः ❀

शाक्यानामपि तत्पूर्वकमनुमानं न प्राप्नोतीति योज्यम् । सादृश्यज्ञानस्य प्रत्यक्षतोऽसंभवात् , तदसंभवे त्रैरूप्यासंभवात्कथमनुमानं प्रवर्तते ? [1]त्रैरूप्याल्लिंगतोऽर्थदृगनुमानमित्येव हि तल्लक्षणमाहुः । त्रैरूप्यस्य चात्यन्तविलक्षणवस्तुमात्रग्राहिणः प्रत्यक्षान्निश्चयो न संभवतीति कथमनिश्चितात् ततोऽसत्कल्पादर्थदृगनुमानम् ? भ्रान्तितस्त्रैरूप्यग्रहणमित्येतदप्यन्वचेष्टितं, मिथ्यानुमानप्रसंगात् । न हि लोके भ्रान्तितस्त्रिरूपधूमावधारणादर्थक्रियासमर्थदहनानुमानं दृष्टम् ।

अथानुमानेनैव त्रैरूप्यं गृह्यते, नैतदस्ति; त्रैरूप्यग्राहकानुमानस्यापि त्रैरूप्यग्रहणापेक्षितत्वात् । तत्राप्यनुमानान्तराभ्युपगमे त्रैरूप्यग्राहकानुमानानवस्थानादभिमतानुमेयाप्रतिपत्तिरेव स्यात् । अयमेव हि सूत्रकाराभिप्रायोऽन्यैरपि प्रकटितः । तदुक्तम्—

[2]लिङ्गलिङ्ग्यनुमानानामानन्त्यादेकलिङ्गिनि ।
गतिर्युगसहस्रेषु बहुष्वपि न जायते ॥ इति ।

एतच्च दूषणमस्माकं संप्लवं सम्बन्धसादृश्यादेः प्रत्यक्षविषयत्वं चाभ्युपगच्छता भूषणमेवेत्याह—तत्पूर्वकमनुमानमिति ।

---

१. "त्रैरूप्यं पुनर्लिङ्गस्यानुमेये सत्त्वमेव, सपक्षे एव सत्त्वम्, असपक्षे चासत्त्वमेव निश्चितम्" ( न्या० बि० २।५ ) ।

२. श्लो० वा० अनु० १५३ । सामान्यमेव लिङ्गं भवति, न तु विशेषः; तत्रानुगमाभावात् । सामान्यात्मकं लिङ्गं ज्ञातमेवार्थक्रियाकारि भवति । तज्ज्ञानं शाक्यमते प्रत्यक्षेण न भवति, अतोऽनुमानेनापरेण साधनीयम्, तस्य लिङ्गं पुनरनुमानान्तरेण, तस्यानुमानान्तरेणेत्यनवस्थानाद् आद्यलिङ्गस्य गतिः = ज्ञानं युगसहस्रेणापि न सम्भवतीति भावः ।

सम्यगविनाभावेन परोक्षानुभवसाधनम् अनुमानम् ।

---

ननु भवतोऽप्यनुमानागमपूर्वकानुमानाभ्युपगमात्कथं न तद् दूषणम्? न; तस्यापि पारम्पर्येण प्रत्यक्षपूर्वकत्वाभ्युपगमात् । व्यवहितकारणेऽपि तत्पूर्वकत्वव्यवहारो दृश्यते, यथा वृष्टिपूर्विका सस्यसम्पत्तिरिति ।

## ❀ प्रत्यक्षस्य नानुमानेऽन्तर्भावः ❀

अन्ये तु प्रत्यक्षस्यापि अनुमानेऽन्तर्भावमिच्छन्ति । तन्निषेधकहेतुसूचनार्थं चोक्तम्—तत्पूर्वकमनुमानमिति । तथा च परीक्षायां [1]"प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः" इति पूर्वपक्षं कृत्वा [2]"न प्रत्यक्षेण यावत् तावदप्युपलम्भात्" नानुमानप्रसंगः, तत्पूर्वकत्वादिति प्रतिसमाधानमुक्तमिति । तस्मादन्यार्थं तत्पूर्वकग्रहणमपीति ।

## ❀ अनुमानपदादेव तल्लक्षणम् ❀

यदि तत्पूर्वकग्रहणमपि न लक्षणार्थं किमिदानीं तर्हि अनुमानलक्षणार्थं सूत्रम्? अनुमानपदमेव सव्युत्पत्तिकं लक्षणार्थं, यथा—"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" (न्या० सू० १।१।३) इत्यत्र प्रमाणपदमेव व्युत्पत्तिसव्यपेक्षं लक्षणार्थत्वेन सर्वव्याख्यातृभिरिष्टम्—प्रमीयतेऽनेनेति प्रमासाधनं प्रमाणमित्युक्तं भवति । तथानुमीयतेऽनेनेति=अनुमितिः क्रियते येन तदनुमानमिति लभ्यते ।

## ❀ अनुमितिलक्षणम् ❀

का पुनरियमनुमितिः? "सम्यगविनाभावेन परोक्षानुभवः" । अविनाभावेनेति व्याप्तिस्मरणेनेत्युक्तं भवति, विषयशब्देन विषयिणोभिधानात् । यथा सौराष्ट्रदेशो भग्न इति । अविनाभावेनेति साधकतमार्थे तृतीया । यद्यप्यन्तःकरणादेरप्यनुमितिसाधनत्वमस्ति, तथापि यवाङ्कुरवदसाधारणनिर्देशोऽयम् । अत एवाविनाभावस्यैव स्मरणस्यैव वानुमानत्वं नोक्तम्, किन्तु तेनासाधारण-

---

१. न्या० सू० २।१।३० । यत्तावदयं वृक्ष इति ज्ञानं प्रत्यक्षमुक्तं, तदनुमानमेव, वृक्षैकदेशग्रहणलिङ्गजन्यत्वादिति तदर्थः ।

२. न्या० सू० २।१।३१ प्रत्यक्षमनुमानं न भवति, एकदेशोपलम्भस्य प्रत्यक्षरूपत्वादिति तदर्थः ।

भूतेन यः परोक्षानुभवो जन्यते तस्य साधनं करणं सर्वमेवानुमानमिष्यत इत्येतदर्थं सम्यगविनाभावजन्यमित्येवं लक्षणं कृतम्। अविनाभावस्मृतिमतोऽपि कस्यचित्कुतश्चिन्निमित्ताद् विपर्ययः संशयो वा भवति, यथा लौकायितकस्य, तन्निवृत्त्यर्थं सम्यगित्युक्तम्।

## ❀ भ्रान्तमनुमानज्ञानमिति शाक्यमतम् ❀

अथवा अनुमेयज्ञानं [1]भ्रान्तमेवेत्याहुः शाक्याः। तदुक्तम्—"भ्रान्तिरप्यर्थसम्बन्धादिति" तस्य निषेधार्थं सम्यग्ग्रहणम्। न खलु भ्रान्तेः प्रमाणत्वं युक्तम्, भ्रान्तित्वात्, केशादिभ्रान्तिवदिति।

नन्वेवं सति ज्ञानत्वाद् द्विचन्द्रादिज्ञानवत्सर्वज्ञानानामप्रमाणत्वप्रसंगः। स त्वनिष्टः, तस्माद् यथा ज्ञानत्वाविशेषेऽपि न सर्वं प्रमाणम्। किन्तु [2]अविसंवाद्येव ज्ञानम्। तथा भ्रान्तिरप्याविसंवादिनी प्रमाणमिति, न; विरुद्धत्वात्। यदि भ्रान्तिः, कथमविसंवादिनी? व्यभिचाराभावो ह्यविसंवादार्थः। संवादश्चेदस्ति लिङ्गिज्ञानस्य। ततोऽस्याव्यभिचारित्वादभ्रान्तत्वमेव, कथं भ्रान्तत्वम्? ननु चातस्मिंस्तद्ग्रहो भ्रान्तिरित्युच्यते। तद्रूपञ्च लिङ्गिज्ञानस्याप्यस्ति, [2]स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवर्तनात्। भ्रान्तस्याप्यव्यवसितार्थाव्यभिचारादविसंवादित्वमस्ति तेनास्य प्रमाणत्वमिष्टम्। पारम्पर्येण वस्तुप्रतिबन्धादस्यैव यथाध्यवसितार्थावञ्चकत्वं, न लिङ्गाभासजभ्रान्तेरपीति।

तदुक्तम्—

[3]लिङ्गलिङ्गिधियोरेव पारम्पर्य्येण वस्तुनि।
प्रतिबन्धात् तदाभासशून्ययोरप्यवञ्चनम्॥
तयोस्तद्रूपशून्ययोस्तद्रूपाध्यवसायतः।
तद्रूपाऽवञ्चकत्वेऽपि कृता भ्रान्तिव्यवस्थितिः॥

(प्र० वा० ३८२,८३)

---

१. न्या० बिं० पृ० ४७।

२. तथा चाह—"भ्रान्तं ह्यनुमानं, स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तत्वात्" (धर्मो० पृ० ४७)।

३. प्र० वा० ३८।२–३ द्वितीयपद्यस्य पूर्वार्धानुपूर्वी तु—तद्रूपाध्यवसायाच्च तयोस्तद्रूपशून्ययोः।

[1]मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥
यथा तथाऽयथार्थत्वेऽप्यनुमानतदाभयोः ।
अर्थक्रियानुरोधेन प्रमाणत्वं व्यवस्थितम् ॥ इति ।

यत्तावदतस्मिँस्तद्ग्रहो भ्रान्तिरिति, सत्यम्; भवत्येवं भ्रान्ति र्नत्वनुमेयाग्निज्ञानस्यैव तद्रूपमस्ति । यस्त्वत्र भ्रान्तित्वे साधनमुक्तम्—"स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवर्तनाद्" इति, तन्न; असिद्धत्वात् । अग्नावेवाग्न्यध्यवसायो न तु स्वप्रतिभासेऽनर्थ इति ।

नन्वनुमेयाग्निज्ञाने सामान्याकारः प्रतिभासते । न च स एवाग्निः, तस्य प्रत्यक्षेणान्यथा ग्रहणात् । विशिष्टाकारस्यैव चार्थक्रियाकारित्वात्परमार्थसत्त्वं तदर्थमेवार्थक्रियार्थिनः प्रवर्तन्ते । तेनानर्थावभासनेऽप्यर्थाध्यवसायेन प्रवृत्तिरिति, तदप्यसत्; न खलु सामान्याकारमात्रं प्रतिभाति अनुमेयज्ञाने, किं तर्हि ? सामान्यविशिष्टोऽग्न्यादिरर्थ एव । तथा च—'अयं मयानुमानेनावगतः' इत्युत्तरत्राऽप्यव्यभिचारिणी प्रतिपत्तिः । एकविषयत्वादेकाकारप्रतिपत्तिप्रसंग[2] इति चेत्, न; करणभेदादेव प्रतिभासविलक्षणोपपत्तेरिति वक्ष्यामः ।

निरुद्धेऽप्यनुमेयेऽनुमेयप्रतिभासस्यानिरोधान्न वस्तुविषयत्वमिति चेत्, न; योगिज्ञानस्य वस्तुनिरोधेऽप्युत्पद्यमानस्य तद्ग्राहित्वाऽभ्रान्तत्वाभ्युपगमात् । न भ्रान्तमनुमेयज्ञानम्, अविसंवादित्वात्, प्रत्यक्षज्ञानवदिति । स्वसंवेदनादन्यत् प्रत्यक्षमपि भ्रान्तमेवेति चेत्, न; लोकव्यवहारविरोधात्, [3]स्वशास्त्रविरोधाच्च । किं च स्वसंवेदनवत् सर्वप्रमाणज्ञानानामभ्रान्तत्वं न वा स्वसंवेदनस्याप्यभ्रान्तत्वं विशेषाभावादिति । तदप्युक्तम्—"लिङ्गलिङ्गिधियोरित्यादि ।

## ❀ तन्निराकरणम् ❀

तत्रेदं वक्तव्यम्—किं लिङ्गलिङ्गिनोरेव प्रतिबन्धस्तदर्थावञ्चकत्वे हेतुः, आहोस्वित्ताभ्यां सह तद्धियोरिति ? प्राच्ये विकल्पे विवादो नास्ति, अविना-

---

१. प्र० वा० ३।५७,५८ ।

२. एकाकारप्रतिपत्तिप्रसङ्गः = प्रत्यक्षानुमितिप्रतीत्योरविशेषप्रसङ्ग इत्यर्थः ।

३. स्वशास्त्रविरोधात् = सौत्रान्तिकप्रस्थानविरोधात् ।

भावसम्बन्धाभ्युपगमात्। स किं तादात्म्यतदुत्पत्तिभ्यां नियतोऽथान्यथापीत्येतदुत्तरत्र विचारयिष्यामः।

पारम्पर्य्येणेति न वक्तव्यम्, साक्षादेव लिङ्गलिङ्गिनोरविनाभावसम्बन्धाभ्युपगमात्। अथ ताभ्यां तद्धियोः पारम्पर्य्येण प्रतिबन्धात्तदर्थावन्धकत्वम्। मृत्युनाशाद्यनागतार्थेन सह तद्धियः प्रतिबन्धाभावेऽपि तदर्थावन्धकत्वादिति वक्ष्यामः।

यदप्युक्तम्—तयोस्तद्रूपशून्ययोरित्यादि, तदयुक्तम्; प्रत्यक्षज्ञानानामपि नीलाद्यर्थाकारशून्यानां तदर्थाध्यवसायेन प्रवर्तकानां भ्रान्तत्वप्रसंगात्। न हि कस्यचिदपि ज्ञानस्यार्थरूपतास्तीति प्रागेव प्रपञ्चितम्। तन्नाध्यवसितार्थाव्यभिचारिणो विज्ञानस्यार्थाकारशून्यत्वेऽपि भ्रान्तत्वमिति। भ्रान्तत्वे हि कदाचित् कस्यचिदवश्यं विसंवादः स्यादिति।

यच्चात्रोक्तम्—मणिप्रदीपप्रभयोरित्यादि, तदप्यसाधीयः; तथा हि—प्रवृत्त्युत्तरकालं मणिप्रभायां मणिज्ञानमुत्पन्नं न मणावित्येव तस्यान्यस्य वा विचारकस्य बाधा भवति वा, न वा? यदि न भवति, कथं प्रभाविषयत्वं तस्य व्यवस्थाप्यते? मणिविषयमेव तत्तदव्यभिचारि, मणिज्ञानत्वात्, करस्थमणिज्ञानवदिति। अथ बाधा भवति, तथा सति तन्मणिज्ञानं प्रमाणमेव न भवति, बाधितार्थत्वात्, केशादिभ्रान्तिवत्। [1]प्रवर्तकत्वं च स्मृतिसंशयविपर्य्ययाणामप्यस्ति न च प्रमाणत्वमिति।

यच्चोक्तम्—अर्थक्रियानुरोधेन व्यवस्थितमिति, तदप्यसारम्; यतः स्मृतिसंशयविपर्ययाणां प्रवृत्तिं जनयतां क्वचिदभिमतार्थप्रापकत्वमस्ति, न च प्रमाणत्वमित्यनैकान्तः। अथ तेषां तद्देशाकारादिव्यभिचारादर्थप्रापकत्वं नास्ति, तेनाप्रमाणत्वमिति; न तर्हि मणिज्ञानमुदाहरणीयम्। न हि कुञ्चिकाविवरनिःसृतायां प्रभायामुत्पन्नं मणिज्ञानं तद्देशस्थं मणिं प्रापयति। न चाप्रमाणज्ञानेनोदाहृतेनापि विवादविषयस्य ज्ञानस्य प्रमाणत्वं सिद्ध्यति, अतिप्रसंगात्। अर्थमिथ्याज्ञानाविशेषेऽपि विशेषस्तावदस्तीत्येतावदर्थमुदाहरणम्।

ततः किं विशेषमात्रस्य सिद्धत्वात्। अथ यथा मिथ्यात्वाविशेषेऽप्ययं विशेषः सिद्धस्तद्वदयथार्थत्वाविशेषेऽपि प्रमाणत्वाप्रमाणत्वविशेषोऽपि स्यादिति,

---

१. मणिप्रभायां मणिज्ञानं, प्रमाणं, प्रवर्तकत्वादिति चेत्, तदाप्याह—प्रवर्तकत्वं चेति।

न; दृष्टान्तमात्रादर्थसिद्ध्यसंभवात्। अथापि स्यात्, तदेतदपि स्यात्। यथा-सम्यक्त्वाविशेषेऽपि मुमूर्षार्थामुमूर्षार्थसन्तानोत्पन्नज्ञानयोरेकस्याभिमतदाहाद्यर्थ-क्रियाक्षमार्थप्रापकत्वं नास्त्यपरस्यास्तीत्ययं विशेषः, तद्वद्यथार्थत्वाविशेषेऽपि किञ्चित् प्रमाणं किञ्चिदप्रमाणमित्येषोऽपि विशेषस्त्वयाभ्युपगन्तव्य इति।

यथार्थज्ञानस्य कस्यचिदपि विसंवादाभावादप्रमाणत्वाभ्युपगमो न युक्त इति चेत्, नन्वेवमयथार्थज्ञानस्य कस्यचिदपि संवादाभावात् प्रमाणत्वं नाभ्युपगन्तव्यम्। संवादिज्ञानस्याप्ययथार्थत्वविरोधादयथार्थत्वावगमस्यैव विसंवादरूपत्वात्। अप्रमाणज्ञानादर्थप्राप्तिः कथमिति चेत्, नन्वप्रमाणा-दप्यर्थित्वेन प्रवर्तमानो यद्यस्ति तत्रार्थस्तदा तमवश्यं प्राप्नोतीत्युक्तम्। तत्, न; अर्थक्रियानुरोधेनैव प्रमाणत्वं व्यवस्थाप्यते। तदा मुमूर्षार्थज्ञानस्याशक्य-प्राप्त्यर्थज्ञानस्य चानर्थिपुरुषज्ञानं स्यात्। अपि च सार्थक्रियाप्रमाणेनानव-गता सती स्वयमसत्कल्पा न पूर्वज्ञानस्यापि प्रमाणत्वव्यवस्थापिका। प्रमाणेन चेदवगता नत्वेवं सति तस्याप्यर्थक्रियाज्ञानस्यान्येनार्थक्रियाज्ञानेन प्रमाणत्वं व्यवस्थापयितव्यं तस्याप्यनेनेत्यनवस्थेति। अत्राह[1]—

उत्तरार्थक्रियाभावात्पूर्वस्य यदि मानता।
तदैवार्थक्रियाभावादुत्तरस्य कथं न सा॥ ४॥

यस्यार्थक्रियोपरोधेन पूर्वस्यापि मानता व्यवतिष्ठते तस्य तदैवार्थक्रिया भवन्ती सुतरां मानतां व्यवस्थापयति, अर्थक्रियास्थितिरविसंवादनमिति [2]सामान्येनाभिधानादिति। तदयुक्तम्, यस्मान्नार्थक्रियामात्रं प्रमाणत्वसाधकं,

---

१. पूर्वोक्तामनवस्थां परिहरन्नाह प्रज्ञाकरः—"यद्यर्थक्रियाधिगमे पूर्वकं प्रमाणं, सोऽप्यर्थक्रियाधिगमः प्रमाणमप्रमाणं वा? अप्रमाणेनार्थक्रियाधिगमाभावात्, प्रमाणं तत्। ततस्ततोऽप्यर्थक्रियाधिगमः परान्वेषणीय इत्यनवस्था। नेदं साधीयः,

उत्तरार्थक्रियाभावात् पूर्वस्य यदि मानता।
तदैवार्थक्रियाभावाद् उत्तरस्य कथं न सा॥ (प्र० वा० अ० पृ० ४)

पूर्वस्य = प्रथमज्ञानस्य, कथन्न सा = कथं न प्रमाणता।

२. अर्थाद् यत्कीर्तनं कीर्तेः—"अर्थक्रियास्थितिरविसंवादनम्" (प्र० वा० २।१) इति। तत्सामान्यं ज्ञानमुद्दिश्य, न तु पूर्वमुत्तरं वा विशेषमुद्दिश्येति। तथैव व्याख्यातवान् प्रज्ञाकरः—अर्थक्रियास्थितिरविसंवादनमिति सामान्येनाभिधानात् (प्र० वा० अ० पृ० ४)।

स्वप्नेन्द्रजालादिज्ञानेष्वपि संभवात् । किन्त्वर्थक्रियास्थितिरविसंवादनमिति त्वयोक्तम् । अर्थक्रियायाश्च स्थितिरविचलनं व्यवस्था वेति [1]त्वयैव व्याख्यानं कृतम् । ततश्चाविचलितत्वमर्थक्रियाया नार्थक्रियोपलम्भमात्रादेव सिद्ध्यति, स्वप्नादिष्वप्यर्थक्रियोपलम्भमात्रस्य भावात् ।

अर्थक्रियास्वरूपमेवाविचलितत्वं ततस्तद्वेदने तत्स्वरूपं कथन्न विदितमिति चेत्, एवं तर्हि पूर्वार्थज्ञानस्यापि स्वरूपमेवाविसंवादित्वम् । तच्च तद्वेदनादेव विदितमित्यनर्थकं तत्परीक्षणम् । विदितेऽपि तत्स्वरूपे खलु विसंवादिज्ञान-सादृश्याद् भ्रमः सन्देहो वा जायते तन्निवृत्त्यर्थं परीक्षणमिति चेत्, अवि-चलितस्वरूपवेदनेऽपि तर्हि विचलितस्वरूपवेदनेऽपि तर्हि विचलितार्थ-क्रियाज्ञानसादृश्याद् भ्रमः सन्देहो वा भवत्येव इत्यतस्तन्निवृत्तयेऽपि परीक्षणं कर्तव्यमिति ।

## ※ प्रामाण्यं व्यवहारेणेति बौद्धमतम् ※

न कर्तव्यम्, कस्मात्? यस्मादाह—[2]"प्रामाण्यं व्यवहारेण शास्त्रं मोहनिवर्त्तनमिति" । न खलु सुशिक्षितोऽपि कश्चित्प्रमाणेन प्रामाण्यं साधयितुं शक्तः, तथा हि—प्रत्यक्षं तावत्स्वरूपमात्रवेदनान्नात्मनः प्रामाण्यं वेत्ति । न हि ज्ञानस्वरूपमात्रवेदने प्रमाणमिदमिति । भवति [3]"स्वतो हि स्वरूपस्यैव गतिर्न पररूपस्य, साक्षाद्गति र्हि प्रत्यक्षं साक्षात्करणञ्च स्वरूपस्य न पररूपस्य प्राप्तिकालविशेषणस्य प्रमाणता च प्राप्यपदार्थाव्यभिचारिता । न च प्राप्य-पदार्थाग्रहणे तत्सम्बन्धग्रहणम् । न च तथानवसीयमानं प्रमाणमित्यवसितं भवति । पुरोवर्तिरूपासंगिता च सर्वज्ञानानामविशिष्टा । न तया भाविरूप-सम्बन्धपरिग्रहः । नापि भाविनार्थक्रियाज्ञानेन पूर्वरूपसम्बन्धपरिग्रहस्ततः स्वरूपसंवेदनात्मत्वान्न प्रत्येकं सम्बन्धपरिग्रहो, नापि समुदायसंभवः, क्रमेण [5]साधनार्थक्रियाज्ञानयोर्भावात् । तदुत्तरकालभावि तु स्मरणं यथानुभवं

---

१. त्वया = प्रज्ञाकरेण, तथा चोक्तम्—"अर्थस्य दाहपाकादेः क्रियानिष्पत्तिः, तस्याः स्थितिरविचलमविसंवादनं व्यवस्था वा" ( प्र० वा० अ० पृ० ४ ) ।

२. प्र० वा० २।६ ।

३. स्वत इत्यारभ्यानुमानस्य चानवतारादित्यन्ता पाठानुपूर्वी प्रज्ञाकरालङ्कारस्य ( प्र० वा० अ० पृ० २५–२६ ) ।

४. प्राप्तिकालविशेषणस्य = अर्थप्राप्तिकालविशिष्टस्य ।

५. साधनम् = अर्थः । अर्थज्ञानस्यार्थक्रियाज्ञानस्य च क्रमभावित्वादित्यर्थः ।

प्रवर्तमानमसम्बद्धमेव द्वयं विकल्पयति । यथानुभवपरित्यागात्तु तदुपप्लुतमेवेति न ततः सम्बन्धप्रतिपत्तिः । ततस्तत्सम्बन्धाग्रहणात् पश्चादपि दृष्टसाधर्म्यात् कथं प्रतिपत्तिरनुमानादिति न प्रामाण्यप्रतिपत्त्युपाय इति । स्वरूपस्यैव स्वतो गतिर्न प्रामाण्यस्य । अथ प्रामाण्यं स्वरूपमेव, भावप्रत्ययवाच्यस्य ततोऽव्यतिरेकात् । तदयुक्तम् ;

ज्ञानस्वरूपं प्रामाण्यं प्राप्यरूपसमन्वयि ।
स्वरूपमात्रग्रहणे तदग्राह्यमितीरितम् ॥१६७॥

न हि ज्ञानस्वरूपमेव प्रामाण्यं, प्राप्यस्वरूपसम्बन्धेन [1]तत्त्वव्यवस्थापनात् । तस्य चाग्रहणमिति प्रतिपादितमेव । ततोऽप्रवृत्तिनिवृत्तिकं स्वस्वरूपसंवेदनमात्रमेव, न भेदवादावतारः । तस्मान्न प्रेक्षावद्भिः क्वचित्परिवर्तितव्यं निवर्तितव्यं वा कुतश्चित् ।

कथं तर्हि प्रामाण्यमप्रामाण्यतो निवृत्तं व्यवस्थाप्यते ? "प्रामाण्यं व्यवहारेण" सांव्यवहारिकमेतदिति प्रतिपादितम् । संव्यवहारश्च विचार्यमाणो विशीर्यत एव । तत्र यद्येतावता परितोषस्तदा न किञ्चित्कर्तव्यमिति । मुक्तिरेव संसारात्, तस्य चात्यन्तमसद्भावात् । अथ व्यवहारप्रसिद्धः संसारस्तथा सति प्रमाणेतरविभागोऽप्यस्त्येवेति न प्रमाणत्वप्रतिपादनाय यत्न आस्थेयः ।

किञ्च सांव्यवहारिकं प्रामाण्यं प्रतिपादयता परमार्थत एकमेव स्वसंवेदनं प्रत्यक्षमित्युक्तं भवति ।...तस्माद् व्यवहारमात्रप्रसिद्धानुमानाश्रयेण प्रसिद्धं सम्बन्धमाश्रित्य तदेतदर्थक्रियासाधनमिति दर्शनेन [2]स्पर्शादिसाधनस्य प्रतिपत्तौ प्रवर्तते । पश्चादभ्यासानुमानमन्तरेणापि प्रतिभासमात्रादेव प्रवृत्तिरिति प्रत्यक्षमपि प्रवर्तकत्वात् प्रमाणम् । तत्र उच्यते—"प्रामाण्यं व्यवहारेणेति ।" ननु दर्शनेन रूपमेवोपलभ्यते न स्पृश्यं तथा वर्तमानमेव न भावि प्राप्यम् । तथा स्वदृश्यमेव न परदृश्यमपि । तत् कथमन्यदर्शनेऽन्यप्राप्त्या प्रमाणम् ? उक्तमत्र "स्वरूपस्य स्वतो गतिरिति" ।

किञ्च—

व्यवहारत एकत्वात्प्रमाणत्वव्यवस्थितिः ।
देशाद्यभेदादेकत्वं द्रव्यस्य व्यपदिश्यते ॥१६८॥

---

१. तत्त्वव्यवस्थापनात्=प्रामाण्यव्यवस्थापनात् ।

२. स्पर्शस्थाने स्पृश्येति पाठोऽलङ्कारे लभ्यते ।

उक्तमेतत्—प्रामाण्यं व्यवहारेणेति। ततो व्यवहारप्रसिद्धमवयविन एकत्वं समाश्रित्य यदेव दृष्टं तदेव प्राप्तमिति व्यवसायात् प्रमाणताव्यवहारः। स चैकत्वाध्यवसायो देशकालाद्यभेदात्, तदभेदोऽपि तत्समर्थसामग्रीजननात्। एवं भाविभूतयोरपि तदेकसन्तानपतितत्वेन समानार्थक्रियातश्चैकत्वाभिमानः। ततः प्रवृत्तिस्ततोऽर्थक्रियासिद्धौ प्रमाणत्वव्यवस्थितिः। तस्माद् व्यवहारेणैव प्रमाणत्वव्यवस्थितिरिति।" (प्र० वा० अ० पृ० २६)

"यदि तर्हि व्यवहारेण प्रामाण्यं, प्रमाणलक्षणशास्त्रं किमर्थम्? शास्त्र-निर्दिष्टमपि न वचनमात्रात्तथा भवति, अपि तु व्यवहाराविसंवादादेव, स चेदस्ति व्यर्थं शास्त्रमित्याह "शास्त्रं मोहनिवर्तनम्।" यदि व्यवहारतः प्रमाणस्वरूपमवगम्यते; कस्मात्परस्परविरोधीनि लक्षणशास्त्राणि? ततो व्यवहारेऽपि विमतिरेव व्यवहारिणाम्। तथा हि—

न सर्वो व्यवहारेण प्रामाण्यमवगच्छति।
प्रमाणलक्षणं तेन परस्परविरोधवत्॥ १९॥
प्रत्यक्षादिप्रमाणेन परलोको न गम्यते।
आगमादपरः प्राहेत्यतो न व्यवहारतः॥ २०॥ तस्मात्—
[1]व्यवहारपरामर्शाच्छास्त्रं मोहनिवर्त्तनम्।
[2]पूर्वापरस्यास्मरणं शास्त्रेणानेन वार्यते॥ २१॥

अत एव शास्त्रेणैव सर्वज्ञोक्तेन मोहो निवर्त्त्यते, नान्येन—इत्यनेन प्रकारेण सर्वज्ञवचनमेव प्रमाणमिति परमार्थतः, सर्वज्ञज्ञानमेव प्रमाणं नापरमिति परमार्थः।

अन्यस्य न प्रमाणत्वं प्रमेयाव्याप्तिसंभवात्।
अव्यापिना न कार्य्यादिसम्बन्धस्य परिग्रहः॥ २२॥

कार्य्यकारणभावो हि अतीतानागतवर्तमानकालदेशव्यापिसाहचर्यरूपो न खल्वसर्वज्ञज्ञानस्य विषयः। वर्तमानसंन्निहितदेशग्रहणात्प्रत्यक्षस्यानुमानस्य चानवतारादिति[3]।" (प्र० वा० अ० पृ० ३९)

---

१. व्यवहारपरामर्शात् = व्यवहारस्य युक्तायुक्तत्वविचारणात्।

२. पूर्वापरस्यास्मरणम् = पूर्वस्यापरेण, अपरस्य पूर्वेण च अस्मरणम्।

३. अनवतारादिति प्रत्यक्षगृहीतव्याप्तिपूर्वकत्वादिति शेषः।

## ❀ तत्खण्डनम् ❀

अत्रोच्यते—यत्तावत्प्रामाण्यं व्यवहारेणेति । स खलु व्यवहारः प्रमाणम्? अप्रमाणं वा? यदि न प्रमाणं, कथं तेन प्रामाण्यं व्यवस्थाप्यते? न ह्यप्रमाणात् कस्यचिद् व्यवस्थितिः; अतिप्रसंगात्। तथा च सर्वशास्त्राणां प्रामाण्यव्यवस्थितिः, स्थिरादिपदार्थानां व्यवस्थितिश्च प्रसज्यते, व्यवहारमात्रस्य सर्वत्र संभवात्।

अथ प्रमाणभूतेन व्यवहारेण प्रामाण्यं व्यवस्थाप्यते, तदयुक्तम्; प्रमाणद्वयव्यतिरेकेण प्रमाणान्तरस्य त्वयानभ्युपगमात्। तदन्तर्भावेऽपि व्यवहारस्य तद्दूषणेनैव दूषितत्वान्न ततः प्रामाण्यव्यवस्थितिः।

अथाविचारितादेव व्यवहारात्प्रामाण्यव्यवस्थितिः, तथाप्यविचारितव्यवहारमात्रस्य सर्वत्राविशेषादतिप्रसंग इत्युक्तम्। अथ सर्वाविसंवादी यो व्यवहारस्ततः प्रमाणसिद्धिरिति, न; सर्वाविसंवादिव्यवहारासंभवात्, विप्रतिपत्तेश्च सर्वत्र संभवात्।

अथाश्रुतशास्त्राणामपि[1] यत्र प्रामाण्यव्यवहारस्तत् प्रमाणमेवेति। वेदादयस्तर्हि प्रमाणमेव, तेषु प्रामाण्यव्यवहारस्य सर्वलोकप्रसिद्धत्वात्। अथ दृष्टार्थज्ञानानामेव व्यवहारेण प्रामाण्यं, न वेदाद्यर्थज्ञानानामिति, तत्किमिदानीं यूयं लोकायतशरणं गताः? तथा च तद्दूषणमप्यभिधास्यामः। बुद्धादिज्ञानानां[2] प्रामाण्यञ्च न स्यात्। अथेह लोकप्रसिद्धसुखदुःखसाधनाप्तिपरिवर्जननिमित्तानां ज्ञानानां येन[3] निमित्तेन प्रामाण्यं व्यवहर्तृभिर्व्यवह्रियते, तन्निमित्तमन्यत्रापि यत्रोपलभ्यते; तदपि प्रमाणमेवेति, एवं तर्हि यत्रैवासंदिग्धत्वाभ्रान्तत्वमुपलभ्यते तत्रैव व्यवहर्तृभिः प्रामाण्यं व्यवह्रियते, तद्विपर्ययोपलम्भे त्वप्रामाण्यव्यवहारदर्शनात्। तस्मादन्यत्राप्यसंदिग्धाभ्रान्तत्वोपलम्भादेव प्रामाण्यं व्यवसितव्यम्, न त्वर्थक्रियानुरोधान्नापि प्राप्यार्थसंबन्धात्प्रवर्तकाद्वा; मुमूर्षार्थोपेक्षणीयार्थज्ञानेषु प्रमाणेष्वप्यर्थक्रियादीनामसम्भवात्, स्मृतिसन्देहविपर्ययज्ञानेष्वपि भावादित्युक्तम्। असन्दिग्धाभ्रान्तत्वञ्च प्रमाणेन यथावगम्यते, तथा प्रागेवोक्तम्—प्रमाणसामान्यलक्षणविचारे।

---

१. अपिरिहावधारणे।

२. ज्ञानानामिति। अदृष्टार्थकानामिति शेषः।

३. येन = संवादादिना।

यदुक्तम्—'दर्शनेन स्पर्शादिसाधनस्य प्रतिपत्तौ प्रवर्तन्ते पश्चादभ्यासादनुमानमन्तरेणापि प्रतिभासमात्रादेव प्रवृत्तिरिति प्रत्यक्षमपि प्रवर्तकत्वात् प्रमाणम्। तत्र उच्यते—'प्रामाण्यं व्यवहारेणेति।' तदयुक्तम्; अत्यन्ताभ्यासादपि न अन्यद्दृष्टा वा अन्यत्र प्रवृत्तिः संभवति। न ह्यग्निदर्शने तोयार्थी तोयाभिमुखं प्रवर्तमानः क्वचिदुपलभ्यते। तस्मादत्यन्ताभ्यासादाशुभावित्वेनोत्पन्नयोः सम्बन्धस्मृत्यनुमानज्ञानयोः प्रत्यक्षपूर्वकयोस्तद्विवेकताव्यवहार इति, तदप्यसत्; अवयव्येकत्वाप्रतिपत्तावयं मिथ्याभिमानः शाक्यस्य—प्रत्यक्षज्ञानादेव प्रवृत्त इति। यदि च रूपदर्शनादेवादृष्टेऽपि स्पर्शादिसाधने प्रवृत्तिः संभवति, ततो धूमादिदर्शनादेवाग्न्यादिष्वपि प्रवृत्तिरिति ब्रुवाणश्चार्वाकः केन वार्यते ?

## ❀ अवयव्येकत्वस्य व्यवहारमात्रसिद्धत्वनिरासः ❀

यदप्युक्तम्—व्यवहारप्रसिद्धमवयविन एकत्वं समाश्रित्य तदेव दृष्टं तदेव प्राप्तमिति व्यवसायाप्रमाणताव्यवहार इति, तदप्यसत्; अवयव्येकत्वाभ्युपगमे तत्प्रतिषेधविरोध, तदनभ्युपगमे च तदाश्रयेण प्रसिद्धस्य प्रामाण्यव्यवहारस्याप्यनभ्युपगमः प्राप्तः, न हि स्वस्थात्मा कश्चित्स्वप्नेन्द्रजालाद्यर्थे मिथ्यात्वेन प्रतिपद्यमानस्तज्ज्ञानानां तदाश्रयेण प्रामाण्यं प्रतिपद्यते। संव्यवहारमात्रेण प्रामाण्याभ्युपगमो न परमार्थत इति चेत्, तत् किमिदानीं पारमार्थिकं प्रमाणमेव नास्ति। तथा चापारमार्थिकेन प्रमाणेन सिद्धस्यावयव्यादेरिव क्षणिकत्वादेरपि पारमार्थिकत्वं न स्यात्, ततश्च तद्ग्रहोऽनर्थक एव।

अथास्ति किञ्चित् पारमार्थिकं प्रमाणम्, तस्य कुतः सिद्धिः ? न तावत्संव्यवहारेणैव, ततः सिद्धस्य पारमार्थिकत्वविरोधात्। सर्वप्रमाणानां पारमार्थिकत्वप्रसंगो वा। न हि संव्यवहारादेवास्य[1] पारमार्थिकं प्रामाण्यम्, [2]अस्य सांव्यवहारिकमित्ययं विशेषः सिद्ध्यति। नाप्यन्य उपायः प्रामाण्यप्रतिपत्तावस्ति, प्राक् त्वयैव निषिद्धत्वात्। यदि च संव्यवहारः सर्व एव वास्तवः ततस्तत्सिद्धस्य सर्वप्रमाणस्याप्यवास्तवत्वम्, तदवास्तवत्वे च तत्साधितस्य परलोकादेरप्यवास्तवत्वं स्यात्। स्वप्नव्यवहारसिद्धप्रमाणप्रसाधितार्थवत्। परलोकाद्यवास्तवत्वे त्वनर्थकमेव शास्त्रमिति।

तस्मात् संव्यवहारश्च विचार्यमाणो विशीर्यते—इत्येतदपि मिथ्याविचारा-

---

१. अस्य = क्षणिकत्वादेः।
२. अस्य = अवयव्यादेः।

भासस्यैव विचारत्वारोपणात्। विचारो हि प्रमाणमुच्यते न च मूलघातिनः प्रमाणत्वं युक्तमिति।

## ❀ सौगतसम्मतप्रामाण्यप्रकारानुवादः ❀

यदप्युदीरितम्—प्रमाणता च प्राप्यार्थाव्यभिचारिता इत्यादि, तदयुक्तम्; यस्मादस्थायिप्रदीपाद्यर्थज्ञाने प्रवृत्तः तदर्थाप्राप्तावपि [1]तच्चिह्नदर्शनेन तज्ज्ञानस्य प्रामाण्यमेव व्यवहरति सर्वोऽपि बुद्धिमानिति।

ननु च यद्यसावर्थो न प्राप्यते, अर्थक्रियाञ्च न करोति, तदा प्रेक्षावतोऽर्थक्रियार्थिनः प्रवृत्तिरेव न स्यादभिमतार्थस्याऽनिश्चितत्वात्। सन्देहेन प्रवृत्तौ तु न तस्य प्रामाण्यं, सन्देहस्याप्रमाणत्वात्। [2]"अथैवमुच्यते—

उपेये नाम सन्देहस्तावता न प्रमाणता।
निश्चितत्वादुपायस्य प्रमासौ किन्न तावता॥ २०१॥

न खलूपेयसन्देहपरिजिहीर्षा, सर्वत्रोपायनिश्चयमात्रेण प्रवृत्तेः। तत उपायनिश्चये सति कृषीवलादिवत् प्रामाणिकाः प्रवर्तन्ताम्, तदसत्; यतः—

उपेयार्थितया सर्वः प्रवर्तनिवर्तने।
करोति पुरुषः तस्य सन्देहश्चेत्कथं प्रमा॥ २०२॥

यदर्थमिष्यते प्रमाणम्, तत्रोपेये सन्देहात् प्रमाणमिति कैषा वाचोयुक्तिः? ननु प्रमाणेनार्थो ज्ञापयितव्यो न त्वर्थक्रिया कर्तव्या। अर्थक्रिया हि कुतश्चित्सामग्रीविशेषात् पश्चाद् भवन्ती कथं ज्ञापयितुं शक्या, तदप्यसत्;

यदर्थं एष प्रारम्भस्तदनिष्पत्तिरेव चेद्।
[3]असिद्धसाध्यसम्बन्धः कथं साधक उच्यताम्॥ २०३॥

अमुतः प्रमाणादभिमतार्थसिद्धिमासादयेयमिति प्रमाणतान्वेषणपरः प्रेक्षावान्

---

१. तच्चिह्नदर्शनेन = प्रदीपचिह्नाञ्जनादिदर्शनेन।

२. अथैवमुच्यते इत्यारभ्याप्रमाणमेवेत्यन्तः खण्डलकः प्रज्ञाकरस्य (प्र० वा० अ० पृ० २६–२७)। उपेयं कृषिफलादि, उपायः कृषिकर्मादि। उपेये सन्देहे सति उपायज्ञाने सा प्रमाणता न—इति न; अपि त्वस्त्यैवेति पद्यपूर्वार्धस्यार्थः।

३. असिद्धसाध्यसम्बन्धः = न प्रसिद्धः साध्येन सम्बन्धो यस्य सः। मुद्रितेऽलङ्कारे "अप्रसिद्धः साध्यसम्बन्ध" इति पाठः।

नान्यथा, व्यसनमेव त्वन्यथा भवेत्। अर्थश्च प्रकाशितो यदि नार्थक्रियाकारी, कुतस्तस्यानर्थात्तैमिरिकोपलब्धकेशादेर्विशेषः ? अथ कदाचित्तत्रार्थक्रिया भवति, न तिमिरादौ। एवं तर्हि तदर्थी कथं प्रवर्त्तते ? न खलु सन्देहात्प्रवर्त्तमानः प्रमाणात्प्रवृत्तो भवति। प्रमाणं हि निश्चायकं न सन्देहकृत्। अर्थक्रियाकारिणि निश्चयश्चेत्, अर्थक्रियाऽनिश्चये कथं तथा [1]निश्चयः ? अथ तेन प्रमाणेनार्थक्रियासाधनं वस्तु दर्शितम्, अर्थक्रिया तु यदि कुतश्चिद्वैकल्यान्न भवति न प्रमाणस्यासौ दोषः, तदप्ययुक्तम्;

अज्ञापकत्वं मानस्य न दोषो यदि भण्यते।
न तस्यास्त्यपरो दोष इति सर्वं प्रमा भवेत् ॥ २०४ ॥

प्रमीयते येन परिच्छिद्यते समीहितोऽर्थस्तत्प्रमाणम्; न चाज्ञापकस्य परिच्छेदशक्तिरित्यप्रमाणमेवेति।"

## ❀ तन्निरासः ❀

[2]तदेतदनुपपन्नम्। यत् तावत्प्रेक्षावतः प्रवृत्तिर्न स्यादिति, तन्न; प्रेक्षावतोप्यर्थसंशयार्थोहाभ्यामपि प्रवृत्तिसंभवादित्युक्तं [3]पुरस्तात्। ततः[4] प्रवृत्तौ न [5]तस्य प्रामाण्यमित्ययुक्तम्, व्यधिकरणत्वात्। यदि नामार्थक्रियासंदेहज्ञानस्य प्रामाण्यं नास्ति। [6]पूर्वस्यार्थस्वरूपनिश्चयज्ञानस्याप्रमाणत्वे किमायातम् ? एतेनोपेयार्थितयेत्याद्यपि निरस्तम्। न [7]ह्यनयोस्तादात्म्यं येनोपेयसन्देहे पूर्वार्थनिश्चयस्याप्यप्रामाण्यमिति।

यदप्युक्तम्—'यदर्थं एष प्रारम्भ' इत्यादि, तच्च न; योग्यतामात्रपरिच्छेदादेवार्थक्रियार्थिनां तत्साधनेषु प्रवृत्तिदर्शनात्। तन्त्वादिष्विव पटाद्यर्थिनामिति।

अर्थश्च प्रकाशितो यदि नार्थक्रियाकारी कुतस्तस्यानर्थात्तैमिरिकोपलब्धकेशादेर्विशेष इत्यप्ययुक्तम्; तैमिरिकोपलब्धार्थस्य बाधकप्रत्ययेनासत्यत्वात्

---

१. तथा निश्चयः = अर्थक्रियाकारित्वेनार्थस्य निश्चयः।
२. प्रज्ञाकरोदीरितं निराह—तदेतदनुपपन्नमिति।
३. पुरस्तात् = न्यायभूषणस्य २१तमे पृष्ठे।
४. ततः = संशयतः।
५. तस्य = ज्ञानस्य।
६. पूर्वस्य—उपायज्ञानस्य।
७. अनयोः = उपायोपेयज्ञानयोः।

धारणात्। अस्य त्वर्थक्रियानुत्पत्तावपि विशेषान्तरदर्शनेन तथात्वमेवावधार्यत इति कथमविशेषः ?

यत् पुनरेतद् अर्थक्रियानुपलम्भे कथं तत्साधननिश्चय इति, न; प्रागेव निश्चितत्वात्—एवं भूतेष्वेव सत्सु एवंविधं कार्यं भवति नासत्सु इत्येवं प्राग्व्याप्तिनिश्चये सति तथाविधकार्यार्थी तथाविधत्वेनावधारितेषु हेतुषु प्रवर्त्तते प्रेक्षावानपि। आदौ कथमिति चेत्, न; आदेरभावात्, अनादिरयं संसार इति प्रतिपादयिष्यामः।

ननु च नावश्यं हेतवः फलवन्तो भवन्त्यन्तराले [1]प्रतिबन्धवैकल्यदर्शनात्, तत्कथं तथाविधेषु हेतुषु तत्फलार्थिनः प्रेक्षावतः प्रवृत्तिरिति ? न; फलसंभावनातोऽपि प्रवृत्तिसंभवात्। जीवितार्थिनः प्रेक्षावतोऽपि भोजनादिप्रवृत्तिवत्।

न हि प्रेक्षावानपि फलावाप्तिं निश्चित्यैव प्रवर्तितुं शक्तः, शरीरावस्थित्यादि-अनिश्चयेन फलप्राप्तिव्यभिचाराशंकासंभवात्। अप्रवर्तमानस्य च सर्वपुरुषार्थहानिरनर्थश्च स्यादित्यतः प्रेक्षावतोऽप्रेक्षावत्त्वैव भवेदिति। तस्मात् साधनयोग्यतां निश्चित्य तत्प्रतिबन्धवैकल्ये चापश्यन्नेव फलप्राप्तिं संभाव्य प्रवर्तते प्रेक्षावान्, न तन्निश्चयादेवेति।

यदप्यज्ञापकत्वं मानस्य न दोषो यदीत्यादि, तदप्यचारु, स्वविषयज्ञापकत्वात्। सर्वज्ञानानां हि स्वविषयज्ञापकत्वेनैव प्रामाण्यम्। तत्र विषयान्तराज्ञापकत्वेनाऽप्रामाण्यमयुक्तं, न हि रूपज्ञानं स्पर्शमज्ञापयदप्रमाणं युक्तम्। एवं हि सर्वज्ञानानामप्रामाण्यं स्यात्, विषयान्तराज्ञापकत्वाविशेषात्। विषयान्तरञ्च साधनज्ञानस्य तत्फलं तदज्ञापने कथं तस्याप्रामाण्यम् ? फलानिश्चये तत्साधनत्वनिश्चयः कथमिति चेत्, न; प्रागेव निश्चितत्वादित्यादिनोक्तत्वात्। तस्मात् फलावाप्त्यनिश्चयेऽपि प्रवृत्तस्याप्रवृत्तस्य वा साधनस्वरूपज्ञानं विशेषदर्शनव्यवस्थापितप्रामाण्यं नाप्रामाणमित्यतश्च यदुक्तं प्राप्यरूपसम्बन्धेनैव प्रामाण्यव्यवस्थापनमित्येतदप्रमाणकमेव। तथा हि राज्यपत्न्यालङ्कारादयोऽर्था नक्षत्रादयश्च नैव प्राप्तुं शक्यन्ते, नापि प्रेक्षावन्तस्तत्र प्रवर्तन्ते।

अथ च तज्ज्ञानस्य प्रामाण्यं विशेषोपलम्भेनार्थक्रियाऽनिष्पत्त्यैव व्यवस्थाप्यमानं दृष्टम्। तदपलापे चार्थप्राप्त्यापि प्रामाण्यव्यवस्थितिर्न स्याद् व्यवहार-

---

१. वह्न्यादेः प्रतिबन्धः, बीजादेर्वैकल्यम् = वन्ध्यभावः।

स्योभयत्राविशेषादिति । तथोपेक्षणीयार्थज्ञानस्यापि नाऽप्रामाण्यम् । यदि नाम प्रयोजनाभावान्न विचारितं, किमेतावता तन्नास्त्येव ? विवादनिवृत्त्यर्थं वा जिज्ञासुभिः कैश्चिदुपेक्षणीयार्थज्ञानस्य विशेषोपलम्भितः प्रामाण्यं व्यवस्थाप्यमानं दृष्टमेवेति ।

## ❀ उपेक्षणीयज्ञानस्य प्रमाणता ❀

नन्वर्थक्रियार्थी सर्वोऽपि प्रमाणान्वेषणे प्रवर्तते, न व्यसनेन तत्कथमुपेक्षणीयार्थज्ञानमपि प्रमाणमिति ? नैतद्युक्तम्; न हि पुरुषार्थित्वमपेक्ष्य चक्षुरादयः प्रमाणज्ञानं जनयन्ति, किं तर्हि ? सामग्रिसाकल्ये सति अनिच्छतोऽपि पुरुषस्यानर्थकतृणकीटादिविषयमपि प्रमाणज्ञानमुत्पद्यते । अर्थाधिगममात्रे हि प्रमाणस्य व्यापारो, न प्रवृत्त्यादिषु, तेषामभिलाषादिसाध्यत्वात् । अभिलाषाद्यपि अनुमानमित्ययुक्तं, तस्य लिङ्गदर्शनाद्यभावेऽपि भावात् । प्रमाणविचारे तु प्रेक्षावतामर्थित्वेनैव प्रवृत्तिर्न व्यसनेनेति युक्तमेतत्, तथापि प्रमाणलक्षणस्याव्याप्तिदोषनिवृत्त्यर्थमुपेक्षणीयार्थज्ञानमपि प्रेक्षावद्भिः सामान्यतः परीक्षितव्यम, अतिव्याप्तिदोषपरिहारार्थं तदाभासपरीक्षणवत्, मुमुक्षोः शिंशपाद्यनुमानपरीक्षणवच्चेति । यन्नोपादीयते तत्सर्वं हेयमित्यतो नोपेक्षणीयं वस्त्वस्तीति चेत्, तदयुक्तम्, लक्षणभेदेन वस्तुत्रयस्य प्रतीयमानत्वात् । तथा हि—पुरुषार्थबुद्ध्या तत्साधनबुद्ध्या वा यत्स्वीक्रियते, तदुपादेयम् । यत्त्वनर्थबुद्ध्या, तत्साधनबुद्ध्या वा यत्नतः परिहर्तुमिष्यते, तद्धेयम् । तत्र तु पुरुषार्थानर्थबुद्धिस्तत्साधनबुद्धिश्च न भवति, तदुपेक्षणीयमिति । तस्मादुपेक्षणीयार्थज्ञानस्यापि प्रमाणत्वान्न प्रवर्तकत्वादिप्रामाण्यव्यवहारे निमित्तम् ।

## ❀ स्वसंवेदनैकप्रत्यक्षतानिरासः ❀

यत्पुनरेतत् परमार्थतः स्वसंवेदनमेवैकं प्रत्यक्षमिति, तदतिदुर्मतिविस्पन्दितं; स्वसंवेदनस्य प्रागेव विस्तरेण निराकृतत्वात् । स्वसंवेदनमेवैकं प्रत्यक्षमिति ब्रुवाणस्य सर्वज्ञज्ञानं प्रमाणमेवेत्यादिविरोधश्च, न हि वर्तमानात्मैकज्ञानमात्रवेदने सर्वज्ञत्वं युक्तम् । अभ्रान्तञ्च प्रत्यक्षमिष्यते, तद्यदि सर्वार्थविषयं प्रत्यक्षं सर्वज्ञस्यास्ति, तदा सर्वमालम्बने भ्रम इत्येतदपि प्रमत्तवाक्यम् । सर्वज्ञस्यापि सर्वार्थविषयं ज्ञानं भ्रान्तमेवाभ्युपगम्यते, ततो नास्ति विरोध इति चेत्, शोभनमेवं सर्वज्ञस्य सर्वज्ञत्वं वर्णितं तन्मूलत्वेन शास्त्रस्यापि प्रामाण्यं श्रद्धेयम् । तदयं स्वपक्षरागाभिनिविष्टः स्वतीर्थङ्करस्यापि बुद्धादे र्मोहं प्रकटयन्ननवधेयवचस्त्वादुपेक्षणीय एवेति ।

## * प्रामाण्यं व्यवहारेणेति मतखण्डनम् *

व्यवहारिणामपि व्यवहारः कश्चिन्मिथ्यार्थः, कश्चित् तत्त्वार्थ इति कथमपरीक्षितेन व्यवहारेण प्रामाण्यं व्यवस्थाप्यते ? तत्परीक्षा तूभयव्यवहारयोस्तत्त्वेतरविवेकपर्य्यालोचनाभ्यासः, ततो धर्म्मादितत्त्वेतरविवेकपरिज्ञानाभ्यासार्थत्वाच्च प्रमाणविचारस्येति । यच्चोक्तम्—शास्त्रं मोहनिवर्तनमिति, तत्सत्यम्, यदभ्रान्तज्ञानमूलं शास्त्रं तन्मोहं निवर्तयत्येव । त्वदीयं तु शास्त्रं भ्रान्तज्ञानमूलं, तदभ्यस्यमानं हविरिव हुतभुजं वर्द्धयत्येव मोहमिति । यदप्युक्तम्—प्रामाण्यप्रतिपत्त्युपायासंभवादिति, तदप्ययुक्तम्; तदुपायस्य प्रागेव दर्शितत्वात्; उत्तरत्रापि भिन्नकालयोरप्यविनाभावसम्बन्धग्रहणोपायमभिधास्यामः । अपि च प्रामाण्यप्रतिपत्तिवद् भ्रान्तत्वप्रतिपत्तावप्यन्योपायाभावाद् व्यवहार एव अनुसर्तव्यः ।

## * सौगतनये भ्रान्तत्वग्रहणासम्भवः *

तथा हि—स्वरूपमात्रावगतमेव प्रत्यक्षं व्याप्रियते, न ततो भ्रान्तत्वावगतिः, न हि स्वरूपमात्रसंवित्ताविदं भ्रान्तमिति भवति । भ्रान्तता च ग्राह्ये विपर्यस्तता । न च सा ग्राह्यवैपरीत्याऽनवगमेऽवगन्तुं शक्यते । न च तदेव ज्ञानं स्वग्राह्यविपर्यस्ततावगमात्मतयोदेति, तदप्रतिभासनात् । प्रतिभासने हि विपर्यस्तस्य पुंसोऽवगतार्थप्राप्त्यभिमानेन प्रवृत्तिर्न स्यात् । नापि प्रवृत्त्युत्तरज्ञानेन [1]भ्रान्तताऽवगम्यते, तदा भ्रान्तज्ञानस्यातीतत्वात् । अन्यत्र प्रवर्तकत्वमेव भ्रान्तत्वमित्येतदपि केन वेद्यते ? न हि तदेव ज्ञानं 'ग्राह्यादन्यत्राहं प्रवृत्तं, प्रवर्तकं वा' इत्येवमात्मानं वेत्ति । नाप्येकात्मस्वरूपग्राहिज्ञानं [2]केनचिदात्मनः संबन्धं वेत्ति, न चैकरूपसंवित्तावेव सम्बन्धसंवित्तिः, तथा हि—

[3]द्विष्ठसंबन्धसंवित्तिर्नैकरूपप्रवेदनात् ।
द्वयस्वरूपग्रहणे सति सम्बन्धवेदनम् ॥

न च त्वन्मते स्वरूपद्वयग्राहि विज्ञानं किञ्चिदस्ति । अपि चोत्तरेणैव ज्ञानेन भ्रान्तत्वं व्यवस्थाप्यते । तच्चोत्तरज्ञानं ग्राह्यवैपरीत्यग्राहि वा स्याद् ? ग्राह्याकाराद् विलक्षणाकाराध्यवसेयवेदकं वा ? अन्यत्र प्रवृत्तिवेदकं वा ? ततश्च

---

१. भ्रान्ततेति, पूर्वज्ञानस्येत्यादिः ।
२. केनचित् = अर्थवैपरीत्यादिना ।
३. प्र० वा० अ० पृ० ६

भ्रान्त्युत्तरज्ञानयोः स्वस्वरूपसंवेदनात्मत्वान्न [1]प्रत्येकं संबन्धपरिग्रहः, नापि समुदायः, तयोः कालव्यवधानात्। उत्तरकालभावि तु स्मरणं प्रवर्तमानमसम्बद्धमेव द्वयं विकल्पयति। यथानुभवपरित्यागात्तु तदुपप्लुतमेवेति न ततः सम्बन्धप्रतिपत्तिः। ततस्तत्सम्बन्धाग्रहणात्पश्चादपि दृष्टव्यसाधर्म्यात् कथं प्रतिपत्तिरनुमानादिति।

न भ्रान्तत्वप्रतिपत्त्युपायोऽस्ति। व्यवहाराच्च तत्प्रतिपत्तौ, अनुमानज्ञानं भ्रान्तं प्रतिपत्तव्यम्। न हि सम्यगनुमानज्ञाने भ्रान्तत्वव्यवहारोऽस्ति, क्वचिदविसंवादिनि ज्ञाने भ्रान्तत्वव्यवहारो दृष्ट इति। एवञ्च "स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवर्तनात्"—इत्येतद्व्यवहारेणैव बाधितत्वादसाधनम्, तदभ्युपगमे तु प्रामाण्यमपि न स्यात्, पूर्वोक्तान्यायात्। अपि चाऽप्राप्येऽधिगतप्राप्याध्यवसायेन प्रवर्तनात् प्रत्यक्षमपि भ्रान्तं स्यात्। सांव्यवहारिकञ्चाऽभ्रान्तत्वम् [2]उभयोरपि समानमिति, कथमनुमानमेव भ्रान्तम्? तत्सिद्धमेतत् सम्यग्ग्रहणमनुमानज्ञानस्याभ्रान्तत्वज्ञापनार्थमिति।

## ❀ परोक्षपदस्य प्रयोजनम् ❀

ननु च यस्यानुभवस्याविनाभावस्मृतिरसाधारणं कारणं स परोक्षाकार एव भवति। तत् किमर्थं परोक्षग्रहणम्? न; विप्रतिपत्तिनिराकरणार्थत्वात्। गोत्वादिवदर्थाश्रितं परोक्षत्वम्, न ज्ञानाश्रितमिति केचित्, तदयुक्तम्; सर्वप्रतिपत्तॄणां नीलादिवदविशेषेण ग्रहणप्रसंगात्। स एव कस्यचित् परोक्षः कस्यचिदपरोक्ष इति न स्यात्। न हि नीलाद्यपि (करणं) कैश्चिन्नीलादिरूपेण वेद्यते कैश्चिदनीलादिरूपेणेति। परापरव्यवहारवदिति चेत्, न; तस्यान्यनिमित्तत्वात्। न खलु परापरव्यवहारः सामान्यनिबन्धनः, किं तर्हि? संयुक्तसंयोगबह्वल्पबुद्धिनिबन्धन इत्युक्तम्। बह्वल्पभावोप्यपेक्षानिबन्धनः, कुड्यादपरस्तम्भात्पर इत्यादिदर्शनादिति। न चैवं परोक्षापरोक्षव्यवहारोऽर्थेषु गुणादिनिबन्धनः, सामान्यादिषु भ्रान्तत्वप्रतिपत्त्युपायो न स्यात्।

अव्यवहाराच्च तत्प्रतिपत्तौ, नानुमानज्ञानं भ्रान्तं प्रतिपत्तव्यम्। न हि सम्यगनुमानज्ञाने भ्रान्तत्वव्यवस्थापि, परोक्षापरोक्षव्यवहारदर्शनात्। नापि बाह्यार्थापेक्षः, नियमेन ज्ञात्रपेक्षत्वात्, ममापरोक्षस्तव परोक्ष इत्येवं प्रतीतेः।

---

१. न भ्रान्तिज्ञानमुत्तरज्ञानस्यार्थवैपरीत्येन सम्बन्धं वेत्ति, नाप्युत्तरज्ञानं पूर्वज्ञानस्यार्थवैपरीत्येन सम्बन्धं वेतीत्यर्थः।

२. उभयोः = प्रत्यक्षानुमानज्ञानयोः।

अक्षातपरः परोक्षस्तदन्यस्त्वपरोक्ष इति चेत्, न; आत्माद्यनुमेयस्य मनोऽक्ष-विषयत्वेऽपि परोक्षत्वादित्युक्तं प्रागेव प्रपञ्चेन। तस्मादनुभूतत्वस्मृतत्वदृष्टत्वा-दिवदनध्यवसितत्वादिवच्च ज्ञानविशेषालम्बनमेव परोक्षमपरोक्षञ्चेति। ज्ञान-व्यक्तिषु च सन्देहत्वस्मृतित्वादिवत् परोक्षत्वापरोक्षत्वजातिविशेषाभ्युपगमेऽप्य-दोषः। [1]प्रत्ययाऽविशेषोऽपि जातिजातिमद्योगादपि दृष्टः। तद्यथा—उष्णत्वजाति-योगादुष्णस्पर्शस्तत्संबन्धादुष्णोऽग्निरुष्णः पाषाण इति। एवं परोक्षत्वजाति-योगात् परोक्षोऽनुभवस्तत्संबन्धात् परोक्षोऽर्थं इति। अर्थवत् परोक्षानुभवेऽप्य-परोक्षानुभवविषयत्वेनापरोक्षव्यवहारोऽपि, अपरोक्षानुभवेऽपि परोक्षानुभवविषय-त्वेन परोक्षव्यवहारोऽपीति सर्वं सुस्थम्। तदेतद् विचारितमपि प्रमेयस्य वैषम्यं दृष्ट्वा पुनर्विचारितम्, सुखसंबोधनार्थमिति।

अथवा प्रत्यक्षाधिगतार्थगन्तृत्वेऽनुमानस्य वैयर्थ्यम्, प्रत्यक्षानधिगतार्थ-गन्तृत्वेऽनुमानस्य गौणत्वादिदोषेभ्यः प्रामाण्यमेव न संभवतीत्याहुः केचित्, तद्व्युदासार्थं परोक्षग्रहणम्। अविनाभावबलोद्भूतः परोक्षानुभवः सम्यगेवो-पलभ्यते। तत्साधनस्यानुमानस्याप्रामाण्यं वक्तुमशक्यम्, सर्वलोकव्यवहार-विरोधादित्यर्थः।

## ❀ गौणत्वादप्रमाणताऽनुमानस्य ❀

कथं पुनस्तैः सर्वलोकप्रसिद्धस्यानुमानस्यापह्नवः क्रियते? तदुच्यते—

[2]प्रमाणस्यागौणत्वादनुमानादर्थदुर्लभ इति।

प्रमाणस्यागौणत्वादिति विपर्य्ययहेतुः। एतदुक्तं भवति—प्रमाणस्या-नुपचरितविषयत्वेन प्रामाण्य प्रसिद्धम्, यथा—प्रत्यक्षस्य। न चानुमानस्या-गौणविषयत्वं शक्यं वक्तुम्, तथा हि—न धर्म्येव साध्यः, तस्य सिद्धत्वात्, धर्मोप्यन्यत्र सिद्ध एव, न तत्समुदायः साध्यः, तत्र च न हेतोः पक्षधर्मत्वं नापि तेनान्वयः प्रतिपत्तुं शक्यते, तस्मादन्वयप्रतिपत्त्यर्थं धर्म एव साध्यत्वे-नोपचरितव्यः, पक्षधर्मत्वग्रहणार्थं धर्म्येव पक्ष इति। तथा चानुमानवादि-भिरुक्तम्—पक्षो धर्मी, [3]अवयवे समुदायोपचारादिति। एवञ्च सत्युपचरित-पक्षधर्मत्वान्वयोपकृतादनुमानादर्थनिश्चयो दुर्लभ इति। तत्रोपचरितपक्षवृत्तेर-

---

१. प्रत्ययाविशेषः = परोक्षं ज्ञानम्, परोक्षोऽर्थ इति प्रतीत्योरवैलक्षण्यम्।

२. एतेन 'अनुमानमप्रमाणम्, गौणत्वाद्' इत्यनुमानं सूचितं भवति।

३. अवयवे = समुदायैकदेशे।

बोधकत्वं दृष्टम्, यथा दाहादिसमर्थोऽयं बटुरग्नित्वादिति। तथोपचरितान्वयस्याप्यसाधकत्वम्, यथाऽनित्यः शब्दः, श्रावणत्वात्, सुखादिवत्। श्रावणशब्दभावितत्वेन सुखादेः श्रावणत्वोपचारादन्वयसिद्धिरिति।

## ❀ साधिक्रियानुपपत्तेरप्रमाणता ❀

अपि च साधिक्रियामपेक्ष्य साध्यमुच्यते। सा चेन्निष्पन्ना, व्यर्थं पक्षधर्मत्वादिग्रहणम्, तदर्थस्य प्रसिद्धत्वात्। न चेन्निष्पन्ना, किमपेक्ष्य पक्षादिव्यवस्था? भाविनि भूतवदुपचाराश्रयणे स एवानुमानस्य गौणत्वदोषः, मुख्यानुमानाभावाद् गौणमप्ययुक्तमिति।

## ❀ अनुगमानुपपत्तेरप्रमाणता ❀

साध्यविकल्पानुपपत्तेश्चानुमानानुपपत्तिः। तथा हि—धर्मिणः सिद्धत्वान्न साध्यत्वम्। धर्मश्चेत् साध्यः, स किं सामान्यलक्षणोऽथ विशेषलक्षण इति? किञ्चातः? सामान्ये सिद्धसाध्यता, विशेषेऽनुगमाभाव इति। सामान्यस्याग्निमत्वानित्यत्वादिलक्षणस्य क्वचित् सिद्धत्वात्, व्यर्थं तत्साधनम्। देशादिविशिष्टस्यानन्वयादेवासिद्धिः। न हि पर्वतस्थेनाग्निना शब्दगतेन चानित्यत्वेनाऽन्वयः क्वचिदस्तीति।

## ❀ अविनाभावग्रहणासम्भवादप्रमाणता ❀

इतश्चाविनाभावसम्बन्धस्य ग्रहीतुमशक्यत्वादनुमानमप्रमाणम्। न हि प्रत्यक्षेण धूमाग्निव्यक्तयोऽनन्ता व्याप्यव्यापकभावापन्ना ग्रहीतुं शक्यन्ते। सामान्यमात्रयोरविनाभावग्रहणे, तयोरेव गम्यगमकभावः स्यादन्यथातिप्रसंगात्। सामान्यमात्रविषयञ्च व्यर्थमनुमानं भवेत्, तन्मात्रस्य सिद्धत्वादपुरुषार्थत्वाच्चेति। तद्वतामप्यानन्त्यादेवाग्रहणम्। न चैकदेशग्रहणे व्याप्यव्यापकभावप्रतिपत्तिः, सहस्रशोऽपि सवत्सगोग्रहणे व्यभिचारदर्शनात्। तन्न प्रत्यक्षेण व्याप्तिग्रहणम्, नाप्यनुमानेनैव, अनवस्थाप्रसंगादिति।

## ❀ विरुद्धत्वादप्रमाणता ❀

किञ्च विरुद्धानुमानविरोधयोः सर्वत्र संभवात् नानुमानं प्रमाणम्। तत्र विरुद्धप्रकारस्तावदुच्यते— [1]दूषणवादिप्रतिवाद्यभिमतप्रकृतसाधनसाध्यधर्मा-

---

१. दूषणवादी = चार्वाकः, प्रतिवादी = नैयायिकः।

धिकरणत्वाभावः, तथा साधनदूषणवाद्यन्यतरोपात्तसाधनसाध्यधर्म्माधिकरणत्वाभावः, तथा साधनवादिप्रतिवादीन्द्रियविषयापन्नवाद्यभिमतसाधनसाध्यधर्माधिकरणत्वाभावः, तथातीतानागतकालव्यतिरिक्तकालसंबंधिवाद्यभिमतसाधनसाध्यधर्माधिकरणत्वाभाव इत्येते सर्वगाः। [1]प्रतिसाधनवृत्तयोपि सर्वत्र संभवन्ति यथा—एतद्देशकालसँल्लग्नाग्निमत्त्वाभावः, शब्दस्याकाशविशेषगुणत्वाभावाश्रोत्रग्राह्यत्वाभावः, सुखादीनामात्माश्रितत्वाभावः, सर्वगताश्रयाश्रितत्वाभावः, क्षित्यादेः सर्वज्ञकर्तृपूर्वकत्वाभावः, शरीरादिविनिर्मुक्तकर्तृपूर्वकत्वाभावः—इत्येवं सर्वानुमानेषु विरुद्धप्रकारो द्रष्टव्यः।

## ❀ अनुमानविरोधादप्रमाणता ❀

अथानुमानविरोधः प्रदर्श्यते—न प्रकृतवाद्यभितसाधनसाध्यधर्माधारो धर्मी, धर्मधर्मिणोरन्यतरत्वात् [2]साध्यशब्दार्थावयवत्वाद्वा, साध्यधर्मवत्। न वा प्रकृते धर्मी विषयः प्रकृतसाध्यधर्मः, पूर्वोक्तहेतुद्वयाद् धर्मिवत्। न प्रकृतसाध्यधर्माधिकरणधर्मिधर्मयोरन्यतरः, साध्यधर्मधर्मित्वात्, घटादिवत्। न प्रकृतसाध्यधर्मवानयं पक्षः, पक्षविपक्षयोरन्यतरत्वात्, विपक्षवत्। पक्षऽखरशृङ्गयोरन्यतरत्वाद्वा खरशृङ्गवत्। वादिप्रतिवादिविप्रतिपत्त्यनास्कन्दिताग्निव्यतिरिक्ताग्निमानयं प्रदेशो न भवति, प्रदेशत्वात् सत्त्वज्ञेयत्वादिभ्यश्च, तदन्यप्रदेशवत्। न प्रकृताग्निमानयं प्रदेशः खरशृङ्गस्याधूमत्वात् खरशृङ्गवत्। अतीतानागतकालव्यतिरिक्तकालविशिष्टास्मत्प्रतिवादिप्रयुक्तसाधनभावापन्नधूमसाध्यसिद्धिसमानकालघटः, न घटः, खपुष्पापत्रत्वात्, पद्मपत्रवदित्येवं सर्वानुमानेष्वनुमानविरोधो द्रष्टव्य इति।

## ❀ विरुद्धाव्यभिचारित्वादप्रमाणता ❀

तथा विरुद्धाव्यभिचारिदूषणत्वेनानुमानस्याप्रमाणता। वक्तव्यः कः पुनरयं विरुद्धाव्यभिचारी? विरुद्धाव्यभिचार्यनुमानविरोधयोः संज्ञामात्रेण भेद इत्येके। तदयुक्तम्, पृथगभिधानानर्थक्यप्रसंगात्। तस्मादनुमानं बाधकत्वेनोक्तं यदा बाध्यबाधकबुद्धिं जनयति तदानुमानविरोध उच्यते। यदा पुनस्तुल्यलक्षणत्वेनोपलभ्यमानं संशयं जनयति, तदा विरुद्धाव्यभिचारी, एवञ्च कार्यभेदाद् भेद इति।

---

१. प्रतिसाधनं वृत्तिर्येषां ते प्रतिसाधनवृत्तयः।

२. साध्यशब्दार्थः = धर्मधर्मिसमुदायः, तस्यावयवत्वात् = एकदेशत्वादित्यर्थः।

## ❀ विरुद्धेऽनुमानविरोधादिः तन्निराकरणञ्च ❀

अथ कदाचिदेवं ब्रूयात् परिहारविधानात्साधनं साधनात्मना व्यवतिष्ठत इति। अत्रापि परिहारमार्गः प्रदर्श्यते—तत्र विरुद्धे तावदनुमानविरोधः परिहारत्वेनोच्यते—न परोपन्यस्तविरुद्धसाधनसाध्यधर्माधिकरणो धर्मी, धर्मधर्मिव्यतिरिक्ताशेषभावविनिर्मुक्तत्वात्, साध्यधर्मवत्। न प्रकृतधर्मिविषयविवादारूढविशेषाभावसाधकोऽयं हेतुधर्मधर्मिणोरन्यतरत्वात्; धर्मिवत्।

अर्थान्तरभूतविवादारूढधर्मिविशेषाभावसाधकहेतुसमानकालसत्त्वघटो न घटः, शशशृङ्गाशृङ्गत्वात्, वन्ध्यापुत्रवत्। अर्थान्तरभूतविवादारूढधर्मिविशेषाभावसाधनोपन्यासकालावच्छिन्नसाधनदूषणवाद्यन्यतरवादिसमानकालसत्त्वघटो न घटः, सदसतोरन्यतरत्वात्, पटवत्। अर्थान्तरभूतसर्वज्ञबुद्धिविज्ञातज्ञेयसर्वभावान्तर्भूतप्रकृतधर्मिविषयविवादारूढविशेषाभावसाधनोपन्यासकालविशिष्टसाधनदूषणवाद्यन्यतरवादिसमानकालसत्त्वघटो न घटः, सदितरानुत्पादकत्वात्, पटवत्, इत्येवं विरुद्धेऽनुमानविरोध्यनुमानविरोधे विरुद्धाव्यभिचारी, विरुद्धाव्यभिचारिणि च विरुद्धपरिहारत्वेन वक्तव्य इति। तदयुक्तम्, यतः "प्रमाणेन परिहारे तत्रापि त्रयमित्यनवस्था"। परिहारानुमानेऽपि विरुद्धादिदूषणत्रयम्। तत्राप्यनुमानेन परिहारे क्रियमाणे पुनर्दूषणत्रयमित्यनवस्थेति। अथवा प्रमाणेनेति [1]विरुद्धादित्रयेण प्रमाणभूतेन परिहारानुमानप्रामाण्यस्य निराकरणे क्रियमाणे लौकायतिकैरनुमानमेवाभ्युपगतं भवति, विरुद्धादित्रयस्याप्यनुमानात्मकत्वादिति चोद्ये (सत्याः) तत्रापि त्रयमित्यनवस्थेति। विरुद्धादित्रयेप्यनुमानत्वनिराकरणार्थमन्यद् विरुद्धादिदूषणत्रयं वक्तव्यम्, तत्राप्यन्यदित्यनवस्थाभ्युपगमात्कथमनुमानाभ्युपगमः। तस्मादनुमस्याप्रमाणत्वात्परोक्षार्थनिश्चयो दुर्लभ इति।

## ❀ चार्वाकमतखण्डने गौणत्वहेतुनिरासः ❀

अत्र प्रतिविधीयते—यत्तावत्तदुपचरितपक्षधर्मतान्वयोपकृतादनुमानादर्थनिश्चयो दुर्लभ इति, तन्न; अनभ्युपगमात्। नैव हि पक्षधर्मत्वान्वयौ हेतोरौपचारिकावभ्युपगम्येते। तदव्यतिरिक्तमुख्यपक्षधर्मत्वादेरसम्भवात्। न हि मुख्यासम्भवे कचिदुपचारः प्रवर्तते, तस्माद्वक्ष्यमाणपक्षादिलक्षणयोगात् पक्षादिव्यवस्था ना मुख्येति।

---

१. विरुद्धादीत्यादिनाऽनुमानविरोधविरुद्धाव्यभिचारिणो ग्रंहणम्।

नन्वगृहीतस्य विशेषणत्वायोगात्, कथं साध्यधर्मविशिष्टो धर्मी पक्षः ? स हि साध्यधर्मोऽगृहीतश्चेत् पक्षं विशिनष्टि, ततः पक्षधर्मत्वादिग्रहणं व्यर्थं स्यात्; तदन्तरेण प्रागेव साध्यप्रतीतेः सिद्धत्वात्। अप्रतीतेन च साध्यधर्मेण कथं धर्मी विशिष्यते ? तदविशिष्टश्च केवलो धर्मी न पक्षः।

अथ यत्र धर्मिणि जिज्ञासितो धर्मः, प्रतिपिपादयिषितो वा, स साध्यधर्मविशिष्ट उच्यते, तर्हि जिज्ञासाद्यभावेऽन्यार्थं पर्यटतो धूमादिदर्शनादग्न्यादिप्रतिपत्तिर्भवति यदा, तदा कथं पक्ष इति ? न; अभिप्रायापरिज्ञानात्। न ब्रूमो यदैव साध्यधर्मेण विशिष्टो धर्मी तदैवासौ पक्षः। किं तर्हि ? प्रागपि। एतदुक्तं भवति—यत्तु साध्येन धर्मेण विशिष्टो धर्मी भविष्यति, स तस्य हेतोः प्रागपि पक्ष इति। भविष्यतस्तद्विशिष्टत्वस्याप्रतिपत्तौ कथं पक्षत्वप्रतिपत्तिरिति चेत्, न योग्यतामात्रप्रतीतावेव तद्व्यवहारसिद्धेः। यथा पटादिकार्यार्थिनस्तन्त्वादिवस्तूनि योग्यतामात्रप्रतीतावेव तत्कारणत्वेन व्यवहरन्ति। न हि कार्याप्रतीतौ तत्कारणत्वप्रतीतिः सम्भवति। तदसम्भवे च न तत्कारणप्रतीतिः, ततो न तत्कार्यार्थिनां तदुपादानादिव्यवहार इत्यप्रवृत्तिनिवृत्तिकं जगत् स्यात्। गौणकारणेषु प्रवृत्तौ च पाकाद्यर्थिनां वटुवादिष्वपि प्रवृत्तिः स्यात्। तस्माद् यथा योग्यतामात्रप्रतीत्यैव तन्त्वादिवस्तूनि पटादिकारणत्वेन व्यवह्रियन्ते। न चाग्निवटुवादिगौणो व्यवहारः। सहकारिसम्पत्तौ च ततोऽभिप्रेतकार्यसिद्धिरपि भवति। तथा साध्यधर्मविशिष्टत्वयोग्यतामात्रप्रतीत्यैव केवलोऽपि धर्मी पक्षत्वेन व्यवह्रियते, न च तत्रस्थस्य हेतोरग्नित्वस्य वटाविव गौणपक्षधर्मत्वम्।

ननु च यथा तन्त्वादिभ्यः पटादिकार्योत्पत्तिरुपलब्धा ततोऽनारब्धकार्येष्वपि तन्त्वादिषु तत्कारणत्वव्यवहारनिमित्तं तज्जातीयत्वमेव योग्यताख्यमस्ति, न त्वेवं केवलधर्मिणि पक्षत्वव्यवहारयोग्यताख्यं किञ्चिन्निमित्तं पश्याम इति, न; अत्रापि साध्यतन्निषेधानुपलम्भस्य योग्यताख्यनिमित्तत्वात्। यत्र हि धर्मिणि साध्यधर्मस्तन्निषेधश्च नोपलब्धः, स एवानासादितेन धर्मेण विशिष्टो भवतीति, अतः साध्यतन्निषेधानुपलम्भोऽत्र योग्यतोच्यत इति।

अथवा लिङ्गसम्बन्ध एव योग्यता। तथा हि—यत्र धर्मिणि ह्यनाद्यविनाभूतधूमादिसम्बन्ध उपलब्धः, स एव धूमादिसाधितेन दहनादिना विशेषितो दृष्टः। ततोऽनुपलब्धदहनादिविशिष्टत्वेऽपि धर्मिणि तदविनाभूतधूमादिसम्बन्धदर्शनात् पक्षत्वव्यवहारः। तस्य न गौणत्वं तन्निमित्तस्य योग्यताख्यस्यागौणत्वात्, तन्त्वादिषु पटादिजनकत्वव्यवहारवत्।

अथ तन्त्वादिष्वपि जनकावस्थातः प्रागजनकत्वव्यवहारो गौण एवेष्यते। न; लोके वटुमाणवकादिवद् गौणत्वाप्रतीतेः। भवतु वा तन्त्वादिषु पटादिकारणत्ववद् धर्मिणः पक्षत्वं गौणम्, किन्नश्छिन्नम्? ननु तन्मूलानुमानस्य गौणत्वेनाप्रामाण्यं प्रसक्तमित्युक्तम्, नैतदस्ति; निमित्तस्य गौणत्वेऽपि तत्फलस्य पटादिवदगौणत्वात्। यथा पटजननार्थं ये तन्तवः क्रीतास्तेषां पटजनकत्वं गौणं त्वयाभिहितम्, न च सहकारिविशेषोपेतैस्तैरेव जनितस्यापि पटस्य गौणं पटत्वम्। तथा धर्मिणः पक्षत्वे गौणेऽपि सहकारिविशेषोपेततत्पक्षघटितानुमानस्य न गौणत्वमिति। न चातिप्रसंगः, प्रागुक्तयोग्यताश्रयणादितो व्यवस्थोपपत्तेः। तस्माद् गौणत्वादनुमानादर्थनिश्चयो दुर्लभ इत्येतदयुक्तमेवोक्तमिति।

## ❀ साधिक्रियानुपपत्तिनिरासः ❀

यच्चोक्तम्—साधिक्रियामपेक्ष्य साध्यमुच्यत इति तन्न, [1]अर्हत्यर्थे कृत्याभिधानात्। तेन साधनमर्हति यत्तत् साध्यमुच्यते। साधनार्हत्वञ्च सिद्धियोग्यता। सा च प्रागप्यस्ति तेन साधिक्रियातः प्रागपि साध्यत्वं नायुक्तम्। न च साध्यपक्षशब्दयोः पर्यायत्वमेवाभ्युपगम्यतेस्माभिः शाक्यैरिव, नापि समुदायः साद्धयः, किं तर्हि? धर्मविशिष्टो वा धर्मी, यथाग्निमानयं प्रदेशः, धर्मिविशिष्टो वा धर्मः साध्यः, यथाग्निरत्र धूमादिति। उभयत्रापि प्रदेशादिलक्षणो धर्म्येव पक्षोऽभ्युपगम्यते। तत्रस्थस्य च हेतोः पक्षधर्मत्वं मुख्यमेव, नौपचारिकम्।

## ❀ अनुगमानुपपत्तिनिराकरणम् ❀

अन्वयस्यापि न गौणत्वम्, मुख्यान्वयलक्षणोपेतत्वात्, तथा—हि साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वय इत्यन्वयलक्षणम्। तत्र यदा धर्मविशिष्टो धर्मी साध्यः, तदा साध्यस्य सामान्यमग्निमत्त्वादिलक्षणम्। यदापि धर्मिस्थो धर्मः साध्यः, तदा साध्यमेवाविवक्षितविशेषं साध्यदृष्टान्तधर्मिणोः साधारणत्वात् सामान्यमुच्यते। साधनमपि सामान्यं धूमवत्त्वादिलक्षणम्। तस्य साधनसामान्यस्य तेन साध्यसामान्येन व्याप्तिः व्याप्तता अन्वयः, स कथं गौण इति? तस्मादुपचरितपक्षधर्मत्वान्वयोपकृतादनुमानादर्थनिश्चयो दुर्लभ इत्येतदप्ययुक्तम्।

---

१. तथा च सूत्रम्—"अर्हे कृत्यतृचश्च;" (पा० सू० ३।३।१६९)

किञ्च यद्युक्तलक्षणौ पक्षधर्मत्वान्वयौ न मुख्यौ, तदान्यौ मुख्यौ वक्तव्यौ, न हि मुख्योपलम्भासम्भवे क्वचित्तदुपचारः प्रवर्तते। मुख्यौ चेदन्यत्रपक्षधर्मत्वान्वयौ, तथापि तत एवानुमानप्रामाण्यस्य [1]सिद्धेर्नात्यन्ताभाव इति।

यदप्युक्तम्, धर्मिणः सिद्धत्वात् साधनवैफल्यमिति, तन्न; साध्यधर्मविशिष्टस्यासिद्धत्वात्। तत्साध्यत्वेऽप्यनुगमाभावो नास्ति, साध्यसामान्येनानुगमस्योक्तत्वात्। न हि साध्यविशेषेणान्वयः कैश्चिदभ्युपगम्यते, लोके वा प्रतीयते। किं तर्हि? यो यः कश्चिद् धूमवान् कृतकश्च स सोऽग्निमान् अनित्यश्चेति लोके प्रतीयते। धर्मसाध्यत्वेऽपि यदुक्तम्—सामान्ये सिद्धसाध्यता विशेषेऽनुगमाभाव इति, तत्र सामान्यमेव साध्यम्। न च सिद्धसाधनम्, विवक्षिते धर्मिण्यसिद्धस्य सामान्यस्य साध्यत्वाभ्युपगमात्। तेन चानुपगमोऽस्त्येव। तथा हि यत्र धूमस्तत्राग्निरित्येवं लोकेऽप्यन्वयः प्रसिद्धस्तावन्मात्रेण चानुमानप्रवृत्तिदर्शनात् तत्र प्रदेशविशेषेण तत्सम्बन्धविशेषेण वान्वयोऽकारणम्।

## ❀ अविनाभावग्रहणासम्भवनिरासः ❀

यदप्यविनाभावसम्बन्धस्य ग्रहीतुमशक्यत्वादित्याद्युक्तम्, तदप्ययुक्तम्। यतोऽस्ति तावदियं लौकिकपरीक्षकाणामपि प्रतीतिरभ्रान्ता निश्चयात्मिका—यत्र धूमस्तत्राग्निरग्न्यभावे क्वचिन्न धूम इति। तस्याः खलु निरूप्यमाणं यदि कारणत्वेनाक्षलिङ्गादीनामन्यतमं निश्चेतुं शक्यते, तदाऽतिभद्रकम्, नो चेत् तथापि निश्चितस्य वस्तुनस्तत्कारणानिश्चयादेव नापह्नुतिः युक्तातिप्रसंगात्।

## ❀ व्याप्तिग्रहे केषाञ्चिन्मतं तन्निरासश्च ❀

अत्र केचिदाहुः—अनुमानेनैवाविनाभावो न गृह्यते, अनवस्थाप्रसंगात् इत्यत्राविवाद एव। नापि प्रत्यक्षमात्रेण, किन्तु भूयोदर्शनगम्या हि व्याप्तिरिति, भूयोदर्शनमिति कोऽर्थः? बहूनि दर्शनानीत्यर्थः। तानि किं प्रत्यर्थनियतानि? आहोस्विदशेषाग्निधूमविषयाणीति? यदि प्रत्यर्थनियतानि, तदा कल्पसहस्रेणापि नाशेषव्यक्तिविषयं दर्शनमुत्पादयितुं शक्यते, देशकालादिभेदेन व्यक्तीनामानन्त्यात्। न चाशेषव्यक्तिसम्बन्धाग्रहणे व्यभिचारशंका निवर्तते। न हि सहस्रशोऽपि पार्थिवस्य लोहच्छेद्यत्वदर्शनादव्यभिचारसिद्धिः। अथ प्रत्येकमशेषाग्निधूमविषयाणि दर्शनानि, तदैकेनैव व्याप्तिसिद्धेः शेषदर्शना-

1. नात्यन्ताभाव इति पक्षधर्माविनाभावयोरित्यादिः।

नर्थक्यम्। किञ्च क्रमोत्पन्नानां दर्शनानामनवस्थायित्वान्न साहित्यकारित्वम्। युगपदुत्पादस्तु न संभवत्यप्रतिभासनादिति।

## ❀ व्याप्तिग्रहेऽन्येषां मतं तन्निरासश्च ❀

अन्ये तु परिशेषबलेन मानसं प्रत्यक्षं व्याप्तिग्राहकं वर्णयन्ति, तदप्ययुक्तम्; सर्वदर्शित्वप्रसंगात्। समस्तसपक्षविपक्षदर्शने हि यद् यत् कृतकं तत्सर्वमनित्यं नित्यं तु सर्वमकृतकमित्येवं रूपा व्याप्तिप्रत्यक्षा भवति नान्यथा। तथा च सर्वानुमातुः सर्वदर्शित्वप्रसंगः।

सर्वस्मिंस्तु प्रत्यक्षेण दृष्टे किमनुमानेन वैयर्थ्यात्? व्याप्तिग्रहणकाल एव सर्वदर्शी भवति, नान्यदा। तेनोत्तरकालमनुमानं सार्थकमेवेति चेत्, न; पादप्रसारणमात्रत्वात्। यदि च व्याप्तिग्रहणकालेऽप्यसौ सर्वदर्शी, तदा किमिति व्युत्थितयोगिवत् स्वर्गादिष्ववस्थिता एवम्भूता अर्था मया दृष्टा इति व्याप्तिमिव नाऽनुसन्धत्ते? अतीन्द्रियव्यवहारविप्रतिपत्त्यप्रतिपत्त्योरभावप्रसंगश्च। न हि मानसप्रत्यक्षविषयेऽप्यतीन्द्रियव्यवहारो विप्रतिपत्तिरप्रतिपत्तिश्चास्ति, सुखादिष्वदर्शनादिति।

## ❀ व्याप्तिग्रहेऽपरेषां मतं तन्निरासश्च ❀

अपरे त्वाहुः—कतिपयसम्बन्धिसम्बन्धप्रतीतावगृहीतसंबंधयोरपि तज्जातीयत्वसामर्थ्याद् गम्यगमकभावो भवतीति, तदप्ययुक्तम्, पार्थिवलोहच्छेद्यजातीयत्वव्यभिचारेणोक्तोत्तरत्वादतज्जातीयैरगृहीतसंबंधत्वाविशेषाच्चेति। सामान्यमात्रयोः सम्बन्धग्रहणेपि व्यक्तिविषये प्रतिपत्तिप्रवृत्ती न स्याताम्, सामान्यादर्थान्तरत्वाद् व्यक्तीनाम्, न चान्यसंवन्धग्रहणे ततोऽर्थान्तरेऽनुमितिर्युक्ताऽतिप्रसंगात्। नापि सामान्यमात्रेण दाहाद्यर्थः साध्यते यतस्तद्विषयमेवानुमानं कृतार्थं स्यात्।

ननु [1]"निर्विशेषं न सामान्यं भवेच्छशविषाणवत्।" अतः सामान्येऽनुमितेऽर्थापत्त्या विशेषाधिगमस्ततः प्रवृत्तिस्ततोऽर्थप्राप्तौ दाहादिकार्यसिद्धिः, तत्कथं सामान्यविषयमनुमानं निरर्थकमेवेति? नैतत्साधु; तथा हि—किं दृष्टतत्संबंधस्तदन्यथाऽनुपपत्त्या विशेषोऽवगम्यते? तद्विपरीतो वा? प्राचीने

---

१. निर्विशेषं न सामान्यं भवेच्छशविषाणवत्।
सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि॥ (श्लो० वा० आकृति० १०)

पक्षे पूर्वदृष्टाग्न्यादिविशेषविषयैव ततः प्रतिपत्तिः प्रवृत्तिश्च स्यात्ततोऽनुमानार्थापत्त्या स्मृत्या सहाविशेषादप्रामाण्यमेव स्यात्। अदृष्टतत्संबंधस्याप्यवगमेप्यग्नित्वान्यथानुपपत्त्या गर्दभादिविशेषागमोपि स्यात्। ननु चाऽग्निभावोऽग्नित्वमुच्यते, न गर्दभादिभावः, ततस्तदन्यथानुपपत्त्या कथं गर्दभाद्यवगम इति ? अग्निभावोऽग्नित्वं न गर्दभादिभाव इत्येतदेव कुतो निश्चितम् ? लोकप्रसिद्धित इति चेत्, सैव प्रसिद्धिः कतमप्रमाणमूलेति विचारयितुं प्रारब्धा लोके च कृष्णाकाशादिप्रसिद्धिवन्मिथ्या प्रसिद्धिरपि दृष्टा। अथाग्निविशेषेष्वेवाग्नित्वं दृष्टं न गर्दभादिविशेषेष्विति, न; समस्ताग्निगर्दभादिविशेषाग्रहणे कथमग्निविशेषेष्वेवेत्यवधारणसिद्धिः ? किञ्चाग्नित्वान्यथानुपपत्त्या क्वाप्यग्निविशेषः सिद्ध्यतु, विवक्षितप्रदेशे कुतः सिद्ध्यति ? न हि तदसंभवेऽग्नित्वं नोपपद्यते। तत्प्रदेशोपलक्षितमग्नित्वमन्यथा नोपपद्यत इति चेत्, तत्सम्बन्धाप्रसिद्धौ कुतोयं नियमः सिद्धः ? किञ्च तत्प्रदेशोपलक्षिताग्नित्वसाधनेऽयमपरोनर्थः प्राप्तः—तथाविधेन सम्बन्धाग्रहणेपि, तथाविधाग्नित्वसिद्धौ हि सर्वत्रापि अग्नित्वसिद्धिः स्यादिति।

## ❀ व्याप्तिग्रहे स्वमतम् ❀

तत्किमिदानीं सुरगुरुमतमेवानुसर्त्तव्यम् ? नानुसर्त्तव्यं कस्मात् ? तन्मतेपि पूर्वमुत्तरत्र च बाधकभूयस्त्वप्रतिपादनात् कुतस्तर्हि व्याप्तिग्रहणम् ? किमाकस्मिकमेव ? न, प्रत्यक्षतोऽपि तद्वतां व्यप्तिग्रहणात्। तथा हि—यत्र धूमस्तत्राग्निः तद्रहिते नास्ति धूम इत्ययमविनाभाव उच्यते, स च विस्फारितेन साग्न्यनग्निदेशसम्बद्धेन चक्षुषा प्रथममपि गृह्यते। यदि परमध्यमाल्पमेधसां संस्कारपाटवार्थं भूयोदर्शनं मृग्यते नामग्रन्थाभ्यासवत्। ननु च धूमदहनयोर्व्याप्यव्यापकभावोऽविनाभाव उच्यते। स च समस्तधूमाग्निव्यक्तिनिष्ठः, ततः सर्वतद्व्यक्त्यग्रहे कथं गृह्यत इति ? यः सर्वव्यक्तिनिष्ठः स किमेकद्वित्र्यादिव्यक्तिनिष्ठो न भवति, येन तद्ग्रहेपि न गृह्यते ? तथा हि—सामान्यसमवाययोरनन्तव्यक्तिनिष्ठत्वेप्येकद्वित्र्यादिव्यक्तिग्रहणकाल एव ग्रहणं दृष्टम्। अवयविनश्च न सर्वाश्रयग्रहणादेव ग्रहणमिति प्रागेव साधितम्। संयोगस्याप्येकाश्रयग्रहणाद् ग्रहणप्रसंग इत्यप्यचोद्यम्, विचित्रशक्तयो हि पदार्थाः तत्र यो यथा ग्रहणयोग्यः स तथा गृह्यते। तद्योग्यता च प्रतिनियतहेत्वन्वयव्यतिरेकानुविधायिग्रहणादेवावगम्यते, चक्षुरादिभिः प्रतिनियतरूपादिग्रहणवत्।

## ॐ अविनाभावस्य बाह्यप्रत्यक्षग्राह्यता ॐ

अविनाभावस्तु यदि दृश्यः सम्बन्धः तदा समवायवत् सम्बन्धिद्वयग्रहणकालेपि गृहीतः। अथ व्यापकत्वं व्याप्यत्वं चाग्निधूमवर्गयोः प्रतिनियतो धर्मः, तथाप्यग्नित्वधूमत्वादिवदेकद्वित्र्यादिव्यक्तिग्रहणकाल एव गृहीतः, न सर्वग्रहणमाक्षिपति। अथाग्नित्वधूमत्वयोऽरन्योन्याधारग्रहणनिरपेक्षं यथा ग्रहणम्, न तथा व्यापकत्वव्याप्यत्वयोरित्यसमो दृष्टान्तः। एवमपि परत्वापरत्वमध्यत्वादिवद् द्वित्र्यादिधर्मिग्रहणादेव ग्रहणम्। अदृश्यत्वे तु सर्वधर्मिग्रहणेपि न तस्य ग्रहणं प्रत्यक्षतः। तदभावादनवस्थाप्रसंगाच्चाऽनुमानतोपि न ग्रहणमित्यभाव एवाविनाभावस्य प्राप्तः, ततोऽनुमानस्याप्यत्यन्ताभावः, तदभ्युपगमे च दोषान् वक्ष्यामः। तस्मात् सर्वव्यक्त्यग्रहेपि गृहीत एवाग्निधूमयोरविनाभावः प्रत्यक्षेणेति।

यद्येवं ययोरविनाभावो गृहीतस्तयोरेव गम्यगमकभावोस्तु; नाऽपूर्वाग्निधूमयोः, तयोरदृष्टसंबंधत्वात्। अदृष्टसम्बन्धयोरपि गम्यगमकभावे ह्यतिप्रसंगः स्यादिति न; अग्निधूमवर्गयोः सम्बन्धस्य दृष्टत्वात्। स चेत्क्वचिद् दृष्टस्तदा नाग्निधूमयोः संबंधः क्वचिददृष्टोस्ति। यदि नाम धर्मिणां कश्चिन्न दृष्टः, तदा तद्धर्मस्य दृष्टत्वे किमायातम्? नहिं धर्मधर्मिणोरभेदोस्ति, नापि धूमाग्निव्यक्तीनां प्रत्येकं व्याप्यव्यापकधर्मभेदोस्ति। तस्याग्नित्वादिवत् समवायवद्वा तल्लक्षणत्वाविशेषाद्विशेषलक्षणाभावाच्चैकत्वमेव। न चाभिन्नात्मैव दृष्टो न दृष्टश्चेत्युपपद्यते। न त्वेवं समवायोप्येकस्य दृष्टः सर्वस्याऽपि दृष्ट एवाऽभेदात, ततश्चात्यन्तादृष्टार्थोपलम्भेपि तत्समवायिनः सर्वस्यानुमानं प्रसज्यत इति न, सम्बन्धस्यापि विचित्रशक्तित्वात्। अन्या खलु समवायस्य शक्तिः, अन्या संयोगस्य, अन्या च सम्बन्धान्तरस्य, धर्मान्तरस्य वा। तत्र विषमध्वादीनामिवेतरशक्तिसाम्यापादनं किञ्चित्साधर्म्यादयुक्तम्। व्याप्यव्यापकभावस्य त्वित्थं सामर्थ्यं यदेकत्राप्ययं गृहीतोऽन्यत्र स्मर्यमाणस्तद्वतोरपूर्वयोरपि गम्यगमकभावे निमित्तं भवति। वस्तुतस्तद्धर्मत्वेपि तद्धर्मत्वेनादृष्टस्याविनाभावस्य कथं स्मृतिरदृष्टधूमदर्शनात्? अप्रतिबद्धार्थदर्शनस्य स्मृतिहेतुत्वेऽतिप्रसंगादिति चेत्, न; तेन सहैकधर्मिधर्म्मत्वेन दृष्टस्य धूमसामान्यस्य स्मृतिहेतुत्वात्। सर्वव्याप्यव्यापकाग्रहे कथं सर्वोपसंहारेण प्रतीतिरिति चेत्, न; अनुमानतस्तत्संभवात्। कथम्? ये धूमविशेषा दृष्टा अथवा देशान्तरस्थत्वेन भूतत्वेनानागतत्वेन सम्भाव्यन्ते, सर्वेऽग्निव्याप्ता धूमत्वादुपलब्धधूमवत्। धूमवन्तः प्रदेशा वाग्निमन्तः साध्यन्ते; धूमवत्त्वात्;

तथोपलब्धप्रदेशवत् । ततो यद्यदित्थम्; तत्सर्वं तथैवेत्येवं सर्वोपसंहारेण स्मृतिरपि भवति । एवं सति परिशेषात् मानसं प्रत्यक्षं व्याप्तिग्राहकं न वक्तव्यं परिशेषस्याऽसिद्धत्वात् ।

## ❀ वस्तुतो मनस एव व्याप्तिग्राहकत्वम् ❀

[1]यदि पुनः पूर्वनीत्याऽविनाभावग्रहणं समर्थयितुं न शक्यते तदाविशिष्टप्रतीत्यन्यथाऽनुपपत्त्या मानसमेव प्रत्यक्षं समर्थनीयम् । यदि तर्हि सर्वोपि प्राणी योगी भूत्वा व्याप्तिं गृह्णाति, तदाग्न्यादिषु चक्षुरादि क्वापि न व्यापृतं [2]यस्य, तस्यापि यत्र यत्र धूमस्तत्र तत्र सर्वत्राग्निरिति प्रतीतिः स्यादिति, न; मनसः सर्वार्थत्वेऽप्यनियतसहकारित्वात्[3] । यथा स्मर्तव्यार्थस्मरणे मनसः क्वचित् संस्कारविशेष एव सहकारी तदपकृष्टसंस्कारसहितस्य तु संस्कारतारतम्यानुविधायिप्रणिधानादिसहकारिवैलक्षण्यमप्युपलभ्यते । एवं प्रत्यक्षज्ञानोत्पादने क्वचिद्धर्मविशेष एव सहकारी । तदपकृष्टापकृष्टतरादिधर्मसहितस्य तद्धर्मविशेषानुविधानन समाधानेन्द्रियज्ञानदेशादिविशेषोपि सहकारीत्यतः चक्षुरादिजनिताग्निविशिष्टधूमज्ञानसहितस्य मनसः सर्वोपसंहारेण व्याप्तिग्राहकत्वम्, तन्न चक्षुरादिव्यापारवैफल्यम् ।

## ❀ व्याप्तिग्रहे न सर्वदर्शित्वप्रसङ्गः ❀

नापि सर्वदर्शित्वप्रसंगः, सामान्याकारेणैव ग्रहणात् । न खलु योगिवदस्याशेषधूमव्यक्तिविषयं करतलामलकवदन्योन्यासाधारणाकारतयाऽपि ग्रहणम्, किं तर्हि? धूमाग्न्यादिसामान्याकारेणैव, यथा दूरस्थस्याटवीवृक्षेषु वृक्षसामान्याकारेणैव ग्रहणम्, न धवादिविशेषाकारेणापीति । यत्र यत्रेति च देशानामपि धूमाद्यधिकरणाकारेण सामान्येनैव ग्रहणम्; न तु मगधपर्वतादिविशेषाकारेणापि, तद्रूपाप्रतिभासनात् । न हि प्रत्यक्षज्ञानस्य विषयनियमोऽनुमानसाध्यः, किं तर्हि? यत्र ज्ञाने योऽर्थो यथा प्रतिभाति स तथा तस्य विषयः । तथा हि—चाक्षुषेपि

---

१. पूर्वोक्तप्रयोगे 'उपलब्धधूमवदिति' दृष्टान्ते सिद्धे सर्वोपसंहारवती व्याप्तिः सिद्ध्यति, तत्सिद्धौ चोपलब्धधूमवदिति दृष्टान्तः सिद्ध्यतीतरेतराश्रयमरुचिबीजमभिलक्ष्य पक्षान्तरमुपादत्ते—यदि पुनरिति ।

२. यस्य जात्यन्धस्येत्यर्थः ।

३. मनसो नियतसहकारित्वाभावान्न जात्यन्धस्तेन सर्वोपसंहारवतीं व्याप्तिं प्रत्येतीति भावः ।

पुरुषादिज्ञाने क्वचित् केनचिद्विशेषेण समस्तेन व्यस्तेन वा विशिष्टः सोऽर्थः प्रतिभाति, न सर्वत्राविशेषेणेति। तस्माद् दृष्टादिसहकारिविशेषनियमितस्य मनसो व्याप्तिग्राहकत्वान्न सर्वथा सर्वार्थग्रहणप्रसंगोऽत एव नाऽनुमानवैयर्थ्यम्। यथा ग्रहणं स्मरणं भवति, तेन स्वर्गादिष्ववस्थिता एवंभूता अर्था मया दृष्टा इत्यनस्मरणं न भवति; तद्रूपेणाऽग्रहणात्।

## * नाप्यतीन्द्रियव्यवहारलोपः *

अतीन्द्रियव्यवहारविप्रतिपत्त्योरभावोपि न प्राप्नोति, विशेषाकारेण ग्रहणाऽनभ्युपगमात्। न हि यत्किञ्चिद् कृतकम्, तत्सर्वमनित्यमित्यस्मिन् विज्ञाने धर्माधर्माद्याकारेणापि सर्वमनित्यं प्रतिभाति। नापि यत्र क्वचिद्धूमस्तत्र सर्वत्राग्निरित्यत्र च ज्ञाने तार्णपारणपर्वताधिकरणत्वाद्याकारेण सर्वोग्निः प्रतिभाति। किन्तु सामान्याकारेणैवाऽतस्तद्दृष्टाकारापेक्षयाऽतीन्द्रियव्यवहारो विप्रपत्तिश्च भवतीति।

## * सामान्यव्याप्त्या तादृगानुमानमित्याक्षेपः तन्निरासश्च *

नन्वेवं तर्हि सामान्याकारेणैवानुमानं स्यात्--यत् कृतकं तदनित्यं यत्र धूमस्तत्राग्निरिति। ततश्च सिद्धसाधनं पर्वतेऽग्निः, शब्दश्चानित्य इत्यनुमानं न स्यात्, तेनाकारेणाविनाभावस्याऽगृहीतत्वात्। अन्यथा हेषितादितार्णाद्याकारेणाप्यनुमानं स्यात्। न चैतदस्ति न हि भवति यस्मात् कृतकः शब्दस्तस्मादयं हेषितः केकायितश्चेति। यस्मादत्र धूमस्तस्मादत्र तार्णोग्निः, पार्णश्चेति। नैतदस्ति, चक्षुरादेरिव नियतविशेषसिद्धौ साधनस्य सामर्थ्यावधारणात्। न हि स्त्रियां व्यापृतं चक्षुः सर्वतद्विशेषं गृह्णाति। न चाकिञ्चिदित्युपपद्यते। यत्र तस्य सामर्थ्यं तस्यैव ग्रहणात्। लिङ्गस्य हि साध्यधर्मिसंबंधविशेषसिद्धावस्ति सामर्थ्यं तेन तमेव साधयति। न तार्णादिविशेषं तत्र सामर्थ्याभावात्। किं तत् सामर्थ्यमिति चेत्? व्याप्तिग्रहणोपकृतं पक्षधर्मत्वग्रहणम्, ततः साध्यधर्मिसम्बन्धविशेषसिद्धेः। तथा हि—गृहीताविनाभावो धूमः प्रदेशे यत्रैवोपलभ्यते, तत्रैवाग्निबुद्धिं जनयति। यदि पुनः साध्यधर्मिणि धूमसद्भावेपि तत्सम्बन्धी अग्निर्न भवेत्तदा यत्र यत्र धूमस्तत्र तत्राग्निरिति मिथ्यैवेयं प्रतीतिः स्याद्, धूमसद्भावो वा न तत्र वास्तवः स्यात्। न चैवं तार्णादिविशेषाऽसम्भवेपि व्याप्तिपक्षधर्मत्वग्रहणयोरन्यतरस्याऽपि विरोधोस्ति येन तत्सिद्धिरपि स्यात्।

भवतु व्याप्तिग्रहणं पक्षधर्मत्वग्रहणं वा मिथ्या, किन्नश्छिन्नमिति चेत्, न;

सत्यज्ञानेन तुल्यन्यायत्वादस्यापि सत्यत्वसिद्धेः। य एव हि तवाभिप्रेतस्य ज्ञानस्य सत्यत्वे देशान्तराधाराऽबाध्यत्वादिलक्षणो लोकप्रसिद्धिलक्षणो वा न्यायः, स खलु मम पक्षेऽपि धर्मत्वव्याप्तिज्ञानस्यापि सत्यत्वे समान इति कथमस्य मिथ्यात्वम् ? कस्यापि न सत्यत्वमस्तीत्यभ्युपगच्छतः स्ववचनविरोधोपि स्यात्। यतोऽस्यैव वाक्यस्य सत्यत्वे कथं कस्यापि न सत्यत्वमस्ति ? अस्याप्यसत्यत्वे कथं सर्वस्याऽसत्यत्वं प्रतिपादयति ? तन्न, पक्षधर्मत्वव्याप्ति-ग्रहणस्याऽप्यसत्यत्वं तत्सत्यत्वे चाऽवश्यं पक्षसम्बन्धाऽवच्छिन्नस्याऽग्नेः सिद्धिरभ्युपगन्तव्या। बहिर्व्याप्त्यन्तर्व्याप्तिप्रसादादुभयसिद्धिरिति पूर्वाचार्याः। यतः पक्षाद्बहिर्देशे महानसादावग्निमात्रेण धूमस्य व्याप्तिः प्रतिपन्ना ततो धूमादग्निः सामान्येन सिद्ध्यति। यतस्तु पक्षान्तर्देशे धूम उपलभ्यते। ततस्तत्सम्बद्धाग्निविशेष एव सिद्ध्यति, न तार्णादिः; तत्सिद्धौ प्रतिबन्धानु-पलब्धेः। तार्णादिविशेषाविनाभूतं तु धूमविशेषं यो विवेचयितुं शक्तः, तस्य तद्विदस्तार्णादिविशेषानुमानमपि भवति। एतेन शब्दविशेषानुमानं व्याख्यातम्। तदा तु शब्दे कृतकत्वमात्रमुपलभ्यते, तदा ततः सामान्येन कारणमात्रमनित्य-त्वमात्रं चानुमीयते। तस्य शब्दसम्बन्धविशेषसिद्धिरपि पक्षधर्मत्वबलादग्निवद् द्रष्टव्येति। एवमन्येष्वथानुमानान्तरेषु न्यायस्तुल्यो द्रष्टव्यः। तस्मादविना-भावसम्बन्धस्य ग्रहीतुं शक्यत्वादनुमानं प्रमाणमित्युक्तम्। एतेनैतदपि निराकृतं [1]यदाह—"नैवास्माभिः सर्वथा प्रमाणत्वमनुमानस्य प्रतिषिध्यते, ये तु लौकिकं पन्थानमुत्सृज्य त्रिलक्षणं चतुर्लक्षणं वा लिङ्गमनुमेयप्रतीत्यर्थं वर्णयन्ति, तन्निराकरणं क्रियत इति।

## ❀ लोकविरोधः तत्परिहारश्च ❀

स्यादेतदेवं यदि लौकिकानामप्रसिद्धान्वयव्यतिरेकानाधारलिङ्गदर्शनादनुमानं भवति। यावता तेपि गृहीताविनाभाविलिङ्गं यत्र पश्यन्ति तत्रैव तद्व्यापक-मनुमिन्वन्ति। न हि लौकिका ग्रामे धूमं दृष्ट्वाऽटव्यामग्निं प्रतिपद्यन्ते। नाप्य-पूर्वशब्दाङ्कुरादिकार्यग्रहणात् ताकारणमनुमिन्वन्ति। तत्कथं वयं लौकिकं पन्थानं त्यक्तवन्तः ? ननु च लौकिका धूमं दृष्ट्वाऽथाग्निं प्रतिपद्यन्ते, न तु यूयमिव पक्षधर्मत्वादिव्यवहारं कुर्वन्ति। तस्मादसाधवो यूयमिति, नैतदस्ति; यदि नाम व्यवहारलाघवार्थं सत्तादीनां प्रत्ययसंज्ञावत् पर्वतमहानसादीनां पक्षसपक्षादिसंज्ञाः कृताः कथमस्माकमेतावतैवाऽसाधुत्वम् ? न हि संज्ञान्तरेण

---

१. यदाहेति। चार्वाक इति शेषः।

व्यवहाराऽर्थान्यथात्वं भवति। न च लोके पद्मादिसंज्ञा न प्रसिद्धा इत्येतावतैव तदर्थाभावः सिद्धयति, अतिप्रसंगात्। तदर्थस्तु लोकेपि सिद्ध इत्युक्तम्। प्रसिद्धस्याप्यनुमानलक्षणस्याभिधानमनुवादार्थम्। अनुवादे चात्मादितद्विपर्ययानुमानयोर्विधिप्रतिषेधौ प्रयोजनमित्युक्तम्। एवं चात्यन्तादृष्टार्थानुमानस्यापि निराकरणं न युक्तम्, धूमाद्यनुमानेन समानयोगक्षेमत्वात्।

## * विशेषविरुद्धादिदोषनिरासः *

तथा च सति विशेषविरुद्धादेरपि निरवकाशत्वाददूषणत्वम्। तथा हि—यदि विशेषविरुद्धादिदूषणं धूमाद्यनुमानस्य नेष्यते, तदास्य सर्वत्रगत्वं विरुध्यते। प्रतिपादितं च सर्वत्रगत्वम्, न चास्ति विशेषो येन धूमाद्यनुमानं न निवर्तयत्यनुमानान्तरं च सर्वमेव निवर्तयति।

## * अनुमानस्याप्रमाणत्वे लोकविरोधः स्ववचनविरोधश्च *

अथ धूमाद्यनुमानस्यापि तद्दूषणमेवेष्यते, तदा सर्वलोकव्यवहारविरोधः स्ववचनप्रवृत्तिविरोधश्च—यद्यनुमानं न प्रमाणं तदार्थविशेषप्रत्यायनार्थं वचनविशेषोच्चारणं न स्यात्। अनुमानमप्रमाणमविनाभावसम्बन्धस्य ग्रहीतुमशक्यत्वादित्यादिवाक्यं यावदुच्चारयसि, तावदनुमानमप्रमाणं प्रमाणं वा सम्यगर्थाववोधसाधानादित्यादिवाक्यं कस्मान्नोच्चारयसि? कस्मादनुमानमप्रमाणं यतः पूर्वोक्तस्यापि वाक्यस्य परावबोधोत्पादने सामर्थ्यानवधारणात्। तथा सुखार्थं क्षीरगुडादिकं यावदास्वादयसि, तावदग्निविषादिकं कस्मान्नास्वादयसि? तथा कूपकण्टकादिवर्जनसुमार्गपादविहरणादिष्वप्यनुयोगः कार्यः। न ह्यमुतः साधनात् सुखं मे भविष्यति, अमुतः साधनादनर्थ इत्यनुमानं विनाऽन्यः प्रतिपत्त्युपायोस्ति। अपि चानुमीयतेनेनेत्यनुमेयोऽर्थः, सम्यक् परिच्छिद्यते येन तदनुमानमुक्तम्, ततश्चानुमानं चाप्रमाणं चेति व्याघातादयुक्तम्।

पराभिप्रायेणाननुमानमप्यनुमानमुक्तमतो न विरोध इति चेत्। अनुमानं विना कथं पराभिप्रायं ज्ञातवानसि? न च त्वन्मते किञ्चिदप्यनुमानमस्ति, यत्साधर्म्यादननुमानेप्यनुमानशब्दः प्रवर्तते प्रत्यक्षाभासेषु प्रत्यक्षशब्दवत्। अपि चानुमानमप्रमाणं केन प्रतिपादयति? न हि प्रत्यक्षेणानुमानस्याप्रामाण्यं प्रतिपत्तुं परं च प्रतिपिपादयिषितुं कश्चिच्छक्नोति। अनुमानस्य चाविशेषेण प्रामाण्यं त्वया निराकृतं शब्दादेस्तु सुतरां प्रामाण्यं नेष्टं सत्यानृतसंदेहैरित्यादिदूषणात्। तस्मादनुमानप्रमाणमुन्मत्तवाक्यवदप्रमाणकमेवेति। यत्पुनरत्रोक्तम्—परप्रसिद्धेन स्वप्रामाण्यमनभ्युपगम्याप्रामाण्यं प्रतिपाद्यते। न

चोभयसिद्धमेव प्रमाणं यस्माद्वचनात्मकमनुमानं वक्तुर्न प्रमाणमथ च वक्ता तेन परं प्रतिपादयति, परप्रतिपादनार्थत्वाच्च प्रयासस्य तावस्य उभयप्रसिद्धेन प्रयोजनमिदं चात्र सम्प्रधार्यं—स्वतोऽप्रसिद्धो हेतुर्दृष्टान्तो वा यस्य प्रसिद्धस्तं प्रत्युपादीयमानः परं प्रत्याययति ? उत नेति ? न च शक्यं वक्तुम्—प्रत्याययतीति, तस्मादुभयप्रसिद्धिरकारणमिति, तदेतदयुक्तम्; यतोऽनुमानस्याप्रमाणत्वे परप्रसिद्धिरेव कुतस्त्वया निश्चिता ? न हि शरीरमिव बुद्धिः प्रत्यक्षतः, शरीरस्वरूपनिश्चयेपि बुद्धिस्वरूपे सन्देहदर्शनात्। एवं हेतोर्दृष्टान्तस्य च परप्रसिद्धत्वं तेन च प्रतीतिर्भवत्येवेति। तदेतत्सर्वं जात्यन्धशुक्लवलाकादिनिदर्शनवदनुपपन्नमेवेति।

[1]तद्वचनात्परप्रसिद्धिरवगम्यत इति चेत्, तत्किमिदानीं परवचनमेव प्रमाणत्वेन त्वयाङ्गीकृतम् ? नैवमिति चेत्, परप्रसिद्धस्तद्वचनादवगम्यते न च तत्प्रमाणमित्यहो मोहस्य माहात्म्यम् ? येनैवंविधं सत्सु मध्ये व्याहतं वाक्यमुच्चार्यते। न हि प्रमाणस्य विषाणे स्तः, किन्तु येनार्थोवगम्यते, तदेव प्रमाणमिति। वक्तुरभिप्रायमात्रसूचकत्वे त्वनुमानत्वमेववचनस्य प्राप्तम्, न च स्वयंप्रतिपन्नेन हेतुना दृष्टान्तेन वा परप्रत्यायनं युक्तम्। न हि अप्रतिपन्नः प्रतिपादयिता कश्चिदुपपद्यते। न हि बालगोपालादीनां शास्त्रार्थप्रतिपादनेऽधिकारोस्ति। जात्यन्धादयो हि न रूपादिगुणदोषविचारेधिक्रियन्ते। तस्मात् परप्रतिपादनार्थत्वाच्च प्रयासस्येत्याद्यप्ययुक्तम्।

यच्चोक्तम्—वचनात्मकमनुमानवक्तुर्न प्रमाणमिति, तदप्यचारु; यदि हि वक्तुस्तेन प्रमिति र्न जनिता, तदासौ जनिता तदासौ वक्ता कथमनवधारितसामर्थ्यं वचनं लिङ्गं वा परप्रतिपादनायोपदिशति यत्किञ्चिद्वोपदिशेदनवगतशक्तित्वाविशेषात्। न चास्माभिर्नियमः क्रियते यैव व्यक्तिरुभयोः प्रमितिं जनयति, सैव परप्रत्यायनायोपदेष्टव्यः। यतः प्रदीपेन कश्चिदर्थविशेषं दृष्ट्वा तन्निर्वाणेप्यन्यस्योपदिशति त्वमपि प्रदीपं ज्वलयित्वा तमर्थं पश्येति। अन्धोपि पूर्वदृष्टसामर्थ्यमेवोपदिशति। जात्यन्धवदिति चेत्, स्यान्मतम्—यथा जात्यन्धः प्रदीपं कदाचिन्न दृष्टवान्, नापि तेन प्रकाशितं रूपान्तरम्, तथाप्यसौ चक्षुष्मन्तं प्रत्युपदिशति—प्रदीपेन रूपं पश्येति। तद्वद्वयमपि हेत्वादिस्वरूपं तत्साध्यानुमेयस्वरूपं न जानीमस्तथापि महानुभावेन परानुग्रहोऽवश्यं कर्तव्य इत्यज्ञातैरेव हेत्वादिभिस्तद्विदं प्रतिपादयामः। स्वयममुक्तस्य यथा निडादिभ्यः परं मोचयतो महानुभावतैव नोपालंभस्तद्वद-

---

१. तद्वचनात् = नैयायिकादीनां परेषां वचनादित्यर्थः।

स्माकं स्वयमव्युत्पन्नानामिव परं व्युत्पादयतां महानुभावतैव संभवति, न तूपालम्भ इति। स्वयमव्युत्पन्नः परं महानुभावतया व्युत्पादयतीति केनैतच्छ्रद्धीयते ? न हि जातमात्रस्यैवोपाध्यायत्वं युक्तम्। जात्यन्धस्तु न तावत् प्रदीपाद्युपदेशेन चक्षुष्मन्तं व्युत्पादयन्नुपलभ्यते। एतावत्तु यदि संभाव्यते स्वप्रतिभासामर्थ्यादाप्तवचनेभ्यः प्रदीपस्य चक्षुःसहितस्य रूपादिप्रकाशकत्वं जात्यंधेन यद्यवगतं, तदासौ तथोपदिशत्यपि। त्वं पुनः कथंचिदपि न हेत्वादेः साधनभूतस्य दूषणभूतस्य वा परार्थप्रतिपादनसामर्थ्यं प्रतिपन्नोसि, तत्कथं जातमात्रवदव्युत्पन्नः परं प्रतिपादयसि ? अप्रतिपन्नसामर्थ्येन हेत्वादिना परप्रतिपादने च बुद्ध्यादिलिंगैरात्माद्यस्तित्वं तज्ज्ञानादपवर्गं च कस्मान्न प्रतिपादयसि ? येन महानुभावतापि तव ज्यायसी भवेदिति।

न वयं किञ्चित्प्रतिपत्तारः प्रतिपादयामो वा, किं तर्हि ? परेषां पर्यनुयोगमेव कुर्म्मः, सूत्राणामपि पर्यनुयोगार्थत्वादिति चेत्, यत्किञ्चिदेतदिति, यदि हि व्यर्थमेव पर्यनुयोगं करोषि, तदोन्मत्तवदुपेक्षणीयोसि। अथ पर्यनुयोगेनाऽयं[1] मदभिप्रायं ज्ञात्वा यदुत्तरं दास्यति, तेन वयमस्याभिप्रायं ज्ञात्वा गुणदोषत्वेन परीक्षिष्यामह इत्येतदर्थं पर्यनुयोगं करोषि; तदा कथं पराभिप्रायप्रतिपत्तिसाधनमनुमानं प्रमाणं नाभ्युपगच्छसि ? न च वादिप्रतिवादिनोः पर्यनुयोगमात्रेण तदुत्तरमात्रेण वा कश्चिदर्थः सिद्ध्यति, जयपराजयौ वा भवतः। किं तर्हि ? स्वपरपक्षयोः साधनदूषणाभिधानेन। प्रत्यक्षेणैव (वा छात्रेणैव वा) स्वपक्षः साधयितुं प्रतिपक्षो दूषयितुं न शक्यते। सर्वत्रानिश्चये च तत् संभावनापि न स्यादतो न संभावनयापि साधनदूषणोपन्यासोऽत्यन्तसंदिग्धस्येति। अपि चैते विरुद्धादिहेतवः किमनुमाने प्रामाण्यसंदेहोत्पादनायोपन्यस्ताः ? आहोस्विदप्रामाण्यनिश्चयोत्पादनायेति ? यदि संदेहोत्पादनाय, किमात्मनः ? अथ परेषामिति ? यद्यात्मनस्तदा व्यर्था विरुद्धादयः, तैर्विनाप्यनुमाने संदेहस्तवास्त्येव। परेषां तु विरुद्धादिभ्यः संदेहो भविष्यतीत्यनुमानाऽप्रामाण्ये कुतस्त्वयावगतम् ? अथामुतः परेषां संदेहो भविष्यति कदाचिन्नवेत्येवं संदेहेनैव विरुद्धादय उपन्यस्यन्ते, तथापि व्यर्थस्तदुपन्यासस्तदनुपन्यासेपि तदर्थसंभवात्। व्यर्थत्वेपि संदेह इति चेत्, सोयं संदेहग्रहग्रहीतः संदेहकारणेपि सामान्यधर्मदर्शनादौ यदि निश्चयं नाभ्युपगच्छति, ततोऽचिकित्स्यत्वादुपेक्षणीय एवेति। अथ विरुद्धादयोऽनुमानाप्रामाण्ये निश्चयोत्पादना-

१. अयं नैयायिक इत्यर्थः।

स्वभावतः साध्येन साधनस्य व्याप्तिरविनाभावः ।

योपदिश्यन्ते, तथा सति निश्चयोत्पादकत्वेन प्रामाण्यमेवाऽननुमानवैधर्म्याद-नुमानत्वं चेति कथं सर्वानुमानाऽप्रामाण्यं ? परस्यापि प्रतिपत्तिं कुर्वदननुमानं-प्रमाणमेव परकीयेन्द्रियवत् । यदप्युक्तम्—तत्रापि त्रयमित्यनवस्थेति, तदप्यभि-प्रेतार्थाऽसिद्धिप्रसंगादयुक्तम् । विरुद्धादित्रयादनुमानस्याप्रामाण्यसिद्धिरभिप्रेता, तच्च विरुद्धादित्रयमनवस्थया दूषितमित्यसाधकमेव । अनवस्थया दूषितस्यापि स्वसाध्यसाधकत्वे, मूलानुमानस्यापि स्वसाध्यसाधकत्वं स्यात् ।

अथ मतम्—यथा मयोपन्यस्तं विरुद्धादित्रयमनवस्थया दूषितं स्वसाध्यं न साधयति, एवं त्वयोपन्यस्तमात्माद्यनुमानं विरुद्धाद्यनवस्थया दूषितमित्यसाधक-मेवात्मादेरिति, नैतदेवम्; यतस्त्वयोपन्यस्तस्य विरुद्धादेस्त्वदभ्युपगमादेव दुष्टत्वं सिद्धं, मया तु स दोषो नाभ्युपगतः, कुत आत्माद्यनुमानस्य दुष्टत्वम् ? न हि यथाऽहं राजाधिक्षेपं कृत्वा जिह्वाछेदनादिदुःखमनुभवामि, तथा त्वमनुभवेत्य-भिधानमात्रादनभ्युपगतराजाधिक्षेपोपि तद्दुःखमनुभवति । मूलानुमानबाधि-तत्वाच्च विरुद्धादेरदूषणत्वम् । यथा पूर्वोत्पन्नमपि चन्द्रैकत्वागच्छद्वृक्षादिज्ञानं सर्वलोकसंवादप्रवृत्तिसामर्थ्यं निश्चितप्रामाण्यं द्विचंद्रादिज्ञानस्याक्षजत्वाविशेषेपि बाधकमेव, न तु द्विचन्द्रादिज्ञानेनोत्तरकालभाविनापि चन्द्रैकत्वादिज्ञानं बाध्यते; तथा धूमाद्यनुमानज्ञानं सर्वलोकसंवादप्रवृत्तिसामर्थ्यं निश्चितप्रामाण्यं विरुद्धादि-ज्ञानस्य बाधकमेवाभ्युगन्तव्यम् । अन्यथाक्षजज्ञानानामपि बाध्यबाधकभावो न व्यवतिष्ठेत, ततश्च प्रत्यक्षमपि प्रमाणं न सिद्धेत्तथा च तत्त्वोपप्लव एव स्यात्, तत्र दूषणं बहुधा प्रागुक्तमिति । तस्माद् धूमाद्यनुमानज्ञानेन निश्चित-प्रामाण्येन बाधितस्य विरुद्धादेर्दूषणाभासत्वमेव द्रष्टव्यम् । एवमात्माद्यनु-मानेपि विरुद्धादेस्तुल्यप्रकारत्वाददूषणत्वमेव । अविनाभावबलहीनत्वाच्च न विरुद्धादिहेतवो मूलहेतुं बाधन्ते । मूलहेतुस्त्वविनाभावबलोपेतत्वाद्धि विरुद्धादिहेतून् बाधते एवेति ।

## ❋ व्याप्तिस्वरूपनिरूपणम् ❋

कः पुनरयमविनाभाव इति? उच्यते—स्वभावतः साध्येन साधनस्य व्याप्ति-रविनाभावः । योयं साध्यसाधनयोः स्वभावेनावस्थितो नियमः साध्यस्य व्याप-कत्वं साधनस्य व्याप्यत्वमिति, सोविनाभाव इति । न च यथा धूमस्याग्निना-व्याप्यत्वं स्वभावत एव नियतं, तथा दूषणवादिप्रतिबाद्यभिमतसाधनसाध्यधर्मा-धिकरणत्वाभावेनापि व्याप्यत्वं धूमस्य स्वभावेन नियतमस्ति । तस्य दूषणवादि-

प्रतिबाध्यनवस्थितत्वेनाऽनवस्थित्वात्। न हि साधनवादित्वं दूषणवादित्वं च पुरुषे व्यवस्थितमस्ति। नापि तदुक्तप्रकृतसाधनसाध्यत्वं तद्विकलं च स्वभावेन व्यवस्थितमर्थेष्वस्ति। अन्यथा प्रकृतसाधनसाध्यत्वाभाववत्प्रकृत दूषणवाद्युक्तप्रतिषेधप्रतिषेध्यत्वाभावोप्यभ्युपगन्तव्यः, तुल्यन्यायत्वात्। ततः किं ? प्रकृतसाधनसाध्यत्वप्रतिषेधो वा भवेदुत तदभाव इति। एकस्याप्यसंभवे स्वभावव्यवस्थितत्वविरोधः, परस्परपरिहारस्थितिविरोधान्नोभयोः सिद्धिरिति।

एतेन धर्मधर्मिणोरन्यतरत्वादित्येवमादीनामविनाभावः प्रत्युक्तः, कल्पनामात्रेणैषामपि व्याप्यव्यापकभावान्न त्वग्निधूमवत् स्वभावतोस्ति व्याप्तिः। स्वभावव्याप्तौ हि धूमादग्निवन्नियतधर्मसिद्धिरेव स्यान्नोपप्लवः। अन्यतरत्वादिभ्यस्तु उपप्लवो दृश्यते। तथा हि—नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवदनित्यत्वेप्ययं समानः। तथाकाशशब्दयोरन्यतरत्वादाकाशवद्, घटशब्दयोरन्यतरत्वाद् घटवदिति नित्यानित्यत्वोपप्लवः। तथा नित्यवाद्युपन्यस्तसाधनसाध्यधर्माधारः शब्दो न भवति, साध्यधर्मशब्दयोरन्यतरत्वात् साध्यधर्मवद्, अनित्यवाद्युक्तसाधनसाध्यधर्माधारः शब्दो न भवति, हेतुदृष्टान्तौ पूर्ववदिति दूषणोपप्लवः। तथा न प्रकृतसाध्यधर्माधिकरणधर्मिधर्मयोरन्यतरः साध्यधर्मो धर्मित्वाद् घटादिवदितीत्येतत्प्रतिषेधप्रतिषिद्धसाध्यधर्मिधर्मयोरन्यतरो न साध्यधर्मो धर्मित्वात्, घटादिवत्। तथा न प्रकृतसाध्यधर्मवानयं पक्षः पक्षविपक्षयोरन्यतरत्वाद्विपक्षवत्, पक्षखरशृङ्गयोरन्यतरत्वाच्च खरशृंगवत्। तथा वादिप्रतिवादिविप्रतिपत्त्यनास्कन्दिताग्निव्यतिरिक्ताग्निमानयं प्रदेशो न भवति, प्रदेशत्वात्; सत्त्वज्ञेयत्वादिभ्यश्च तदन्यप्रदेशवदित्येतत्प्रतिषेधप्रतिषिद्धाग्निमानयं प्रदेशो न भवति, प्रदेशत्वादिहेतुभ्यस्तदन्यप्रदेशवत्। अथवा वादिप्रतिवादिविप्रतिपत्त्यनास्कंदिताग्निव्यतिरिक्ताग्निप्रतिषेधवानयं प्रदेशो न भवति पूर्वोक्तहेतुभ्यस्तदन्यप्रदेशवत्। तथा न प्रकृतानुमानविषयाग्निमानयं प्रदेशः खरशृंगाशृंगत्वात् खरशृंगवदित्येतत्प्रतिषेधप्रतिषिद्धाग्निमान्नायं प्रदेशः, खरशृंगाशृंगत्वात् खरशृंगवत्। अथवा न प्रकृतप्रत्यनुमानप्रतिषिद्धाग्निमानयं प्रदेशः, पूर्वोक्तहेतुदृष्टान्ताभ्यां तथा अतीतानागतकालव्यतिरिक्तकालविशिष्टास्मत्प्रतिवादिप्रयुक्तसाधनभावापन्नधूमसाध्यसिद्धिसमानकालघटो न घटः खपुष्पपद्मपत्रत्वात् पद्मपत्रवदित्येतत्प्रत्यनुमानात्मलाभसमानकालघटो न घटः, तावेव हेतुदृष्टान्तौ। अथवा अतीताऽनागतकालव्यतिरिक्तकालविशिष्टविवक्षितवादिप्रयुक्तसाधनभावापन्नधूमसाध्यसिद्धिविपर्ययसमानकालघटो न घटः, खपुष्पपद्मपत्रत्वात्, पद्मपत्रवदिति। तदेवमव्यवस्थितसाध्यत्वादन्यतरत्वादीनां न साध्येनाऽविनाभावोस्ति। न हि साध्याविनाभूतस्य धूमादेरव्यवस्थितसाध्यत्वं

**स द्विविधः, अन्वयव्यतिरेक भेदात। तत्रसाध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः।**

दृष्टं, लौकिकपरीक्षकाणामपि धूमादिदर्शनादग्न्यादिनिश्चयप्रवृत्तिप्राप्त्यर्थक्रियानिष्पत्तिव्यवस्थादर्शनादिति।

[1]एतेन सद्वितीयप्रयोगोपि निरस्तः यथाहुश्चार्वाकाः—अभिव्यक्तचैतन्यशरीरलक्षणपुरुषघटयोरन्यतरसद्वितीयो घटः, अनुत्पन्नत्वात्, कुड्यवदिति। चैतन्यविशिष्टः काय एव पुरुषो नाऽन्यः परलोकीति प्रयोगार्थः। अत्रापि नोक्तलक्षणोऽविनाभावोस्त्यव्यवस्थितसाध्यत्वात्, तथा हि—नित्यत्वादिधर्मकपुरुषघटान्यतरसद्वितीयो घटः, अनुत्पन्नत्वात्, कुड्यवत्; तथा विज्ञप्तिमात्रपरलोकिपुरुषघटान्यतरसद्वितीयो घटस्तत एव हेतोरित्येवं यत्किञ्चित्साधयितुमिष्यते, तत्सर्वमनेन साध्यत इति व्यवस्थितसाध्याभावः। न चायं प्रमाणस्य धर्मः, किन्तु व्यवस्थितसाध्यसाधनत्वम् घटेनैव च सद्वितीयत्वं कुड्यस्य दृष्टं, तद्दृष्टान्तेन कथं घटस्याभिप्रेतपुरुषसद्वितीयत्वं सिद्ध्यति ? अतिप्रसंगात्। तदुपगमादयोप्यनेनैव प्रत्युक्तास्तदुपगमस्यापि तदिच्छामात्रेण प्रवृत्तेरर्थविशेषेण स्वभावव्याप्त्यसंभवात्। असर्वज्ञाभ्युपगमस्यायथार्थस्यापि संभवात्। सर्वज्ञत्वं च दुर्ज्ञानं, यस्यापि सर्वज्ञत्वं संभाव्यते तेनाभ्युपगतोर्थ आगमार्थ एव, नानुमेय इति वक्ष्यामः। सर्वज्ञोक्तत्वेन तद्वचनस्य प्रामाण्यमात्रानुमानमिष्यत एव। तस्मान्न नवद्रव्यव्यतिरेकेण द्रव्यान्तरमस्ति, कणादेनाप्रतिपादितत्वात्। पञ्चविंशतितत्त्वव्यतिरेकेण तत्त्वान्तरं नास्ति, कपिलेनाप्रतिपादितत्वात्। ( विंशतितत्त्वव्यतिरेकेण तत्त्वान्तरं नास्ति, कपिलेनाप्रतिपादितत्वात् ? ) पञ्चस्कंधव्यतिरेकेण स्कंधान्तरं नास्ति, बुद्धेनाप्रतिपादितत्वात्, खपुष्पवदित्येवमादेरविनाभावः प्रत्युक्तः। तस्माद्युक्तमुक्तं स्वभावतः साध्येन साधनस्य व्याप्तिरविनाभाव इति।

## ❀ अविनाभावस्य भेदाः ❀

स द्विविधोऽन्वयव्यतिरेकभेदात्। विधिप्रतिषेधप्रतीतिभेदादित्यर्थः। विधिमुखेन प्रतीयमाना व्याप्तिरन्वयः, प्रतिषेधमुखेन प्रतीयमाना व्याप्तिर्व्यतिरेक उच्यते। ननु च प्रदेशविशेषस्थोग्निः साध्यस्तेन चाप्रतीतेन साधनस्य व्याप्तिः कथं प्रतिपत्तुं शक्यते ? साध्यप्रतीतौ च व्यर्थं व्याप्तिग्रहणमिति, एतत्परिहारार्थमाह —साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः प्रतीयत इति वाक्यशेषः। एतदुक्तं भवति—सकलाग्निधूमव्यक्त्यनुगत एक एवाऽन्वयः, स एकत्र गृहीतोन्यत्रापि गृहीत एव धूमत्वादिवत्, तदेतदन्वयलक्षणं पूर्वंप्रसंगेन

१. तुलना—प्रमाणवर्तिकालङ्कारः पृ० ४६६।

**साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिर्व्यतिरेकः। साधनम् लिङ्गम्। तद् द्विविधम्—दृष्टं सामान्यतो दृष्टञ्चेति।**

---

व्याख्यातमिति। तथा साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिर्व्यतिरेकः प्रतीयत इति शेषः। साधनमेवाविवक्षितविशेषं सामान्यमुच्यते। तस्याभावो धूममात्राभाव इत्यर्थः।

साध्यं च द्विविधं धर्मविशिष्टो वा धर्मी धर्मिविशिष्टो वा धर्म इति। धर्मिविशिष्टो धर्म इति न युक्तं, विशेषणस्य धर्मत्वाद्विशेष्यस्य च धर्मित्वादिति चेत्, न; साधनधर्माश्रयत्वेन धर्मित्वस्य विवक्षितत्वात्। पराश्रयत्वमात्रेण च धर्मत्वं विवक्षितम्। भूतभाविलक्षणापेक्षया वा विशेष्ययोर्धर्मिधर्मव्यवहारः कृत इत्यदोषः। यदा धर्मी साध्यस्तदा साध्यस्य सामान्यमग्निमात्रमग्निमत्त्वं वा; यदा तु धर्मः साध्यस्तदा साध्यमेवाविवक्षितविशेषं सामान्यं, तदभावस्य साधनसामान्याभावेन व्याप्तिर्व्यतिरेकः। अथवा साधनस्य सामान्यं धूमत्वं तदभावेन, साध्यस्य सामान्यमग्नित्वं तदभावस्य, व्याप्तिर्यत्राग्न्यभावादग्नित्वानुपलंभस्तत्रधूमाभावाद्धूमत्वानुपलम्भ इति व्यतिरेकः। कृतकत्वादेस्तु सामान्याभावात् पूर्वकमेव व्याख्यानम्। अथवा साधनस्य सामान्यमस्तित्वमात्रम्, तच्च कृतकत्वादेरप्यस्ति, तेन कृतकत्वाद्यस्तित्वाभावेनाऽनित्यत्वाद्यस्तित्वाऽभावस्य व्याप्तिर्व्यतिरेक इत्युक्तं भवति। तत्र साधनसामान्यं व्याप्यं साध्यसामान्यं व्यापकमित्ययं व्याप्यव्यापकभावोऽन्वयः। साध्यसामान्याभावो व्याप्यः साधनसामान्याभावो व्यापक इत्ययं व्याप्यव्यापकभावो व्यतिरेक इति। "उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः" "तथा वैधर्म्यात्" (न्या० सू० १।१।३४–३५) इति सूत्राभ्यां व्याप्यव्यापकभावस्य द्वैविध्यं सिद्धम्।

## ❀ लिङ्गभेदाः ❀

साधनं लिङ्गम, तद् द्विविधम्—दृष्टं सामान्यतोदृष्टं च। चशब्दः स्वार्थपरार्थभेदेन च द्विविधमिति सूचयति। द्विविधग्रहणमुक्तप्रकारनियमार्थम्। उक्तप्रकारेणैव द्विविधं नियम्यते, न पुनः पूर्ववदादिप्रकारेणेति। सूत्रे तु दृष्टादिप्रकारेण द्वैविध्यं चशब्दसूचितं द्रष्टव्यम्। कार्यस्वभावभेदेन द्वैविध्यमनुपलब्धेस्तु प्रतिबन्धान्तराभावादत्रैवान्तर्भाव इति केचित्, तत्प्रतिषेधार्थं दृष्टं सामान्यतोदृष्टं चेत्युक्तम्, तादात्म्यप्रतिबन्धस्याऽसम्भवात्; तथा च वक्ष्यामः। तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टं, यथा धूमोऽग्नेरिति। स्वभावविप्रकृष्टार्थानुमापकं सामान्यतोदृष्टं, यथा रूपादिज्ञानं चक्षुरादेरिति।

## ❀ दृष्टलिङ्गनिरूपणम् ❀

प्रत्यक्षयोग्यता च पूर्वंदृष्टत्वेनैवावगम्यते। यस्माद् योऽर्थः पूर्वं प्रत्यक्षेण दृष्टः,स एव देशान्तरितः कालान्तरितो वाऽनुमीयतेऽतस्तदनुमानं दृष्टार्थविषयत्वेन दृष्टमुक्तम्। व्यक्तिभेदेऽप्येकसामान्यावष्टम्भात्, स एव दृष्टः स एवानुमीयत इत्युक्तम्। क्वचित्तु सैव व्यक्तिः शब्दादिकार्यविशेषेणान्येन वाऽनन्यसाधारण-लिंगविशेषेणाऽनुमीयते, तद्यथा—शब्दविशेषेण भ्रात्राद्यनुमानं, चित्रादि-विशेषेण दृष्टचित्रकाराद्यनुमानं, हस्त्यश्वरथछत्रादिविशेषेण दृष्टराजाद्यनुमानं, नक्षत्रादिविशेषेण नक्षत्रादिविशेषानुमानमिति।

## ❀ सामान्यतो दृष्टनिरूपणम् ❀

सामान्यतोदृष्टानुमाने तु न व्यक्त्येकत्वं, नापि जात्येकत्वं, वास्यादीनां चक्षुरादीनां च विलक्षणजातित्वात्तथारूपोपलब्ध्यादीनां छिदादीनां च नैकजातित्वं; तथापि क्रियामात्रस्य करणमात्रेणाऽव्यभिचारोपलम्भादनुमान-प्रवृत्तिरधिकरणसिद्धान्तबलाद्विशेषसिद्धौ चक्षुरादिव्यवहारोप्यतः सामान्य-मात्रेण दर्शनादनुमानं सामान्यतोदृष्टमुच्यते। यद्यपि सर्वानुमानेष्वपि सामान्यमात्रेणान्वयदर्शनम्, तथाप्यग्न्याद्यनुमेयं येन सामान्येन व्यवह्रियते व्यवहारिभिस्तदेवाग्नित्वादिसामान्यमन्यत्र दृष्टमतस्तदनुमानं दृष्टमुच्यते।

## ❀ सामान्ये सौगताक्षेपः ❀

ननु चाऽग्नित्वादिसामान्यं प्रत्यक्षग्राह्यं न युक्तं, वस्तुस्वरूपग्राहकं हि प्रत्यक्षं, वस्तु च व्यावृत्ताकारमेव नानुगताकारम्, तथा हि—

व्यक्तयो नाऽनुयन्त्यन्यदनुयायि न भासते।
ज्ञानादव्यतिरिक्तं चेत्कथमर्थान्तरं व्रजेत्॥

न तावत् व्यक्तयः परस्परमन्वाविशन्ति, तदेकीभावप्रसंगात्। एकव्यक्तित्वे च खत्ववन्न सामान्यं स्यात्। नापि ताभ्योऽर्थान्तरं सामान्यमस्ति भूतकण्ठेषु गुण-वदप्रतिभासनात्। न चाऽर्थान्तरादर्थान्तरेष्वभिन्नाभिधानप्रत्ययप्रवृत्तिर्युक्ताति-प्रसंगात्। सत्यपि सम्बन्धे संख्याऽवयव्यादिभ्यस्तदाश्रयेषु नाभिधानप्रत्ययानु-वृत्तिर्दृष्टान्ते। तस्मादनादिवासनानिर्मितोयं विकल्पबुद्धेरनुगताकारप्रतिभासो न सामान्यनिबन्धनः। स एव तर्हि बुद्धिप्रतिभासः सामान्यं तस्य ज्ञानात्मकत्वे-न वस्तुत्वं चेत्, नैतदपि युक्तम्;

ज्ञानादव्यतिरिक्तं हि कथमर्थान्तरं व्रजेत्।

ज्ञानस्य रूपं कथमर्थानां सामान्यं, तस्य तेष्वभवात् । अथवा ज्ञानादव्यतिरिक्तमेकस्मात् कथमन्यस्य व्यक्त्यन्तरभाविनो ज्ञानस्य रूपं स्यात् ? ततश्च ज्ञानान्तरं व्यक्त्यन्तरं वाऽव्याप्नुवत् ? कथं सामान्यं ? "तस्मान्मिथ्याविकल्पोयमर्थेष्वेकात्मताग्रहः" । न ह्यर्थाव्यतिरिक्तेन, अव्यतिरिक्तेन वा, केनचिदात्मना समानास्तथैषां ग्रहणं मिथ्याविकल्प एवेति ।

इतश्च नास्ति सामान्यम्—देशकालाऽवस्थाविशेषविनियतैकसंसर्गव्यवच्छिन्नस्वभावान्तरविरहादनेकवृत्तेरेकस्य न देशादिविशेषवताऽन्येन योग इति । अस्यार्थः—देशश्चकालश्चावस्था च ता एव विशेषाः, विशिष्यतेऽन्यत इति विशेषः, तेषु विनियतश्चासावेकश्च, तेन संसर्गस्तेन व्यवछिन्नं च तत्स्वभावान्तरं च, तस्य विरहादिति हेतुः । अनेकवृत्तेरित्यादिप्रतिज्ञाप्रयोगस्तु यश्चित्रकूटदेशे वर्तमानकाले यौवनावस्थायां च विनियतः पिण्डस्तत्संसर्गव्यवच्छिन्नं गोत्वं न देशान्तरकालान्तरावस्थान्तरविशिष्टेन पिण्डेन संयुज्यते । तत्स्वभावव्यतिरिक्तस्वभावरहितत्वात् पिण्डस्वरूपवदिति ।

## ❀ सौगतमतनिराकरणम् ❀

अत्रोच्यते—यत्तावदुक्तं व्यक्तयो नानुयन्तीत्यादि, तत्राविवाद एव, न व्यक्तिर्व्यक्त्यन्तरात्मिका भवति, नापि व्यक्त्यन्तरसंश्लिष्टेति । बुद्धिसामान्यनिराकरणेप्यविवाद एव । यत्तूक्तमन्यदनुयायि न भासत इति, तदसिद्धम्; सादृश्यस्य प्रतिभासनात् । भूतकण्ठेषु गुणवदप्रतिभासनादित्ययुक्तम्, स्वरूपेणैव सर्वार्थानां प्रतिभासनात् । अन्यरूपेणाप्रतिभासनादभावे हि नीलादीनामप्यन्योन्यस्वरूपेणाप्रतिभासनादभावः स्यात् । किञ्च च भूतकण्ठगतानामपि गुणवदप्रतिभासनादभावः स्यात् । अनेकसम्बन्धित्वेनेष्टस्य गुणवदप्रतिभासनादभावः साध्यत इति चेत्, न; चित्रादिज्ञानस्यानेकनीलादिसंबंधित्वेनेष्टस्य गुणवदप्रतिभासनेप्यभावासिद्धेः । कारणस्य वानेककार्यसंबंधित्वेनेष्टस्य गुणवदप्रतिभासनादभावस्य सिद्धिः स्यादिति । संबंधवैलक्षण्यान्न तद्वदप्रतिभासनेप्यभाव इति चेत्, संबंधवैलक्षण्यमत्राप्यस्त्येव भूतकण्ठेषु गुणः संयोगः, सामान्यस्य तु स्वाधारेषु समवाय इति । कार्यद्रव्यसंख्यादेस्तुल्यसंबंधत्वादेकाकारप्रत्ययहेतुत्वप्रसंग इति चेत्, न; पदार्थशक्तिभेदात् । यथा कार्यत्वादविशिष्टेपि रूपादीनां, पार्थिवत्वाविशेषेपि विषमध्वादीनां च विलक्षणकार्यदर्शनेन शक्तिभेदोऽवगतस्तथा कार्यद्रव्यसंख्यादेः सामान्यस्य चानेकवृत्तित्वाविशेषेपि प्रत्ययादिविलक्षणकार्यदर्शनेन शक्तिभेद एवानुमातुं युक्तो न स्वभावावगमस्तुल्यकार्यकर्तृत्वप्रसंगो वा कर्तुं युक्त इति ।

यदपि देशकालेत्यादि, तत्र तावत्प्रतिज्ञायां हेतौ च देशादिग्रहणमनर्थकम्। यदि हि देशादिविशेषरहितेनाऽन्येन योगः कस्यचित्सिद्धस्तदा देशादिविशेषवतेति विशेषणं सार्थकं भवेत्। तथैकसंसर्गव्यवच्छिन्नस्वभावान्तरविरहादित्युक्तेः कोऽति प्रसंगो? यन्निवृत्तये देशादिविशेषणमुपात्तम्। प्रतिज्ञापदयोश्च व्याघातः, अनेकवृत्तेरेकस्य धर्मित्वमन्येन योगो नास्तीति साध्यम्, तदिदं जननी वन्ध्येत्यादिवद्विरोधाद् युक्तम्; न ह्यनेकवृत्तित्वमेकस्याश्रयान्तरेण योगाभावे युज्यते, सामान्यरूपताप्याश्रयान्तरेणाऽसंबंधेऽनुपपन्ना। तन्न सामान्यस्यापि धर्मित्वम्। अथ पराभिप्रायेणानेकवृत्तित्वं सामान्यरूपताव। धर्मिणोभ्युपगम्यते, न तु पुनः स्वयमनेकत्र वर्तमानं सामान्यमभ्युपगम्य तस्याश्रयान्तरेण योगः प्रतिषिध्यत इति। स्वाभिप्रायेण तर्हि धर्मिणः किं स्वरूपमिष्यते? यद्यपोहलक्षणं विशेषलक्षणं वा बुद्धिलक्षणं वा, तदा तस्य व्यक्त्यन्तरेण योगाभावसाधने सिद्धसाध्यता। न चापोहादिलक्षणस्यैकव्यक्त्यापि संसर्गोस्ति ततश्चासिद्धो हेतुः स्यात्। यस्मादेकसंसर्गव्यवच्छिन्नस्वभावान्तरविरहादित्यस्यार्थ एकसंसर्गव्यवच्छिन्नस्वभावत्वादिति। ननु च प्रसंगसाधनमिदमुक्तं तेनाश्रयासिद्धत्वादिदोषो नास्ति। किमिदं प्रसंगसाधनमनुमानमननुमानं वा? यद्यनुमानम्, कथं तत्पक्षधर्मत्वादिविहीनमात्मानं लभेत? न चेदनुमानम्, कथं ततः साध्यसिद्धिः? प्रत्यक्षानुमानव्यतिरिक्तस्य त्वया प्रमाणत्वानभ्युपगमात्।

## ❀ प्रसङ्गसाधनेन सामान्यनिरासः ❀

परोपगमसिद्धिं धर्मिणं हेतुं चाश्रित्य प्रसङ्गसाधनमुच्यते इति चेत्, स परोपगमः सप्रमाणको वा? न वा? यदि सप्रमाणकः, तदा तत्सिद्धोऽर्थः त्वयाभ्युपगन्तव्यः,प्रमाणस्यापक्षपातित्वात्। अप्रमाणकश्चेत् पराभ्युपगमः; ततोऽसिद्ध एव धर्मो हेतुश्चेत्यप्रमाणमेव तदाश्रयप्रसङ्गः। ननु चादौ सप्रमाणकत्वं नावगम्यते, नापि परीक्षाकाले कस्यचिदभ्युपगमः, किं तु परीक्षितस्याभ्युपगमः। ततः पराभ्युपगमस्तावत्परीक्ष्यते सप्रमाणकोऽप्रमाणको वेति? यदि सप्रमाणकम्, तदाऽस्माकमप्यसावभ्युपगमः।

अथाप्रमाणकः, तदा पर एव उपालभ्यते। यावानर्थो युक्तिसामर्थ्यादापतति, स सर्वस्त्वयाभ्युपगन्तव्यः, प्रभाभ्युपगमे प्रदीपाभ्युपगमवत्। न च कश्चित्प्रदीपानभ्युपगमे प्रभामभ्युपगच्छति।

## ❀ व्याप्यव्यापकभावसाधनप्रकारः ❀

असति हेतौ मौलस्य हेतोर्व्याप्यव्यापकभावसाधनप्रकार एषः—यथैवमि-

दमपि स्यान्न चोभयमिति धर्मयोः सम्बन्धोपदर्शनात्। मौलो हेतुरुपलभ्यत्वे-नाभिमतस्य विवेकतोऽनुपलब्धिः प्रसङ्गविपर्ययो वा व्यापित्वान्नैकव्यक्ति-निश्चयतयोपलम्भः स्यादिति प्रसङ्गार्थो मौलस्य हेतोर्व्याप्तिसाधकः। [1]"यद्येव-मेकव्यक्तिनिष्ठत्वमिष्यते, तदा न देशादिविशेषवताऽन्येन योगोभ्युपगन्तव्यः। अथान्येन योगस्तदा तस्यैवैकव्यक्तिनिष्ठत्वं नाभ्युपगन्तव्यम्। न चैकव्यक्ति-निष्ठत्वं देशादिविशेषवतान्येन योगश्चेत्युभयं संभवति, विरोधाद्। मा भूत् एकव्यक्तिनिष्ठत्वं तस्याशेषव्यक्तिव्यापित्वादिति चेत्, नैतदस्ति; यत :—

साधारणत्वे तस्य स्याद् व्यापिताविति्तिरञ्जतः।
न हि तद्रूपमन्येन रूपेण ग्राह्यमभ्रमम्॥ ६७॥

यदि व्यापिसामान्यं व्यापितयैवाध्यक्षेण गृह्येत, न खलु विपरीतग्रहणं प्रमाणम्। व्यापिता चेत्प्रतीयते, ततः सकलव्यक्तिप्रतीतिरेव भवेत्। व्याप्याऽ-प्रतीतौ व्यापकतायाः प्रत्येतुमशक्यत्वात्। न च तथा स्वरूपं सामान्यं प्रतीयते, तस्मान्नास्तीति। यद्ययं स्थितः पक्षः स्यात्, भवेद्धर्म्यसिद्धिदोषः। परस्पर-विरोधप्रकटनपरमेवैतत् (एकत्वं व्यापितयोः) न वयमेवंभूतमर्थं प्रतिपत्तुं क्षमाः, एवंभूतस्यापरस्यादर्शनात्। अनुमानं च न दृष्टान्तं विनाऽवतरति।" (प्र० वा० अ० पृ० ४८१)

[2]"अथ मूर्तस्यैकस्य व्यापिता न सम्भवति, सामान्यं त्वमूर्तं तेन तत्र व्यापितैकत्वयोर्न विरोध इति, तन्न; अन्त्यविशेषकर्मादीनां व्यापित्वप्रसङ्गात्। सामान्यस्यापि वा न व्यापित्वम्, विशेषाभावात्। सामान्येतरभाव एव व्यापितेतरत्वे निबन्धनं भवतु, को दोष इति चेत्। ननु च प्रमाणाभाव एव दोषः। प्रत्यक्षमेव प्रमाणमिति चेत्, प्रत्यक्षेण व्यापितयेतरथा वा गृह्येत?

व्यापिताग्रहणं चेत् न प्रत्यक्षस्येयती गतिः।
यदशेषव्यक्तिव्यापिसामान्येऽस्य प्रवर्तनम्॥ ७०॥

अथ व्यक्तयः सर्वा न गृह्यन्ते, तथा तर्हि सामान्यमेकव्यक्तिसमन्वितं गृह्यमाणं कथं व्यापितया गृहीतम्? एकव्यक्तिविशेषणत्वे च विशेषवत्सामान्यं भवेत्। पर्यायान्तरेण व्यक्त्यन्तरविशिष्टताधिगमेपि दण्डादिवदेकत्वसिद्धिः कुतः? प्रत्यभिज्ञानाच्चेत्, न; तस्याप्रमाणत्वात्। तस्मादुक्तलक्षणं सामान्य-मप्रतीतेरेव नास्तीति।

---

१. प्र० वा० अ० पृ० ४८१।

२. तुलना—प्र० वा० अ० पृ० ४८२।

कथं तर्हि सामान्यस्याव्यापित्वं साध्यते ? धर्मित्वेन सामान्यस्य सिद्धौ हि तत्र धर्मस्य कस्यचित् साधनं स्यात्, नान्यथा; उक्तमत्र प्रसंगसाधनमेतन्न त्वयं मौलो हेतुः। यदि त्वया सामान्यं व्याप्यभ्युपगम्यते, तदा प्रमाणेन तत्तथा प्रतिपत्तव्यम्, प्रमाणनिबन्धनकत्वादभ्युपगमस्य। देशाद्यवच्छिन्नैकव्यक्तिसंसर्गावच्छिन्नस्वभावान्तरविरहिततया च प्रतीयमानं कथं व्यापि तदित्यभ्युपगन्तुं युक्तम्? प्रत्यक्षेण चाऽनेकवस्तुग्रहणेपि न ततो तद्व्यापितयान्यथा वा प्रतीयत इति नाप्रतीयमानाभ्युपगमो युक्तस्तन्न सामान्यमस्ति इति।" (प्र० वा० अ० पृ० ४८२)

## ❋ सामान्यनिरसनस्य निरासः ❋

तदेतत् सर्वमयुक्तम्, यत्तावत्सप्रमाणकत्वमप्रमाणकत्वं वादौ नावगम्यते, नापि परीक्षाकाले कस्यचिदभ्युपगम इति, तन्न; साध्यसिद्धेरादावेव धर्मिहेत्वादिस्वरूपं प्रमाणतोऽवगन्तव्यमन्यथा तद्बलेन साध्यसिद्धिः कथं स्यात्। न हि परोपगमादेव धर्मिहेत्वादेः सिद्धयङ्गत्वम्, खरविषाणादीनामपि कैश्चिदभ्युपगमात् सिद्धयङ्गत्वप्रसंगः। परीक्षितस्याऽभ्युपगम इत्यत्राविवादो, न केवलमभ्युपगमः। हेत्वादिभावोप्यपरीक्षितस्य न युक्तः, असिद्धत्वादिदोषप्रसंगात्।

यत् प्रभाप्रदीपवदित्युक्तम्, तन्न; कस्मात्? तयोर्व्याप्यव्यापकभावस्य प्रमाणतोऽन्यत्र प्रसिद्धौ प्रसंगात्मलाभात्। नन्वत्र व्याप्यव्यापकभावः क्वचित् प्रसिद्धः सामान्यादेरत्यन्ताऽसत्त्वाभ्युपगमात्। क्वचित् सत्त्वे वा प्रदीपादिवत् प्रसंगबलान्नात्यन्तासत्त्वं सिद्ध्यति।

## ❋ व्याप्यव्यापकभावसाधनप्रकारस्य निरासः ❋

यदप्युक्तमसति हेतौ मौलस्य हेतोर्व्याप्यव्यापकभावसाधनप्रकार एष इति, तदप्ययुक्तम्; प्रमाणद्वयनियमवादिनो हि कोऽन्यः प्रकारोस्ति? यतो व्याप्यव्यापकभावसिद्धिः स्यात्। अनुमानं चेत् प्रकारः, कथमसति हेतौ स्यात्? प्रत्यक्षं चेत् प्रकारः, कथं तत्स्वरूपं देशकालेत्यादिवाक्येन प्रभाम्युपगम इत्यादिना बोच्येत? कश्चायं मौलो हेतुः? यद्यनुपलब्धिः, सा यद्यदृश्यस्य, तदा कथमभावं साधयति पिशाचादेरिव? अथेयं दृश्यानुपलब्धि, तदा घटादिवन्नात्यन्ताभावः, सामान्यस्य क्वचिदुपलब्धत्वात्। अन्यथा कथं दृश्यत्वम्? परोपगममात्रेण दृश्यत्वे, बुद्धादेरपि केनचिद् दृश्यत्वाभ्युपगमे सत्यनुपलब्धेरभावः स्यात्। असिद्धत्वं चानुपलब्धेः प्रतिपादयिष्यामः।

## ❀ प्रसंगविपर्ययखण्डनम् ❀

अथ प्रसंगविपर्ययो मौलो हेतुः । प्रसंगविपर्ययः कीदृशो हेतुः ? यद्येकनिष्ठत्वादिति, तदोभयोरसिद्धिः । अथैकत्वादिति हेतुः, यदेकं तदसदेवेति क्व व्याप्तिः प्रसिद्धा ? एकत्वेन व्यापकत्वं वा साध्यत इति चेत्, न तर्हि सामान्यधर्मिणः प्रतिषेधो धर्मप्रतिषेधाद्, यथा रूपादेर्नित्यत्वादिधर्मनिषेधादिति । अनेकाश्रयत्वप्रतिषेधे कथं सामान्यमस्तीति चेत्, किमाश्रयः तर्ह्येकत्वादिति हेतुः ? "पक्षधर्मस्तदंशेन व्याप्तो हेतुः त्रिधैव स" इति ब्रुवता त्वयापि अनाश्रयो हेतुरहेतुरेवेष्टः । तस्मान्न मौलोपि हेतुः संभवति । योप्येकव्यक्तिनिष्ठत्वव्यापित्वयोर्विरोध उक्तः, सोनभ्युपगमेनैव परिहृतः; सामान्यस्यानेकव्यक्तिस्थत्वाभ्युपगमादिति ।

यच्चोक्तम्—साधारणत्वेन तस्य स्यादित्यादि, तन्न; व्यापित्वधर्मस्याऽग्रहणात् । व्यापित्वधर्मग्रहणे तद्विशिष्टप्रतीतिर्भवति, न तत्सत्तामात्रात् । अहमित्यात्मस्वरूपग्रहणेपि व्यापित्वाऽग्रहणाद् भ्रान्तिरपि न भवत्यव्यापित्वेनाप्यग्रहणात् । व्यापित्वाव्यापित्वाकारौ मुक्त्वा कथं ग्रहणमिति चेत्, यथात्मनोहं सुखीत्याद्याकारेण ग्रहणं, तथा सामान्यस्य सादृश्यानुगताद्याकारेणेति । साध्यत्वादनुदाहरणमिति चेत्, न; अन्यत्रात्मप्रत्यक्षत्वप्रसाधनात् । अपि च लोष्टादिवस्तु गुरुस्वभावमपि गुर्विदमिति न गृह्यते, तदा किं लोष्टादिरूपेणापि तद्ग्रहणं भ्रान्तं स्यात् । विपरीतग्रहणं हि भ्रान्तमुच्यते । तेन व्यापीदमिति सामान्यग्रहणं यदि स्यात्तदा भवेद् भ्रान्तम्, यदा त्वनयोः सादृश्यम्, तदनेन सदृशम्, तेन सदृशमिदमिति वा, शेषत्वेन वा, तद्ग्रहणं भवति; तदा कथं भ्रान्तम् ? यद्यप्यव्यापिताकारेण ग्रहणं, तथापि न सामान्यस्य सिद्धिः, सर्वथा तज्ज्ञानस्य भ्रान्ततानुपपत्तेः । यथा द्विचन्द्रादिज्ञानं द्वित्वाद्यंश एव भ्रान्तं न चन्द्राद्यंशेपि, ततश्चन्द्राद्यंशस्यापि नासिद्धिः । विकल्पज्ञानं च विकल्पांश एव भ्रान्तं त्वयेष्टं न तु बोधांशेपि, बोधांशसिद्धिश्च तत एवेष्टा, तथा सामान्यज्ञानव्यापितांश एव भ्रान्तमस्तु न तु व्यक्तिविशेषणत्वाद्यंशेपीति । अपि च व्यापित्वमेव सामान्यस्य गृह्यते निर्विकल्पकबोधेन । अन्यथा कथं तद्द्वारेण संकेताविनाभावसम्बन्धौ तद्वत्सु गृह्येते व्यक्तीनामानन्त्यात् । अन्यत्र तद्ग्रहणेन्यत्र शब्दलिङ्गाभ्यां प्रतिपत्त्ययोगात् । भ्रान्तत्वे च संवादनियमायोगात्, तस्मात् सामान्यव्यापित्वग्रहणादेव व्यक्त्यानन्त्यपि संकेताविनाभावग्रहणं युक्तमिति ।

यच्चोक्तम्—व्याप्याप्रतीतौ व्यापित्वस्य प्रत्येतुमशक्यत्वात् सकलव्यक्तिग्रहणप्राग् इति, तन्न; प्रत्यक्षतः सकलव्यक्तिविशिष्टव्यापित्वग्रहणाऽनभ्युपगमात्। अनुमानाच्च सकलव्याप्यविशिष्टव्यापित्वग्रहणमपीष्यते।

प्रत्यक्षतस्त्वेकव्याप्यग्रहणेऽपि व्यापकत्वग्रहणं त्वयाप्यकामेनाभ्युपगन्तव्यम् अन्यथाग्नेर्धूमव्यापकत्वप्रतीतिरपि न स्यात्। न च पुरोवस्थितकार्यकारणव्यक्तिमात्रापेक्षया व्याप्यव्यापकभावव्यवस्था, देशकालान्तरितयोस्तद्भावाव्यवस्थितावनुमानप्रवृत्ति र्न स्यात्। अनुमानात्तद्भावव्यवस्थितावनवस्थाप्रसङ्गः स्यादितरेतराश्रयदोषो वा। तस्मादशेषधूमाग्निव्यक्त-यग्रहणेऽपि तद्व्यापी सामान्ययोर्व्याप्यव्यापकभावापन्नयोर्ग्रहणादेव तद्वतां व्याप्यव्यापकभावव्यवस्थेति युक्तम्। यदि पुनः सामान्यमात्रान्वितानामेवशेषव्यक्तीनां मानसप्रत्यक्षाग्रहणमिष्यते तथास्तु पुरोवस्थितव्यक्तेस्त्वनेकविशेषणोपकृतं चाक्षुषं ग्रहणं तेन तद्वत्प्रतिभासनं सर्वव्यक्तीनां न भवति धर्मधर्मिणोश्चान्यत्वं वक्ष्यामस्तेनव्यक्तिग्रहणेऽपि नावश्यं तद्विशेषणग्रहणम्। अत एव दृष्टजातीयं व्यक्त्यन्तरं स्थावरजंगमादिलक्षणं दृष्ट्वा प्रागेव ज्ञातं मयेदमेवं जातीयकमेवं संज्ञकं च इति निश्चिनोति तद्विशेषापेक्षत्वे दृष्टत्वं मन्यते। यथा अपूर्वेयं स्त्री न दृष्टोयं मया पुमानिति। किं बहुनोक्तेन, अशेषव्यक्तिग्रहणं भवतु वा मा भूत् सामान्यं त्वेकव्यक्तिग्रहणकालेऽपि गृहीतमेव, अन्यथा व्यक्त्यन्तरे कथं एवंजातीयमेवेदमिति प्रतीतिः स्यात्। भ्रान्तत्वं च निषेत्स्यामः।

## ❀ सामान्यस्य व्यापित्वग्रहणम् ❀

व्यापित्वं च सामान्यस्य यदि प्रागेव न गृहीतं तदानेकव्यक्तिविशेषसामान्यग्रहणोपकृतेन मनसा पश्चाद् गृह्यत इति क एवोभयोर्विरोधः? ननु व्यापित्वैकत्वयोः परस्परपरिहारस्थितिलक्षणोऽत्र विरोधः प्रकटित एव इति, न; आकाशादाविवैकत्वव्यापित्वयोरविरोधात्। साध्यवदुदाहरणमिति चेत् , न; आत्मसिद्धौ विस्तरतस्तत्प्रसाधनात्। अपि च सर्वज्ञज्ञानस्यैकस्याप्यनेकज्ञेयप्रकारव्यापकत्वं कारणस्य च कस्यचिदनेकास्वकार्यव्यापकत्वं त्वयाप्यभ्युपगतम्। यथा चैकस्य ज्ञानादिकार्यस्यानेकरूपालोकादित्याश्वत्वादिलक्षणस्याऽनन्तस्य दर्शनेपि तथाभूतस्यापि दर्शनादित्यतिसाहसम्। अकारणसम्बन्धित्वे विरोधो नास्ति। तद्वदेकस्य सामान्यस्यानेकाश्रयसम्बन्धेपि अविरोध इति। एवं च सति यदुक्तम्—न वयमेवंभूतमर्थमित्यादि, तदनेनैव प्रत्युक्तम्। न हि सर्वज्ञज्ञानादेरपि अनेकज्ञेयादिव्यापकत्वे तथाभूतान्यदर्शनमस्ति प्रतिवादिनः सर्वत्र-

विवादात्। सामान्यस्य तु गोत्वाश्वत्वादिलक्षणस्य अनन्तस्य दर्शनेपि तथाभूतस्यापि रस्यादर्शनादित्यतिसाहसम्। अथ सामान्यव्यतिरेकेणापरस्य तथाभूतस्य दर्शनादिति सामान्यप्रतिपत्तुं न शक्यते। एवं तर्हि खरोष्ट्रादिव्यतिरेकेण तथाभूतस्य दर्शनादिति खरोष्ट्रादर्थमपि भवन्तः प्रतिपत्तुं न क्षमा इति। अथ सामान्यं नैव दृश्यते, तदा तस्यैव दर्शनादिति वक्तव्यम्। एवंभूतस्यापरस्येत्यनर्थकं प्रतिपादितं च सामान्यदर्शनं तद्व्यापित्वग्रहणं च यदमूर्त्तं तद्व्याप्येवेत्ययं नियमो नाभ्युपगम्यते। ततो नान्तविशेषादीनां व्यापित्वप्रसंगः। विचित्रशक्तयो हि पदार्थास्तेनामूर्तत्वाद्यविशेषेपि सामान्यस्यैवानन्तव्यक्तिव्यापनशक्ति र्नान्यविशेषादेः मूर्तत्वाविशेषेप्यग्निर्दहति न जलमित्यत्र कः पर्यनुयोगः ?

## ❀ सामान्यस्य स्वरूपम् ❀

अथ सामान्यस्वरूपमेवाऽसिद्धं तन्न, प्रत्यक्षसिद्धत्वात्। प्रत्यक्षेण तस्य व्यापितयाऽन्यथा वा ग्रहणं भवतु न दोषः। यच्चोक्तम्—न प्रत्यक्षस्येयती गतिरित्यादि। तन्न, मानसप्रत्यक्षस्याशेषव्यक्तिव्यापिसामान्यग्राहकत्वेप्यविशेषात्। एकव्यक्तिसमन्वितग्रहणे तु यदुक्तम् कथं व्यापितया गृहीतं विशेषवदसामान्यं च भवेदिति, तन्न; एकव्यक्तिसमन्वितग्रहणेऽपि तदैव पश्चाद्वा व्यापित्वग्रहणस्योक्तत्वात्। गुरुत्वग्रहणेपि हि यथा पाषाणः पवनवदगुरुस्वरूपस्वभावो न भवति एवं व्यापित्वाग्रहणेपि न सामान्यं विशेषवदसामान्यमिति।

## ❀ प्रत्यभिज्ञायाः प्रामाण्यम् ❀

प्रत्यभिज्ञानस्य चाऽनन्यनिमित्तस्य प्रमाणत्वं साधयिष्यामस्तेन क्रमेणापि व्यक्त्यन्तरविशिष्टत्वग्रहणे सामान्यस्यैकत्वं सिध्यत्येव न दंडादेशभेदस्य प्रत्यक्षत्वात् तत्प्रत्यभिज्ञानस्य सामान्यनिमित्तत्वान्न तु सामान्ये सामान्यमस्ति। तस्मात् सामान्यैकत्वनिबन्धनमेव तदाधारेष्वाप प्रत्यभिज्ञानम्।

## ❀ प्रसंगसाधननिरासः ❀

यदप्युक्तम्—प्रसंगसाधनमिदं यदि त्वया सामान्यं व्याप्यमभ्युपगम्यते, तदा प्रमाणेन तत्तथाभ्युपगन्तव्यम्। प्रमाणनिबन्धनत्वादभ्युपगमस्य नाऽप्रतीयमानाऽभ्युपगमो युक्त इति, तदप्यसत्; को ह्यप्रतीयमानाभ्युपगमं करोति यं प्रति सार्थकमिदं स्यात्। यदि च सामान्यं व्यापितया न प्रतीयते किमाश्रित्या-

नुमानशब्दौ प्रवर्तते। न हि व्यक्तिस्वरूपमेव व्यक्त्यन्तरेऽन्वयि भवत्यन्वया-भावं च सर्वो हेतुरसाधारणः स्यात्। शब्दोऽप्यऽसंकेतितः कथं हेत्वादि-सूचकोपि स्यात्, न हि कृतसंकेतोपि डित्थशब्दोर्थान्तरं डवित्थं सूचयति। डित्थडवित्थादिष्विव धूमभेदेष्वपि न किञ्चिदेकमनुगतं निमित्तमस्ति येनैक-शब्दानुगमः। तदन्यव्यावृत्तिद्वारेणाऽनुमानशब्दयोः प्रवृत्तिरिति चेत्, सा तदन्यव्यावृत्तिर्व्यक्तिभ्योऽन्या स्याद्? अनन्या वेति? यद्यन्या, सर्वव्यक्तिष्व-वस्थितैका च, तदा तदेव सामान्यम् नाम्नि विप्रतिपत्तिर्नार्थे। असंसृष्टानेका च सती कथं केषुचिदेव भेदेष्वभिन्नाभिधानप्रत्ययनिमित्तम्? अथ नान्या, ततो व्यावृत्त्यैकत्वे व्यक्तीनामप्येकत्वप्रसंगः, व्यक्त्यनन्तत्वे वा व्यावृत्ते-रप्यानन्त्यप्रसंगः। तदानन्त्ये वानुगतैकनिमित्ताभावान्न संकेतान्वयादि-ग्रहणमिति।

## ❀ व्यावृत्तेः निःस्वभावतानिरासः ❀

यत्पुनरत्रोक्तम्—निवृत्तेर्निःस्वभावत्वान्न स्थानाऽस्थानकल्पना।
वस्तुन्येषनविकल्पः स्याद्विधेर्वस्त्वनुरोधतः इति॥

तदप्ययुक्त, यदि हि निःस्वभावा व्यावृत्तिः, तदा कथं तदाश्रयेण संकेता-न्वयादिग्रहणं साध्यसाधनभावो वा? न हि खरशृंगाद्याश्रयेण केषुचिद् भेदेषु संकेतः कर्तुमन्वयो वाधिगन्तुं शक्यते। कृतकत्वानित्यत्वादीनां च व्यावृत्ति-रूपत्वान्निःस्वभावत्वं प्राप्तं ततश्च खरशृंगखपुष्पादीनामिव न साध्यसाधन-भाव व्यवस्था।

## ❀ ज्ञानार्थयोरन्तरालस्थसामान्यनिरासः ❀

एतेन ज्ञानार्थयोरन्तरालस्थं सामान्यं प्रत्युक्तम्, समानानां भावो हि सामान्यमुच्यते, तत्कथमन्तरालस्थं स्यात्? सर्वतः सम्बद्धं प्रतिनियतधर्मि-धर्मत्वेन व्यपदिश्येत। भ्रान्तितस्तद्धर्मव्यपदेशे कृतकत्वाकृतकत्वयोः पक्ष-धर्मत्वाऽसिद्धत्वव्यवस्था न स्यात्। यथैव हि भवतां शब्देषु कृतकत्वभ्रान्ति-दार्ढ्यम्, तथा मीमांसकानामकृतकत्वभ्रान्तिदार्ढ्यमिति कस्यात्र वास्तवं पक्षधर्मत्वमसिद्धं वा स्यादिति?

## ❀ व्यावृत्तयो नैकस्वभावाः ❀

अस्तु तर्हि शब्दादनर्थान्तरमेव कृतकत्वमनित्यत्वं च तयोस्तादात्म्याद-व्यभिचारः। तदुक्तम्—स्वभावप्रतिबन्धे हि सत्यर्थोर्थन्न व्यभिचरतीति।

नोक्तोत्तरत्वाद्धर्मधर्मिणोरभेदे न त्वया लक्षणे दोषः। प्रागेवोक्तः कृतकत्वादिशब्दानां पर्यायत्वं च स्यात्ततश्च निःशब्दोभिलापादिति याद्दगिदं वाक्यं स्यात्। ताद्दगिदमपि स्यादनित्यः शब्दः कृतकत्वादिति, नैष दोषो यतः

[1]सर्वे भावा स्वभावेन स्वस्वभावव्यवस्थितेः।
स्वभावपरभावाभ्यां यस्माद् व्यावृत्तिभागिनः।
तस्माद्यतो यतोऽर्थानां व्यावृत्तिस्तन्निबन्धना।
जातिभेदा विकल्पन्ते तद्विशेषावगाहिनः।
तस्माद्यो येन धर्मेण विशेषः संप्रतीयते।
स न शक्यस्ततोऽन्येन तेन भिन्ना व्यवस्थितिः।

सर्व एव भावाः स्वरूपस्थितयः, न ते परेणात्मानं मिश्रयन्ति; तदेकीभावप्रसंगात्। न च सामान्यनिबन्धनं भावानाममिश्रणम्। तस्यानुपलब्धितोऽभावात्। भावे वा तस्यापि स्वात्मनि व्यवस्थानादमिश्रणम् अन्येन तत्रापि सामान्यकल्पनेऽनवस्था स्यात्। तस्मादिमे स्वभावाः; सजातीयादभिमतादन्यस्माच्च व्यतिरिक्ताः स्वभावेनैकरूपत्वात्। यतो यतो भिन्नास्तद्भेदप्रत्ययेनोपकृतसन्निवेशैः शब्दैस्ततस्ततो भेदमुपादाय स्वभावाभेदेप्यनेकधर्माणः प्रतीयन्ते। ते च शब्दाः सर्वभेदनाद्धेप्येकमेदचोदनात्तत्स्वलक्षणनिष्ठा एव भवन्ति। तदेकस्मादपि तस्य भेदोस्तीति तस्मादेकस्य भावस्य यावन्ति पररूपाणि तावत्यस्तदपेक्षया व्यावृत्तयः, यावत्यश्च व्यावृत्तयस्तावतत्यश्च श्रुतयोऽतत्कार्यकारणपरिहारेण व्यवहारार्थाः। तस्मात्स्वभावाभेदेपि येन धर्मेण नाम्ना यो विशेषो भेदः प्रतीयते न स शक्यस्ततोऽन्येन प्रत्याययितुमिति नैकार्थाः सर्वे शब्दाः। नाप्यनन्वयादिदोषोस्ति, न ह्येकैवाग्निव्यक्तिरदाहादिकारिभ्यो व्यावृत्तेति।

## ❀ व्यावृत्तिभेदनिरासः ❀

अत्रोच्यते—भवन्तु नामामिश्रात्मानोर्थास्तथापि यतो यतो भिन्नास्तद्भेदप्रत्यायनायेत्यादि न युक्तम्, भेदो हि वस्तुनः स्वरूपमेव स्याद्रूपान्तरं वा? यदि वस्तुस्वरूपमेव तदा तन्निमित्ताः शब्दाः कथं नैकार्थाः? कथं च तस्यानेकधर्मत्वम्? न हि पररूपनानात्वेऽपि तस्य तस्यात्मभेदोस्ति। उपचारादिति चेत्, न; उपचारनिमित्ताभावात्। साध्यसाधनभावौपचारिकत्वप्रसंगाच्चौप-

---

1. प्र० वा० ३।३९।

चारिकधर्ममूलत्वात्सिंहत्वादिवत् भेदः कल्पते नार्थोपीति चेत्, किमर्थादन्योपि भेदोस्ति येनैवमुच्यते ? यदि च धर्मभेदस्तत्वतो नास्ति तदा शब्दाभिलापत्वादीनामिवाऽनित्यत्वकृतकत्वादीनां साध्यसाधनभावो न स्यात् कल्पितभेदत्वाविशेषात्तन्निमित्तानां श्रुतीनां च पर्यायतयैव स्याच्छब्दाभिलापादिश्रुतिवत्।

अथाभिन्ना एव धर्मा इष्यन्ते। तदुक्तमेकस्यैव भावस्य यावन्ति पररूपाणि तावत्यस्तदपेक्षया व्यावृत्तय इति, न; सम्बन्धाभावात्। न हि भावस्य तदन्यव्यावृत्तिभिः सह सम्बन्धः कश्चिदस्ति संयोगादेः स्वयमनभ्युपगमात्तदुत्पत्तिरपि नास्ति व्यावृत्तीनामतत्कार्यकारणत्वात्। तादात्म्यं चेदिष्यते व्यावृत्तीनां तर्हि नानात्वे व्यावृत्तस्यापि नानात्वप्रसंगस्तदेकत्वे वा तासामप्येकत्वमिति दुर्निवारः प्रसंगः। ततश्चैकस्यानेकधर्मत्वाविरोधस्तथा यो येन धर्मेण विशेषः सम्प्रतीयते न स शक्यस्ततोऽन्येनेत्यस्यापि विरोधः। या चेयमनग्निव्यावृत्तिरग्निशब्दप्रवृत्तिहेतुरिष्यते सा किं सर्वाग्निव्यक्तिष्वभिन्नैका ? अथ प्रतिव्यक्तिभिद्यत इति ? अभिन्नत्वे तदेव सामान्यं तस्याभिन्नात्मनोनेकत्रानुवृत्तिविधायकप्रत्ययाभिधाने हेतुत्वलक्षणत्वात्। प्रतिव्यक्तिभेदे तु प्रतिव्यक्तिविशेषवन्न तदनुगमस्तभावान्न संकेतादिग्रहणमित्यप्रवृत्तिरेव शब्दानुमानयोः स्यात्। यदि वानेकत्राननुयायित्वेपि शब्दानुमानप्रवृत्तिहेतुत्वमिष्यते, तथा सति स्वलक्षणविषयत्वमेव शब्दानुमानयोरभ्युपगन्तव्यम्, तयोर्विधिमुखेनप्रवृत्तिदर्शनात्। अशक्यसमयत्वादिदोषश्चाऽपोहेपि समानस्तथापि वस्त्वात्मकत्वेऽत्यन्तव्यावृत्तत्वात्तदनात्मकत्वे च प्रतिपत्त्यविषयत्वादिति।

## ❀ वस्तुविषयत्वेऽनुमानवैयर्थ्याशङ्का ❀

ननु च वस्तुविषयत्वेऽनुमानादेरानर्थक्यमेव स्यात्, प्रत्यक्षेणैव सर्वाकारेण वस्तुनः परिच्छिन्नत्वात्। तथा हि—

[1]एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम्।
कोऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते।
नो चेद् भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम्।
शुक्तौ वा रजताकारो रूपसाधर्म्यदर्शनात्।

यथा शुक्तौ रजताकारसमारोपस्तथा यद्यक्षणिकत्वाद्याकारः सदृशापरापरोत्पाददर्शनादिनिमित्तेनारोपितो न स्यात्तदा प्रमाणान्तरवृत्तिरनवकाशा

---

१. प्र० वा० ३।४२।

भवेत्। यावता यावन्तोऽस्य परभावास्तावन्त एव यथास्वंनिमित्तभाविनः समारोपा इति तद्व्यवच्छेदकानि भवन्ति प्रमाणान्तराणि सार्थकानि, शुक्तौ रजतसमारोपव्यवच्छेदकप्रमाणवत्। न च प्रमाणान्तराणामप्रत्यायकत्वम्, स्वांशप्रत्यायने वृत्तिस्तस्य दृष्टत्वादनंशस्य चैकदेशेन दर्शनायोगात्।

तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः।
भ्रान्तेर्निश्चीयते नेति साधनं संप्रवर्तते॥

न केवलं प्रत्यक्षदृष्टे प्रमाणान्तराभावसिद्धिः, अनुमानेनापि वस्तुनिश्चये स एव दोष इत्याह—

वस्तुग्रहे तु मानाच्च धर्मस्यैकस्य निश्चये।
सर्वधर्मग्रहोऽपोहे नाऽयं दोषः प्रसज्यते॥

न हि तस्मिन्निश्चिते तदात्मनामनिश्चयो युक्तः। यदा पुनरननुमानेन समारोपव्यवच्छेदः क्रियते, तदानेकव्यवच्छेदादन्यव्यवच्छेद इति तदर्थमन्यत्प्रवर्तते।

तस्मादपोहविषयमिति लिङ्गं प्रकीर्तितम्।
अन्यथा धर्मिणः सिद्धावसिद्धं किमतः परम्॥ इति।

## ❀ तन्निराकरणम् ❀

तदेतदयुक्तम्, यत्तावद्वस्तुविषयत्वेऽनुमानादेरानर्थक्यमेव स्यादिति, तन्न; धर्मधर्मिणोरभेदानभ्युपगमात्। यो हि धर्मधर्मिणोरभेदमभ्युपैति तं प्रति भवत्येष दोषः, अस्माकं तु भिन्ना बहवो धर्मा एकस्यापि धर्मिणस्तत्रैकेन धर्मेण दृष्टोपि धर्मी धर्मान्तरविशिष्टो न प्रतीत इति तदर्थं प्रमाणान्तरं प्रवर्तते। ननु तद्विशिष्टोपि स एव, सत्यम्; तथापि धर्मान्तराग्रहणे तदवच्छेदेन तत्र प्रतीति र्न भूतेति तद्विशिष्टोऽप्रतीत इत्युच्यते, यथैक एव गिरिर्धूमविशिष्टो दृष्टोऽग्निविशिष्टो न दृष्ट इति। न हि गिरिदर्शनादेव तदवयवान्तरितोप्यग्निर्दृष्ट इति शक्यं वक्तुम्। तद्ग्रहणे चाग्निमानयमत्राग्निरिति वा प्रतीतिः (स्यात्)। तस्मादेकस्यार्थस्वभावस्येत्याद्ययुक्तमेव।

## ❀ समारोपव्यवच्छेदानुपपत्तिः ❀

यदप्युक्तम्—समारोपव्यवच्छेदकानि भवन्ति प्रमाणान्तराणि सार्थकानि स्युरिति, तदप्ययुक्तम्, यतोऽकस्माद्धूमादग्न्यनुमानं भवन्न समारोपव्यवच्छेदकृत्, न हि तत्रानग्निसमारोपः सम्भाव्यते। नन्वत्राप्युक्तम्—"धर्मि-

प्रतिपत्तावभेदात्सर्वधर्मप्रतिपत्तिर्भेदे वाऽसम्बद्धस्य तत्र प्रतिपत्तिरिति। तस्मात् तत्रापि तद्दर्शिनस्तत्स्वभावानिश्चयः कुतोपि विपर्यासात्। स च तं प्रदेशं तद्विविक्तेन रूपेण निश्चिन्वन्नऽग्निमत्त्वभावनाविमुखया बुद्ध्या कथमविपर्यस्तो नाम ? तदाकारसमारोपसंशयरहितश्च तत्प्रतिपत्ते लिङ्गमनुसरेदिति।" तदेतदप्यप्रमाणकमेवोक्तम्, न हि दहनप्रदेशयोरग्निधूमयोर्वा धर्मधर्मिभावेप्यभेदः सकृद्दृष्टत्वं वा शक्यते वक्तुम्। नापि भिन्नत्वात्तत्राग्नेरप्रतिपत्तिरेवेति सलज्जो वक्तुमर्हति। स च तं प्रदेशं तद्विविक्तेनेत्याद्यप्यप्रतीतिकमेवोक्तम्। न हि विपर्ययः संशयो वाऽप्रतीयमानोप्यस्तीति वक्तुं शक्यते। न च तदप्रतीतौ क्वचिद्धूमदर्शनानन्तरमेवाग्न्यनुमानं भवन्न दृश्यते। नापि विपर्ययस्य संशयस्य चानुमानं प्रति सम्बन्धस्मृतिवत्कारणत्वं निश्चितम्, येन तस्य विवेकतोऽननुभवेप्यस्तित्वसिद्धिः स्यात्। धर्मिणस्तद्विविक्तत्वनिश्चय एव विपर्यय इति चेत्, न; अन्यथानिश्चयस्य विपर्ययत्वात्। यदि हि नाग्निमानयमिति निश्चयो भवति, तदा स्याद्विपर्ययः। यदा तु धूमोयं धूमवानयमिति वा निश्चयः, तदा कथं विपर्ययः ? समारोपसंशयरहितश्च किमिति लिङ्गं नानुसरेत् ? प्रयोजनाभावादिति चेत्, न; अग्निप्रतीतेरेव प्रयोजनत्वात्। धर्म्मिसिद्धावेव तत्सिद्धेरिति चेत्, न; व्यवधानाव्यवधानतोऽतुल्ययोगक्षेमत्वात्। रूपरसानां चैकेन्द्रियाऽविषयाणामपि गम्यगमकभावोपलब्धेः। अभ्यासातिशयादनिच्छतोप्यनुमानप्रवृत्तेर्न समारोपाऽभावेऽनुमानाप्रवृत्तिः। असंदिग्धेपि योग्यतयानुमानप्रवृत्तेरुक्तत्वादविरोधः। संदिग्धेप्यनुमानस्य न भ्रान्तिनिवृत्तिः फलम्, भ्रान्तेस्तत्राभावात् सन्देहस्य चाभ्रान्तित्वात्। संदिग्धे विकल्पेनैकधर्मसमारोपोऽस्ति, तद्व्यवच्छेदोनुमानफलमिति चेत्, अस्तु नामैवम्, तथापि वस्तुविषयमेवानुमानमेष्टव्यम्; अन्यथा ततः संशयोच्छेदो न स्यात्। न ह्यन्यत्र निश्चयेऽन्यत्र संशयो निवर्तते; अतिप्रसंगात्। विपर्ययनिवर्तकस्याप्यत एव वस्तु विषयत्वं सिद्धं प्रत्यक्षवत्। यथा प्रत्यक्षं वस्तुन्येव प्रवर्तमानं संशयं विपर्ययं च निवर्तयति, तथाऽनुमानमपीति।

## ॐ सविकल्पस्यैव संशयनिवर्त्तकता न प्रत्यक्षस्येति सौगतमतम् ॐ

ननु च प्रत्यक्षान्न संशयादिनिवृत्तिः, सर्वाकारदृष्टेप्यर्थे संशयादिदर्शनात्। किंतु निश्चयात्तन्निवृत्तिः, स च सर्वोप्यपोहविषय एवेत्याह—

क्वचिद् दृष्टेऽपि यज्ज्ञानं सामान्यार्थे विकल्पकम्।
असमारोपितान्यांशे तन्मात्रापोहगोचरम्॥

यत्र हि रजतस्थिरादिसमारोपस्तत्रांशे निश्चयो न भवति, शुक्त्याद्यंशे तु समारोपाभावाद्भवति; तेन समारोपितविवेके निश्चयस्य प्रवृत्तिरिति गम्यते। तद्विवेक एव चान्यापोहः। तस्माद्—

यावन्तोंऽशसमारोपास्तन्निरासे विनिश्चयाः।
तावन्त एव शब्दाश्च तेन ते भिन्नगोचराः॥
अन्यथैकेन शब्देन व्याप्ये एकत्र वस्तुनि।
बुद्ध्वा चानन्यविषय इति पर्यायता भवेत्॥ इति।

## ❀ तन्निरासः ❀

तदेतदप्ययुक्तम्, सविकल्पकप्रत्यक्षस्य[1] प्रागेव साधितत्वात्। अपि चैवं प्रत्यक्षमप्यपोहविषयं प्राप्तम्, तस्याप्यसमारोपविषयाभावात्। न हि प्रत्यक्षमपि तिमिरादिनिमित्तारोपितद्वित्वाद्याकारे यथार्थावभासकं भवति। यदि भवेत्तदा भ्रान्त्यवकाशो न स्यात्, सम्यङ्मिथ्यादर्शनयोर्विरोधात्।

अथ यथावद् दृष्टेऽपि तत्त्वे द्वित्वाद्याकारारोपः पश्चाद्भावी, तथा दर्शनपृष्ठभावित्वादिन्द्रियजेयं भ्रान्तिः, न; यतश्चाऽभ्रान्तग्रहणमनर्थकं स्यात्। तस्मादक्षजज्ञानस्याप्यारोपविवेके प्रवृत्तिरित्यपोहविषयत्वं प्राप्तम्। अथ प्रत्यक्षस्य सामर्थ्यादन्यव्यवच्छेदकत्वेपि वस्तुविषयत्वमस्ति, न तु निश्चयस्य, कस्मात्? सर्वाकारग्राहकत्वप्रसंगादिति, न; वक्ष्यमाणोत्तरत्वात्। किं च प्रत्यक्षेणापि यदि सर्वाकारेण गृहीतोऽर्थः, तदा रजतादिभ्रान्तिरपि कथं स्यात्? तत्त्वज्ञानविषये भ्रान्तेरनवकाशादतिप्रसंगाद्वा।

## ❀ सौगतस्य भेदे व्यवधानाद्युपपादनं तन्निरासश्च ❀

ननूक्तमत्र—न हि सर्वतो भिन्नो दृष्टोपि भावस्तथैव प्रत्यभिज्ञायते, क्वचिद् भेदे व्यवधानसम्भवात्। यथा (युक्तेः) शुक्तित्वे। यत्र तु प्रतिपत्तुर्भ्रान्तिनिमित्तं नास्ति, तत्रैवास्य तद्दर्शनाविशेषेपि स्मार्तो निश्चयो भवति, समारोपनिश्चययोर्बाध्यबाधकभावादिति, तदयुक्तम्; तादात्म्यविरोधात्—क्वचिद् व्यवधानं क्वचिन्नेति ब्रुवतस्तादात्म्याऽभ्युपगमो विरुध्यते, कुड्याद्यावृतानावृतयोरिव। अथ स्मृतत्वास्मृतत्वे व्यवधानाव्यवधाने विवक्षिते, ततोपि तादात्म्यविरोधः; स्मृतास्मृतयोर्भेदाद् दृष्टेतरवत्। अन्यथा दृष्टादृष्टत्वेनापि भेदः स्यात्।

---

१. प्राक् १८० तमे पृष्ठे।

अथ भ्रान्तिनिमित्तसद्भावासद्भावौ व्यवधानाव्यवधाने, तथापि तादात्म्यविरोधः, तद्विषययोश्चन्द्रभुवोरिव भेदात्। भ्रान्तिनिश्चययोर्वास्तवधर्म्मविषयत्वानभ्युपगमाददोष इति चेत्; एवं तर्हि दृष्टो भावः कथञ्चिदपि न प्रत्यभिज्ञायत इति वाच्यम्, क्वचिदित्यादिविशेषाभिधानमनर्थकम्। पारम्पर्येणापि तद्विषयत्वाभिधाने तदवस्थो विरोधः, व्यवधानपारम्पर्येणापि गङ्गामरुजलनिश्चययोर्भिन्नविषयत्वोपलम्भात्। अभिन्नविषयत्वे दृष्टान्ताभावात्। न हि तस्यैव ज्ञातुस्तत्रैवार्थे तदैव भ्रान्तिरभ्रान्तिश्चेत्यत्रोभयप्रसिद्धोऽस्ति दृष्टान्तः, शुक्तित्वादिधर्माणामपि परैर्भिन्नत्वाभ्युपगमाददृष्टान्तत्वं शुक्तेः।

## ❀ वस्तुविषयत्वादेव निश्चयस्य भ्रान्तिबाधकता ❀

अपि चाऽवस्तुविषयत्वे, निश्चयस्य बाधकत्वमपि न प्राप्नोति, न हि द्विचन्द्रादिज्ञानं चतुश्चन्द्रादिभ्रान्तेर्बाधकमिति युक्तम्। स्वप्नवदिति चेत्, न; तत्र बाध्यबाधकभावस्यावास्तवत्वात्। तद्वदभ्युपगमे च प्रामाण्यं वस्तुविषयं द्वयोरित्यनुपपन्नं स्यादपुरुषार्थं च सर्वं निश्चयज्ञानं स्वप्नवत्स्यात्। तस्माद्वस्तुबलप्रवृत्तं प्रमाणज्ञानं तदाभासस्य बाधकमिति युक्तम्। इत्थमेतदिति चेत्, कथं न वस्तुविषयं निश्चयज्ञानम्? साक्षादतद्विषयत्वादिति चेत्, भ्रमस्यापि वस्तुदर्शनपूर्वकत्वात्तदविशेषप्रसंगः। शुक्तिकादिनिश्चयो यथादृष्टाकारोऽनुसन्धाता, न रजतादिप्रत्यय इति विशेष इति चेत्, तदविषयः कथं तस्यानुसन्धातेत्युच्यते? तद्विषयत्वे च सर्वाकारानुसन्धातृत्वप्रसङ्गो, निरंशत्वात्। तस्याः तत्र प्रवर्तकत्वात्तद्विषयत्वोपचार इति चेत्, न; प्रवृत्तिविषयस्यापि निरंशत्वात्कथं क्वचिदेवांशे निश्चय उच्यते? अनेकतो व्यावृत्तत्वादनेकांशोऽर्थः कल्प्यत इति चेत्, कल्प्यतां नाम तथापि दृष्टवन्निरंश एवासौ निश्चीयते। अन्यथा दृष्टानुकारो निश्चयो न स्यात्, तद्दर्शनं वाऽयथावदभ्युपगन्तव्यम्। यथा च दर्शनेऽर्थः स्वाकारं नांशेनार्पयति निरंशत्वात्तस्य, तथा निश्चयस्याप्येकांशेनार्थाकारत्वं दर्शनाकारत्वं वा न युक्तं निरंशत्वान्निराकारत्वे च प्रतिकर्मव्यवस्थानुपपत्तेः दर्शनस्यापि वाऽनाकारकल्पना। न च भिन्नविषययोर्वा बाध्यबाधकभावः क्वचित्प्रसिद्धः समानविषये तु [1]भूपालादिवल्लौकिकपरीक्षकाणां सिद्ध इति।

---

१. विषयो गोचरे देशे तथा जनपदेऽपि च।
प्रबन्धाद्यस्य यो ज्ञातः तत्र रूपादिके पुमान्॥ (मेदिनी)
इति कोषाद् विषयशब्दस्य जनपदार्थत्वे भूपालानां समानविषये = समानजनपदनिमित्तो बाध्यबाधकभावः। शब्दादिज्ञेयविषयमादाय च लौकिकपरीक्षकाणां स इति भावः।

## ❀ समानविषयत्वेऽपि बाध्यबाधकभावानुपपत्तिः ❀

ननु समानविषयत्वेपि ज्ञानयोः कथं बाध्यबाधकभावः ? स्मृत्यनुभवयोस्तद्भावप्रसंगात्, संप्लवविरोधाच्च विरुद्धयोस्तद्भाव इति चेत्, सर्वज्ञानान्तरेण विरोधात्तद्भावप्रसंगः। विषयापहारस्तु भूपालादेरेव सम्भवति, न ज्ञानयोः। न हि ज्ञानस्य विषयो ज्ञानान्तरेणापहर्तुं शक्यते, स्वविषयोपदर्शनमात्रत्वात्। अत एव न ज्ञानस्य तदर्थस्य वाऽभावग्राहकं ज्ञानं बाधकम्, अतिप्रसङ्गादिति।

## ❀ तन्निरासः ❀

अत्रोच्यते—यत्रार्थे यज्ज्ञानमतद्धर्माध्यारोपेण प्रवृत्तं तमर्थं तात्त्विकधर्मेण ज्ञानान्तरं गृह्णत्तस्यातद्धर्मारोपकत्वं निश्चिनोति, अयमेव च बाध्यबाधकभावः, तथा च शुक्तिकेयं न रजतमिति वस्तुतत्त्वं गृह्णदेव बाधकं भवति। न चास्य वस्तुविषयत्वे विरोधः कश्चिदस्ति, येन वस्तुग्रहणानन्तरभावित्वात्तद्विषयत्वाभिमानः कल्प्यते। किं चाऽनेकसमारोपनिरासेपि न विधिमुखेन धर्मभेदः प्रतिभाति, यथा—नायं खरः, नाश्वः, न महिषः, न गवयः; किं तु गौरिति। तस्माद्यावन्न विधिमुखेन निश्चयाः संवादिनस्तावन्तोर्थान्तरधर्मा दण्डकुण्डलादिवदभ्युपगन्तव्याः, अतश्च न सर्वधर्मग्रहादिदोषः। तादात्म्यवादिनस्तु भवत्ययं दोष इति।

## ❀ अर्थान्तरोपाधिवादेऽपि सर्वग्रहणप्रसङ्गः ❀

ननु च भिन्नधर्मपक्षेपि स दोषः प्रतिपादित एव, तथा चाह—[1]योपि मन्यते भिन्ना एवोपाधयः परस्परमाश्रयाच्च तन्निबन्धनाः श्रुतयस्तदाधारेषु वर्तन्ते, तत्रैव वा तदायमप्रसंग इति, तस्यापि—

> नानोपाध्युपकारांगशक्त्यभिन्नात्मनो ग्रहे।
> सर्वात्मनोपकार्यस्य को भेदः स्यादनिश्चितः॥

यद्यप्युपाधयो भिन्ना एव शब्दज्ञानान्तराणां निमित्तमर्थे (सनुतोस्तद्वानेक) ? एवोपलीयते। तस्य नानोपाधीनामुपकाराश्रयशक्तिस्वभावस्य स्वात्मन्यभेदाभाववत्। सर्वात्मना ग्रहणे क एवोपाधिभेदोऽनिश्चितः स्यात् ? सर्वोपाध्युपकारकत्वेन ग्रहणात्। न ह्युपकारकत्वमन्यदेव तस्य रूपेण गृह्यमाणस्याऽगृहीतम्। अतो यदि वा अस्य स्वभावेन ग्रहणं तदेवोपकारकत्वेनापीति,

---

१. योऽपि मन्यते—इत्यस्य तस्येत्यग्रेणान्वयः।

तयोरात्मनि सम्बन्धादेकज्ञाने द्वयग्रहः। आत्मभूतस्योपाधितद्वतोरूपकार्योपकारकभावस्य ग्रहणादेकज्ञाने द्वयोरपि ग्रहणमित्येकोपाधिविशिष्टेपि तस्मिन् गृह्यमाणे सर्वोपाधीनां ग्रहणं, तद्ग्रहणनान्तरीयकत्वादुपाधिसद्ग्रहणस्य। अन्यथा तथापि न गृह्येत। न ह्यन्य एवान्योपकारको यो न गृहीतः स्यात्। न चाप्युपकारके तथा गृहीते उपकार्याग्रहणम्, तस्याप्यग्रहणप्रसंगात् स्वस्वामित्ववत्। तस्मादर्थान्तरोपाधिवादेऽपि समानः प्रसंगः।

अथापि स्याद्भिन्ना एव शक्तयः शक्तिमतो याभिरूपाधीनुपकरोति, ततो नायं प्रसङ्ग इति।

धर्मोपकारशक्तीनां भेदे तास्तस्य किं यदि।
नोपकारस्ततस्तासां तथा स्यादनवस्थितिः॥

यदि प्रत्युपाध्युपकारकत्वानि तस्य न स्वात्मभूतानि नापि तत उपकारमनुभवन्ति, किं तस्येति ता उच्यन्ते? उपकारे वा स्वात्मभूताभिरयमेकः शक्तिभिः शक्तीरुपकुर्वन्नैकोपाधिनापि गृह्यमाणः सर्वात्मना गृह्यत एव, तथा ह्येकोपाधिग्रहणे तदुपकारिण्याः शक्तेर्ग्रहणं तद्ग्रहणे तदुपकारी भावः स्वात्मभूतसकलशक्त्युपकारो गृहीतः सर्वाः शक्तीर्ग्राहयति तांश्चोपाधीनिति तदवस्थः प्रसङ्गः।

अथ ता अपि शक्त्युपकारिण्यः शक्तयो भिन्ना एव भावात्। एवमुपाधीनां तच्छक्तीनां च परापरास्वेव शक्तिष्वपर्यवसानेन घटनायोगात्। स एकस्ताभिः कदाचिदप्यगृहीतः तदुपकारात्मा तद्वत्त्वेन न गृह्येत, यदि पुनः केवलानेवोपाधीन् शब्दज्ञानाद् उपक्षिप्येयुः, तदा तस्यासमावेशान्न भवति तत्प्रतिपत्तिमुखेन सर्वप्रतिपत्तिः। तदापि तस्य शब्दैरनाक्षेपान्न स्यात्तत्र प्रवृत्तिरिति व्यर्थः शब्दप्रयोगः स्यात्।

अथ क्रियाश्रयो हि सर्वो विधिप्रतिषेधाभ्यां व्यवहार उपाधयश्च तत्रासमर्थाः। समर्थश्च न चोद्यत इति किं शब्दयोगैः? ततश्चोपाधयो नोपाधयः स्युः। क्वचित् प्रवृत्तौ हि कस्यचित् प्रधानस्याभावात् तदपेक्षया तथोच्यन्ते। तस्य शब्दैरनाक्षेपान्न ते कस्यचिदङ्गभूता इति (किमुपायः), लक्षितलक्षणाददोष इति चेत्; समानः प्रसङ्गः। स तावद्भिरुपाधिभिर्नान्तरीयकतयोपलक्ष्यमाण एकेनाप्युपलक्षणेन सर्वात्मनोपलक्षित इति तदवस्थः प्रसङ्गः, को ह्यत्र विशेषः? शब्दाश्चैनमुपलक्षयेयुस्तल्लक्षिताश्चोपाधयः। स तावत्तदानीं निश्चीयते। सर्वोपदृश्ये सूर्यादौ गृह्यमाणेपि न सर्वत्र द्रष्टृदर्शनग्रहणमस्ति। अनेनैतदपि निराकृतम्—न ह्यन्य एवान्योपकारको यो न गृहीतः स्यान्न चाप्युपकारके

तथा गृहीते उपकार्याग्रहणं तस्याप्यग्रहणप्रसङ्गात्, स्वस्वामित्ववदिति। एवं हि सूर्यग्रहणे तदुपकार्यस्य त्रैलोक्यस्यापि ग्रहणं स्यात्। न ह्युपकारकत्वेन गृहीतादन्य एव त्रैलोक्योपकारको भानुर्यो न गृहीतः स्यात्। उपकारकग्रहणे चोपकार्याग्रहणं नास्ति स्वस्वामित्ववदित्येवंवादिनः सूर्योपकार्यत्रैलोक्यग्रहणं दुर्निवारं स्यात्। यत्पुनरिदमुक्तम्—तदुपकारीभावः स्वात्मभूतसकलशक्त्युपकारी गृहीतः सर्वाः शक्तीर्ग्राहयति तांश्चोपाधीनित्यनेन किल पारम्पर्योपकार्याणामपि तद्ग्रहाग्रहोऽश्चोदित इति। एवं खलु वै सुतरां सकलजगद्ग्रहणप्रसङ्गः। कथं भूधनार्कादीनामन्यतमोर्थः स्वोपकारकत्वेन गृह्यमाणोऽन्योपकारकत्वेनापि गृह्यत एव। स्वात्मभूतं हि तस्यान्योपकारकत्वं तथा गृहीतश्च सर्वाणि उपकार्याणि ग्राहयति तानि चान्यानि स्वस्वोपकार्याणि तान्यप्यन्यानीति। तथोपकारकोपकार्यत्वमपि वस्तुनः स्वात्मभूतमेव, तेन वस्तुग्रहणे तस्यापि ग्रहणम्, तथा गृहीतश्च भूधनादिरर्थः स्वोपकारकाणि च सर्वाणि ग्राहयति। तानि चान्यानि स्वस्वोपकारकान्तराणि तानि चान्यानीति सकलजगद्ग्रहणप्रसङ्गः।

किं च रूपस्य यद्रूपात्मतया ग्रहणं तदेव रसाद्युपकारकत्वेन, तदात्मभूतत्वात्तस्य। तथा गृहीतं च रूपं रसादीनपि ग्राहयतीति रसादीनां च चक्षुर्ग्राह्यत्वप्रसङ्गः, ततश्चेन्द्रियाणां नियतविषयत्वविरोधः, तदेवमेभिः प्रसङ्गैर्भदन्त एवोपद्रूयते, न वयम्; तेनैव प्रसङ्गस्याऽभ्युपगतत्वात्। अस्माकं यदेव विशेषणं गृहीतं तदवच्छेदेनैव विशेष्यग्रहणमित्यभ्युपगमः, न त्वेकेनाप्यवच्छिन्नं गृह्यमाणं सर्वैरेवावच्छिन्नं गृह्यत इति, तथा प्रतीत्यभावात्। यथोक्तम्—यदेवास्य स्वभावेन ग्रहणं तदेवोपकारकत्वेनापीति तन्न, स्वोपकारकत्वधर्मस्य ततोऽन्यत्वात्। भवतु वोपकारकत्वग्रहणम्, तथापि ततोर्थान्तराणामुपाधीनां ग्रहणे किमायातम्? तदग्रहणे तदुपकारकत्वं कथं गृह्यत इति चेत्? ननु तदन्याग्रहणे तदन्यकारक इति न किञ्चिदेतदिति।

## * अर्थान्तरोपाधिवादे न सर्वग्रहणप्रसङ्गः *

अत्रोच्यते—यत्तावदुक्तम्—नानोपाध्युपकारनिमित्तशक्त्यभिन्नात्मनोर्थस्य सर्वात्मना ग्राहकः, उपकार्यस्य भेद उपाधेर्भेदः स्यादनिश्चयेन...नैतद् युक्तम्, भेदे सत्येकग्रहे तदपरग्रहनियमायोगाद्, अत एव भेदनिश्चयस्तदेकग्रहे ह्यभेदाशङ्कापि स्यात्। आश्रयग्रहणेपि नाश्रयिणां नियमेन ग्रहणम्, भूभूधरादिग्रहणेपि तदाश्रितानां सर्वेषामग्रहणात्। अथ तेषामेकदेशग्रहणमिति, एवमपि यावत्परिमाणेऽसावेकदेशो गृहीतस्तावत्प्रदेशस्थानां सर्वेषां न ग्रहणमित्यनैकान्तः, तथा शरीरग्रहणेपि न तदाश्रितानामाभरणादीनां ग्रहणमिति। अथ

सर्वात्मना तद्ग्रहणं नास्ति। न त्वन्यदप्येकं गृह्यमाणमेकात्मनैव गृह्यते, न सर्वात्मना; एकात्मनः सर्वात्मत्वानुपपत्तेः। अथ सामान्याश्रयसर्वस्वधर्माश्रयत्वेन सार्वात्म्येत्युच्यते, तथाप्यसौ सर्वधर्माग्रहणे सर्वधर्म्माधारोऽयमित्येवं न गृहीतः, वस्तुस्थित्या तु तथाभिधाने शरीरादिकमपि सर्वस्वधर्माश्रयत्वात् सर्वात्मनैव गृहीतम्।

अथाखण्डात्मना सर्वात्मनेत्यर्थः। शरीरस्वप्रदेशादेरप्यखण्डात्मनैव ग्रहणम्, न च तदाश्रितानां सर्वेषां ग्रहणमिति। साधितं च शरीरादेरवयवित्वम्, तेनाखण्डात्मत्वं नासिद्धमिति। अपि चाग्निधूमयोरेकाश्रयत्वं त्वयाप्यभ्युपगन्तव्यम्, अन्यथा व्यधिकरणो हेतुः स्यात्। न च धूमाश्रयग्रहणादेवाग्निर्गृहीतः, तदाकाराप्रतिभासनेऽपि तद्ग्रहणकल्पनायां त्रैलोक्यग्रहणकल्पनापि स्यात्। किं च नर्तकीग्रहणे सर्वद्रष्टृज्ञानानां ग्रहणप्रसङ्गः, तत्सम्बन्धित्वात्स्वज्ञानवत्। तदभ्युपगमे च "तस्या नानुभवोऽपरः"—इत्यस्य विरोधः प्रतिभासविरोधश्च; न हि परकीयानि दर्शनानि कस्यचिदपरोक्षाणि प्रतिभान्ति। यथा च तदुपकारशक्त्यभिन्नात्मनो नर्तक्याः सर्वात्मना ग्रहणेपि, न तदुपकार्याणां सर्वज्ञानानां ग्रहणं भवति, तथोपाधिमद्ग्रहणेपि न सर्वोपाधीनां ग्रहणमिति। तद्ग्रहणनान्तरीयकत्वाद्युपाधिसद्ग्रहणस्यान्यथा तथापि न गृह्येतेत्यप्रमाणकमेवोक्तम्। न सर्वोपाधिग्रहणादेवोपाधिमान् गृह्यमाणो दृष्टः सर्वाग्रहणे चैकोपाधिनाप्यग्रहणमिति। तथा हि—स्वदर्शनोपाधिविशिष्टे व्यावृत्तत्वं कथं गृह्यते? तदन्यग्रहणाभ्युपगमे चैकार्थग्रहणे सर्वार्थग्रहणप्रसङ्गः। सर्वेषां ततोऽन्यत्वात्ततश्च प्रत्यक्षान्तरस्याप्यप्रवृत्तिः स्यात्। देवदत्ताग्रहणेऽयं स देवदत्त इत्येवं निश्चयो मा भूद्, व्यावृत्तत्वं तु तदग्रहणेऽपि स्वरूपतो गृह्यत इति चेत्, यद्येवमुपाध्यन्तराग्रहणे तदुपकारकोऽयमित्येवं निश्चयो मा भूत्तदुपकारकत्वं तु तदग्रहणेपि स्वरूपतो गृह्यत इति न किञ्चिदेतत्। सर्वोपाधीनामेकत्रावस्थितानामेकदैव ग्रहणं कस्मान्न भवतीति चेत्, तथाग्राहकाऽदृष्टादिसामग्रीवैकल्यात्। निर्विकल्पकेन तु केषाञ्चिद्भवत्यपि तथा ग्रहणम्। सविकल्पकं तु क्रमभाविसंज्ञास्मरणादिसहकार्यपेक्षते। तेन क्रमेणैव तद् भवति। तस्मान्नार्थान्तरोपाधिवादे सकलग्रहणप्रसङ्गः। गौरित्यादिशब्दश्च न केवलोपाधिविषयोऽभ्युपगम्यते। ततश्च तत्पक्षोक्तं दूषणमनभ्युपगमेनैव परिहृतम्।

## * अनर्थान्तरोपाधिवादे एव सर्वग्रहणप्रसङ्गः *

अनर्थान्तरोपाधिवादेऽपरिहार्य एव सकलोपाधिग्रहणप्रसङ्गः। एकदेशग्रहणाऽभेदयोर्विरोधादिष्ट एव सर्वापोहग्रहः, तथा निश्चयस्तु भ्रान्त्या न भवतीति

चेत्, न; अत्रापि समानप्रसङ्गत्वात्। एकापोहनिश्चये तदभिन्नानां सर्वापोहानां निश्चयः प्रसज्यते। न हि निश्चयं प्रत्यपोहः खण्डशो भूत्वा तादात्म्यं जहाति। अथ वस्तुनस्तादात्म्यमिष्टम्, न त्वपोहानाम्, न; व्यावृत्त्यपोहयोरनर्थान्तरत्वात्। व्यावृत्तिश्च व्यावृत्ताद्वस्तुनो नान्या, तत् कथं न वस्त्वात्मकत्वमपोहानाम्? यदि च वस्तुविषयो न निश्चयः, ततोऽनिश्चितमेव वस्तु स्यात्। अनिश्चितं कथं व्यवहर्तुं शक्यते? प्रत्यक्षेण गृहीतमिति चेत्, ननु किं संदिग्धं मुग्धात्मकं प्रत्यक्षम्? नैवेति चेत्, ततः कथं न निश्चायकं प्रत्यक्षम्?

## ※ प्रत्यक्षस्य भेदानिश्चायकत्वनिरासः ※

यच्चोक्तम्—न प्रत्यक्षं कस्यचिन्निश्चायकम्। तद् यदपि गृह्णाति, न तन्निश्चयेन, किं तर्हि? तत्प्रतिभासेनेति, तन्न; अनिश्चयप्रतिभासस्य सन्देहाकारत्वात्। न हि तृतीयं प्रतिभासं पश्यामः। विपरीतनिश्चयस्तु विपर्ययः, तर्कानध्यवसाययोः सन्देहान्तर्भावात्। [1]स्मृतिरूवनुभवाकारानुकारिणी निर्विकल्पकज्ञानस्यापि द्वैविध्यं संशयलक्षणे समर्थितम्।

स्मृतिशब्दानुमानज्ञानं च निश्चयोभिप्रेतः, सोऽपोहविषय एव न वस्तुविषय इति चेत्, न; तस्यापि हि वस्तुविषयत्वं साधितम्, साधयिष्यते च। यदि च स्मार्तनिश्चयो न वस्तुविषयः, तदा कथं गृहीतग्राहीत्वेनाप्रमाणमुच्यते? न ह्यर्थान्तरविषयं निर्विषयं वा ज्ञानं गृहीतग्राहीति युक्तम्। प्रमाणान्तरं च प्राप्तम्, न हि तस्याप्रामाण्यम्, प्रत्यक्षेन्तर्भावो वा, संवादित्वे सत्यपोहविषयत्वादनुमानवत्। नाप्यनुमानम्, त्रिरूपलिङ्गाजन्यत्वात्, प्रत्यक्षवत्।

ननु च प्रत्यक्षगृहीते भेदे भवन्ती स्मृतिः कथं प्रमाणान्तरम्? सर्वाकारनिश्चयस्तु सहकारिवैकल्यान्न भवति। तदुक्तम्—

> प्रत्यक्षेण गृहीतेपि विशेषेंऽशविवर्जिते।
> यद्विशेषावसायोऽस्ति प्रत्ययः स प्रतीयते॥

यद्यप्यंशरहितः सर्वतो भिन्नस्वभावोऽनुभूतः तथास्ति न सर्वभेदेषु तावन्निश्चयो भवति, कारणान्तरापेक्षत्वात्। अनुभवो हि यथा विकल्पाभ्यास इति निश्चयप्रत्ययं जनयति। यथा रूपदर्शनाऽविशेषेपि कुणपकामिनीभक्ष्यविकल्पाः। तत्र बुद्धिपाटवतद्वासनाभ्यासः प्रकरणमित्येवमादयोऽनुभवा-

---

१. तथा प्रतिपादितं प्राक् १९तमे पृष्ठे।

भेदनिश्चयोत्पत्तिसहकारिणः, तेषामेव च प्रत्यासत्तितारतम्यादिभेदात्पौर्वापर्यम्। यथा जनकाध्यापकत्वाविशेषे पितरमायान्तं दृष्ट्वापि (तम् आगच्छति, नोपाध्याय ?) इति।

तदेतदप्यनुपपन्नम्, न ह्ययं भावः प्रत्यक्षादेव बिभेति, येन तस्यैव निरंशो भूत्वात्मानं समर्पयति। कुतश्च तेन मन्त्रौषधमिन्द्रजालं शिक्षितम् ? यदयं निरंशोपि निश्चयं प्रत्यनेकांशो भूत्वैकमेवांशमात्मनो दर्शयतीति। सहकारिभेदोऽपि न निरंशं वस्तु खंडशः कर्तुं शक्नोति। ततो निश्चयभेदश्चेद्, भेदेपि वस्तुभेदात्तथैव निश्चीयते अनेकपुरुषैः सूर्यवद्, अन्यथा दर्शनभेदादप्यनेकांशकल्पना स्यात्। तत्त्वतो धर्मभेदे हि सहकारिभेदोपवर्णनं युक्तम्। भिन्नानामतुल्ययोगक्षेमत्वाद्दण्डकुण्डलादिवत्। कुणपादिविकल्पदृष्टान्तोप्ययुक्तः, कुणपत्वादिधर्माणामपि भिन्नत्वात्। अन्यथात्र बुद्धिपाटवतद्वासनाऽभ्यासादिनिश्चायकमस्त्यन्यत्र नास्तीत्यपि तस्मादेकत्र दर्शनादर्शनवत्।

## * अपोहानां तादात्म्यानुपपत्तिनिरासः *

अथ निश्चयविषयाणामपोहानां तादात्म्यं नेष्यते, ततो न सर्वग्रहप्रसंगः। स तर्हि निश्चयः किमपोहद्वारेण वस्तुन्यपि प्रवर्तते ? अथापोहमात्र इति ? वस्तुन्यपि प्रवृत्तौ प्राप्तः सर्वापोहग्रहः। कस्मादनुपकारके तद्द्वारेण तत्र प्रवृत्तावतिप्रसंगः। तदुपकारकत्वे च यदि अपोहोपकारकत्वं वस्तुनस्तदेव सर्वापोहोपकारकत्वमित्याकारापोहोपकारकत्वेनापि निश्चितं वस्तु सर्वापोहोपकारकत्वेनैव निश्चितं स्यात्। न च सर्वापोहानिश्चये सर्वापोहोपकारकत्वं निश्चेतुं शक्यते स्वस्वामित्ववदित्यतः सर्वापोहग्रहणप्रसंगः केवलापोहविषयत्वे शब्दानां च भवति तत्प्रतिपत्तिमुखेन सर्वप्रतिपत्तिस्तदापि वस्तुनः शब्दैरनाक्षेपान्न स्यात्तत्र प्रवृत्तिरिति व्यर्थः शब्दप्रयोगः स्यात्। अर्थक्रियाश्रयो हि सर्वो विधिप्रतिषेधाभ्यां व्यवहारोऽपोहश्च तत्रासमर्थः समर्थश्च न चोद्यत इति, किं शब्दप्रयोगैः ? ततश्चापोहानामपोहाः स्युः, अपोह्यमानस्य हि कस्यचिदङ्गभावात्तथोच्यन्ते। तस्य शब्दैराक्षेपान्न ते कस्यचिदङ्गभूता इति कथमपोहाः ? एतेन बुद्ध्याकारोऽन्तरालवर्ती वापोहशब्दार्थः प्रत्युक्तः। लक्षितलक्षणादिति चेत्; समानः प्रसंगः। स तावद्भिरपोहैर्नान्तरीयकतयोपलक्षण एकेनाप्युपलक्षणेन सर्वात्मनोपलक्षित इति तदवस्थः प्रसंगः। को ह्यत्र विशेषः ? शब्दा वैनमुपलक्षयेयुस्तल्लक्षिता वापोहः स तावत्तदानीं निश्चीयते सर्वोपकारक इति सर्वग्रहणप्रसंगः।

ननु च तवापोहोपकारको भावस्ततोर्थान्तरापोहासम्भवात्,

तथापि निवर्तमानस्यापोहान्तरकल्पनयाऽनवस्थाप्रसंगात्। तस्माद्यैव व्यावृत्तिः स एव व्यावृत्तः—

तेनान्यापोहविषये तद्वत् पक्षोपवर्णनम्।
प्रत्याख्यातं पृथक्त्वे हि स्याद्दोषो जातितद्वतोः॥

यदाहुः—अन्यापोहेपि शब्दार्थे [1]तद्विशिष्टस्याभिधानात्तद्वत्पक्षोदितः सर्वप्रसंगः समान इति, तदपि प्रत्याख्यातम्; तत्र ह्यर्थान्तरमुपादायान्यत्र प्रवर्तमानः शब्दोऽस्वातन्त्र्यादिदोषैरुपहूयते। न चार्थान्तरमन्यथा व्यावृत्तिरिति।

[2]सोऽयमुज्वलकटन्यायोऽनुसृतः। तथा हि—दण्डमुपादाय दण्डीति शब्दः पुंसि प्रवर्तमानो न कुण्डलाद्यभिधायकः, तेन कुण्डलीत्यादिशब्दोपि [3]तत्र सार्थकः स्यात्। निरंशस्य तु किमनिश्चितमस्ति यदर्थं शब्दान्तरं प्रवर्तेत पुनरुक्तता वा स्यात्। शब्दप्रतिपत्तिभेदः संकेतभेदान्न तु वाच्यभेदादस्तीति चेत्, [4]ननु वाच्यभेदाभावात् संकेतभेदोप्ययुक्तः पर्यायो वा स्यात्, घट कुम्भादिवत्। दण्डादिवन्निमित्तभेदस्याप्यभावात्। निमित्तभेदाभ्युपगमे च न धर्मधर्मिणोरभेदः। किं च गवां भावो गोत्वमिति षष्ठीवचनभेदतद्धितप्रयोगो न स्यात्; प्रकृत्यर्थातिरिक्तार्थासम्भवात्।

## ❀ धर्मधर्मिणोरभेदेऽपि भेदकशब्दप्रवृत्तिरिति शाक्यमतम् ❀

नन्वत्रोक्तम्—

[5]द्वयोरेकाभिधानेपि विभक्तिर्व्यतिरेकिणी।
भिन्नमर्थमिवान्वेति वाच्यलेशविशेषतः॥

न हि वस्त्वायत्ता शब्दप्रवृत्तिः, किं तर्हि? वक्त्रिच्छायत्ता, तेन भेदमध्यारोप्य संकेतिता विभक्तिर्यथासंकेतं प्रतीतिहेतुर्भवति। यथैकवचनार्थे

---

१. तद्विशिष्टस्य = अपोहविशिष्टस्य भावस्येत्यर्थः।
तद्वत्पक्षोदितः = जातिमत्पक्षोक्तः।

२. नैयायिक उत्तरयति—सोऽयमिति।

३. तत्र = पुंसि।

४. ननुरयं निश्चये शंकापनोदने वा।

५. द्वयोः = धर्मधर्मिणोः। विभक्तिः = षष्ठीविभक्तिः।

बहुवचनं यूयं वयं गुरव इति गौरवादिख्यापनार्थम्। न चात्र संकेतभेदस्य प्रयोजनमस्ति। तथा हि—

भेदान्तरप्रतिक्षेपाप्रतिक्षेपौ तयोर्द्वयोः।
संकेतभेदस्य फलज्ञातृवाञ्छानुरोधिनः॥

यदा संज्ञाता व्यवच्छेदान्तरानपेक्षोऽर्थविशेषेऽश्वव्यवच्छेदमात्रं जिज्ञासमानं जिज्ञापयिष्यति, तदा तथार्थकृतसंकेतं शब्दमनश्वत्वमस्यास्तीति प्रयुङ्क्ते यदा तु व्यवच्छेदान्तरप्रतिक्षेपेण तज्ज्ञापयितुमिच्छति, तदाऽनश्वोयमिति। अत एव पूर्वत्र प्रतिक्षिप्तभेदान्तरत्वाच्छब्दवृत्तेर्न्न सामानाधिकरण्यं विशेषणविशेष्यभावो वा गोत्वमस्य शुक्लमिति। अप्रक्षिप्तभेदान्तरे तु भवति गौः शुक्ल इति।

भेदोयमेव सर्वत्र द्रव्यभावाभिधायिनोः।
शब्दयो र्नातयोर्वाच्ये विशेषस्तेन कश्चन॥

जिज्ञापयिषुरथान्तरं तद्धितेन कृतापि वा।
अन्या न वा यदि ब्रूयाद् भेदो नास्ति ततः परः॥ अपि च

येषां वस्तुवशा वाचो न विवक्षा पराश्रयाः।
षष्ठीवचनभेदादि चोद्यं तान् प्रति युक्तिमान्॥

यदि नामैते शब्दाः पुरुषैः क्वचित् प्रणिनीषिताः। अपि न शक्यते प्रणेतुर्वस्तुप्रतिबन्धाद् धूमादिवत् तदायमुपालम्भः स्यात्—कथं षष्ठ्यादय इति? यदा पुनः

यद्यथा वाचकत्वेन वक्तृभिर्विनियम्यते।
अनपेक्षितबाह्यार्थं तत्तथा वाचकं वचः॥

यश्चायं सर्वत्र वस्तुकृतमेव शब्दप्रवृत्तिभेदमिच्छति, तस्य।
दाराः षण्णगरीत्यादौ भेदाभेदव्यवस्थितेः।
खस्य स्वभावः खत्वं वेत्यत्र वा किं निबन्धनम्॥ इति।

## ❀ तन्निरासः ❀

अत्रोच्यते—यत्तावदुक्तम्—वाच्यलेशविशेषत इति, तदयुक्तम्; निरंशस्य हि लेशतोपि कुतो वाच्यविशेषः? न हि केनचिदंशेन धर्मभेदोपीष्यते, अनेकान्तपक्षानभ्युपगमात्। अथ भेदाध्यारोपेण संकेतात् तथोच्यते, मिथ्यैव

तर्हि तथा प्रतीतिः स्यात्। एवमस्तु इति चेत्, एवं तर्हि वस्तुनः शब्दत्व-कृतकत्वयोः पर्यायता स्यात्तयोः शब्दादभिन्नत्वात्ततश्च शब्दत्ववत् कृतकत्व-स्यापि घटादिषु नान्वयः स्यात्। यदप्युक्तम्—भेदान्तरप्रतिक्षेपाप्रतिक्षेपाविति, तत्र यथा तदन्यभेदव्यतिरेकेणापि गोत्वादिधर्मोऽस्ति तथोत्तरत्र वक्ष्यामः। अपि च भेदान्तराण्यपि यदि विद्यमानान्नार्थान्तराणि, तदा कथमतत्प्रक्षेपः ? न हि सुशिक्षितेनापि पटस्तदात्मानं त्यक्त्वा ग्रहीतुं शक्यते। पर्यायता च तदवस्थैव। अथार्थान्तराणि, तत्र यदि तैर्विशिष्टं वस्तु अभिधीयते, तदा वान्ताशित्वं भवतः प्राप्तम्—प्राक् त्यक्तस्य तद्व्यत्तस्येदानीं स्वीकरणात्। को ह्यत्र विशेषः ? सामान्यादिमद्वस्त्वभिधीयतामपोहैर्विशिष्टं वेति। अथ केवलान्येव भेदान्तराण्यभिधीयन्ते, तदाप्यर्थक्रियायोग्यस्यानभिधानाद् व्यर्थः शब्दप्रयोग इत्युक्तम्। किं च सामानाधिकरण्यं विशेषणविशेष्यभावश्च न स्यात्, घटपटादिशब्दवत् [1]तदेकार्थसम्बन्धाभावात्। [2]पारम्पर्येणैकवस्तु-सम्बन्धोस्तीति चेत्, घटशरावादिशब्दानामपि सामानाधिकरण्यादिप्रसंगः, पारम्पर्येणैककुलालसम्बन्धित्वात्। तेभ्यस्तत्राध्यवसायाभावादिति चेत्, किमित्यध्यवसायो न भवति ? तेषां तत्र संकेताप्रवृत्तेरिति चेत्, एवं तर्हि यत्रैव संकेतितास्तत्रैवाविसंवादिनिश्चयं कुर्वन्तः साक्षादेव तद्विषयाः। किमुच्यते पारम्पर्येणेति ? न च पारम्पर्येणापि भिन्नविशेषणसम्बन्धाभावे वस्तुमात्र-सम्बन्धेपि सामानाधिकरण्याद्युपपत्तावुभयप्रसिद्धोस्ति दृष्टान्तः। भिन्नविशेषण-सम्बन्धे तु दण्ड्यादिशब्दानां तथाभावः सर्वलोकप्रसिद्ध इत्यस्ति दृष्टान्तः।

यदपि जिज्ञापयिषुरित्यादि, तदप्ययुक्तम्; पराभिप्रायापरिज्ञानात्। न ब्रूमः—कृत्तद्धितादिशब्दाः क्वचिदप्येकार्थाभिधायिनो भवन्तीति, किं तर्हि ? तेषामेकार्थाभिधायित्वे पर्यायतैव स्याद् भेदभिन्नत्वादिशब्दानामिव। तथा च शब्दान्तरोच्चारणवैयर्थ्यम्, गुणप्रधानत्वाभावः, शुक्लत्वादिनेव गोत्वेनाप्यन्वया-भावश्च स्यात्। धर्मभेदाभ्युपगमे च कथं न वाक्येऽस्ति विशेषः कश्चन ?

एतेन येषां वस्तुवशा वाच इत्याद्यपि निरस्तम्, न हि सर्वा वाचोऽस्मा-भिरपि वस्तुप्रतिबद्धा इष्यन्ते, किं तर्हि ? प्रमाणभूता इन्द्रियबुद्धय इवात एवोभयथादर्शनाद्विचार्यते। दाराः षण्णगरीत्यादिरप्यनुक्तोपालम्भः, न हि बहुष्वबहुवचनमित्यादिनियमोभ्युपगम्यते, यथासमयं शब्दप्रवृत्तेरभ्युप-

१. तदेकार्थसम्बन्धाभावात् = तेषां भेदान्तराणामेकस्मिन्नर्थे सम्बन्धाभावादित्यर्थः।

२. यत्रैवार्थेऽमुत्पलव्यावृत्तिर्वर्तते, तत्रैवानीलव्यावृत्तिरपीति नीलोत्पलशब्दयोरपो-ह्यार्थैकाधिकरणत्वरूपं पारम्पर्यमत्रविवक्षितम्।

गमात्। तथा च सूत्रम्—[1]"सामयिकत्वाच्छब्दादर्थसंप्रत्ययस्येति।" न च गवामित्येकार्थे बहुवचनं सम्मतम्, नाप्यभेदे षष्ठी, शावलेयादीनां बहूनामेकधर्मत्वे गोत्वस्य प्रतीतेः। नापि बहुषु गोत्वमित्येकवचनं बहुत्वे तस्याभावप्रसंगात्। अत एव न राक्षसादिवदिदं स्वार्थे तद्धितविधानं व्यवहाराभावाच्च। यथा रक्षो राक्षस इति रावणादिसमानाधिकरणत्वेन व्यवहारोस्ति, न तथा गोत्वमयं पिण्ड इति व्यवहारोस्ति।

## ❀ सौगतसामान्यखण्डनस्य निरासः ❀

यत्पुनरत्रोक्तम्—न च सामान्यं नाम किंचिदस्ति, शब्दाश्रया तु बुद्धिरनादिवासनादिसामर्थ्यादसंसृष्टानपि धर्मान् सृजन्ती जायते। तस्याः प्रतिभासवशेन सामान्यं सामानाधिकरण्यं च व्यवस्थाप्यत इति। दिङ्नागोप्याह—"सर्व एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेनेति"। तदेतदयुक्तम्, स्वप्नादिवन्मिथ्यानुमानप्रसंगादर्थान्वयाभावाविशेषात्। वस्तुदर्शनपूर्वकत्वविशेषेपि वाष्पादेरपि धूमत्वेनाव्यवसितस्याग्न्यनुमापकत्वप्रसंगात्। पूर्वदृष्टधूमसादृश्याभावश्च धूमान्तरेऽपि समानः, सामान्यस्याभ्युपगमो वा सादृश्यस्यैव सामान्यशब्देनाभिधानात्। तदत्यन्तासत्त्वे वात्र सादृश्यबुद्धिः संवादिका नात्रेत्ययं विशेषः कुतः स्यात्?

## ❀ बौद्धानां सत्यद्वयकल्पना ❀

संवृत्यसंवृत्तिकृतोस्ति विशेष इति चेत्, स्यान्मतम्—यत्र संवृत्तिसत् सामान्यं तत्र संवादी व्यवहारो भवति, नान्यत्र; विकल्पमात्रारोपितं हि संवृत्यप्यसदिति। संवृतेस्तत्सामान्यस्य च स्वरूपं दर्शयति—

पररूपं स्वरूपेण यया संव्रियते धिया।
एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः॥

यया संवृतनानात्वाः संवृत्या भेदिनः स्वयम्।
अभेदिन इवाभान्ति भावा रूपेण केनचित्॥

तस्या अभिप्रायवशात्सामान्यं सत्प्रकीर्तितम्।
तदसत्परमार्थेन यथासंकल्पितं तथा।

बुद्धिः खलु तदन्यव्यतिरेकिणः पदार्थानाश्रित्योत्पद्यमाना विकल्पिका

---

१. न्या० सू० २।१।५५।

स्ववासनाप्रकृतिमनुविदधती अभिन्नस्वभावम् अगोव्यावृत्त्यादिरूपं कारणं भिन्नमेषां रूपं तिरोधाय प्रतिभासमभिन्नमात्मीयमध्यवस्य तान् संसृजन्ती दर्शयति। सा चेयं संवृतिः संव्रियतेऽनया स्वरूपेण पररूपमिति। ते च तया संवृतिभेदाः स्वयं भेदिनोऽप्यभेदिन इव केनचिद्रूपेण प्रतिभान्ति। तदेषां बुद्धिप्रतिभासमनुरुन्धानैर्बुद्धिपरिवर्तिनामेव भावानामाकारविशेषपरिग्रहाद् बहिरिव परिस्फुरतां सामान्यमित्युच्यते। कथमिदानीमन्यापोहः सामान्यम्? स एव खलु अन्यापोहस्तमेव गृह्णन्ती सा प्रकृतिविभ्रमाद् विकल्पानां वस्तुग्राहिणी च प्रतिभाति। सा हि तदन्यविवेकिष्वेव भावेषु भवन्ती विवेकविषयेति गम्यते।

ननु बाह्या अविवेकिनो न च तेषु विकल्पवृत्तिरिति कथं तेषु भवति? व्याख्यातारः खल्वेवं विवेचयन्ति, न व्यवहर्तारः। ते तु स्वालम्बनमेवार्थक्रियायोग्यं मन्यमाना दृश्यविकल्पावर्थावेकीकृत्य वर्तन्ते। तदभिप्रायवशादेवमुच्यते। तत्कारितयाऽतत्कारिभ्यो भिन्नास्तथा शब्देन प्रतिपादयन्तीति प्रतिभासभेदादिभ्यस्तु तत्त्वचिन्तका नाभेदमनुमन्यन्ते। यदि प्रतिपत्रभिप्रायोऽनुविधीयते, अन्यापोहोऽपि सामान्यं मा भूत्, न ह्येवं प्रतिपत्तिरिति। न च केवलमेवमिति प्रतिपत्तिः, व्यतिरिक्ताव्यतिरिक्तैकनित्यव्यापिताद्याकारोऽपि नैव प्रतिपत्तिः, केवलमभिन्नाकारा बुद्धिरुत्पद्यते। तस्याः क आश्रयः? इत्यन्यापोह उच्यते, तस्य वस्तुषु भावादविरोधात्। व्यवहारस्य च शब्दाश्रयस्य तथा दर्शनात्। न पुनः किञ्चित् सामान्यं नामास्ति यथेयं बुद्धिः प्रतिभातीति।

## ❀ तन्निरासः ❀

तदेतदयुक्तम्, बुद्धेरर्थाकारस्य प्राक् प्रपंचेन प्रतिषिद्धत्वात्। सविकल्पस्य प्रत्यक्षस्य साधितत्वात्। तेन शाबलेयादिषु सादृश्यबुद्धेर्भ्रान्तत्वमयुक्तम्। भ्रान्तिनिमित्ताभावाच्च। न तावदिन्द्रियदोषादियं भ्रान्तिः, सर्वदा सर्वपुरुषभासित्वान्नीलादिदृष्टिवत्। नापि सादृश्यनिमित्ता, सादृश्यान्तराभावात्। नापि नीलस्फटिकादिवदन्यसंसर्गनिमित्ता, सामान्यासम्भवे तदन्यसंसर्गासम्भवात्। नापि नीलाकाशादिवद् दूराद् दृष्टिक्षोभनिमित्ता, सन्निहितेष्वपि शाबलेयादिषु तत्सामान्यस्य प्रतिभासनात्। नौयानादेश्चात्र सम्भव एव नास्ति। नापि वासनात्र निमित्तम्, तस्याः स्वापादिसहकारिरहिताया इदन्तया भ्रान्त्युत्पत्तौ सामर्थ्यानुपलब्धेः। कामाद्यभिभूतस्य स्त्र्यादिभ्रान्तिवदिति चेत्, तद्वदेव तर्हि सर्वत्राविशेषेण न स्यात्, कस्यचिदेव स्यात्। न हि स्त्र्यादिभ्रान्तिः सर्वेषामविशेषेण, अर्थविशेषेष्वेव भवति। न च तादृगर्थदर्शनासम्भवे केवलोपदेशमात्रादिदन्तया भ्रान्त्युत्पत्ति-

समर्था वासना सम्भवति। न च तदर्थादर्शने वासना एवेदन्तयोत्पन्ना बुद्धिरविसंवादिनी सम्भवति।

यच्चोक्तम्—तदन्यव्यतिरेकिणः पदार्थानाश्रित्योत्पद्यमानेत्यादि, तत्र ते तदन्यव्यतिरेकिणोऽर्थाः किं परस्परतोऽसमानाः? समाना वेति? यद्यसमानाः, तदा तदाश्रया तदेकजातीयबुद्धिर्धूमवात्याद्याश्रयसंवादिनी न स्यात्। अथ समानाः, तदा तेषां सामान्यमेष्टव्यमन्यथा कथं समानाः? स्वभावेन हि विसदृशात्मानोर्थास्त्वयेष्टाः। विसदृशेषु च सदृशत्वबुद्धिः कथं संवादिनी शंखपीतादिबुद्धिवत्? एकसम्बन्धात्तु विसदृशेष्वप्यनुगतबुद्धिरव्यभिचारिणी दृश्यते। यथैकराजस्वीकृतेषु राजपुरुषो राजपुरुष इति। नीलादिष्वेकदृष्टिसम्बधाच्च दृष्टं दृष्टमिति। यत्रापि दृष्टिभेदस्तत्राप्यदृष्टित्वं निमित्तमिति। विषयगतावयविनि निमित्ताभावे तु तथाविधबुद्ध्युत्पाद एव न सम्भवति। कुतस्तया पररूपाणि स्वरूपेण संव्रियत इति? अमुतः संवृतिसत्सामान्यमपि न सिद्ध्येत्। यदि 'हि समानार्थदर्शनं वासनाप्रकृतिः स्यात्ततस्तामनुविदधती विकल्पबुद्धिः स्मृतिर्भवेदन्यथाऽतिप्रसंगः स्यात्। न च सामान्याभावे समाना इति।

## ❀ तदन्यव्यावृत्तिरूपसामान्यनिरासः ❀

तदन्यव्यावृत्तिरेव सामान्यमिति चेत्, न; तस्याः प्रतिव्यक्त्यसाधारणत्वेनानन्वयात्। साधारणत्वे च जात्याऽविशेषः। यथैकजात्यान्वयिष्वर्थेषु संकेतोपि गृह्यते, तथैकव्यावृत्त्यान्वयिष्वपि, को ह्यत्र विशेषः? तद्वत्पद्मोक्तदोषस्तवाप्यनुषज्यते।

नन्वस्तु नाम तद्वद्दोषः, जातिरन्या मा भूत। जातिमपि हि अभ्युपगच्छतावश्यं भावानां भेदोभ्युपगन्तव्यस्तद्विशिष्टेष्वर्थेषु शब्दादेः प्रवृत्तिरस्तु सर्वथा दोषपरिहारस्य कर्तुमशक्यत्वात्। अनिष्टपरिहारार्थो हि शब्दप्रयोगस्तेनासौ व्यवच्छेदफलस्तथा हि—आनयेत्यभिधाने द्रव्यान्तरेऽप्यानयनयोग्ये शंका स्यात्, तद् व्यवच्छेदार्थं धृतग्रहणम्, धृतग्रहणमन्यथा व्यर्थं स्यात्। एवं क्रियान्तरव्यवच्छेदार्थमानयनग्रहणं पुरुषान्तरव्यवच्छेदार्थं देवदत्तग्रहणम्। एवं सर्वत्र व्यवछेदः शब्दार्थः।

अथ जातिमदभिधानेपि व्यवच्छेदो न विचार्यते। तत्रोक्तम्—

व्यवच्छेदोस्ति चेदस्य न त्वेतावत्प्रयोजनम्।
शब्दानामिति किन्तत्र सामान्येनापरेण वा॥

अत्रोच्यते—यद्यवृक्षव्यावृत्तो वृक्ष उच्यते, तद्व्यावृत्तश्चावृक्ष इति, सोऽय-

[1]मितरेतराश्रयो दुर्निवारः। तथा हि—अवृक्षवर्गाप्रतिपत्तौ, न तद्व्यवच्छेदेन वृक्षवर्गप्रतिपत्तिस्तदप्रतिपत्तौ च न तद्व्यवच्छेदेनावृक्षवर्गप्रतीतिस्ततस्तत्र न संकेतोऽपीत्यव्यवहार एव स्यात्। तुल्यं भवतोपीति चेत्, न तुल्यम्; न हि वस्तुसत्सामान्यवादिना कस्यचिद् व्यवच्छेदेन किञ्चिद्विधीयते। किं तर्हि? वस्त्वेकं पुरोवस्थितं संदर्श्य वृक्षोऽयमिति संकेतः क्रियते। संकेतकाले ततस्तमर्थं जातिसमन्वितं ज्ञात्वा तद्व्यवहारमपि प्रतिपद्यत इति। नन्वत्रापि वृक्षोयमप्ययमेवेति संकेतानुपपत्तिः, न; उभयथापि सम्भवात्। विशेषानपेक्षया अयमप्यन्योपि एवंलक्षणो वृक्ष इति। जात्यपेक्षया त्वयमेव वृक्ष इति व्युत्पादितो यत्रैव वृक्षत्वं न पश्यति, तमेवाऽवृक्षं स्वयमपि प्रतिपद्यते; दृष्टविपरीतस्य सुज्ञानत्वात्। नैवं व्यवच्छेदवादिनः सम्भवति। समुच्चयपक्षे न व्यवच्छेदसिद्धिः, अवधारणपक्षे तु दृष्टस्य क्वचिदनन्वयाद् व्यक्त्यन्तरेपि न स्याद् वृक्षप्रतीतिः।

## ❋ अर्थक्रियाकारित्वस्य व्यवच्छेदकत्वं तन्निरासश्च ❋

ननु च ज्ञानाद्येकार्थक्रियाकारिणोऽतत्कारिभ्यो व्यवच्छिन्नाः सर्वे, तेनैकत्रापि तद्व्यवच्छेदमुपादाय संकेतः क्रियते। ततो व्यवहारकालेप्यतत्कारिव्यवच्छेदप्रतीतिरिति किमत्रासमञ्जसम्? कथमसति सामान्ये भिन्नानामभिन्नं कार्यं सम्भवति? प्रकृतिरेषा भावानाम्, यतः—

एकप्रत्यवमर्शार्थज्ञानाद्येकार्थसाधने ।
भेदेपि नियताः केचित्स्वभावेनेन्द्रियादिवत् ॥
ज्वरादिशमने काश्चित्सह प्रत्येकमेव वा ।
यथा चौषधयो दृष्टा नानात्वेपि न चापराः ॥ (प्र० वा० ३।७२,७३)

अत्रोच्यते—यत्तावदेकार्थक्रियाकारित्वं तदतत्प्रविभागनिमित्तमिति, तन्न; वाहदाहाद्यर्थक्रियानुपलम्भेपि गवाग्न्यादिप्रत्ययदर्शनात्। न च तदकरणेपि तत्कारित्वं युक्तम्, अतिप्रसङ्गात्। योग्यतैव तत्कारित्वमिति चेत्, केयं योग्यता? न तावत्स्वरूपमेव, तस्यानन्वयात्तदनन्वये च ततो व्यावृत्तस्य व्यक्त्यन्तरस्याप्यतद्भावप्रसङ्गः। किं चादृष्टपूर्वस्यापि स्वरूपदर्शनात्तत्कारित्वनिश्चयः स्यात्। अथ योग्यता तस्य धर्म्मः, स यद्यनर्थान्तरम्, ततस्तत्स्वरूपमेव तत्र चोक्तं दूषणम्। अथार्थान्तरं ततस्तदेव सामान्यम्, नास्ति विवादः।

---

१. तथा चोक्तम्—
अवृक्षव्यतिरेकेण वृक्षार्थग्रहणे द्वयम्।
अन्योन्याश्रयमित्येकग्रहाभावे द्वयाग्रहः॥ (प्र० वा० ३।११२)

एतेन शक्तेस्तत्कारित्वमिति प्रत्युक्तम्। 'भेदेपि नियताः केचिदि'त्यादि, तन्न; एकसामग्र्यन्तःपतितानामिन्द्रियालोकादीनामेककार्यकर्तृत्वं युक्तम्, न तु व्यक्तीनां देशकालव्यवहितानामेकसामग्र्यन्तःपातित्वमस्ति, एकसामग्र्यन्तःपातित्वं च प्रतिनियतजात्युपकृतानामेव सम्बन्धविशेषः। कस्मात्? असम्बद्धानामन्यजातीयसम्बद्धानां च तत्कार्यकारित्वाऽदर्शनात्। न ह्यसम्बद्धेन रूपेण सह सम्बद्धेन च स्पर्शादिना चक्षुर्जनयति ज्ञानम्। एतेनौषधीनामेककार्यत्वं व्याख्यातम्। तत्रापि गुडूचीत्वादिसामान्यान्वयादेककार्यान्वयः, क्षीरदध्यादीनां तु तदभावान्न तत्कार्यकारित्वम्।

नन्वत्रोक्तम्—यदि हि सामान्याज्ज्वरादिशमनं कार्यं स्यात्, तस्याविशेषाद् व्यक्तीनां क्षेत्रादिभेदेपि चिरशीघ्रप्रशमनादिविशेषो गुणतारतम्यं च न स्यादिति (प्र० वा० ३।७४)। उक्तमिदमयुक्तम्; न हि यत्रैकं सामान्यमस्ति तत्रान्यः सामान्यविशेषः सहकार्यन्तरविशेषो वा नास्ति, येन तत्कार्यवैषम्यं न स्यात्। न च सामान्यमेव तत्कार्यकारणमिष्टम्, किं तर्हि? तदन्वितव्यक्तयः तास्त्ववान्तरसामान्यविशेषोपेताः। अवान्तरविशेषोपेतानि तादृशानि कार्याणि कुर्वन्ति। सहकार्यन्तरविशेषोपेतास्त्वन्यादृशान्यपि कार्याणीति। तथा चैवंजातीयसहकार्युपेतादेवंजातीयात् कारणादेवंजातीयं कार्यं भवतीत्यनुमानमप्युपपद्यते। सामान्याभावे तु सामग्र्यन्तरसहकारिणामप्यत्यन्तभिन्नत्वात् कुतोऽन्वयस्तदभावे कुतोऽनुमानमित्यप्रवृत्तिरेव स्यात् कार्यविशेषार्थिनां कारणविशेषेषु। तत्कारित्वं तु यदि साधारणं ततोऽसाधारणेभ्योऽन्यत्वात्तदेव सामान्यमित्युक्तम्। न च तत्कार्यादर्शनेपि तत्कारित्वनिश्चयोस्ति। न ह्येकत्र कुलालादिनिश्चयेपि, अन्यत्राद्दष्टतत्कार्येषु कुलालकुविन्दादिषु तन्निश्चयो कभवति। यथैकत्र व्युत्पन्नस्यान्यत्राद्दष्टतत्कार्येष्वपि विषाग्न्यादिषु स्वरूपावलोकनादेव तन्निश्चय इति। यदि च तत्कारिष्वतत्कारिभ्यो व्यवच्छेदेन शब्दोपि वर्तते, तदानयनालोकादिष्वेककार्यकारिष्वतत्कारिभ्यो व्यावृत्तेरेकः शब्दः प्रवर्तेत, शाबलेयादिभेदवद्भिन्नजातीयव्यवहारश्च न स्यात्। कार्यान्तरभेदाद् भेदव्यवहार इति चेत्, न; कार्यान्तरभेदस्य प्रतिव्यक्तिसंभवात्, सामान्यव्यवहारोच्छेदः स्यात्। न च किञ्चित्कार्यं केवलेन चक्षुषा जन्यते येन तत्रैव सतत्कारिभ्यो व्यावृत्तेश्चक्षुःशब्दः प्रवर्तितः, सर्वत्र जातीयविजातीयकारकसमूहात्कार्योत्पत्तेरुपलम्भात्, तस्मात्सामग्र्यामेव शब्दः प्रवर्तितः।

अथ विशेषं प्रत्येकस्यैव कारणत्वम्, अथानेककारणजन्यस्यापि घटस्य मृत्पिण्डादेव मृत्स्वभावता तत्कुलालादेव सन्निवेशविशेष इति घटात्मकत्वे

तद्विशेषस्य कथं नानेककारणजन्यत्वम् ? घटस्यापि वाऽनेककारणजन्यत्वं न स्यात् ? भेदे तु तादात्म्याभ्युपगमहानिः । किञ्च कुलालकृतैव मृत्स्वभावता तत्सन्निवेशस्तु मृत्कृतः कस्मान्नेष्यते ? तदन्वयव्यतिरेकाभावादिति चेत्, कथमभावः ? कुलालाभावेपि वल्मीकादौ मृत्स्वभावतोपलब्धेरिति चेत्, सर्वस्यापि घटकारणस्याभावे तदुपलब्धेः, मृत्पिण्डोपि तद्धेतु र्न स्यात् । अन्या तत्र मृदस्ति हेतुरिति चेत्, अन्यसद्भावेपि कथं ततोन्यस्य मृत्पिण्डस्य हेतुत्वम् ? अतिप्रसंगात् ? मृत्वं तत्राप्यस्तीति चेत्, सोयं घोटारूढस्य विस्मृतो घोट इति वृत्तान्तः । घटशरावादीनामन्योन्यव्यावृत्तस्वभावत्वात्तद्धातूनां मृदां कथमेककार्यकारित्वमतत्कारिव्यावृत्तत्वं वा सामान्यं स्यात् ? सामान्यवादिनां तु मृज्जातीये हेतौ सत्येव मृज्जातीयस्योत्पादस्तदभावे घटवल्मीकादीनामपि मृज्जातीयत्वं न स्यादित्यन्वयव्यतिरेकाभ्यां विशेषतोपि कार्यकारणभावव्यवस्थापनं युक्तम् । सामान्याभावे त्वत्यन्तं विलक्षणेष्वेकाकारप्रतीतिप्रत्यभिज्ञापि न स्यात् ।

## ❀ अर्थक्रियाकारित्वस्याभेदव्यवहारनियामकत्वं तन्निरासश्च ❀

यत्पुनरत्रोक्तम्—

ज्ञानाद्यर्थक्रियां तांस्तान् दृष्ट्वा भेदेन कुर्वतः ।
अर्थान् तदन्यविश्लेषविषयैर्ध्वनिभिः सह ।
संयोज्य प्रत्यभिज्ञानं कुर्यादेवान्यदर्शने । (प्र० वा० २।६७-६८) इति !

तदतिदुर्मतिविस्पन्दितम् ; न ह्यर्थक्रियां दृष्ट्वैव तदेकाकारप्रत्ययो भवति । गवाऽग्निपनसादिपु तदर्थक्रियानुपलम्भेप्येकाकारतोपलम्भादित्युक्तम । न च नामसंयोजनेनैव प्रत्यभिज्ञा भवति, अप्रसिद्धसमयस्यापि हि सजातीयेष्वेकत्रावस्थितेष्वपि स्थावरेषु जङ्गमेषु वाऽमीषामेवैकाकारता, योऽस्याकारः स एवास्याकार इति च प्रत्यभिज्ञा भवति ।

ननु चैकां ज्ञानादिकामर्थक्रियां पश्यतो वासनाप्रवोधोदये मिथ्याप्रत्ययो भवत्यन्यथा तु भेदसंसर्गवती बुद्धिर्न स्याद्यथा दण्डिषु । न हि तत्रैकदण्डयोगेऽप्यन्यत्र स एवायमिति भवति, किं तर्हि ? तदिहेति । न चैवं प्रत्यभिज्ञानम्, किं तर्हि ? तदेवेदमिति, न; असिद्धत्वात्—नैव हि व्यक्त्यन्तरे तदेवेदमिति प्रत्यभिज्ञा भवति, किं तर्हि ? स एवास्याप्याकारस्तदेवास्यापि वा रूपम्, तज्जातीयमेवेदमिति वा, न चात्र बाधास्ति तन्नेयं भ्रान्तिः । यदि तु भिन्नेष्वभिन्नात्मव्यवसायिनी प्रत्यभिज्ञा स्यात्तदा भवेन्मिथ्या, यथा दीपादिषु । यावता यथैव दण्डस्तदधि-

करणत्वेन, सोऽस्येत्येवं वा तद्विशेषणत्वेन वा प्रतिभाति; तथा सामान्यमप्याकाररूपसादृश्यादिशब्दाभिलप्यं तदधिकरणत्वेन तदस्येत्येवं वा तद्विशेषणत्वेन वा प्रतिभातीति। जलमरीचिकादिष्विवासामान्येष्वेकाकारेयं बुद्धिरिति चेत्, न; तत्रापि सामान्यमात्रस्य निमित्तत्वात्। कथं तर्हि भ्रान्तिः? तत्सामान्येन सह दृष्टस्योदकत्वादेरधर्म्माद्युपकृतया स्मृत्याध्यारोपणात्। ननु स एवाकारस्तत्र सामान्यं येन भ्रान्ति र्न स्यात्। नापि सर्वत्र तद्वदारोपित एव सामान्याकारः प्रतिभाति, तद्वद्वाधकाभावात्। अत्यन्तानुपलब्धस्य खरशृंगादिवदारोपासंभवात्। तत्सहितसामान्याग्रहणे च तदारोपो न स्यान्मरीचिषु गर्दभाकारवत्। ततश्चानिच्छतापि सामान्यं स्वीकार्यम्। ननु व्यक्तीनामेकार्थजननशक्तिरेष्टव्या तासामन्येभ्यो भिद्यमानास्तादृशं प्रत्ययं जनयन्तु, किं तत्र सामान्येनेति चेत्, नैतदस्ति; यस्मात्सामान्यमेव योग्यताख्या शक्तिस्तथा हि—तन्त्वादयस्तत्सामान्यदर्शने सत्येते पटादिजननयोग्या इति निश्चितास्तदर्थिभिरुपादीयन्ते। चरमशक्तिग्रहणे तु तदा कार्यस्य सिद्धत्वात्तदर्थिनां तत्र प्रवृत्तिर्न्न स्यात्। न च स्वरूपमेव शक्तिः, अदृष्टकार्येषु स्वरूपग्रहणेपि तत्सामर्थ्यनिश्चयाभावात्। भ्रान्तेरनिश्चय इति चेत्, भ्रान्तिः कुतो निवर्तते? तत्कार्यदर्शनादिति चेत्, प्रवृत्तिविषयेषु कथम्? न हि तदेव व्यक्त्यन्तरेष्वपि स्वरूपं येनैकत्रापि तन्निश्चयेऽन्यत्रापि तन्निश्चितं स्यात्, सामान्यवत्। अन्यकार्यग्रहणे चान्यशक्तिनिश्चयेऽतिप्रसंगः स्यात्। अभिन्नाकारज्ञानग्रहणे सर्वत्र तच्छक्तिनिश्चय इति चेत्, नन्वेतदेवोदितं भिन्नेष्वभिन्नाकारं ज्ञानं कथमविसंवादि स्यात्। वस्तुसामार्थ्यादिति चेत्, उत्सन्ना तर्हि पदार्थानां भिन्नाकारव्यवस्था। शुक्लेष्वेव नीलपीताद्याकारं ज्ञानं वस्तुसामर्थ्यादविसंवादि भविष्यतीति पादप्रसारिकोपपत्तेः। किञ्च बुद्धीनामपि प्रत्यर्थभिद्यमानानामेकत्वमयुक्तम्, जातितोप्येकत्वं न संभवति, तत्रापि जातेरनभ्युपगमात्। एवमन्यासामर्थक्रियाणामन्योन्यव्यावृत्ताकारत्वात् कथं कुतस्तद्धेतूनामेकार्थक्रियाकारित्वमभेदव्यवहारनिमित्तं स्यादिति। यदप्याह—

एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी।
एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता॥ (प्र० व० ३।१०८) इति।

तदप्यसारम्, यतः प्रत्यवमर्शस्यापि कथमेकत्वम्? किं व्यक्तितः? अथ जातित इति? व्यक्तितस्तावदयुक्तम्, क्रमभाव्यनेकव्यक्तिदर्शनात्, प्रतिपुरुषं तदन्यत्वादतीतानागतादीनां धियां तदेकजनकत्वासम्भवाच्च। नापि जात्यैकत्वम्, जातेरनभ्युपगमात्। तत्राप्येकप्रत्यवमर्शहेतुत्वकल्पनेऽनवस्था स्यात्ततश्च

निमित्तैकत्वप्रतिपत्तावेवोपक्षीणशक्तित्वान्मूलव्यक्तिष्वभेदबुद्धिर्न स्यात् । तस्माज्जात्येकत्वग्रहणनिबन्धन एव व्यक्तिष्वभेदव्यवहार इति । यच्चेदमुक्तम्—

तुल्ये भेदे यया जातिः प्रत्यासत्त्या प्रसर्प्पति ।
क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनम् ॥ (प्र०वा०३।१६१-६२) इति ।

इदमपि कुचोद्यम्, न ह्येवं भवति—यया प्रत्यासत्त्या दण्डसूत्रादिकं प्रसर्प्पति क्वचिन्नान्यत्र सैव प्रत्यासत्तिः, पुरुषस्फटिकादिषु दण्डिसूत्रीत्यादिव्यवहारनिबन्धनमस्तु, किं दण्डसूत्रादिनेति ? हेतुसामग्रीनियमाच्च नियतजातिमत्कार्यं भवति । न च सैव सामग्री स्थिराशेषव्यक्त्यनुगता गौरित्यादिनिश्चयशब्देषु निमित्तं भवितुमर्हति, विशिष्टव्यवहारस्य च विशेषणग्रहणापेक्षित्वात् । ननु च व्यक्तयः किं विशिष्टज्ञानहेतवो भवन्ति वा न वा ? यदि भवन्ति किं सामान्येन ? नो चेत्तदा तज्ज्ञानात्तत्र प्रवृत्तिर्न्न स्यात् ।

एकवस्तुसहायाश्चेद् व्यक्तयो ज्ञानकारणम् ।
तदेकं वस्तु किन्तासां नानात्वं समपोहति ॥ (प्र० वा० ३।१००-१)

अथ न भेदो जननविरोधी, किं तर्हि ? कैवल्यं तेनैव सहिता जनयत्येव । कथं तर्हि व्यक्तीनां सामर्थ्यगतिः ? प्रत्येकं तासामभावेऽपि तत्सद्भावात्, सामान्ये सत्येव भावादिति, न; अनैकान्तिकत्वात् । नीलादीनामन्यतमापायेऽपि चक्षुर्ज्ञानं जनयति, न तु नेत्रापायेपि नीलादयः, तथापि तेषां नाऽसामर्थ्यमिति ।

यदप्युक्तम्—

तासामन्यतमापेक्ष्यं तच्चेच्छक्तं न केवलम् ।
तदेकमुपकुर्युस्ताः कथमेकां धियं च न ॥ (प्र० वा० ३।१०४-५)

यदि भिन्ना अप्यभिन्नं सामान्यमुपकुर्वन्ति, तथैव शक्तिज्ञानमेवोपकुर्वन्तु, किं तत्रान्तर्गडुना सामान्येनेति ? तदप्ययुक्तम्; न ह्येवं भवति—यया शक्त्या नीलादयश्चक्षुरुपकुर्वन्ति, तया ज्ञानविशेषमेव कुर्वन्तु, किं चक्षुषा ? तथा दण्डोपकारकशक्त्या दण्डीति ज्ञानमेव करोतु पुरुषः, किं दण्डेन ? एवं हि सर्वसहकार्याक्षेपः स्यादिति ।

## ❀ शब्दसंकेताक्षेपस्तत्समाधानं च ❀

ननु च सहकारिसामर्थ्यादपि कथं वस्तुषु शब्दः प्रवर्तते ? यतः—

शब्दाः संकेतितं प्राहुर्व्यवहाराय स स्मृतः ।
तदा स्वलक्षणं नास्ति संकेतस्तेन तत्र न ॥ ( प्र०वा० ३।९१ )

यत्र हि स्वलक्षणे व्यवहाराय संकेतः कृतस्तत्स्वलक्षणं तदा व्यवहारकाले

नास्ति, तस्य देशकालव्यक्तिभेदानास्कन्दितत्वात्। तस्मान्न तत्र समयः, नापि सामान्ये, निष्फलत्वात्। यो हि वाहदाहाद्यर्थक्रियासमर्थोऽर्थः, स न शब्देन चोद्यत इति किं शब्दप्रयोगैः ? सामान्येऽभिधानादेव प्रवृत्तिः, व्यक्तिषु तत्सम्बन्धादिति चेत् ? न; सत्यपि सम्बन्धे दण्डं छिन्धीत्युक्ते दण्डिषु प्रवृत्त्यदर्शनात्। नापि सम्भवाद् व्यक्तौ प्रवृत्तिः, एवं ह्यसम्बद्धप्रलापित्वं स्यात्ततोन्यत्र प्रवृत्तिः वलीवर्द्दोहचोदनादिवत्। निराधारस्य सामान्यस्यासम्भवात्। तच्चोदनातो व्यक्तिचोदनेति चेत्, न; व्यक्त्यपाये केवलस्याप्यनवस्थानात्। किञ्च क्षीरोदकादिपानचोदनातस्तदाधारपानचोदनाप्रसङ्गः। किञ्च क्रिया-गुणादिशब्दैः सामानाधिकरण्यं विशेषणविशेष्यभावश्च न स्यादिति।

अत्रोच्यते—अस्माभिरप्ययं दोषस्तेषामुद्भावनीयः, ये गौरित्यादिशब्दा जातिवाचका एवेत्याहुः। वयन्तु—गोत्वादिशब्दा जातिवाचकाः गवादिशब्दास्तु जातिविशिष्टव्यक्तिवाचका एवेति, तत्रैव च संकेतः क्रियते। व्यक्तिषु शब्द-प्रवृत्तौ जातेरानर्थक्यमिति चेत्, न; केवलव्यक्तिषु अनन्तासु संकेतस्य कर्तुमशक्यत्वात्। जातिविशिष्टेष्वप्यनिवृत्तमानन्त्यमिति चेत्, न; तत्रानन्त्यस्याप्रयोजकत्वात्। यत्रेदं गोत्वं स सर्वोपि गौरित्येवं संकेतग्रहणे देशकालाकारान्तरितेपि यत्र यत्र गोत्वं पश्यति तत्सर्वं गौरिति प्रतिपद्यते। सामान्याभावे तु युधिष्ठिरादिशब्दवदेकत्र कृतसंकेतोऽर्थान्तरे न प्रत्ययहेतुरिति तं न कुर्यात्। न ह्यसामान्यवादिनां सर्वव्यक्तिष्वभिन्नं निमित्तमस्ति।

## ❀ पाचकादिषु प्रवृत्तिनिमित्तवर्णनम् ❀

यद्येवं संकेतो विधीयते, पाचकादिषु किमभिन्नं निमित्तमिति चेत्, पचनत्वादिविशिष्टं कर्म, एवंजातीयस्य कर्मणो यः कर्ता स सर्वः पाचक इत्येवं संकेतः क्रियते। ततश्च यदुक्तम्—कर्माश्रिता जातिः कथमर्थान्तरे प्रत्ययहेतुरिति, तन्निरस्तम्; पारम्पर्य्येण हेतुत्वात्। जातितः कर्मस्वन्वयस्त-दन्वयात्तत्कर्तृष्वन्वय इति। अतीतं कर्म स्मृतं शब्दादवगतं वा विशेषणम्, अनागतमप्यनुमानेन वाधिगतम्। तदनवगमेन सन्देहः—किमयं पाचकः ? न वेति ? असतः कथं निमित्तत्वमिति चेत्, न; तद्विषयस्य ज्ञानस्य निमित्तत्वात्। ज्ञानमेवास्तु सर्वत्रेति चेत्, न; विशेषणज्ञानस्य निर्विषयस्य हेतुत्वे तद्विशेष्य-ज्ञानस्य मिथ्यात्वप्रसङ्गः, विषाणी पुरुष इत्यादिज्ञानवत्। अतीतानागतविशेष-णज्ञानेन च तद्रूपविशेषणावच्छेदेनैव विशेष्यज्ञानमुत्पादितं संवादिकं भवति—अपाक्षीदयं पाचकः, पक्ष्यत्ययं पाचक इत्यन्यथावगतौ च भ्रान्तिरेव स्यादिति।

## ❀ सामान्यविशेषादिषु प्रवृत्तिनिमित्तवर्णनम् ❀

सामान्यविशेषादिशब्दप्रवृत्तौ तर्हि किं निमित्तम् ? तत्राप्यस्त्येकं[1] लक्षणम्—सामान्यस्यैकात्मनोऽनन्तभेदेषु स्वावच्छेदेनान्वयिज्ञानहेतुत्वं नित्याभेदात्मनोऽनेकत्र समवेतत्वं वा । विशेषणत्वेन व्यावृत्तप्रत्ययहेतुत्वं विशेषाणां लक्षणम्, सामान्यविशेषरहितत्वेन तदवच्छेदोदयिज्ञानविषयत्वेन वा साध्यते सामान्याधारत्वम्, स्थाणवादिवदिति । न च तत्रावयवादिविशेषोस्ति, निरवयवत्वात्तुल्यधर्मत्वात् । [2]तुल्यधर्मणोन्त्यविशेषत्वे सिद्धे तद्दृष्टान्तोपकृतानित्यद्रव्यत्वादतुल्यधर्मणोऽपि नित्यद्रव्यत्वस्यान्त्यविशेषवत्वसिद्धिः ।

## ❀ विशेषपदार्थाभ्युपगम आग्रहाभावः ❀

यदि पुनः शब्दबुद्ध्यादीनामिवान्त्यविशेषाभावेऽपि तुल्यधर्मणामप्यन्येन केनचिद्विशेषेण विशेषत्वं कश्चिदुपपादयेत्, ततो नास्माकमन्त्यविशेषैः किञ्चित्प्रयोजनम् । तत्रैव चान्त्यविशेषसंज्ञां करिष्यामो ये नित्यद्रव्येष्वसाधारणविशेषास्तेऽन्त्यविशेषा इत्यर्थः । स्थितमेतत्सामान्यलक्षणनिमित्तः सामान्येषु शब्दः प्रवर्तते, विशेषेषु तल्लक्षणनिमित्त इति । एवं पदार्थवर्गादिशब्दाः प्रागभावादिशब्दाश्च प्रतिनियतलक्षणनिमित्ता द्रष्टव्या इति ।

## ❀ केषाञ्चिन्मते सामान्यादिष्वपि परम्परया सामान्यम् ❀

ननु तत्सामान्यादिलक्षणं यद्यनेकत्रान्वयि, ततस्तदपि सामान्यमेव स्यात्ततश्च सामान्यादिषु सामान्याभावाभ्युपगमो विरुध्यते । अथाऽनन्वयि, तदा ततः कथं भिन्नेष्वभिन्नशब्दप्रवृत्तिः स्यादिति ? अत्र केचिदाहुः—सर्वत्र भिन्नेष्वभिन्नशब्दप्रवृत्तिनिमित्तं सामान्यमेव । तच्च क्वचिद्विधीयमानम्, क्वचित्प्रतिषिध्यमानम्, क्वचित्साक्षात्, क्वचित्पारम्पर्येणेति । सामान्यादिषु पारम्पर्येणैवेत्यतो नाभ्युपगमविरोधः ।

---

१. एतेनेदमपास्तम्, यच्चोक्तम्—

व्यंजकस्य च जातीनां जातिमत्ता यदीष्यते ।

प्राप्तो गोत्वादिना तद्वान् प्रदीपादिप्रकाशकः ॥ ( प्र० वा० ३।१४८ )

२. तथा चाहुः—"अस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनस्सु चान्यनिमित्तासम्भवाद्, येभ्यो निमित्तेभ्यः प्रत्याधारं विलक्षणोऽयं विलक्षणोऽयमिति प्रत्ययव्यावृत्तिः, देशकालविप्रकर्षे च परमाणौ स एवायमिति प्रत्यभिज्ञानं च भवति, तेऽन्त्या विशेषाः" ( प्र० भा० पृ० ७६७–६९ ) ।

## ❀ वस्तुतः सामान्यादिषु सामान्याभावः ❀

अथवा सामान्यादिषु सामान्यप्रतिरूपकः कश्चिद्धर्मोऽस्ति, यतः सामान्यादिशब्दप्रत्ययौ भिन्नेष्वप्यनुगतौ भवतः। शब्दप्रत्ययानुगमहेतोः कथं न सामान्यभाव इति चेत, न; निष्क्रियादिशब्दप्रत्ययानुगमहेतुनानैकान्तात्। कुतस्तर्हि सामान्यतत्प्रतिरूपकविवेकावगमः ? प्रत्ययानुगमवैलक्षण्यात्। यो हि अव्युत्पन्नस्यापि प्रत्ययानुगमः, सामान्यनिवन्धनः। तद्विलक्षणस्तु धर्ममात्रनिबन्धनः। न हि प्रत्यक्षेष्वपि गोत्वादिष्वभावभेदेषु च नीलादिष्विवाऽप्रसिद्धसमयस्याप्येकाकारतावगमो भवति। किं च सामान्यवस्तु संशयः प्राप्नोति तन्निवृत्त्यर्थं तेषु विशेष एष्टव्यः। तेष्वपि विशेषेषु सामान्यं ततः संशयस्तन्निवृत्त्यर्थं तत्रापि विशेषः पुनस्तेष्वपि सामान्यमित्यनवस्था स्यादिति। तस्मान्न सामान्यादिषु सामान्यमस्ति। यदि पुनः शब्दप्रत्ययानुगमहेतोः सर्वस्यापि धर्मस्य सामान्यसंज्ञा क्रियते, तदा सामान्यादिष्वपि सामान्यं भवतु को विरोधः ? विशिष्टं तु सामान्यं तत्र नास्तीत्युक्तम्। धर्मश्चैकत्रापि धर्म्मिणि वहवः सन्ति तेन शब्दा अपि तन्निमित्तास्तावन्त एव तत्र प्रवर्तन्ते। तत्कथं सामानाधिकरण्याद्यनुपपत्तिः ?

## ❀ विकल्पितेऽर्थे एव शब्दसामानाधिकरण्यमिति सौगतमतम् ❀

ननु च भिन्नप्रवृत्तिनिमित्तयोरेकत्र वृत्तिः सामानाधिकरण्यमुच्यते, न वस्तुतस्तत्सम्भवति; तथा संकेताभावात्। न हि नीलशब्दार्थे उत्पलशब्दः संकेतितः, उत्पलशब्दार्थे च नीलशब्द इति। संकेतानपेक्षश्च न शब्दोऽर्थवाचक इति, अतिप्रसंगात्। किञ्च नीलशब्दादेव तदर्थप्रतीतौ उत्पलशब्दानर्थक्यं स्यात्, अप्रतीतौ चानेकार्थत्वम्, न हि यो यस्मान्न प्रतीयते स तस्यार्थ इति युक्तम्। तस्माद्विकल्पपरिनिष्ठितो योर्थः प्रतिभाति वाह्य इव एक इव अनर्थक्रियाकारी अर्थक्रियाकारी वा, तत्रायं सामानाधिकरण्यादिव्यवहारः तत्रैव च धर्मधर्म्मिव्यवहारोपि परस्परं [1]तत्त्वान्यत्वाभ्यामवाच्यः प्रतन्यते, स च मिथ्यार्थ एव व्यवहारस्तेनाऽसमानः प्रसंग इति।

## ❀ तन्निराकरणम् ❀

अत्रोच्यते—यत्तावदुक्तम्—तथा संकेताभावान्नीलादिशब्दानां नैकार्थत्व-

---

१. तथैवाहालङ्कारकारः—
परमार्थविचारेषु तथाभूताप्रसिद्धितः।
तत्त्वान्यत्वं पदार्थेषु सांवृतेषु निषिध्यते ॥ ( प्र० वा० अ० ४।३४९ )

मिति, तन्न; तद्वति संकेतकारणात्ततश्चोत्पलत्वविशिष्टमर्थमुत्पलशब्दोऽभिधत्ते। नीलगुणविशिष्टं च नीलशब्द इति। ततश्च यत्रोभयविशेषणयोगस्तत्रोभावपि शब्दौ प्रवर्तेते। न चान्यतरानर्थक्यम्, भिन्नधर्म्मावच्छेदेनार्थमभिदधतोरतुल्यार्थत्वात्। धर्म्यपेक्षया तु सामानाधिकरण्यम्। नन्वेवमुत्पलशब्दो रक्तोत्पलादिकमप्यभिधत्ते नीलशब्दस्तु काकादिकमपीति, कथं द्वयोरेकार्थत्वम्? नैष दोषः, सामान्येन कृतसंकेतोपि शब्दः प्रकरणादिभिः प्रतिनियत एवार्थे व्यवस्थाप्यत इति वक्ष्यामः। अत एव विशेष्यविशेषणभावोऽप्युपपद्यते। नीलशब्दो ह्यनेकविशेषधर्मोपेतेऽर्थे सामान्येन दृष्टस्तथैवार्थं प्रतिपादयन् विशेषाकांक्षां जनयति। ततस्तद्विशेषप्रतीत्यर्थमुत्पलशब्दः प्रयुज्यते। तथोत्पलशब्दार्थविशेषप्रतीत्यर्थं नीलशब्द इति।

यच्चोक्तम्—विकल्पपरिनिष्ठितः शब्दार्थस्तत्रैवायथार्थः सामानाधिकरण्यव्यवहार इति, तदयुक्तम्, न हि स्वात्मैकसम्बन्धे विकल्पपरिनिष्ठते वादिनोर्विप्रतिपत्तिसाधनदूषणोपन्याससंप्रतिपत्तिप्रवृत्त्यादिकं सम्भवति। भ्रान्तितस्तथाभावे स्वप्नादिभिरविशेषस्ततश्च विवेकिनां शास्त्रप्रणयनमप्यनर्थकं स्यात्। तत्प्रतिबद्धजन्मनां विकल्पानामतत्प्रभासित्वेऽपि वस्तुन्यविसंवादः प्रभायामिव मणिभ्रान्तेरिति चेत्? न; असिद्धत्वात्, न ह्यर्थप्राप्तिमात्रादेवाविसंवादः, किं तर्हि? यद्देशकालाकारतयार्थः प्रतिभातस्तथैव यद्यसौ प्राप्येत, अन्यथा मरीच्यादिज्ञानस्यापि कथञ्चिदुदकप्राप्तेरविसंवादः स्यात्। किञ्च तत्प्रतिबद्धजन्मनामिति कोयं प्रतिबन्धस्तादात्म्यलक्षणस्तावद्विकल्पसामर्थ्येन वास्तवेनारोपितेन वा सह न संभवति? स्वाकारेण च तादात्म्यं सर्वज्ञानानां समानम्। तदुत्पत्तिश्चेत्, विकल्पप्रतिभासिनः सामान्याकारस्य सत्त्वानभ्युपगमात्। कथं ततः पारम्पर्येणाप्युत्पत्तिः? प्राप्यादुत्पत्तिस्तु क्षणिकवादिनां न कस्यचित्संभवति। किञ्च रजतादिबुद्धेः प्रापणीयशुक्तिकाद्यर्थादुत्पत्तेरविसंवादित्वप्रसंगः। अथ यथाव्यवसितार्थादुत्पत्तिरविसंवादित्वे निमित्तम्। तत्र मणिज्ञाने किं सामान्याकारो व्यवसीयते? अथ स्वलक्षणाकार इति? सामान्याकारश्चेत्, कथं तत उत्पत्तिः? तस्यावस्तुत्वेनाजनकत्वाभ्युपगमात्। अथ स्वलक्षणाकारः, तत्रापि किं पूर्वदृष्टाकारः? किं वा तदन्यस्वलक्षणाकार इति? यदि पूर्वदृष्टाकारः, सोऽन्यत्राविद्यमानः कथमुत्पादकः? अतिप्रसंगात्।

अथ तद्दर्शनाहितवासनाक्रमेणोत्पत्तिस्तत उत्पत्तिरुच्यते, प्रभायां मणिज्ञानस्यापि तर्हि तत उत्पत्तिः स्यात्, तस्यापि तद्वासनाप्रभवत्वात्।

अथ यत्र प्रवृत्तिः सोऽध्यवसीयते, तत उत्पत्तिश्चाव्यवधानेनेति, न;

तस्याननुभूतत्वात् । न हि पिशाचादिवदत्यन्ताननुभूतोऽर्थो व्यवसातुं शक्यते। केशोण्डकाद्याकारोपि प्रागभूत एव स्मृत्या क्वचिदारोप्याध्यवसीयते, तद्वदत्रापि इति चेत्, न; तर्हि तदध्यवसिताकारादुत्पत्तिः। किञ्चाध्यवसायोपि विकल्प एव स च न बाह्यालम्बन इति कृतान्तः, तत्कथं बाह्येऽध्यवसायो भवत्यतद्विषयश्च कथं तेनाध्यवसीयते ? अतिप्रसंगात् ।

यदप्युक्तम्—व्याख्यातारः खल्वेवं विवेचयन्ति, न व्यवहर्तारस्ते तु स्वालम्बनमेवार्थक्रियायोग्यं मन्यमाना दृश्यविकल्पावर्थाविकीकृत्य प्रवर्तन्ते तदभिप्रायवशादेवमुच्यत इति। तत्रैकीकृत्येति कोऽर्थः? किं विकल्पे दृश्याकारमारोप्य ? किं वा दृश्ये विकल्पाकारमारोप्येति ? प्रथमे पक्षे विकल्पाभिमुख्येनैव दृश्यार्थिनः प्रवृत्तिः स्याद्रजतार्थिनः शुक्तिकाभिमुख्येनेव। द्वितीये तु पक्षेऽर्थे प्रवृत्तिर्न प्राप्नोति। न ह्यननुभूते शुक्तिकादौ रजताद्याकारमारोप्य प्रवर्तमानः कश्चिदुपलभ्यते।

किञ्च घृतमानयेति चोदितः स्वामिना योऽपि तैलादिकमानयति। सोप्यकुशलो न स्यात्, उभयस्य विकल्पाकाराध्यारोपेणाऽशब्दार्थे प्रवृत्तेरविशेषात्। न ह्यनभिप्रेतार्थक्रियायोग्ये शब्दः पारम्पर्येणापि प्रवर्तते, तत्र संकेतासम्भवात्।

यच्चोक्तम्—यथा रूपालोकचक्षुरादिषु व्यवहारलाघवार्थं कश्चित् संकेतं करोति। यवो रूपाविज्ञानहेतुः सरो वेति, तथान्येपि ये किञ्चिदेकं साधयन्त्येके न साध्यन्ते वा तेपि सकृत्प्रत्ययार्थव्रीह्यादिशब्दाः कृतसंकेताः कथ्यन्त इति, विषमोऽयमुपन्यासः। तत्र हि—ज्ञानमेवैकं निमित्तं संकेतग्रहणेऽस्तु देशादिभेदेनाऽनन्तासु च व्यक्तिषु नाभिन्नं कार्यं कारणं वास्तीत्युक्तम्।

यदप्याह—तत्रैवाऽनेन योग्यास्तेऽर्थाश्चोदनीयास्त एकेन शब्देन चोद्येरन्, बहुभिर्वेति स्वातन्त्र्यमत्र वक्तुरिति, तदप्यपर्यालोचिताभिधानम्; यस्मान्नात्र वक्तुः स्वातन्त्र्यं निवार्यते, किं तर्हि ? शाबलेये कृतसंकेतो गोशब्दः, कथं महषादिभेदेष्विवाभिन्ननिमित्तमन्तरेण बाहुलेयादिषु गृहीतसंकेतो भवति ? अग्रहीतसंकेतश्च कथं प्रतिपत्तिं करोति ? अतिप्रसंगात्। न च शाबलेयबाहुलेयादिभिः सहैकं कार्यं कुर्वन्नेकसाधनेन जन्यमानो वानुभूतो येनैकसाध्यनिमित्तः साधननिमित्तो वा शब्दः प्रवर्तेत। योग्यताश्रयणे च सामान्यमेव नामान्तरेणेष्टं भवत्यन्यथा व्यक्तिरूपवदनिश्चितैव योग्यता स्यात्। तस्मादेकमनेकत्र वर्तमानमेकां श्रुतिं प्रवर्तयत्यन्वयबुद्धिं च जनयतीति युक्तम्।

## ❀ सामान्यस्यानेकवृत्तित्व आक्षेपः ❀

ननु च केयं तस्यानेकत्र वृत्तिः ? किमाधेयता कुण्डबदरवत् ? उत व्यक्तिरिति ? न तावदाधेयता, नित्यस्यानुपकार्यत्वान्नित्यस्य किं कुर्वाण आधारः स्यात् ? तस्य तत्र समवायादाधार इति चेत् । कोऽयं समवायः ? अपृथक्सिद्धानामाश्रयाश्रयिभावः । तदेवेदमनुपकारकस्याश्रयत्वं न सम्भावयामः, अतिप्रसंगभयात् । तस्मात् समवायसंयोगैकार्थसमवायादयोऽपि वस्तुसम्बन्धाः कार्यकारणभावान्न व्यतिरिच्यन्ते । नापि स्थापक एवाधारः, स्थापको ह्यनुपकारकः कथं स्यात्सामान्यस्य च नित्यव्यापकत्वेन सदावस्थानाद् व्यतिरिक्तस्थित्यसम्भवादिव्यतिरेके स्थापकवैयर्थ्यं सामान्यस्याऽनित्यता च । व्यतिरेकेणावस्थितौ, अनवस्थाप्रसंग इति । अथाव्यक्तस्य व्यक्तिभिर्व्यक्ते सामान्यस्य तत्र वृत्तिरुच्यते, न; तदेतद्रूपाकरणे व्यञ्जकवैयर्थ्यात् । तस्माद्ये स्वज्ञानं प्रति परमपेक्षन्ते, तेवश्यं तदात्मानं प्रतिलभन्ते, सामान्यस्य तु न कुतश्चिदात्मप्रतिलम्भः सम्भवति । तस्मान्न तत् केनचिद् व्यङ्ग्यम् । किं च—

व्यञ्जकस्य च जातीनां जातिमत्ता यदीष्यते ।
प्राप्तो गोत्वादिना तद्वान् प्रदीपादिप्रकाशकः ॥ (प्र० वा० ३।१४८) इति ।

## ❀ तत्समाधानम् ❀

अत्रोच्यते—वृत्तिराधेयता, व्यक्तिश्चोभयमिष्यते । तच्चोभयमपि सामान्यस्य तत्तस्य समवाय एव । यदुक्तम्—नानुपकारकस्याश्रयत्वं युक्तम्, तन्न; अनुपकारकत्वस्यासिद्धत्वात् । तत्सहितस्य विशिष्टज्ञानं हि कार्यमेवोपकारः, स्वात्मभूतश्चोपकारो न क्वचिदुपलभ्यते । न हि यो येन जनितस्तस्य तेनोपकारः कृत इति प्रसिद्धिरस्ति । न च जनक एवाधारः, कुण्डस्य बदराजनकस्यापि तदाधारत्वात् । नन्वत्रोक्तम्—प्रकृत्यैव गुरुणो द्रव्यस्यासमानदेशकार्योत्पादनधर्मिणः समानदेशकार्योत्पादनभाव आधारकृतः । तस्मात् पूर्वक्षणसहकारि कुण्डं तत्रैव बदरकार्यं जनयदाधार इत्युच्यते इति, न; क्षणिकत्वासिद्धेः, तदसिद्धिं चोत्तरत्र निषेधयिष्यामः । तस्मात् पातप्रतिबन्धक एव बदरादीनां कुण्डादिराधारः पातप्रतिबन्धश्च संयोगविशेष एव, तदभावे हि पातकरणात् । सहकारिसाकल्यं हि कारकाणां शक्तिरसाकल्यं वा शक्तिरिति वक्ष्यामः । तेन संयोगविशेषे सति तदभावसहकारिवैकल्यात् पातो न भवतीति तद्धेतुः कुण्डादिः प्रतिबन्धक उच्यते । अथवा कस्मात्तयोरेवासौ संयोगः ? सहेतुसामग्रीसामर्थ्यात्तयोरेव समवेतस्योत्पादात् । समवायोपि कस्मात्तयोरेवेति

चेत् ? अन्यतरसमवायिनस्तद्धर्म्मत्वेन स्वहेतुसामर्थ्यनियमितस्योत्पादात्, नित्ययोस्तु स्वभावः । अन्यतरनित्यस्य तु सहकारिविशेषसामर्थ्याद्रुत्पद्यमानेनाधारेणाधेयेन वा यथासम्भवं समवायनियम इति । नित्यस्यापि यथासहकारिविशेषः सम्भवति तथोत्तरत्र वक्ष्यामः । प्रत्यक्षतोपि कुण्डबदरादीनां संयोगः प्रतिभाति । तस्याधिक्षेपो गोमयपायसीयं न्यायमाक्षिपति । तन्न हेतुफलभाव एवाश्रयाश्रयिभावः, किन्तु पातप्रतिबन्धक एव बदरादेः कुण्डादिराधारः । सामान्यस्य तर्हि पाताभावादाधारानुपपत्तिः, न; अन्यथा सामान्यगुणकर्मादीनामाधारप्रतिपादनादवयविविचारे ।

अस्तु वा स्थापकत्वं सर्वाधारव्यापिलक्षणं कथम् ? तत्र तावत्पततां बदरादीनां गतिनिवृत्तिलक्षणस्थितिः कुण्डादिभिः क्रियते । अवयविगुणकर्मादीनां च क्रमेण स्वात्मप्रकाशनं कार्यान्तरकरणं च स्थितिः, सा तदाधारसामर्थ्याद् भवति, तदाधाराभावे ह्यनित्यानां विनाश एव गतिः । सामान्यस्य त्वसामर्थ्यप्राप्तिः सा च सत्याधारेण भवतीत्याधारः स्थापक उच्यते । घटादिस्थगुणादिदृष्टान्तेन नित्याश्रयस्थानामपि क्रमेणानेककार्यकर्तृत्वं स्थितिशब्दवाच्यमाश्रयसामर्थ्यादवगन्तव्यम् । न च सहकार्यन्तरं सर्वतत्कार्योत्पादे निमित्तं भवति,अतो नान्यत्राप्याश्रयत्वप्रसंगः । स्वात्मस्थं च दर्शयत्याधारो न हेत्वन्तरम्, अतश्च प्राप्तो गोत्वादिना तद्वान् प्रदीपादिरित्यप्ययुक्तम् । यद्यपि वस्तुस्वभावात्स्वहेतुसामर्थ्याद्वा कश्चिदेव कस्यचिदेवाधरो न सर्वस्येति, तथापि कुण्डादिबदरादीनामिदमत्रेत्याधाराधेयभावेनोपलम्भः सम्बन्धाविनाभावो दृष्ट इति द्रव्यगुणादीनामपि तथोपलम्भः सम्बन्धनिमित्तोपि व्यवस्थाप्यते । स च सम्बन्धः संयोगादिविलक्षणत्वात् समवाय इत्युच्यते । तस्मादस्ति समवायलक्षणा स्वाधारेषु सामान्यस्य वृत्तिरिति ।

## ❀ सामान्यस्य व्यापकत्व आक्षेपः ❀

अथ किमाकाशादिवत्सर्वगतं सामान्यम् ? किं वा स्वाश्रयमात्रगतम् ? यदि सर्वगतम्, तदेकत्राभिव्यक्तं सर्वत्राभिव्यक्तमेवाभिन्नात्मकत्वात्तस्य न क्वचिदनुपलम्भः स्यात्, वस्तुसङ्करप्रसंगश्च सर्वपिण्डेषु सर्वसामान्यसद्भावात् । कश्चिदेव पिण्डः कस्यचिदेव व्यञ्जकः, ततो न सङ्करदोषप्रसंग इति चेत्, न; नियमहेत्वभावात् । किञ्च—

व्यञ्जकाप्रतिपत्तौ हि न व्यङ्ग्यं सम्प्रतीयते ।
विपर्ययः पुनः कस्मादिष्टः सामान्यतद्वतोः ॥ (प्र० वा० ३।१५५)

सामान्यमेव व्यञ्जकं प्राप्तमिति । अथ स्वाश्रयमात्रगतम् ? तदप्यसम्भवि, तथा हि ।

अन्यत्र वर्तमानस्य ततोऽन्यस्थानजन्मनि ।
स्वस्थानादचलतोऽन्यत्र वृत्तिरित्ययुक्तिमत् ॥ (प्र० वा० ३।१५२–५३)
यत्रासौ वर्तते भावस्तेन सम्बध्यतेऽपि न ।
तद्देशिनं च व्याप्नोति किमप्येतन्महाद्भुतम् ॥ (प्र० वा० ३।१५३–५४)
न याति न च तत्रासीदस्ति पश्चान्न चांशवत् ।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥ (प्र० वा० ३।१५१-५२) इति ।

## ※ एकेषां तत्परिहारः ※

अत्रैके परिहरन्ति—स्वाश्रयसर्वगतमेव सामान्यम्, तत्रैवोपलम्भात् । न च संयोगसमवायादिसम्बन्धाभावे पिडान्तरालादिषु सामान्यं व्यपदेष्टुं शक्यते । यत्पुनरेतदन्यत्र वर्तमानस्येत्यादि, तन्न; प्रमाणसिद्धस्य वस्तुस्वभावस्योपहासमात्रेण त्यक्तुमशक्यत्वात् । विचित्रा हि पदार्थानां शक्तिस्तेन सामान्यस्यैवेदृशी शक्तिः, यया हेतुविशेषैरुत्पद्यमानेऽर्थे पूर्वस्थानादचलदेव वर्तते । चलने हि पूर्वस्थानं तच्छून्यं स्यात् । यदपि यत्रासौ वर्तत इत्यादिनात्यद्भुतं शङ्कितम्, नैतदप्यद्भुतम्, पदार्थशक्तिवैचित्र्यादेव । यथा मन्त्रादिसंस्कृतमस्त्रमुदरस्थं व्याधिविशेषं छिनत्ति, नोदरम्; सूत्रादिकं चौषधिसंस्कृतं नाग्निर्दहति; तदुपरि भाजनस्थं तण्डुलं पचति; कपोतश्च गृहोपरिस्थित एव पादावाभ्यन्तरस्थिते दध्यादौ विन्यस्यति; तथा सामान्यमपीदृक्शक्तिमत् । गोत्वं गोपिण्डेनैव सम्बध्यते, न तदवयवादिभिस्तद्देशैरिति । अन्यत्रोत्पद्यमानेनाश्रयेणान्यत्रावस्थितं सामान्यं कथं सम्बध्यत इति चेत्, तदाश्रयोत्पादकहेतुसामर्थ्यादत्रापि । वस्तुस्वभाव एष येन मूर्तं वस्तु देशान्तरसंयोगोत्पादकहेतुसामर्थ्याद्देशान्तरे भवति, पूर्वसंयोगनिवर्तकहेतुतस्तत्र न भवति । सामान्यं त्वाश्रयोत्पादकहेतुतस्तत्र भवति तन्निवर्तकहेतुतस्तु न तत्र भवतीति, विनाशोत्पादरहितत्वमुभयत्रापि समानं केवलं सम्बन्धासम्बन्धहेतुवैलक्षण्यमात्रमिति ।

यत्पुनरेतद्भिन्नदेशाभ्यामंशवत एव सम्बन्धो दृष्ट आलोकरज्जुवंशदण्डादिवन्न च सामान्यमंशवदिति, तदपि अवयविदूषणनिराकरणाद् देशकालेत्यादिप्रसंगदूषणे चोक्तोत्तरमिति ।

## ※ प्रलयावस्थायां सामान्यस्य वृत्तितानिरूपणम् ※

ननु प्रलयावस्थायां सर्वघटादिविनाशे घटत्वादिसामान्यं क्वास्ति ? न

क्वचित्। ननु किं विनष्टम्? न; तस्य नित्यत्वात्। नित्यं विद्यमानं न क्वचिदस्तीति कैषा वाचोयुक्तिः? तदा निराधारमेवास्तीति एषा वाचोयुक्तिः, भूतभाव्याधारापेक्षया तु तदापि सामान्यमुच्यते। न चाव्यपदिश्यमानमसदेव भवति। न च सर्वेषां घटादीनां युगपद्विनाश इत्यत्रास्ति प्रमाणम्। ननु पुराणादिषु प्रलयो महाप्रलयश्च श्रूयते, सत्यम्; किन्तु लोकत्रयविनाशः प्रलयः, सहाण्डेन चतुर्दशस्थानविनाशो महाप्रलयः। सर्वाण्डानान्तु युगपन्न विनाशः तेनाण्डान्तरेषु घटादयः सन्ति। यदि पुनः सर्वाण्डानां विनाशस्तदा सर्वक्रियोपरमे "रात्रीश्च (रात्रिस्व) तावतीश्चैव इति" विरुध्यते। न ह्यन्तरेण क्रियां कालः परिमातुं शक्यत इत्यलं प्रसङ्गेनेति।

## ❀ व्यापकत्वेऽपि सामान्यस्य न सर्वत्रोपलब्धिः ❀

अस्तु वा सर्वगतं सामान्यं तच्च नाकाशवत्सर्वसंयुक्तम्, नापि सत्तावद् गोत्वाद्यपि सर्वसमवेतम्। किं तर्हि? सन्निधिमात्रेण सर्वत्रास्ति। यच्चान्यत्राभावः, तन्न; यतः सर्वत्रापि विद्यमानं यत्रैव समवेतं तत्रैवोपलब्धियोग्यम्। तेन तस्य समवायेनाधारो व्यञ्जकश्चोच्यते। [1]तन्न जातिसंकरोपीति। ननु तदेव व्यक्तावुपलभ्यमानमन्यत्राप्यस्ति, तत्किं नान्यत्राप्युपलभ्यते? क एवमाह—उपलभ्यमानादन्यत्रोपलभ्यते? किं तर्हि? व्यक्त्यन्तरालादेस्तदाधारवद् व्यञ्जकत्वं नास्ति तेन तत्रोपलब्ध्यभिमानो न भवति। न चाधारतत्सम्बन्धग्रहणाधीनत्वेनाग्रहणेऽत्रेदमिति प्रत्ययो भवति।

## ❀ व्यञ्जकाप्रतिपत्तिदोषनिरासः ❀

यत्पुनरेतद् व्यञ्जकाप्रतिपत्तौ हीत्यादि, तन्न; अनियमात्। नायं नियमः—व्यञ्जकप्रतीतिपूर्विकैव व्यङ्ग्यप्रतीतिरिति, अपि तु विशेषणप्रतीतिपूर्विकैव विशेष्यप्रतीतिरित्ययं नियमः। ततश्च घटाद्यर्थोपि प्रकाशादिविशेषणं यदि स्यात्ततः प्रागेव गृह्येत। विशेषणविशेष्यत्वाभावे तु व्यक्तिजात्योरप्यनियमेन ग्रहणं यौगपद्येन वा। न च स्वप्रतिपत्त्या परप्रतिपत्तिहेतुर्व्यञ्जक इति व्यञ्जकलक्षणमिष्यते; इन्द्रियादेरप्रतीतस्यापि व्यञ्जकत्वात्। तस्मात् सदेव वस्तु यद्वैकल्यादनुपलभ्यमासीत्तत्तस्य व्यञ्जकम्, न च जातिविकला व्यक्तिः कदाचिदासीद्येन जातिरेव व्यक्तिव्यञ्जिका स्यादिति।

## ❀ सामान्यानुपलब्धिनिराकरणम् ❀

यत्पुनरेतस्योपलभ्याभिमतस्यानुपलब्धेरभावोऽनुपलभ्यतायां च तद्दर्शनाश्रयाः

---

१. तन्नेति। तत् = तस्मात् नेत्यर्थः।

शब्दप्रत्यभिज्ञानादयो न भवेयुरिति, तन्न; अनुपलब्धेरसिद्धत्वात्। ननु सतोऽपि व्यक्तिषु सामान्यस्योपलब्धिर्न लक्ष्यते। सा हि वर्णसंस्थानाकारवती विभाव्यते। न चेदृशं सामान्यं, न च ततोऽन्यः कश्चिदाकारो दण्डिषु दण्डवत्प्रतिभाति, न चाकारभेदाऽप्रतिभासनेपि वस्तुभेदव्यवस्थापनं युक्तम्, अतिप्रसङ्गादिति, नैतदस्ति; समानताकारेण हि सामान्यं प्रतिभाति न व्यक्तिरित्युक्तम्। यत्तु दण्डवन्न प्रतिभाति, तत्पदार्थानामितरेतरवैधर्म्यात्। अत एव सामान्यं पदार्थान्तरम्, दण्डवत्प्रतिभासने तु द्रव्यान्तर्भूतमेव स्यात्। देशभेदेनाग्रहणादयस्तु हेतवः प्राङ् निरस्ता एवाऽवयविविचारे तेन ततोऽपि नासत्त्वसिद्धिरिति।

## ❀ सामान्यस्य वैयर्थ्यशङ्का तन्निरासश्च ❀

ननु व्यक्तयः स्वभावेनैव यदि समानाः, किं तत्राऽपरेण सामान्येन? वैयर्थ्यात्? अथाऽसमानाः, ततः कथं तासु सामान्यम्? समानानां भावो हि सामान्यमुच्यते, न च सामान्येनैव समानः क्रियते तत्सामान्यहेतुकत्वादिति। उच्यते—स्वभावेनैव समानाः, स्वो भावः स्वकीयो धर्मस्तदवियोगी सामान्यमेवोच्यते। तेनैव संश्लिष्टाः समानाः प्रतिभान्त्यभिधीयन्ते चेत्यतः कथं सामान्यवैयर्थ्यम्? अथ स्वभावेनेत्यन्वयिधर्मव्यतिरेकेणेत्यभिप्रेतम्। तदभावेपि कथं समाना अतिप्रसङ्गात्। किञ्च दण्डादेरपि वैयर्थ्यप्रसङ्गः स्वभावेनैव दण्डिनः कुण्डलिनश्च भविष्यन्ति। किञ्च दर्शनस्यापि वैयर्थ्यम्, तदभावेपि दृष्टा अर्था इति। एवं तर्हि यथा स्वभावेनादण्डिनोपि दण्डयोगाद्दण्डिनो भवन्ति। तथा स्वरूपेणासमाना अपि सामान्ययोगात्समाना इति प्राप्तम्, न; सामान्यस्य यावद्व्यक्तिसम्बन्धित्वात्। एतदेव कुत इति चेत्? वस्तुस्वभावत्वात्, दहनशीतद्रुतादिविचित्रस्वभाववत्। यदि सामान्यं नोपलभ्यते किमाश्रित्य सर्वोपसंहारेण व्याप्तिसंकेतयोः प्रतिपत्तिर्भवति? अपोहमाश्रित्येति चेत्, न; तस्यनिषिद्धत्वात्। किञ्च तस्याप्युपलभ्याभिमतस्यानुपलब्धेरभावोऽनुपलभ्यतायां वा तद्दर्शनाश्रयाः शब्दप्रत्यभिज्ञानादयो न स्युः, न चासौ दण्डिषु दण्डवदाकारभेदेनोपलक्ष्यते विकल्पारोपितमात्रस्य चाऽसतः खपुष्पादिवन्नाश्रयत्वं युक्तम्। अन्यपरिहारेण प्रवृत्तेरन्यव्यावृत्तिरेव शब्दार्थ इति चेत्, वस्त्वाभिमुख्येन प्रवृत्तेर्वस्त्वेव किं न शब्दार्थः प्रत्यक्षवद्वस्तुग्रहणेपि तदन्यपरिहारेणैव प्रवृत्तिः। प्रत्यक्षाच्च प्रवृत्तिस्त्वयापीष्टा "न ह्याभ्यामर्थं परिच्छिद्य प्रवर्तमानोर्थक्रियायां विसंवाद्यते" इत्यभिधानात्।

तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टम्। यथा—धूमोऽग्नेरिति। स्वभावविप्रकृष्टार्थानुमापकं सामान्यतोदृष्टम्। यथा—रूपादिज्ञानं चक्षुरादेरिति।

तत् पुनर्द्विविधम्—स्वार्थं परार्थं चेति। परोपदेशानपेक्षं स्वार्थम्। परोपदेशापेक्षं परार्थमिति। परोपदेशस्तु पञ्चावयववाक्यम्।

---

यच्च वस्तुनः शब्दार्थत्वे बाधकम्, तत्परिहृतं परिहरिष्यते च। द्विविधश्च शब्दार्थो वाच्यो गम्यश्च। तत्र गौरित्यादिशब्दानां जातिविशिष्टोर्थ एव वाच्योऽतद्व्यवच्छेदस्तु गम्यः। नाऽगौरित्यादिशब्दानां त्वतद्व्यवछेदविशिष्टो वाच्यः, सामान्यं तु गम्यम्। तस्यात्यन्ताभावे तु तदतद्वर्गप्रविभागोपि न स्यादित्युक्तम्। तस्मात्सामान्यग्रहणाश्रयैषानन्तव्यक्तिषु व्याप्तिसंकेतयोः प्रतिपत्तिरिति।

तदेवं स्थितमेतत्—व्यक्तिभेदेपि दृष्टैकसामान्यविशिष्टार्थानुमापकमनुमानं दृष्टमिति। तस्मिन् पक्षे सूर्यगत्याद्यनुमानमपि दृष्टमेव, सम्बन्धिवैलक्षण्येप्यभिन्नजातित्वाद् गतेः। पर्वतादिवैलक्षण्येपि अग्निजातिवत्।

अन्ये तु ब्रुवते—यत्रानुमेयं प्राग् दृष्टम्, प्रवृत्त्युत्तरकाले च द्रष्टुं शक्यते यदि न नश्येत प्रमातृसधर्माणां वा पुंसां कदापि दृष्टं तदनुमानं दृष्टं, तद्विलक्षणं तु सामान्यतोदृष्टमिति। अस्मिन् पक्षे सूर्यादिगत्यनुमानमपि सामान्यतोदृष्टमेव। किमत्र लिङ्गम्? देशान्तरप्राप्तिः। किमिदं देशान्तरं दिग्देशोऽथवा देशो वा स्यात्? उभयं न प्रत्यक्षं तद्वृत्तिसंयोगोऽपि वायुगिरिसंयोगवन्न प्रत्यक्षस्तत्कथं तेनासिद्धेन गतिरनुमीयते? केवलमयमादित्यमण्डलं पश्यति न देशान्तरशब्दवाच्यं किञ्चिदिति। अनुमिता देशान्तरप्राप्तिर्लिङ्गमित्यदोषः। कथं देशान्तरप्राप्तिमानादित्यः? द्रव्यत्वे सति क्षयवृद्धिप्रत्ययाविषयत्वे च प्राङ्मुखोपलभ्यत्वे चानुत्पन्नपादविहारस्यापि परिवृत्त्य प्रत्ययविषयत्वान्मण्यादिवदिति। एवं तर्हि निष्क्रियैकाभिमुखस्यार्कचन्द्रादिविम्वं पश्यतोऽर्द्धघटिकाद्युत्थानप्रतिपत्तिर्न स्यात्। तस्मादन्यः कश्चिद् धर्मविशेषोर्कादेः प्राप्तिविशेषानुमापको वक्तव्यः, प्रत्यक्षा वा प्राप्तिर्दिगादिप्रदेशान्तरेण यथाऽर्द्धघटिकादिप्रतीतिः स्यान्न च प्रत्यक्षाप्रत्यक्षवृत्तित्वेन वायुगिरिप्राप्तिवदप्रत्यक्षत्वम्। न हि दृष्टेऽनुपपन्नं नाम। कुतश्चार्द्धघटिकादिप्रतीतिरविसंवादिनी? यद्यन्यत्रान्यन्निमित्तं घटमानं किञ्चिदुच्यते, तदेवास्तु नास्माकं निर्वन्ध इति। तत्पुनः स्वार्थपरार्थभेदेन द्विविधं दृष्टं सामान्यतो दृष्टं चैकं द्विविधां विद्यते—

## ❋ स्वार्थपरार्थभेदनिरूपणम् ❋

तत्र परोपदेशानपेक्षं स्वार्थम्, तदपेक्षं च परार्थमिति। नैवं द्विविधं युक्तम्, स्वार्थपरार्थासम्भवात्। वक्त्रपेक्षयाऽनुवादः श्रोत्रपेक्षया तु स्वार्थमेव। कश्चात्र विशेषः प्रत्यक्षेण वा अनुमानेन वा शब्देन वा अनुगतं लिङ्गमिति ? तन्न; लक्षणभेदात्तदुपपत्तेः, दृष्टादिभेदवत्। अत एव न वक्त्रपेक्षयेत्यादि युक्तम्। न हि वक्त्रपेक्षया श्रोत्रपेक्षया वानुमानं दृष्टमुच्यते, सामान्यतोदृष्टं वा, किन्तु लक्षणापेक्षया। भवतु वा वक्त्रपेक्षया परार्थं यत एव वक्तुस्तदपेक्षा नास्त्यनुवादकत्वादत एव परप्रतीत्यर्थं तेनोपन्यस्तमिति पारार्थ्यं तस्य। अस्तु वा श्रोत्रपेक्षया स्वयं व्याप्तिस्मरणादौ मूढत्वात्सामर्थ्यविकलः परस्मात् प्रतिपादकादर्थं प्रयोजनमनुमानाख्यं प्राप्नोतीति परार्थमुच्यते। यत्पुनः कश्चात्र विशेष इत्युक्तं तत्र परिहारः परोपदेशस्तु पञ्चावयवं वाक्यमिति। एतदुक्तं भवति—यो हि शब्दं चक्षुरादिवत् स्वस्वरूपमात्रेण लिङ्गं ब्रूते वक्त्रपेक्षं स्वार्थमेव। न हि परस्तत्रानुमानार्थं शब्दमुच्चारितवान्, किन्त्वप्रतीतधूमादिप्रतीत्यर्थम्, नापि श्रोता व्याप्तिस्मरणादौ मूढः परमपेक्षते। यस्तु लिङ्गं प्रतिपद्यमानोपि व्याप्तिस्मरणादौ मूढः पञ्चावयवेन वाक्येन प्रतिबोध्यते, तस्य तद्वाक्यापेक्षमनुमानं परार्थमुक्तम्, तन्मोहनिवर्तनविशेषेणेति। अत्र गृहीतेपि व्याप्त्यादौ तथात्वास्मरणमेव मोहस्तेन सन्दिग्धस्यापि प्रतिबोधकं परार्थानुमानं भवतीति।

## ❋ वाक्यास्यानुमानत्वं गौणम् ❋

ननु च सोयं परमो न्याय इत्यभिधानाद्वाक्यमेवानुमानम्, तत्किमुच्यते तदपेक्षमिति ? न; वाक्यस्योपचारेणानुमानत्वाभिधानात्। न हि वाक्यं साक्षादनुमितिसाधनम्, तस्य समर्थहेतुप्रख्यापनेनैव चरितार्थत्वात्। निमित्तप्रयोजनयोरभावादनुपचार इति चेत्, न; तदुपपत्तेः। तथा हि—निमित्तं तावत्तादर्थ्यं साधनं वा—तत्प्रवृत्त्यर्थं वाक्यं तत्साधकं वा तच्छब्देनोक्तम्, प्रागवस्थितमप्यनुमितिसाधनं वाक्येन शक्तिमत् क्रियते। प्रयोजनं पुनः सोयं परमो न्याय इत्यत्रैव वक्ष्यामः। गौणस्य मुख्यापेक्षित्वज्ञापनार्थं परोपदेशापेक्षमित्युक्तम्—

नन्वेवमुक्तम्—परोपदेशः पञ्चावयववाक्यमिति। किं पुनरत्र वाक्यमुच्यते ? कुतः संशयः ? विप्रतिपत्तेः—

## ❋ स्फोटवादस्तत्खण्डनं च ❋

केचिदत्र ब्रुवते—वर्णव्यतिरिक्ताः पदवाक्यात्मानः शब्दाः सन्ति। यथा—

स्वमर्थं परिस्फुटयन्तः स्फोटाख्यां लभन्त इति, न; प्रमाणाभावात्। न हि तथाभूतशब्दास्तित्वे प्रमाणमस्ति। न नास्ति प्रत्यक्षार्थापत्त्योः सम्भवात्। प्रत्यक्षेणैव तावदभिन्नाकारज्ञानेन पदं वाक्यं च प्रतीयते। न च भिन्नेष्वभिन्नबुद्धिरविसंवादिनी युक्ताऽवयविप्रत्यक्षत्वेऽप्ययमेव न्यायः सोऽत्र किन्न मृष्यते ? किञ्च स्फोटाभावेऽर्थप्रतीतिर्न स्यात्, न हि वर्णानां समस्तानां व्यस्तानां वार्थप्रतिपादनसामर्थ्यमस्ति। समुदायासम्भव इति चेत्, न; तदभावे सर्वाग्रहणप्रसङ्गादित्युक्तम्। न चैवं स्फोटाभावे किञ्चिदनिष्टमापद्यते। किं वाऽवयवाग्रहणेप्यवयविबुद्धिवद् वर्णाग्रहणेपि पदादिबुध्यभावात्। किञ्च वर्णेष्वेव विभक्त्यन्तत्वेन शिष्टैः पदसंज्ञाकरणात्। "सुप्तिङन्तं पदम्" (पा० सू० १।४।१४) "ते विभक्त्यन्ताः पदम्" (न्या० सू० २।२।५७) इति च। तत्संकेतानुसारेण वर्णेष्वेव पदबुद्धिर्भवतीति। तन्न प्रत्यक्षग्राह्यः स्फोटः। नाप्यर्थप्रतिपत्त्यन्यथानुपपत्त्या, वर्णेभ्य एवार्थप्रतीतेः। स्फोटादर्थप्रतीतौ च वर्णोच्चारणवैयर्थ्यं स्यात्। तद्व्यञ्जकत्वान्न वैयर्थ्यमिति चेत्, न; समानदोषत्वात्। ये दोषा अर्थव्यञ्जकत्वे वर्णानाम्, स्फोटव्यञ्जकत्वे कथं न? अतो येन च प्रकारेण स्फोटव्यञ्जकत्वमिष्टं तेनार्थव्यञ्जकत्वमेवास्तु किमति-प्रयासेनेति ?

——

## ❀ वर्णसन्तानारब्धपदपक्षे दोषः ❀

येप्याहुः—वर्णैः सन्तानेनाकाशे वर्तमानैः पदमारभ्यते, पदैस्तु वाक्यमिति। तन्मतमपि स्फोटनिराकरणन्यायेन निराकर्तव्यम्, वर्णव्यतिरेकपक्षस्य सर्वस्यापि स्फोटसमानत्वात्।

## ❀ वर्णसमूहे दोषाः ❀

वर्णसमूहः पदम्, पदसमूहो वाक्यम्, वाक्यसमूहः प्रकरणम्, प्रकरणसमूहो यथासमयं पादो वाह्निकं वाध्यायो वा, तत्समूहः शास्त्रमिति। कथं पुनः क्षणिकानां वर्णानां समूहः सम्भवति ? नैवात्र वनादिवदवस्थितानां समूहो विवक्षितः, किन्तु कल्पनया यागादिक्रियासमूहवत्।

कथं पुनर्वर्णसमूहः पदार्थज्ञानस्य हेतुः ? कथं च न स्यात् ? अन्त्यवर्णाश्रवणे पदार्थज्ञानानुत्पत्तेरन्त्यवर्णकाले पूर्ववर्णानां तिरोभावादहेतुत्वमिति। न चान्त्यस्यैव हेतुत्वम्, अधस्तनोच्चारणानर्थक्यप्रसङ्गादिति। अत्रैके ब्रुवते—विनष्टानामपि हेतुत्वमस्ति, यथेष्टदेशप्राप्तावन्त्यक्रियाकाले अधस्तनक्रियाणामिति, तन्न; असिद्धत्वात्। अन्त्यक्रियैव तत्र हेतुर्न नष्टाः क्रियाः, नष्टानां जनकत्वे

प्रमाणाभावात्। अन्त्यवर्णा एव तर्हि पदम्। न चाधस्तनानर्थक्यम्, अधस्तनानुच्चारणेऽन्त्यत्वासम्भवात्, पूर्वक्रियानुत्पत्तौ अन्त्यक्रियावदिति। विषमोयमुपन्यासस्तर्हि यतो हि दूरदेशस्थस्याभिप्रेतदेशात् पूर्वपूर्वदेशैः सह संयोगो यावन्न सम्भवति, तावदुत्तरोत्तरप्रदेशैः संयोगो न भवति, तेन पूर्वपूर्वप्रदेशादुत्तरोत्तरप्रदेशसंयोगार्थानि कर्माण्युपकारीणि सम्भवन्ति। यस्त्वभिप्रेतदेशानन्तरदेशस्थः स कर्मान्तराण्यकृत्वैवाभिप्रेतदेशेन संयुज्यते। न चात्र पूर्वपूर्ववर्णानुच्चारणेऽभिप्रेतवर्णोच्चारणमशक्यम्, येन तदुच्चारणमप्यर्थवत् स्यादिति।

पूर्ववर्णसंस्कारापेक्षोऽन्त्यो वर्णः पदमिति चेत्, न; संस्कारस्य साक्षादनुभवोत्पत्तौ सामर्थ्यानवधारणात्। अन्यथा हि लिङ्गशब्दावपि संस्कारापेक्षावेवार्थप्रतिपत्तिं करिष्यतः, किं व्याप्तिसंकेतयोः स्मृत्या कल्पितयेति? एवं तर्हि पूर्वसंस्काराः स्मृतीर्जनयन्ति, ताभिः सहान्त्यो वर्णः पदमिति, न; ज्ञानयौगपद्यप्रतिषेधात्। एकामेव तर्हि स्मृतिं मेचिकां जनयन्तु, तया सहान्त्यो वर्णः पदमिति, न; प्रतिबन्धाभावात्। एकात्मसमवायित्वप्रतिबन्धे, देशकालविषयभेदेनोत्पन्नानामपि संस्काराणामेकस्मृतिजनकत्वप्रसङ्गः। एतेन तेभ्य एकसंस्कारस्तस्माच्चैका स्मृतिरित्येषापि कल्पना प्रत्युक्ता। ता एताः कल्पना वाक्यपक्षेपि कृत्वा दूषयितव्याः, समानन्यायत्वादिति।

## ❀ पूर्वपूर्ववर्णविशिष्टोत्तरोत्तरवर्णक्रमपक्षः ❀

अन्ये त्वाहुः—प्रथमवर्णेन विशिष्टो द्वितीयः प्रतीयते, द्वितीयेन विशिष्टः तृतीयस्तावद्यावदन्त्यो वर्णः। स चैवं विशिष्टेनानुभवेन सह पदं वाक्येऽप्येषा कल्पना यदि क्रियते, ततोऽप्रतीतार्थैरपि पदैर्विशिष्टमन्त्यपदं वाक्यं स्यात्तेनात्रैवं कल्पना—पदार्थज्ञानकाले पदज्ञानस्य विनश्यत्ता द्वितीयपदज्ञानस्योत्पद्यमानता, ततो द्वितीयपदज्ञानं पूर्वपदपदार्थावच्छिन्नमुत्पद्यते प्रथमपदसंकेतस्मृतेर्विनाशस्तृतीयपदज्ञानस्योत्पद्यमानतेत्येकः कालः, ततो द्वितीयपदपदार्थविशिष्टं तृतीयपदज्ञानं संभवत्येवं पदशतेऽपि योज्यम्। स्मृत्यनुभवयोर्विरोधो नास्ति, विजातीयत्वात्तेन स्मृतेः स्मृत्यन्तरादेव विनाश उक्तोऽनुभवस्यानुभवान्तरादेवेति।

अथवा प्रथमपदज्ञानेन संकेतस्मरणाद्विनश्यदवस्थेनैव पदविशिष्टं तत्पदार्थज्ञानमुत्पाद्यते, तेन तत्पदार्थावच्छिन्नं द्वितीयपदज्ञानमित्येवं पदशतेऽपि योज्यम्। एवं विशिष्टमन्त्यपदं वाक्यमुच्यते। न चात्र पूर्वपदस्मृत्या प्रयोजनम्, तत्कृतस्यार्थस्य विशेषणानुक्तविशेष्यज्ञानोत्पादादेव सिद्धत्वादिति।

## ❀ तन्निराकरणम् ❀

तदेतदप्ययुक्तम्, उत्तरपदे हि ज्ञानमनेकवर्णानुभवक्रमेणोत्पद्यते तत्कथं विनश्यदवस्थेन पूर्वपदज्ञानेन तदर्थज्ञानेन चोत्तरपदज्ञानं जन्यते ? [1]तस्य प्रथमवर्णानुभवादेव नष्टत्वात् । किञ्चाकृतप्रयोजनस्यातिविलम्बितोच्चारणेपि पदार्थस्य वाक्यार्थस्य च प्रतिपत्तिर्भवति वर्णान्तराले पदान्तराले च क्षुन्निष्ठीवनादिकमपि करोति यदा, तदाप्यर्थप्रतीतिर्भवत्येव । तन्न पूर्वोत्तरवर्णयोः पदयोश्च विशेषणविशेषभाव इति ।

## ❀ अन्येषां वाक्यकल्पना ❀

अन्ये तु वेदाद्यभ्यासवलेन संस्कारस्य संस्कारहेतुत्वं प्रसाध्य वाक्यमन्यथा कल्पयन्ति—प्रथमपदज्ञानेन संस्कारो जन्यते । तत्सहितेन द्वितीयपदज्ञानेन विशिष्टोऽन्यः संस्कारो जन्यते । एवमुत्तरोत्तरपदेष्वप्युपान्त्यपदं यावद्विशिष्टं संस्कारोत्पत्तिश्चिन्तनीया [2]स च संस्कार उत्तरपदानुभवानन्तरमेव पूर्वपदेष्वेकां स्मृतिं जनयति । [3]तयाऽनुभवेन च विशिष्टमन्त्यपदं वाक्यम् । संकेतस्मृतिस्तु चिन्त्यते, वाक्ये संकेतायोगात् । पदे तर्हि कथम् ? तत्राप्यन्त्यवर्णानुभवानन्तरं पूर्ववर्णेषु संकेते चैकैव स्मृतिरुत्पद्यत इति ।

## ❀ परेषां वाक्यकल्पना ❀

परे त्वप्रसिद्धार्थानामपि पदानां वाक्यत्वप्रसंगभयादन्यथा वाक्यं कल्पयन्ति—पदसंस्कारेण पदार्थज्ञानेन च विशिष्टः संस्कारः कृतस्तत्सहितेन द्वितीयपदज्ञानेनाऽन्यस्तत्सहितेन द्वितीयपदार्थज्ञानेनाऽन्यस्तत्सहितेन तृतीयपदज्ञानेनैवेत्येवमुपान्त्यपदं यावत्ततः पूर्ववदन्त्यपदं स्मृत्यनुभवसहितं वाक्यम् । अन्त्यपदार्थस्यैव वाक्यार्थत्वात्तेन [4]तत्र संकेतस्मृतिरपि न [5]चिन्तिता ।

पूर्वपदपदार्थेष्वन्त्यपदसंकेते चैका स्मृतिरित्यन्ये ।

---

१. तस्य = प्रथमपदपदार्थज्ञानस्य ।

२. सः = विशिष्टात्मकः ।

३. तया = स्मृत्या ।

४. तत्र = वाक्यार्थे ।

५. अयमाशयः—पदस्य पदार्थेन सह संकेतो भवति, न तु वाक्यस्य वाक्यार्थेन, अतः 'कथं वाक्यार्थस्मृतिर्भवति' ? इति न चिन्तितमित्यर्थः ।

## ❀ अपरेषां वाक्यकल्पना ❀

अपरे त्वन्त्यपदार्थस्यैव वाक्यार्थत्वं नानुमन्यन्ते, प्रधानस्य वाक्यार्थत्वात्। न चान्त्यपदार्थस्यैव प्रधानत्वं गुणप्रधानभावस्याऽनियतत्वात्। आदिमध्यपदेपि प्रधानं क्रियाख्यं कर्तृसंजकं वाऽन्यद्वा प्रतीयत एव। ते त्वेवं कल्पयन्ति—अन्त्यपदपदार्थज्ञानेनापि पूर्वसंस्कारसहितेन विशिष्टोन्यः संस्कारो जन्यते, पुनरदृष्टवशादवस्थितेऽन्त्यपदेनुभवस्ततः सर्वपदपदर्थेष्वेका स्मृतिस्तयानुभवेन च विशिष्टमन्त्यं पदं प्रथमपदार्थेपि विशिष्टां प्रतिपत्तिं कुर्वद्वाक्यमुच्यत इति। नाशहेतौ सत्यप्यदृष्टवशान्न नाश इत्यतिश्रद्धेयं बुद्धीनामप्येवं कस्मान्न कल्प्यत इति। स्मृतिस्थाने मानसं प्रत्यक्षमेव कल्पयन्त्यन्ये, तस्य त्रिकालविषयत्वाददृष्टादिसहकारिविशेषोतिप्रसङ्गनिवारकः। संस्कारविशेषारम्भमेव स्मरणवादिनाप्यभ्युपगन्तव्यः, तद्वरं मानसमेव प्रत्यक्षमस्तु व्याप्तिग्रहणादिष्वपि तस्याभ्युपगतत्वादिति।

## ❀ अपरस्य वाक्यकल्पना तत्खण्डनं च ❀

अपरस्त्वाह—सा हि शुद्धपदपदार्थग्रहणापेक्षिणोमानसाद् भवतु ततः सर्ववाक्यमात्रग्रहणाद्वाक्यार्थावगमो भवति। तेनान्त्यपदग्रहणानन्तरं क्रियाकारकान्वयसहितेषु पदपदार्थेष्वध्यवसायाख्यमानसं प्रत्यक्षं भवति, तत्सहितमन्त्यपदं वाक्यमिति, तदप्यसमीक्ष्योक्तम्। कस्मात्? [1]तौसलाभिप्रेतार्थसिद्धिप्रसङ्गात्। यद्येवंभूतं प्रत्यक्षमिष्यते, तदा वाक्येन किं कल्पितेन? तदर्थप्रतिपत्तिस्तु मानसप्रत्यक्षादेव पदार्थग्रहणापेक्षिणो भवतु, ततः सर्वं वाक्यं दशदाडिमादितुल्यमित्येवं[2] वादिनोभिप्रेतार्थसिद्धिः स्यात्। को ह्यत्र विशेषो येन क्रियाकारकान्वयादिष्वेव मानसं प्रत्यक्षमिष्यते? न तद्विशिष्टेर्थे वाक्यार्थत्वेनाभिप्रेते? किञ्चाऽशब्दात्मकत्वे वाक्यस्य प्रमाणान्तरत्वप्रसङ्गः। शब्दात्मकत्वे तु कथं संकेतनिरपेक्षात्ततोर्थप्रतिपत्तिः, अतिप्रसङ्गात्, [3]सूत्रविरोधप्रसङ्गाच्च? न च वाक्ये संकेतोस्ति, अपूर्ववाक्यादप्यर्थप्रतीतिदर्शनात्।

किञ्चान्त्यपदार्थज्ञानसमकलमेवान्त्यपदस्यापि नष्टत्वान्न वाक्यार्थप्रतीतिः

---

१. तौसलः = कश्चिदाचार्यः। उद्योतकर इति प्राचीनटिप्पणम्।

२. एवंवादिनः तौसलाचार्यस्येत्यर्थ इति प्राचीनटिप्पणम्।

३. "सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य" (न्या० सू० २।१।५५)। इति सूत्रे संकेतसापेक्षाच्छब्दादेवार्थप्रत्ययस्य प्रतिपादनाद्विरोध इत्यर्थः।

शाब्दी न चान्त्यपदार्थेन प्रतीयते। तदा च नाशहेतौ सत्यप्यदृष्टवशादनाशपूर्वपदानामप्यविनाशकल्पनाप्रसंगस्तुल्यन्यायत्वात्। तस्माद्यदिष्टैव वाक्यसंज्ञा, व्यवहारमात्रेण तदर्थानां संसर्गविशिष्टप्रत्ययस्तु मानस एव। पदमपि न पूर्वस्मृत्यपेक्षोऽन्त्यो वर्णः, क्रमस्य बाह्येन्द्रियाऽविषयत्वात्तत्क्रमाग्रहणे च न पदभावप्रतीतिः। तस्मात्संतानेनाकाशे वर्तमानाः क्रमविशिष्टा युगपन्मनसाऽनुभूताः पदमिति तौसलः। किमयं युगपदनुभवः श्रोत्रापेक्षः ? अनपेक्षो वेति ? श्रोत्रापेक्षश्चेत्तत्र वर्णानां युगपदसमवायान्न युक्तः। श्रोत्रानपेक्षत्वे चातिप्रसंगः श्रोत्रवैयर्थ्यं बाधिर्याभावप्रसंगश्च। श्रोत्रेणैकैकं गृहीत्वा तु युगपन्मनसा गृह्णातीति चेत्, न; प्रमाणाभावात्। तदाशुभावित्वान्मिथ्याऽभिमानः[1] शतपत्रभेदवत्। विलम्ब्यविलम्ब्योच्चारणे च तथाऽभिमानोऽपि नास्ति, क्रमप्रतिप्रत्तिरप्यस्ति। तस्मात् पूर्वग्रहणोपकृतबाह्येन्द्रियेणापि क्रमो गृह्यत इति कालविशिष्टस्य कथं बाह्याक्षग्राह्यत्वमिति चेत्, न; गन्धविशिष्टस्य चक्षुर्ग्राह्यत्ववत्तत्संभवादिति।

यच्चोक्तम्—"शब्दात्मकत्वे वाक्यस्य कथं संकेतनिरपेक्षात्ततोर्थप्रतिपत्तिरिति," तन्न; अनभ्युपगमात् संकेताभावस्य पदसमूहो हि वाक्यमुक्तम्। तेषां संकेतग्रहणे कथं वाक्यस्य तदभावः ? न हि सर्ववृक्षाणां छेदपुष्पादिभावेपि वनस्य तदभावः संभवी।

यच्चोक्तम्—'वाक्ये संकेतो नास्त्यपूर्ववाक्यादप्यर्थप्रतीतिरिति,'। तन्न; असिद्धत्वात्। अव्युत्पन्नानामपि वेदाद्यर्थप्रतीतिप्रसंगात्। यदप्युक्तम्—'व्यवहारमात्रेण पदेष्वेव वाक्यसंज्ञेष्टैवेति,'। तदप्यसत्; संसर्गविशिष्टार्थप्रतिपादकत्वेन [2]संज्ञाकरणात्। तथाभूतेर्थे संकेताप्रसिद्धेः कथं शब्देभ्यस्तस्य प्रतीतिरिति चेत् ? न; लिङ्गवत्प्रतीतेः। यथा सामान्येनैव दृष्टसम्बन्धं लिङ्गं प्रदेशादिविशेषावच्छिन्नं गृह्यमाणं तद्विशेषावच्छिन्नमेव साध्यं साधयति। तथा पदमप्यर्थमात्रेण प्रतीतसंबंधं पदान्तरसन्निधानेन श्रूयमाणं तदर्थसंसर्गावच्छिन्नमेवार्थं प्रतिपादयति। एवं हि शब्दस्य सार्थकत्वं भवेत्, अन्यथा सामान्ये सिद्धसाध्यतावदस्यापि वैफल्यदोषः स्यात्तावन्मात्रार्थस्य संकेतकालेपि प्रतीतत्वात् सूत्रविरोधोपि नास्ति। यथा सामान्येन गृहीतसंबंधं लिङ्गं देशादिविशेषं साधयदपि न व्याप्तिनिरपेक्षमुच्यते। तथा शब्दोपि सामान्येन

---

१. युगपद्ग्रहणात्मकः।
२. पदेषु वाक्यसंज्ञाविधानादित्यर्थः।

गृहीतसमयः सन्निहितपदान्तरार्थविशिष्टतयार्थं प्रतिपादयन्नपि सामयिक एवोच्यते।

ननु च लिङ्गस्य यत्र यत्रेति सम्बन्धः प्रसिद्धस्तेन यत्र तदुपलभ्यते तत्रैव देशादौ स्वव्यापकं गमयति, न तु शब्दस्यैवं प्रकारोस्ति, लिंङ्गान्तरानपेक्षलिंग-वत्पदान्तरानपेक्षपदादप्यर्थविशेषावगमप्रसंगादिति, नेदं साधीयः; शब्दो हि प्रमाणान्तरं वक्ष्यामस्ततो नाऽस्य सर्वथा लिंङ्गेन साधर्म्यम्, सर्वसाधर्म्ये हि लिङ्गमेव शब्दः स्यात्। किञ्चित्साधर्म्येण लिङ्गमुदाहृतम्। किञ्चाप्तोपदेशः शब्द इति उक्तम्। न च शुद्धान् पदार्थान् पदैः प्रतिपादयन्नाप्तः कश्चि-दुच्यते, किन्तु सोपायं हेयोपादेयतत्त्वमुपदिशन्। न च संसर्गविशेषानभि-धायिभिः पदैस्तदुपदेष्टुं शक्यते। संकेतोपि प्रायेण वाक्यभावापन्नानां पदानां गृह्यते। यथा व्याकरणे क्रियाकारकाभिधायिनां पदानामन्योन्यार्थसंसर्गेण विशिष्टेष्वप्यर्थेषु समयः प्रतीयते नीलोत्पलादिपदानामन्योन्यविशिष्टा-र्थेष्वपीति। एवं लोकव्यवहारेपि बालवृद्धेभ्य आर्याः कणादादिभ्यश्च समयं प्रतिपद्यन्त इति। एवं संस्कृतबुद्धिरन्यथाविन्यस्तस्यापि वाक्यस्य प्रति-भोहाभ्यां वाक्यार्थं प्रतिपद्यते। यस्यापि केवलपदस्य क्वचिदर्थे समयः प्रति-पन्नस्तस्यापि गृहीतवाक्यभावपदेषु मध्ये प्रयुक्तस्य तद्विशिष्टत्वं प्रतिभोहाभ्यां प्रतिपद्यते। यथा क्वचित्प्रतिपन्नसमयेषु पदेषु मध्ये प्रयुक्तस्याप्रतिपन्न-समयस्यापि पदस्यार्थं प्रतिपद्यते। तदैव तत्र प्रतिभोहाभ्यां समयं गृहीत्वा तस्यार्थं प्रतिपद्यते न त्वसंकेतितादर्थप्रतीतिरिति चेत्, वाक्यस्यापि तर्हि किं नैव शिष्यते? तथा हि यत्र प्रतिभोहाभ्यां समयं ग्रहीतुं न शक्नोति, तत्र प्रसिद्धेष्वपि पदार्थेषु वाक्यार्थं प्रतिव्याख्यानमपेक्षते। अथ केयं प्रतिभेति जन्मान्तराभ्यासजः संस्कारविशेषः, कुतश्चिन्निमित्तात् प्रतिबुद्धः स्मृतिहेतुः प्रतिभात्र विवक्षिता न त्वार्षं प्रत्यक्षमिति। ऊहस्तु बौद्धी शक्तिः परामर्शो वा। यद्येवमर्थोस्य तदानेन संगतार्थत्वं न स्यादतोऽयमर्थ इति परामर्शः। ननु चैवं परामर्शात्प्रागेव नष्टः शब्दः स कथमर्थं प्रतिपादयेत्? किञ्च दशदा-डिमादिपदसमूहोपि वाक्यार्थं प्रतिपादयेत्। तस्मान्न पदसमूहो वाक्यम्, किन्तु पदानि यथा स्वमर्थं प्रतिपाद्य निवर्तन्ते ततः पदार्थसमूहाद्वाक्यार्थप्रतिपत्ति-रित्यपरे।

तदप्यसाधीयः, पदार्थसमूहोपि हि नावश्यं विद्यमानः, पाण्डवादिपदार्थानाम-ग्निहोत्रादिक्रियाणां च तत्फलानां चावर्तमानत्वात्। कुतस्ततो वाक्यार्थावगमः? तत्साधनं पदार्थसमूहविषयं ज्ञानमिति चेत्। पदसमूहविषयं ज्ञानं किन्न तथा?

किञ्च दशदाडिमादिपदार्थसमूहोपि वाक्यार्थं किन्न गमयेत् ? तत्राऽपेक्षा-सन्निधे योग्यतादिनिमित्ताभावादिति चेत् । पदसमूहेप्ययं समानः परिहारः प्रमाणान्तरप्रसंगश्च । न हि पदार्थसमूहः प्रत्यक्षादीनामन्यतमेन्तर्भवति शब्दादवगतः पदार्थसमूहो वाक्यार्थं गमयति, तेनासौ शब्देन्तर्भवतीति चेत्, एवं तर्हि प्रत्यक्षावगतयोः शब्दलिङ्गयोः स्वार्थप्रतिपादकत्वात्तयोः प्रत्यक्षेऽन्तर्भावप्रसंगः, प्रतीत्यभावाच्च, न हि पदार्थेषु वाक्यमिदमिति--पदार्थेभ्यो मया वाक्यार्थः प्रतिपन्न इति वा प्रतीतिरस्ति ।

## * अन्विताभिधानवादः *

नाप्यभिहितान्वयः, प्रागप्यन्वयसद्भावात् । अन्वयो हि क्रियाकारकविशेषणादीनामन्योन्यसंसर्गविशेषोऽभिधीयते । स च प्रागप्यस्ति तद्दर्शी हि तत्प्रतिपादनाय वाक्यमुच्चारयति—श्यामः पुरुषः कुठारेण गिरौ महान्तं वृक्षं छिनत्तीति । अभिहितानां पदार्थानां पश्चादन्वयः प्रतीयते, तेनाभिहितान्वय इति चेत्, स पुनः किं पश्चादर्थसामर्थ्यात् प्रतीयते ? किं वा शब्दसामर्थ्यादिति ? यद्यर्थसामर्थ्यात्तदा श्यामेन कुठारः पुरुषं गिरये महतो वृक्षेण छिनत्त्येव शब्दैरभिहितानामप्यर्थानां सामर्थ्यादन्वयः प्रतीयेत । न ह्यन्यथाभिधानेन पदार्थानां सामर्थ्यं निवर्ततेऽन्यथात्वं वा भवेत् ।

किञ्च काव्यशास्त्रादिषु पदार्थप्रतीतावन्वयप्रतिपत्त्यर्थं केषाञ्चिद् व्याख्यापेक्षित्वदर्शनात् । किञ्चान्वयानभिधाने कथमन्वितमिदं वाक्यम्, इदं त्वनन्वितमिति व्यपदेशः ? अथ शब्दसामर्थ्यात् पश्चादन्वयः प्रतीयते, स किं स्वतन्त्रः ? अथ पदार्थनिष्ठ इति ? न तावत् स्वतन्त्रस्तथा प्रतीत्यभावादभिहितानामन्वय इति विरोधाच्च । अत एव न पदार्थान्तरनिष्ठस्तत्प्रतिपत्त्युपायाभावाच्च । नाप्यभिहितपदार्थनिष्ठः, श्यामशब्देन हि यथासमयं प्रवृत्तेनापुरुषोप्यभिहितः पुरुषशब्देन चाऽश्यामोप्येवं कुठारादिशब्देन कुठारादिमात्रम् । न चैवंभूतानां पदार्थानामन्वयो भवति ।

अथाऽन्योऽन्यसंसर्गविशिष्टार्थाभिधानायोच्चारिताः श्यामादिशब्दाः परस्परार्थज्ञानापेक्षास्तथाविशिष्टानेवार्थानभिदधते । समयोप्येवम्, न हि ते सामान्यशब्दा, ये प्रकरणाद्यपेक्षा इत्युपदेशाद् व्यवहारतश्च प्रतीयन्त इति सिद्धं तर्ह्यन्विताभिधानम् ।

यत्तु कश्चिदाह—मानसप्रत्यक्षजेयमन्वयप्रतीतिर्बाधितान्यसाधनत्वे सति विशिष्टप्रतीतित्वाच्छ्रुवो मे भ्राताऽगन्तेति प्रतीतिवदिति, तन्न; विशेषण-

सिद्धत्वात्। न हि वाक्यजन्यत्वेऽस्याः किञ्चिद् बाधकमस्तीति वक्ष्यामः। श्वो मे भ्रातागन्तेति न केषाञ्चिदस्ति प्रतीतिरित्यसिद्धं निदर्शनम्। ननु बालानां केषाञ्चिदस्ति, कथं त्वयावगतम्? तद्वचनाविसंवादादिति चेत्? न; यथा-कथञ्चिद् ब्रुवतः सदुक्ति कस्यचिद् वचनस्य काकतालीयवदविसंवादो भवत्यप्यु-न्मत्तादिवन्नैतावता तेषां तदर्थनिश्चयः सिद्ध्यति। अथवा काकरुतादिवद् बालवचनं शकुनत्वेनार्थं सूचयल्लिङ्गमेव यदि समानसंप्रत्यक्षं वाक्यार्थ-विषयं स्यात्। तदा शब्दाश्रवणेऽपि सुखादिष्विव वाक्यार्थेषु तद् भवेत्। सहकारिवैकल्यान्न भवतीति चेत्, किं शब्दज्ञानम् सहकारि? पदार्थज्ञानं वा? शब्दज्ञानं चेत्कथं न वाक्यार्थप्रतीतिर्वाक्यजा? पदसमूहज्ञानजैव हि वाक्य-जेत्युच्यते। यथाऽतीतलिङ्गज्ञानजाप्यनुमेयप्रतीति र्न मानसप्रत्यक्षजा, किन्तु लैङ्गिकैवोच्यते। अथ पदार्थसमूहज्ञानं मनःसहकारि, तथा सत्यभिहितान्वयपक्ष-सिद्धिः स्यात्तत्र चोक्तं दोषजातम्। न चाभिहितान्वयवाद्यपि मनसः कारणत्वं प्रत्याचष्टे, सर्वज्ञानानां मनःकारणत्वात्। न च मनोजन्यत्वादेव मानसं प्रत्यक्षम्, सर्वज्ञानानां तद्भावप्रसङ्गात्। बाह्येन्द्रियाजन्यापरोक्षानुभवो हि मानस-प्रत्यक्षं फलं, न चादृष्टेश्वरादौ वाक्यार्थेऽस्मदादेरपरोक्षानुभवः सम्भवति योग्य-योगिनोरविशेषप्रसङ्गात्। किञ्च वाक्यार्थे सुखदुःखादिप्रत्यक्षे च प्रतीति-विशेषो न स्यान्मानसप्रत्यक्षत्वाविशेषात्।

किञ्च पदार्थप्रतीतेरपि मानसप्रत्यक्षजत्वं कल्पयितव्यं, तुल्यन्यायत्वात्। सूक्ष्मेक्षिकया पदार्थप्रतिपत्तिरपि न शाब्दी, पदस्यापि तृतीये क्षणेऽवश्यं मूर्तद्रव्य-(काशवत्।) संयोगात् कार्यशब्दाद्वा विनाशः सम्भवति। न च तृतीये क्षणे पदार्थज्ञानं भवति, संकेतस्मृतिरपि हि तदा न सम्भाव्यते। न च नाशकारणयोगेऽपि अदृष्टवशादवस्थानं सम्भवति, पदसमूहस्याप्यदृष्टवशाद् वाक्यार्थप्रतिपत्तेरवस्थानप्रसङ्गात्। क्वचित्तु प्रणिधानधर्माधर्मादिभिश्चिरेण संकेतं स्मृत्वा पदार्थं प्रतिपद्यते। तथा लिप्यक्षरेषु मनसैव पदान्यनुसन्धाय तत्संकेतं स्मृत्वा पदार्थाद् वाक्यार्थं च प्रतिपद्यते। तदेवं वाक्यार्थज्ञानेन समानयोग-क्षेमत्वात् पदार्थज्ञानस्यापि मानसत्वं प्राप्तम्। ततश्च शब्दाख्यं प्रमाणं निवर्तते। न हि पदार्थज्ञानेऽपि क्वचित् शब्दस्य साक्षाद्धेतुत्वमस्ति, श्रूय-माणस्याप्यनवस्थानस्योक्तत्वात्तदर्थप्रतिपत्तेरन्यथाऽपि सम्भवान्न तदन्यथानुप-पत्त्यापि शब्दावस्थानसिद्धिः। तस्माद्वाक्यभावेन शब्दानुसन्धानाद् भवन्ती वाक्यार्थप्रतिपत्तिरपि शाब्दीत्युच्यते। मुख्यतस्तु शब्दानुसन्धानेनैव समया-द्यपेक्षेण पदार्थेषु वाक्यार्थेषु च प्रतिपत्तिर्जन्यते। तत्र च पदाद्यनुसन्धाने पदत्वं वाक्यत्वं शब्दाख्यत्वं च गौणं, प्रमाणत्वं तु मुख्यमेव। अमुख्ये तु

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। तत्र प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञा, यथा—अनित्यः शब्द इति।**

---

शब्दे गौणं प्रमाणत्वं, साक्षादर्थज्ञानासाधनत्वात्। अनाप्तवचनं तु प्रणालिकयापि न सम्यगनुभवसाधनमित्यप्रमाणमेवेत्युच्यते। नैवमाप्तवचनम्, तस्य प्रणालिकयाऽर्थनिश्चयसाधनत्वात्। तन्न गौणत्वादविशेषः, प्रणालिकयार्थनिश्चयसाधनत्वं च सर्ववर्णानां सर्वपदानां चास्ति, तन्नान्त्यवर्ण एव पदम्, नान्त्यपदमेव च वाक्यमिति। तथा च "ते विभक्त्यन्ताः पदम्" (न्या० सू० २।२।५५) इति सूत्रं "साधनीयस्यार्थस्य यावति शब्दसमूहे" (न्या० भा० पृ० ५) इत्यादि भाष्यं च। वाक्यैकदेशाश्चावयवा उच्यन्ते, न चान्त्यपदैकदेशाः प्रतिज्ञादय इति। तस्मात्पदसमूह एव वाक्यमिति स्थितम्।

## ❀ अवयवनिरूपणम् ❀

तदेकदेशाः किं पदान्येवावयवा इति? उच्यते—न, किं तर्हि? "प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः।" साधनाङ्गाभिधायकं वाक्यमपि महावाक्यस्यावयवमित्यर्थः।

## ❀ प्रतिज्ञानिरूपणम् ❀

तत्र—"प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञा।" जिज्ञासुरपि साधनजिज्ञासनार्थं पक्षवचनमुच्चारयिति तदपि प्रतिज्ञा मा भूदिति प्रतिपिपादयिषयेति विशेषणम्, तत्र चोद्यपरिहारार्थं वा "साध्यनिर्देशः प्रतिज्ञा" (न्या० सू० १।१।३३) इति सूत्रम्। तत्र हेतुदृष्टान्तयोः साधनान्तरेण सिषाधयिषया निर्देशः क्रियते, तदा प्रतिज्ञा साऽभ्युपगम्या। न हि परस्यासिद्धमित्येव साध्यमत्राभिप्रेतम्, किं तर्हि? यद्यदा प्रतिपादकेन सिषाधयिषितं तद्, उक्तसाधनापेक्षस्य साध्यत्वात्। किं पुनरत्रावधार्यते? यदि साध्यनिर्देश एव प्रतिज्ञेति प्रतिज्ञावधार्यते, तदा साध्यनिर्देशोऽनवधारितोऽन्यथाप्यस्तीत्यतिव्यापकं लक्षणं स्यात्। अथ पुनः साध्यनिर्देशः प्रतिज्ञैवेति साध्यनिर्देशोवधार्यते, तथाप्यनवधारिता प्रतिज्ञा अन्यथाप्यस्तीत्यव्यापि लक्षणं स्यादिति, ना; अनियमादिति तमोरिः—नायं नियमोस्ति सर्वं वाक्यं सावधारणमिति। यथैष पन्थाः स्रुघ्नं गच्छतीति (न्या० वा० पृ० ११०)।

## ❋ कीर्तेरवधारणपक्षः ❋

अत्राप्यवधारणमस्त्येवेति कीर्तिर्यस्माद्—

[1]अयोगं योगमपरैरत्यन्तायोगमेव च ।
व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचकः ॥

[2]विशेषणविशेष्याभ्यां क्रियया च सहोदितः ।
विवक्षातोऽप्रयोगेपि तस्यार्थोऽयं प्रतीयते ॥

[3]व्यवच्छेदफलं वाक्यं यथा चैत्रो धनुर्धरः ।
पार्थो धनुर्धरो नीलं सरोजमिति वा यथा ॥

प्रतियोगिव्यवच्छेदस्तत्राप्यर्थेषु गम्यते ।
तथा प्रसिद्धेः सामर्थ्याद्विवक्षानुगमाद् ध्वनेः ॥

तेनाऽत्रापि यदा पथ्यन्तरे शङ्का, तदैष एवेत्यवधारणम् । यदा तु ग्रामान्तरं गमिष्यतीत्याशंका, तदा स्रुघ्नमेवेत्यवधारणम्; यदा तु नैष स्रुघ्नं यावद् गमिष्यतीत्याशंका, तदा गच्छत्येवेत्यवधारणमिति ।

## ❋ तन्निरासः ❋

अत्रापि[4] तमोरिरुक्तवान्—नाऽवधारणस्य विषयं पश्यामः । सामान्यश्रु-

---

१. प्र० वा० ४।१९० । व्यतिरेचको निपातः ( एवादिः ) अयोगम्, अपरैर्योगम् ( अन्ययोगं ), अत्यन्तायोगं च व्यवच्छिनत्तीत्यन्वयः ।

२. प्र० वा० ४।१९१। विशेषणेन सहोदितः ( निपातः ) अयोगम् , विशेष्येण (सहोदितः) अन्ययोगम् , क्रियया (सहोदितः) अत्यन्तायोगं च व्यवच्छिनत्तीति यथाक्रममन्वयः ।

३. प्र० वा० ४।१९२ । वाक्यम् = पदं व्यवच्छेदकं भवति । 'चैत्रो धनुर्धर एव'— इत्ययोगव्यवच्छेदस्य, 'पार्थ एव धनुर्धर—इत्यन्ययोगव्यवच्छेदस्य, 'नीलं सरोजं भवत्येव'—इत्यत्यन्तायोगव्यवच्छेदस्योदाहरणं क्रमेण बोध्यम् ।

४. तमोरिरित्युद्योतकरं निर्दिशतीत्यावेदितम् । तद्वार्तिकानुपूर्वी तु—"सर्वस्मिन् वाक्येऽवधारणमिति न बुध्यामहे । तद्यथा—गोपालकेन मार्गेऽपदिष्टे 'एष पन्थाः स्रुघ्नं गच्छतीति' नावधारणस्य विषयं पश्यामः । अवधारणस्य तु विषयः— सामान्यश्रुतौ नियमः—येन वाक्येन समानश्रुत्याऽनेकार्थो गम्यते तत्रातिप्रसक्ता- वतिप्रसङ्गनिराकरणार्थमवधारणमिति, न पुनः साध्यनिर्देशः प्रतिज्ञेत्युक्ते

तावतिप्रसंगनिवृत्तये हि अवधारणमिष्यते। यत्र हि विशेषणस्यावकाश-स्तत्रावधारणस्यापीति। न च मार्गस्वरूपमात्रजिज्ञासुं प्रति गोपालकेनैष पन्थाः स्रुघ्नं गच्छतीत्युपदिष्टे क्वचित्प्रसंगोस्ति, साध्यनिर्देशः प्रतिज्ञेति उक्ते वा, यद्व्यवच्छेदार्थमवधारणमाश्रीयते।

पार्थो धनुर्धर इत्यत्रापि द्रोणशिष्यत्वेन शिष्यान्तरेषु तत्तुल्यधानुर्धार्या-शंकायां तद्व्यवच्छित्तयेऽवधारणं युक्तम्, अन्यथा त्वयुक्तमेव। न हि पार्थ एव धनुर्धरस्तत्तुल्योधिको वा नास्तीति शक्यं वक्तुम्?

चैत्रो धनुर्धर इत्यत्रावधारणमयुक्तम्, धानुर्धार्यविधानादेवायोगव्यवच्छेद-सिद्धेर्विधिप्रतिषेधयोरेकत्रासम्भवात्। एकदेशावृत्तिप्रतिषेधार्थं तु युक्तम्, यथा पाण्डुपुत्राः शूरा एवेति। एकदेशवृत्तावपि वृत्तिव्यपदेशोस्ति,? यथा विषाणित्वं विपक्षे वर्तत इति।

नीलं सरोजं भवत्येवेत्यपि न युक्तं भवति, शब्दादेवात्यन्तायोगव्यवच्छे-दस्य सिद्धत्वात्। व्यवच्छेदफलत्वं च वाक्यस्य निराकृतं निराकरिष्यते च। वस्त्वभिधायकस्यापि सामर्थ्याद् व्यवच्छेदसिद्धिरिष्टैव।

साध्यनिर्देशः प्रतिज्ञेत्यत्रापि सामर्थ्यादसाध्यनिर्देशः प्रतिज्ञा न भवतीति गम्यते। तथा च सति प्रतिज्ञाभासा अपि निरस्तास्तांश्च प्रसंगेनोपरिष्टादुदाह-रिष्यामः। साध्यधर्मविशिष्टो धर्म्येवाऽत्र साध्यशब्देनोक्तस्तेन साध्यनिर्देशः पक्षवचनमित्येकोर्थः। साध्यधर्मनिर्देशस्तु न प्रतिज्ञेत्याचार्याः। भवतु वा धर्मिविशिष्टधर्मस्यापि साध्यशब्देनात्र ग्रहणम्, तन्निर्देशोपि पक्षवचनं न ह्यग्नि-रत्रेति शब्दादऽग्निमान् प्रदेशो न प्रतीयते। न च विशेष्यमाण एव धर्मी पक्ष उक्तः, किन्तु योग्यतयापि केवलधर्मिणोप्यभिधानं तर्हि प्रतिज्ञा स्यात्, न; वैयर्थ्यात्। न हि ततोभिप्रेतार्थः कश्चित्सिध्यति। असाधनाङ्गं वचनं निग्रह-स्थानं स्यात्।

## ❋ प्रतिज्ञावैयर्थ्याशङ्का ❋

एवं तर्हि प्रतिज्ञैव न कर्तव्या, ततः साक्षात्पारंपर्येण वा सिद्ध्यसम्भवात्। साक्षात्तावन्न किञ्चिद्वचनं साधनाङ्गम्। यस्मात्—

---

क्वचित् प्रसङ्गोऽस्ति, यन्निराकरणायावधारणं क्रियेत। सर्वत्र च सावधारणं कुर्वाणो लोकं बाधत इति। यत्र च विशेणस्यावकाशः तत्रावधारणस्यापीति। (न्या० वा० पृष्ठ ११०)।

[1]अर्थादर्थगतेः शक्तिः पक्षहेत्वभिधानयोः ।
नाऽर्थे तेन तयोर्न्नास्ति स्वतः साधनसंस्थितिः ॥

[2]साध्याभिधानात् पक्षोक्तिः पारम्पर्येण नाप्यलम् ।
शक्तस्य सूचकं हेतुवचोऽशक्तमपि स्वयम् ॥

स्वार्थेपि लिङ्गसम्बद्धधर्मिदर्शनं व्याप्तिस्मृतिश्चैतावदेवोपयोगि दृष्टं तेन स्वप्रतिपत्तिवत्परस्यापि प्रतिपत्तिं चिकीर्षता अन्तर्व्याप्तिबहिर्व्याप्ती एव ख्यापनीये । तथा प्रतिपादितोपि हेतुः प्रतिज्ञां विना परप्रतिपत्तिं न करोतीति चेत्, तत्किमिदानीं परार्थिनो दृष्ट्वा पर्वब्राह्मणवदयं मूल्यं मृगयते ? किञ्च यो यः कृतकः, स सर्वोप्यनित्यः, यथा घटः, शब्दश्च कृतक इत्युक्तेप्यनित्यः शब्द इत्यर्थाद गम्यत एव । तथा च [3]डिण्डिकरागं परित्यज्याऽक्षिणी निमील्यचिन्तय तावत्किमियताऽर्थप्रतिप्रत्तिर्भवति न वेति संशयात् प्रतिज्ञातो नार्थनिश्चयः, तस्मादसाधनाङ्गं प्रतिज्ञेति ।

## ❀ तत्समाधानम् ❀

अत्रोच्यते—यत्तावत्साक्षान्न साधनमिति तत्राविवादः । पारम्पर्येणापि साधनं साध्याभिधानादित्युक्तम्, हेतोरसाधारणत्वात् । हेत्वनुपकृतसाध्याभिधानवन्नासाधारणतेति चेत्, न; हेत्वभिधानस्याप्यवयवान्तरानुपकृतहेत्वाभिधानवदसाधनांगत्वप्रसंगात् । तस्य शक्तसूचकत्वादिति चेत्, न; दृष्टान्तवचसामानेकान्तत्वात्, शक्ताङ्गसूचकत्वं च प्रतिज्ञावचनसोप्यस्ति, तद्विषयोपदर्शकत्वात् । न हि कश्चिदनुपदर्श्य विषयं तत्साधनमुपदिशति, गृहे स्थितं घटं प्रदीपेन पश्येत्युपदेशवत् । एतेन स्वप्रतिपत्तिवदित्याद्यपि निरस्तम्, स्वप्रतिपत्त्युपायमात्रोपदेशो हि गृहे चक्षुषा प्रदीपेनेत्येतावदेवोपदेष्टव्यं स्यात्, न चैवमुपदिंशति अभिप्रेतार्थ उपदिष्टो भवति । किञ्च वादिप्रतिवादिगुणदोषचिन्ता परार्थेऽनुमाने क्रियते, न स्वार्थे ।

सा च पक्षादिप्रविभागज्ञानमूला, न च प्रतिज्ञां विना सपक्षासपक्षविवेकज्ञानम्, तदभावे विरुद्धतत्त्ववादिविवेकोपि न स्यात् । यत्कृतकं तदनित्यं घटादिवदिति वचनस्य प्रतिज्ञामन्तरेणोभयोरविशेषात् । तत्किमिदानीं विरुद्धवादित्वख्यापनार्थमात्मनः प्रतिज्ञेष्यते ? नैतदेवम्, किं तर्हि ? विरुद्धबाधविशेषाशङ्का-

---

१. प्र० वा० ४।१५ ।

२. प्र० वा० ४।१७ ।

३. डिण्डिकरागमिति । द्र० टि० ३ पृ० ५० ।

पोहार्थम्, प्रतिज्ञां विना हि प्राश्निकानां संदेहोपि स्यात्। कृतकत्वस्य नित्यत्वानित्यत्वाभ्यां व्याप्त्यभिधानाद्विरुद्धतत्त्ववादिविवेकसिद्धिरिति चेत्, न; साध्यविशेषानधिगमे तद्दोषगुणोद्भावनस्यायुक्तस्वात्। अनित्यत्वे साध्ये हि कृतकत्वनित्यत्वेन व्याप्त्यभिधानेपि न विरुद्धमुद्भावयितुं युक्तम्। विपरीतव्याप्तिवचनदोष एव वक्तुरुद्भावनीयः। नित्यत्वे च साध्ये नाऽनित्यत्वेन व्याप्त्यभिधानेप्यविरुद्धं युक्तम्। नित्यत्वं शब्देभिप्रेत्यानुन्मत्तः कथं कृतकत्वस्यानित्यत्वेन व्याप्तिं दर्शयीतीति चेत्? कृतकत्वस्य नित्यत्वेन व्याप्तिमप्यनुन्मत्तः कथमभिधत्ते? भ्रान्तित इति चेत्, तदितरत्रापि तुल्यम्। नत्वेवं प्रतिज्ञेष्यते। नैतत्, एवमुपन्यासेप्यनाश्वास इति, न; वाक्यस्य गुणदोषपरीक्षाद्वारेण वक्तुस्तद्वत्त्वोद्भावनाच्चित्रादे गुंणदोषवत्तया तत्कर्तु गुंणदोष-वत्त्वोद्भावनवत्। न च परव्यामोहनार्था विदुषां प्रवृत्तिर्येन स्वाभिप्रायनिवेदकं परिस्फुटं वाक्यं नोच्चार्यते। पक्षावचने हि मन्दमध्यमशक्तीनां श्रोतृणां साध्याभिप्रायाऽनवगमे सपक्षविपक्षयोरपि व्यामोहः स्यात्। तस्मात्तत्परि-हारार्थं पक्षवचनं कर्तव्यमिति। यच्चोक्तम्—यो यः कृतक इत्यादि, तदप्य-सत्; न हि कश्चिदतर्कितमुद्गरपातायमानं सभामध्यं गत्वा यो य इत्याद्युप-न्यासमप्रस्तुतमेवंकुर्वन्विदुषां नोपहासमर्हति। यदि च पक्षोक्तिरसाधनांगं, तत्किं त्वया सैवोपदिश्यते—पक्षोक्तिः पारम्पर्येण नाप्यलम्, अनेकवृत्तेरेकस्य न देशादिविशेषवतान्येन योग इत्येवमाद्या। शास्त्रे बालव्युत्पादनार्थमुपदिश्यत इति चेत्, असाधनाङ्गवचनेन कथं बालानां व्युत्पत्तिः, प्रत्युताऽपसंस्कार एव स्यात्। व्युत्पत्तिं वा कुर्वन् कथमसाधनम्? बालान् प्रत्यस्तु साधनमिति चेत्, न; विशेषाभावात्, परार्थानुमानप्रतिपाद्यत्वाविशेषाच्चेति। न च वादेप्येवं कश्चिदुपलभ्यते, यः साध्यनिर्देशं न करोति। यदि नाम मूलप्रयोगे द्वितीये वा तृतीये वा न करोति, नैतावता तत्परिहारोऽवश्यं हि स्वपक्षं महता प्रपंचेन विचारयतेदमित्थं नेदमित्थंमिति वा क्वचिद्वक्तव्यं तदेव पक्षवचनं, तदर्थसिद्धये हेतूपन्यासः।

यच्चोक्तम्—अनुवादमात्रं पक्षवचनन्न तु साधनाङ्गमिति, तदप्ययुक्तम्; तथा हि—यद्यनुवादमात्रम्, निरर्थकं किं तेनोक्तेन? निग्रहस्थानं च स्यात्। अन्यप्रयोजनमप्यप्रस्तुतत्वादयुक्तम्। अथ प्रणालिकयाऽर्थसिद्धिः प्रयोजनम्, ततः कथं पारम्पर्येण नाप्यलम्?

यत्पुनरेतज्जिज्ञासादीनामप्यवयवत्त्वं प्रसज्यते, प्रतिज्ञावद्धेतुवचःप्रवृत्ति-निमित्तत्वादिति, तदयुक्तम्; यस्य हि शब्दस्यैकवाक्यभावोऽस्ति तस्य वाक्या-

साधनत्वख्यापकं लिङ्गवचनं हेतुः, यथा—तीव्रादिधर्मोपेतत्वादिति ।

वयवत्वम् । वाक्यैकदेशा ह्यवयवा इत्युक्तम् । न च जिज्ञासादीनां तथाभावोस्ति, तथा हि—विशेषतोऽर्थे ज्ञातुमिच्छा जिज्ञासा, व्याहतधर्मोपसन्धाता संशयः, अभिप्रेतार्थश्रायकप्रमाणसम्भवः शक्यप्राप्तिः, तन्निश्चयः प्रयोजनं, प्रतिपक्षप्रतिषेधः संशयव्युदास इति । न चैते वचनात्मकास्तन्न दशावयवप्रसङ्ग इति ।

यत्पुनरत्र भदन्तेनोक्तम्—"इदं त्वया जिज्ञासितम्, अत्र ते संशय इत्यादिवचनानामवयवत्त्वप्रसक्तौ दशावयवं वाक्यं प्रसज्यत" इति, तन्न युक्तम्; न हि वचनत्वादेवावयवाः, किं तर्हि ? साधकवाक्यैकदेशत्वात्, न चैते साधकवाक्यैकदेशाः । प्रतिज्ञापि तर्हि न साधकवाक्यैकदेशः, संशयहेतुत्वात्, न; अवयवान्तरानुप्रक्तस्य हेत्वादिवचसोऽपि संशयहेतुत्त्वात् । स्वार्थे ततो न संशयः इति चेत्, न; स्वार्थेऽपि संदेहात् । किमयं हेत्वर्थः साधकोऽथासाधकः ? कस्य चायमिति धर्म्मिमात्रे प्रतिज्ञार्थेऽपि संदेहः । किञ्च हेत्वाद्यर्थेऽपि न सर्वेषां सम्प्रतिपत्तिः, तद्वचोऽपि कस्यचित् सन्देहं कुर्वदसाधनाङ्गं तेन निग्रहस्थानं प्राप्तम् । न हि प्रतिज्ञापि सर्वेषां सन्देहकर्त्री यथा च पश्चादपि निश्चायिते हेत्वादौ तद्वचो नासाधनाङ्गं तथा पक्षवचोऽपीति ।

प्रस्तावात् प्रतिज्ञार्थो लभ्यते इत्यपरः । कोऽयं प्रस्तावः ? वादिनोः पक्षप्रतिपक्षपरिग्रहः, ननु सैव प्रतिज्ञा । न च पञ्चावयवं प्रयोक्तव्यमिति नियम्यते । किं तर्हि ? पञ्चावयवमेव वाक्यं साधकमिति । तत्र यदि कश्चिदवयवः कुतश्चिद् गम्यमानार्थत्वात् प्रतिपाद्यप्रज्ञानुरोधाच्च न प्रयुज्यते, न तावता दोषः कश्चित् । न्यूनं तु निग्रहस्थानम् तदा, यदि जिज्ञासितमपि साधनाङ्गं प्रतिपादयितुं न शक्नोति । यथा किमत्र साध्यमित्येवं पृष्टोऽपि बौद्धः स्वसमयविरोधभयात् साध्यं निर्देष्टुमशक्तः, 'सामर्थ्याद् जानीष्व, नो चेत् सामर्थ्याद् ज्ञातुं शक्नोपि ततोऽद्यापि अव्युत्पन्नस्त्वं, सिद्धमातृकाशालां प्रविश, कस्ते वादेऽधिकारः—'इत्येवमाद्यसदुत्तरं वक्ति । न चैतत् सतां युक्तम् । तस्मात् परावबोधार्थप्रवृत्तेन पक्षोक्तिरपि प्रयोक्तव्येवातो नासाधनाङ्गं प्रतिज्ञेति ॥छ॥

## ❀ हेतुनिरूपणम् ❀

साधनत्त्वख्यापकं लिङ्गवचनं हेतुः । पञ्चम्यन्तं तृतीयान्तं वा येन लिङ्गस्य साध्यसिद्धौ हेतुत्वं ख्याप्यते । तद्वत् तद्वचनं हेतुरित्युपचर्यते । मुख्यतस्तु

स त्रिविधः—अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी चेति ।

लिङ्गमेव हेतुस्तस्यैव पक्षधर्मत्वादिसद्भावात् । स त्रिविध इत्याद्यपि मुख्य-गौणभावेन व्याख्येयम्, परोक्तत्रैविध्यप्रतिषेधार्थमन्वयव्यतिरेकीत्याद्युक्तं न तु पूर्ववदादिप्रकारप्रतिषेधार्थम् ।

## ❀ बौद्धानां हेतुत्रयनिरूपणम् ❀

परो ह्येवमाह—[1]कार्यस्वभावानुपलब्धिलक्षणास्त्रयो हेतवः, यथाग्निरत्र धूमात्; वृक्षोयं शिंशपात्वात्; इह प्रदेशे नास्ति घटः, उपलब्धिलक्षण-प्राप्तस्यानुपलब्धेः । त्रयाणामप्येषां स्वभावप्रतिबन्धोस्ति नान्येषां मतेनान्येषां हेतुत्वम् । स्वभावहेतुर्द्विविधः—उपाध्यपेक्षः, शुद्धो वा, नाशे कृतकत्वसत्त्ववत् । अपेक्षितपरव्यापारो हि भावः कृतक इत्युच्यते । अनुपलब्धिस्तु दृश्यादृश्या-नुपलब्धिभेदाद् द्विविधा । तत्राऽदृश्यानुपलब्धिः सद्व्यवहारप्रतिषेधमात्रसाधनी न त्वभावं साधयति, अनैकान्तिकत्वात् । दृश्यानुपलब्धिस्तु भावसाधनी ।

सा चैकादशधा[2]—तत्र (१) स्वभावानुपलब्धिः पूर्वोदाहृता । (२) कार्या-नुपलब्धिर्यथा—नेहाऽप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति, धूमाभावात् । (३) व्यापकानुपलब्धिर्यथा—न शिंशपाऽत्र, वृक्षाभावात् । (४) स्वभाव-विरुद्धोपलब्धिर्यथा—न शीतस्पर्शोऽत्राग्नेः । (५) विरुद्धकार्योपलब्धिर्यथा—न शीतस्पर्शोऽत्र, धूमात् । (६) विरुद्धव्याप्तोपलब्धिर्यथा—ध्रुवभावी विनाशो भूतस्यापि हेत्वन्तरापेक्षणात् । (७) कार्यविरुद्धोपलब्धिर्यथा—नात्रा-प्रतिबद्धसामर्थ्यानि शीतकारणानि, वह्नेः । (८) व्यापकविरुद्धोपलब्धिर्यथा—नात्र तुषारस्पर्शो वन्हेः । (९) कारणानुपलब्धिर्यथा—नात्र धूमोऽनग्नेः । (१०) कारणविरुद्धोपलब्धिर्यथा—नास्य रोमहर्षादिविशेषाः, सन्निहितदहन-विशेषत्वात् । (११) कारणविरुद्धकार्योपलब्धिर्यथा—रोमहर्षादिविशेषयुक्तः पुरुषोऽत्र, धूमाद् । यावान् कश्चित्प्रतिषेधः, स सर्वोप्यनुपलब्धिरिति समय-स्तेन विरुद्धाद्युपलब्धिरप्यनुपलब्धिरेवोक्तेति ।

## ❀ तत्र स्वभावानुपलब्धेर्निरासः ❀

अत्र स्वभावहेतुस्तावदनुपपन्नस्तादात्म्यप्रतिबन्धस्यासम्भवात् । तदस-

१. द्र० न्या० बि० पृ० १०० ।

२. द्र० न्या० बि० पृ० १२४ ।

म्भवश्च धर्मयोर्धर्मधर्मिणोश्च अर्थान्तरत्वस्य प्रसाधितत्वात्। स्वभावानुपलब्धिरप्यत[1] एव न हेतुः। प्रत्यक्षसिद्धे ह्यभावेऽपार्थिकानुपलब्धिः। अनुपलब्धौ चाऽभावसिद्धौ दृष्टान्ताऽनवस्था स्यात्। क्वचित्प्रत्यक्षसिद्धत्वाभ्युपगमे, कथं यावान् कश्चित् प्रतिषेधः स सर्वोनुपलब्धेरित्युच्यते? [2]मूढं प्रति व्यवहारः साध्यत इति चेत्, स यद्यभिधानलक्षणः, प्रवृत्त्यादिलक्षणो वा; तदा [3]तत्कारकस्य न प्रमाणत्वम्। तज्ज्ञापकत्वे त्वर्थान्तरसाध्यत्वप्रसंगः, तथा च न तादात्म्यं साध्यसाधनयोः। स्मृतिलक्षणोपि व्यवहारो यदि ज्ञाप्यते, तदा तदेव दूषणम्। अथ क्रियते, तदापि न प्रमाणत्वं, स्मृतिसाधनस्य प्रणिधानादेरपि प्रमाणत्वप्रसंगात्। अथ व्यवहारयोग्यता साध्यते। साप्यर्थादन्याऽनन्या वा? यद्यन्या, ततः कथं तत्स्वभावो हेतुः? अथानन्या, तथापि हेतुसिद्ध्यैव तत्सिद्धेर्व्यर्थमनुमानम्। यस्य हेतुसिद्धावप्यसिद्धिस्तस्य हेतुना तादात्म्यं न युक्तम्, धूमाग्निवत्। धर्म्यपेक्षया तादात्म्यमेवैकः प्रतिबन्धः स्यात्, धूमाग्निमतोपि धर्मिणः प्रदेशादेरेकात्मत्वात्।

सिद्धेपि साध्ये समारोपव्यवच्छेद एवानुमानेन क्रियत इति चेत्, कोऽयं समारोपव्यवच्छेदः? किमनुत्पत्तिः? प्रध्वंसो वा? तदसत्यतावधारणं वा? तद्विरोधिज्ञानं वा? अनुत्पत्तिप्रध्वंसौ तावन्न [4]प्रमाणफलम्। तदसत्यतावधारणं चेत्, तदसत्यतया सह नार्थस्य[5] तादात्म्यम्, तन्नार्थः समारोपासत्यतायाः साधनम्। अथ तद्विरोधिज्ञानं समारोपव्यवछेद उच्यते। तत्किं गृहीतार्थम्? उतागृहीतार्थम्? निर्विषयं वा? यदि गृहीतार्थम्, तदानुमानस्य गृहीतग्राहित्वेनाप्रामाण्यमेव प्राप्तम्, स्मृत्यन्तरवत्। सर्वस्मृतिसाधनानां प्रामाण्यप्रसंगो वा। अथागृहीतार्थम्, ततः कथं गृहीतागृहीतयोर्लिङ्गलिङ्गिनोस्तादात्म्यं घटपिशाचयोरिव? अथ निर्विषयम्, तदानुमानं न युक्तम्; न हि विषयानपेक्षं प्रामाण्यमस्ति "प्रामाण्यं वस्तुविषयं द्वयोः"—इत्यस्य विरोधश्च स्यात्। पारम्पर्येणापि वस्तुविषयत्वे लिङ्गलिङ्गिनिश्चययोरभिन्नविषयत्वादन्यतरानर्थक्यम्, धूमोऽयं धूमोऽयमित्येकार्थनिश्चययोरिव। तस्मान्न स्वभावः

---

१. अत एव = तादात्म्यसम्बन्धस्यासम्भवादेव।

२. मूढं प्रति—मूढः पृच्छति। कथमिह घटाभावः? उच्यते—नात्र घटोऽनुपलब्धेरिति व्यवहारः।

३. तत्कारकस्य—अभिधानप्रवृत्तिकारकस्य।

४. प्रमाणफलमिति। अनुपलब्धिरूपत्वादिति शेषः।

५. अर्थस्य = साधानस्वरूपस्यानुपलब्धिलक्षणस्यार्थस्येत्यर्थः।

स्वात्मनि हेतुर्नापि स्वभावानुपलब्धेः। नास्त्यत्र घट इति ज्ञानं च प्रत्यक्षफलमेवेति वक्ष्यामः।

व्यवहारेऽपि साध्ये न स्वभावो हेतुरर्थान्तरसाध्यत्वादित्युक्तम्। तस्मात्पूर्ववदादिभेदेनैव हेतोस्त्रैविध्यम्, अनुपलब्धिप्रकारास्तु पूर्ववदादिष्वेवान्तर्भवन्ति। विरुद्धव्याप्तोपलब्धेस्तु न परोक्तमुदाहरणं युक्तम्, ध्रुवभाविनोपि [1]घटाद्यसभागक्षणस्य हेत्वन्तरापेक्षित्वात्। किं त्विदमुदाहरणम्—न हेत्वन्तरानपेक्षो विनाशः कालभेदेनैव प्रतीयमानत्वादिति।

## ॐ सौगतस्य स्वभावहेतुसमर्थनम् ॐ

यदि स्वभावः स्वात्मनि न हेतुः कार्यमेवैको हेतुस्तर्हि प्राप्तोऽन्यस्य प्रतिबन्धाभावेनाहेतुत्वम्। तदुक्तम्—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमो दर्शनान्न न दर्शनात्॥

अवश्यम्भावनियमः कः? परस्यान्यथापरैः।
अर्थान्तरनिमित्ते वा धर्म्मे वाससि रागवत्॥ (प्र० वा० ३।३०,३१)

तस्मात्तन्मात्रसम्बन्धः स्वभावो भावमेव वा।
निवर्तयेत्कारणं वा कार्य्यमव्यभिचारतः॥ (प्र० वा० ३।२२)

स्वभावो निवर्त्तमानो भावं निवर्तयति, यथा—वृक्षः शिंशपां शाखादिमद्विशेषस्यैव तथा प्रसिद्धेः, स तस्य स्वभावः। स्वं च स्वभावं परित्यज्य कथं भावो भवेत्? कारणमपि निवर्तमानं कार्यं निवर्त्तयति, अन्यथा तदस्य कार्यमेव न स्यात्। सिद्धस्तु कार्यकारणभावः स्वभावं नियमयतीत्युभयथा स्वभावप्रतिबध्यादेव निवृत्तिः।

अन्यथैकनिवृत्त्याऽन्यविनिवृत्तिः कथं भवेत्।
नाऽश्ववानिति मर्त्त्येन न भाव्यं गोमतापि किम्॥

सन्निधानात्तथैकस्य कथमन्यस्य सन्निधिः।
गोमानित्येव मर्त्त्येन भाव्यमश्वमतापि किम्॥ (प्र० वा० १।२५-२६)

तस्मात्स्वभावप्रतिबन्धादेव हेतुः साध्यं गमयति। स च तादात्म्यलक्षण-

---

१. घटाद्यसभागक्षणस्य—घटादीनाम् असभागः = विसदृशो यः क्षणः = घटानन्तरभावी कपाललक्षणः, तस्येत्यर्थः।

स्तदुत्पत्तिलक्षणो वा। स एवा विनाभावो [1]दृष्टान्ताभ्यां प्रदर्श्यत इत्यतः स्वभावप्रतिबन्धाभावान्न कारणस्य, अकार्यकारणस्य वा हेतुत्त्वमिति।

## ❀ तत्खण्डनम् ❀

अत्रोच्यते—किं कार्यत्वेनाऽविनाभावित्वम्? उताविनाभावित्वेन कार्यत्वमिति? न तावत् कार्यत्त्वेनाविनाभावित्वम्; यस्मादरणिनिर्मन्थनकार्यत्वमग्नेरस्ति, न च तदविनाभावित्वम्; व्यभिचारात्। अग्निपाषाणाभिघाता-दिभ्योऽप्यग्नेरुत्पादात्। बीजोद्भवकन्दोद्भवकदल्यादिवद्विशिष्टस्याऽव्यभिचार इति चेत्, न; अशक्यनिश्चयत्त्वात्। न हि कश्चिदेवं निश्चेतुं शक्नोति—अरणिनिर्म्मन्थनजोऽग्निरीदृशोऽग्निः, पाषाणाभिघातजस्त्वीदृशः, सूर्यकान्तजश्चेदृश इति। न चाप्रतीयमानोपि विशेषोऽस्तीति शक्यं कल्पयितुम्, अतिप्रसंगात्। अथाऽविनाभावित्वेन कार्यत्त्वम्, तदसिद्धावप्यविनाभावित्त्वस्य सिद्धेः। इतरेतराश्रयत्त्वं वा—यावन्नाग्निकार्यत्त्वं धूमस्य सिद्ध्यति तावन्नाग्न्यविनाभावित्त्वम्, यावच्च नाग्न्यविनाभावित्वं न तावदग्निकार्यत्वमिति। न च कार्यकारणभाव एवाविनाभावः, कृतकत्वादेस्तदभावप्रसंगात्। किञ्च कस्यचित्प्राणिनः क्वचिदाहारविशेषेण वृद्ध्यादि दृष्टम्, न च कस्यचिद्वृध्यादिनाहारविशेषोऽनुमातुं शक्यते। मातुः क्षीरं वा शाल्योदनो वा, कोद्रवादीनां मांसकन्दफलादीनामन्यतमविशेषो वेति; सर्वत्र व्यभिचारात्। न चाहारविशेषकारितः शरीरविशेषः कश्चिद् अव्यभिचार्यस्ति, वर्णलावण्यादिविशेषाणां व्यभिचारात्। तन्न कार्य्यविशेषदर्शनेऽप्याहारविशेषानुमानम्।

## ❀ सौगतस्याशङ्का ❀

नैवाहारविशेषः शरीरविशेषस्यापि हेतुस्तथापि हि
अन्वयव्यतिरेकाद्यो यस्य दृष्टोऽनुवर्त्तकः।
स्वभावस्तस्य तद्धेतुरतो भिन्नान्न संभवः॥ (प्र० वा० १।३६)

न हि यस्य यमन्तरेण भावः स तस्य हेतुर्भवति।

## ❀ तन्निरासः ❀

यद्याहारो न हेतुः, स कस्मात् सर्वप्राणिभिः शरीरवृद्धिस्थित्याद्यर्थिभिरपेक्ष्यते? भवत्याहारस्तद्धेतुः किं त्वाहारविशेषो न हेतुरिति चेत्,

---

१. दृष्टान्ताभ्याम् = साधर्म्यवैधर्म्यरूपाभ्याम्।

तत्किमिदानीं सामान्यं हेतुः ? तथा च स्वकृतान्तयुक्तिविरोधस्ते दुर्न्निवारः। तस्मादाहारविशेष एव देहवृद्ध्यादिहेतुः। शास्त्रौषधादिविशेषश्च व्रणरोहणादिहेतुर्न च तेनाविनाभावः कार्य्यस्य गृह्यते तन्न कार्यत्वादव्यभिचारः।

यच्चोक्तम्—सकृदपि दर्शनाऽदर्शनाभ्यां कार्यकारणभावसिद्धिर्भवति, ततस्तत्प्रतिपत्तिर्न्नान्यथाऽन्वयव्यतिरेकयोर्निःशेषदर्शनादर्शनायत्तत्वादिति, तदयुक्तम्; निःशेषदर्शनादर्शनात्संभवेप्यन्वयव्यतिरेकग्रहणस्य प्रतिपादितत्वात्। क्वचिदयथार्थग्रहणेऽपि न सर्वत्र तथात्वम्, रूपादिग्रहणस्यापि क्वचिदयथार्थत्वे सर्वत्राऽयथार्थत्वप्रसंगात्। कार्य्यकारणभावस्यापि सकृद्दर्शनेऽपि कथं न व्यभिचाराशंका ? नन्वत्रोक्तम्,

धूमः कार्यं हुतभुजः कार्यधर्म्मानुवृत्तितः।
स भवंस्तदभावे तु हेतुमत्तां विलङ्घयेत्॥ (प्र० वा० १।३५)

## ❀ सकृद्दर्शनेऽपि कार्यकारणभावनिश्चयः ❀

येषामुपलम्भे तल्लक्षणमनुपलब्धं यदुपलभ्यते तत्रैकाभावेपि नोपलभ्यते तत्तस्य कार्यं तस्य च स्वकारणमन्तरेण भावे हेतुमत्तैव न स्यात् ततश्च—

नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः॥ (प्र० वा० १।३६)

इति, नैतदस्ति; यथा हि देहवृद्ध्यादिकार्यस्य हेतुविशेषान्तरात्तादृशस्यैव भवतो नाहेतुकत्त्वम्, तथा धूमस्यापीत्यनिवृत्तैव हेत्वन्तराशङ्का। किञ्चाग्निवत्तृणस्यापि सकृद्दर्शनादर्शनाभ्यां हेतुत्वनिश्चयान्न च तदभावे धूमो न भवति, तस्य घृतान्नकाष्ठादितोपि भावात्। दहनादपि केवलादभावात्। तृणाभावेपि काष्ठादितो धूमस्य भावान्न तृणहेतुत्त्वमिति चेत्। काष्ठाद्यभावेपि तृणादुत्पत्तेः काष्ठादिहेतुकत्वमपि न स्यात्। तृणकाष्ठादीनामहेतुत्वे [1]अग्निसहकारित्त्वमपि न स्याद्, अहेतूनां सहकारित्वविरोधात्। केवलोग्निश्च न धूमस्य हेतुरित्यहेतुक एव धूमः प्राप्तः। धूमविशेषस्यैव तृणं कारणन्न धूमस्येति चेत्, किं तृणकाष्ठादिजन्यविशेषेभ्योन्योऽप्यस्ति धूमो यस्याग्निरेव हेतुः स्यात् ? यथा—दृष्टसामग्री कार्येणाऽनुमीयत इति चेत्, न; अन्यथा सामग्रीदर्शनात्। यादृशी धूमस्य रसवत्यां सामग्री, न तादृश्यग्निहोत्रे। तथा क्वचित्काष्ठोपलक्षिता क्वचित्

---

१. अग्निसहकारित्वं धूमोत्पत्तावित्यर्थः।

तृणाद्युपलक्षिता, तथा देहवृद्ध्यादिहेतुसामग्री चाऽन्यथाऽन्यथा द्रष्टव्या। देशकालाद्यन्यतमवैलक्षण्येनापि सामग्रीवैलक्षण्यात्।

अथ यद्विशेषविशिष्टं कार्यं येन कारणेन व्याप्तं निश्चितम्, तद्विशेषविशिष्टमेव तस्य लिंगमिति, कथं तर्हि सकृद्दर्शनादेवेत्थं निश्चयो भवत्यग्निः सर्वविशेषसहितस्यापि धूमस्य व्यापकः, न तृणं काष्ठं वेति। बहुशोपि केचित्तृणाग्निभ्यामेव जन्यमानं धूमं पश्यन्ति। केचित्काष्ठाग्निभ्यामेवेति। तत्कुतोग्नेरेव व्यापकत्वनिश्चयः। किञ्च यथा सहकार्यन्तरोपेतेनाग्निनोत्पादितस्य धूमस्य न काष्ठाजन्यत्वेनाऽधूमत्त्वम्। तथा सहकार्यन्तरोपेतेन काष्ठेन तृणेन चोत्पादितस्य धूमस्य नाग्न्यजन्यत्वेनाधूमत्वं भविष्यति। ततश्च यदुक्तम्—'[1]शक्रमूर्द्धादिरपि यदि धूमं जनयति ततोग्निरेव सः। अथासावनग्निस्ततोऽसौ धूमं कथं जनयतीति? तदपास्तम्, अथ तृणजनितोपि यो धूमविशेषः स तदभावे न भवत्येवेत्यव्यभिचारः। एवं तर्ह्यग्निजन्योपि धूमविशेषोग्निं मा स्म व्यभिचरेदन्यस्तु धूमविशेषो व्यभिचरिष्यति। तयोश्च व्यभिचार्यव्यभिचारिधूमविशेषयोर्विवेको न लक्ष्यते तदा कथं धूमेनाऽग्निरनुमीयते, देहपुष्ट्याहारविशेषवत्? ननु चानग्निजन्यो धूमविशेषोऽतृणजन्यवन्न क्वचिदुपलभ्यते, ततोऽनुपलम्भादेवासौ नास्तीति कथं नाव्यभिचारः? क्वचिन्नोपलभ्यत इत्येतदसर्वविदाऽवगन्तु कथं पार्यते? यथा तार्णधूमोपलम्भकालेऽनुपलभ्यमानोपि काष्ठादिजनितो धूमः कालान्तरेणोपलम्भादपि न नास्ति घृतनारिकेलद्राक्षादिजन्यश्च धूमः कैश्चित् किरातादिभिः सर्व्वदानुपलम्भेपि न नास्ति, अन्यैरन्यत्रोपलम्भात्, तथाऽनग्निजन्योपि धूमः कैश्चित् क्वचिदुपलप्स्यते अस्मदादिभिर्वा कदाचिदिति। तंन्नाग्निजन्यस्वभाव एव धूमः। किं च चिरनिवृत्तेप्यग्नौ गोपालघटिकादौ धूमजन्यस्वभावस्यापि धूमस्योपलम्भात् पारम्पर्येण वा देहादयोऽप्यग्निजन्या इति। नाप्यग्निजन्यो धूम एव, भस्मादेरप्यग्निजन्यत्त्वात्।

नापि धूमजनकस्वभाव एवाग्निः, अयोगोलकाङ्गाराद्यवस्थायां धूमाजनकस्याप्यग्नित्वात्। नापि धूमजनकोग्निरेव, कष्ठादेरप्यग्नित्वप्रसङ्गात्। न च क्षणिकवादिमते कार्यकारणभावः सिद्ध्यतीत्यभिधास्यामः।

## ❀ धूमाग्न्योर्व्याप्यव्यापकभावः ❀

अपि च धूमेनाग्निः किमतीत एव ज्ञाप्यते? किं वा तत्समानकालः?

---

१. शक्रमूर्धा = वल्मीकः अग्निस्वभावः। शक्रस्य मूर्द्धा यद्यग्निरेव सः। अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेत्॥ (प्र० वा० १।३७)

अथ प्राप्योऽग्निरिति ? यद्यतीत एव ज्ञाप्यते, तदा व्यर्थमनुमानम्, न ह्यतीतेन कश्चिदर्थः साध्यते। [1]"अर्थक्रियार्थी सर्व्वः प्रमाणमप्रमाणं चेत्यादिविरोधः, न ह्याभ्याम्"—इत्यविरोधश्चेत्यतो नातीतज्ञापकं प्रमाणं युक्तम्। एतेन धूमसमानकालाग्न्यनुमानं प्रत्युक्तम्। धूमसमानकालस्याप्यग्नेरनवस्थायित्वेन प्रवृत्तिप्राप्त्योरविषयत्त्वात्। क्षणभङ्गवादिमते तु—ज्ञानसमानकालार्थस्य कस्यापि प्रवृत्तिप्राप्तिविषत्वं नास्तीति सर्वस्यापि वर्त्तमानाऽर्थज्ञापकस्याप्रामाण्यं प्राप्तम्। न वा समानकालयोः कार्यकारणभावोऽस्त्यकार्यं चार्थान्तरस्य लिङ्गं त्वया नैवेष्टम्। प्राप्यस्याप्यकारणत्वादेवाननुमेयत्त्वम्। अथ तज्जातीयस्य तत्सन्तानस्य वा कारणत्त्वात्, प्राप्त्यार्थस्यापि कारणत्वमुच्यते; गौणं तर्हि कारणं नाऽनुमेयं युक्तम्, न हि देवदत्तकृतं काव्यशास्त्रादिकार्यं तत्पुत्रपौत्रादिकमनुमापयति।

किं चाग्निकार्यं भस्मापि भवति। न च तत्समानकालं प्राप्यं वाग्निं गमयति, व्यभिचारात्। एतेनैतदपि निरस्तम्, यदाह—

[2]एकसामग्र्यधीनस्य रूपादेरसतो गतिः।
हेतुधर्म्मानुमानेन धूमेन्धनविकारवत्॥

यथेन्धनविकारोपादानसहकार्यग्निना जनितो धूमस्तथाभूतमग्निमनुमापयन्निन्धनविकारमप्यनुमापयति। तथा रूपसहकारिणो रसादुत्पन्नो रसस्तथाभूतमेव रसमनुमापयन् रूपमप्यनुमापयतीति। एतेन पिपीलिकोत्सरणमत्स्यविकारादेर्वर्षाद्यनुमानं व्याख्यातम्, तत्रापि भूतपरिणाम एव कश्चिद्वर्षाहेतुः पिपीलिकासंक्षोभादिहेतुरिति। एवं तर्हि पिपीलिकोत्सरणादिसमानकालैव वृष्टिः स्यादेकसामग्र्यधीनत्वात्, रूपरसादिवत्, ततश्च प्रत्यक्षैव वृष्टिस्तल्लिङ्गवत्तदानीं वृष्टेरनुपलम्भकारणाभावात् पिपीलिकोत्सरणादिलिङ्गेन च भविष्यन्तीमेव वृष्टिमनुमिन्वन्त्यनुमातारस्तयोश्चैकसामग्र्यधीनत्वमयुक्तम्। न चैकसामग्र्यधीनत्वेऽप्यव्यभिचारः कार्यकारणभावो वास्ति यमलकयोरपि एकसामग्र्या-

---

१. तथा च कीर्तिकीर्तितम्—"अर्थक्रियार्थी हि सर्वः प्रेक्षावान् प्रमाणमप्रमाणं वाऽन्वेषते (हे० बि० पृ० ५३)।

२. प्र० वा० ३।८। एकसामग्र्यधीनस्य = एकसामग्र्यधीनत्वादित्यर्थः, पञ्चम्यर्थे षष्ठ्यभ्युपगमात्। एकसामग्र्यधीनत्वमित्युद्धरणाकारं कमलशीलस्य (त० सं० पृ० ४१७) लेखकप्रमादकृतमिति मन्ये। हेतुधर्मानुमानेन = अन्वयव्यतिरेकानुगतकारणधर्मानुमानेनेत्यर्थः।

धीनत्त्वेन तथा भावप्रसंगात्। अपि चार्कस्योदयेनाऽहेतुरस्वात्मभूतश्च भविष्यन्नस्तमयोऽनुमीयते। चन्द्रस्य शुक्लपक्षे प्रतिदिनं वृद्धिः, कृष्णपक्षे चाऽपचयन्त्यस्तथा देहघटानां विनाशः, क्षणसंज्ञको विसदृशक्षणोत्पादाख्यो वा। अरिष्टाभिज्ञैश्च कालसंख्ययापि मृत्युरनुमीयते। ज्योतिःशास्त्रज्ञैश्च कस्यचिन्निमित्तस्य दर्शनेन सोमग्रहादिरित्येवमनुमानं तादात्म्यतदुत्पत्ति-प्रतिबन्धाभावेपि न व्यभिचरति कदाचिद्व्यभिचरिष्यतीत्याशंकायां सर्व्वत्रानाश्वासप्रसङ्ग इति। न च निष्पन्नाऽनिष्पन्नयोस्तादात्म्यं नाप्यनिष्पन्ना-दुत्पत्तिस्तत्र भविष्यदनुमापकस्य स्वभावे कार्ये वान्तर्भावः। भविष्यत्यर्थे प्रमाणाभाव इति ब्रुवत एभिरेवानुमानैर्विरोधः।

किं चेष्टानिष्टसाधनयोः प्राप्तिपरिहारार्था प्रवृत्तिः प्रेक्षावतां न स्यात्। न हि धर्मादिफलानामवश्यंभावनिश्चये तदर्थे सिद्धस्य धनदारादेरर्थस्य त्यागो युक्तः। त्यागे ह्यप्रेक्षावद्भिरविशेषः स्यादिति। अपरस्त्वाह—यदार्थान्तर-व्यापकं तत्कारणम्, व्याप्यं व कार्यं, तेन ययोः परस्परं व्याप्यव्यापकभावस्त-योरेककालयोर्भिन्नकालयोर्वा परस्परं कार्यकारणभावः, यत्र तु विषमव्याप्ति-रग्निधूमादिवत्, तत्र कार्यकारणभावोऽपि न; परस्परं व्याप्यस्यैव कार्यत्वादिति, नैतदस्ति; स्वपरिभाषामात्रत्वात्। न हि लोके शास्त्रे वा क्वचिद्व्यापकत्व-मात्रेण सहभाविनोऽनागतस्य वा कस्यापि कारणत्वं प्रसिद्धम्, किं तर्हि? यद्यस्य जनकं तत्तस्य कारणमिति। न च परस्परं जन्यजनकभावोऽस्ति; इतरेतराऽसिद्धत्त्वेनोभयोरप्यनुत्पादप्रसङ्गात्। असिद्धस्यापि जनकत्वे स्वात्म-जनकत्वमपि स्याद्, व्यापकत्वाऽविशेषात्। तस्माद्यद्व्यापारानन्तरं यदुत्पद्यते, तत्तस्य कारणम्।

यच्चोक्तम्—"सुपुप्तस्य चिरमुत्थितस्य ये विकल्पास्तेषां पूर्वाभ्यासादुत्पादो न स्यादनन्तरभावित्वाभावादिति" (प्र० वा० अ० पृ० २७), तत्र प्रणिधानाद्युपकृतात् संस्कारात्तदुत्पाद इति वक्ष्यामः। भवतां भवत्वयं दोषः, संस्कारादेरपि स्थिरस्याऽनभ्युपगमात्।

## ❋ प्रज्ञाकरस्य कार्यकारणभावः ❋

यत्पुनरेतत्—"न च व्यापार उत्पादश्च स्वरूपादन्यः, ततः स्वरूपात्स्वरूप-मिति प्राप्तम्" (प्र० वा० अ० पृ० २७) न; वादान्तरत्त्वात्, इदमत्र व्यावृतमिदमस्मादुत्पन्नमित्यस्ति तावदियं लौकिकपरीक्षकाणां प्रतिपत्तिः, स च व्यापार उत्पादश्चार्थान्तरमनर्थान्तरं चेति वादान्तरमेतत्।

नन्वनन्तरभावित्वेन कारणत्वे त्रैलोक्यस्याप्यनन्तरभाविनः कारणत्वं स्यात्। न च सम्बन्धः कश्चिन्नियामकोऽस्ति, भिन्नकालत्वात्। न खलु कारणकाले कार्यं स्वरूपतोऽस्ति, "नापि कार्यकाले कारणं पूर्व्वकमपि स्वरूपतोस्ति। अविनाभावित्वमात्रं तु भाविन्यपि विद्यते। अथ दृष्टं भूतं वा यत्, तद्व्यापकं सत्कारणं न तु भावीति, अत्रोच्यते—

दृष्टस्य स्वरूपेण व्यापकत्वं प्रतीयते।
आरोपितेन रूपेण भाविनोपि भवेदिदम् ॥२०७॥

दृश्यमानं हि न तावता व्यापकं व्याप्यस्य तदानीमप्रतीतेः। यदा च व्याप्यप्रतीतिस्तदा तद्भाविभूतरूपेण व्यापकमन्यथा भाविस्वरूपाग्रहणे व्यापिता स्यात्। अथ येनैव स्वरूपेण दृष्टं तेनैव व्यापकत्वं प्रतीयते, न भाविरूपेणेति, तदसद्; यतः—

भाविरूपाप्रतीतौ न व्यापकत्वं प्रतीयते।
प्रादेशिकी न हि व्याप्तिरव्याप्तिः सा तथा भवेत् ॥२०८॥

भूतभविष्यत्कालव्यापित्वेन हि प्रतीयमानं कारणम्, नाऽन्यथा। सा च व्याप्तिर्दृष्टस्य द्रक्ष्यमाणस्यापि समाना, द्रक्ष्यमाणस्य कथं कारणत्वम्? दृष्टस्यापि तदानीमसत्वात्। कथमिति समानम्। सत्त्वात् चेद्, द्रक्ष्यमाणस्यापि सा। [1]तदा नेत्येदपि समानम्। पूर्वता चेत्, कः पूर्वपरयोः स्वभावे विशेषः? द्वयमप्यारोपिताकारेण गृह्यते नापरेणेति न भेदः। अथैकं पूर्व्वरूपतया दृष्टमारोप्यते, अपरं द्रक्ष्यमाणतया पररूपतया च तेन द्वयोरपि नास्ति कारणतेति;

अन्योऽन्यमविनाभावो द्वयोरपि तयोः समः।
अवान्तरविभागस्तु तत्र नः क्वोपयोगवान् ॥२०९॥

येन विना यन्न भवति, तत् तस्य कारणम्। यथा च कारणस्य पूर्वभावं विना कार्यं न भवति, तथाऽवश्यंभाविनः कार्यस्य परभावं विना न कारणं भवतीति समानं कार्यकारणनिबन्धनम्।

समानत्वान्निमित्तस्य कार्यकारणता द्वयोः।
व्यापित्वव्यतिरेकस्य परलोकानुमाप्यतः ॥२१०॥

न खलु व्यापितां व्यतिरेकं च व्युदस्याऽपरमत्र जगति निबन्धनमुपलभा-

१. तदा = व्याप्यकाले।

महे। तच्च कारणवदवश्यंभाविनः कार्यस्याप्यस्ति तेनोभयोः परस्परकार्य-कारणभाव इति" (प्र० वा० अ० पृ० २७–२८)।

## ❀ तन्निरासः ❀

तदेतदसच्छास्त्राभ्यासविवर्द्धितमहामोहविचेष्टितम्, न हि कश्चिदनागताभ्यां नष्टाभ्यां वा पितृभ्यां पुत्रो जन्यत इत्यविनष्टधीः प्रतिपद्यते नापि पितृवत्तत्कालवर्तिनामन्येषामपि कारणत्वं पित्रोरेव, तेन पुत्रेण सह जन्यजनकसम्बन्धोपलम्भात्। पित्राद्युपलम्भवत्सम्बन्धोपलम्भस्यापि विसंवादाभावान्न भ्रान्तत्वम्। स च सम्बन्धः किमर्थान्तरम्? उताऽनर्थान्तरमिति? वादान्तरमेतत्। कार्यकारणभावस्तावद् त्वयापि इष्टः। स च व्यवहर्तृप्रसिद्ध्या, न स्वपरिभाषामात्रेण व्यवहर्त्तारश्च विद्यमानस्यैव कारणत्वं प्रतिपद्यन्ते; यतः कार्यार्थिनः कारणेष्वनुत्पन्नेषु नष्टेषु च कार्यं नोत्पद्यत इति मन्यमानाः कारणान्युपाददते। यदि पुनरतीतानागतान्यपि कारणानि कार्यं जनयन्ति, तत्किमर्थं कार्यार्थिनः कारणानि वर्त्तमानीकर्तुं प्रवर्तन्ते? तस्माद्वर्त्तमानान्येव कारणानि कार्यमुत्पादयन्ति। कार्योत्पद्यमानताकाले सन्त्येव कारणानि, कार्यकाले तु भवन्तु वा मा भूवन्निति। क्षणिकत्वासिद्धेः कार्यकालेपि कारणावस्थाने नास्ति विरोधः।

## ❀ अवर्तमानस्य कारणत्वे दोषः ❀

किं चानागतस्य कारणत्वे सर्वदा ततः कार्योत्पादप्रसङ्ग, तद्रूपस्य प्राक् सर्व्वदाऽविशेषात्। नष्टस्यापि जनकत्वे नाशादूर्ध्वं ततः सर्व्वदा कार्योत्पादप्रसङ्गः, तद्रूपाविशेषात्, तद्रूपेणैव च शक्तत्वात्, शक्तस्य च [1]क्षेपायोगात्। सहकार्यपेक्षस्य जनकत्वं चेत्, न; अतीताऽनागतयोरनुपकार्यत्वेन सहकारिवैयर्थ्यात्, उपकार्यत्वे चोपकारस्योपकार्य्यादभिन्नत्वात्तयोः[2] सहकारिभ्य उत्पादेन वर्त्तमानताप्रसङ्गः। किं चार्थक्रियालक्षणत्वाद्वस्तुन इत्यभ्युपगमादतीतानागतयोर्जनकत्वेन सत्वम्, सत्वेन च क्षणिकत्वं प्रसक्तम्, ततश्च क्षणमात्रमतीतानागतता च स्यात्, क्षणिकत्वाद्वर्त्तमानतावत्। किं चानागतावस्थायां

१. क्षेपः = परिबिलम्बः, उक्तं चैतत्तत्वसङ्ग्रहे—
कार्याणि विलम्बन्ते कारणासन्निधानतः।
समर्थहेतुसद्भावे क्षेपस्तेषां हि किंकृतः॥ (त० सं० का० ३९५)

२. तयोः = उपकाराभिन्नयोरतीतानगतयोः।

कार्यं कृत्वा पुनर्वर्तमानावस्थायां करोतीत्येकस्य कर्मकर्तृत्वं स्यात्, ततश्चा-क्षणिकत्वाभ्युपगमः स्यादेकस्य कर्मकर्तृत्वमेव ह्यऽक्षणिकत्वम्।

यच्चेदमुक्तम्—भूतभविष्यत्कालव्यापित्वेन हि प्रतीयमानं कारणम्, नान्यथेति, तच्च न; न ह्येवं कश्चित् कारणं प्रत्येति। स्वात्मनोपि कारणत्व-प्रसङ्गश्चोक्तः। किं च कारणकार्यभावप्रतिपत्तिमन्तरेणाविनाभावो न सिद्ध्यती-त्याह कीर्तिः, त्वया पुनर्विपरीतं कल्पितं तथा च यद्यादौ व्याप्यव्यापकभावः प्रतीयते, न तर्हि कार्यकारणभावप्रतीतिनिबन्धनाऽविनाभावप्रतीतिः। अथ नादावऽविनाभावः प्रतीयते न तर्हि व्यापित्वव्यतिरेकस्य कारणत्वव्यवस्थापने निमित्तत्वमिति।

यत्पुनरेतत्—कार्यस्य परभावं विना कारणं न भवतीति, तदयुक्तम्; परभूते कार्येऽनुत्पन्नेप्युत्पन्नं कारणं कथं तेन विना न भूतम्? न हि यदुत्पद्य-मानं यस्य सत्तां नापेक्षते तत् तस्यापि कारणत्वं युक्तम्। अग्नेरपि हि न व्यापकत्वमात्रेण पूर्वभावमात्रेण वा कारणत्वम्, किं तु कारणान्तरेषु सत्स्वपि यावत्तत्राग्निर्न भवति तावत्तत्र धूमो नोत्पद्यत इत्यग्नेः सामर्थ्यावगतिः। न चैवमनागतस्य सामर्थ्यं गम्यते। व्यापकत्वमात्रेण वृक्षोपि शिंशपाकारणं स्यात्। व्यतिरिक्तत्वे सतीति विशेषणं न कर्तव्यम्। स्वात्मनोपि यद्व्यापकं तत्कारणमेवास्तु। स्वात्मनः कारणं लौकिकपरीक्षकाणामप्रसिद्धत्वान्नेष्यत इति चेत्, अनागताद्यपि तर्हि नेष्टव्यम्; न हि तत्रापि कारणत्वप्रसिद्धिरस्ति। तस्मान्नानागतमपि कारणं तत्रानागतस्य परलोकादेरनुमानं कार्यानुमाने-न्तर्भवति।

## ❀ तादात्म्याभावेऽपि गम्यगमकभावः ❀

नापि वृक्षत्वशिंशपात्वादेस्तादात्म्यमस्त्युक्तन्यायात्। अथ च गम्यगमक-भावोऽस्ति। किं च सामान्ययोर्गम्यगमकभावः, न च तयोस्तादात्म्यम्, तादात्म्ये हि शिंशपात्वकृतकत्वादिनिश्चय एव वृक्षत्वानित्यत्वादिनिश्चयः स्यात्, न हि भिन्नयोगक्षेमयोस्तादात्यं युक्तम्। वस्तुनि च तादात्म्येपि नाऽनुमानविषयत्वम्, लिङ्गलिङ्गिविकल्पयोस्तत्रासम्भवात्, सम्भवे वा लिङ्गनिश्चय एव लिङ्गिनिश्चयः स्यात्, अभिन्नविषयत्वात्। येन च प्रकारेण भिन्नविषयत्वम्, तेन तादात्म्यमपि नास्तीत्यनुमानं न स्यात्।

किं च वृक्षशिंशपयोस्तादात्म्याविशेषाद्विपर्ययेऽपि गम्यगमकभावः स्यात्। न ह्यंशेन तादात्म्यम्। तादात्म्याविशेषेपि व्यापकांशस्यैव गम्यत्वम्, व्याप्यांश-

स्यानुगमकत्वमेवेति चेत्, न; निरंशत्वादेकात्मनः, सांशत्वे वा तादात्म्य-विरोधः। एकं च तद्वस्तु व्यापकं वा स्याद्व्याप्यं वेति। एतेन वृक्षविशेषत्वं वृक्षस्वभावत्वं वा तन्मात्रानुबन्धित्वं वा शिंशपायाः, न तु [1]तद्विशेषत्वं तत्स्वभावत्वं वा तन्मात्रानुबन्धित्वं वा वृक्षस्येति नियमः प्रत्युक्तः। वृक्षो व्यभिचरति न शिंशपेति चेत्, तादात्म्येपि यदि व्यभिचारः, शिंशपा न व्यभिचरिष्यतीति का प्रत्याशा? अथ वृक्षोऽशिंशपास्वभावोऽस्तीति तेनासौ व्यभिचारी, अवृक्षस्वभावा शिंशपा नास्तीति किं निःशेषदर्शनं तेऽस्ति? सापि हि वृक्षवदुभयस्वभावा[2] शंक्येत। यथा क्वचिद्देशे नीलोत्पलमेवास्ति ततस्तद्देशजैः सर्व्वैरप्यन्यादृशोत्पलादर्शनेन नीलस्वभावमेवोत्पलमिति व्यवस्थापितम्, न तथैव भवति। तस्मात् "कार्यकारणभावाद्वा स्वभावाद्वा" (प्र० वा० ३।३०) इत्याद्ययुक्तमेव। तथा [3]"अन्यथैकनिवृत्त्या"—इत्याद्यपि न युक्तम्, व्यापकनिवृत्तौ हि व्याप्यनिवृत्तिर्व्याप्यसन्निधानाच्च व्यापकस्य सन्निधिर्भवति। न च गवाश्वादीनां व्याप्यव्यापकभावोऽस्ति। अथ गवाश्वादिवद् भेदे सति न केषाञ्चिद्व्याप्यव्यापकभावः प्राप्नोतीत्युच्यते, तादात्म्ये सत्यपि तर्हि नीलोत्पलत्वादिवन्न क्वचिदपि [4]स्यात्। किं च भेदे सति गवाश्वादिवदग्निधूमादीनां कार्यकारणभावोऽपि न स्यात्। अर्थान्तरत्वाविशेषेपीत्थं स्वभावेन नियतं वस्तु किञ्चिदेव कस्यचिद्व्यापकम्, न सर्व्वं सर्वस्येत्यलं प्रसङ्गेन। ततसिद्धमेतदन्वयव्यतिरेक्यादिग्रहणं पराभिप्रेतत्रैविध्यनिषेधार्थन्न तु कार्यकारणादिभेदनिषेधार्थमिति।

## ॐ कारणात् कार्यानुमाने शङ्का तन्निरासश्च ॐ

कथं पुनः कारणेन कार्यमनुमीयते? न ह्यवश्यं हेतवः फलवन्तो भवन्ति, अन्तराले प्रतिबन्धवैकल्यसम्भवात्। सामग्रीकालेऽपि नाऽनुमानम्, लिङ्गदर्शनानन्तरमेव कार्यनिष्पत्तेः तदा न कार्यं प्रत्यक्षमेव स्यात्। न वाऽप्रतिबन्धसामग्रीविशिष्टं कारणं निश्चेतुं शक्यते, न चाऽनिश्चितं लिङ्गं सिद्ध्यङ्गमिति। अत्रोच्यते—यत्तावन्नावश्यं हेतवः फलवन्त इति, तन्न;

---

१. तद्विशेषत्वम् = शिंशपाविशेषत्वमेवमग्रेऽपि।

२. उभयस्वभावा = वृक्षावृक्षस्वभावा।

३. अन्यथैकनिवृत्त्याऽन्यविनिवृत्तिः कथं भवेत्।
नास्त्यश्ववानिति मर्त्येन न भाव्यं गोमताऽपि किम्॥ (प्र० वा० १।२५)

४. स्यादिति व्याप्यव्यापकभाव इत्यादिः।

केषाञ्चिदवश्यफलत्त्वात्। न खलु सर्व्वकारणानां कार्यानुमापकत्त्वं ब्रूमः, किं तर्हि? यदेव कारणं यथाविशिष्टं यत् कार्यं न व्यभिचरति, तेनैव तथाविशिष्टं तत्कार्यमनुमीयते, यथा—मेघविशेषज्ञा मेघेन विशिष्टेन वृष्टिमनुमिन्वन्ति। न चाऽविशिष्टस्य व्यभिचाराद्विशिष्टस्यापि व्यभिचारः, अतिप्रसंगात्। किं च तदभ्यासादरप्रत्ययैस्तत्कार्यस्य संस्कारस्यानुमानम्, तत्संस्कारेण वायुपि निश्चिते भाविनी स्मृतिरनुमीयते, हिंसादिभिश्चाधर्म्मोत्पत्तिर्विशिष्टेन परस्य शरीरदाहच्छेदादिना दुःखोत्पत्तिरित्येवमन्यत्रापि कारणेन कार्यानुमानमूह्यम्। यत्पुनरेतत्—

[1]हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते।
अर्थान्तरानपेक्षत्वात् स स्वभावोऽनुवर्णितः॥ इति।

तद्व्यामूढभाषितम्, कार्योत्पादो हि कार्यधर्मः, स कथं हेतुस्वभावः स्यात्? न हि हेतुकार्ययोस्तादात्म्यं युक्तम्, कार्योत्पादनयोग्यता त्वसमग्रादपि हेतोरनुमीयते। कार्याव्यभिचारिता समग्रस्यैवेति चेत्, सावश्यं तर्हि कार्यमप्यनुमापयतीति सिद्धं कारणेन कार्यानुमानम्। नदीपूरादिकार्येण भूतवर्षादिकरणानुमानम्, पिपीलिकाण्डसंचरणादिविशेषेण भविष्यद्वर्षानुमानमित्येवमाद्यकार्यकारणानुमानम्।

## ❀ पूर्ववदिति सूत्रस्य व्याख्यान्तरम् ❀

अथवा पूर्ववदित्यकारणेनापि पूर्वनिष्पन्नेनोत्तरकालभाविनोऽनुमानम्। तद्विपर्ययेणाऽनुमानं तु शेषवदित्युच्यते। [2]द्वयोरेकः कालः सामान्यम्, तेन दृष्टं सामान्यतोदृष्टं लिङ्गसमानकालत्वेन दृष्टमित्यर्थः। एतस्मिन्पक्षे पिपीलिकादिना वर्षानुमानं पूर्ववदेव, सामान्यतोदृष्टोदाहरणं तु रूपरसाद्यनुमानं कृतकत्वानित्यत्वाद्यनुमानं वेति।

अथवा पूर्वं निष्पन्नमनुमेयं यस्यास्ति, तत्पूर्ववत्, यथा—नदीपूरदर्शनादभूतवृष्टिरित्यनुमानम्। पिपीलिकादिना वर्षानुमानं तु शेषवत्। सामान्यतोदृष्टं तु [3]तदेवेति। केवलान्वय्यादिभेदोपि पूर्ववदादेरेवाऽर्थ इति व्याख्यातम्। तस्येदानीं लक्षणोदाहरणाभ्यां स्वरूपप्रकटनार्थमुपन्यासः।

---

१. प्र० वा० ३.६।
२. सामान्यतोदृष्टं व्याचष्टे—द्वयोरिति। लिङ्गलिङ्गिनोरित्यर्थः।
३. तदेव = रूपरसाद्यनुमानम्।

तत्र पञ्चरूपोऽन्वयव्यतिरेकी, रूपाणि तु—(१) पक्षधर्मत्वम्, (२) सपक्षे सत्वम्, (३) विपक्षाद् व्यावृत्तिः, (४) अबाधितविषयत्वम्, (५) असत्प्रतिपक्षत्वं चेति। तत्र साध्यधर्मविशिष्टो धर्मी पक्षः, तत्र व्याप्यवृत्तित्वं हेतोः पक्षधर्मत्वम्। साध्यसमानधर्मा धर्मी सपक्षः, तत्र सर्वस्मिन्नेकदेशे वा हेतोर्वृत्तिः सपक्षे सत्त्वम्। साध्यव्यावृत्तधर्मा धर्मी विपक्षः, तत्र सर्वस्मिन् विपक्षे हेतोरवृत्तिर्विपक्षाद् व्यावृत्तिः। प्रमाणाविरोधिनि प्रतिज्ञार्थे हेतोर्वृत्तिरबाधितविषयत्वम्। साध्यतद्विपरीतयोः साधनस्यात्रिरूपत्वमसत्प्रतिपक्षत्वम्। स द्विविधः—सपक्षवृत्तिभेदात्—सपक्षव्यापकः, सपक्षैकदेशवृत्तिश्चेति। तद्यथा—अनित्यः शब्दः कार्यत्वादिति सपक्षव्यापकः। सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादिति सपक्षैकदेशवृत्तिः। पक्षव्यापकः, सपक्षवृत्तिः, अविद्यमानविपक्षः, केवलान्वयी। स पूर्ववद् द्विविधः।

---

## ❀ पञ्चरूपनिरूपणम् ❀

तत्र पञ्चरूपोऽन्वयव्यतिरेकी, रूपाणि [1]तु—(१) पक्षधर्मत्वम्, (२) सपक्षे सत्वम्, (३) विपक्षाद् व्यावृत्तिः, (४) अबाधितविषयत्वम्, (५) असत्प्रतिपक्षत्वं चेति। तत्र साध्यधर्मविशिष्टो धर्मी पक्षः, तत्र व्याप्यवृत्तित्वं हेतोः पक्षधर्मत्वम्। तत्र तस्मिन् पक्षे व्याप्य वर्तते, न तु पक्षैकदेशे, स व्याप्यवृत्तिः सपक्षव्यापक इत्यर्थः। साध्यसमानधर्मा धर्मी सपक्षः, तस्मिन् सपक्षे सर्व्वस्मिन्नेकदेशेन वा हेतोः वृत्तिः सपक्षे सत्त्वम्। साध्यव्यावृत्तधर्मा धर्मी विपक्षः, तत्र सर्व्वस्मिन्विपक्षे हेतोरवृत्ति र्विपक्षाद्व्यावृत्तिः। प्रमाणाऽविरोधिनि प्रतिज्ञार्थे हेतोर्वृत्तिरबाधितविषयत्वम्। साध्यतद्विपरीतयोः साधनस्यात्रिरूपत्त्वमसत्प्रतिपक्षत्त्वम्। स द्विविधः। सोऽन्वयव्यतिरेकी द्विविधः—[2]सपक्षवृत्तिभेदात्। तद्यथा—अनित्यः शब्दः कार्यत्वादिति सपक्षव्यापकः, सामान्यवत्त्वे सत्यस्मदाहिबाह्येन्द्रियग्राह्यत्वादिति सपक्षैकदेशवृत्तिरिति। पक्षव्यापकः सपक्षवृत्तिरविद्यमानविपक्षः केवलान्वयी, स पूर्व्ववद् द्विविधः,

---

१. तुशब्देन पराभिमतं त्रैरूप्यं व्यपाकरोतीति जयसिंहसूरिः। तुशब्दो वाक्यालङ्कारार्थ इत्यपरार्कदेवः। वयं तु सौगतसम्मतेभ्योऽनुमेयसत्वात्मकपक्षसत्त्वादिभ्यो रूपेभ्यः पक्षव्यापकत्वलक्षणपक्षसत्त्वादीनां स्वाभिमतरूपाणां वैलक्षण्यमवद्योतयितुं तुशब्दं जुगुम्फेति ब्रूमः।

२. सपक्षवृत्तिभेदात् = सपक्षतदेकदेशवृत्तिभेदादित्यर्थः।

**तद्यथा— विवादास्पदीभूतान्यदृष्टादीनि कस्यचित्प्रत्यक्षाणि, प्रमेयत्वात्, करतलामलकवदिति सपक्षव्यापकः। सैव प्रतिज्ञा, मीमांसकानामप्रत्यक्षत्वात्, अस्मत्सुखादिवदिति सपक्षैकदेशवृत्तिः।**

अन्वयव्यतिरेकिवत्सपक्षवृत्तिभेदाद् द्विविध इत्यर्थः। तद्यथा—विवादास्पदीभूतान्यदृष्टादीनि, कस्यचित्प्रत्यक्षाणि प्रमेयत्वात्करतलामलकवदित्ययं सपक्षव्यापको हेतुः। तस्मिन्नेव प्रतिज्ञार्थे मीमांसकानामप्रत्यक्षत्वादस्मत्सुखादिवदित्ययं हेतुः सपक्षैकदेशवृत्तिरिति।

## ❀ केवलान्वयिन्याशङ्का ❀

ननु च व्यतिरेकाभावेऽस्याविनाभाव एव न स्यात्। तेन विना न भवतीत्ययमेव हि व्यतिरेकः। साध्याभावो हि विपक्षः, तत्रावश्यं साधनस्याऽसत्त्वं ख्यापनीयम्, अन्यथा संदिग्धानैकान्तिकत्वं स्यात्। अथ साध्याभावस्य खपुष्पादेर्निःस्वभावत्वादधिकरणाऽपादानादिभावोऽनुपपन्नस्तेन हेतोर्न तत्र सत्त्वं ततो निवृत्तिर्वेति तत्किमिदानीं वृत्तिरस्तु सापि नेति चेत्, न; तत्किमिदानीं मूकेन भवितव्यम्? तदाह—

निवृत्तिर्यदि तस्मिन्न हेतोर्वृत्तिः किमिष्यते।
सापि न प्रतिषेधोऽयं निवृत्तिः किन्निषिध्यते ॥(प्र०वा० ४।२२४)
विधानं प्रतिषेधं च मुक्त्वा शाब्दोऽस्ति नाऽपरः।
व्यवहारः स चाऽसत्सु नेति प्राप्ताऽत्र मूकता ॥(प्र०वा० ४।२२५)
सतां च न निषेधोऽस्ति सोऽसत्सु च न विद्यते।
जगत्यनेन न्यायेन नञर्थः प्रलयं गतः ॥(प्र०वा० ४।२२६)
तस्माद् वैधर्म्यदृष्टान्तेनेष्टोऽवश्यमिहाश्रयः।
तदभावे च तन्नेति वचनादपि तद्गतेः ॥

तस्मान्न केवलान्वयी हेतुरस्तीति।

## ❀ तत्समाधानम् ❀

तदेतदयुक्तम्—यत्तावद्व्यतिरेकाभावेऽविनाभावो न स्यादिति, तन्न; व्याप्यव्यापकभावो ह्यविनाभाव उच्यते। स च केवलाऽन्वयिनोऽप्यस्ति। शब्दव्युत्पत्त्यसम्भवमात्रेणाऽर्थप्रतिषेधेतिप्रसंगः स्यात्, तथा हि—प्रतिगतमक्षमिति व्युत्पत्त्यऽसम्भवान्मानसादित्रयं[1] प्रत्यक्षं न स्यात्, अगच्छंश्च

१. मानसादित्रयम् = मनोविज्ञानम्, आत्मसंवेदनम्, योगिज्ञानं चेति सौगताभ्युपगतम्।

**पक्षव्यापकोऽविद्यमानसपक्षो विपक्षाद्व्यावृत्तः केवलव्यतिरेकी । यथा— सर्वं कार्यं सर्ववित्कर्तृपूर्वकम् , कादाचित्कत्वात्, यत् सर्ववित्कर्तृ-**

---

गौर्न स्यात् । तस्माल्लक्षणवशादेव तत्त्वव्यवस्थासाध्येन साधनस्य व्यतिर-विनाभाव उक्तः, सोऽत्राप्यस्त्येवेति ।

यच्चोक्तम्—साध्याभावे हेतोरसत्त्वमेव व्यतिरेकस्तदख्यापने च सन्दिग्धानैकान्तिकत्वमिति, तदप्ययुक्तम्; विपक्षे हि सति किं तत्र हेतुरस्ति ? न वा ? इत्याशंकापि स्यात् । न चात्र विपक्षोऽस्ति, सर्वस्यापि सदसद्रूपस्य प्रत्यक्षत्वाभ्युपगमात् । खपुष्पादेश्च सद्रूपत्वेनासद्रूपत्वेन वा प्रतीयमानत्वे साध्यत्वमेव, अप्रतीयमानत्वे वा कथं तस्य साध्याभावत्वं विपक्षत्वं प्रतिपाद्यते ? न चाप्रमाणकस्य विपक्षत्वं युक्तम् । नापि तत्र हेतोः सत्त्वमसत्त्वं वा चिन्त्यते । न हि नखाग्रस्थे हस्तियूथे हेतुः किमस्ति ? न वेति ? बुद्धिमन्तो विचारमाद्रियन्ते । यदि पुनरप्रमाणकेषु खपुष्पादिषु हेतुर्नास्तीत्यस्यैव व्यतिरेकसंज्ञा क्रियते, भवत्वेवंविधेन व्यतिरेकेणाऽयं व्यतिरेकी किन्तूक्तलक्षणाद् विपक्षाद्व्यावृत्तिरस्तीति केवलान्वयी कथ्यते । विपक्षस्यापि लक्षणे धर्म्मिग्रहणं कल्पितस्य तद्भावनिषेधार्थम् , सप्रमाणको ह्यर्थः सपक्षविपक्षत्वेन लोके प्रसिद्धः । तस्मादुक्तलक्षणविपक्षाभावो यस्य स केवलान्वयीति ।

निवृत्तिर्यदि तस्मिन्नेत्यादिप्रसंगस्तु भवत एव सिद्धान्तं बाधते—क्षणादूर्ध्वं निवृत्तौ वस्तुनस्तादात्म्यविरोधः, तदनिवृत्तौ च क्षणिकत्वविरोधः, तदुभयानभ्युपगमे तु 'विधानं प्रतिषेधं च' इत्यादि बाधकम् । नञर्थोऽपि तवैव प्रलयं गतः, येन सतोऽपरमभावं नाभ्युपगच्छसि । यस्य च हेतोर्व्यतिरेकबलेन गमकत्वम्, तस्यावश्यं वैधर्म्यदृष्टान्ताश्रय एष्टव्यः, अन्यथा वचनमात्रेण व्यतिरेकाप्रतीतेः, प्रतीतौ वान्वयदृष्टान्ताश्रयोपि नेष्टव्यस्तद्भावे तदस्तीति वचनादेव तद्गतिर्भविष्यतीति । तस्मात्सप्रमाणकस्यावैधर्म्यदृष्टान्तस्याभावात्केवलान्वयिनो न व्यतिरेकित्वं नाऽप्यहेतुत्वम्, पक्षव्यापकत्वे सत्यबाधितविषयाऽसत्प्रतिपक्षत्वे च सति सपक्षे वर्त्तमानत्वादन्वयव्यतिरेकिवदिति ।

## ❋ केवलव्यतिरेकिहेतुनिरूपणम् ❋

अविद्यमानसपक्षः पक्षव्यापको विपक्षाद्व्यावृत्तः केवलव्यतिरेकी । यथा—सर्व्ववित्कर्तृपूर्वकं सर्व्वं कार्यं कादाचित्कत्वात्, यत् सर्व्व-

पूर्वकं न भवति तत् कादाचित्कमपि न भवति, यथा—आकाशादि। प्रसङ्गद्वारेण वा, यथा—नेदं निरात्मकं जीवच्छरीरम्, अप्राणादिमत्त्व-प्रसङ्गात्, लोष्ठवदिति।

---

वित्कर्तृपूर्व्वकं न भवति, तन्न कादाचित्कम्, यथा—आकाशादि। तथा सात्मकं जीवच्छरीरं प्राणादिमत्वाद्, यन्न सात्मकं न तत्प्राणादिमत्, यथा लोष्ठादि। प्रसङ्गद्वारेण वा प्रयुज्यते—नेदं निरात्मकं जीवच्छरीरम्, अप्राणादिमत्वप्रसङ्गात्, लोष्ठवदिति।

## ❀ जीवच्छरीरे नैरात्म्यनिषेधे सौगताक्षेपः ❀

ननु च दृष्टान्तधर्म्मिणि दृष्टो धर्म्मस्तद्व्याप्तेन हेतुना साध्यधर्मिणि विधीयते वा प्रतिषिध्यते वा, न चात्मा क्वचित्प्राणादिव्यापकत्वेन दृष्टः, तत्कथं जीवच्छरीरेषु प्राणाद्युपलम्भादात्मसिद्धिः ? तन्निवृत्तौ च घटादिषु प्राणादि-[1] निवृत्तिरिति ? अथाप्राणादिमत्त्वेन व्याप्तं घटादिषु नैरात्म्यं दृष्टम्, तेन जीवच्छरीरेष्वप्राणादिमत्त्वनिवृत्तौ नैरात्म्यनिवृत्तिरिति, नैतदस्ति; अदृश्यानुपलम्भादभावासिद्धौ घटादीनां नैरात्म्यासिद्धेः। पराभ्युपगमात् सिद्धिरिति चेत्, कथमिदानीमात्मसिद्धिः परस्याप्यप्रामाणिका ? कथं नैरात्म्यसिद्धिः ? अभ्युपगममात्रेण च तत्सिद्धावागमिकत्वमात्मनि प्रतिपन्नं स्यान्नानुमेयत्वम्। तस्माद् [2]अदर्शनेऽप्यात्मनो निवृत्त्यसिद्धेः प्राणादीनामसिद्धप्रतिबन्धत्वान्नात्मनिवृत्तावेव तन्निवृत्तिसिद्धिरित्यगमकत्वमिति।[3]

---

१. निवृत्तिरिति। कथं निवृत्तिरित्यन्वयः।

२. अदर्शने प्राणादिमत्त्वस्य घटादावदर्शनेऽपीत्यर्थः।

३. तथा चाचचक्षे भिक्षुवरः—

प्राणाद्यभावो नैरात्म्यव्यापीति विनिवर्तने।
आत्मनो विनिवर्तेत प्राणादिर्यदि तच्च न॥

अन्यस्य विनिवृत्त्यान्यविनिवृत्तेरयोगतः।
तदात्मा तत्प्रसूतश्चेत् नैतदात्मोपलम्भने॥

तस्योपलब्धावगतौ च गतौ च प्रसिद्ध्यति।
ते चात्यन्तपरोक्षस्य दृष्टादृष्टी न सिद्ध्यतः॥ (प्र० वा० ४।२०८-१०)

## ❀ एकेषां समाधानं तन्निरासश्च ❀

अन्ये के परिहरन्ति—घटादिष्वात्मना सम्बन्धमात्रं नैरात्म्यमत्राभिप्रेतं न तु तद्रहितत्वं, नित्यव्यापित्वादात्मनः तत्सत्त्वं वेच्छादिस्तत्र सिद्धं तस्य जीवच्छरीरे व्यतिरेकिणा प्राणादिजननसमर्थः सम्बन्धः साध्यते। न निरात्मकमित्यस्यायमर्थः—न सम्बन्धमात्रोपेतमिति। घटादिवदप्राणादिमत्त्वप्रसङ्गात्। घटादिषु च नैरात्म्यं प्राणाद्यनुत्पत्त्यैव निश्चितमिति। ते त्वेवं प्रष्टव्याः—प्राणाद्यनुत्पत्तिः किमन्वयसामर्थ्येन घटादिषु नैरात्म्यं गमयत्याहोस्विद्व्यतिरेकसामर्थ्येनेति ? किं चातः ? सर्वत्र नैरात्म्यं स्यादात्मसम्बन्धविशेषवद्दृष्टत्वान्न क्वचिदन्वयसिद्धिः। अनुमानेनैवाऽनवस्था स्यात्। वैधर्म्यदृष्टान्ताऽभावान्न व्यतिरेकतोपि नैरात्म्यसिद्धिः। जीवच्छरीरस्य दृष्टान्तत्वे त्वितरेतराश्रयत्वप्रसङ्गः। प्राणादिकार्यानुत्पत्त्या तत्समर्थहेत्वाऽभावोऽनुमीयते दारुवास्यादिसम्बन्धविशेषाभावे छिदाद्यनुत्पत्तिवदतो नेतरेतराश्रयत्वादिदोष इति चेत्, एवं तर्हि प्राणादिकार्योत्पत्त्या, तत्समर्थहेतुः छिदाद्युत्पत्तौ दारुवास्यादिसम्बन्धविशेषवदन्वयेनैवानुमीयत इत्यपार्थको व्यतिरेकी स्यादिति।

## ❀ स्वमतेन समाधानम् ❀

अत्रोच्यते—"लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः" (न्या० सू० १।१।२५) इत्युक्तम्, घटादिषु च नैरात्म्यमप्राणादिमत्त्वं चेत्यस्मिन्नर्थेऽस्त्येव भवतामस्माकं च सम्प्रतिपत्तिस्तत्कथं नायं दृष्टान्तः ? कुतः ? प्रमाणादिति। किमनेन विचारेण ? आगमादन्यतो वा भवतु। विचारेणापि हि सम्प्रतिपत्तिः कर्तव्या, सा चेत्तं विनाऽपि सिद्धा, किं विचारेण ? सम्प्रतिपन्नस्य विचारे ह्यनवस्था स्यादिति। यदि च घटादिषु नैरात्म्यबुद्धिर्मिथ्या, ततः सात्मकत्वं सम्यगस्तु। तच्चाप्यनिष्टम्।

## ❀ जीवच्छरीरे प्राणादिसत्त्वमन्यत्रासत्त्वमिति व्यवस्थात्मवाद एव ❀

यदि वोभयत्र[1] सात्मकत्वमनात्मकत्वं वा स्यात्, तदानीमेकत्र प्राणादिसंभवोऽन्यत्र नेति किंकृतोऽयं विशेषः ? स्वभावत एवेति चेत्, न; नित्यं सत्त्वमसत्त्वं चेत्यादिप्रसंगात्। बुद्धिसद्भावाऽसद्भावकृत इति चेत्, न; प्राणापाननिमेषोन्मेषजीवनमनोगतेन्द्रियान्तरविकारबुद्धिसुखदुःखादीनां प्राणा-

१. उभयत्र = पक्षे जीवच्छरीरे, दृष्टान्ते घटादौ च।

दिशब्देनाऽभिधानात्। विभोः सर्वत्र सद्भावाद् घटादिष्वपि सात्मकत्वप्रसंग इति चेत्, न; आत्माधिष्ठितत्वविशेषस्य सात्मकत्वेनाभिहितत्वात्, तस्य च प्राणाद्यन्यथानुपपत्त्यैव सिद्धिः। सात्मकानात्मकत्वविशेषोपि किंकृत इति चेत्, अदृष्टविशेषकृतम्, तद्विशेष्योपि जन्मान्तरजप्राणादिविशेषकृतः। सोऽपि जन्मान्तरकृत इत्यनादित्वं परिहारः। न चाऽदृष्टविशेषमन्तरेण कस्यचिन्निरुद्धप्राणादिकस्यैवोत्पादः, कस्यचिदुत्पन्नस्य दिनद्वयेन वाऽर्द्ध-माससंवत्सरादिविकल्पेन वा प्राणादिनिरोध इत्ययं विशेष उपपद्यते। पित्रादिकारणेष्वपि विशेषानुपलब्धेः। ज्ञानमेव पूर्व्वादृष्टविशेषनियमितं [1]क्वचिदेवोत्पद्यते। कियत्कालं यावदवतिष्ठते तदनुविधाने न प्राणादेरप्युत्प-त्तिरवस्थानं चेति किमत्राऽदृष्टसामर्थ्येनात्मना कल्पितेनेति चेत्, नैतदस्ति; ज्ञानस्यापि हि नाशित्वेन परलोकित्वं पूर्वदृष्टानुसन्धातृत्वं च न सम्भवतीति वक्ष्यामः। तद्योऽसौ परलोकी पूर्व्वदृष्टानुसंधानाच्च स एवात्मा, तेनाऽधिष्ठिते शरीरे प्राणा भवन्ति नान्यथेति। एवं च न खपुष्पादिमत्त्व-स्यापि सिद्धिः, खपुष्पादेः प्राणाद्युत्पत्तौ विपक्षबाधकेनापि सामर्थ्यासिद्धिः, सिद्धौ वा स एवात्मेति नास्ति विवादः।

## ❀ अन्वयाशङ्का तन्निरासश्च ❀

नन्वेवं तर्हि प्राणादिकार्येण तद्धेतुरनुमीयते, घटादिकार्यस्य च हेतुमत्त्व-दर्शनादन्वयोऽप्यस्तीति कथं केवलव्यतिरेकी? न; विशिष्टसाध्येनाऽन्वया-भावात्। नित्यत्वादिधर्मको हि प्राणादिहेतुः, साध्यस्तथाविधेन च न क्वचिदन्वयः प्रसिद्धः।

## ❀ सामान्यसिद्धिमात्रेण नात्र विशेषसिद्धिः ❀

सामान्यसिद्धावधिकरणसिद्धान्तबलेन देशादिसम्बन्धविशेष एव सिद्ध्यति, न तु नित्यत्वादिविशेषः; तत्र हेतोः सामर्थ्याभावात्। सामान्यमात्रसिद्धौ परिशेषादभिप्रेतविशेषसिद्धिरिति चेत्, कोऽयं परिशेषः? "प्रसक्तप्रतिषेधेऽन्यत्रा-प्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः, परिशेषः" (न्या० भा० १।१।५)। शिष्यमाणे सम्प्रत्ययः कुतो भवति? प्रसक्तप्रतिषेधहेतवस्तावत्प्रतिषेध्यसिद्धावेव कृतार्थाः। तदुपकृतस्तु मौलो हेतुस्तथाविधसाध्येनाऽन्वयानपेक्षस्तं विशेषं साधयन् केवलव्यतिरेक्येव सम्पद्यते।

---

१. क्वचित् = जीवच्छरीरे।

## ❀ मौलस्य हेतोर्व्याप्तिसमर्थका हेतवः ❀

तस्य स्वसाध्येन व्याप्तिसमर्थनार्थमितरे हेतवः। तथा हि—कारणमात्रसाधकेन कार्यत्वेन प्राणादेर्निर्हेतुकत्वं प्रतिषिद्धम्, अन्यकृतावदृष्टसंस्कारो नाऽन्यस्य फलत इत्यनेन देहाद्यव्यतिरिक्तहेतुकत्वं प्रतिषिद्धम्, पूर्वाभ्यस्तस्मृत्यनुबन्धत्वादिना कृतकहेतुकत्वं प्रतिषिद्धमित्येवं प्रतिपक्षबाधकहेतुभ्यः प्राणादेः साध्यविशेषेण व्याप्तिः काकतीराऽदर्शनन्यायेन पक्ष एव सिद्ध्यति। स एवान्वय इति चेत्, भवतु नामैवम्; तथाप्यन्यत्र पक्षादन्वयोऽस्य नास्तीति व्यतिरेकित्वमुक्तमित्येवं समर्थितस्य व्यतिरेकिणः सम्यग्घेतुत्वं न विपक्षाऽदर्शनमात्रेण, डित्थादिसिद्धावपि हेतुत्वप्रसङ्गात्। तथा सर्व्ववित्कर्त्रभावे कार्यत्वमेव न सम्भवति। न ह्यचेतनं चेतनाऽनधिष्ठितं प्रवर्त्तत इति वक्ष्यामः। यत्रापि कुम्भकारादिरधिष्ठातास्ति, तत्रापि न तस्यैव कर्तृत्वमदृष्टादिकारणाधिष्ठातृत्वे सामर्थ्याभावात्तदनधिष्ठितस्य वाऽदृष्टादेर्न्न प्रवृत्तिस्तद्विकला च सामग्री न कार्योत्पत्तौ समर्था। न ह्येककारकाऽप्रवृत्तावपि कार्योत्पत्तिः क्वचिदस्तीत्यदृष्टादिसहकारिविकलेभ्यः कुलालाद्यधिष्ठितेभ्योऽपि हेतुभ्यः कार्योत्पादो न स्यात् तस्माद्यथा कुलालाद्यधिष्ठितानि दण्डादीनि घटादौ प्रवर्तन्ते, तथा सर्व्वज्ञाधिष्ठितान्यदृष्टादीनीति कुलालवद् घटादिष्वपि सर्व्वविदः कर्तृत्वम्, अतः सर्व्वं कार्यं सर्ववित्कर्तृपूर्व्वकमिति सिद्धम्। एवमन्योऽपि व्यतिरेकी समर्थयितव्य इति।

## ❀ हेतुलक्षणसूत्रस्य व्याख्या ❀

उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः" (न्या० सू० १।१।३४) "तथा वैधर्म्यादिति" (न्या० सू० १।१।३५) सूत्रं हेतुलक्षणार्थम्। उदाहरणशब्देनात्र साधर्म्यदृष्टान्त उक्तस्तेन साधर्म्यम्, साध्यस्येति प्रक्रमाल्लभ्यते। एवं च विरुद्धसाधारणप्रकारस्यासिद्धस्य च व्युदासः। उदाहरणेनैवेत्यवधारणाश्रयणादनैकान्तिकस्यापि व्युदासः। भागासिद्धनिषेधार्थं साध्यस्य साधर्म्यमेवेति कर्त्तव्यम्। "एवं च द्विलक्षणत्रिलक्षणावन्वयिनौ लब्धाविति" [1]तमोरिः, न; कालात्ययापदिष्टप्रकरणसमयोरपि हेतुत्वप्रसङ्गात्। अथ तन्निवृत्त्यर्थं साध्यसाधनग्रहणम्। एवं तर्हि साध्यसाधनग्रहणमेवास्तु, तत एव हि सर्व्वहेत्वा-

---

१. तमोऽरिः = उद्योतकराचार्यः। तेन चोक्तम्—
'एवं द्विलक्षणस्त्रिलक्षणश्च हेतुर्गम्यते' (न्या० वा० पृ० ११६)।

**एतेन हेत्वाभासानामहेतुत्वमुक्तं भवति--हेतुलक्षणरहिता हेतुवदवभासमाना हेत्वाभासाः। ते चानेकप्रकाराः असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः ।**

---

भासानां व्युदासः सिद्धः साध्यसाधनत्वाविशेषादिति, सत्यमेवमेतत्; तथाप्युदाहरणेत्यादि विशेषलक्षणार्थं कृतम्। साधर्म्यादिति वीतस्य लक्षणं वैधर्म्यादित्यवीतस्येत्यतो द्विविध एव हेतुः—स्वरूपेण ह्यर्थसाधकत्वं वीतस्य लक्षणम्, परपक्षनिषेधेनाऽवीतस्येति। अथवा साधर्म्यादित्यन्वयिनः, वैधर्म्यादिति व्यतिरेकिणः, समुच्चितं चान्वयव्यतिरेकिण इति। तथा वैधर्म्यादित्युदाहरणवैधर्म्यात् साध्यसाधनं हेतुरित्यर्थः। उदाहरणं चात्र वैधर्म्यदृष्टान्तः तत्रार्थात्मकहेतुलक्षणापेक्षया प्रथमान्तमेव साधर्म्यवैधर्म्यपदं द्रष्टव्यम्। वचनात्मकापेक्षया तु पञ्चम्यन्तं कृतम्, [1]तस्यैव प्राधान्येन लक्षणमवयवप्रस्तावात्। उच्यमानस्य कर्म्मत्वं तत्र च षष्ठी युक्तेति चेत्, न; निमित्तत्वस्य विवक्षितत्वात्। निमित्तत्वं चार्थे सति तद्दर्शनं, ततो विवक्षाक्रमेण शब्दोत्पत्तिरिति। यदान्वय्यादिलक्षणार्थं पूर्व्ववदादिसूत्रम्, तदा तल्लक्षणस्यानुवादोऽवयवलक्षणार्थो द्रष्टव्यः। यदा त्वन्यार्थं तत्सूत्रम्, तदात्रैवानुषंगतोऽन्वय्यादिलक्षणविधानमिति। उदाहरणसाधर्म्याद्यद्वचनमित्यध्याहार्यं निर्देशो वाधिकृतः प्रतिज्ञासूत्रात्। निगमनलक्षणे वा वचनग्रहणं कृतं सर्व्वत्रापि द्रष्टव्यम्। साधनपदस्य लिंगवाचित्वात्, साधर्म्यादिपदवत् पञ्चमीप्रसंग इति चेत्, न; वचनवाचित्वस्यापि विवक्षितत्वात्। नोदाहरणसाधर्म्यादुत्पन्नं वचनमात्रं हेतुः, किं तु यत्साध्यसाधनं साधनत्वख्यापकमित्यर्थः, तद्व्याख्यातं पुरस्तादिति।

## * हेत्वाभासनिरूपणम् *

एतेन हेत्वाभासानामहेतुत्वमुक्तं भवति। हेतुलक्षणरहिता हेतुवदाभासमाना हेत्वाभासाः। "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः" ( न्या० सू० १।२।४ ) इति सूत्रम्। तस्यार्थसंग्रहार्थम् "असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमा" इति [2]वाक्यं व्युत्पत्त्यर्थमन्यथा विन्यस्तम्। सर्व्वत्र तथोपन्यासे हि छान्दसः श्रोता स्यादिति।

---

१. तस्यैव = पञ्चम्यन्तवचनात्मकस्य हेतोरेव।

२. वाक्यम्। मूलग्रन्थस्य न्यायसारस्य वाक्यमित्यर्थः।

**तत्रानिश्चितपक्षवृत्तिरसिद्धः। पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्धः। पक्षत्रयवृत्तिरनैकान्तिकः। साध्यासाधकः पक्ष एव वर्तमानोऽनध्यवसितः।**

## ❀ १. असिद्धः ❀

तत्रानिश्चितपक्षवृत्तिरसिद्धः—अनिश्चिता=संदिग्धा, विप्रतिपन्ना वा, नास्तीति निश्चिता वा, पक्षे वृत्तिर्यस्य हेतोः स तथोक्तः। साध्याविशिष्टः "साध्यत्वात्साध्यसमः" (न्या० सू० १।२।७) इति सूत्रम्। सम्प्रतिपत्त्यविषयत्वं साध्याविशिष्टत्वं व्यापकं लक्षणं साध्यत्वादित्यन्तरासिद्धस्य लक्षणप्रमादपाठो वा सिद्धत्वादित्यर्थो वेति।

## ❀ २. विरुद्धः ❀

पक्षविपक्षयोरेव वर्त्तमानो विरुद्धः। "सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः" (न्या० सू० १।२।६) इति सूत्रम्। सिद्धान्ताभ्युपगमलक्षणः साध्यधर्म्म इत्यर्थः, तमभ्युपगम्य यो हेतुस्तं विरोद्धुं शीलस्तद्विपर्ययं व्याप्नोति स विरुद्धः। कथमचेतनो हेतुरभ्युपगच्छति ? उपचारेण—तत्प्रयोक्त्रभ्युपगतं तद्बलेन वा तेनैवाभ्युपगतमित्युपचर्यते। उपचारे च प्रयोजनम्—विशेषविरुद्धनिवृत्तिः।

## ❀ ३. अनैकान्तिकः ❀

पक्षत्रयवृत्तिरनैकान्तिकः। "अनैकान्तिकः सव्यभिचारः" (न्या० सू० १।२।५) इति सूत्रम्। पर्यायोऽत्र लक्षणम्, बुद्धिरुपलब्धिरित्यादिवत्, निरुक्तिर्वान्योन्यलक्षणम्।

## ❀ ४. अनध्यवसितः ❀

साध्यासाधकः पक्ष एव वर्त्तमानोऽनध्यवसितः। केवलव्यतिरेकिव्यवच्छेदार्थं साध्यासाधकग्रहणं साध्यव्यभिचारेऽस्यान्तर्भाव इत्येके—यथा हि हेतोरुभयत्र वृत्तिर्व्यभिचारस्तथोभयतो व्यावृत्तिरपि व्यभिचारः। यथा च नैकस्मिन्नन्ते वृत्तिस्तथानैकस्मादन्ताद्व्यावृत्तिरिति साधारणवदसाधारणोऽयमनैकान्तिकः। असद्विपक्षोऽनुपसंहार्यश्च तर्हि कथमनैकान्तिकः, यथा सर्वं कार्यं नित्यजन्मत्वात् सर्व्वमनित्यं प्रमेयत्वादिति ? नाप्यनयोः प्रकरणसमेऽन्तर्भावस्तल्लक्षणविकलत्वात्, तल्लक्षणविकलस्यापि तत्रान्तर्भावे ह्यतिप्रसंगः स्यादिति। तस्मान्न पञ्चत्वावधारणार्थं सव्यभिचारविरुद्धेत्यादिसूत्रम्, किन्तु निदर्शनार्थम्—यथैते हेत्वाभासास्तथान्योऽपि हेतुलक्षणरहितो हेतुवदाभासमानो हेत्वाभासः प्रत्येतव्य इत्यर्थः।

**प्रमाणबाधिते पक्षे वर्तमानो हेतुः कालात्ययापदिष्टः। स्वपक्षपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः। यद्यपि चैषां सूक्ष्मो भेदोऽनन्तत्वान्न शक्यते वक्तुम्, तथापि स्थूलां दृष्टिमाश्रित्य कियन्तो भेदा लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते—**

## ❀ ५. कालात्ययापदिष्टः ❀

प्रमाणबाधिते पक्षे वर्त्तमानो हेतुः कालात्ययापदिष्टः। "कालात्ययापदिष्टः कालातीतः" (न्या० सू० १।२।६) इति सूत्रम्। निर्दिष्टपक्षोपन्यासानन्तरं हेतूपन्यासकालस्तदत्ययेनापदिष्टः कालमतीतः कालातीतः।

## ❀ ६. प्रकरणसमः ❀

स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः। प्रकरणयोः पक्षप्रतिपक्षयोः सिद्धौ समः त्रिरूपत्वेन, त्रिरूपत्वं च—पक्षधर्म्मत्वम्, सपक्षे सत्त्वम्, विपक्षाद्व्यावृत्तिरिति। "यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः" (न्या० सू० १।२।७) इति सूत्रम्। यस्मान्नित्यानित्यविशेषानुपलम्भात् किमयं नित्यो वाऽनित्य इत्येषा प्रकरणचिन्ता, स विशेषधर्म्मानुपलम्भो हेतुत्वेनोक्तः प्रकरणसमः, यथा—नित्यः शब्दोऽनित्यधर्मानुपलब्धेः, अनित्यः शब्दो नित्यधर्मानुपलब्धेरिति। विरुद्धव्यभिचारी तर्हि प्रकरणसमः, विपक्षधर्म्मानुपलब्धेरिति, उच्यते—तथापि सत्त्वादेर्विपक्षधर्म्मस्यानुपलब्धिरुभयाऽसिद्धिविशिष्टधर्मानुपलब्धिश्चान्यतरासिद्धेति। अथ योऽकृतकत्वाद्यनुपलब्धेरसिद्धतां नोद्भावयितुं शक्नोति, तद्विषयोयं प्रकरणसमः, विरुद्धाव्यभिचारिणोपि तर्हि ये दोषान्तरं नोद्भावयितुं शक्नुवन्ति तान् प्रति किन्न हेत्वाभासान्तरत्वमिष्यते? पक्षसपक्षान्यतरत्वादेश्चानेन लक्षणेन कथं संग्रह इति? उच्यते—यस्मात्प्रतिपक्षसिद्धावविशेषेण प्रतीयमानात् प्रकरणचिन्ता भवति, स प्रकरणसम इत्येतावदेव व्यापकं लक्षणम्। निर्णयार्थमपदिष्ट इत्येतदन्यार्थम्। अन्योऽपि हेत्वाभासो येनैव निर्णयार्थमपदिष्टस्तस्यैव निग्रहस्थानं न पुनः प्रतिवादिना प्राश्निकेन वानुभाषणार्थमपदिष्टोपीति।

## ❀ हेत्वाभासावान्तरभेदप्रपञ्चः ❀

अथैषां सहोदाहरणेनावान्तरभेदः प्रपञ्च्यते—ननु देशकालभेदेनानन्तः, सूक्ष्मेक्षिकया स्वरूपभेदेनाप्यनन्तो हेत्वाभासस्तत्कथं तद्भेदः प्रपञ्चेन वक्तुं शक्यत इति? उच्यते—यद्यपि चैषां सूक्ष्मो भेदोऽनन्तत्वान्न शक्यते वक्तुम्, तथापि स्थूलदृष्टिमाश्रित्य कियन्तो भेदाः प्रदर्श्यन्ते व्युत्पत्त्यर्थम्।

तत्रासिद्धभेदास्तावत्—स्वरूपासिद्धो यथा—अनित्यः शब्दः चाक्षुषत्वात्। व्यधिकरणासिद्धो यथा—अनित्यः शब्दः पटस्य कृतकत्वात्। विशेष्यासिद्धो यथा—अनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वात्। विशेषणासिद्धो यथा—अनित्यश्शब्दः चाक्षुषत्वे सति सामान्यवत्त्वात्। भागासिद्धो यथा—अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात्। आश्रयासिद्धो यथा—अस्ति प्रधानं विश्वपरिणामित्वात्। आश्रयैकदेशासिद्धो यथा—नित्याः प्रधानपुरुषेश्वराः, अकृतकत्वात्। व्यर्थविशेष्यासिद्धो यथा—अनित्यश्शब्दः कृतकत्वे सति सामान्यवत्त्वात्।

## ❀ असिद्धभेदाः ❀

असिद्धभेदास्तावत्—(१) स्वरूपेणाऽसिद्धः, स्वरूपं वाऽसिद्धं यस्य सोऽयं स्वरूपासिद्धो यथा—अनित्यः शब्दः, चाक्षुषत्वादिति। ननु चाक्षुषत्वं रूपादावस्ति, तेनास्य व्यधिकरणासिद्धत्वं युक्तम्, न; रूपाद्यधिकरणत्वेनाऽप्रतिपादितत्वाद्धर्मिणि चापदिष्टं चाक्षुषत्वं न स्वरूपतोऽस्तीति। आहङ्कारिकचक्षुर्विषयत्वं वा, जात्यन्धं प्रति वा, स्वरूपासिद्धमिति। (२) व्यधिकरणासिद्धो यथा—नित्यः शब्दः पटस्य कृतकत्वात्। व्यधिकरणश्चासावसिद्धश्चेति। ननु शब्देऽपि कृतकत्वमस्ति, सत्यम्; न तथा प्रतिपादितम्। न चान्यत्र प्रतिपादितमन्यत्र सिद्धं भवति। अन्यतरस्य वा व्यधिकरणासिद्धम्। अन्यस्त्वाह—व्यधिकरणोऽपि हेतुर्गमकोऽस्ति, यथा—ब्राह्मणोऽयं पित्रोर्ब्राह्मणत्वादिति; यद्येवं नटादीनामपि ब्राह्मण्यं कस्मान्न साधयति? तेषां पित्रोर्ब्राह्मण्याभावादिति चेत्; एवं तर्हि प्रयोजकसम्बन्धेन पक्षसम्बन्धो हेतुः कथं व्यधिकरणः? प्रतिभोहशक्त्या वान्यथाभिधानेपि ब्राह्मणो ब्राह्मणजन्यत्वादित्येवं हेत्वर्थं प्रतिपद्य साध्यं प्रतिपद्यत इति। (३) विशेष्यासिद्धो यथा—अनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वात्। (४) विशेषणासिद्धो यथा—अनित्यः शब्दः चाक्षुषत्वे सति सामान्यवत्त्वात्। (५) भागासिद्धो यथा—अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात्। ननु च वाय्वादिशब्दानामपीश्वरप्रयत्नपूर्वकत्वात् कथं भागासिद्धत्वमिति? नैतदस्ति, प्रयत्नस्य तीव्रमन्दादिभावानन्तरशब्दस्य तथा भावो हि प्रयत्नानन्तरीयकत्वं विवक्षितम्। न चेश्वरप्रयत्नस्य तीव्रादिभावोस्ति नित्यत्वाद्, अनभ्युपगतेश्वरं प्रति वा भागासिद्धत्वम्। (६) आश्रयासिद्धो यथा—अस्ति प्रधानं विश्वपरिणामित्वात्। (७) आश्रयैकादेशासिद्धो यथा—नित्याः प्रधानपुरुषेश्वराः, अकृतकत्वात्। (८) व्यर्थविशेष्यासिद्धो यथा—अनित्यः शब्दः सामान्यवत्त्वे सति कृतकत्वात्। ननु चासिद्धलक्षणाभावान्नायमसिद्धः,

**व्यर्थविशेषणासिद्धो यथा—अनित्यश्शब्दः सामान्यवत्त्वे सति कृतकत्वात्। सन्दिग्धासिद्धो यथा—धूमबाष्पादिविवेकानिश्चये, कश्चिदाह—अग्निमानयं प्रदेशः धूमवत्त्वात्। सन्दिग्धविशेष्यासिद्धो यथा—अद्यापि रागादियुक्तः कपिलः पुरुषत्वे सत्यद्याप्यनुत्पन्नतत्त्वज्ञानत्वात्। सन्दिग्धविशेषणासिद्धो यथा—अद्यापि रागादियुक्तः कपिलः सर्वदा तत्त्वज्ञानरहितत्वे सति पुरुषत्वात्। त एतेऽसिद्धभेदा यदोभयवाद्यसिद्धत्वेन विवक्षिताः तदोभयवाद्यसिद्धा भवन्ति। यदा त्वन्यतरवाद्यसिद्धत्वेन विवक्षिताः, तदाऽन्यतरवाद्यसिद्धा भवन्ति।**

---

सत्यम्, किंत्वेकदेशीयाभिप्रायेणोक्तः। व्यर्थत्वं तु दूषणं भवत्येव किन्त्वसिद्धत्वं नास्ति, यस्य तु शब्दे कृतकत्वमसिद्धम्, प्रत्यसिद्धत्वमप्युच्यते। (९) व्यर्थविशेषणासिद्धो यथा—अनित्यः शब्दः सामान्यवत्त्वे सति कृतकत्वात्। व्यर्थविशेषणश्चासावसिद्धश्चेत्येवं व्यर्थविशेष्यासिद्धोऽपि व्याख्येयः। परमाणवादौ वा पक्षीकृते व्यर्थविशेष्यासिद्धः, व्यर्थविशेषणासिद्धश्च द्रष्टव्य इति। (१०) संदिग्धासिद्धो यथा—धूमबाष्पादिविवेकाऽनिश्चये कश्चिदाह—अग्निमानयं प्रदेशो धूमवत्त्वात्। (११) संन्दिग्धविशेष्यासिद्धो यथा—अद्यापि रागादियुक्तः कपिलः, पुरुषत्वे सत्यद्याप्यनुत्पन्नतत्त्वज्ञानत्वात्। (१२) सन्दिग्धविशेषणासिद्धो यथा—अद्यापि रागादियुक्तः कपिलः सर्व्वदा तत्त्वज्ञानरहितत्वे सति पुरुषत्वात्। त एतेऽसिद्धभेदा यदोभयवाद्यसिद्धत्वेन विवक्षिताः, तदोभयासिद्धा भवन्ति, यदा त्वन्यतरवाद्यसिद्धत्वेन विवक्षितास्तदान्यतरासिद्धा भवन्ति।

## ❀ अन्यतरासिद्धो हेत्वाभासो नेत्येके ❀

नास्त्यन्यतरासिद्धो हेत्वाभास इत्येके, तथा हि—परेणाऽसिद्ध इत्युद्भाविते यदि वादी तत्साधकं प्रमाणं न दर्शयति, ततः प्रमाणाभावादुभयोरसिद्धिः। अथ प्रमाणं दर्शयति, ततः प्रमाणस्यापक्षपातित्वादुभयोः सिद्धः। अन्यथा साध्यमप्यन्तरासिद्धं न कदाचित्सिद्ध्यतीति व्यर्थः प्रमाणोपन्यासः स्यात्। यावन्न परं प्रतिप्रमाणेन प्रसाध्यते तावत्तं प्रत्यसिद्ध इति चेत्, गौणं तर्ह्यसिद्धत्वं, यथा रत्नादिपदार्थस्तत्त्वतोऽप्रतीयमानस्तावन्तमपि कालं न मुख्यः, किन्तु तदाभासः। किञ्च हेत्वाभासश्च निग्रहस्थानमित्युक्तम्, ततश्चान्यतरासिद्धो यदा हेत्वाभासस्तदा वादी निगृहीतः स्यान्न च निगृहीतस्य पश्चादनिग्रह इति युक्तम्। नापि हेतुसमर्थनं पश्चाद्युक्तं निग्रहान्तत्वाद्वादस्येति।

**विरुद्धभेदास्तु—सति सपक्षे चत्वारो विरुद्धभेदाः। पक्षविपक्षव्यापको यथा—नित्यश्शब्दः कार्यत्वात्। विपक्षैकदेशवृत्तिः पक्षव्यापको यथा—नित्यश्शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात्। पक्षविपक्षैकदेशवृत्तिर्यथा—नित्यश्शब्दः प्रयत्नानन्तरीयकत्वात्। पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा—नित्या पृथिवी कृतकत्वात्।**

---

## ❀ तत्खण्डनम् ❀

अत्रोच्यते—यदि वादी सम्यग्घेतुत्वं प्रतिपद्यमानोपि तत्समर्थनन्यायविस्मरणादिनिमित्तेन प्रतिवादिनं प्राश्निकान् वा प्रतिबोधयितुं न शक्नोत्यन्यतरासिद्धतामपि नानुमन्यते, तदान्यतरासिद्धत्वेनैव निगृह्यते। स्वयमनभ्युपगतश्च परप्रसिद्ध इत्येतावतैवोपन्यस्तो हेतुरन्यतरासिद्धो निग्रहस्थानमिति।

## ❀ विरुद्धभेदाः ❀

विरुद्धभेदास्तूदाह्रियन्त इति शेषः। सति सपक्षे चत्वारो विरुद्धाः—(१) पक्षविपक्षव्यापको यथा—नित्यः शब्दः कार्यत्वात्। स्वकारणसमवायः कार्यत्वम्। [1]उभयान्तोपलक्षिता सत्ताऽनित्यत्वमित्येके। तदभिप्रायेण प्रागभावस्यापि नित्यत्वाद्युक्तमेव विरुद्धोदाहरणम्, अन्यथा न विपक्षव्यापि कार्यत्वम्। यदा त्वादिमत्त्वमेव कार्यत्वम्, तदा प्रध्वंसस्य नित्यत्वेपि कार्यत्व-

---

१. स्यादेतत्—प्रकृते कार्यत्वं जन्यत्वमात्रम्? आहोस्वित् स्वकारणे समवायः? आद्ये नित्यत्वाभाववति ध्वंसे वृत्तत्वादनैकान्तिकत्वमेव कार्यत्वस्य हेतोः। द्वितीयेऽनित्येऽपि विपक्षे प्रागभावे स्वसमवायिकारणसमवेतत्वस्याभावादेव विपक्षव्यापकत्वरूपविरुद्धत्वाभाव इत्यत आह—उभयान्तेति। तथा च प्रागभावप्रतियोगित्वविशिष्टध्वंसप्रतियोगित्वलक्षणानित्यत्वस्याभावान्न प्रागभावस्य विपक्षत्वमतस्तत्राभावेऽपि हेतोर्न क्षतिः।

वार्तिकेऽप्युक्तम्—"अथाऽनित्यत्वं किम्? उभयान्तावच्छिन्नवस्तुसत्तासम्बन्धः सत्ता वा तद्विशेषणा" (न्या० वा० पृ० १२२)। तद् व्याख्यातं मिश्रैः—"अवच्छेदकत्वं चोपलक्षणत्वं, न विशेषणत्वम्। तच्चापरान्तस्य भिन्नकालस्यासम्बद्धस्यापि विरोधितया बुद्धिस्थस्य सम्भवति" (न्या० वा० ता० पृ० २८०)। तदेतदुभयनिष्कर्षपरामर्शनिर्भरेयं भणितिर्भूषणस्य—उभयान्तोपलक्षितसत्तेति।

असति सपक्षे चत्वारो विरुद्धभेदाः—पक्षविपक्षव्यापको यथा—आकाशविशेषगुणश्शब्दः प्रमेयत्वात्। पक्षविपक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणश्शब्दः प्रयत्नानन्तरीयकत्वात्। पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणश्शब्दः बाह्येन्द्रियग्राह्यत्वात्। विपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणः शब्दः, अपदात्मकत्वात्।

ननु (एते) चत्वार एव विरुद्धभेदाः, नान्ये, तेषामसिद्धलक्षणोपपन्नत्वात्, नैष दोषः; उभयलक्षणोपपन्नत्वेनोभयव्यवहारविषयत्वात्, तुलायां प्रमाणप्रमेयव्यवहारवत्।

---

मस्तीत्यनैकान्तिकं स्यान्न विरुद्धमिति। (२) विपक्षैकदेशवृत्तिः पक्षव्यापको यथा—नित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात्। अर्हत्यर्थे कृत्याभिधानाद् ग्रहणयोग्यतामात्रं ग्राह्यत्वमुक्तम्, तेनाऽस्यापि पक्षव्यापकत्वम्। (३) पक्षविपक्षैकदेशवृत्तिर्यथा—नित्यः शब्दः प्रयत्नानन्तरीयकत्वात्। (४) पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा—नित्या पृथिवी कृतकत्वात्।

असति सपक्षे चत्वारो विरुद्धाः—(१) पक्षविपक्षव्यापको यथा—आकाशविशेषगुणः शब्दः प्रमेयत्वात्। (२) पक्षविपक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणः शब्दः प्रयत्नानन्तरीयकत्वात्। (३) पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणः शब्दो बाह्येन्द्रियग्राह्यत्वात्। (४) विपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणः शब्दोऽपदात्मकत्वात्। ननु चत्वार एव विरुद्धभेदाः, ये पक्षव्यापकास्ते, नाऽन्ये ये पक्षैकदेशवृत्तयस्तेषामसिद्धलक्षणोपपन्नत्वात्। [1]पक्षधर्मस्य हि त्रयी [2]गतिः—हेतुर्विरुद्धोऽनैकान्तिको वेति, नैष दोषः; उभयलक्षणोपपन्नत्वेनोभयव्यवहारविषयत्वात्, तुलायां प्रमाणप्रमेयव्यवहारवत्। यथा तुलाद्रव्यं सुवर्णादीनामियत्तापरिच्छेदसाधनत्वात् प्रमाणम्। तुलान्तरपरिच्छिन्नेन द्रव्येण प्रमीयमाणं प्रत्यक्षतो वा स्वरूपेणोपलभ्यमानं प्रमेयं भवति, तथा पक्षैकदेशवृत्तयोऽसिद्धलक्षणयोगादसिद्धा भवन्ति। विरुद्धानैकान्तिकादिलक्षणयोगाद्विरुद्धोऽनैकान्तिको न व्यवस्थितश्चेति यत्पुनरेतत्पक्षधर्मस्य त्रयी गतिरिति तत्र कालात्ययापदिष्टप्रकरणसमयोरपि पक्षधर्म्मगतित्वादिति वक्ष्यामः।

---

१. पक्षधर्मस्य = पक्षे ध्रियमाणस्य हेतोरित्यर्थः।

२. गतिः = विधा प्रकार इति यावत्।

अनैकान्तिकभेदास्तु—पक्षत्रयव्यापको यथा—अनित्यश्शब्दः प्रमेयत्वात्। पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा—नित्यश्शब्दः प्रत्यक्षत्वात्। पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा—गौरयं विषाणित्वात्। पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा—नायं गौः विषाणित्वात्। पक्षत्रयैकदेशवृत्तिर्यथा—नित्या पृथिवी प्रत्यक्षत्वात्। पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा—द्रव्याणि दिक्कालमनांसि अमूर्तत्वात्। पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा—न द्रव्याणि दिक्कालमनांसि, अमूर्तत्वात्। सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा—न द्रव्याण्याकाशकालदिगात्ममनांसि क्षणिकविशेषगुणरहितत्वात्।

अनध्यवसितभेदास्तु, अविद्यमानसपक्षविपक्षः पक्षव्यापको यथा—सर्वमनित्यं सत्त्वात्। अविद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा—सर्वमनित्यं कार्यत्वात्। विद्यमानसपक्षविपक्षः पक्षव्यापको यथा—

---

## ❀ अनैकान्तिकभेदाः ❀

अनैकान्तिकभेदा अप्युदाह्रियन्ते। (१) पक्षत्रयव्यापको यथा—अनित्यः शब्दः प्रमेयत्वात्। (२) पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा—नित्यः शब्दः प्रत्यक्षत्वात्। अस्मदादीन्द्रियग्रहणयोग्यतामात्रं प्रत्यक्षत्वमत्राभिप्रेतम्। ततो नाऽस्य पक्षत्रयव्यापकत्वं पक्षैकदेशवृत्तित्वं वा प्रसज्यत इति। (३) पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा—गौरयं विषाणित्वात्। (४) पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा—नायं गौर्विषाणित्वात्। (५) पक्षत्रयैकदेशवृत्तिर्यथा—नित्या पृथिवी प्रत्यक्षत्वात्। अयोग्यत्वविषयत्वमेवात्र प्रत्यक्षत्वं द्रष्टव्यम्। (६) पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा—द्रव्याणि दिक्कालमनांस्यमूर्त्तत्वात्। (७) पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा—न द्रव्याणि दिक्कालमनांसि, अमूर्त्तत्वात्। (८) सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा—न द्रव्याण्याकाशकालदिगात्ममनांसि, क्षणिकविशेषगुणरहितत्वात्।

## ❀ अनध्यवसितभेदाः ❀

अनध्यवसितभेदास्तूदाह्रियन्ते। (१) अविद्यमानसपक्षविपक्षः पक्षव्यापको यथा—सर्व्वमनित्यं सत्त्वात्। (२) अविद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा—सर्वमनित्यं कार्यत्वात्। (३) विद्यमानसपक्षविपक्षः पक्षव्यापको

अनित्यश्शब्दः आकाशविशेषगुणत्वात्। विद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा—सर्वं द्रव्यमनित्यम्, क्रियावत्त्वात्। अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापको यथा—सर्वं कार्यं नित्यम्, उत्पत्तिधर्मकत्वात्। अविद्यमानविपक्षो विद्यमानसपक्षः पक्षैकदेशवृत्तिर्यथा—सर्वं कार्यं नित्यं सावयवत्वात्।

कालात्ययापदिष्टभेदास्तु, प्रत्यक्षविरुद्धो यथा—अनुष्णोऽयमग्निः कृतकत्वात्। अनुमानविरुद्धो यथा—अनित्याः परमाणवः मूर्तत्वात्।

---

यथा—अनित्यः शब्द आकाशविशेषगुणत्वात्। (४) विद्यमानसपक्षविपक्षः पक्षैदेशवृत्तिर्यथा—सर्वं द्रव्यमनित्यं क्रियावत्त्वात्। (५) अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापको यथा—सर्व्वं कार्य्यं नित्यमुत्पत्तिधर्म्मकत्वात्। (६) अविद्यमानविपक्षो विद्यमानसपक्षः पक्षैकदेशवृत्तिर्यथा—सर्व्वं कार्य्यं नित्यं सावयवत्वादिति। नन्वविद्यमानसपक्षो विद्यमानविपक्षः पक्षव्यापकः पक्षैकदेशवृत्तिश्चाऽनध्यवसितभेदौ कस्मान्नोदाहृतौ? तयोः केवलव्यतिरेकित्वादिति चेत्, एवं तर्हि प्रधानान्वितानि सर्वकार्याणि डित्थाद्यन्वितानि चोत्पत्तिमत्त्वाद्रूपित्वाच्चेत्येवमादयोऽपि सम्यग्व्यतिरेकिणः स्युरिति, न; कालात्ययापदिष्टभागासिद्धदोषात्। अनध्यवसितभेदावेतौ भवताम्, कृत्स्नोदाहरणस्य चाऽप्रतिज्ञातत्वात्। सामान्यहेतुलक्षणानुवादेन हि केवलव्यतिरेकिणोपि लक्षणं विहितं द्रष्टव्यम्, तेनाऽतिव्यापकं न भवति।

## ❀ कालात्ययापदिष्टभेदाः ❀

कालात्ययापदिष्टभेदास्तु—

## ❀ प्रत्यक्षविरुद्धोदाहरणम् ❀

(१) प्रत्यक्षविरुद्धः प्रत्यक्षापहृतविषयः प्रत्यक्षबाधितविषय इत्येकोर्थः। यथा—अनुष्णोयमग्निः कृतकत्वात्।

## ❀ अनुमानविरुद्धोदाहरणम् ❀

(२) अनुमानविरुद्धो यथा—परमाणूनामनित्यत्वं मूर्त्तत्वात्।

## ❀ अनुमानविरुद्धानुमानानङ्गीकारस्तन्निरासश्च ❀

अन्ये त्वनुमानविरुद्धमनुमानं नानुमन्यन्ते, तुल्याधिकन्यूनबलत्वेपि

**आगमविरुद्धो यथा—ब्राह्मणेन पेयं सुरादि, द्रवद्रव्यत्वात् क्षीरवत् ।**

बाध्यत्वानुपपत्तेः । तुल्यबलत्वे किं कस्य बाधकं वाच्यम् ? बाध्यम् ? बाध्यं हि न्यूनबलमेव स्यान्न तुल्यबलम् । अधिकबलमपि बाधकं स्यान्न बाध्यम् । न्यूनबलं तु न्यूनत्वादेव दुष्टम्, किं तस्य बाधकेनेति ? प्रत्यक्षविरोध्यपि तर्हि न प्राप्नोति, यस्मादनुमानलक्षणोपपन्नमशक्यबाधम्, तद्विकलं तु तत एव दुष्टम्, अनर्थिका प्रत्यक्षबाधा । अथ त्रिरूपस्य प्रत्यक्षबाध्यत्वेनैवानुमानलक्षण-विकलत्वम्, हन्त तर्हि त्रिरूपस्य मूर्त्तत्वादेरनुमानबाधितत्वेनैव न्यूनत्वम्, नान्यथा । ननु च मूर्त्तत्वादेरन्यथासिद्धत्वेन दुष्टत्वम्, यतः कृतकत्वेनानित्यत्वं न मूर्त्तत्वेनेति, न; साधननियमाऽनभ्युपगमादनेकानि हि साधनान्येकत्रापि समर्थान्यभ्युपगम्यन्ते, अन्यथा हि सावयवत्वादयोऽप्यनित्यत्वसिद्धावन्यथासिद्धाः स्युः । किञ्च प्रत्यक्षागमविरुद्धयोरप्यन्यथासिद्धत्वाभ्युपगमे किं वाच्यम् ? न चान्यथासिद्धोऽसिद्धलक्षणेन संगृहीतोऽस्ति नापि विरुद्धादिलक्षणेनेति । काला-त्ययापदिष्टभेदस्यैव नामान्तरं कृतं स्यात् । कथं तर्हि बाध्यबाधकभावः ? उभयोरप्यनुमानत्वाविशेषादिति, न; बलाबलविशेषाद्यद्विचार्यमाणं बलवत् प्रतिभाति तद्बाधकमनुमानम्, यच्चाबलं तद्बाध्यम् । वस्तुतस्तत्रानुमानं यथो-ष्णोऽग्निरिति प्रत्यक्षमन्यनिमित्ताभावाद्विषयबलेन प्रवृत्तं बाधकमनुमानस्य न तु तोयादावुष्णमित्यलातचक्रादिप्रत्यक्षं वा । तत्र ह्यनुमानस्य बलीयस्त्वं तथा परमाणुस्वरूपसाधकेनानुमानेनाऽनित्यत्वानुमानं बाध्यते, धर्म्यसिद्धं वा । न चानित्यत्वे परमाणुत्वं क्षणभंगप्रधानवादनिराकरणे ह्यल्पपरिमाणमेव द्रव्यस्योपादानकारणम् । तच्च कथं परमाणूनां स्यात् ? यतो ह्यल्पतरन्नास्ति, स परमाणुरुच्यते । अनवधिकत्वे चाल्पतरादिभावस्य त्रुटिपर्व्वतादेरनन्तकार-णजन्यत्वाविशेषाद् गुरुत्वपरिमाणाभ्यां विशेषो न स्यात् । एवं परमाणुसाध-कानुमानस्यानित्यत्वेन विरोधाद् बलीयस्त्वम्, मूर्त्तत्वस्य तु नित्यत्वेन विरोधा-भावादबलत्वम् । परमाणुसाधकं चेदमनुमानम्—अणुतरतमादिभावः क्वचिद्वि-श्रान्तः परिमाणतरतमादिभावत्वान्महत्तरतमादिभाववदिति । एवं सर्व्वत्र बलाबलवत्ताधिगमेन बाध्यबाधकभावः प्रमाणयोर्निश्चेय इति ।

## * आगमविरुद्धोदाहरणम् *

(३) आगमविरुद्धो यथा—ब्राह्मणेन पेयं सुरादि, द्रवद्रव्यत्वात्, क्षीरवत् ।

नात्र पानमात्रं साध्यम्, किं तर्हि ? यत्पापानिमित्तं तच्चागमैकसमधिगम्यम्, नानुमानविषयः । न हि क्षीरपानस्यापि पापनिमित्तत्वं धर्महेतुत्वं वास्मदादिभिः

प्रत्यक्षैकदेशविरुद्धो यथा—सर्वं तेजोऽनुष्णं रूपित्वात्। अनुमानैक-देशविरुद्धो यथा—नित्याश्रयद्रवत्वरूपरसगन्धस्पर्शाः नित्याः, अप्रदेश-वृत्तिसमानजात्यारम्भकत्वे सति परमाणुवृत्तित्वात् तद्गतैकत्वादिवत्, आगमैकदेशविरुद्धो यथा—सर्वेषां देवर्षिणां शरीराणिपार्थिवानि शरीरत्वात्, अस्मदादिशरीरवत्।

---

प्रमाणान्तरेणाधिगन्तुं शक्यते। तस्मादविषये प्रवृत्तमनुमानमागमेन बाध्यते। न त्वरूपव्यापकात्मानुमानम्, [1]आदित्यवर्णाङ्गुष्ठमात्रपुरुषप्रतिपादकेनागमेन बाध्यते। तद्धयनुमानं स्वविषये प्रवृत्तम्, आगमस्त्वन्यार्थ इति।

## * प्रत्यक्षैकदेशविरुद्धोदाहरणम् *

(४) प्रत्यक्षैकदेशविरुद्धो यथा—सर्वं तेजोऽनुष्णम्, रूपित्वात्।

## * अनुमानैकदेशविरुद्धोदाहरणम् *

(५) अनुमानैकदेशविरुद्धो यथा—नित्याश्रयाः सर्वे द्रवत्वरूपरसगन्धस्पर्शा नित्या अप्रदेशवृत्तिसमानजात्यारम्भकत्वे सति परमाणुवृत्तित्वात् तद्गतै-कत्वादिवत्। संयोगविभागयोः समानजात्यारम्भकत्वं परमाणुवृत्तित्वं चास्ति, तद्व्यवच्छेदार्थमप्रदेशवृत्तिग्रहणम्। अनेकत्वसंख्या परिमाणारम्भिकेष्टा तद्व्यवच्छेदार्थं समानजात्यारम्भकत्वग्रहणम्। तत्राऽनुमानेन नैमित्तिकद्रव्य-त्वपाकजरूपादीनामेव नित्यत्वं विरुध्यते, न तु सांसिद्धिकद्रवत्वानादिपरमाणु-रूपादीनामिति।

## * आगमैकदेशविरुद्धोदाहरणम् *

(६) आगमैकदेशविरुद्धो यथा—सर्वेषां देवर्षीणां शरीराणि पार्थिवानि, शरीरत्वादस्मदादिशरीरवत्।

वरुणादित्यवाय्वादीनामाप्यतैजसवायव्यशरीरश्रवणात्। तत्प्रामाण्यानभ्यु-पगमे च धर्म्मिसिद्धिरपि न स्यादिति।

ननु चैते प्रत्यक्षविरुद्धादयः प्रतिज्ञाया एव दोषा, न हेतोरिति, न; कर्म्म-णस्तादवस्थ्यादित्येके, न ह्यन्यथाभिधानेऽप्यग्निरन्यथा भवति। कृतकत्वमप्यन्यथा न भवतीति हेतुदोषा अपि न स्युः, सत्यम्; सर्व्वं साधनं स्वविषये

---

१. "आदित्यवर्णं तमसः परस्तात्" (श्वेता० ३०३।८)। "अङ्गुष्ठमात्रः पुरुषः" (कठो० ४।१३) इत्यादिरत्रागमः।

प्रकरणसमस्योदाहरणं यथा—अनित्यश्शब्दः पक्षसपक्षयोरन्यतरत्वात्, सपक्षवत्। एकत्र तुल्यलक्षणविरुद्धहेतुद्वयोपनिपातो विरुद्धाव्यभिचारीत्येके यथा—नित्यमाकाशममूर्तद्रव्यत्वात्, आत्मवदिति। अनित्यमाकाशं अस्मदादिबाह्येन्द्रियग्राह्यगुणाधारत्वात्, घटादिवदिति। स खलु पुरुषविशेषमपेक्षमाणो हेत्वाभासो भवति, अन्यतरासिद्धवदिति।

---

समर्थम् तद्यद्यविषये पुरुषेण प्रयुक्तमर्थसिद्धिं न करोति। ततः पुरुष एवापराध्यते, योऽपरिज्ञानादविषये प्रयुङ्क्ते न त्वचेतनस्य साधनस्य कश्चिदुपालम्भोऽस्ति। किन्तु तद्द्वारेण पुरुषस्यैव दोष उद्भाव्यते। यथा चित्रादिकार्यद्वारेण तत्कर्तुरिति। एवं तर्हि प्रतिज्ञाद्वारेणापि तद्वक्तुर्दोषोद्भावने काचिन्न क्षतिरिति प्रतिज्ञादोषा अपि वक्तव्याः। ते खलु प्रत्यक्षादिविरोधाः प्रतिज्ञाद्वारेणोद्भावयितुं विवक्षितास्तदा हेतुदोषा इति।

नन्वन्येपि स्ववचनविरोधादयः प्रतिज्ञादोषाः सन्ति ते कस्मान्नोक्ताः? तेषां प्रत्यक्षादिविरोधेष्वेवान्तर्भावात्। प्रमाणत्रयनियमस्येष्टत्वात्, न चाप्रमाणेन विरोधोस्ति। न शब्दोऽर्थप्रत्यायक इति स्ववचनविरोधः। सांख्यस्यासत्कार्यमिति स्वशास्त्रविरोधः। शास्त्रं प्रमाणीकृत्य प्रवृत्तस्य प्रतिज्ञायाः शास्त्रेण विरोधः, प्रतिज्ञया वा शास्त्रस्येति। अचन्द्रः शशीति प्रसिद्धिविरोधः। हेतुरकिञ्चित्कर इति प्रतिज्ञापदयोर्विरोधः। त इमे विरोधा आगमविरोधेऽनुमानविरोधे वान्तर्भूता द्रष्टव्या इति।

## * प्रकरणसमोदाहरणम् *

प्रकरणसमस्य तु भेदाभावात्सामान्येनोदाहरणमुक्तमिति। एकत्र धर्म्मिणि तुल्यलक्षणयोर्विरुद्धयोर्हेत्वोः सन्निपातो विरुद्धाव्यभिचारीत्येके यथा—अनित्यः शब्दः सामान्यवतोस्मदादिबाह्येन्द्रियग्राह्यत्वाद् घटवत्; नित्यः श्रवणत्वात् शब्दत्वादिवदिति।

## * विरुद्धाव्यभिचारिणोऽहेत्वाभासत्वाशङ्का *

अत्राहुः—समस्तव्यस्तप्रयोगासम्भवान्नायं हेत्वाभासः, पृथक् समस्तस्यान्यत्रासम्भवादसाधारणत्वम् व्यस्तप्रयोगं यद्येकः कुर्यात्तदोन्मत्तः स्यात्। द्वौ चेद्वादिनौ युगपत्कुर्वाते, ततोऽर्थप्रतिपत्तिर्न स्यात्। अथ क्रमेण, ततः प्रथमस्य दुष्टत्वमदुष्टत्वं वावगतम्? दुष्टत्वे कथमव्यभिचा-

**सम्यग्दृष्टान्ताभिधानमुदाहरणम्, तद् द्विविधम्—साधर्म्यवैधर्म्य-भेदात्। अन्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणं यथा—अनित्यश्शब्दः तीव्रादिधर्मोपेतत्वात्। यद्यत्तीव्रादिधर्मोपेतं तत्तदनित्यं दृष्टम्, यथा—सुखादीति। व्यतिरेकमुखेन दृष्टान्ताभिधानं वैधर्म्योदाहरणम्, यथा—यदनित्यं न भवति तत्तीव्रादिधर्मोपेतमपि न भवति यथा—आकाशमिति।**

---

रित्वम्? अदुष्टत्वे तत्साधितेऽर्थे तद्विरुद्धहेतोरुत्थानमेव न स्यात्, प्रत्यक्षविरुद्धवत्।

## ❀ तन्निरासः स्वमतस्थापनं च ❀

अत्रोच्यते—पुरुषविशेषमपेक्ष्यायं हेत्वाभासोन्यतरासिद्धप्रकरणसमवत्। यच्चोक्तम्—प्रथमस्य दुष्टत्वमदुष्टत्वं वेति, तन्न; विप्रतिपत्तिवदविशेषमात्रदर्शनात्तद्विशेषप्रकाशनार्थमेव हि प्रतिवादी द्वितीयं प्रयुङ्क्ते विशेषानभिधाने हि सन्देहोऽत्र युक्तो नान्यतरपक्षनिश्चय इत्यभिप्रायवान्। यथा सम्यक्त्वासम्यक्त्वानिश्चये विप्रतिपत्तेरुत्थानं तथाऽव्यभिचारिणोऽपीति। अव्यभिचारित्वं चोभयोः प्रतिपत्रभिप्रायेण न परमार्थतस्ततो[1] नोभयपक्षसिद्धिः प्रसज्यते। यदा वादी विपक्षबाधकद्वारेण स्वहेतो साध्याविनाभावित्वसमर्थनमितरस्य तु कालात्ययापदिष्टतोद्भावनं च कर्तुं न शक्नोति, तदा विरुद्धाव्यभिचारी हेत्वाभास इति॥

## ❀ उदाहरणलक्षणम् ❀

सम्यग्दृष्टान्ताभिधानमुदाहरणम्। तद्द्विविधम्—साधर्म्योदाहरणं वैधर्म्योदाहरणं च। तत्रान्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणम्। यथाऽनित्यः शब्दस्तीव्रादिधर्मोपेतत्वात्। यद्यत्तीव्रादिधर्मोपेतं तत्तदनित्यं दृष्टम्, यथा सुखादि। व्यतिरेकमुखेन दृष्टान्ताभिधानं वैधर्म्योदाहरणम्। यथा—यदनित्यं न भवति न तत्तीव्रादिधर्मोपेतम्, यथाकाशमिति सूत्रतोऽप्युदाहरणद्वैविध्यमुक्तम्। यदाह—"साध्यसाधर्म्यात्तद्धर्म्मभावी दृष्टान्त उदाहरणम्" (न्या० सू० १।१।३६) "तद्विपर्ययाद्वा विपरीतमिति" (न्या० सू० १।१।३७)। साध्यस्य साधर्म्यमुदाहरणेन हेतुलक्षणे व्याख्यातम्। तद्धर्म्मः साध्यधर्म्मः स भवति विद्यते यत्र धर्म्मिणि स तद्धर्मभावी दृष्टान्तः। तद्विपर्ययादिति साध्यवैधर्म्यादतद्धर्म्मभावी

---

१. ततः = ताभ्यां विरुद्धाव्यभिचारिभ्यामित्यर्थः।

उदाहरणलक्षणरहिता उदाहरणवदवभासमाना उदाहरणाभासाः।

दृष्टान्त उदाहरणम्। पूर्ववदस्यापि व्याख्यानम्। अत्र पञ्चम्यर्थं न पश्यामः। साध्यसाधर्म्यात्तद्धर्म्मभावी किमुत्पद्यते? किं वा ज्ञायते? न तावदुत्पद्यते, अन्यत उत्पन्नत्वात्कस्यचिन्नित्यत्वाच्च। नापि ज्ञायते, प्रत्यक्षतः साधनान्तराद्वा निश्चितत्वात्। तस्मादन्यथा व्याख्यायते—विशेषलक्षणमेवात्र दृष्टान्तस्योच्यते। सामान्यलक्षणं तु प्रागेव लौकिकः परीक्षकेत्यादिनोक्तम्। तदनुवादेन साधर्म्यं-वद्वैधर्म्यं चाऽत्र विशेषलक्षणं द्रष्टव्यम्। पंचमी तु तद्भेदसिद्ध्यर्थम्। एतदुक्तं भवति—पूर्व्वोक्तो दृष्टान्तो द्विविधस्तद्धर्म्मभावी अतद्धर्मभावी च। साधर्म्यं-वान्वैधर्म्यवानित्यर्थः। तत्र पूर्व्व इतरस्मात् कुतो भिन्नः प्रतिपत्तव्य इत्याह—साध्यसाधर्म्यादित्येव। द्वितीयेपि व्याख्यानम्। यदेतत्तत्रैव दृष्टान्तलक्षणे वक्तव्येऽत्राऽभिधानं समेदोदाहरणलक्षणप्रसिद्धार्थम्। दृष्टान्त उदाहरण-मित्येतत्सामानाधिकरण्यं कथम्? अभिधीयमान इत्यध्याहारेणेत्येको यद्वा शास्त्रान्तरेषु दृष्टान्त उदाहरणमित्यभेदेन व्यवहारः प्रसिद्धस्तस्य गौणत्व-ज्ञापनार्थमत्राप्युपचारेण दृष्टान्त उदाहरणमित्युक्तम्। दृष्टान्तगुणदोषाभ्या-मुदाहरणस्य गुणदोषवत्त्वमिति चोपचारे प्रयोजनम्। वाक्यैकदेशा ह्यवयवा इत्युक्तं, न चार्थो वाक्यैकदेशस्तस्माद्वचनमेव मुख्यत उदाहरणं न दृष्टान्तः। [1]तद्वचनमित्यध्याहारो वाश्रयणीय इति। दृष्टान्तवचनमुदाहरणमित्युक्तेऽप्यु-दाहरणाभासाः प्रत्युक्ता भवन्ति, तेषामदृष्टान्तवचनत्वात्, तत् किमर्थं सम्यग्ग्रहणमिति? न; वचनदोषस्यापि व्युदासार्थत्वात्तथा च वक्ष्यामः। उदाहरणवदाभासमाना उदाहरणाभासाः। तल्लक्षणरहितत्वं विशेषणं हेत्वाभासवदत्रापि द्रष्टव्यम्। तत्त्वमपि केषांचित् तद्वद् अवभासते तद्व्यवच्छेदार्थमिति।

---

१. वार्तिकेऽप्येवमेवाशङ्क्य परिहृतम्—"ननु च करणकारकपरिग्रहाद् वचनमु-दाहरणं दृष्टान्तश्चार्थो न चानयोः सामानाधिकरण्यं युज्यत। न हि विषाणा-दित्यभिधानं गवा सामानाधिकरण्यं भवति, नैष दोषः; वचनविशेषणत्वेन दृष्टान्तस्योपादानात्" ( न्या० वा० पृ० १३४ )। उभयथाऽत्र सामानाधिक-रण्यं सम्पिपादयिषितम्—वाचकस्य वाच्ये, वाच्यस्य वा वाचके लक्षणामा-श्रित्य। तत्रासञ्जातविरोधित्वन्यायेन द्वितीये पदे लक्षणां मत्वाह—'दृष्टान्त-उदाहरणाभिधीयमानः' इति। अवयवप्रक्रमात् स्थानप्राधान्यनीत्या प्रधान-मुदाहरणम्। तत्र लक्षणानौचितीं सञ्चिन्त्य गुणेऽन्यायलक्षणया—'दृष्टान्तवचनमुदाहरणम्' इत्याहेत्यभिसन्धिः।

ते चानेकप्रकाराः—तथा चानित्यं मनो मूर्तत्वादित्येतस्मिन्प्रयोगे सर्व उदाहरणाभासा उच्यन्ते—यन्मूर्तं तदनित्यं दृष्टम्, यथा परमाणुरिति साध्यविकलः। यथा—कर्मेति साधनविकलः, यथा—आकाशमित्युभय-विकलः, यथा—नरविषाणमित्याश्रयहीनः, घटवदित्यव्याप्त्यभिधानम्,

## ❀ उदाहरणाभासाः ❀

ते चोदाहरणाभासा अनेकप्रकाराः साध्यविकलः साधनविकल इत्येवमादयोऽष्टावर्थदोषाश्चत्वारो वचनदोषाः; त एवैते द्वादशभेदा बहुभिराचार्यैरभ्युपगता इत्यादावुद्दिष्टा द्रष्टव्याः। तथा च तद्भेदप्रतिपत्त्यर्थं तदुदाहरणानि द्वादशैवोच्यन्ते। तत्र ग्रंथगौरवपरिहारार्थम् अनित्यं मनो मूर्त्तत्वादित्येतस्मिन् प्रयोगे सर्वाण्युदाहरणान्युच्यन्त इति। यन्मूर्त्तं तदनित्यं दृष्टम्, यथा परमाणुरिति साध्यविकलः। अनित्यत्वसाध्येन विकलः परमाणुरिति। यथा कर्मेतिसाधनविकलः, मूर्त्तत्वं साधनं तेन विकलोऽयं दृष्टान्तः। यथा आकाशमित्युभयविकलः, उभयेनाऽनित्यत्वेन मूर्त्तत्वेन च विकलः। खरविषाणमित्याश्रयहीनोयं दृष्टान्तः स्वयमसति धर्म्मिणि किमाश्रयः साध्यसाधनधर्म्मयोः व्याप्यव्यापकभावः प्रतीयते। तदप्रतीतौ वचनमात्रेण प्रतीतौ वा किं दृष्टान्तस्य फलम्? प्रधानादिप्रतिषेधोपि नाप्रमाणकेन दृष्टान्तेन कर्त्तव्यः, किं तर्हि? परमाण्वादिसमर्थनन्यायेन। न हि सुखादेरात्माश्रितत्वे परमाण्वाकाशनित्यत्वे च प्रधानादिसिद्धिः सम्भवति। तद्व्यवहारप्रतिषेधोप्येवं कार्यः—प्रधानाद्यस्तीति व्यवहारः प्रेक्षावद्भिर्न कर्त्तव्यः; प्रमाणतोऽनुपलभ्यमानार्थत्वात्, खपुष्पाद्यस्तीति व्यवहारवत्। एवं तर्हि हेतुदृष्टान्तयोर्नाश्रयासिद्धत्वादिदोषः। प्रमाणतोऽनुपलभ्यमानार्थत्वं च परोक्तानामन्वयपरिमाणादिहेतूनां प्रतिषेधेन समर्थनीयमिति।

## ❀ उक्तदूषणमनिच्छतां मतम् ❀

घटवदित्यव्याप्त्यभिधानं शब्ददूषणं केचिदिच्छन्ति किल। यद्यदिति वीप्सया यदित्थं तत्सर्व्वमित्येवं वा व्याप्तिः प्रत्याय्यते नान्यथेति। अन्ये त्विदं दूषणं नाऽनुमन्यन्ते, सर्व्वशास्त्रेष्वेवं प्रयोगदर्शनात्। न प्रतिवादिवाचः स्वातन्त्र्येण प्रमाणम्, किं तर्हि? प्रमाणान्तरानुगृहीतम्। ततश्च यदि प्रत्यक्षादिसिद्धाऽस्ति व्याप्तिस्तदानित्यः शब्दः कार्य्यत्वाद् घटवदिति एवमपि प्रतीयते। अथ न प्रत्यक्षादिसिद्धा तदा वीप्सा सर्व्वग्रहणाभ्यामपि न प्रतीयते। सिद्धानुवादार्थं हि दृष्टान्तवचः न त्वसिद्धविधायकमिति।

यदनित्यं तन्मूर्तं दृष्टमिति विपरीतव्याप्त्यभिधानम्। एतौ शब्ददोषौ। यदनित्यं न भवति तन्मूर्तमपि न भवति यथा—परमाणुरिति साधनाव्यावृत्तः। यथा—कर्मेति साध्याव्यावृत्तः। यथा—घट इति उभयाव्यावृत्तः। यथा—खपुष्पमित्याश्रयहीनः। यथा—आकाशमित्यव्याप्त्यभिधानम्। यन्मूर्तं न भवति तदनित्यमपि न भवति, यथा—आकाशमिति विपरीतव्याप्त्यभिधानम्—एतौ वचनदोषौ। अत्राद्याः षट् साधर्म्योदाहरणाभासाः। इतरे षड् वैधर्म्योदाहरणाभासाः।

---

यदनित्यं तन्मूर्त्तं दृष्टमिति विपरीतव्याप्त्यभिधानम्। साधनाऽनुवादेन हि साध्यं विधातव्यम्, येन साधनस्य साध्यसिद्धौ सामर्थ्यं प्रतिपादितं स्यात्। अन्यथा ह्यसाधनांगवचनं स्यात्। नहि यो यः कश्चिदग्निमान् स स धूमवानित्येवं शब्दादग्निना व्याप्तो धूमः प्रतीयत इति। एतौ शब्ददोषौ अव्याप्त्यभिधान-विपरीतव्याप्त्यभिधानाख्यौ। पूर्वे चत्वारोऽर्थदोषा इत्येते षट् साधर्म्योदाहरणाभासा उच्यन्ते।

## ※ वैधर्म्योदाहरणाभासाः ※

अथ वैधर्म्योदाहरणाभासा उच्यन्ते। अनित्यं मनो मूर्त्तत्वादित्येतस्मिन्नेव प्रयोगे यत्तु नित्यं तन्मूर्त्तमपि न भवति, यथा—परमाणुरिति दृष्टान्तः साधनाऽव्यावृत्तः। उदाहरणाभासापेक्षया वा साध्यविकलादीनामपि पुँल्लिङ्गता द्रष्टव्या। साधनं मूर्त्तत्वं तद्व्यावृत्तं यस्मात्परमाणोः स तथोक्तः। यथा—कर्मेति साध्याव्यावृत्तः, साध्यमनित्यत्वं तत्कर्मणो न व्यावृत्तम्। यथा घट इत्युभयाऽव्यावृत्तः, साध्यं साधनं चोभयं न व्यावृत्तं यस्मात्स तथोक्तः। यथा—खपुष्पमित्याश्रयहीनः। केश्चिद्वैधर्म्यदृष्टान्ते धर्म्यभावो दोषत्वेन नाभ्युपगम्यते, तन्निषेधार्थमिहाप्याश्रयहीन उक्तः। केवलान्वयिप्रस्तावे ह्युक्तं यत्र व्यतिरेकबलेन सिद्धिरिष्यते तत्राऽवश्यं वैधर्म्यदृष्टान्ताश्रयोप्येष्टव्यो वचनमात्रेण व्याप्तिसिद्धावतिप्रसंगादिति। आकाशवदित्यव्यावृत्ताभिधानम्, मूर्त्तत्वमनित्यत्वं चाकाशाद्व्यावृत्तम्। न चानेन शब्देन तथाऽभिहितमिति शब्ददोषोयम्। तुल्यार्थे हि वतिः श्रूयते, कथं ततो व्यावृत्तप्रतीतिः? न च वीप्सां सर्व्वशब्दं चान्तरेण सर्व्वस्माद्विपक्षाद्व्यावृत्तिः साध्यसाधनयोः प्रतीयत इत्यतोत्राव्यावृत्ताभिधानम्। यदमूर्त्तं तदनित्यं न भवति यथाकाशमिति विपरीतव्यावृत्ताभिधानं, साध्यव्यावृत्तानुवादेन हि साधनं व्यावृत्तं विधातव्यम्। येन साध्यस्य साधनव्यापकत्वं साधनाभावस्य साध्याभावव्यापकत्वं च प्रतीयेत। साधनव्यावृत्तानुवादेन तु साध्यं व्यावृत्तं यदुच्यते तदिदं विपरीतव्यावृत्ताभिधानं न साधनांगम्।

अन्ये तु सन्देहद्वारेणापरानष्टावुदाहरणाभासान् वर्णयन्ति। (१) सन्दिग्धसाध्यो यथा—महाराज्यं करिष्यत्ययं सोमवंशोद्भूतत्वाद्, विवक्षितराजपुरुषवत्। (२) सन्दिग्धसाधनो यथा—नायं सर्वज्ञः, रागादिमत्त्वात्, रथ्यापुरुषवत्। (३) सन्दिग्धोभयो यथा—गमिष्यत्ययं स्वर्गं विवक्षितः पुरुषः, समुपार्जितशुक्लधर्मत्वात्, देवदत्तवत्। (४) सन्दिग्धाश्रयो यथा—नायं सर्वज्ञः, बहुवक्तृत्वात्, भविष्यद्देवदत्तपुत्रवत्। (५) सन्दिग्धसाध्याव्यावृत्तो यथा—यो महाराज्यं न करिष्यति स सोमवंशोद्भूतोऽपि न भवति, यथाऽन्यो राजपुरुषः। (६) सन्दिग्धसाधनाव्यावृत्तो यथा—यस्तु सर्वज्ञः स रागादिरहितः, यथा—समस्तशास्त्राभिज्ञः। (७) सन्दिग्धोभयाव्यावृत्तो यथा—यः स्वर्गं न गमिष्यति, स समुपार्जितशुक्लधर्मोऽपि न भवति, यथा—दुष्टः पुरुषः। (८) सन्दिग्धाश्रयो यथा—यः सर्वज्ञः स बहुवक्तापि न भवति, यथा—भविष्यद्देवदत्तपुत्र इति।

दृष्टान्ते प्रसिद्धाविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्ति-

---

न हि भवति यत्र नास्ति धूमस्तत्र सर्व्वत्राऽग्निर्नास्तीति। तस्मादत्रापि द्वौ शब्ददोषौ चत्वारोऽर्थदोषाः साधनाव्यावृत्तादय इति वैधर्म्योदाहरणाभासा अपि षट्।

## ❀ सन्देहद्वारेणोदाहरणाभासाः ❀

अन्ये तु संदेहद्वारेणाऽपरानष्टावुदाहरणाभासान् वर्णयन्ति—(१) संदिग्धसाध्यो यथा—महाराज्यं करिष्यत्ययं सोमवंशोद्भूतत्वात्, विवक्षितराजपुरुषवत्। (२) संदिग्धसाधनो यथा—नायं सर्व्वज्ञो रागादिमत्त्वात्, रथ्यापुरुषवत्। (३) संदिग्धोभयो यथा—गमिष्यति स्वर्गं विवक्षितः पुरुषः, समुपार्जितशुक्लधर्म्मत्वात् देवदत्तवत्। (४) संदिग्धाश्रयो यथा—नायं सर्व्वज्ञो बहुवक्तृत्वाद् भविष्यद्देवदत्तपुत्रवत्। (५) संदिग्धसाध्यव्यावृत्तो यथा—यो महाराज्यन्न करिष्यति स सोमवंशोद्भूतोपि न भवति यथाऽन्यो राजपुरुषः। (६) संदिग्धसाधनाव्यावृत्तो यथा—यस्तु सर्व्वज्ञः स रागादिरहितः, यथा—समस्तशास्त्राभिज्ञः। (७) संदिग्धोभयाव्यावृत्तो यथा—यः स्वर्गं न गमिष्यति स समुपार्जितशुक्लधर्म्मोपि न भवति, यथा—दुष्टः पुरुषः। (८) संदिग्धाश्रयो यथा—यः सर्व्वज्ञः स वहुवक्तापि न भवति, यथा भविष्यद्देवदत्तपुत्रः।

## ❀ उपनयनिरूपणम् ❀

दृष्टान्ते प्रसिद्धाविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्ति-

**ख्यापकं वचनमुपनयः । स च द्विविधः—तथा च तीव्रादिधर्मोपेतश्शब्द इति साधर्म्योपनयः । न च तथा तीव्रादिधर्मोपेतश्शब्दो न भवतीति वैधर्म्योपनयः ।**

---

ख्यापकं वचनमुपनयः । स च द्विविधः । तथा च तीव्रादिधर्मोपेतः शब्द इति साधर्म्योपनयः । न च तथा तीव्रादिधर्मोपेतः शब्दो न भवतीति वैधर्म्योपनयः। तथा च सूत्रम्––"उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः" (न्या० सू० १।१।३८) । उदाहरणेऽविनाभावसिद्धावपेक्षा यस्य स उदाहरणापेक्षः दृष्टान्ते प्रसिद्धाविनाभाव इत्यर्थः । तथेत्यादिना दृष्टान्तोपमानेनेत्युक्तं भवति । साध्यस्य सम्बन्धत्वेनोपसंहारोऽर्थलक्षणापेक्षयोपसंह्रियत इत्युपसंहारः । पक्ष व्यापित्वेन ख्याप्यमानो हेतुरित्यर्थः । तथा चोपनीयत इत्युपनयः । प्रासंगिकं चात्रार्थलक्षणम् । अवयवलक्षणापेक्षया तूपसंह्रियतेऽनेनेत्युपनीयतेऽनेनेत्युभयत्रापि करणव्युत्पत्तिः ।

## ❀ उपनयस्यानर्थक्याशङ्का तन्निराकरणं च ❀

ननु चोपनयवचनमनर्थकं, व्याप्तेरुदाहरणेनैव प्रतिपादितत्वात् । अन्तर्व्याप्तिसिद्ध्यर्थमिति चेत्, न; हेतुवचनात्तत्सिद्धेः । चाक्षुषत्वादिवचनादपि तत्सिद्धिप्रसंग इति चेत्, न; तस्य हेत्वाभासवचनत्वात् । किं च तथा च चाक्षुषः शब्द इत्युपनयादपि न तस्य पक्षधर्म्मत्वं प्रतीयते । किं च हेतुवचनस्यानर्थक्यप्रसंगादुपनयादेव तदर्थसिद्धेः । तस्माच्छब्दकरणत्वप्रतीतिरपि भविष्यति । अविशिष्टं करणमात्रं हेतुवचो वक्त्युपनयेन तु निश्चितशक्तिकं पक्षविशिष्टं चोच्यत इति चेत्, न; अविशिष्टकारणमात्राभिधानस्य निष्प्रयोजनत्वात् । पक्षधर्म्मत्वनिश्चायकं प्रमाणमुपनयेनोच्यत इत्यप्ययुक्तम्, हेतुवचोवदस्यापि वचनमात्रत्वान्न ह्यस्मादपि प्रमाणविशेषः प्रतीयते । तत्फलोपसंहारार्थमिति चेत्, न; प्रयोजनाभावाद्धेतुवचनमेव वा तदर्थमस्तु, अन्यथोदाहरणार्थसमर्थनप्रमाणफलोपसंहारार्थमप्यवयवान्तरं करणीयं स्यादिति । स्वार्थे तदर्थो दृष्ट इत्यपरे यस्मात्किल स्वार्थानुमाने व्याप्तिस्मृत्यनन्तरं तथा चायमिति परामर्शज्ञानं भवति, तदनन्तरं च लिंगिज्ञानमित्ययं दृष्टः क्रमः, स चावश्यं वाच्यः स्वप्रतिपत्त्युपायप्रतिपादनार्थं हि परार्थानुमानमिति, न; परामर्शज्ञानास्तित्वे प्रमाणाभावात् । उपनयानर्थक्यप्रसंग इति चेत्, शोभनं प्रमाणम्, इतरेतराश्रयत्वं च स्यात् । किं चानुमानागमाधिगते लिंगे परामर्शज्ञानं कुतो भवति ? मानसप्रत्यक्षादिति चेत्, तदयुक्तम्; प्रमाणाभावात् । किं चातीन्द्रियेष्वपि प्रत्यक्षप्रवृत्त्यभ्युप-

गमेऽनुमानाद्यानर्थक्यप्रसंगः । कार्यं दृष्ट्वा च कारणं कल्प्यते । न च परामर्शाख्यं कार्यं निश्चितं, नापि तदभावे किंचिद्दृष्टं विरुध्यते, यतस्तत्कल्प्येत । लिंगदर्शनव्याप्तिस्मृतिभ्यामयमग्निमानित्याद्यनुमानप्रवृत्तेरविरोधात् । किं च यदि नामाऽदृढमतिः पुनः पुनर्दर्शनमपेक्षते, किमेतावता परार्थेऽप्यावृत्त्योपदेष्टव्यम् ? क्वचिदावृत्त्या व्याप्तिस्मृत्यपेक्षित्वे दृष्टान्तस्याप्यावृत्त्याभिधानप्रसंगात्, तस्मात्साधनांगमेव वक्तव्यमिति; हेतोरबाधितविषयत्वख्यापनार्थमुपनय इत्यदोषः । कथम् ? यथा कृतको घटादिरनित्यो दृष्टः प्रत्यक्षादिना न बाध्यते, तथा च कृतकः शब्दः, शब्दोपि कृतकः सन्ननित्यः प्रतीयमानः प्रत्यक्षादिना न बाध्यत इत्यर्थः । 'न च तथा शब्दोऽकृतकः—इत्यस्याप्ययमर्थः—यथाकाशादि नित्यमकृतकं च प्रमाणत उपलब्धं, न च तथा शब्दः; यतोऽकृतकस्तावन्न भवति, कृतकत्वोपलम्भान्नापि कृतकोऽपि सन्नित्यत्वविशिष्टः प्रमाणेनोपलभ्यते; तस्मादनित्यत्वाऽविनाभाव्येव कृतकत्वमिति ।

## ❀ अबाधितविषयत्वस्य हेत्वरूपताशंका तन्निरासश्च ❀

यत्पुनरेतल्लक्षणयुक्ते बाधासमवेतलक्षणमेव दूषितं स्यात्तस्माद् बाधाऽविनाभावयोर्विरोधान्नाबाधितविषयत्वं हेतुरूपमिति, तदयुक्तम्; यो हि त्रैरूप्यं हेतुलक्षणमाचष्टे तन्मते तल्लक्षणं दूषितमेवास्तु, का नः क्षतिः ? वयं तु पंचरूपत्वं चतूरूपत्वं वा हेतुलक्षणं ब्रूमस्तत्कथमस्माकमयमुपालम्भः ? न च त्रिष्वेवाविनाभावः पर्यवसितः, किं तर्हि ? पंचसु चतुर्षु वा तस्मादविनाभावस्वरूपमज्ञात्वैव बाधाविनाभावयोर्विरोधादित्युक्तम् । को ह्यविनाभावयुक्तस्य बाधां ब्रूते ? त्रिरूपस्य तु बाधा दर्शितैव । अबाधयैव साध्यसिद्धेर्व्यर्थो हेतुरिति चेत्, न; अबाधाया हेतुधर्मत्वादक्षज्ञानवत् । यथाऽक्षज्ञानस्य तत्त्वातत्त्वसंशये सत्यबाधा निश्चयेन तत्त्वाधिगमेऽक्षज्ञानं व्यर्थमबाधयैव साध्यसिद्धेरिति चोद्यं न युक्तम्, अबाधायास्तद्धर्म्मत्वात्, तथा हेतोरबाधानिश्चयेनाविनाभावित्वाधिगमोऽस्तु । न तु वैयर्थ्यमिति । किं चाऽबाधितविषयत्वरूपाऽनभ्युपगमे उष्णोऽग्निः कृतकत्वादित्यादेरपि गमकत्वप्रसंगः पक्षधर्म्मत्वाभावान्नेति चेत् । स्यादेतत्स्वरूपेणैव निर्देशाः स्वयमिष्टोऽनिराकृतः पक्ष उच्यते । न च तथालक्षणे पक्षे कृतकत्वादेर्वृत्तिरतोऽपक्षधर्म्मत्वादेव तस्यागमकत्वमिति । एवं तर्ह्यनिराकृतत्वनिश्चयादेव साध्यसिद्धौ व्यर्थो हेतुः स्यात्तदनिश्चये त्वनिश्चितं पक्षधर्म्मत्वं कथं गमकाङ्गम् ? अथाऽनिराकृतत्वनिश्चयेपि नाऽन्तरेण हेतुं साध्यसिद्धिस्तत्किमुच्यते—अबाधयैव साध्यसिद्धेर्व्यर्थो हेतुरिति अनिराकृताबाधितशब्दयोः पर्यायत्वात् । वाद्यभ्युपगमापेक्षयैव पक्षत्वं

**उपनयानन्तरं सहेतुकं प्रतिज्ञावद्वचनं निगमनम्, तस्मादनित्य एवेति। न चेदमनर्थकं, साध्यविरुद्धाभावप्रतिपादकप्रमाणसूचकत्वादस्य। न च तदन्तरेण साध्यावधारणत्वमुपपद्यते। तथा चोक्तम्—"विमृश्य**

---

तद्वृत्तेर्हेतोः पक्षधर्म्मत्वमेवेति वादिनः प्रायेण संप्रतिपन्नास्तदभिप्रायवशादबाधितविषयत्वं हेतुरूपं पक्षधर्मत्वरूपात् पृथगुक्तं, तत्ख्यापनार्थमुपनयवचनमिति।

## ❀ निगमननिरूपणम् ❀

उपनयानन्तरं निगमनं वक्तव्यं, तदुच्यते—सहेतुकं प्रतिज्ञावद्वचनं निगमनम्। तस्मादित्यनूद्यमानहेतुसहितं सहेतुकम्। प्रतिज्ञावदिति तत्तुल्यं न तु प्रतिज्ञैव; निगमनस्य भिन्नार्थत्वेन प्रतिज्ञालक्षणाभावात्। अभिन्नार्थत्वे वा पुनरुक्तत्वं स्यादिति। "हेत्वपदेशात् प्रतिज्ञायाः पुनर्व्वचनं निगमनम्" (न्या० सू० १।१।३९) इति सूत्रम्। हेत्वपदेशादुपनयनादित्येके। वयं तु ब्रूमस्तस्मादित्ययं हेत्वनुवादो हेत्वपदेशः। हेत्वपदेशेन सहेति प्राप्ते मोहनिवृत्तये तृतीयास्थाने पञ्चम्युक्ता, अन्यथोदाहरणात् प्रागेव हेत्वपदेशेन सह प्रतिज्ञायाः पुनर्वचनं प्रयोक्तव्यमित्याशंकापि स्यात्। प्रतिज्ञायाः पुनर्वचनमिवेत्युपमात्र द्रष्टव्या। निगम्यन्ते प्रतिज्ञादय एकार्थत्वेन व्यवस्थाप्यन्तेऽनेनेति निगमनम्।

अथेदं किंप्रयोजनमिति? वाक्यपरिसमाप्त्यर्थमित्येके। तदयुक्तम्; तत्समाप्तौ प्रयोजनाभावात्। अनुमानेन ह्यत्रार्थः प्रतिपादयितुमिष्टस्तेनाविनाभाविलिंगमेव वक्तव्यं ततः साध्यं स्वयमेवावगच्छतीति। गम्यमानार्थस्यानभिधाने निदर्शनादेरप्यनभिधानप्रसङ्ग इति चेत्, भवतु, यदि तदन्तरेणापि साध्यसिद्धिर्भवति। न हि व्यसनमेवैतदस्य यत्सिद्धेऽप्यर्थेऽवश्यं वाक्यं पूरयितव्यमिति। अपि चोक्तम्—"विदुषां वाच्यो हेतुरेव हि केवल" इति यदर्थे दृष्टान्त उच्यते सोर्थश्चेत्सिद्धः किं तद्वचनेन। अप्रतिपन्नाविनाभावान् प्रति युक्तं तद्वचनम् अविनाभावि लिंगप्रतीतौ च तस्मादिदमित्थमिति भवत्येव प्रतीतिः किं तत्र निगमनेनेति, तदप्ययुक्तम्; यस्मान्नेदमनर्थकं साध्यविरुद्धाभावप्रतिपादकप्रमाणसूचकत्वादस्य। एतदुक्तं भवति—असत्प्रतिपक्षत्वाप्रतिपादनेऽप्यविनाभावोऽप्रतिपादित एव स्यात् पक्षधर्म्मत्वादिवदसत्प्रतिपक्षत्वस्यापि हेतुरूपत्वात्तत्प्रतिपादनार्थं च निगमनम्। तथाहि—तस्मादनित्य इति सत्यारम्भो नियमं गमयत्यनित्य एव तस्मान्न नित्य इति साध्यविरुद्धस्य प्रतिपक्षाख्यस्याऽसत्त्वं गम्यते ततश्च नाऽयं विरुद्धाव्यभिचारी न प्रकरणसम इति सिद्धं भवति। ननु प्रतिपक्षाभावसिद्धौ प्रमाणान्तरं वाच्यं न निगमनाख्यं

पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः'' ( न्या० सू० १।१।४१ ) इति। निगमनाभिधानमसाधनाङ्गमभ्युपगम्य बाधकं प्रमाणमभ्युपगच्छतो निग्रहस्थानं प्रसज्यते, निगमनार्थत्वाद् बाधकस्य। निगमनार्थविप्रतिपत्तौ हि बाधकप्रमाणोपन्यासो युक्तः। हेत्वर्थविप्रतिपत्तो तत्साधकप्रमाणोपन्यासवदिति। सोऽयं परमो न्यायः, विप्रतिपन्नपुरुषं प्रति प्रतिपादकत्वात्, कथाप्रवृत्तिहेतुत्वाच्च।

---

वचनमात्रं विप्रतिपन्नं प्रति वचनमात्रस्याऽप्रमाणत्वादिति। एवं तर्हि पक्षधर्मत्वादिसिद्धावपि प्रमाणान्तरमेव वाच्यं न हेतूदाहरणादिवचनमात्रमिति पक्षधर्मत्वादिसाधनप्रमाणस्तवकत्वान्न वचनमात्रमिति चेत्, निगमनमपि तर्हि प्रतिपक्षाभावसाधकप्रमाणसूचकत्वान्न वचनमात्रम्। ननु साध्यावधारणं प्रस्तुतं तदेव क्रियतां किं साध्यविरुद्धाभावप्रतिपादनेनेति, नैतदस्ति; न हि प्रतिपक्षाभावप्रतिपादनमन्तरेण साध्यावधारणमुपपद्यते। तथा चोक्तम्— "पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" (न्या० सू० १।१।४१) इति, कृतमस्य व्याख्यानं पुरस्तादिति। यदि निगमनाभिधानमसाधनाङ्गमभ्युपगम्यते, ततः क्षणिकत्वादिसिद्धौ सत्त्वकृतकत्वादिसाधनमेव वक्तव्यम्। "असन्तोऽक्षणिकास्तस्यां[1] क्रमाक्रमविरोधतः" इत्यादिना ( विपक्ष )बाधकं प्रमाणं नाऽभ्युपगन्तव्यम्। तदभ्युपगच्छतो हि तव निग्रहस्थानं प्रसज्यते। कस्मान्निगमनार्थत्वाद् बाधकस्य। विपरीतप्रसंगप्रतिषेधो ह्युभयोरर्थः[2] प्रतिपक्षप्रतिषेधद्वारेण हेतोरविनाभावसमर्थनमुभाभ्यामप्यभिप्रेतम्। ननु चाभिहितेपि निगमने तदर्थं प्रति यदा प्रतिवादी विप्रतिपद्यते, तदासौ बाधकेनैव प्रतिबोधयितुं शक्यते, न वचनमात्रेण; तस्माद् बाधकमेव वक्तव्यमिति, तदयुक्तम्; निगमनार्थप्रतिपत्तौ हि बाधकप्रमाणोपन्यासो युज्यते, हेत्वाद्यर्थविप्रतिपत्तौ तत्साधकप्रमाणोपन्यासवत्। अन्यथा हेत्वाद्यवयवोपि न वक्तव्यस्तदर्थसाधकप्रमाणोपन्यास एव कर्त्तव्यः। सोपि न कर्तव्यस्तदर्थे विप्रतिपद्यमानो येन प्रमाणान्तरेण प्रतिबोधयितुं शक्यस्तदेव वक्तव्यमित्यनवस्थेति। तस्माद्यदैव यदवयवार्थं प्रति विप्रतिपद्यते परस्तदैव तदवयवार्थसमर्थनार्थं बाधकं साधकं वा प्रमाणान्तरमुच्यत इत्यलं प्रसंगेन।

## ❀ कथातद्भेदनिरूपणम् ❀

सोऽयं पंचावयवलक्षणः परमो न्यायः कस्मात्? विप्रतिपन्नपुरुषप्रति-

---

१. तस्याम् = अर्थक्रियायाम्।
२. उभयोरर्थः = बाधकनिगमनयोरुभयोः प्रयोजनम्।

वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथा। सा द्विविधा—वीतरागकथा, विजिगीषुकथा चेति।

यत्र वीतरागो वीतरागेणैव सह तत्त्वनिर्णयार्थं साधनोपालम्भौ करोति, सा वीतरागकथा वादसंज्ञयैवोच्यते। तथा चोक्तम्—"प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" (न्या० सू० १।२।१) इति। तं "प्रतिपक्षहीनमपि वा कुर्यात्, प्रयोजनार्थित्वेनेति" (न्या० सू० ४।२।४९)। यथा शिष्यो गुरुणा सह प्रश्नद्वारेणैवेत्यर्थः।

---

पादकत्वात्, कथाप्रवृत्तिहेतुत्वाच्च। का पुनरियं कथेत्युच्यते—वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथा। साधनोपालम्भरहितं पक्षप्रतिपक्षपरिग्रहमात्रं कथा माभूदिति वादिप्रतिवादिग्रहणम्। सा द्विविधा—(१) वीतरागकथा, (२) विजिगीषुकथा चेति। यत्र कथायां वीतरागो वीतरागेनैव सह तत्त्वनिर्णयार्थं साधनोपलम्भौ करोति, सा वीतरागकथा वादसंज्ञकैवोच्यते न तत्र विशेषसंज्ञान्तरमस्ति। यथा विजिगीषुकथाया वाद इति सामान्यसंज्ञा जल्प इति वितंडेति च विशेषसंज्ञेति। तत्र कथात्रयेपि वाद इति संज्ञा व्यवहारतः प्रसिद्धा, कथेति संज्ञा तु सूत्रतः प्रसिद्धा। यद्यपि दण्डकसूत्रे कथेत्युद्देशः कण्ठोक्तो नास्ति तथाप्यभिप्रायतोऽस्त्येवाऽन्यथा कथमुत्तरत्र व्यवहारं सूत्रकारः कुर्यात्? "कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः" (न्या० सू० ५।२।२०) इति। विचित्रा ह्यस्य सूत्रकारस्य प्रवृत्तिस्तेन प्रमाणादिवत् कथेति सामान्योद्देशं दण्डकसूत्रे कृत्वा पश्चाद्वादजल्पवितण्डा इति विशेषोद्देशो न कृतः।

## ❀ वादनिरूपणम् ❀

वादानां विशेषलक्षणमपि कण्ठोक्तमस्ति। तथा चोक्तम्—"प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताऽविरुद्धः पंचावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" (न्या० सू० १।२।१) इति। एकधर्म्मिस्थौ विरुद्धौ धर्म्मौ पक्षप्रतिपक्षौ यथाऽनित्यः शब्दो नित्यः शब्द इति, विरोधस्तु सहाऽसम्भवः, स च यथादर्शनं प्रत्येतव्यः। तत्र मूर्त्तामूर्त्तत्वादीनां कालभेदेनाप्येकाधिकरणत्वं न संभवति, सक्रियत्वनिष्क्रियत्वयोश्च कालभेदेन मूर्त्तेष्वस्ति सम्भव इत्यविरोधः, तथा सत्त्वासत्वयोः कालभेदेन देशभेदेन वा घटादिष्वेवाऽविरोधो न त्वाकाशादिष्वित्येवमन्यत्रापि विरोधाविरोधौ यथादर्शनं प्रतिपत्तव्यौ। भिन्नधर्मिस्थयोर्विरोध एव नास्तीति ज्ञानार्थमेकधर्मिस्थत्वग्रहणम्। तत्र पक्षप्रतिपक्षरूपता कथात्रयेऽप्यस्तीति विशेषलक्षणार्थमाह-प्रमाणतर्कसाधनोपालम्भ इति। तत्र साधनोपा-

लम्भग्रहणेन वितण्डातो व्यवच्छिद्यते । न हि वितण्डायामुभयं साधनमुपालम्भश्चाभिधीयते । जल्पादविशेषनिवृत्त्यर्थं प्रमाणतर्कग्रहणम् प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियत इति प्रमाणतर्कसाधनोपालंभः । अत्र सामर्थ्यात्पक्षे साधन प्रतिपक्षे वोपालम्भो द्रष्टव्यः । तत्र यदा मुख्य एव प्रतिपक्षस्तदैकस्य साधनशब्दस्य लुप्तनिर्देशो द्रष्टव्यः । प्रमाणैस्तर्केण च साधनं साधनोपालम्भश्चोत्पत्य च द्रष्टव्यम् ।

## ❀ वादलक्षणे प्रमाणग्रहणस्य प्रयोजनम् ❀

प्रमाणग्रहणं न कर्त्तव्यं, गम्यमानत्वात् । तथा हि—साध्यतेऽनेनेति साधनम्, उपालभ्यतेऽनेनेत्युपालम्भः । पंचावयवं वाक्यं तच्च प्रमाणैरवयवैरेव क्रियते । तेषु चाऽवयवेषु प्रमाणशब्दप्रवृत्तेरेव प्रमाणमूलत्वं लब्धं तस्मात् प्रमाणग्रहणमनर्थकम् । नानर्थकम्, नानार्थकप्रयोगनियमज्ञापनार्थत्वात् । वादे हि प्रमाणमूलत्वेन बुद्धौ स्थिताः प्रतिज्ञादयोऽवयवाः साधनायोपालम्भाय च वादिना प्रयोक्तव्या वादस्य वीतरागकथात्वात् । न च वीतरागाः परवचनबुद्ध्या प्रवर्त्तन्ते । ननु जल्पेऽपि कश्चिन्न ज्ञात्वा हेत्वाभासान् प्रयुङ्क्ते । सत्यम्, तथाप्यादौ सम्यग्बुद्ध्या प्रयुक्तस्य परेणाभासत्वे प्रतिपादिते जल्पाकस्तत्समर्थनार्थं पुनर्यतते विजिगीषुत्वान्न निवर्त्तते, वादे तु वादी वीतरागत्वान्निवर्त्तते । किं चात्मनः पराजयं दृष्ट्वैकान्तपराजयाद्वरं संदेह इत्यभिप्रायेण जल्पाकः साधनायोपालंभाय वाभासानपि प्रयुङ्क्ते न तु वीतरागः । तदयं प्रयोगनियमः प्रमाणग्रहणादृते न सिद्ध्यति । प्रयोगनियमेन जल्पाद्भिद्यते वादस्तन्नानर्थकं प्रमाणग्रहणम् ।

इदं चान्यत्प्रमाणग्रहणस्य प्रयोजनम् । अन्तरेणाप्यवयवसम्बन्धं प्रमाणान्यर्थं साधयन्ति निषेधयन्ति चेति । अस्यार्थः— प्रतिज्ञाद्यवयवसम्बन्धमन्तरेणापि यदा प्रत्यक्षादिभिः स्वतन्त्रैः कस्यचिदर्थस्य सिद्धिरुपालंभश्च क्रियते, तदापि वाद इति ज्ञापनार्थं प्रमाणग्रहणम् । तर्कस्य भूतपूर्वत्वेन व्यापारः स्वार्थानुमानं यत्तर्कानुग्रहीतं तदेव वक्तव्यम्, न तु लौकायतिकैरिव स्वयमप्रतिपन्नमपीत्यतस्तर्कग्रहणमपि वीतरागकथात्वज्ञापनार्थं कृतम् । एतत्पूर्व्वाचार्यमतेन व्याख्यातम् । स्वमते ननु प्रत्यक्षाद्यन्यतमं स्वपक्षसिद्ध्यर्थं साधनमित्युच्यते, प्रतिपक्षदूषणार्थमुपालम्भस्तौ प्रमाणेनानुमानेन निश्चितसामर्थ्यौ तर्केण प्रतिषेधविधे विषयं कृतसामर्थ्यौ वा नैयायिकेन वादे वक्तव्याविति प्रमाणतर्कग्रहणम् । जल्पेप्येवं द्रष्टव्यं यथोक्तोपपन्नग्रहणात् । वितंडायामपि स इति परामर्शात् । एवं च वादादिषु नैयायिकस्य प्रवृत्तिर्न प्राप्नोत्यनर्थाशंकयेति

चोद्यानवकाशः। तदेतच्चोद्यं प्रतिसमाधानं च तर्कस्य पृथगभिधाने प्रयोजनकथनप्रसंगेन प्रपंचितमिति।

## ❀ सिद्धान्ताविरुद्धग्रहणस्य फलम् ❀

सिद्धान्ताऽविरुद्धः पंचावयवोपपन्न इति किमर्थं निग्रहस्थाननियमार्थमित्येके जल्पे निग्रहस्थानविधानाद्वादे तत्प्रतिषेधः प्रतिषेधे च केषाञ्चिदभ्यनुज्ञा क्रियते। तत्र सिद्धान्ताविरुद्धग्रहणादपसिद्धान्तोऽभ्यनुज्ञातः पंचावयवोपपन्नग्रहणात् पंच हेत्वाभासाः, अधिकं न्यूनं चेत्यष्टावेव वादे निग्रहस्थानानीति। यद्यन्यान्यप्युद्भाव्यन्ते, ततः किं प्रायश्चित्तं भवेत्? वीतरागत्वनिवृत्तिरिति चेत, न; प्रमाणाभावात्। अपसिद्धान्ताद्यष्टनिग्रहस्थानोद्भावनेपि वीतरागत्वं न निवर्त्तते। निग्रहस्थानान्तरोद्भावने तु तन्निवृत्तिरिति नाऽत्र प्रमाणमस्ति। किं च वादे प्रतिज्ञाहान्यादीनामपार्थकनिरर्थकादीनां चादूषणत्वप्रसंगस्तद्दूषणत्वे वा कथं निग्रहस्थाननियमो दूषणस्यैव निग्रहस्थानत्वादपसिद्धान्तादिवत्। निरर्थकापार्थकादीनां त्यागार्थमुद्भावनं न निग्रहार्थमिति चेत्, अपसिद्धान्ताद्युद्भावनं गुर्व्वादीनां किं निग्रहार्थं न खलु वादे वादिनां प्रकृतानुपयोगित्वप्रतीतिपूर्व्वकपरित्यागादन्योस्ति निग्रहः? खरारोहणादिलक्षणस्तु जल्पेपि निग्रहो न विदुषामनुमतः पापहेतुत्वादिति।

अन्ये तु वर्णयन्ति—सिद्धान्ताविरुद्धादिग्रहणमुदाहरणार्थं छलजातिनिग्रहस्थानानि सर्व्वाणि वादेप्युद्भावयितव्यानि, किन्तु वादे त्यागार्थं जल्पवितण्डयोस्तु जयपराजयार्थमुद्भाव्यन्त इत्यस्य विशेषस्य ज्ञापनार्थमुत्तरसूत्रे छलजातिनिग्रहस्थानग्रहणं विशेषतः कृतं, नादाविति। अथवा सिद्धांताविरुद्धः पंचावयवोपपन्नश्च वादः कर्त्तव्य इति सूत्रकारः शिष्यान् शिक्षयति। केचिद् विशुष्कतार्किकाः सिद्धान्तविरोधेनापि वादं कुर्व्वन्ति—यथेश्वरज्ञानमनित्यं विभुद्रव्यविशेषेण गुणत्वादित्येवमादिकम्, तत्प्रतिषेधार्थं सिद्धान्ताविरुद्धग्रहणम्। तथा चोक्तम्—

"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्क्केणानुसंधत्ते सधर्म्मं वेद नेतरः॥"
(म० स्मृ० १२।१०६) इति।

स्वपक्षसाधनं प्रतिपक्षदूषणं साधनसमर्थनं शब्ददोषवर्जनम्। न चेत्येतैः पंचभिरवयवैरुपपन्नो वादः कर्त्तव्यो येनाभिप्रेतार्थसिद्धिः स्यात् शब्ददोषवर्जनमिति। निरर्थकाऽपार्थकाऽप्रतीतप्रयोगाऽतिद्रुतोच्चारणादिदोषवर्जनमित्यर्थः।

अथवा वादोपि द्विविधो भवति—शास्त्राभ्युपगमपूर्व्वकस्तद्विपरीतश्चेति। तत्र शास्त्रमभ्युपगम्य सिद्धान्ताविरुद्धो वादः कर्त्तव्यस्ततश्च येन केनचिच्छास्त्रं

यत्र विजिगीषुर्विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्तते, वीतरागो वा परानुग्रहार्थं ज्ञानाङ्कुरसंरक्षणार्थं च प्रवर्तते। सा चतुरङ्गा वादिप्रतिवादिसभापतिप्राश्निकाङ्गा। विजिगीषुकथा

---

विरुध्यते, तत्सर्व्वं तस्य वाच्यम्। शास्त्रमनभ्युपगम्य पंचावयवोपपन्नो वादः कर्तव्यस्तस्य तु शास्त्रविरोधो न दोषत्वेनोद्भावनीयः, किं तु येन केनचित् पंचावयवोपपन्नत्वं विरुध्यते तत्सर्व्वं तस्य निग्रहस्थानमुद्भावनीयमिति।

वीतरागकथापि द्विविधा भवति—सप्रतिपक्षा वा प्रतिपक्षा च। तथा च सूत्रम्—"न प्रतिपक्षहीनमपि वा कुर्यात्प्रयोजनार्थित्वेन" इति। एवं चावान्तरभेदविवक्षायां चतस्रः कथा भवन्ति, न तिस्र इति। व्यवहारस्तु विशेषसंज्ञात्रयेणैवाऽस्तीति तिस्र एव विशेषसंज्ञा उद्दिष्टाः। अथवा तिस्र एव भवन्तु, वादोपि हि प्रतिपक्षहीनो वितण्डैवेति वक्ष्यामः। यत्र तु विजिगीषुणा सह लाभपूजाख्यातिकामो जयार्थं प्रवर्त्तते सा विजिगीषुकथा।

ननु च मोक्षमार्गविरुद्धत्वाल्लाभादिंप्राप्तेस्तत्प्रयोजना कथा न युक्तेति, सत्यम्; नेयं मुमुक्षुणा कर्तव्या, किं तु ज्ञात्वा वर्जनीयेति निरूपिता। यदा तु वीतरागो विजिगीषुणाक्षिप्तः कथां परिहर्त्तुं परोपरोधान्न शक्नोति, तदासौ वीतरागस्तेन विजिगीषुणा सह परानुग्रहार्थं ज्ञानांकुररक्षणार्थं च तामेव चतुरङ्गां कथां कुर्यान्न ह्यन्यथासौ विजिगीषुः प्रतिबोधयितुं शक्यते। तथा चाह—"तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" (न्या० सू० ४।२।५०) इति। स्वात्मनि शिष्याद्यात्मनि चोत्पन्नस्तत्त्वाध्यवसायांकुरः शाक्यादिमृगैर्भक्ष्येतापि यदि जल्पवितण्डाभ्यां कण्टकशाखाभ्यामावरणं न क्रियेत। ये चानुत्पन्नतत्त्वज्ञानाः, शिष्यादयस्तेषां प्रतिवादिनश्चानुग्रहार्थं वीतरागेणापि जल्पादौ प्रवर्त्तितव्यमित्युक्तम्। अनुग्रहश्च मोक्षशास्त्राचार्यादिषु श्रद्धोत्पत्तिद्वारेण भवति।

## ❀ जल्पनिरूपणम् ❀

जल्पवितण्डयोस्तर्हि लक्षणं वाच्यम्। तदुच्यते—"यथोक्तोपपन्नच्छलजातिनिग्रहस्थानस्यासाधनोपालम्भो जल्पः" (न्या० सू० १।२।२)। यथोक्तोपपन्न इति समस्तवादलक्षणोपपन्न इति। वादलक्षणयोगित्वेप्यङ्गाधिक्येनांगहान्या च जल्पवितण्डयोर्वादाद् भेदः। जल्पस्याङ्गाधिक्यप्रदर्शनार्थं छलजातिनिग्रहस्थानग्रहणम्। एवं चोत्सर्गापवादलक्षणस्यातिव्यापित्वदोषः। अपरे त्वेकस्योपपन्नपदस्य लुप्तनिर्देशं मन्यन्ते। अयमर्थः—यथोक्ते वादलक्षणे यदुपपन्नं घटमानं तेनोपपन्न उपेतश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति। ननु

जल्पवितण्डासंज्ञोक्ता। तथा चाह—"तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" (न्या० सू० ४।२।५० )। यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः" (न्या० सू० १।२।२ )।

---

छलादिभिर्न कस्यचित्साधनं नाप्युपालम्भः सम्भवत्ययुक्तोत्तरत्वात्तेषां प्रतिषेधार्थता च सामान्यलक्षणे विशेषलक्षणे च श्रूयते इति। न चैषां प्रतिषेधार्थं नैवाऽर्थसाधकत्वं न ह्यप्रमाणिका कस्यचित्सिद्धिरस्ति। किंचोपालम्भग्रहणादेव तदर्थसिद्धेः साधनग्रहणानर्थक्यं स्यादिति भ्रान्तं प्रतिसाधकत्वमित्येके। यस्य हि छलजातिनिग्रहस्थानैर्भ्रमः क्रियते तस्यैतानि साधनत्वं बुद्ध्याऽध्यवसितानि साधनानीत्युच्यन्ते। तं प्रति वा सदुत्तरत्वादित्यसिद्धं प्रतिषेधार्थतापि भ्रान्ताभिप्रायेणैव न तु परमार्थतश्छलादीनां प्रतिषेधकत्वमप्यस्त्यसदुत्तरत्वादिति।

ननु च छलादिभिः परस्य भ्रमः कर्त्तव्यः इति नायं सदाचारः। दुष्टं प्रति दुष्टेन भवितव्यमिति चेत्, एवं तर्हि खरचपेटविषदानाऽस्त्रादिप्रयोगेणापि तस्यापकारः कर्त्तव्यः स्यादिति, नैतदस्ति, दृष्टापलापायोगात्। विजिगीषवो हि छलादीन्यपि साधनायोपालम्भाय च प्रयुञ्जाना दृश्यन्ते, ततः साधनोपालम्भबुद्धिरप्यतद्विदां भवन्ती दृश्यते। सोयं दृष्टानुवादः क्रियमाणो न दोषाय। अनुवादे च परित्यागः प्रयोजनं विजिगीषुवन्मुमुक्षुभिर्न प्रवर्तितव्यं, परानुग्रहार्थं प्रवृत्तानां च व्यामोहं विजिगीषुवच्छलादिभिः कर्त्तुं न शक्नुवन्तीति। न पुनरत्र मुमुक्षूणां छलादीनि प्रयोक्तव्यत्वेन विधीयन्ते।

अपरे तु परैर्दुर्दण्डकतोटकाद्युपन्यासेनाकुलितबुद्धीनां नैयायिकानामपि कियन्तं कालं छलादिप्रयोक्तृत्वमिच्छन्ति, यावत्सम्यक्साधनेषु स्मृतिर्न भवति। अन्यथा छलादीनामनुपन्यासे ह्यप्रतिभादि निग्रहस्थानमुद्भाव्य जयं लब्ध्वाप्यसद्वादिनो गच्छेयुरिति। भाष्यकारस्त्वाह—"न साक्षाच्छलादीनां साधनोपालम्भनिमित्तत्वमिष्यते। किं तर्हि ? प्रमाणैरेव साधन उपालम्भे च क्रियमाणे तद्विघाताय परेण छलादीनि प्रयुक्तानि यदि नोद्भाव्यन्ते, ततः सत्स्वपि प्रमाणेषु दूषितत्वप्रतिभासान्न साधनं नोपालम्भः स्यात्। उद्भावितानि छलादीनि सद्दूषणान्येतानीति प्रतीयन्ते तथा प्रतीतानि तु साधनोपालम्भनिमित्तानां प्रमाणानामङ्गभावं गच्छन्ति। निरवद्येभ्यो हि प्रमाणेभ्यः साधनमुपालम्भश्च भवतीति। तदेवमङ्गभूतानां छलादीनामुपादानं जल्पे, न स्वतंत्राणामिति" (न्या० भा० १।२।२ )।

"स प्रतिपक्षस्थापनाहीनो वितण्डा" (न्या० सू० १।२।३)।

## ❀ वितण्डानिरूपणम् ❀

"स प्रतिपक्षस्थापनाहीनो वितण्डा" (न्या० सू० १।२।३) इति। स इत्यनेन जल्प एव सम्बध्यत इत्यपरे। तथा च द्विरूपा वितण्डा भवति—विजिगीषुवितण्डा वीतरागवितण्डेति। तं प्रतिपक्षहीनमपि वा प्रयोजनार्थमित्यनेन वीतरागवितण्डामाह। स्वपक्ष एव वैतण्डिकस्य प्रतिवादिपक्षापेक्षयात्र प्रतिपक्ष उक्तः। तस्य स्थापनासाधनं, तेन विकलो वादो जल्पश्च वितण्डेत्युच्यते।

ननु च साधनाभावादभाव एव प्रतिपक्षस्य प्राप्तः। पक्ष्यमाणो हि पक्ष उच्यते। साधनाभावे तु व्यक्तीक्रियमाणत्वाभावान्न पक्षत्वम्। ततश्च स प्रतिपक्षहीनो वितंडेति वाच्यम्। स्थापनाग्रहणमनर्थकम्। तदेतदयुक्तम्, यस्माद्वाद्यभ्युपगतत्वेन पक्ष उच्यते। तद्विरुद्धत्वेन प्रतिवाद्यभ्युपगतत्वेन वा प्रतिपक्ष इति, न तु पक्ष्यमाणत्वेनैव। तथात्वे ह्येक एव पक्षः स्यात्, ततश्च विवादाभावप्रसक्तिर्न ह्येकपक्षापेक्षया वादिनोर्विवादो दृश्यते किं च नित्यः शब्द इत्यस्यापक्षत्वे तद्वृत्तेः कृतकत्वप्रमेयत्वादेर्विरुद्धा नैकान्तिकत्वं न वाच्यं स्यात्। पक्षधर्मस्य त्रयी गतिरित्यभ्युपगमात्। तस्माद्वाद्यभ्युपगममात्रेण पक्षत्वम्, न पक्ष्यमाणत्वेनैवेति।

ननु च यथा निर्णयलक्षणे पक्षशब्देन तद्विषयं साधनमुक्तम्। तथाऽत्रापि सप्रतिपक्षहीनो वितण्डेत्युक्तेऽपि प्रतिपक्षविषयस्थापना हीन इति गम्यत एव। तस्मान्न स्थापनाग्रहणं कार्यमिति, न; परमतनिषेधार्थत्वात्—वैतण्डिकस्य न पक्षः कश्चिदस्ति दूषणमात्रं हि वितण्डेत्येके मन्यन्ते, तन्निषेधार्थं स्थापनाग्रहणम्। पराभिप्रेता तु वितण्डा यथा न सम्भवति तथोच्यते—वितण्डया वर्त्तमानो वैतण्डिकः। स प्रयोजनमनुयुक्तो यदि प्रतिपद्यते, सोऽस्य पक्ष इति वैतण्डिकत्वं जहाति। अथ न प्रतिपद्यते, ततो नायं लौकिको न परीक्षक इत्यापद्यते, ततश्चोन्मत्तवदुपेक्षणीयः स्यात्। अथापि परपक्षप्रतिषेधज्ञापनं प्रयोजनं ब्रूयात्, एतदपि तादृगेव। यो ज्ञापयति, यो जानीते, येन ज्ञापयति, यच्च ज्ञाप्यते—एतच्चतुष्टयं चेत् प्रतिपद्यते, वैतण्डिकत्वं जहाति। अथ न प्रतिपद्यते, तदापरपक्षप्रतिषेधज्ञापनं प्रयोजनमित्येतन्नोपपद्यते। वाक्यसमूहश्च स्थापनाहीनो वितण्डा। तस्या यद्यभिधेयमर्थं प्रतिपद्यते, सोऽस्य पक्षः स्थापनीयो भवति। अथ न प्रतिपद्यते, प्रलापमात्रमनर्थकं भवति, वितण्डत्वं च निवर्तत इति (न्या० भा० पृ० ४-५)। तस्मान्नाविद्यमानपक्षस्य दूषणमात्रं वितण्डा। किं तर्हि? यत्र कथायामन्यतरवादी स्वपक्षस्थापनां नाभिधत्ते, पारिशेष्यात् स्वपक्षसिद्धिं मन्यमानः परपक्षदूषणान्येवाभिधत्ते। सा वितण्डेति।

"वचनविघातोऽर्थविकल्पोपपत्त्या छलम्" ( न्या० सू० १।२।१० )। "तत् त्रिविधम्—वाक्छलम्, सामान्यच्छलम्, उपचारच्छलं चेति" ( न्या० सू० १।२।११ )।

यथा—"अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्" ( न्या० सू० १।२।१२ )। नवकम्बलोऽयं माणवक इत्युक्ते छलवाद्याह—कुतोऽस्य नवकम्बला इति। तस्याप्रतिपत्तिलक्षणं नाम निग्रहस्थानं वाच्यम्। नवः कम्बलोऽस्येति वक्तुरभिप्रायापरिज्ञानात्, उत्तरापरिज्ञानाद्वा। विप्रतिपत्तिर्वा, विपरीतपरिज्ञानादिति।

---

## ※ छललक्षणम् ※

छलजातिनिग्रहस्थानसाधनोपालम्भ इत्युक्तम्। न चानिश्चितस्वरूपाणां छलादीनां साधनोपालम्भहेतुत्वमस्तीति शक्यं वक्तुम्, नापि स्ववाक्ये परिवर्जनं परवाक्येषूद्भावनं च कर्त्तुं शक्यत इति। तस्माच्छलादिस्वरूपं विशेषतोपि वक्तव्यमित्यत उच्यते—"वचनविघातोऽर्थविकल्पोपपत्त्या छलम्" ( न्या० सू० १।२।१० )। वचनस्य विघातो यः क्रियतेऽर्थविकल्पोपपत्त्या तच्छलम्। विघातो निराकरणं दूषणमित्यर्थः। अर्थविकल्पो अन्यथार्थकल्पनं तस्योपपत्तिः सम्भव इति। उदाहरणं विशेषलक्षणे द्रष्टव्यं हेत्वाभासवत्। न हि विशेषोदाहरणादन्यत्सामान्यलक्षणस्योदाहरणमस्तीति।

## ※ छलभेदाः ※

"तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति" ( न्या० सू० १।२।११ )। त्रैविध्यं लक्षणत्रैविध्यात्। यथा लक्षणत्रैविध्याच्छलत्रैविध्यं, तथोच्यते—

## ※ वाक्छलम् ※

( १ ) "अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्" ( न्या० सू० १।२।११ )। अत्रार्थग्रहणं वचनस्यार्थप्रतिषेधात्प्रतिषेधो न स्वरूपत इति ज्ञापनार्थम्। अनेकार्थाभिधायि पदं वाक्यं वाऽविशेषस्तस्यार्थाभिधानाय प्रयोग एवाभिहितोऽर्थं इत्युक्तस्तस्मिन् सतिवक्तुरभिप्रायादर्थान्तरकल्पनानिमित्तं यत्र वचनविघाते तद्वाङ्निमित्तं छलं वाक्छलम्। नन्वन्यदपि वाङ्निमित्तमेव छलम्। सत्यम्, तथाप्यन्यत्र सामान्यादिनिमित्तं प्राधान्येनास्तीति तेनैव व्यपदिश्यते। नवकम्बलकोयं माणवक इत्युक्ते, छलवाद्याह—कुतोऽस्य नवकम्बला इति ? प्रत्यग्रकम्बलसम्बन्धित्वं वक्तुर्विवक्षितम्,

"संभवतोऽर्थस्यातिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलम्" ( न्या० सू० १।२।१३ )। अहो नु खल्वयं ब्राह्मणश्चतुर्वेदाभिज्ञ इत्युक्ते केनचित्, न्यायवाद्याह—किमत्राश्चर्यम्? संभवति हि ब्राह्मणे चतुर्वेदाभिज्ञत्वमिति। अत्र च्छलवाद्याह—न, व्रात्येऽनैकान्त्याद् इति। तस्यापि पूर्ववन्निग्रहस्थानं वाच्यम्। कस्मात्? हेतुत्वेनाविवक्षितत्वात्। किन्तर्हि? ब्राह्मणत्वे सति चतुर्वेदाभिज्ञत्वम् आश्चर्यकारणं न भवतीत्यभिप्रायः सुक्षेत्रशालिसम्पत्तिवदिति।

---

छलवादी तु नवसंख्यावच्छिन्नकम्बलसम्बन्धित्वं तव विवक्षितमित्यध्यारोप्याऽसम्भवेन निराकरोति। अत्रायं पर्यनुयोक्तव्यः शब्दार्थं बुध्वाऽबुध्वा वा प्रतिषेधं करोषि? यदि बुध्वा, तदा सामान्यशब्दादयं विशेषः कुतस्त्वयावगतः? न हि सामान्यशब्दः प्रकरणाद्यपेक्षोऽर्थविशेषं व्यवस्थापयितुं युक्तः। सामान्यप्रयोगेऽर्थविशेषं प्रति वक्तैव प्रष्टव्यः—किं ते विवक्षितमिति? ततस्तदभिप्रायं ज्ञात्वा तस्याऽभ्यनुज्ञादूषणं वा वक्तुं युक्तं न च्छन्दतः। प्रत्यक्षेऽर्थे शब्दप्रयोगे चाऽर्थदर्शनमेव नियामकं, यथाऽयं श्वेतो धावतीत्युक्ते श्वेतस्यादर्शने शुनि दृष्टे च श्वा इतो धावतीत्येषैव वक्तुर्विवक्षा गम्यते। तथा प्रत्यग्रकम्बलदर्शने नवकम्बलकोयं माणवक इति वक्त्रा शब्द उक्तस्तेन प्रत्यग्रकम्बलोऽत्र वक्तुर्विवक्षित इति प्रतिपत्तिर्युक्ता तदप्रतिपत्तौ च तस्याऽप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यम्। नवकम्बला अस्येति प्रतिपत्तिस्तु विपरीता तेन विप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यम्। अथाऽबुध्वैव शब्दार्थं प्रतिषेधं करोषि, तथाप्यप्रतिपत्तिलक्षणं निग्रहस्थानम्। अथ नवः कम्बलोऽस्येति वक्तुरभिप्रायोऽवगत एव मया। तथापि प्रतिवादिनावश्यं किंचिदुत्तरं वक्तव्यमित्युत्तरमुक्तम्—"कुतोस्य नव कंबला इति? तथाप्युत्तरापरिज्ञानादप्रतिपत्तिलक्षणं निग्रहस्थानम्! तथार्थप्रतिपत्तौ हि सत्यं सिद्धसाध्यता वा"—इत्युत्तरं युक्तम्। न हि तोयपूर्णं तडागमित्युक्ते कुतोत्राग्निरित्युत्तरं युक्तम्। विप्रतिपत्तिर्वा निग्रहस्थानम्, उत्तरस्य विपरीतपरिज्ञानात्। अथ नवशब्दसादृश्यादत्र संख्याप्रतिपत्तिः; तथापि विप्रतिपत्तिर्निग्रहस्थानम्, विपरीतपरिज्ञानादिति।

## ❀ सामान्यच्छलम् ❀

( २ ) "सम्भवतोऽर्थस्याऽतिसामान्ययोगादसद्भूताऽर्थकल्पना सामान्यच्छलम्" (न्या० सू० १।२।१३)। विवक्षितो धर्म्मंशश्चतुर्वेदाभिज्ञत्वादिलक्षणाभिप्रायेण सम्भवति, स सम्भवच्छब्देनोक्तस्तमतिक्रम्याऽतद्धर्म्मिण्यपि व्रात्यादौ यद्वर्त्तते। सामान्यं ब्राह्मणत्वादिलक्षणम्, तदतिसामान्यं तेन सम्भवतोऽर्थस्य

**उपचारप्रयोगे मुख्यार्थकल्पनया प्रतिषेध उपचारच्छलम्, यथा—मञ्चाः क्रोशन्तीत्युक्ते छलवाद्याह—पुरुषाः क्रोशन्ति न मञ्चाः, तेषामचेतनत्वादिति। तस्यापि निग्रहस्थानं पूर्ववत्, उभयथापि लोके शास्त्रे च शब्दप्रयोगदर्शनादिति।**

---

योगादसद्भूतार्थकल्पनानिमित्तं यत्र वचनविघाते, तत्सामान्यच्छलम्; सामान्यनिमित्तत्वादिति। अहो नु खल्वसौ ब्राह्मणश्चतुर्वेदाभिज्ञ इत्युक्ते केनचित्, न्यायवाद्याह—किमत्राश्चर्यम्? सम्भवति ब्राह्मणे चतुर्वेदाभिज्ञत्वमित्येवमुक्ते, छलवादी ब्राह्मणत्वं वेदाभिज्ञत्वे लिंगमुक्तमित्येनामसद्भूतार्थकल्पनां कृत्वा प्रतिषेधमाह—नाऽयं हेतुर्व्रात्येनाऽनैकान्तात्। कारणं चेद् ब्राह्मणत्वं, तद् व्रात्येपि ब्राह्मणत्वमस्तीति सोऽपि वेदाभिज्ञः स्यादिति। तत्रापि पूर्ववन्निग्रहस्थानं वाच्यम्—बुद्ध्वाऽबुद्ध्वा वा प्रतिषेधः क्रियते? यद्यबुद्ध्वा, ततोऽप्रतिपत्तिर्निग्रहस्थानम्। अथ बुद्ध्वा, तदाऽप्ययथार्थावबोधाद्विप्रतिपत्तिर्निग्रहस्थानम्। अथ यथार्थप्रतिपत्तावप्यवश्यं किञ्चिदुत्तरं वक्तव्यमित्यतो मयाप्येवमुत्तरमुक्तमिति, तथाप्युत्तरापरिज्ञानादप्रतिपत्तिर्निग्रहस्थानम्। विप्रतिपत्तिर्वा, विपरीतपरिज्ञानात्। कस्माद्? हेतुत्वाविवक्षितत्वात्—न ह्यत्र ब्राह्मणत्वं लिंगत्वेनोक्तं, येनानैकान्तिकत्वोद्भावना क्रियेत। नापि ब्राह्मणत्व वेदाभिज्ञत्वस्य जनकमेवोक्तं, येनाऽतिप्रसंगः स्यात्। किं तर्हि? ब्राह्मणत्वे सति चतुर्वेदाभिज्ञत्वं बाहुल्येन दृष्टत्वादाश्चर्यकारणं न भवतीत्यभिप्रायः, सुक्षेत्रत्वे सति शालिसम्पत्तिवत्। योग्यतामात्राभिधानं चेदं यथा सुक्षेत्रं शालिसम्पत्तियोग्यं प्रतिपन्नम्। तत्र कुतश्चिन्निमित्तवैगुण्याच्छाल्यसम्पत्तावप्ययोग्यं नोच्यते। तथा केषुचिद् ब्राह्मणेषु कुतश्चिन्निमित्तवैगुण्याद्वेदज्ञानासम्पत्तावप्ययोग्यत्वं न युक्तम्। प्रशंसावादो वाऽयम्—यथा सम्भवन्त्यस्मिन् क्षेत्रे शालय इत्यनेन क्षेत्रं स्तूयते कर्षकाणां तत्र प्रवृत्त्यर्थम्, तथा सम्भवति ब्राह्मणे विद्याचरणसम्पदित्यनेन ब्राह्मणः प्रशस्यते, तत्र श्रद्धोत्पादनार्थमवज्ञापरिहारार्थं च; ततो धर्म्माधर्म्मयोरुपचयपरिवर्जनसिद्धिरिति।

## ❀ उपचारच्छलम् ❀

(३) "धर्म्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्" (न्या० सू० १।२।१४)। अभिधानस्य धर्म्मो यथार्थं प्रयोगस्तस्य विकल्पोऽन्यत्र दृष्टस्य सहचरणादिनिमित्तेनाऽन्यत्र प्रयोगस्तन्निर्देशेऽर्थसद्भावस्य मुख्याध्यारोपेण प्रतिषेधः। किमुक्तं भवति? उपचारप्रयोगे मुख्यार्थकल्पनया प्रतिषेध उपचारच्छलम्। प्रतिषेधो मुख्यार्थाऽसंभवेन वचनविघातः। मञ्चाः क्रोशन्तीत्युक्ते छलवाद्याह—

पुरुषाः क्रोशन्ति, न मञ्चास्तेषामचेतनत्वात्, न ह्यचेतनानां काष्ठसंघातानां क्रोशनं सम्भवति। तस्मादयुक्तमुक्तम्—मञ्चाः क्रोशन्तीति। तस्यापि पूर्ववन्निग्रहस्थानम्—बुध्वाऽबुध्वा वा प्रतिषेधः? यद्यबुध्वा, ततोऽप्रतिपत्तिर्निग्रहस्थानम्। बुध्वा चेद्विपरीतबोधाद्विप्रतिपत्तिर्निग्रहस्थानम्। यस्मादुभयथापि मुख्यगौणप्रकारेणापि लोके शास्त्रे च शब्दप्रयोगो दृश्यते। तेन वक्ता यथेष्टं मुख्यं गौणं वा शब्दं प्रयुंक्ते। तत्र प्रधानशब्दप्रयोगे प्रधानार्थस्यैवाऽनुज्ञा प्रतिषेधो वा युज्यते, भाक्तप्रयोगे तु भाक्तार्थस्यैवेति। यदा तु गुणभूतं शब्दं वक्ता प्रयुंक्ते परस्तु प्रधानमध्यारोप्य प्रतिषेधति, स्वमनीषया प्रतिषेधः सो न परोपालम्भ इति। "वाक्छलमेवोपचारच्छलम्, तदविशेषात्" (न्या० सू० १।२।१५)। उभयत्राप्यर्थान्तरकल्पनेति, न; तदर्थान्तरभावात्—एकत्राविशेषाभिधानेऽर्थान्तरकल्पनाऽन्यत्र गौणाभिधाने मुख्यार्थकल्पनेति कथमविशेषः? अविशेषे वा किंचित्साधर्म्यादेकच्छलप्रसंगः। वक्तुरविवक्षितार्थकल्पना वचनविघातत्वं वा साधर्म्यं छलत्रयेप्यस्तीत्यभेदप्रसंगस्ततश्च छलद्वित्वं यदभ्युपगतं तदपि निवर्त्तते। तस्माल्लक्षणभेदादुपचारच्छलमप्यर्थान्तरमिति।

## ॐ उपचाराभावाशङ्का ॐ

उपचार एव नास्ति कुतस्तन्निमित्तं छलमित्यपरः। तथा हि—मञ्चशब्दः किं समयापेक्षः पुरुषेषु बुद्धिं जनयति? अथा तन्निरपेक्ष इति? समयापेक्षश्चेत्, न तर्हि गौणस्तत्रकृतसमयत्वान्मञ्चवत्। अनेकार्थेष्वपि संकेतितो गोशब्दादिवन्मुख्य एव। अथ तन्निरपेक्षस्तथा सति कथं प्रतिपत्तिं जनयेत्? न हि शब्दः प्रदीपादिवद्योग्यतयैवार्थं प्रतिपादयति, किं तर्हि? लिंगवत्सम्बन्धग्रहणबलेन। किं च समयनिरपेक्षत्वे गौणशब्दानां व्याख्याऽपेक्षित्वं न स्यात्। सूत्रविरोधश्च "सामयिकत्वाच्छब्दादर्थे सम्प्रत्ययस्य" (न्या० सू० २।१।५५) इति। भ्रान्ताभ्रान्तविकल्पानुपपत्तिश्च—यदि भ्रान्तां प्रतीतिं जनयति, ततः शब्द एवासौ न भवति; शब्दाभासत्वात्। आप्तोपदेशो हि शब्द उक्तः, न च भ्रान्त्यर्थमाप्तः शब्दमुच्चारयति। अथाभ्रान्तज्ञानजनकः, तथा सति मुख्य एवासौ, शब्दस्तल्लक्षणयोगित्वात्। मञ्चशब्दः पुरुषेण साक्षान्न सम्बद्धस्तेनासौ तस्मिन्नर्थे गौण इति चेत्, कोयं साक्षात्सम्बन्धः? संयोगस्तावद् गुणत्वान्न शब्दानां केनचिदस्ति। समवायस्तु सर्व्वशब्दानामाकाशेनैव। समयस्तु पुरुषेणापि साक्षादेवाऽन्यथा प्रतीतिर्न स्यादित्युक्तम्। न हि संबद्धसंबद्धाद् भूतलशब्दात्तत्स्थेषु वृक्षादिषु प्रतीतिर्दृष्टा। किं च संबद्धसंबन्धादपि यदि विशिष्टां प्रतीतिं जनयति, तदा न गौणः शब्दो, न हीन्द्रियसंबद्धसंबद्धादपि गुणादिषु

विशिष्टं ज्ञानं जनयन् गौण उच्यते। अथाऽविशिष्टं ज्ञानं जनयति, तदाप्य-प्रमाणं शब्द इत्येव वक्तव्यम्, न गौण इति प्रतारकशब्दवत्। तस्मान्न गौणः शब्दोऽस्तीति।

## ❀ तत्समाधानम् ❀

तदेतदकृतबुद्धिसंमोहनमात्रं, न विदुषां मनांस्यनुरंजयति। लोकेष्वपि मुख्यगौणभावेन शब्दप्रवृत्तिव्यवहारप्रसिद्धेः। शब्दार्थव्यवस्थां प्रति हि व्यवहारिण एव पंडितास्तेन व्यवहारत एव शब्दार्थो व्यवस्थापयितव्योऽयं मुख्योऽयं गौण इति। तस्मिन्नेव खल्वर्थे केनचिन्निमित्तेन प्रवर्तमानः शब्दो मुख्यः, केनचिद्भाक्त इत्युच्यते। यथैकस्मिन्नेव पर्व्वते भूधरस्तिष्ठतीत्यादिः क्रियाशब्दः, श्वेतो महानित्यादिर्गुणशब्दः, पर्व्वत इत्यादिर्जातिशब्दः, सवृक्ष इत्यादिर्द्रव्यशब्दः—इत्येवं व्यपदेशभेदं शब्दा निमित्तभेदात्प्रवर्तमाना लभन्ते। यथा वा स एव शब्दः क्वचिदर्थे पारिभाषिकः, क्वचिन्नैमित्तिक उच्यते समयापेक्षित्वविशिष्टज्ञानजनकत्वाविशेषेपि। समयोपि खलु द्विविधः—साधारणोऽसाधारणश्चेति। तत्र यो वहुष्वपि शास्त्रेषु लोकेषु च व्यवहारहेतुः, स साधारणः, यथा—वृद्धिशब्देनोपचयोऽभ्यधिकीभाव उच्यते। यस्तु प्रति-नियतशास्त्रे लोके वा व्यवहारहेतुः, सोऽसाधारणः, यथा—वृद्धिः'आदैच्'वर्ण[1] उच्यते। लोके च गृहे गृहे स्वाभिप्रायेण पुत्रादिषु संज्ञा क्रियते, गवादिषु च स्वसमयाधिकृतैः सह गुप्तव्यवहारार्थमपूर्व्वः शब्दः संकेत्यत इति। तत्रा-साधारणसमयापेक्षिणः शब्दा येषु येष्वर्थेषु संकेतितास्तेषु तेषु यथार्थप्रतीतिं जनयन्तो मुख्या एव। साधारणसमयापेक्षिणोपि ये जात्यादिनिमित्तोपादानेन समितास्ते तन्निमित्तयोगिष्वर्थेषु मुख्या एव। निमित्तनिरपेक्षोपि व्योमादिशब्दो यस्मिन्नर्थे परिभाषितस्तस्मिन् मुख्य एव। ये तु सहचरणादिनिमित्तोपादानेन समितास्तेऽनादिकालत्वेन भाक्ता इति प्रसिद्धाः।

## ❀ उपचारस्य दश निमित्तभेदाः ❀

तथा चानादिप्रसिद्धिरुल्लङ्घयितुं न शक्येति मन्वानः सूत्रकारः सर्व्वलोक-शास्त्रप्रसिद्धेरनुवादं करोति स्म—"सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्य-योगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वत-द्भावेऽपि तद्वदुपचारः" (न्या० सू० २।२।६१) इति। अयष्टिकादिस्वभावेष्वपि ब्राह्मणादिषु यष्टिकादिष्विव वर्त्तमानः शब्द उपचार उच्यत इत्यर्थः।

---

१. तथा च पाणिनिसूत्रम्—"वृद्धिरादैच्" (पा० सू० १।१।१) आ, ए, ओ—इति त्रयो वर्णा वृद्धिसंज्ञकाः स्युरित्यर्थः।

(१) तत्र यष्टिकां भोजयेति, यष्टिकासहचरितो ब्राह्मणोऽभिधीयते। (२) स्थानात्—मञ्चाः क्रोशन्तीति, पुरुषा उच्यन्ते। (३) तादर्थ्यात्—कटार्थानि वीरणानि करोति कटं करोतीति। [1]तदयुक्तम्, करोत्युत्पादयतीत्येकार्थत्वान्न चोत्पन्नानां वीरणानां पुनरुत्पादनं युक्तम्। किं वा सत्कार्यत्वविरोधान्मुख्ये बाधकाभावाच्च। कर्मत्वविरोध इति चेन्न; जायत इति कर्तृत्वं च संज्ञामात्रेण कर्म्मत्वात्तदुक्तम्—त्रिविधं कर्म्म—निर्व्वर्त्यं विकार्यं प्राप्यं चेति, तत्र सर्व्वत्र जनकस्य कारकत्वमिष्टं शब्दविद्भिः, किं तु द्वितीयादिविभक्त्युत्पत्त्यर्थं खरविषाणादिष्वपि विवक्षामात्रेण कर्म्मादिसंज्ञा कृता खरविषाणमभिधत्त इति। तस्मादन्यथा व्याख्यायते—कटार्थानि वीरणान्यानीयन्ते, कट आनीयत इति कश्चिदुपचरति, यूपार्थं दार्व्वानीयते इति। (४) वृत्तात्—यमोऽयं राजा, कुवेरोऽयं राजा, तद्वदेव वर्त्तते इति। (५) मानाद्—आढकेन मितान् सक्तून् अश्नात्याढकमश्नातीति। (६) धरणात्—तुलया धृतं चन्दनं तुलेत्युच्यते। (७) सामीप्याद्—गङ्गायां गावश्चरन्तीति। (८) योगात्—नीलः शाटक इति। (९) साधनात्—अन्नं वै प्राणा इति। (१०) आधिपत्याद्—अयं पुरुषः कुलम्, अयं च गोत्रमिति। अतद्भावेपि तद्वदुपचार इति ब्रुवता गौणमुख्ययोः स्खलद्गतिकृतोपि विशेष उक्तस्खलद्गतिः शब्दो गौणोऽस्खलद्गतिस्तु मुख्य इति। तथाहि—मञ्चाः क्रोशन्तीत्युक्ते काष्ठसंघातेष्वेव तावद् गतिर्भवति, तस्यां वाचकेन बाधितायां पश्चात्पुरुषेषु गतिरित्यत एकत्र स्खलित्वाऽन्यत्र गतिहेतुर्गौणः शब्दः, न त्वेवं पुरुषाः क्रोशन्तीत्युक्ते क्वचित् स्खलनमस्ति। क्षणिकत्वाच्छब्दानां क्रमव्यापारो न युक्त इत्यपि न वाच्यं, वाक्यविचारे निरूपितत्वात्। किं च वाक्यस्य विचारपूर्व्वकोऽर्थनिश्चयो न स्यात्। संकेतमात्रापेक्षित्वे च गोशब्दः कमर्थं प्रतिपादयेत्? वागादीनां सर्वेषां क्वचिदप्यप्रतीतेः, संकेतश्चाविशेषेण वृत्तस्तदुक्तम्—

---

१. कटं करोतीति भाष्यकारीयमुदाहरणप्रकारं निराचष्टे—तदयुक्तमिति। अत एव तन्त्रवार्तिके प्रसङ्गत उपात्तस्यास्य सूत्रस्य व्याख्यानावसरे भट्टसोमेश्वरो वीरणेषु छिद्यमानेषु कटं छिनत्तीत्युदाजहार (द्र० न्या० सु० पृ० ४६४)। वस्तुतो भाष्ये व्यूह्यमानेषु वीरणेषु कटं करोतीत्युक्तम्। तत्र व्यूहनं गुम्फनम्। तेन कटासमवायिकारणानां संयोगविशेषाणामुत्पत्तिः प्रकटितैव, तामेव कटस्योत्पत्तिमुपचर्य तथा प्रायुङ्क्त। तथैव लोके बहुशः प्रयोगदर्शनात्। लौकिकप्रयोगाणां गतिरुपपादनीया मनीषिभिर्न तु सूत्राक्षरयोजनायासिद्धप्रयोगाः कल्पनीया भवन्ति।

वाग्दिग्भूरश्मिवज्रेषु पश्वक्षिस्वर्गवारिषु ।
नवस्वर्थेषु मेधावी गोशब्दमवधारयेत् ॥

एवं च दुग्धा गौरित्युक्ते कथं पशुरेव प्रतिपत्तव्यः ? प्रस्तावादिति चेत्, ननु प्रकरणवशान्नार्थधिषणा इति मतं ते विरुध्यते, न च गोशब्दानामेव विशेषः कश्चिदस्ति, यदुपलम्भादयं गोशब्दः पशौ समित इति स्मृत्वा ततः शब्दात् पशुरेव प्रतीयेत । तस्मात्प्रकरणदेशकालशब्दान्तरसन्निधानादि निमित्तं शब्दार्थप्रतीतौ सर्व्वमभ्युपगन्तव्यं, न समय एव केवलः । सूत्रकारेणापि न समय एव निमित्तमित्युक्तम्, येन प्रकरणादिवशादर्थप्रतीतौ सूत्रविरोधः स्यात् । मानसप्रत्यक्षाभ्युपगमे शब्दाख्यप्रमाणनिवृत्तिः स्याद्—अर्थविशेषविषयो हि शाब्दव्यवहारो दृश्यते, स चार्थविशेषो मानसप्रत्यक्षेणैव गृह्यत इति किं शब्द-प्रमाणेन ? न चाप्तोऽप्यविशिष्टार्थप्रतीतये शब्दमुच्चारयति; तस्मान्न समयादेव शब्दोऽर्थं प्रतिपादयति । प्रकरणाद्यपेक्षाच शब्दात्क्रमेणाप्यर्थप्रतीतिर्भवत्यतो नानुमानिक्यपि पुरुषप्रतीतिरेष्टव्या मञ्चस्थत्वे लिंगाऽनुपलब्धेश्च, किंतु क्रोशन्तीति पदसहितान्मञ्चशब्दादेव मञ्चस्थपुरुषप्रतीतिः । अयं च मुख्यगौणयोर्विशेषः—पुरुषशब्दः खलु साधारणक्रियासामानाधिकरण्येन तिष्ठति पुरुषोऽस्ति पुरुषः क्रोशतीत्येवं प्रयुक्तः पुरुषमेवाभिधत्त इति मुख्य उच्यते, मञ्चशब्दः पुनस्तिष्ठन्ति मञ्चाः सन्तीत्यादिसाधारणक्रियासामानाधिकरण्येन प्रयुक्तः पुरुषं न प्रतिपादयति, किन्तु क्रिया न मञ्चेषु संभवति, पुरुषेषु च सम्भवति । तत्सामानाधिकरण्येनैव प्रयुक्तः पुरुषं प्रतिपादयति । तेन तत्र भाक्त इत्युच्यते । एवं गुणसामानाधिकरण्यप्रयोगेऽपि मुख्यगौणयोः प्रतीतिजनकत्वविशेषो द्रष्टव्य इति ।

ननु चातस्मिंस्तदिति ज्ञानं भ्रान्तमुक्तं ततश्चामञ्चे पुरुषे मञ्चज्ञानं भ्रान्तमेव, तद्धेतुश्च गौणः शब्दोऽप्रमाणमेवेति, नैतदस्ति; विवेकतः प्रतीतेः । पुरुषोत्र भक्त्या मञ्चशब्देनोक्त इति विवेकतः प्रतीतिः कथं भ्रान्ता स्यात् । अविवेकेन हि प्रतीतिर्भ्रान्तिर्भवति यथा स्थाणौ पुरुष एवायमिति, नील एवायं स्फटिक इति । यदि पुनरेवं प्रतिपद्यते स्थाणुरेवायं दूरादिनिमित्तात्पुरुषाकारतया प्रतिभाति, शुक्ल एवायं स्फटिको नीलोपाधिवशान्नीलाकारः प्रतिभाति; तदा सम्यक्प्रतीतिरेव न भ्रान्तिरिति । एवं चातस्मिंस्तदिति भ्रान्तज्ञानहेतुः शब्दो गौण इति लक्षणं द्रष्टव्यम् ।

किं च यो यत्र साक्षात्संकेत्यते, स तत्र मुख्य उच्यते । यथा दण्डीति शब्दो दण्डमुपादाय पुरुष एव संकेत्यते न तु दण्डे, संकेतिनः तत्र बाधके

**प्रयुक्ते हेतौ समीकरणाभिप्रायेण प्रसङ्गो जातिः। पराजयनिमित्तं निग्रहस्थानम्। बहवश्चानयोः सूक्ष्मा भेदास्तेषां कियन्तोऽपि भेदा लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते—**

सति पुरुषे प्रवर्त्तते। मञ्चशब्दस्तु मञ्चत्वमुपादाय साक्षान्मञ्चेषु संकेतितः, तत्र बाधके सति स्थानान्निमित्तात्पुरुषे प्रवर्त्तत इत्यतोऽस्ति गौणमुख्ययोर्विशेषः। तदेवमुपचारस्य सम्भवात्तन्निमित्तं छलमप्युपपन्नमिति।

## * जातिनिग्रहस्थानयोः सामान्यलक्षणम् *

"प्रयुक्ते हेतौ [1]समीकरणाभिप्रायेण प्रसङ्गो जातिः।" प्रतिपक्षेणाविशेषप्रतिपादनं समीकरणम्। स च प्रसङ्गो द्विधा क्रियते--साधर्म्येण, वैधर्म्येण च। यस्मादाह—"साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिरिति" (न्या० सू० १।२।१८)। प्रत्यवस्थानमुपालम्भः, प्रतिषेध इत्यर्थः। उदाहरणं विशेषलक्षणेषु वक्ष्यामः।

पराजयनिमित्तं निग्रहस्थानम्। तदपि संक्षेपतो द्विविधम्, यदाह—"विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमिति" (न्या० सू० १।२।१९)। विपरीता कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः। अप्रतिपत्तिस्त्वारम्भविषयेऽनारम्भः। पक्षमभ्युपगम्य न स्थापयति, परेण स्थापितं वा न प्रतिषेधयति, प्रतिषिद्धं वा नोद्धरति। "बहवश्चानयोः सूक्ष्मा भेदाः।" बहवोऽपरिसंख्याता अनयोर्जातिनिग्रहस्थानयोः सूक्ष्मा भेदाः अवान्तरविशेषाः। तथा चाह—"तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वमिति" (न्या० सू० १।२।२०)। तयोर्जातिभेदयोर्निग्रहस्थानभेदयोश्च विकल्पादवान्तरविशेषाज्जातिबहुत्वं निग्रहस्थानबहुत्वं च। बहुत्वमत्रापरिसंख्यातत्वं विवक्षितमन्यथा चतुर्विंशतिद्वाविंशतिभेदाभिधानादेव बहुत्वं सिद्धमित्यनर्थकं बहुत्वग्रहणं स्यादिति। तस्मात्तेषां जातिनिग्रहस्थान-

१. समीकरणेति समशब्दप्रसादासादितम्। तथैवाह वार्तिककारः—"समीकरणार्थः प्रयोगः समः" (न्या० वा० पृ० ५३०)। प्रयोगस्य, प्रसङ्गस्य, प्रतिषेधस्य वा विशेषणत्वात् समशब्दः पुंसि सूत्रितः। तत्रैव वार्तिकस्यापि तात्पर्यं समर्थयति स्म मिश्रवरः—"प्रतिषेधाविति सूत्रपूर्णेन पुंल्लिङ्गं समर्थयते, अन्यथा जातेः प्रकृतत्वात् सामानाधिकरण्येन साधर्म्यवैधर्म्यसमे इति स्यात्" (न्या० वा० ता० पृ० ६७३)। जातिविशेषणाभिप्रायेण तु 'साधर्म्यसमा जातिः'—इत्येवमादिप्रयोगनिर्वाहः, तथा च—"तत्र साधर्म्येण प्रत्यवस्थानं साधर्म्यसमा जातिः" (प्र० मी० पृ० ६०)। एवं न्यायमञ्जरी-वादिविनोदादावपि स्त्रीलिङ्गनिर्देश उपपद्यते।

"साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्म्मविपर्य्ययोपपत्तेः साधर्म्य-वैधर्म्यसमौ" (न्या० सू० ५।१।२)। यथा—अनित्यः शब्दः कृतकत्वाद् घटवदित्युक्ते जातिवाद्याह—यद्यनित्यघटसाधर्म्यात् कृतकत्वादनित्यः शब्द इष्यते, तर्हि नित्याकाशसाधर्म्यादमूर्त्तत्वान्नित्यः तावत् प्राप्नोति। यदि च नित्याकाशवैधर्म्यात्कृतकत्वादनित्यः शब्द इष्यते, घटाद्यनित्य-वैधर्म्यादमूर्त्तत्वात्तर्हि नित्यः शब्दः प्राप्नोति, विशेषाभावादिति।

---

भेदानामनन्तानां निःशेषाभिधानं न शक्यत इति कियन्तो भेदाः शिष्य-बुद्धिप्रकर्षार्थं लक्षणोदाहरणाभ्यां प्रदर्श्यन्त इति।

## ❀ जातिभेदाः ❀

तत्र जातिभेदास्तावत्प्रपञ्च्यन्ते—"साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्य-विकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषो-पपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमा इति" (न्या० सू० ५।१।१)। समशब्दः प्रत्येकं सम्बध्यते—साधर्म्यसम उत्कर्षसम इत्येवं सर्वत्र योज्यम्।

## ❀ (१) साधर्म्यसमस्य (२) वैधर्म्यसमस्य च निरूपणम् ❀

तत्र "साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्म्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्य-समौ" (न्या० सू० ५।१।२)। साधर्म्येणान्वयेन वैधर्म्येण व्यतिरेकेणोपसंहारे दृष्टान्तनिर्वचने तद्धर्म्मविपर्ययो दृष्टान्तधर्म्मविपर्ययः प्रतिदृष्टान्तधर्म्म इत्यर्थस्त-स्योपपत्तेः सम्भवाद्यौ प्रसंगौ जायेते, तौ साधर्म्यवैधर्म्यसमौ। तत्राऽनित्यः शब्दः कृतकत्वात्पटवदित्येवं साधर्म्योपसंहारे कृते, परः प्रत्यवस्थानं करोति—यद्यनित्येन पटेन साधर्म्यादनित्य इष्यते नित्येनाकाशेन साधर्म्यादमूर्त्तत्व-लक्षणान्नित्यः किन्नेष्यते? न ह्यत्र विशेषोस्ति येनानित्यसाधर्म्यादनित्यो भवति, न तु नित्यसाधर्म्यान्नित्य इति। यदि चाऽनित्यपटसाधर्म्यादनित्य इष्यते, तदा तद्वैधर्म्यान्नित्यः किन्नेष्यते? अस्ति च वैधर्म्यमपि—पटो रूपादिमान्, शब्दस्तु तद्विलक्षण इति। न चात्र विशेषोस्ति अनित्यसाधर्म्यादनित्येन भवितव्यम्, न पुनरनित्यवैधर्म्यान्नित्येनेति। तथा यन्नित्यं तदकृतकं दृष्टं यथाकाशम्, शब्दस्तु कृतकस्तस्मादनित्य इत्येवं वैधर्म्येणोपसंहारेप्युभयथा प्रत्यवस्थानम्—यदि नित्यवैधर्म्यात्कृतकत्वादनित्य इष्यते, पटाद्यनित्यवैधर्म्यादमूर्त्तत्वादि-लक्षणान्नित्यः किन्नेष्यते? न चात्र विशेषोस्ति—नित्यवैधर्म्यादनित्येन भवितव्यम्, न पुनरनित्यवैधर्म्यान्नित्येनेति। यदि च नित्यवैधर्म्यादनित्यस्त-त्साधर्म्यान्नित्यः किन्नेष्यते? न चात्र विशेषोस्ति—नित्यवैधर्म्यादनित्येन भवितव्यम्, न पुनर्नित्यसाधर्म्यान्नित्येनेति।

अनयोरुत्तरम्— अविनाभाविनः साधर्म्यस्य वैधर्म्यस्य च हेतुत्वा-भ्युपगमादप्रसङ्गो धूमादिवदिति ।

साध्यदृष्टान्तयोर्धर्म्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्य-विकल्पसाध्यसमाः ।

साध्ये दृष्टान्तादनिष्टधर्म्मप्रसङ्गः उत्कर्षसमः । इष्टधर्म्मनिवृत्तिरप-कर्षसमः । यदि कृतकत्वाद् घटवदनित्यः शब्दः तदा घटवदेव सावयवः स्यात् । अथ नैवमनित्योऽपि तर्हि न स्यादविशेषात् । अश्रावणश्च घटो दृष्टः शब्दोऽपि श्रावणो न स्यादविशेषादिति उत्कर्षापकर्षसमौ ।

---

## ※ साधर्म्यवैधर्म्यसमयोरुत्तरम् ※

अनयोरुत्तरम्—"अविनाभाविनः साधर्म्यस्य वैधर्म्यस्य च हेतुत्वाभ्यु-पगमादप्रसंगो धूमादिवदिति ।" यथाऽग्निमत्साधर्म्यादनग्निमद्वैधर्म्याच्च धूमादेवाग्निमत्त्वं पर्वतादौ सिध्यति, न त्वनग्निमत्साधर्म्यादग्निमद्वैधर्म्याच्च वृक्षादिसम्बन्धत्वादनग्निमत्त्वमपि सिध्यति, तस्याविनाभावित्वाभावात् । एवमनित्यसाधर्म्यस्य नित्यवैधर्म्यस्य चाविनाभाविन एव कृतकत्वादेः साधकत्वं न त्वविनाभावविकलस्याप्यमूर्त्तत्वादेरिति । तस्मान्नित्यसाधर्म्याद-नित्यवैधर्म्याच्च नित्यत्वसिद्धिरपि प्राप्नोतीत्ययमप्रसंगः ।

न चात्र विशेषोऽस्तीत्यसिद्धम्, अविनाभावित्वतद्विहीनत्वविशेषस्योक्तत्वात् । तथा च सूत्रम्—"गोत्वाद् गोसिद्धिवत्तत्सिद्धिः" ( न्या० सू० ५।१।३ ) । कथं पुनः गोत्वात्साध्याविशिष्टाद् गौः सिध्यतीति ? गोव्यवहारः साध्यत इत्यदोषः । अथवा गोत्वशब्देन तदविनाभूतं सास्नादिलिङ्गमुक्तं, तदेव गोसाधर्म्यमगो-वैधर्म्यं च गोः साधनं भवति, तदविनाभूतत्वान्न तु प्राणित्वाद्यपि साधर्म्यमात्रं चेति ।

## ※ (३) उत्कर्षसमः ※

"साध्यदृष्टान्तयोर्द्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्प-साध्यसमाः" (न्या० सू० ५।१।४) । अत्र षण्णां लक्षणाभिधानात्षडेव वाक्यानि द्रष्टव्यानि ।

साध्ये दृष्टान्तादनिष्टधर्म्मप्रसंग उत्कर्षसमस्तद्यथा—तस्मिन्नेव शब्दाऽनि-त्यत्वानुमाने परः प्रत्यवतिष्ठते—यदि कृतकत्वात् घटवदनित्यः शब्दस्तदा घटवदेव सावयवः प्राप्नोतीत्युत्कर्षसमः ।

## ※ (४) अपकर्षसमः ※

अथ कृतकत्वे सत्यपि सावयवः शब्दो नेष्यते, तथा सत्यनित्योपि तर्हि

शब्दो यदि कृतकत्वानुमानेनानित्यो वर्ण्यते; तथा सति घटोऽपि कृतकत्वानुमानेनानित्यो वर्ण्यः स्यादिति वर्ण्यसमः। अथानवस्थाभयाद् घटस्तेनैवानुमानेनानित्यो वर्ण्यते। ततः शब्दोऽप्यवर्ण्यः स्यादविशेषादिति वर्ण्यावर्ण्यसमौ।

अथ विकल्पसमः—कृतकत्वाविशेषेऽपि यथा मूर्त्तत्वामूर्त्तत्वादिधर्म्मविकल्पस्तथा नित्यत्वानित्यत्वादिविकल्पोऽपि स्यादविशेषात्।

अथ साध्यसमः—यदि कृतकत्वादुभयोरप्यनित्यत्वं तर्हि साध्यत्वमप्युभयोः स्यान्न वा कस्यचिदविशेषात्।

एतेषामुत्तरम्—किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः (न्या० सू० ५।१।५)। किञ्चित्साधर्म्याद् धूमवत्त्वादिलक्षणात् साध्यदृष्टान्तयोर्द्धर्म्मविकल्पेऽपि व्यवस्था दृष्टा। तदपलापे लोकादिविरोधः सर्व्वानुमानात् प्रामाण्यप्रसङ्गश्च।

---

न स्यादविशेषादश्रावणश्च घटो दृष्टः शब्दोपि कृतकत्वादश्रावणः प्राप्नोत्यनित्योपि वा नेष्टव्यो विशेषाभावादित्यपकर्षसमः।

## ❀ (५) वर्ण्यसमः (६) अवर्ण्यसमश्च ❀

शब्दो यदि कृतकत्वानुमानेनानित्यो वर्ण्यते। तथा सति घटोपि कृतकत्वानुमानेनैव वर्ण्यः स्यात्। अथानवस्थाभयाद् घटस्तेनैवानुमानेनानित्यो न वर्ण्यते ततः शब्दोप्यवर्ण्यः स्यादविशेषादिति वर्ण्यावर्ण्यसमौ। एतौ च साध्यसमादुक्तिभेदमात्रेण भिन्नौ तेन संग्रहेण व्याख्यातौ।

## ❀ (७) विकल्पसमः ❀

अथ विकल्पसमः कृतकत्वाविशेषेपि। यथा—किंचिन्मूर्त्तं किंचिदमूर्त्तं किंचित्कठिनमित्येवमादिधर्म्मविकल्पस्तथा किंचित् कृतकं नित्यं किंचिदनित्यमित्येषोपि विकल्पः स्याद्विशेषाभावादिति।

## ❀ (८) साध्यसमः ❀

अथ साध्यसमः। यदि कृतकत्वादुभयोरनित्यत्वम्, ततस्तर्हि साध्यत्वमुभयोः स्यान्न वा कस्यचिदथ कृतकत्वादपि साध्यत्वं नोभयोस्तदोभयोरनित्यत्वमपि न स्याद्विशेषाभावादिति।

## ❀ उत्कर्षसमादीनां षण्णामुत्तरम् ❀

एतेषां षण्णामुत्तरम् "किंचित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः" (न्या० सू० ५।१।५)। यथा धूमवत्त्वादिलक्षणान्महानसादिपर्व्वतादिप्रदेशयोः

"प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्यासाधकत्वाच्च प्राप्त्याप्राप्तिसमौ" ( न्या० सू० ५।१।७ )। यद्ययं हेतुः प्राप्यसाध्यं साधयेदुभयोः प्राप्त्याविशिष्टत्वादङ्गुल्योरिव किं कस्य साधनं साध्यं वेति ? अप्राप्यसाधनको नास्ति, काष्ठाग्निवदिति। "घटादिनिष्पत्तिदर्शनात्पीडने चाऽभिचारादप्रतिषेधः" ( न्या० सू० ५।१।८ )। प्राप्त्यप्राप्त्यविशेषेऽपि प्रतिनियतार्थवृत्तयः एवैते साध्यसाधनत्वादयो धर्म्मा दृष्टाः, ते निराकर्त्तुमशक्याः, सर्व्वप्रमाणविरोधादिति।

---

किंचित्साधर्म्यादुपसंहारसिद्धिर्दृष्टा। उपसंह्रियतेऽस्मिन्नित्युपसंहारो दृष्टान्तः साध्यं वा हेतुर्व्वा कर्मव्युत्पत्त्या तस्य सिद्धिस्तथा भावव्यवस्था। सा तु साध्यदृष्टान्तयोः पर्व्वतादिमहानसादिप्रदेशयोर्धर्म्मविकल्पेपि दृष्टा सर्व्वलोकप्रसिद्धा, न सर्व्वो महानसादिधर्म्मः पर्व्वतादौ सिध्यति। नापि तदसिद्धावग्नेरप्यसिद्धिर्नापि महानसादावनुपलब्धो धर्म्मः पर्व्वतादौ दृष्टोपि निवर्तते। नापि धूमवतां धर्म्मान्तरविकल्पवदग्निमत्त्वविकल्पोपि भवति, नाप्युभयोः प्रदेशयोरनुमेयत्वमननुमेयत्वं चोभयोरिति सेयं व्यवस्था सर्व्वव्यवहारिप्रसिद्धा शास्त्रेष्वप्यभ्युपगता तदपलापे च लोकविरोधः शास्त्रविरोधः सर्व्वानुमानाऽप्रामाण्यप्रसंगश्च, सर्व्वानुमानेष्वप्युत्कर्षापकर्षादीनां संभवात्। तस्मात्साध्यदृष्टान्तयोः किंचित्साधर्म्यादुपसंहारसिद्धे वैधर्म्यात्प्रतिषेधो न युक्तः, साध्यनिर्देशाच्च दृष्टान्तोपपत्तेः। येन चोभयप्रसिद्धेन साध्यमतिदिश्यते स दृष्टान्त एवोपपद्यते न तस्यापि साध्यत्वं युक्तमिति।

## ❋ (९) प्राप्तिसमः (१०) अप्राप्तिसमश्च ❋

"प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ" (५।१।७ न्या० सू०)। हेतुः साध्यं प्राप्य साधयेद् ? अप्राप्य वा ? न तावत्प्राप्य साधयेदुभयोः प्राप्त्याऽविशिष्टत्वादंगुल्योरिव किं कस्य साधनं साध्यं वेति ? नाप्यप्राप्य साधयेन्न ह्यप्राप्तं काष्ठमग्निर्दहति प्रदीपो वा घटाद्यप्राप्तं प्रकाशयतीति।

## ❋ प्राप्त्यप्राप्तिसमयोरुत्तरम् ❋

अनयोरुत्तरम्—"घटादिनिष्पत्तिदर्शनात्पीडने चाऽभिचारादप्रतिषेधः" (न्या० सू० ५।१।८)। प्राप्त्यविशेषेपि मृत्पिण्ड एव कुलालादिभिर्घटः क्रियमाणः प्रदीपेन प्रकाश्यमानश्च दृश्यते न तु तद्विपर्ययः। अप्राप्त्यविशेषेऽप्यभिचारकर्म्म पीडनं कुर्व्वदुपलभ्यते, तस्मादुभयथाप्ययुक्तः प्रतिषेधः। "प्राप्त्य-

प्राप्त्यविशेषेपि हि प्रतिनियतार्थवृत्तय एवैते साध्यसाधनत्वादयो धर्म्मा दृष्टास्ते निराकर्त्तुमशक्याः, सर्व्वप्रमाणविरोधादिति"।

## ❋ (११) प्रसंगसमः (१२) प्रतिदृष्टान्तसमश्च ❋

"दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसंगप्रतिदृष्टान्तसमौ" ( न्या० सू० ५।१।९ )। दृष्टान्तस्यापि साधनं वाच्यम्। कृतकं घटाद्यनित्यमेवेति नात्र कारणमपदिष्टं न चाऽप्रमाणिका सिद्धिरस्ति। साध्यस्यापि साधनानभिधानप्रसंगेन प्रत्यवस्थानं प्रसंगसमः। यथा च—श्रोत्रग्राह्यं शब्दत्वं नित्यदृष्टम्, तथा शब्दोपि नित्यः स्यान्न चात्र विशेषोस्ति घटादिदृष्टान्तादनित्येन भवितव्यम्, न पुनः शब्दत्वदृष्टान्तान्नित्येनेति प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः। तत्र प्रसंगसमस्य साध्यसमादुक्तिमात्रेण भेदः प्रतिदृष्टान्तसमस्य च साधर्म्यवैधर्म्यसमाभ्यामित्यतोऽनयोः संग्रहेऽनभिधानम्, समस्ताभिधानाऽप्रतिज्ञानाच्चाऽदोषः। तथा च कियन्तो भेदाः प्रदर्श्यन्त इत्युक्तम्। तत्र प्रसंगसमस्य तावदुत्तरमाह—"प्रदीपोपादानप्रसंगविनिवृत्तिवत्तद्विनिवृत्तिः" ( न्या० सू० ५।१।१० )।

## ❋ प्रसङ्गसमस्योत्तरम् ❋

यथा घटादिप्रकाशनायोपात्ते प्रदीपे प्रदीपान्तरोपादानप्रसंगोऽनर्थकः, प्रदीपस्य प्रदीपान्तरानपेक्षस्य प्रतीतेः; तथा दृष्टान्तदृष्टान्तान्तरानपेक्षस्य प्रत्यक्षेणापि सिद्धेस्तत्प्रसंगोऽनर्थक इति।

## ❋ प्रतिदृष्टान्तसमस्योत्तरम् ❋

प्रतिदृष्टान्तसमस्याप्युत्तरमाह—"प्रतिदृष्टान्तहेतुत्वे च न हेतुर्दृष्टान्तः" ( न्या० सू० ५।१।११ )। प्रतिदृष्टान्त एवोक्तस्त्वया, न तु दृष्टान्तस्य दोषः कश्चिदतो दोषाभावान्न हेतुर्दृष्टान्तः प्रतिदृष्टान्तहेतुत्वेभिधीयमानेपीति।

अथवा योयं प्रतिदृष्टान्त उक्तः स केनाभिप्रायेण ? किं यथा दृष्टान्तः साधकस्तथा प्रतिदृष्टान्तोपि साधकः ? किं वा यथा प्रतिदृष्टान्तोऽसाधकस्तथा दृष्टान्तोप्यसाधक इति ? प्राचीने पक्षे "प्रतिदृष्टान्तहेतुत्वेनाहेतुर्दृष्टान्तः" ( न्या० सू० ५।१।११ )। दृष्टान्तवत्प्रतिदृष्टान्तस्य हेतुत्वेऽभ्युपगम्यमानेभ्युपगतं तावत्त्वयापि दृष्टान्तस्यानित्यत्वसिद्धौ हेतुत्वम्, ततश्च तत्रावयोः संप्रतिपत्तिः संजातेति सिद्धोस्मत्पक्षः। प्रतिदृष्टान्ते त्वद्यापि विप्रतिपत्तिः। द्वितीयेपि पक्षे प्रतिदृष्टान्तवद् दृष्टान्तोप्यसाधक इति ब्रुवताभ्युपगतं तावत्त्वयापि प्रतिदृष्टान्तस्याहेतुत्वम्, दृष्टान्ते तु विचार्यमिति। एवं च दृष्टान्तस्या-

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः । अनित्यः शब्दः कार्य्यत्वा-दित्युक्ते, प्रागुत्पत्तेरनित्यत्वकारणं नास्तीति नित्यः प्रसक्तस्तस्योत्पत्तिर-नुपपन्नेति तथाभावादुत्पन्नस्य कारणोपपत्तेरप्रतिषेधः ।

अनुत्पन्नः शब्द एव नास्ति कस्य नित्यत्वादिधर्म्मः चिन्त्येत ?

---

साधकत्वसिद्धौ प्रतिदृष्टान्तस्य हेतुत्वेऽभिधीयमानेनाऽहेतुर्दृष्टान्त इत्युभय-पक्षेपि सूत्रं संवध्यते ।

## ❀ (१३) अनुत्पत्तिसमः ❀

"प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः" (न्या० सू० ५।१।१२) । अनित्यः शब्दः कार्यत्वादित्युक्ते, परः प्रत्यवतिष्ठते—प्रागुत्पत्तेः शब्दस्यानित्यत्वकारणं कार्यत्वं नास्तीति नित्यः प्राप्तः, नित्यस्य चोत्पत्तिरनुपपन्नेति । अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः ।

## ❀ अनुत्पत्तिसमस्योत्तरम् ❀

अस्योत्तरम्—"तथाभावादुत्पन्नस्य कारणोपपत्तेरप्रतिषेधः" ( न्या० सू० ५।१।१३ ) । अनुत्पन्नः खलु शब्द एव नास्ति कस्य नित्यत्वादिधर्म्मश्चिन्त्येत ? उत्पन्नो हि शब्दः शब्दो भवति, तदा चाऽनित्यत्वसाधकं कारणं कार्यत्वमुप-पद्यते । तस्मान्नित्यस्योत्पत्तिरनुपपन्नेत्ययमप्रतिषेधः ।

## ❀ (१४) संशयसमः ❀

"सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः" ( न्या० सू० ५।१।१४ ) । सत्यपि कृतकत्वाख्ये हेतौ संशयकारणसद्भावाच्छब्दे संशयो न निवर्तते । संशयकारणं च सामान्यघटयोर्नित्यानित्ययोः साधर्म्य-मैन्द्रियकत्वम्, तदस्ति शब्दे । अथ संशयकारणे सत्यपि संशयो नेष्यते, तदा निश्चयकारणे सत्यपि निश्चयोपि मा भूद्विशेषाभावादिति संशयेन प्रत्यवस्थानं संशयसमः ।

## ❀ संशयसमस्योत्तरम् ❀

अस्योत्तरम्—"साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्य-न्तसंशयप्रसंगः । नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः" ( न्या० सू० ५।१।१५ ) । साधर्म्यादैन्द्रियकत्वात् संशयेपि वैधर्म्यात् कृतकत्वान्न युक्तः संशयः, तस्य विशेषत्वादतस्तदुपलंभादनित्यनिश्चय एवास्तु । अथ ततोपि संशय एवेष्यते, तदा साधर्म्याद्वैधर्म्यादपि संशयेभ्युपगम्यमानेऽत्यन्तसंशय-प्रसंगः । कुतो ह्यसौ संशयो निवर्त्तेत इति ?

**त्रैकाल्यासिद्धेर्हेतोरहेतुसमः। यदि पूर्वं साधनम्, असति साध्ये कस्य साधनम्? अथ पश्चात्, अविद्यमानं कथं साधनम्? अथ युगपत्, किं कस्य साधनं साध्यं वेति? द्वयोस्तुल्यकालत्वादिति।**

---

यच्चोक्तम्—सत्यपि कृतकत्वे संशयकारणसद्भावाच्छब्दे संशयो न निवर्त्तत इति, तत्राह—नित्यत्वानभ्युपगमादित्यादि। सर्व्वदा संशयकर्तृत्वानभ्युपगमात्सामान्यस्येत्यर्थः। न हि शिरःपाण्यादिविशेषदर्शनेप्यूर्ध्वत्वसामान्यात्संशय उत्पद्यमानो दृश्यते। तस्मादयुक्तः प्रतिषेधः। संग्रहे त्वस्याप्यनभिधानं विस्तरपरिहारार्थम्।

## ❀ (१५) प्रकरणसमः ❀

"उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमः" (न्या० सू० ५।१।१६)। उभयं च तत्साधर्म्यं चोभयसाधर्म्यं साधर्म्यद्वयमित्यर्थः। प्रक्रियत इति प्रक्रिया पक्षः प्रतिपक्षश्चोच्यते। तत्राऽनित्यसाधर्म्यात्पक्षसिद्धिः, नित्यसाधर्म्यात्तु प्रतिपक्षसिद्धिः। साधर्म्यग्रहणमुपलक्षणार्थम्। वैधर्म्येणापि समानम्।

उभयवैधर्म्यात्प्रक्रियासिद्धेः प्रकरणसम इति। अस्यापि साधर्म्यवैधर्म्यसमाभ्यामुक्तिमात्रेण भेदः। यदि तु विरुद्धाव्यभिचारिवत्त्रिरूपेण साधर्म्येण प्रत्यवस्थानं प्रकरणसमः, साधर्म्यसमस्तु साधर्म्यमात्रेण प्रत्यवस्थानमित्युच्यते; तदैतद्वैलक्षण्यमप्यस्ति।

## ❀ प्रकरणसमस्योत्तरम् ❀

अस्योत्तरम्—"प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः" (न्या० सू० ५।१।१७)। द्वितीयपक्षापेक्षया प्रथमस्यात्र प्रतिपक्षत्वम्। तस्मात् प्रतिपक्षात्प्रथमसाधनात्प्रकरणस्य प्रथमपक्षस्य सिद्धेः। प्रतिषेधानुपपत्तिः, द्वितीयपक्षस्यानुत्थानमित्यर्थः। कुतः? प्रतिपक्षोपपत्तेः। प्रथमसाधनस्य निरवद्यत्वादित्यर्थः।

## ❀ (१६) अहेतुसमः ❀

"त्रैकाल्याऽसिद्धेर्हेतोरहेतुसमः" (न्या० सू० ५।१।१८)। हेतुः साधनम्, तत्किं साध्यात्पूर्व्वं? किं वा पश्चात्? उत युगपदिति? यदि पूर्व्वं साधनम्, असति साध्ये कस्य तत्साधनम्? अथ पश्चात्साधनम्, पूर्व्वं साध्यं कथमुत्पन्नं साधनं विना? भविष्यदविद्यमानं कथं साधनम्? अथ युगपत्साध्यं साधनं च, तथा किं कस्य साधनम्? विद्यमानत्वेन द्वयोस्तुल्यत्वादिति। हेतुरहेतुना न विशिष्यत इत्येव प्रत्यवस्थानमहेतुसमः।

**अस्योत्तरमाह—न हेतुतः साध्यसिद्धेः प्रवृत्त्यादिविरोधः सूत्रार्थः। प्रतिषेधानुपपत्तिश्च त्रैकाल्यासिद्धेः स्ववचनेनैव प्रतिषेधासिद्धौ हेतुसिद्धिरिति सूत्रार्थः।**

---

## ❀ अहेतुसमस्योत्तरम् ❀

अस्योत्तरम्—"न, हेतुतः साध्यसिद्धेः" (न्या० सू० ५।१।१९)। न हि निर्वर्त्यं ज्ञाप्यं वा किंचिदपि साध्यं हेतुमन्तरेण सिध्यति, हेतुतस्तु मृत्पिण्डकुलालादिभ्यः प्रदीपाद्धूमादिभ्यश्च घटादेः साध्यस्य सिद्धिरुपलभ्यते। तेषामपि त्रैकाल्यासिद्धेः समानत्वादहेतुत्वं प्राप्तम्, ततश्च सर्व्वहेतूनामहेतुत्वे प्राप्ते न कश्चित् क्वचित् प्रवर्त्तेत निवर्त्तेत वेति अन्धमूकं सर्व्वव्यापारशून्यं च जगत्स्यात्, न चैतदस्ति; तस्माद्धेतुत एव साध्यसिद्धिः। पूर्व्वापरसहभावोपि यथादर्शनमभ्युपगन्तव्यः—तत्र निर्वर्त्तको हेतुः सर्व्वोपि साध्यात्प्रागेव। ज्ञापकस्तु कश्चित्प्राग्, यथा—अत्ताऽर्कादिरुत्पद्यमानानाम्। कश्चित् पश्चाद्, यथा—धूमशब्देच्छादिर्दहनाकाशात्मादीनाम्। कश्चित्सहभावी; यथा—रूपादिः स्पर्शादीनाम्। योग्यतामनुमायाऽसत्यपि साध्ये साधनव्यपदेशः, सत्यपि च साधने साध्यव्यपदेशः क्रियत इति।

## ❀ अहेतुसमस्योत्तरान्तरम् ❀

"प्रतिषेधानुपपत्तेश्च" (न्या० सू० ५।१।२०)। योऽयं प्रतिषेधः स किं प्रतिषेध्यात्पूर्व्वम्? किं वा पश्चात्? उत युगपदिति? यदि पूर्व्वम्, ततोऽसति प्रतिषेध्ये, कस्यायं प्रतिषेधः? अथ पश्चात्, असति प्रतिषेधे, कथं प्रतिषेध्यम्। अथ युगपत्, ततः साध्येतरयोः गोविषाणयोरिव प्रतिषेधप्रतिषेध्यभावानुपपत्तिः। तदेवं त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः, तदनुपपत्तौ च निरवद्यो हेतुः सिद्ध इति।

## ❀ (१७) अर्थापत्तिसमः ❀

"अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः" (न्या० सू० ५।१।२१)। यद्यनित्यसाधर्म्यात्कार्यत्वादनित्यः शब्द इष्यतेऽर्थादापन्नं नित्यसाधर्म्यान्नित्य इति, अस्ति च शब्दस्य नित्येनापि साधर्म्यमस्पर्शत्वम्। एवं वैधर्म्यप्रयोगेप्यर्थापत्त्या प्रत्यवस्थानं द्रष्टव्यम्। अस्यापि साधर्म्यवैधर्म्यसमाभ्यामुक्तिमात्रेण भेदः। अथवा साधर्म्येणोपसंहारे साधर्म्येणैव प्रत्यवस्थानं साधर्म्यसमः—यद्यनित्यसाधर्म्यादनित्यः शब्दः, अर्थादापन्नम्—नित्यसाधर्म्यान्नित्य इति।

"एकधर्म्मोपपत्तेरविशेषे सर्व्वाविशेषप्रसङ्गात् सद्भावोपपत्तिरविशेषसमः" ( न्या० सू० ५।१।२३ )। यदि घटशब्दयोरेकस्य कार्य्यत्वस्योपपत्तेरनित्यत्वेनाविशेष इष्यते, सर्व्वभावानां तर्हि सद्भावोपपत्तेरविशेषः प्रसज्येत ।

तत्रेदमुच्यते—सर्वथाऽविशेषे प्रत्यक्षादिविरोधः। अनित्यत्वेनाविशेषे अनुमानागमविरोधः। केनचिदविशेषे प्रमेयत्वादिना सिद्धसाधनमिति।

---

वैधर्म्येणोपसंहारे वैधर्म्येणैव प्रत्यवस्थानं वैधर्म्यसमः—यदि नित्यवैधर्म्यादनित्यः शब्दः, अर्थादापन्नम्—अनित्यवैधर्म्यान्नित्यः शब्द इति। वैधर्म्येणोपसंहारेऽपि साधर्म्येण प्रत्यवस्थानमर्थापत्तिसम इत्यतः स्वरूपभेदोऽस्ति।

## ❀ अर्थापत्तिसमस्योत्तरम् ❀

अस्योत्तरम्—"अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वात्" ( न्या० सू० ५।१।२२ )। अनुक्तस्य नित्यत्वपक्षस्यार्थापत्तितः सिद्धिमिच्छतः पक्षस्य नित्यत्वस्य हानिः प्राप्नोति। कस्मात्? पक्षहानेरनुक्तत्वात्। न चाऽर्थापत्तेरित्थं स्वरूपं, किं तर्हि? येन विना यन्नोपपद्यते तदनुपपद्यमानं तत्कल्पयदर्थापत्तिरुच्यते। न च नित्यसाधर्म्यान्नित्यत्वसिद्धिं विना अनित्यत्वसिद्धिर्नोपपद्यते, येन सा तां कल्पयेत्। "अनैकान्तिकत्वाच्चार्थापत्तेः" ( न्या० सू० ५।१।२२ )। या चेयं वाक्यार्थविपर्ययेणैवार्थापत्तिः, सा खल्वनैकान्तिकी, न हि घनस्य ग्राव्णः पतनमित्युक्तेऽर्थादापद्यते—द्रवाणामपामपतनमिति।

## ❀ (१८) अविशेषसमः ❀

"एकधर्मोपपत्तेरविशेषे सर्व्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः" (न्या० सू० ५।१।२३)। यदि घटशब्दयोरेकस्य धर्म्मस्य कार्यत्वाख्यस्योपपत्तेरनित्यत्वे—नाविशेष इष्यते। नन्वेवं तर्हि सर्वभावानामप्यविशेषः प्रसज्यते, सद्भावाख्यस्यैकधर्म्मस्य सर्व्वत्रोपपत्तेरिति।

## ❀ अविशेषसमस्योत्तरम् ❀

तत्रेदमुच्यते—यदि सर्व्वभावानां सर्व्वथैवाविशेषः साध्यते, तदा प्रत्यक्षादिविरोधः। अथ येन केनचिदविशेषः, तदा प्रमेयत्वादिना सर्वेषामविशेषाभ्युपगमात्सिद्धसाधनम्। अथ नित्यत्वेनानित्यत्वेन वा सर्व्वेषामविशेषस्तदाप्यनुमानादिना विरोधस्तदाह—"क्वचित्तद्धर्म्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः" ( न्या० सू० ५।१।२४ )। क्वचिद् घटादौ तद्धर्म्मस्यानित्यत्वस्योपपत्तेः प्रमाणेनोपलब्धेः, क्वचिदाकाशादौ वानुपपत्तेः प्रमाणतोऽनुपलब्धेः, प्रतिषेधा-

"निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः" (न्या० सू० ५।१।२७)। पृथिव्यादिषु कार्य्यत्वसिद्धये निर्दिष्टस्य सावयवत्वस्याभावेऽपि बुद्ध्यादौ कार्य्यत्वमुपलब्धम्। सपक्षैकदेशस्यापि धूमादेर्गमकत्वदर्शनादप्रतिषेधः। कथं तर्हि बुद्ध्यादौ कार्य्यत्वसिद्धिरत आह—"कारणान्तरादपि तद्धर्म्मो-

भावः सर्व्वाविशेषप्रसङ्गाभाव इति। अथवा क्वचिदनित्यत्वादौ तत्साधकस्य धर्म्मस्य कार्यत्वादेर्हेतुत्वेनोपपत्तेः सम्भवात्। क्वचिच्च सर्व्वाविशेषे च सद्भावस्याऽन्यस्य वा धर्म्मस्य हेतुत्वेनाऽनुपपत्तेरसम्भवात् प्रतिषेधाभाव इति पूर्ववत्।

## ❋ (१६) उपपत्तिसमः ❋

"उभयकारणोपपत्तेरुपपत्तिसमः" (न्या० सू० ५।१।२५)। यद्यनित्यत्वकारणोपपत्तेः शब्दस्यानित्यत्वमिष्यते, नन्वेवं नित्यत्वकारणस्या-स्पर्शत्वस्योपपत्तेर्नित्यत्वमपि किन्नेष्यते? इति उपपत्त्या प्रत्यवस्थानमुपपत्तिसमः, न ह्यत्र विशेषोऽस्तीति। साधर्म्यवैधर्म्यसमाभ्यामस्याप्युक्तिमात्रभेदः, न वस्तुभेदः। उक्तिभेदादनन्तत्वप्रसङ्ग इति चेत्, अभ्युपगमाददोषः, प्रपञ्चोदाहरणार्थत्वात्सूत्राणां प्रतिसमाधानप्रकारव्युत्पत्त्यर्थत्वाच्चेति।

## ❋ उपपत्तिसमस्योत्तरम् ❋

अस्योत्तरम्—"उपपत्तिकारणानुज्ञानादप्रतिषेधः" (न्या० सू० ५।१।२६)। उभयकारणोपपत्तेरिति ब्रुवताऽनुज्ञातं तावदनित्यत्वकारणोपपत्तेरनित्यत्वम् अनुज्ञातस्य च प्रतिषेधो न युक्तः। न चास्माभिरुभयकारणोपपत्तिरभ्युपगम्यते येनास्माकं व्याघातः प्रसङ्गो वा चोद्यते। अस्पर्शत्वस्याऽकारणत्वादिति।

## ❋ (२०) उपलब्धिसमः ❋

"निर्दिष्टकारणाभावेप्युपलम्भादुपलब्धिसमः" (न्या० सू० ५।१।२७)। पृथिव्यादिषु कार्यत्वसिद्धये निर्दिष्टस्य सावयवत्वाख्यस्य कारणस्याभावेपि बुद्ध्यादौ कार्यत्वमुपलब्धमित्यर्थतोऽप्रयोजकोऽयं हेतुः, उपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः।

## ❋ उपलब्धिसमस्योत्तरम् ❋

"सपक्षैकदेशस्यापि धूमादेर्गमकत्वदर्शनादप्रतिषेधः" सपक्षैकदेशशब्देनाऽत्र हेतुरुपचरितः स्थानान्निमित्तान्मञ्चशब्दवत्। अथवा सपक्षस्यैकदेशो यस्यासावित्येवं बहुव्रीहिः। न खल्वप्रयोजको नाम हेत्वाभासोऽ-

पपत्तेरप्रतिषेधः" ( न्या० सू० ५।१।२८ )। प्रमाणान्तरादपि कार्यत्व-सिद्धेरित्यर्थः। प्रमाणञ्चानुपलब्धिकारणेष्वसत्सु प्रागूर्ध्वञ्चानुपलभ्य-मानत्वाद् घटादिवदिति।

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपलब्ध्युपपत्तेरनुप-लब्धिसमः ( न्या० सू० ५।१।२९ )। तस्य बुद्ध्यादिकार्यस्यानुपलब्धेर-नुपलम्भादभावसिद्धौ तद्विपरीतोपलब्ध्युपपत्तेः। प्रागूर्ध्वमपि बुद्ध्यादेः सद्भावः सेत्स्यतीत्यभिप्रायः। "अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः" (न्या० सू० ५।१।३०)। नास्तीति ज्ञानमनुपलब्धिः। सा च तत्स्वभावतया प्रत्यात्मसंवेद्या। अतः तदनुपलब्धिरसिद्धेत्यभिप्रायः।

---

सिद्धादिभ्योस्ति, तद्व्यावर्त्तकलक्षणाभावात्। सपक्षैकदेशवृत्तित्वं च धूमादिहेतुष्वप्यस्ति। नापि भागासिद्धत्वमेवात्राऽप्रयोजकत्वं, बुद्ध्यादेरपक्ष-त्वात्, न हि बुद्ध्यादौ सावयवत्वेन कार्यत्वं साधयितुमिष्टम्। एवं तर्हि बुद्ध्यादेः कार्यत्वसिद्धिर्न स्यादत आह—"कारणान्तरादपि तद्धर्म्मोपपत्तेर-प्रतिषेधः" (न्या० सू० ५।१।२८)। यथा निर्धूमस्याग्नेर्नासिद्धिरेव, प्रत्यक्षतो लिंगान्तराच्च तत्सिद्धेः, तथा कार्यत्वस्यापि प्रमाणान्तरादपि सिद्धेर्न बुद्ध्यादौ तत्सिद्धिप्रतिषेधः। किं पुनरत्र प्रमाणम् ? तदुच्यते—कार्यं बुद्ध्यादिकमनुप-लब्धिकारणेष्वसत्सु प्रागूर्ध्वं चानुपलब्धेः, पटादिवदिति।

## * (२१) अनुपलब्धिसमः *

"तदनुपलब्धेरनुपलंभादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः" (न्या० सू० ५।१।२९ )। तस्य बुद्ध्यादिकार्य्यस्य याऽनुपलब्धिः, सापि नोपलभ्यते। यद्युपलभ्येत, तदोपलब्धिरेव स्यादतोनुपलंभात्तस्यानुपलब्धेरभावसिद्धिस्तत्सिद्धौ चानुपलब्धिर्विपरीता बुद्ध्यादेरुपलब्धिरुपपद्यते। ततः प्रागूर्ध्वमपि बुद्ध्यादेः सद्भावः सेत्स्यतीत्यभिप्रायः। न चात्र विशेषोस्ति। बुद्ध्यादेः प्रागनुपलब्धि-रभावं साधयति, न तु तदनुपलब्धेरनुपलंभ इति। अनुपलब्ध्या प्रत्यवस्थान-मनुपलब्धिसमः।

## * अनुपलब्धिसमस्योत्तरम् *

अत्रोत्तरम्—"अनुपलंभात्मकत्वादनुपलब्धिरहेतुः" (न्या० सू० ५।१।३०)। नास्तीति ज्ञानमनुपलब्धिः। सा तत्स्वभावतयैव प्रत्यात्मवेद्याऽतस्तदनुपलब्धेरनु-पलब्धिरसिद्धेत्यभिप्रायः। यदाप्युपलब्ध्यभावोऽनुपलब्धिस्तदाप्युपलब्ध्यभावस्य प्रत्यात्मवेद्यत्वात्तदनुपलब्धिरसिद्धा। तथा हि सुखज्ञानं मे नास्ति सुखज्ञानमहं

"नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ( न्या० सू० ५।१।३५ )। अनित्यत्वधर्म्मस्य नित्यं सर्व्वदा सद्भावाद् धर्म्मिणोऽपि शब्दस्य सर्व्वदा सद्भावप्रसङ्गः। अथानित्यत्वं सर्व्वदा नास्ति, तथाप्य-

नोपलभ इत्यनुपलम्भत्वेनैव संवेद्यतेऽत एवोपलभ्यमानत्वादुपलब्धित्वं नाशंकनीयम्, न हि यथा विधिमुखेनोत्पद्यमानोपलब्धिः संवेद्यते, तथाऽनुपलब्धिरपीति।

## ❋ (२२) अनित्यसमः ❋

"साधर्म्यात् तुल्यधर्म्मोपपत्तेः सर्व्वानित्यत्वप्रसंगादनित्यसमः" ( न्या० सू० ५।१।३२ )। अनित्येन घटेन साधर्म्यादनित्यः शब्द इति ब्रुवतः सर्वभावानामनित्यत्वं प्रसज्यते। अस्ति हि घटेन साधर्म्यं सर्वभावानामस्तित्वादि। न चात्र विशेषोस्ति येन घटसाधर्म्याच्छब्दस्यैवानित्यत्वं, न सर्व्वभावानामिति। अनित्यत्वेन प्रत्यवस्थानमनित्यसमः।

## ❋ अनित्यसमस्योत्तरम् ❋

अविशेषसमादस्योक्तिभेदा भेदस्तेन तत्रोक्तमुत्तरमत्रापि द्रष्टव्यम्। व्युत्पत्त्यर्थमन्यदप्याह—"साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात्" (न्या० सू० ५।१।३३)। सर्व्वानित्यत्वप्रसंगः किमर्थं चोद्यते ? न हि सर्व्वानित्यत्वप्रसक्तौ शब्दस्यानित्यत्वं न सिध्यति। अथ यतोतिप्रसंगस्ततोर्थसिद्धिर्नेष्टा, यथा वचनमात्रादिति, नन्वेवं सत्यसाधकेन वचनमात्रे साधर्म्यात्त्वया शब्दाऽनित्यत्वहेतोरसिद्धिरिष्टा। ततः किम् ? अथासाधकेन साधर्म्याद्धेत्वसिद्धेरभ्युपगमे त्वदुक्तस्य प्रतिषेधस्याप्यसिद्धिः प्राप्नोति। कस्मात् ? प्रतिषेध्येनाऽसाधकेन साधर्म्यादस्ति हि प्रतिषेध्येन प्रतिषेधस्य साधर्म्यमभिधेयत्वादि। तस्मादयुक्तः प्रतिषेध इति।

## ❋ (२३) नित्यसमः ❋

"नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः" ( न्या० सू० ५।१।३५ )। अनित्यत्वधर्म्मस्य नित्यं सर्व्वदा सद्भावाद्धर्म्मिणोपि शब्दस्य सर्व्वदा सद्भावः प्राप्नोति। अन्यथा कथमसति धर्म्मिणि धर्म्मः स्यात् ? धर्म्मिणोपि सर्व्वदा व्यवस्थाने नाऽनित्यत्वम्। अथानित्यत्वधर्म्मः सर्व्वदा नास्ति, तथाप्यनित्यत्वाभावान्नित्यः शब्द इति नित्यत्वेन प्रत्यवस्थानं नित्यसमः।

## ❋ नित्यसमस्योत्तरम् ❋

अत्रोत्तरम्—"प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः" ( न्या० सू० ५।१।३६ )। प्रतिषेध्ये शब्दे नित्यमनित्यभावादिति

नित्यत्वस्याभावान्नित्यः शब्द इति । अनित्यत्वस्य सर्व्वदाभ्युपगमे नित्यत्वस्य विरोधः । अनभ्युपगमे चासिद्धो हेतुः, नित्यानित्यत्व विरोधाच्च । प्रध्वंसश्चानित्यत्वम् । न च तस्मिन् सति शब्दसद्भाव इति । एतेनान्यत्वस्यात्मनोऽनन्यत्वादन्यत्वन्नास्तीत्यादीन्यसदुत्तराणि प्रत्युक्तानि । निमित्तान्तरात् संज्ञान्तरे योज्यमानेऽप्यर्थे तथाभावस्य निराकर्तुमशक्यत्वात् । आनन्त्यात् सर्व्वाणि जात्युत्तराण्युदाहर्तुं न शक्यन्ते, सूत्राणामप्युदाहरणार्थत्वादिति ।

ब्रुवताऽभ्युपगतं शब्दस्याऽनित्यत्वम् । ततश्चानित्यत्वोपपत्तेः प्रतिषेधो न युक्तः । अथानित्यत्वं शब्दे नाभ्युपगम्यते, तथापि नित्यमनित्यभावादित्यस्य हेतोरसिद्धत्वादयुक्तः प्रतिषेधः । अथ मतं नानित्यत्वं मया प्रतिषिध्यते, किंतु नित्यत्वमस्तीत्युपपाद्यते, तदप्ययुक्तमित्याह—"नित्यानित्यविरोधाच्च ।" न हि विधिप्रतिषेधावेकत्र संभवतः । सम्भवे हि दृष्टादृष्टफलाऽनर्थप्राप्तिपरिहारार्थिनां साधनविशेषेषु प्रवृत्तिनिवृत्तिनियमो न स्यात् । प्रध्वंसश्चाऽनित्यत्वं, न तस्मिन्सति शब्दसद्भाव इति । नन्वेवं सति शब्दकाले प्रध्वंसाभावान्नित्यत्वं प्राप्तं, न; भाविनस्तद्धर्म्मत्वाद्भावी नाशोऽनित्यतेष्यते । यस्य हि नाशो भविष्यति तदनित्यमित्युच्यते, नाशयोग्यता, वाऽनित्यता योग्यतैवात्रोपचारेण प्रध्वंसशब्देनोक्तेति ।

## ❀ (२४) कार्यसमः ❀

"प्रयत्नकार्यानेकत्वात्कार्यसमः" ( न्या० सू० ५।१।३७ )। वर्णात्मकः शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वात्, घटवदित्युक्ते परः प्रत्यवतिष्ठते—प्रयत्नकार्यानेकत्वादिति । प्रयत्नानन्तरं घटादीनां जन्म दृष्टं, व्यवहितानां तु व्यवधानापोहादभिव्यक्तिश्च । तत्र न ज्ञायते—किं प्रयत्नानंतरमात्मलाभः शब्दस्य, आहोस्विदभिव्यक्तिरिति ? न चात्र विशेषोस्ति येन शब्दस्य प्रयत्नानन्तरमात्मलाभ एवेति निश्चीयते । कार्यभेदेन प्रत्यवस्थानं कार्यसमः ।

## ❀ कार्यसमस्योत्तरम् ❀

अस्योत्तरम्—"कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः" ( न्या० सू० ५।१।३८ ) । यत्र ह्यनुपलब्धिकारणं व्यवधानाद्युपपद्यते, तत्र कार्यान्यत्वेभिव्यक्तिव्यतिरिक्ते जन्मनि प्रयत्नस्याहेतुत्वं युक्तम्, न च शब्दस्यानुपलब्धिकारणं व्यवधानादि किंचिदुपलभ्यते । तस्माच्छब्दात्मलाभे प्रयत्नस्य नाहेतुत्वमिति । अथवा कार्यान्यत्वे जन्मव्यतिरिक्तायां शब्दस्याभिव्यक्तौ प्रयत्नाहेतुत्वं कस्मादनुपलब्धिकारणोपपत्तेरभिव्यक्तिहेतुत्वं यतोन्यत्र दृष्टमित्यध्याहार्यं, न

शब्दस्यानुपलब्धिकारणं किंचिदस्ति येन प्रयत्नादभिव्यक्तिः स्यात्। अपि च प्रयत्नस्य तीव्रमंदादिभावाच्छब्दस्य तथाभावः उत्पत्तिपक्ष एव युज्यते, न हि महता प्रयत्नेन व्यज्यमानमल्पं सुवर्णादि महद्भवति। तस्मादिच्छाप्रयत्न-धर्म्मानुविधायित्वाच्छब्दस्य वेगोत्क्षेपणादिवदुत्पत्तिरेव प्रयत्नानन्तरं शब्दस्येति।

## ॐ उक्तजातीनां जात्यन्तरोपलक्षणत्वम् ॐ

एतेन जातिभेदप्रपंचाभिधानेन तद्दूषणप्रकाराश्च सुखेनैव व्युत्पादिता भवन्ति। यद्यन्येपि जातिभेदाः सन्ति, कस्मान्नोदाह्रियन्ते ? सर्व्वेषामुदाहर्तु-मशक्यत्वात्। कस्मात् ? सर्वाणि जात्युत्तराणि उदाहर्त्तुंन्न शक्यन्ते, आनन्त्यात्। न चानन्तत्वाभ्युपगमे सूत्रविरोधः, सूत्राणामप्युदाहरणार्थत्वात्। कुत एतद् गम्यते—सूत्राणामुदाहरणार्थत्वमेव, न पुनरेतावन्त एव जातिभेदा इत्यवधारणार्थत्वमिति गम्यते ? जात्यन्तरेण पूर्व्वपक्षकरणात्। यद्यवधारणं विवक्षितं स्यात्तदा सूत्रकारः पूर्व्वपक्षं कुर्व्वंश्चतुर्विंशतिव्यतिरिक्तां जातिं न ब्रूयात्। उक्तं च जात्यन्तरं यथा—

## ॐ अनन्यसमः ॐ

"अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः" ( न्या० सू० २।२।३१ )। शब्दानित्यत्वपरीक्षायां "अभ्यासात्" ( न्या० सू० २।२।२६ ) इति पूर्वपक्षं कृत्वा "नाऽन्यत्वेप्यभ्यासोपचारात्" (न्या० सू० २।२।३०) इत्यनेन दूषितवान्। पुनः पूर्व्वपक्षवाद्याह—यदिदमन्यदित्युच्यते, किमात्मनोऽन्यदुताऽनन्यदिति ? यद्यन्यत्तदात्महानान्नास्त्येव। अथानन्यत्तदानन्यत्वादेवान्यन्न भवतीत्यन्यता-भावः —एषानन्यसमा जातिः।

## ॐ संप्रतिपत्तिसमः ॐ

तथा "विप्रतिपत्तौ च संप्रतिपत्तेः" ( न्या० सू० २।१।३ ) इति। यदि न विप्रतिपत्तिः सम्प्रतीयते, तदाऽस्तीति कथं वेत्सि ? अथ सम्प्रतीयते, तदापि सम्प्रतीयत इति सम्प्रतिपत्तिरेव, सा न विप्रतिपत्तिः। अथवा यदि तदर्थो न सम्प्रतीयते, तदा म्लेच्छभाषावदप्रतीतार्थत्वान्न संशयहेतुः। अथ सम्प्रतीयतेऽर्थः, तथापि स्वार्थं सम्प्रत्याययन्ती सम्प्रतिपत्तिरेव—इत्येषा सम्प्रति-पत्तिसमा जातिः।

## ॐ व्यवस्थासमः ॐ

"अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः" ( न्या० सू० २।१।४ )। अत्र षष्ठीविवक्षायामभाव इत्यध्याहार्यम्, पञ्चमीविवक्षायां न संशय इति। यद्यव्यवस्थात्मनि न व्यवस्थिता, तदात्महानान्नास्त्येव। अथात्मनि

उक्ता जातिभेदाः, अथेदानीं निग्रहस्थानान्युच्यन्ते। तान्यपि विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पानन्त्यादसङ्ख्यातानीत्यतः संक्षेपत उच्यन्ते—साध्ये प्रतिदृष्टान्तधर्मानुज्ञा प्रतिज्ञाहानिः यदि कृतकत्वादनित्यश्शब्द इष्यते तर्ह्याकाशवदमूर्तत्वान्नित्यः किं नेष्यते? एवं प्रतिवादिनोक्ते वाद्याह—भवतु किं नो बाध्यत इति। तस्य नित्यत्वाभ्युपगमेनानित्यत्वप्रतिज्ञा हीयत इत्यतः प्रतिज्ञाहानिर्नाम निग्रहस्थानं भवति।

---

व्यवस्थिता, तदापि व्यवस्थानाद्व्यवस्थैवेयम्—इति व्यवस्थासमा जातिः। तस्मान्न चतुर्विंशतिरेवेत्यवधारणं सूत्रकारस्य विवक्षितम्, अनन्यसमादीनां चोत्तरम्—"निमित्तान्तरात्संज्ञान्तरे संयोज्यमानेऽर्थे तथाभावस्य निराकर्तुमशक्यत्वादिति"। न हि कार्ये कार्यान्तरजनकत्वेन कारणशब्दे संयोज्यमाने कार्यत्वं निवर्त्तते। नापि कारणे च स्वात्माकाशाद्यजनकत्वेनाकारणशब्दे संयोज्यमाने स्वकार्यकारणत्वं निवर्त्तत इति।

## ❀ निग्रहस्थाननिरूपणम् ❀

उक्ता जातिभेदाः। अथेदानीं निग्रहस्थानान्युच्यन्ते। तान्यपि विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्न संख्यातानीत्यतः संक्षेपतो व्युत्पाद्यन्ते—(१) "प्रतिज्ञाहानिः, (२) प्रतिज्ञान्तरम्, (३) प्रतिज्ञाविरोधः, (४) प्रतिज्ञासंन्यासः, (५) हेत्वन्तरम्, (६) अर्थान्तरं, (७) निरर्थकम्, (८) अविज्ञातार्थम्, (९) अपार्थकम्, (१०) अप्राप्तकालं, (११) न्यूनम्, (१२) अधिकं, (१३) पुनरुक्तम्, (१४) अननुभाषणम्, (१५) अज्ञानम्, (१६) अप्रतिभा, (१७) विक्षेपः, (१८) मतानुज्ञा, (१९) पर्यनुयोज्योपेक्षणं, (२०) निरनुयोज्यानुयोगः, (२१) अपसिद्धान्तः, (२२) हेत्वाभासाश्च निग्रहस्थानानि" (न्या० सू० ५।२।१) इति। विप्रतिपत्त्यप्रतिपत्तिलिङ्गत्वेन वाक्यात्मकानामपि प्रतिज्ञाहान्यादीनां पराजयनिमित्तत्वान्निग्रहस्थानत्वमुक्तमिति।

## ❀ (१) प्रतिज्ञाहानिः ❀

तत्र "प्रतिदृष्टान्तधर्माऽभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः" (न्या० सू० ५।२।२)। यदि स्वदृष्टान्ते घटादौ प्रतिदृष्टान्तस्याकाशादेर्द्धर्म्मं नित्यत्वमनुजानाति, तदा दृष्टान्तस्य साध्यविकलत्वमेव निग्रहनिमित्तं स्यात्, न प्रतिज्ञाहानिः। अथ मतम्—प्रतिदृष्टान्तधर्म्मानुज्ञानात् स्वदृष्टान्तं जहाति, दृष्टान्तं च जहन्निगमनान्तमेव पक्षं जहातीति प्रतिज्ञाहानिरित्युच्यते, दृष्टान्तहानिरेव तर्ह्युपचारेण प्रतिज्ञाहानिरित्युक्तेति, नैष दोषः, पक्षस्यात्र दृष्टान्तशब्देनाऽभिधानात्। कथम्? "दृष्टश्चासावन्ते व्यवस्थित इति दृष्टान्तः स्वश्चासौ दृष्टान्तश्चेत्येवं स्वपक्षोऽत्र

स्वदृष्टान्त इत्युच्यते, प्रतिपक्षस्तु प्रतिदृष्टान्तः"—इति [1]तमोरिः। वयं तु ब्रूमः—साधनाधिकरणत्वादिसाधर्म्यात्पक्षोत्र दृष्टान्तशब्देनोपचरितः। [2]सहचरणादिसूत्रेऽस्योपचारनिमित्तस्यानभिधानादयुक्तमिति चेत्, न; उदाहरणार्थत्वात्। न हि तत्रावधारणमस्ति, अन्यथाप्युपचारप्रवृत्तेः—सिंहो माणवकः, अग्निर्वटुः, समुद्रस्तडागः, ग्रामैकदेशेपि दग्धे ग्रामो दग्ध इत्येवमादि। प्रयोजनाभावादनुपचार इति चेत्, न; प्रयोजनाभावेप्युपचारस्य दृष्टत्वात्—यष्टिका भुङ्क्ते, मञ्चाः क्रोशन्तीत्यादि। अस्ति चात्र प्रयोजनम्—प्रतिदृष्टान्तधर्म्मानभ्युपगमेपि प्रतिज्ञातमर्थं त्यजतः प्रतिज्ञाहानिरेवेति। प्रतिदृष्टान्तस्य यो धर्म्मः साध्यविरोधी, तं साध्ये स्वपक्षेऽनुजानतः प्रतिज्ञाहानिः, तद्यथा—अनित्यः शब्दः कृतकत्वात्, घटवदित्येवं कृते, परो ब्रूते—यदि कृतकत्वादनित्यसाधर्म्यादनित्यः शब्द इष्यते, नन्वाकाशवदमूर्त्तत्वान्नित्यसाधर्म्यान्नित्यः किन्नेष्यते ? न चात्रास्ति विशेषः कश्चिदित्येवं प्रतिवादिना जातिप्रयोगेणान्यथा वाकुलीकृतो वाद्याह—भवतु नित्यः शब्द इति। तस्य नित्यत्वाभ्युपगमेनानित्यत्वप्रतिज्ञा हीयत इत्यतः प्रतिज्ञाहानिर्निग्रहस्थानम्।

अनभ्युपगमान्नेति चेत्—स्यात्कस्यचिन्मतम्—नैव निग्रहस्थानं किंचिन्मयाभ्युपगम्यत इति; एवं तर्हि न कस्यचिज्जयः पराजयो वेति व्यर्था वादे प्रवृत्तिः। अथास्ति किंचिन्निमित्तं यतः पराजितोऽसाधुवादी चोच्यते; ननु तदेव निग्रहस्थानम्। प्रतिज्ञात्यागेन कथं साधुवादित्वम् ? कथं न पराजय इति।

## ❀ धर्मकीर्तेराशङ्का तन्निरासश्च ❀

[3]ननु च स्वयमनित्यं शब्दमभ्युपगम्य स्वस्थात्मा कथं नित्यं प्रतिपद्यते ? यदि नाम प्रतिपद्यतेऽनित्यधर्म्मस्यापि दर्शनात्संशयितः स्यादिति, न; परोक्ते दोषमजानतः सिद्धसाध्यतापह्नतचित्तस्य नित्यत्वाभ्युपगमात्। भ्रान्तेः पुरुषधर्म्मत्वादनियतनिमित्तत्वाच्च। न च विदुषः स्वस्थात्मनः

---

१. तमोरिः=उद्योतकराचार्यः, तेनोक्तम्—"दृष्टश्चासावन्ते व्यवस्थित इति दृष्टान्तः, स्वश्चासौ दृष्टान्तश्चेति स्वदृष्टान्तशब्देन पक्ष एवाभिधीयते। प्रतिदृष्टान्तशब्देन प्रतिपक्षः—प्रतिपक्षश्चासौ दृष्टान्तश्चेति।

२. न्या० सू० २।२।६१। अस्य=साधर्म्यस्य।

३. इयमाशङ्का धर्मकीर्तेः—"कः स्वस्थात्मा स्वयमैन्द्रियकत्वादनित्यः शब्दो घटवदिति ब्रुवन्, सामान्येनोपदर्शनमात्रेण नित्यं शब्दं प्रतिपद्येत ? सामान्यस्य नित्यस्यैन्द्रियकत्वेऽप्यनित्ये घटे दर्शनात् संशयितः स्यात्" (वा० न्या० पृ० ७७)।

"प्रतिज्ञातार्थस्य प्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम्' (न्या० सू० ५।२।३)। सर्वमनित्यं सत्त्वादित्यत्र दृष्टान्ताभावेन प्रतिज्ञातार्थस्य प्रतिषेधे धर्मो विवादास्पदीभूतत्वादिलक्षणः, तस्य विकल्पः = प्रतिज्ञातार्थविशेषणत्वेन योजनम्, तदर्थः प्रतिषेधनिवृत्त्यर्थः; यथा मशकार्थो धूम इति निर्देशः। विवादास्पदीभूतं सर्वमनित्यमिति एतत्प्रतिज्ञान्तरं निग्रहस्थानं हेत्वन्तरवदिति।

किंचिदपि निग्रहस्थानं सम्भवति, विप्रतिपत्त्यप्रतिपत्तिलक्षणत्वान्निग्रहस्थानस्य। संशयितोऽपि च वादी नात्मनः संशयं प्रकटयति, जयाकांक्षित्वात्। किं चात्र बहुनोक्तेन? यस्तावद्यतः कुतश्चिन्निमितात्? प्रतिदृष्टान्तधर्म्ममभ्यनुजानात्यन्यथा वा प्रतिज्ञातमर्थं जहाति, तस्य प्रतिज्ञाहानिर्निग्रहस्थानमिति।

## ❀ (२) प्रतिज्ञान्तरम् ❀

"प्रतिज्ञातार्थप्रतिषेधे धर्म्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम्" (न्या० सू० ५।२।३)। अनित्यः शब्द ऐन्द्रियकत्वादित्यस्य सत्तादिभिर्व्यभिचारेण प्रतिषिद्धे प्रतिज्ञातेऽर्थे धर्म्मविकल्पेन प्रतिज्ञान्तरं करोति—यथा घटोऽसर्व्वगतः, एवं शब्दोप्यसर्व्वगतोऽनित्य इति। तदर्थ इति साध्यसिद्ध्यर्थं सर्व्वगत इति निर्देशः। इयमपि प्रतिज्ञैव, न च प्रतिज्ञा प्रतिज्ञान्तरसाधनसमर्था, इत्यसमर्थोपादानान्निग्रहस्थानमित्येके[1] तदयुक्तम्, हेत्वन्तरं ह्येतन्न प्रतिज्ञान्तरं हेतुविशेषणत्वेनाऽसर्व्वगतत्वस्योपादानात्। "न च प्रतिज्ञा प्रतिज्ञासाधनायोच्यमाना प्रतिज्ञान्तरं भवति, किं तर्हि? हेत्वादेरनन्यतमः, साध्यसाधनायोपादानात्। साध्यत्वेन हि निर्देशः प्रतिज्ञोच्यते" (वा० न्या० पृ० ७९)। साधनाभिप्रायेण त्वसिद्धनिर्देशोपि न प्रतिज्ञा यथाकाशं मूर्त्तं यतो रूपादिमदिति।

तस्मादन्यथा व्याख्यायते—"सर्वमनित्यं सत्त्वादित्यत्र दृष्टान्ताभावेन प्रतिज्ञातार्थस्य प्रतिषेधे कृते, धर्म्मो विवादास्पदीभूतत्वलक्षणः, तस्य विकल्पः—पूर्वं प्रतिज्ञाविशेषणत्वेनाऽनभिधानं पश्चादभिधानमिति। तदर्थ इत्यत्र तदिति प्रतिषेधस्य परामर्शः, अर्थशब्दश्च निवृत्तिवाची, यथा मशकार्थोऽयं धूम इति"। एवं तदर्थः = प्रतिषेधनिवृत्त्यर्थ इत्यर्थः। निर्देश इति

१. एके=भाष्यकारादयः। भाष्यकारीयं व्याख्यानं धर्मकीर्तिकीर्तितदिशा प्रत्यादिशति—तदयुक्तमिति। कीर्तिनोदीरितम्—"अत्रापि नैवंब्रुवता प्रतिज्ञान्तरं पूर्वप्रतिज्ञासाधनायोक्तं भवति। किं तर्हि? विशेषणम् ऐन्द्रियकत्वस्य हेतोः" (वा० न्या० पृ० ७८)।

"प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः" ( न्या० सू० ५।२।४ )। यथा गुणव्यतिरिक्तं द्रव्यं भेदेनानुपलम्भादिति ।

सविशेषणाभिधानं विवादास्पदीभूतं सर्वमनित्यमित्येतत्प्रतिज्ञान्तरं निग्रहस्थानं हेत्वन्तरवत् । तद्यथा—अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरं, तथात्राप्यविशेषोक्तायां प्रतिज्ञायां प्रतिषिद्धायां विशेषमिच्छतः प्रतिज्ञान्तरं द्रष्टव्यम्, तुल्यन्यायत्वादिति ।

### ❀ ( ३ ) प्रतिज्ञाविरोधः ❀

"प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः" ( न्या० सू० ५।२।४ )। यथा गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योर्थान्तरत्वेनाऽनुपलम्भादिति ।

### ❀ कीर्तिप्रोक्ता दोषाः तन्निरासश्च ❀

[1]विप्रकर्षिणां भावानां भेदेनानुपलम्भेपि भेदसद्भावान्न विरोध इति चेत्, न; वक्तृदोषोद्भावनात् यदि व्यतिरेकं नोपलभसे, कथमजानानः परप्रतिपादनाय प्रतिज्ञां करोषि ? न ह्यव्युत्पन्नः प्रतिपादकोस्ति । अथोपलभसे गुणद्रव्ययोर्भेदं तथापि भेदेनानुपलब्धेरिति व्याहतो हेतुस्तदेवं प्रतिज्ञाहेत्वभिधानयोर्विरोधात्प्रतिज्ञाविरोधः । प्रत्यक्षादिविरोधोप्यत्र प्रतिज्ञाविरोधो द्रष्टव्यो हेतुग्रहस्योपलक्षणार्थत्वात् ।

[2]यच्चोक्तम्—श्रमणा गर्भिणीत्यादौ प्रतिज्ञायां स्ववचनविरोधोद्भावनं

---

१. धर्मकीर्तिराह—"भवत्येवं निग्रहाधिकरणं यद्येवंविधः प्रतिज्ञाहेत्वोर्विरोध इष्टः । अथ पुनरस्योपलब्धिलक्षणप्राप्तिर्लुप्यते, तदा न कश्चित् प्रतिज्ञाहेत्वोर्विरोधः, व्यतिरिक्तानामपि भावानां कुतश्चिद् विप्रकर्षिणां तद्व्यतिरेकेणानुपलब्धावपि व्यतिरेकस्य भावात्" ( वा० न्या० पृ० ८२ )। 'कुतश्चित्=पर्वतादेः सकाशाद् विप्रकर्षिणां पिशाचादीनाम्' इति शान्तरक्षितस्तट्टीकायाम् । तदेतत् समस्यानुवदति—विप्रकर्षिणामिति ।

२. "एतेन प्रतिज्ञाविरोधोऽप्युक्तः—यत्र प्रतिज्ञा स्ववचनेन विरुध्यते, यथा—श्रमणा गर्भिणी" (न्या० वा० पृ० ५५३)। एतद्वार्तिकं दूषयाञ्चक्रे च कीर्तिः—"तत्रेदमेव निग्रहाधिकरणम्—असाधनाङ्गभूतायाः प्रतिज्ञायाः साधनाङ्गवाक्ये प्रयोगो, न विरोधः ; तदधिकरणत्वात् । यदि प्रतिज्ञानपेक्षो विरोधः स्यात्, स्यात्पराजयाश्रयः । प्रतिज्ञाधिकरणत्वे पुनः तत्प्रयोगकृत एव पराजयोऽस्य, प्रस्तावोपसंहारावज्ञानत्वात् । व्यर्थं विरोधोद्भावनम् पराजितपराजयाभावाद् भस्मीकृतानलवत्' ( वा० न्या० पृ० ८३ )। तदेतदनुवदति—यच्चोक्तमिति । श्रमणा=बौद्धभिक्षुणी । विरतपुरुषसम्भोगा ब्रह्मचारिणीति यावत् ।

न युक्तं, व्यर्थत्वादसाधनांगप्रतिज्ञाप्रयोगेणैवोपसंगृहीतत्वात्, पराजितस्य च पराजयाभावाद्भस्मीकृतप्रज्वलनवदिति। तदप्ययुक्तम्; प्रतिज्ञायाः साधनांगत्वेन प्राक् प्रतिपादितत्वात्। एवं च प्रतिज्ञाया विरोधः, प्रतिज्ञया वा विरोधः प्रतिज्ञाविरोध इत्युभयथा विग्रहेऽपि नास्ति दोषः। प्रतिज्ञया हेतुविरोधस्योदाहरणम्—नास्त्येको भावः समूहे भावशब्दप्रयोगादिति। न ह्येकाभावे समूहः संभवत्येकसमुच्चयो हि समूह इति।

[1]नात्र प्रतिज्ञायाः प्रयोगो न हेतोः, किन्तर्हि ? हेत्वन्तरसाधितस्योपसंहारवचनं तस्मान्नात्र विरोधः इति चेत्, ईदृशमपि यद्युपसंहारवचनम्, प्रतिज्ञाहेतुवचनं तर्हि कीदृशम् ? किं चावयवद्वयवादिन उपसंहारवचनमप्यसाधनांगमेव। न हि परार्थानुमानादन्यद्वचनं साधनांगं त्वयेष्टम्। परार्थानुमानं चावयवद्वये नियतं त्वयेष्टम्। न चोपसंहारवचो हेतुदृष्टान्तवचस्यन्तर्भवति। तस्मादुपसंहारवचोऽपि तव निग्रहस्थानमेवेति।

[2]यच्चोक्तम्—न चैकं नास्तीति ब्रुवाणः कश्चिदेकं समुच्चयरूपं समूहमिच्छतीति, तदप्ययुक्तम्; न हि तव निःशेषं जगत् प्रत्यक्षम्, विचित्राभिप्रायवन्तश्च प्राणिनो दृश्यन्ते, तेनैवमपि कश्चिदिच्छतीति सम्भाव्यते। लोकप्रसिद्धार्थैश्च शब्दैर्वादे व्यवहर्त्तव्यम्। तेन समूहशब्दस्यान्य एवार्थ इत्यपि न वाच्यम्।

[3]यदप्युक्तम्—विरोधस्य द्विष्ठत्वात् तत्र हेतुप्रतिज्ञायाः पृथग्बाधोदाहरणयोः न कश्चिदर्थभेद इति, सत्यम्, न वस्तुतः, किं तु विवक्षातो भेदोऽभ्युपगम्यते—यदा प्रतिज्ञां प्रमाणीकर्तुमिच्छति, तदा प्रतिज्ञया हेतोर्विरोधः। यदा तु हेतुं प्रमाणीकरोति, तदा प्रतिज्ञाया हेतुना विरोध इत्येवमभिप्रायभेदाद् भेदः। समूहे भावशब्दप्रयोगादित्ययं [4]व्यधिकरणासिद्धो न प्रतिज्ञाविरोध इति चेत्, न; प्रमाणसंप्लववद्दोषसंप्लवाभ्युपगमात्। दृश्यते हि लोकेऽप्येकस्मिन्नपि वस्तुनि अनेकदोषकीर्त्तनम्। किं चानेकदोषनिश्चये सति

---

१. "नात्र प्रतिज्ञायाः प्रयोगो नापि हेतोर्येन विरोधः स्यात्, किं तर्हि ? प्रतिपादितार्थोपदर्शनेनोपसंहारवचनम्" (वा० न्या० पृ० ८४)।

२. "अत एव न प्रतिज्ञया हेतोर्बाधनम्। न चैकमेव किञ्चित् नास्तीति ब्रुवाणः कश्चित् तत्समुच्चयरूपमेकं च समूहमिच्छति, येन विरोधः स्यात्" (वा० न्या० पृ० ८६)।

३. "तत्र हेतुप्रतिज्ञयोः पृथग्बाधोदाहरणयोर्न कश्चिदर्थभेदः" (वा० न्या० पृ० ८७)।

४. "अपि चायं विरुद्धो वा सति हेतुप्रयोगे व्यधिकरणत्वादसिद्ध इत्यसिद्धता हेतोर्निग्रहस्थानम्" (वा० न्या० पृ० ८८)।

"स्वपक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः" ( न्या० सू० ५।२।५ )। अनुष्णोऽयमग्निरित्यस्य प्रतिषेधे वाद्याह—संपश्यध्वमहो मध्यस्थाः ! नाहमनुष्णमग्निं ब्रवीमि अनुक्तोपालम्भोऽयमिति । एतत्तस्य प्रतिज्ञासंन्यासलक्षणं निग्रहस्थानमिति ।

---

यो यदा स्मर्यते, स तदोद्भाव्यते । तेनैक एव दोषो वक्तव्य इत्ययं नियमः शास्त्रे नेष्यते ।

येपि प्रतिज्ञाविरोधा हेत्वाभासेष्वेवान्तर्भाव्यन्ते[1] , तेषामप्युद्भावयितुं विवक्षाभेदेन भेद उक्तः कालातीतोदाहरणप्रस्तावे, तत्र प्रतिज्ञाविरोधस्यापृथगवचनमिति ।

## ❋ (४) प्रतिज्ञासंन्यासः ❋

"पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः" ( न्या० सू० ५।२।५ ) प्रतिज्ञार्थस्याऽपनयनमपह्नवः, अत एव प्रतिज्ञाहानितोऽस्य भेदः—तत्र ह्यसामर्थ्यात्प्रतिज्ञार्थं त्यजति, न तु 'नैवं मया प्रतिज्ञातम्' इत्यपह्नुते । अत्र पुनरनुष्णोऽग्निरित्यस्य प्रत्यक्षबाधितत्वेन प्रतिषेधे कृते वादी हेत्वाभासनिग्रहस्थानभयात्तदपह्नवं करोति—सम्पश्यध्वमहो मध्यस्थाः ! साक्षिणः ! नाहमनुष्णमग्निं ब्रवीमीत्यनुक्तोपालम्भोऽयमित्येतत्तस्य प्रतिज्ञासंन्यासलक्षणं निग्रहस्थानमिति । [2]समो गम्यृच्छिप्रच्छीत्यादिसूत्रे "दृशेश्चेति वक्तव्यम्" ( वा० ७२६ ) इत्यनेन सम्पश्यध्वमित्यात्मनेपदम् ।

## ❋ कीर्तिप्रोक्तदूषणं तदुद्धारश्च ❋

[3]ननु च हेत्वाभासेन निगृहीतस्य किं प्रतिज्ञासंन्यासापेक्षया ? तदेव हि न्याय्यं निग्रहस्थानं, किमपरैरशक्यपरिच्छेदैः क्लीबप्रलापचेष्टितैरुपन्यस्तैः ?

---

१. "तथा सति हेतोर्धर्मिणि भावसंशयेऽसिद्धतैव हेतुदोष इत्यसिद्धविरुद्धाभ्यामन्यो न प्रतिज्ञाविरोधो नाम पराजयहेतुः" ( वा० न्या० पृ० ८९ )।

२. "समो गम्यृच्छिप्रच्छिस्वरत्यर्तिविदिभ्यः" (पा० सू० १।३।२९) इति वृत्तिस्थं सूत्रं मनसिकृत्योक्तम्—समो गम्यृच्छिप्रच्छीत्यादि सूत्रे इति । भाष्यस्थं सूत्रं तु—'समो गम्यृच्छिभ्याम्' इत्याकारं, शेषं वार्तिकं व्यवह्रियते ।

३. "किमिदानीमुत्तरप्रतिज्ञासंन्यासापेक्षया ? तस्य तदेवाद्यं निग्रहस्थानमिति, किमन्यैः क्लीबप्रलापचेष्टितैरुपन्यस्तैः ? एवं ह्यतिप्रसङ्गः स्यात् । पक्षप्रतिषेधे तूष्णींभवतः तूष्णींभावो नाम निग्रहस्थानम् । प्रपलायमानस्य प्रपलायितं नामेति, एवमन्यदपि वाच्यं स्यात् , तस्मादेतदप्यसम्बद्धमिति" ( वा० न्या० पृ० ९७ )।

"अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्" (सू० सू० ५।२।६)। यथा—नित्या वेदाः अस्मर्यमाणकर्तृकत्वादित्यस्य जीर्णकूपादिभिरनैकान्तिकत्वेन प्रतिषेधे कृते, संप्रदायाविच्छेदे सतीति विशेषणमिच्छतो हेत्वन्तरं निग्रहस्थानं पूर्वस्यासाधकत्वोपादानादिति।

---

एवं ह्यतिप्रसंगः स्यात्। पक्षप्रतिषेधे तूष्णीं भवतस्तूष्णींभावो निग्रहस्थानम्। प्रपलायित्वमित्येवमाद्यपि वाच्यं स्यात्। तस्मादेतदप्यसम्बद्धमिति। तदेतदयुक्तम्; यस्मात् "निमित्तापाये नैमित्तिकस्याप्यपायः"—इत्यनेन न्यायेन प्रतिज्ञापह्नवाद्धेत्वाभासदोषं परिहर्तुमिच्छति, विषादित्यागात्तन्निमित्तदुःखपरिहारवत्, तं प्रत्युच्यते—यदि प्रतिज्ञां त्यजसि, ततस्ते प्रतिज्ञासंन्यासो निग्रहस्थानम्, न चेत्त्यजसि, तदा पूर्वोक्तमेव। किं च सम्यक्साधनप्रयोगेऽपि कश्चिज्जात्यादिभिराकुलीकृतः प्रतिज्ञामपह्नुते, तस्याप्येतन्निग्रहस्थानं, समुच्चयो वा; न केवलं तन्निग्रहस्थानमिदं चेति। अभ्युपगमवादेन वा—मा भूत्तन्निग्रहस्थानं, तथाप्यनेन प्रतिज्ञासंन्यासेन तव निग्रह इति। पक्षप्रतिषेधे तूष्णींभावादौ सत्यभ्युपगतमेव तेन—तद्दूषणं भवतीति, अतो न तस्याऽन्यदुद्भाव्यते परिसंख्याऽनभ्युपगमाच्चादोष इति।

## ❀ (५) हेत्वन्तरम् ❀

"अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्" (न्या० सू० ५।२।६)। यथा—नित्या वेदा अस्मर्यमाणकर्तृकत्वादित्यस्य जीर्णकूपादिभिरनैकान्तिकत्वेन प्रतिषेधे कृते, सम्प्रदायाविच्छेदे सतीति विशेषमिच्छतो हेत्वन्तरं निग्रहस्थानं, पूर्वस्याऽसाधकस्योपादानादिति।

## ❀ कीर्तेर्दूषणं तन्निरासश्च ❀

[1]अनैकान्तिकत्वेनैव निगृहीतस्य व्यर्थं हेत्वन्तरमिति चेत्, न; अनैकान्तिकस्य समर्थनात्। सविशेषणोयं हेतुर्न व्यभिचरतीत्यनैकान्तिकत्वपरिहारे कृते सत्युच्यते—न तावत्प्रथमं सविशेषणो हेतुरुक्तः, इदानीं तु विशेषणोपादानेऽपि हेत्वन्तरं भवति, तस्य त्वनैकान्तिकत्वं तदवस्थमेव, सविशेषणनिर्विशेषणयोरनन्यत्वात्। यदि सविशेषणस्य सामर्थ्यं, पूर्वं निर्विशेषणस्योपादानं किमर्थमिति[2]?

---

१. "अत्रापि पूर्वस्यैव हेतोरनैकान्तिकस्याभिधानात् निगृहीते हेत्वन्तरचिन्ता क्वोपयुज्यते ?" (वा० न्या० पृ० ६७)।

२. व्यभिचारमुद्भावयितुं हेत्वन्तरं स्थापनीयमेवातः प्रथमप्रस्तुतत्वात्तदेव निग्रहस्थानमिति भावः।

"प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम्" (न्या० सू० ५।२।७)। यथा— अनित्यश्शब्दः अस्पर्शत्वादिति हेतुः। हेतुश्च हिनोतेर्धातोस्तुन्प्रत्यये कृते कृदन्तं पदमित्यादि प्रसक्तानुप्रसक्त्या प्रकृतार्थानुपयोगि शास्त्रान्तरमुपदिशतोऽर्थान्तरं नाम निग्रहस्थानमिति।

'वर्णक्रमनिर्देशवन्निरर्थकम्" (न्या० सू० ५।२।८)। यथा—

## ❋ (६) अर्थान्तरम् ❋

"प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्" (न्या० सू० ५।२।७)। नित्यः शब्दः, अस्पर्शत्वादिति हेतुः, हेतुश्च हिनोतेर्धातोस्तुन्प्रत्यये कृदन्तं पदं भवतीति। [1]पदं च नामाख्यातोपसर्गनिपातभेदाच्चतुर्विधमित्येवं प्रस्तुत्य नामादीनि व्याचष्टे। ततः प्रसक्त्यानुप्रसक्त्यान्यदप्यर्थान्तरमुपदिशति तदेतत्प्रकृतानुपयोगित्वान्निग्रहस्थानम्।

## ❋ कीर्त्यनुमोदनानुवादः ❋

[2]वादिनस्तावदुपन्यस्तसाधनस्य समर्थने कर्तव्ये तदकृत्वाऽन्यस्य प्रसंगेनाऽप्रसंगेन चाभिधानं पराजयस्थानम्। प्रतिवादिनोऽपि तद्दोषोद्भावनमात्रादपरस्योपक्षेपोऽर्थान्तरगमनमेवेति।

## ❋ (७) निरर्थकम् ❋

"वर्णक्रमनिर्देशवन्निरर्थकम्" (न्या० सू० ५।२।८)। वर्णक्रमनिर्देशः= सिद्धमातृकापाठः, तेन [3]तुल्यं वर्णक्रमनिर्देशवत्। यत्र प्राश्निकप्रतिवादिभ्यां पदार्थोऽपि न विज्ञायते तन्निरर्थकम्। यथा—नित्यः शब्दः कचटतपानां जबगडदशत्वात्, झभघढधषवदिति।

---

१. चत्वारि पदजातानि—"नामाख्यातोपसर्गनिपाताश्च" (निरु० १।१)।

२. कीर्तिनानुमोदितमेतत्—"न्याय्यमेतन्निग्रहस्थानं पूर्वोत्तरपक्षवादिना—प्रतिपादिते दोषे प्रकृतं परित्यज्य साधनाङ्गवचनमदोषोद्भावनं च। साधनवादिना ह्युपन्यस्तसाधनस्य समर्थने कर्त्तव्ये, तदकृत्वा परस्य प्रसङ्गेनाप्रसङ्गेन वाऽतन्नान्तरीयकस्याभिधानम्। उत्तरवादिनोऽपि दोषोद्भावनमात्रादपरस्योपक्षेप इति" (वा० न्या० पृ० ९८-९९)। तदेतदनुवदति—वादिन इत्यादि।

३. वर्णक्रमनिर्देशमात्रस्यानर्थक्याभावाशङ्कां कीर्तेरपहर्तुं तुल्यार्थे वतिप्रत्ययः समाश्रितः। मिश्रादयोऽप्याहुः—"वर्णक्रमनिर्देशवदिति वतिः। अत्र यदा द्राविडः स्वभाषया तद्भाषानभिज्ञमार्यं प्रति शब्दनित्यत्वं प्रतिपादयति, तदा तन्निरर्थं निग्रहस्थानम्" (न्या० वा० ता० पृ० ७१०)।

अनित्यश्शब्दः कचटतपानां जबगडदशत्वात् झभघढधवदिति ।

"परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्" ( न्या० सू० ५।२।९ )। यद्वाक्यं वादिना त्रिरभिहितमप्यप्रतीतप्रयोगातिद्रुतोच्चारणादिना निमित्तेन परिषत्प्रतिवादिभ्यां न ज्ञायते, तदज्ञानसंवरणायैवोक्तमविज्ञातार्थं नाम निग्रहस्थानमिति ।

## ❀ कीर्तिकथितदोषाः तत्खण्डनं च ❀

[1]यद्यपि कचटतपादिशब्दानामप्यर्थः क्वचित्प्रकरणेऽस्ति तथाप्येवं प्रयोगे न पदार्थोऽपि कश्चित्प्रसिद्धः। प्राश्निकादिप्रसिद्धार्थैश्च शब्दैर्वादे व्यवहर्त्तव्यम्। तदप्रसिद्धसमयैस्त्वार्यान् प्रति कर्णाटादिशब्दैरिव ब्रुवतोर्थाप्रतिपादकत्वादेवासाधनांगवचनं निग्रहस्थानम्। अत्यल्पमिदमुच्यते—[2]कपोलवादितकच्छपिट्टनकादीनामपि वाच्यत्वप्रसंग इति चेत्, न; [3]उदाहरणपरत्वात्सूत्राणां न तेषां प्रतिषेध इति।

## ❀ (८) अविज्ञातार्थम् ❀

"परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्" ( न्या० सू० ५।२।९ )। यद्वाच्यं त्रिरभिहितमप्यप्रतीतप्रयोगातद्रुतोच्चारितादिना निमित्तेन परिषत्प्रतिवादिभ्यां न ज्ञायते तदज्ञानसंवरणायोक्तमज्ञातार्थं नाम निग्रहस्थानम्। यथा—अर्थान्तरभूतसर्व्वार्थग्राहकेन्द्रियज्ञानाधारतथागतविशुद्धज्ञानग्राह्यविषयग्रहणाधारक्षपणकतीर्थंकरादिसत्त्वसमनुगतपटसत्त्वघटो न घटः शशविषाणानुत्पादकत्वात् पटवदिति ।

१. "न च वर्णक्रमनिर्देशः सर्वत्र निरर्थकः, क्वचित् प्रकरणे तस्याप्यर्थवत्त्वात्" ( वा० न्या० पृ० १०० )।

२. "कपोलवादितकक्ष्यघट्टितकमित्येवमादीनामपि वाच्यत्वात्" ( वा० न्या० पृ० १०० )।

३. मिश्रैरप्यभिहितम्—"अत्रैव दृष्टान्तमात्रतया वर्तिना वर्णक्रमो दर्शितो, न पुनरेतदुदाहरणं निग्रहस्थानस्य येन कपोलवादित्रादावपि प्रसङ्गः" ( न्या० वा० ता० पृ० ७१० )। जयन्तभट्टकटाक्षोऽपि वीक्षणीयः—"कपोलवादित्रकक्ष्याभिताडनादीन्यपि कामं शास्त्रे निर्दिश्यन्ताम्"। "उदाहरणं यदि स्फुटं पृच्छसि, न कुप्यसि चेत्, तद्भवदीयं सर्वमेव वचनमिहोदाहरणम्, सौगतदर्शने शब्दानामर्थासंस्पर्शित्वात्' ( न्या० मं० पृ० ६४७ )।

"पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम्" ( न्या० सू० ५।२।१० )। यथा—दश दाडिमानि षडपूपाः कुण्डमजाजिनमित्येवमादि। "अवयवविपर्यासवचनम् अप्राप्तकालम्" ( न्या० सू० ५।२।११ )। प्रतिज्ञादीनामर्थवशात्क्रमस्तेषां विपर्ययेणाभिधानं निग्रहस्थानम्।

## ※ कीर्त्युक्तदोषनिरासः ※

[1]निरर्थकादज्ञानार्थं न भिद्यतेऽर्थाऽप्रतिपादकत्वाविशेषादिति चेत्, नात्र बाहुल्येन पदपदार्थानुसन्धानेऽपि वाक्यार्थप्रतीतेर्नाप्यपार्थकादभेदोऽस्य, तत्र हि वाक्यार्थ एव न संभवति। अत्र तु संभवन्नप्यऽतिद्रुतोच्चारितादिनिमित्तान्न प्रतीयत इति। एवं तर्हि वै "जाड्यात्परिषदादयो न प्रतिपद्यन्त इति न विद्वान्निग्रहमर्हति" (वा० न्या० पृ १००) इति, तदयुक्तम्, उभयसम्मता हि प्राश्निका भवन्ति न जडाः। किं चाप्रतीतप्रयोगातिद्रुतोच्चारितादिनिमित्तेनेत्युक्तं प्राश्निकानपि बोधयितुं न शक्नोति, अथ च विद्वानित्यहो विद्वत्त्वम्! यदप्युक्तम्—"परिषदाद्यप्रतिपादनसामर्थ्ये जेता न स्यान्न निग्रहार्हः" (वा० न्या० पृ० १०१) इति, तदप्ययुक्तम्; एकस्य परिषत्प्रतिपादनेऽस्ति सामर्थ्यमन्यस्य नास्तीति कथं न जयपराजयौ? यदि परिषत्प्रतिपादनेप्यसमर्थः किमित्यभ्युपगमं करोति? युक्तवादित्वं चास्य कः कथं प्रतिपद्यत इति?

## ※ (९) अपार्थकम् ※

"पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम् ( न्या० सू० ५।२।१० )। यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्येण योगो नास्तीत्यसम्बद्धार्थता गृह्यते। तत्समुदायार्थस्यापायादपार्थकम्। यथा—दश दाडिमानि, षडपूपाः, कुण्डमजाजिनं, पललपिण्डः, रौरुकं कुमार्याः पाय्यं, तस्याः पिता अप्रतिशीन इति। एतदेवासम्बद्धं वाक्यमसंबद्धाभिधानं वोच्यत इति।

## ※ (१०) अप्राप्तकालम् ※

"अवयवविपर्यासवचनमप्राप्तकालम्" ( न्या० सू० ५।२।११ )। प्रतिज्ञादीनामर्थवशात् क्रमस्तेषां विपर्ययेणाभिधानं निग्रहस्थानम्।

## ※ धर्मकीर्तिकल्पिता दोषाः ※

"एवमप्यर्थसिद्धेः। शब्दापेतवदेतदिति चेत्, न; एवं स्यान्मतं यथा—गौरित्यस्य पदस्यार्थे गोणीति पदं प्रयुक्तं प्रतीतिं जनयति, न तु साक्षात्, तथा

---

१. "नेदं निरर्थकाद् भिद्यते" ( वा० न्या० पृ० १०० )।

हि—गोणीशब्दात् गोशब्दे स्मृतिर्भवति, ततः स्मृत्युपस्थापिताद् गोशब्दादेव ककुदादिमत्यर्थप्रतीतिरिति । तथा प्रतिज्ञादीनां विपर्ययाभिधानादानुपूर्वीं प्रतिपद्यते, तया च वाक्यार्थमिति । [1]तदिदमसिद्धमसिद्धेन साध्यत इति अपशब्दात्साधुशब्दप्रतीतावर्थप्रतीतिरित्येतदेवाऽसिद्धम्, न ह्यस्मिन् क्रमे प्रमाणं किञ्चिदस्ति । [2]किञ्च यस्तावदुभयं शब्दमपशब्दञ्च वेत्ति, स एवं प्रत्येतु, स्त्रीशूद्रादयः शब्दापशब्दविवेकं न जानन्ति, ते कथमपशब्दाच्छब्दं प्रतिपद्य ततोऽर्थं प्रतिपत्स्यन्ते ?

दृष्टा चानुभयवेदिनोऽपि न परम्परया प्रतीतिः, अर्थे असमर्थस्य च शब्देपि प्रतीतिजननासामर्थ्यात् न ह्यर्थेपि बोधकत्वं नामाऽन्यदेव, तद्विषयप्रतीतिजनकत्वात् । अपशब्दश्चेच्छब्दे प्रतीतिं जनयेदर्थ एव किन्न जनयति ? न ह्यस्यार्थात् कंचिद् भेदं श्यामो, येन तं परिहरेत् । अकृतसमयस्य शब्देपि प्रतीत्यजननाच्च—न ह्ययमपशब्दः शब्देऽपि स्वभावतः प्रतीतिं जनयति, अदर्शनात् । समयवशात्तु जनयन्नर्थ एव किन्न जनयति ? एवं हि प्रतिपत्तिपरम्परापरिश्रमः परिहृतो भवति । विपर्ययदर्शनाच्च—शब्दादर्थं प्रतिपत्तुमिच्छन्तोऽपशब्दैरेव बहुलं व्युत्पाद्यमाना लोका दृश्यन्त इति व्यर्थं शब्दान्वाख्यानम् ।

संस्कृतशब्दव्युत्पत्त्यर्थत्वान्न व्यर्थमिति चेत्, कोऽयं शब्दानां संस्कारः ? न ह्येषां प्रज्ञाबाहुश्रुत्यादिसंस्कारं पश्यामः, नाप्येकान्तेन श्रव्यता, नाप्यर्थप्रत्यायने कश्चिदतिशयः, नापि धर्म्मसाधनता, मिथ्याप्रवृत्तिचोदनेभ्यः संस्कृतेभ्योऽप्यधर्म्मोत्पत्तेः, प्रियहितसत्यवचनेभ्योऽपशब्देभ्योपि धर्म्मोत्पत्तेः । न च वचनमात्रमागममाद्रियन्ते युक्तिज्ञाः, तस्मान्न संस्कृतो नाम कश्चिच्छब्दः ।

शिष्टप्रयोगः संस्कार इति चेत्, के शिष्टाः ? ये विदितवेद्यतादिगुणयुक्ताः । कः पुनरेषां गुणोत्कर्षानपेक्षोऽलीकनिर्बन्धो, यत्तेऽमूनेव शब्दान्

---

१. अत्र वार्तिके 'न, एवमपि सिद्धेः—इत्याशङ्क्य परिहृतम्—"यत्तावन्नैवयपि सिद्धेरिति, प्रयोगापेतशब्दवदेतत् स्यादिति" ( न्या० वा० पृ० ५५५ ) । तदेतद् दूषयाम्बभूव भदन्तकीर्तिः—"तदेतदुन्मत्तस्योन्मत्तसंवर्णनमिव प्रयोगापेतशब्दवदेतदिति, गोणीशब्दस्यार्थप्रतिपादनेऽसामर्थ्यादिति" ( वा० न्या० पृ० १०३ ) । तदेतदनुवदति—'तदिदमसिद्धमसिद्धेन साध्यते" इति ।

२. "ननु गोणीशब्दादपि लोके प्रतीतिर्दृष्टा, सत्यं दृष्टा, न तु साक्षादित्युक्तम् । उक्तमेतत्, न पुनर्युक्तम्; स्त्रीशूद्राणोमुभयप्रतीतेरभावात्" ( वा० न्या० पृ० १०३ ) ।

"हीनमन्यतमेनाप्यवयवेन न्यूनम्" (न्या० सू० ५।२।१२) । साधनाभावे साध्यसिद्धेरयोगात् ।

---

प्रयुञ्जते नापरान् ? न चात्र कश्चिच्छब्दे वृद्धेऽपरोक्षः साक्षी यत इदमेवं निश्चिनुमः प्रयुञ्जते नाम ते शिष्टाः । नन्वेवं वयं गुणातिशयमपश्यन्तः संस्कारं च केषांचिच्छब्दानामनुमन्यामहे तदन्वाख्यानयत्नं वा, गुणातिशयाभावात् । सत्यपि गुणातिशये नाऽन्वख्याने यत्नः करणीयः, तत्स्वभावस्याऽन्यतोपि सिद्धेः, प्राकृताऽपभ्रंशद्रविडान्ध्रादिभाषावत् । न हि प्रतिदेशं भाषाणां किंचिल्लक्षणशास्त्रमस्ति, अथ च सम्प्रदायवशात् तास्तथैव लोकस्तद्भ्रंशं च प्रतिपद्यते । तथा संस्कृतशब्दानामपि प्रतीतिर्भविष्यतीति जडप्रवृत्तिरेवैषा या व्याकरणे प्रवृत्तिः ।

किं च लोकेपि विप्रतिपत्तिविषयः केनापि शब्देन न्यायं ब्रुवतः शब्दस्खलनेपि जय एव दृश्यते, न पराजयस्तत्रापशब्दः पराजयस्थानम् ।

अवयवविपर्यये च यदि तेषां सम्बन्धो न प्रतीयते, ततोऽपार्थकान्न भेदोऽस्य । अथ प्रतीयते ततः साधनांगाभिधानेऽपि कथं निग्रहस्थानम् ? न ह्यत्र कश्चित्समयः—प्रत्यायनाऽविशेषेऽप्येवमेवावयवाः प्रयोक्तव्या इति । स एवैषां क्रमो यथावस्थितानां संबन्धः प्रतीयते । न हि वाक्ये पदानां क्रमनियमः कश्चिद्यथा–राज्ञः पुरुषः, पुरुषो राज्ञ इति । तस्मान्नाप्राप्तकालं नाम निग्रहस्थानमिति (वा० न्या० १०४–१०८) ।

## * तन्निरासः *

उच्यते—शब्दापेतवदेतदित्यस्यायमर्थः—यथापशब्दो नियमकथायामेव निग्रहस्थानं तथाऽप्राप्तकालमपीति । विज्ञानाभिमानेन स्रग्धरादिच्छन्दोविशेषेणापि नियमं कृत्वा विजिगीषवः केचिद्वादं कुर्वन्तो दृश्यन्ते । तेषां यथाप्रतिज्ञाताऽननुपालनमेव दोषः । कृते हि नियमे यथाभाषितमेव जयपराजययोर्निमित्तं द्यूतादिष्विव; न तत्रान्योस्ति न्याय इति ।

## * (११) न्यूनम् *

"हीनमन्यतमेनाप्यवयवेन न्यूनम्" ( न्या० सू० ५।२।१२ ) । साधनाभावे साध्यसिद्धेरयोगात्तथा चावयवविचारे पञ्चानामपि साधनाङ्गत्वं समर्थितं तत्रैव च यथा न्यूनं निग्रहस्थानं, तथोक्तमिति ।

"हेतूदाहरणाधिकमधिकम्" ( न्या० सू० ५।२।१३ )। एकेन कृतत्वादितरानर्थक्यात्। "शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्" ( न्या० सू० ५।२।१४ )। सार्थकं पुनरभिधानमनुवादः तद्व्यतिरेकेण पुनरभिधानं पुनरुक्तम्। नित्यश्शब्दो नित्यश्शब्द इति शब्दपुनरुक्तम्। नित्यो ध्वनिरविनाशी शब्द इत्यर्थपुनरुक्तम्। अर्थादापन्नस्य स्वशब्देन पुनरभिधानं पुनरुक्तम्। यथा साधर्म्योदाहरणेऽभिहिते वैधर्म्योदाहरणाभिधानमिति।

---

## ❋ (१२) अधिकम् ❋

"हेतूदाहरणाधिकमधिकम्" ( न्या० सू० ५।२।१३ )। एकेन कृतत्वादितरानर्थक्यमिति। एतदपि नियमकथायां निग्रहस्थानम्, प्रपञ्चकथायां तु नियमाभावान्न दोषः, सम्प्लवानभ्युपगमे तु भवत्येवायं दोष इति।

## ❋ (१३) पुनरुक्तम् ❋

"शब्दार्थयोः पुनर्व्वचनं पुनरुक्तमन्यत्रानुवादात्" (न्या० सू० ५।२।१४)। यन्निष्प्रयोजनं शब्दस्य पुनरुच्चारणं पर्यायेणार्थाभिधानं वा, पुनरुक्तं तद्वेदितव्यम्। तत्र नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम्। नित्यो ध्वनिरविनाशी शब्द इत्यर्थपुनरुक्तम्। यत्तु प्रयोजनवशेन शब्दस्यार्थस्य वा पुनर्व्वचनम्, तन्न पुनरुक्तम्, अनुवादत्वात्; यथा—निगमने। तत्र तस्मादिति शब्दान्तरेण हेत्वर्थस्यानुवादः। अनित्यः शब्द इति तेनैव शब्देन तस्यैवार्थस्यानुवादः। गौर्गौः कामदुघेति शब्दमात्रस्यैवानुवादः। एवं वीप्साद्यर्थपौनःपुन्याद्यर्थेष्वपि शब्दमात्रानुवादो द्रष्टव्य इति।

## ❋ धर्मकीर्तेर्दोषस्तदुद्धारश्च ❋

नन्वेवं सत्यर्थपुनरुक्तमेवैकं वाच्यं ततोन्यस्य शब्दपुनरुक्तस्याभावादिति, सत्यमेतत्; तथापि बालव्युत्पत्त्यर्थं तस्यैवाऽवान्तरभेदोदाहरणविवक्षयोत्तरसूत्रमप्यारभ्यते—

## ❋ पुनरुक्तान्तरम् ❋

"अर्थादापन्नस्य स्वशब्देन पुनर्व्वचनं पुनरुक्तम्" ( न्या० सू० ५।२।१५)। यथा साधर्म्योदाहरणाभिधानान्न्यायलब्धार्थस्य वैधर्म्योदाहरणस्याभिधानमिति। व्याप्तिसिद्ध्यर्थं ह्युदाहरणं, सा चैकेनैवोदाहरणेन प्रदर्शितेति व्यर्थं द्वितीयम्। एकस्याऽसामर्थ्ये च केवलान्वयिनः केवलव्यतिरेकिणश्च व्याप्तिसिद्धिर्न स्यात्। यस्याप्यन्वयव्यतिरेकवानेव हेतुस्तस्यापि नानन्वयो व्यतिरेको नाव्यतिरेकोऽन्वयः

कथं तन्निग्रहस्थानम् ? कथावसानविरोधित्वात् । एकेन कृतत्वादितरानर्थक्यादिति ।

"विज्ञानस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्" (न्या० सू० ५।२।१७)। प्रतिवादिनो निग्रहस्थानम्। अप्रत्युच्चारयन् किमाश्रयः परपक्षप्रतिषेधं ब्रूयादिति।

---

इत्येकाभिधानादेव द्वितीयसिद्धेर्व्यर्थं तद्वचनम्। अन्वयव्यतिरेकित्वप्रतीत्यर्थं द्वयाभिधानमिति चेत्, किं तत्प्रतीत्या ? न हि तत्प्रतीतिः साधनाङ्गम् ? किं त्वव्यभिचारः। स चेदस्ति, तदैकोदाहरणेनैव गम्यते। न चेदस्ति, तदा द्वयमप्यसाधनं, नित्यत्वसिद्धावमूर्त्तत्वहेतोर्व्योमघटोदाहरणवदिति।

## ❀ कीर्तिचर्चिता दोषास्तन्निरासश्च ❀

[1]"कथं पुनरुक्तं निग्रहस्थानं ? कथावसानविरोधित्वादेकेन कृतस्येतरानर्थक्याच्चेति। एतदपि नियमकथायामेव निग्रहस्थानं नान्यत्र, व्याचक्षाणो हि कदाचिदसम्यक्श्रवणप्रतिपत्तिशंकया साक्षिप्रभृतीनां पुनः पुनर्ब्रूयादपि, न तत्र च्छलम्। नायं गुरुर्न शिष्य इत्यतो न यत्नतः प्रतिपादनीय इति चेत्, न; साक्षिणां यत्नेन प्रतिपाद्यत्वात्, तदप्रतिपादने च दोषाभिधानात्, त्रिरभिहितमित्यभिधानाच्च। तदिदमधिकान्न भिद्यत इति चेत्, सत्यम्; शब्दपुनरुक्तवदवान्तरभेदेनाधिकस्यापि पृथगभिधानात्। न चाऽस्य मुनेः सूत्रलाघवं विवक्षितं, किं तर्हि ? शिष्यमतिविस्तारणम्। तच्च त्रिधाभिधाने भवति—क्वचित्संग्रहः, क्वचित् प्रपंचः, क्वचिन्मध्यमं प्रस्थानमिति।

## ❀ (१४) अननुभाषणम् ❀

"विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्" (न्या० सू० ५।२।१७)। प्रतिवादिनो निग्रहस्थानमप्रत्युच्चारयन् किमाश्रयः परपक्षप्रतिषेधं ब्रूयात् ?

## ❀ धर्मकीतेर्दोषास्तन्निराकरणं च ❀

[2]नन्वस्ति कश्चिदुत्तरे समर्थो, न प्रत्युच्चारणे, नासौ तावता निग्रहमर्हति, सदुत्तरेणैव तस्यामूढत्वं गम्यते, किं प्रत्युच्चारणेनेति ? न; उत्तरस्य निर्विषयत्वप्रसंगात्। किं च सदुत्तरं ब्रवीति, न च प्रत्युच्चारयति, तदिदं व्याहतमुच्यते। न चेदं प्रतिज्ञायते—पूर्वं सर्व्वमुच्चारयितव्यं पश्चादुत्तरं वाच्यमिति। अपि तु यथाकथंचिदनुभाष्योत्तरं वाच्यमन्यथा निर्विषयमुत्तरं प्रसज्यते।

---

१. वा० न्या० पृ० १०४।
२. वा० न्या० पृ० ११४।

**"अविज्ञातं चाविज्ञानम्" ( न्या० सू० ५।२।१८ )। यच्च वाक्यं त्रिरभिहितमपि परिषदावगतार्थं प्रतिवादी प्रत्युच्चारयन्नपि नार्थतः सम्यगधिगच्छति, तदज्ञानं नाम प्रतिवादिनो निग्रहस्थानम्।**

---

यदि नाम प्रसक्तानुप्रसक्तयातिविस्तारितां कथां प्रतिवादी नोच्चारयितुं शक्तः, कस्तस्य विवादाश्रयमात्रोत्तरवचने सामर्थ्यविघातो येनासौ निगृह्यत इति चेत्, उच्यते—यदि वादिना पक्षसाधनानुपयोगी विस्तरः कृतः श्लोकादिपाठः, क्लिष्टोपन्यासो वा, तदा वादिन एवार्थान्तरगमनमविज्ञातार्थं वा निग्रहस्थानम्। न तदप्रत्युच्चारणे दोषोपि, यदि साक्षिणो मन्यन्ते। अथ साधनोपयोगिनमक्लिष्टं चोपन्यासं साक्षिणः प्रतिपद्यन्ते, तदा तदप्रत्युच्चारणे प्रतिवादिनः कथं नाप्रतिपत्तिनिग्रहस्थानम्? तत्र यदि द्विरुक्तं न वाच्यमिति कथा नियम्यते, तदा प्राक् सर्वानुभाषणेऽस्ति दोषोऽवश्यं हि दूषयतास्य दोषस्यायं विषय इति प्रतिदोषप्रदर्शनार्थं पुनरनुभाषणं कर्त्तव्यमतः प्राक्तनं व्यर्थं स्यात्। सर्व्वैः प्रागनुभाषितव्यमिति नियमे तु प्रागननुभाषणदोषः। यदा त्वनियमकथा, तदा यथेष्टानुभाषणेऽपि न दोष इति।

ननु च कोयं नियमः, त्रिरभिहितस्याननुभाषणमिति? यदि तावत्परप्रतिपादनार्था प्रवृत्तिस्तदा शतशोपि तथा वक्तव्यम्, यथाऽस्य प्रतिपत्तिर्भवति। अथ परोपतापनार्था प्रवृत्तिस्तथापि किं त्रिरभिधीयते? साक्षिणां कर्णे निवेद्य प्रतिवादी कष्टाऽप्रतीतातिसंक्षिप्तादिभिरुपद्रोतव्यो यथोत्तरप्रतिपत्तिविमूढस्तूष्णीं भवति। न हि परोपतापनप्रक्रमे कश्चिन्न्यायो येन क्लिष्टाऽप्रतीताऽतिद्रुतोच्चारितादीनि प्रतिषिध्यन्ते, त्रिरभिधानं च विधीयत इति, न; त्रिरभिधानग्रहणस्य परिषदनुज्ञोपलक्षणार्थत्वात्। यावद्धि प्राश्निकैरन्यतरस्यासामर्थ्यं न निश्चितं, तावद्वक्तव्यमिति। उभाभ्यां परीक्ष्य विद्वांसः प्रमाणीकृत्य साक्षिणोऽभ्यनुज्ञातास्ते पश्चादप्रमाणीकर्तुं न युक्ता इति।

अप्रतिपत्तित्वाविशेषादज्ञानाऽननुभाषणयोरप्रतिभातो नास्ति भेद इत्यप्ययुक्तम्, लक्षणभेदेन भेदाभिधानात्। सामर्थ्यादर्थप्राप्तावतिप्रसंगेन प्रपंचाधिकारविरोधात्। यदि च संग्रहरुचित्वं, ततः संग्रहोऽपि विप्रतिपत्तिप्रतिपत्तिभ्यां कृत एव, प्रपंचाधिकारस्तु विस्तररुचीन् प्रत्यारब्ध इत्यदोषः।

## ❀ (१५) अज्ञानम् ❀

"अविज्ञातार्थं चाज्ञानम्" (न्या० सू० ३।२।१८)। यच्च वाक्यं त्रिरभिहितमपि परिषदवगतार्थं प्रतिवादी प्रत्युच्चारयन्नपि नार्थतः सम्यगधिगच्छति, तदज्ञानं नाम प्रतिवादिनो निग्रहस्थानम्।

"कथामभ्युपगम्य तूष्णींभावोऽप्रतिभा" (न्या० सू० ५।२।१९)। वादिप्रतिवादिनोर्निग्रहस्थानमिति।

"कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः" (न्या० सू० ५।२।२०)। कथामभ्युपगमस्य सभ्येषु सम्मिलितेषु ब्रवीति – अद्य मे महत्प्रयोजनं विद्यते, तस्मिन्नवसिते पश्चात्कथयिष्यामीति।

## ❀ (१६) अप्रतिभा ❀

"कथामभ्युपगम्य तूष्णींभावोऽप्रतिभा वादिप्रतिवादिनोर्निग्रहस्थानमिति"। ननु "उत्तरस्याऽप्रतिपत्तिरप्रतिभा" (न्या० सू० ५।२।१९) इति सूत्रम्, सत्यम्; अस्यैवार्थः कथामभ्युपगम्येत्यादिनोक्तः। कथमिति? उत्तरग्रहणमुपलक्षणार्थं पूर्वोपन्यासस्याप्यप्रतिपत्तिरप्रतिभेत्यभिप्रेतम्। न चात्राऽपरिज्ञानमात्रमप्रतिपत्तिरित्यभिप्रेतं, किन्तर्हि? वचनानध्यवसायः। अनध्यवसायादब्रुवतोऽप्रतिभेत्यर्थः। अथवा प्रथमवादिनोपि वचनमुत्तरमत्रोक्तम्। कथं? परिषदा प्रतिवादिना कस्ते पक्षः? किं साधनं च? इति प्रश्ने, त्वमेव प्रथमं ब्रूहि—इत्यनुयोगे वा पक्षादिवचनमुत्तरं भवति तस्मिन्वक्तव्ये यदाऽनध्यवसायेन तूष्णीमास्ते, तदा वादिनोऽप्रतिभेति वाच्यम्। प्रतिवादिनस्तु कदाचिदनुभाषणं कृत्वाऽप्युत्तराऽप्रतिपत्तिः सम्भाव्यते शक्तिवैचित्र्यदर्शनात्। अकृत्वा त्वनुभाषणं। तूष्णीम्भवतोऽप्रतिभोद्भावनेपि न निर्विषयमनुभाषणम्। यो ह्यप्रत्युच्चारयन्नपि यत्किंचिद् ब्रवीति न तूष्णीमास्ते तस्यानुभाषणं निग्रहस्थानमिति।

## ❀ (१७) विक्षेपः ❀

"कार्यव्यासंगात् कथाविच्छेदो विक्षेपः" (न्या० सू० ५।२।२०)। किंचित्कार्यं व्यासज्य यः कथां विच्छिनत्ति, स खल्वन्यतरनिग्रहान्तायां कथायां स्वयमेव कथन्तं प्रतिपद्यमानो निग्रहार्ह इति। ननु यदि ज्वरादिदुःखेनाभिभूतः प्रयोजनातिशयेन वा तदा न वदति दिनान्तरे च वदिष्यतीति कस्तस्यापराधः स्यात्? एतदेव सभ्यमिलनात्प्रागेव दुःखं प्रयोजनं वा निवेदयति। यत्तु सभ्येषु मिलितेषु दुःखादिनिवेदनं, तद् दुष्टाभिप्रायं प्रकटयति किल—पुनः पुनः सभ्या न मिलिष्यन्ति, ततो वादो न भविष्यति, ततः समानतैव विद्वद्भिः सह मम भविष्यति, न भंग इति। यदि पुनस्तदैव जातं चातुर्थिकज्वरादिदुःखं साक्षिणोपि प्रतिपद्यन्ते, तदा न तस्य दोष इति। न चेदमर्थान्तरेऽन्तर्भवति, साधनोपन्यासप्रसंगेन तदनुपयोगिवचनमर्थान्तरं साधनोपन्यासमपि पश्चात्करिष्यामीत्येवं वचनं विक्षेप इत्यस्ति विशेषः।

"स्वपक्षे दोषाभ्युपगमात्परपक्षदोषप्रसङ्गो मतानुज्ञा" (न्या० सू० ५।२।२१)। यः स्वपक्षे मनागपि दोषं न परिहरति केवलं परपक्षे दोषं प्रसञ्जयति। यथा—भवांश्चोर इत्युक्ते त्वमपि चोर इति तस्येदं निग्रहस्थानम्। स्वयं दोषाभ्युपगमात्परेणानभ्युपगमादिति।

"निग्रहं प्राप्तस्यानिग्रहः पर्य्यनुयोज्योपेक्षणम्" (न्या० सू०५।२।२२)। पर्य्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः। तस्योपेक्षणं निग्रहं प्राप्तोऽसीत्यननुयोग इति। अनुक्तया परिषदा वक्तव्यम्।

---

## ❋ (१८) मतानुज्ञा ❋

"स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसंगो मतानुज्ञा" (न्या० सू० ५।२।२१)। यथा—चौरस्त्वम्, परद्रव्योपादित्सया प्रवृत्तेरित्युक्ते, परोप्याह—त्वमप्येवं चौर इति। प्रसंगव्याजेनानैकान्तिकत्वोद्भावनाददोष इति चेत्, तदयुक्तम्; वक्तुरभिप्रायो हि वचनादवगम्यते। पूर्वं पश्चाद्वा नैकान्तिकत्वोद्भावनोक्तिमन्तरेण च न ज्ञायतेऽनैकान्तिकत्वोद्भावनाभिप्रायेणाऽयमेवमाहेति। न च वादेपि व्याख्यानगम्यैर्वाक्यैर्वक्तव्यं, किं चोभयप्रसिद्धया हेतोर्विपक्षवृत्त्यानैकान्तिकत्वं युक्तम्। न च मम परस्वोपादित्सया प्रवृत्तिः। सिद्धा ममाप्यसिद्धेति चेत्, असिद्धत्वमेव तर्हि वाच्यं, किं परदोषप्रसंगेन? [1]यश्चोभयोरित्यादिन्यायेन प्रसंग इति चेत्, न; उभयोस्तुल्ययोगक्षेमत्वस्य प्रमाणतोऽप्रसाधितत्वात्। किं च स्वपक्षदोषपरिहारेऽभिहितेऽपि यदा तं व्यामोहान्न परः प्रतिपद्यते, तदा तद्व्यामोहनिवर्त्तनार्थं तत्प्रतिपन्नेन न्यायेन सहात्मीयन्यायस्य समानयोगक्षेमतां प्रसाध्य यश्चोभयोरित्यादिप्रसंगः कर्तुं युक्तः। यस्तु स्वपक्षे न मनागपि दोषं परिहरति, केवलं परपक्षे दोषं प्रसञ्जयति—त्वमपि चौर इति, स खल्वेवं ब्रुवाणः परमतमनुजानाति परमतं चाऽनुजानतः तस्यैवेदं मतानुज्ञाख्यं निग्रहाधिकरणं भवति। कस्मात्? तेन स्वदोषाभ्युपगमात्, परेणानभ्युपगमादिति।

## ❋ (१९) पर्यनुयोज्योपेक्षणम् ❋

"निग्रहं प्राप्तस्याऽनिग्रहः पर्यनुयोज्योपेक्षणम्" (न्या० सू० ५ २।२२)। पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयस्तस्योपेक्षणं निग्रहं प्राप्तोसीत्यननुयोगः।

---

१. यश्चोभयोः समो दोषः परिहारोऽपि वा समः।
नैकस्तत्र नियोक्तव्यस्तादृगर्थविचारणे॥ (श्लो० वा० शून्य० २५२)

"अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः" (न्या० सू० ५।२।२३ ) । यथा—सावयवत्वेन पृथिव्यादौ कार्य्यत्वसाधने परो ब्रूते—यावदप्रयोजकोऽयं हेत्वाभास इति । तस्येदं मिथ्याभियोगलक्षणं निग्रहस्थानमिति ।

"स्वसिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तः" (न्या० सू० ५।२।२४ ) । यथा—मीमांसामभ्युपेत्य कश्चिदग्निहोत्रं स्वर्गसाधन-

---

## ❀ कीर्त्युक्तदोषोद्धारः ❀

एतच्च कस्य पराजय इत्यनुयुक्तया परिषदा वक्तव्यम्, न खलु निग्रहं प्राप्तः स्वं कौपीनं विवृणुयादिति । निग्रहं प्राप्तस्य जयावधारणमपि न युक्तम्, तदभावात्पराजयोपि न युक्तस्तस्य जयापेक्षित्वादिति चेत्, न; उभयोरपि न युक्तस्तस्य जयापेक्षित्वादिति चेत्, नोभयोरपि युक्तायुक्तानभिज्ञत्वेन परिषदोपेक्षणीयत्वात्तादनवधेयवचनत्वमेवाऽत्र निग्रहः । यदि पुनः कंचिद्दोषमुद्भावयति, तदा परदोषाऽनुद्भावनेपि जेतैवासौ न निग्रहस्तस्य नहिस्तत्त इति कृत्वा सर्व्वे दोषा वक्तव्या, अवचने वा निग्रहः, एकेनापि तत्साधनविधानात्, एकसाधनवचनवत् । यथैकस्यार्थस्याऽनेकसाधनसद्भावेप्येकेनैव साधनेन तत्सिद्धेर्न सर्व्वोपादानं साधनांगावचनं वा भवति । सर्व्वसंभवाद्दोषोद्भावननियमपूर्व्वकवादे त्वेकानुद्भावनेपि युक्तं पर्यनुयोज्योपेक्षणं निग्रहस्थानमिति ।

## ❀ (२०) निरनुयोज्यानुयोगः ❀

"अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः" ( न्या० सू० ५।२।२३ ) । अदोषे दोषोद्भावनमित्यर्थः । यथा—सावयवत्वेन पृथिव्यादेः कार्यत्वसाधने परो ब्रूयाद्—अप्रयोजनकोयं हेत्वाभास इति । तस्येदं मिथ्याभियोगलक्षणं निग्रहस्थानम् । न ह्यप्रयोजको नाम हेत्वाभासोऽस्त्यसिद्धादिव्यतिरिक्तः सपक्षैकदेशवृत्तेस्तु धूमादिवद्गमकत्वात् ।

## ❀ कीर्तिकथितदोषनिरासः ❀

"अनुपपन्नोत्तरत्वादुत्तराप्रतिपत्तिरेवायमतोऽप्रतिभातो न भिद्यत इति चेत्, न; अप्रतिभायास्तूष्णींभावस्वरूपत्वेन व्याख्याततत्वाद् । किं चोत्तरमात्रं तत्र विवक्षितं न तु सदुत्तरमिति ।

## ❀ (२१) अपसिद्धान्तः ❀

"सिद्धान्तमभ्युपेत्याऽनियमात्कथाप्रसंगोऽपसिद्धान्तः" ( न्या० सू०

मित्याह—कथं पुनरग्निहोत्रक्रिया ध्वस्ता सती स्वर्गसाधिका भवितुमर्हतीत्यनुयुक्तः प्राह—तया क्रियया आराधितः परमेश्वरः फलं ददाति, राजादिवदिति। तस्येश्वरानभ्युपगमादपसिद्धान्तो नाम निग्रहस्थानम्। प्रतिज्ञातार्थविपर्य्ययस्तु प्रतिज्ञाहानिर्नापसिद्धान्तः इति। "हेत्वाभासाश्च यथोक्ताः" (न्या० सू० ५।२।२५)। हेत्वाभासलक्षणेनैव यथोक्तेन लक्षिता हेत्वाभासा निग्रहस्थानानीत्यर्थः।

५।२।२४)। यथा—मीमांसामभ्युपगम्य कश्चिदग्निहोत्रं स्वर्गसाधनमित्याह। स चैवं पर्यनुयुज्यते—कथं पुनरग्निहोत्रक्रिया ध्वस्ता सती स्वर्गसाधिका भवतीत्येवं पर्यनुयुक्तोऽनभ्युपगतात्मगुणं धर्मं गत्यन्तरमपश्यन्नाह—तया क्रिययाराधितः परमेश्वरः फलं ददाति राजादिवत्। तस्येश्वरानभ्युपगमादपि अपसिद्धान्तो निग्रहस्थानम्। केचित्तु सूत्रार्थं वर्णयन्ति—कस्यचिदर्थस्य तथाभावं प्रतिज्ञातार्थविपर्ययात् कथाप्रसंगं कुर्वतोऽपसिद्धान्तो विज्ञेय इति, तदयुक्तम्; प्रतिज्ञातार्थविपर्ययो हि प्रतिज्ञाहानिर्नापसिद्धान्तः। तस्माच्छास्त्रमभ्युपगम्य तदर्थविरोधेन कथां प्रसञ्जयतोऽपसिद्धान्त इति। अथवा साधनवाक्ये या प्रतिज्ञा, तदर्थविपर्ययादेव प्रतिज्ञाहानिरुच्यते। या तु सिद्धार्थस्याभ्युपगममात्रेण प्रतिज्ञा केनचित्प्रसंगेन कृता पुनस्तदर्थविपर्ययात्कथां कुर्व्वतोऽपसिद्धान्त इति।

## ❀ (२२) हेत्वाभासाः ❀

"हेत्वाभासाश्च यथोक्ताः" (न्या० सू० ५।२।२५)। हेत्वाभासाश्च निग्रहस्थानानि किं लक्षणान्तरयोगात्, प्रमाणप्रमेयवत्? न; किं तर्हि? यथोक्ताः हेत्वाभासलक्षणेनैव यथोक्तेन हेत्वाभासनिग्रहस्थानानीत्यर्थः। चशब्दो दृष्टान्ताभासाऽवरोधकः। न च निग्रहस्थानपरिसंख्यार्थानि सूत्राणि, किं तर्हि? लक्षणोदाहरणप्रपंचोपलक्षणानि। तस्मादेतेन सूत्रकलापेन दुर्वचनादीनां साधनानुपयोगित्वेन निग्रहस्थानत्वं वेदितव्यम्। नियमकथायां त्वपशब्दादीनामपीति।

## ❀ धर्मकीर्तेः सिद्धान्तस्य भङ्गः ❀

[1]रक्ताम्बरस्त्वाह—असाधनाङ्गवचनमदोषोद्भावनं द्वयोः। निग्रहस्थानमन्यत्तु न युक्तमिति नेष्यते। तत्रासाधनाङ्गवचनं वादिन एव निग्रहस्थानम्,

१. रक्ताम्बरः—काषायाम्बरो बौद्धः प्रकृते धर्मकीर्तिः, तत्प्रतिपादितं निग्रहस्थानद्वयं व्याख्यायाशयमात्मन आविष्करिष्यन्नुपसंहारव्याजेनाह—असाधनेति।

एतेन दुर्वचनकपोलवादित्रादीनां साधनानुपयोगित्वेन निग्रहस्थानत्व-मुक्तं वेदितव्यम्। नियमकथायान्त्वपशब्दादीनामपीति ॥

इति श्रीमदाचार्यभासर्वज्ञविरचिते न्यायसारे
द्वितीयः परिच्छेदः
समाप्तः।

●

---

दोषोद्भावनं तु प्रतिवादिन एवेति। सिद्धिः साधनसाध्यनिश्चयस्तस्य निर्व्वर्त्त-कमङ्गं, तस्य वचनं साधनाङ्गवचनम्। तस्याऽनुच्चारणमसाधनांगवचनं वादमभ्युपगम्याप्रतिभया तूष्णींभावात् साधनांगस्याऽसमर्थनाद्वा वादिनोऽ-साधनांगवचनं निग्रहस्थानं प्रारब्धार्थाप्रसाधनात्। वस्तुतः समर्थसाधनो-पादानेपि सामर्थ्याप्रतिपादनात्। न ह्यसमर्थितात्साधनात् साध्यसिद्धिरिति। अथवा साध्यतेऽनेनेति साधनं त्रिरूपहेतुवचनसमुदायः, तस्यांगं पक्षधर्म्मादि-वचनं तस्यैकस्याप्यवचनमसाधनाङ्गवचनम्। अथवा तस्यैव साधनस्य यन्नांगं प्रतिज्ञोपनयादि तस्यासाधनांगस्य वचनम्। अथवाऽन्वयव्यतिरेकयोरेकस्या-भिधानेन सिद्धेरभावात्, द्वितीयस्यासामर्थ्यमिति तस्याप्यसाधनांगस्याभिधानं निग्रहस्थानं व्यर्थाभिधानादेव। अथवा साधनस्य सिद्धेर्यन्नांगं हेत्वाभासोऽसि-द्धादिस्तस्यैकस्यापि वचनं निग्रहस्थानमसमर्थोपादानात्। तथा साध्यादि-विकल्पस्याऽनन्वयाऽप्रदर्शितान्वयादेर्दृष्टान्ताभासस्य वचनमसाधनांगवचनम्। अथवा सिद्धिः साधनं, तदंगं धर्म्मो यस्य विवादाश्रयस्य वादप्रस्तावहेतोः स साधनांगस्तद्व्यतिरेकेणाऽपरस्याप्यजिज्ञासितस्य विशेषस्य शास्त्राश्रयव्याजा-दिभिः प्रक्षेपो घोषणं च परव्यामोहनायाऽनुभाषणशक्तिविघाताद्यर्थं च तदप्य-साधनांगवचनं निग्रहस्थानम्, अप्रस्तुताभिधानात्। न हि क्वचित्क्रियमाणः प्रसंगो न प्रसज्यते नृत्यगीतादेरपि प्रसंगेन संभवात्। यथा—कश्चिन्नैरात्म्य-वादी ब्रूयात्—नास्त्यात्मेति वयं बौद्धा ब्रूमः। के बौद्धाः? ये बुद्धशासन-मभ्युपगताः। को बुद्धो? यस्य शासनेन भदन्ताऽश्वघोषो नाम प्रव्रजितः। को भदन्ताश्वघोषो? यस्य राष्ट्रपालकं नाटकमिति प्रसंगं कृत्वा ततः प्रविशति सूत्रधार इत्यादि पठन् नृत्येद् गायेच्चेति प्रतिवादी सर्व्वं तं प्रसंगं नानुकर्त्तुं शक्त इति पराजितः स्यात् तस्मान्नृत्यादिप्रसंगवदजिज्ञासितानां प्रसंगपरम्परा-यातार्थानां स्वक्रियायाश्च घोषणमर्थान्तरगमनमेव, जिज्ञासायां त्वदोष इति।

अदोषोद्भावनमिति न दोषोद्भावनमदोषोद्भावनं हेत्वाभासादयो दोषास्ते-षामनुद्भावनमप्रत्यायनम्। साधनस्य निर्दोषत्वात्। सदोषत्वेपि प्रतिवादिनस्त-

दर्शनात् । प्रतिपादनासामर्थ्याद्वा । न हि सन्नपि दोषो न प्रतिपादितः पराजयहेतुर्भवति । अथवा साधनस्य दोषस्तस्यादोषस्योद्भावनं प्रतिवादिनो निग्रहस्थानं, मिथ्योत्तराभिधानादिति । एतन्न्याय्यं निग्रहस्थानलक्षणम् । अन्यत्तु नैय्यायिकोक्तं प्रतिज्ञाहान्यादिकं न युक्तमिति नेष्यते । यथा च प्रतिज्ञाहान्यादेरयुक्तत्वं कीर्तिरुवाच तथा तल्लक्षणेष्वेव पूर्व्वपक्षं कुर्वता प्रत्येकम् मयाभिहितम् । तत्रैव तत्परिहरता कीर्तेरपरिज्ञानमपि प्रकटितमिति । प्रतिज्ञोपनयादिवचनं निग्रहस्थानमित्यत्रापि मोहः कीर्तेः प्रकृत्यादिसाधनाङ्गत्वं समर्थयता प्रकटितः । यत्तु मुनिप्रदर्शितमेव निग्रहस्थानं भाषान्तरेणोक्तं, तदनुज्ञायते एव । भाषान्तरेणाभिधानेऽप्यर्थस्य तथात्वाऽविरोधादिति ॥

श्रीमदाचार्य्यभासर्व्वज्ञविरचिते

न्यायभूषणे संग्रहवार्तिके

द्वितीयः परिच्छेदः

समाप्तः ।



: ३ :

# आगमपरिच्छेदः

**अवसितम् अनुमानम्, आगमस्येदानीं लक्षणमुच्यते—समयबलेन सम्यक्परोक्षानुभवसाधनम् आगमः ।**

## ❋ आगमस्य लक्षणम् ❋

अवसितमनुमानमागमस्येदानीं लक्षणमुच्यते—"समयबलेन सम्यक्परोक्षानुभवसाधनमागमः ।" यत्रानुभवसाधने समयस्यान्वयव्यतिरेकाभ्यां प्रधानभावो गम्यते, तच्छब्दात्मकमशब्दात्मकं वा करणं समयसामर्थ्येनानुभवं साधयदागम इत्युच्यते । [1]समयाविनाभावयोर्वैलक्षण्यं पश्यामस्तेनानुमानेप्रसङ्गः समयग्रहणेन निवर्तितः । समयसामर्थ्यादपि संशयो विपर्ययश्च क्वचिद्भवति, तदर्थं सम्यग्ग्रहणम् । सविकल्पकप्रत्यक्षव्यवच्छेदार्थं परोक्षग्रहणम् ।

## ❋ सौत्रलक्षणेनाविरोधापादनम् ❋

ननु—"आप्तोपदेशः शब्दः" ( न्या० सू० १।१।७ ) इति लक्षणं सौत्रं, सत्यम्; अस्यैवार्थोऽयं प्रकटितस्तथाहि—उपदिश्यतेऽनेनार्थ इत्युपदेशः समयापेक्षमर्थप्रतीतिसाधनमुच्यते । न हि प्रत्यक्षादनुमानाद्वाऽवगतोऽर्थ उपदेशतः प्रतिपन्न इत्युच्यते । नापि सन्दिग्धो विपर्यस्तो वाऽर्थ उपदिष्ट इत्युच्यते ।

अथवा प्रत्यक्षसूत्रादव्यभिचारिव्यवसायात्मकपदयोरिहाप्यनुवृत्तिर्द्रष्टव्या, ततो न संशयविपर्ययसाधनयोः प्रसङ्गः । एवं चाप्तग्रहणं न लक्षणार्थं, तेन व्यवच्छेद्याभावात्, किंत्वदृष्टार्थानां वाक्यानां प्रामाण्यसिद्धावाप्तोक्तत्वहेतुसूचनार्थम् । अस्तु वा लक्षणार्थम्, यदा अव्यभिचार्यादिपदयोरिहानुवृत्तिर्नेष्यते । उपदेशशब्दश्च मिथ्योपदेशेऽपि दृष्टस्तदाप्तग्रहणं सार्थकमिति । आप्तो ह्यज्ञानरागादिदोषरहित उपदेष्टा भण्यते, तदुपदेशः प्रमाणमेव । तथा चोक्तम्—

---

१. अनुमानेऽतिव्याप्तिमपाकर्त्तुमागमलक्षणे संकेतबलेनेतिग्रहणम् । न ह्यनुमानं सङ्केतबलेन सम्यक्परोक्षानुभवं जनयति, किन्तु अविनाभावबलेन । सङ्केताविनाभावयोश्च महद्वैलक्षण्यमित्याह—समयेति । समयः=सङ्केतग्रहः ।

आगमो ह्याप्तवचनमाप्तिं दोषक्षयं विदुः।
क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसम्भवात्[1] ॥ इति।

अव्यापकत्वादलक्षणमिति चेत्, न; परापरभेदेन दोषक्षयस्यापि द्वैविध्यात्। तत्राऽपरस्याप्तस्यार्थम्लेच्छादेरपरो दोषक्षयः, प्रतिनियतविषयत्वादज्ञानादिनिवृत्तेः[2]। परातस्य त्वीश्वरादेः परो दोषक्षयः, सर्वार्थेष्वज्ञानादेरत्यन्तोच्छेदादिति। नन्वाप्तोपदेशोपि श्रोतृप्रज्ञादिवैगुण्यादसाधनं संशयादिसाधनं वा भवति। तत्कथमेकान्तेनाप्तोपदेशः प्रमाणमिति चेत्, न; तस्यौपचारिकत्वात्। न हि ज्ञानमकुर्वन् संशयादिज्ञानं कुर्वन् वा शब्दः क्वचिदाप्तोपदेशोऽयमिति प्रसिद्धिरस्ति, किन्त्वाप्तोऽर्थं येनोपदिशति परान्निश्चाययति स परेषामविपरीतार्थनिश्चयं कुर्वन्नञ्जसाप्तोपदेश इत्युच्यते।

अथवाप्तश्चासावुपदेशः। यथा वक्ता ज्ञानमकुर्वन् संशयं विपर्ययं वा कुर्वन्न लोकेऽप्याप्त उच्यते, किन्त्वविपरीतमर्थं निश्चाययन्नेवाप्तः प्रसिद्धः, तथा शब्दोऽप्यविपरीतार्थनिश्चयं कुर्वन् आप्त इत्युच्यते। नन्वेवमाप्तवागिति लघु लक्षणं कर्तव्यम्, न; अशब्दात्मकस्य चेष्टादेरनवरोधप्रसङ्गात्[3]। उपदेशग्रहणे तु समयपूर्वकेणाङ्गुलिचेष्टादिनापि येनार्थ उपदिश्यते, तत्सर्वं शब्दाख्यं प्रमाणं लभ्यते। स्मृतिप्रत्यक्षव्यवच्छेदोऽप्यत एव लभ्यते। न हि शब्दं श्रुत्वापि स्मृतोऽर्थः सविकल्पकप्रत्यक्षोपलब्धो वा क्वचिदाप्तेनोपदिष्ट इति प्रसिद्धिरस्ति। तस्मात्समयबलेन सम्यक्परोक्षानुभवसाधनमागम इत्ययमेव सूत्रस्यार्थ इति।

## ❋ सौगतानां प्रमाणद्वैविध्यनियमः ❋

ननु च परोक्षार्थविषयत्वे शब्दस्यानुमानादनर्थान्तरभावः प्राप्तः। तथा चाह—

[4]मानं हि द्विविधं मेयद्वैविध्याच्छक्त्यशक्तितः।
अर्थक्रियायां केशादिनार्थोऽनर्थाधिमोक्षतः ॥

---

१. हेत्वसम्भवात्=अज्ञानरागादिहेत्वसम्भवादित्यर्थः।

२. न्यायमञ्जर्यामप्येवम्—"येऽव्याप्तिं दोषक्षयमाचक्षते, तैरपि दोषक्षयः प्रतिपाद्यार्थेष्वेव वर्णनीयोऽन्यथा लोके दृश्यमानस्य व्यवहारस्य निह्नवः स्यात्" (न्या० म० पृ० १५१)।

३. अनवरोधप्रसङ्गात्=असंग्रहप्रसङ्गादित्यर्थः।

४. प्र० वा० २।१। 'विषयद्वैविध्यात् मानं द्विविधम्, अर्थक्रियायां शक्त्यशक्तितः (विषयद्वैविध्यम्), केशादिः अर्थो न; अनर्थाधिमोक्षतः'—इत्यन्वयः।

मानद्वैविध्यसिद्धौ मेयद्वैविध्यं हेतुः, मेयद्वैविध्ये तु शक्त्यशक्तित इति हेतुः। [1]साक्षात्स्वाकारज्ञानजननं प्रति शक्तत्वं शक्तिः, पारम्पर्येण शक्तत्वं त्वशक्तिः पर्युदासवृत्त्या। तत्र शक्तोऽर्थः स्वेन रूपेण लक्ष्यमाणत्वात् स्वलक्षणं प्रत्यक्षस्य विषयः। इतरस्तु सामान्यरूपेण प्रतीयमानत्वात् सामान्यलक्षण-मनुमानस्य विषयः। केशादेस्तु प्रमाणद्वयागोचरस्यार्थक्रियायां न साक्षान्नापि पारम्पर्येण शक्तिरित्यतो नासावर्थस्तस्मादनर्थाधिमोक्षतः [2]तज्ज्ञानं न प्रमाण-मनर्थाधिमुक्तेः=अर्थाधिगमाभावादित्यर्थः। प्रकरणान्तरेऽप्यमुमेवार्थमाह— [3]"द्विविध एवार्थः—प्रत्यक्षः परोक्षश्च।" तत्र यो ज्ञानप्रतिभासमन्वयव्यतिरेका-वात्मनोऽनुकारयति, स प्रत्यक्षस्तदसाधारणं वस्तुरूपं स्वलक्षणम्। अन्यस्तु साक्षात्स्वभावोपधानसामर्थ्यरहितोऽयुक्तप्रतिपत्तिरेव, न चान्यदर्शनेऽन्यकल्पना युक्ताऽतिप्रसंगात्, तस्य नान्तरीयकतया स्यात्। स हि प्रतिबद्धस्वभावो यथाविधसिद्धस्तथाविधसन्निधानं सूचयति। सामान्येन च स्वसम्बन्धिनोऽर्थस्य प्रतिपत्तिरनुमानमिति द्वे एव प्रमाणे, अन्यथा प्रतिपत्त्ययोगादिति।

## ❀ तस्य खण्डनम् ❀

अत्रोच्यते—मेयद्वैविध्यं केन गम्यते? यदि प्रमाणद्वैविध्येनैव तदेत-रेतराश्रयत्वं स्यात्। अथ प्रत्यक्षेणैव, तदाऽनुमानं व्यर्थं स्यात्, परोक्ष-स्यापि प्रत्यक्षेणैव सिद्धत्वात्। न च प्रत्यक्षेणैव गृहीतस्य परोक्षत्वं युक्तम्। तदग्रहणे च न प्रत्यक्षतो द्वैविध्यसिद्धिः। प्रत्यक्षपूर्वकत्वान्नानुमानतोऽपि द्वैविध्यसिद्धिः। प्रमाणान्तरेण सिद्धौ च विरुद्धत्वं स्यात्, तृतीयस्यापि

---

योऽर्थ्यते सोऽर्थः। कोऽर्थ्यते? यत्र 'अयमर्थः'—इत्यधिमोक्षो भवति। अधिमोक्षः=निश्चयः। स स्वलक्षणे सामान्यलक्षणे च भवन्नर्थत्वं निश्चा-ययति। यत्र त्वर्थबुद्धिरेव नास्ति, स केशादिः कथमर्थः स्यादिति भावः।

१. तथैवाहालङ्कारे—"यदा साक्षाज्ज्ञानजननं प्रति शक्तत्वेन प्रतीयते, तदानीं स्वेन रूपेण लक्ष्यमाणत्वात् स्वलक्षणम्। यदा तु पारम्पर्येण शक्तत्वात् तथैव प्रतीयते, तदा सामान्यरूपेण लक्षणमिति सामान्यलक्षणम्। पारम्पर्येण शक्तिरेवाशक्तिः पर्युदासवृत्त्या, न शक्त्यभाव एव" (प्र० वा० अ० पृ० १६६)।

२. तज्ज्ञानम्=केशोण्डुकादिज्ञानमित्यर्थः।

३. "न प्रत्यक्षपरोक्षाभ्यां मेयस्यान्यस्य सम्भवः।
तस्मात् प्रमेयद्वित्वेन प्रमाणद्वित्वमिष्यते॥" (प्र० वा० ३।६३)
"यस्यार्थस्य सन्निधानासन्निधानाभ्यां ज्ञानप्रतिभासभेदः तत् स्वलक्षणम्। अन्यत् सामान्यलक्षणम्" (न्या० बि० १।१३)।

सम्भवात्[1]। शक्यशक्ति इत्यप्ययुक्तम्—शक्यशक्तिभेदोऽपि केनावगम्यते? इति पूर्ववत् प्रसङ्गः तस्मादसिद्धं मेयद्वैविध्यं कथं साधनमिति?

यत्त्वत्रोक्तम्—"विषयद्वैविध्यं प्रत्यक्षगम्यम्। सदृशासदृशत्वप्रतीतिर्हि प्रतीतेरेव धर्मः, स च स्वसंवेदनप्रत्यक्षसिद्धः" (प्र० वा० अ० पृ० १७१) इति, तदिदं व्यामूढभाषितम्; न हि प्रतीतिधर्म एव प्रमेयं, तस्य शक्यशक्तिलक्षणाभिधानात्, न चानर्थान्तरस्य प्रतीतिधर्मस्य प्रतीतिजनकत्वं साक्षात्पारम्पर्येण चास्ति। कथं च प्रतीतिधर्मो साधारणः सादृश्यमुच्यते? तस्यान्यत्रावृत्तेरसादृश्यलक्षणत्वात्। समारोपिताकारश्च न प्रत्यक्षविषयः स्वसंवेदनप्रत्यक्षविषयस्यापि रागादिवत्परोक्षत्वमयुक्तम्। "स्वसंवेदनेनार्थधर्मः परोक्षता गृह्यते। परोक्षं[2] तु धर्मिप्रत्यक्षान्तरेणेन्द्रियज्ञानेन गृह्यते, ततः[3] सम्बन्धप्रतीतिस्ततः प्रत्यक्षेण परोक्षताऽप्रतीतावपि वस्त्वनुमानेन प्रतीयत" (प्र० वा० अ० पृ० १७४) इति चेत्, परोक्षं वस्तु इन्द्रियप्रत्यक्षेण प्रतीयत इत्येतदपि न बुध्यामहे। धर्मधर्मिणोस्तादात्म्याभ्युपगमेऽपि भिन्नप्रमाणग्राह्यत्वं न नष्टधियोऽन्यो ब्रूयादिति।

## ❀ मेयद्वैविध्यान्मानद्वैविध्यासिद्धिः ❀

किं च यदि नाम प्रत्यक्षपरोक्षभेदेन मेयद्वैविध्यं, ततः प्रत्यक्षानुमाने द्वे एव प्रमाणे इति कुतः सिध्यति, व्यधिकरणत्वात्, प्रतिबन्धासिद्धेश्चेति। लक्षणभेदेन च प्रमाणभेदस्यापि व्यवस्थेष्टा। न च त्वयाद्यापि मेयविशेषविषयत्वं मानविशेषस्य लक्षणमुक्तम्, येन मेयान्तराभावान्मानान्तराभावः सिध्येत्। न च कल्पनापोढत्वेन प्रत्यक्षलक्षणेन त्रिरूपलिङ्गजत्वेन वा शब्दस्य संग्रहः शक्यः कर्तुं येन प्रमाणस्य सतोऽत्रैवान्तर्भावादिति हेतुरसिद्धो न स्यात्। ननूक्तमन्यथा प्रतिपत्त्यायोगादिति। सत्यमुक्तमिदमयुक्तं तूक्तं,

---

१. एतेन समर्थितोऽयं पूर्वपक्षोऽलङ्कारस्य—

"प्रमाणान्तरेण द्वित्वं चेत् प्रमेयस्य प्रतीयते।
विरुद्ध एव हेतुः स्यात् तृतीयस्यापि सम्भवात्॥
प्रमाणद्वितयेनाथ भवेदन्योऽन्यसंश्रयः।
अनुमानेन सिद्धिश्चापरोक्षस्य कथं भवेत्॥
न प्रत्यक्षं परोक्षेऽस्ति वृत्तौ वा व्यर्थिकाऽनुमा।"

(प्र० वा० अ० पृ० १७०-७१)।

२. परोक्षत्वयोगादेव धर्मिवस्तु परोक्षमित्युक्तम्।

३. सम्बन्धप्रतीतिः धर्मधर्मिणोरिति शेषः।

तथाहि—द्वारं समुद्रोदकम् हिमालयो गिरिरुत्तरेण स्थित इत्येवमादिशब्दाद्भवत्यर्थप्रतिपत्तिर्न च साक्षजा, नापि लिङ्गजा पक्षधर्मत्वाद्यप्रतीतेः। तस्मान्मानान्तरं शब्द इति।

## ❀ शब्दस्याभिप्रायानुमापकत्वोक्तिः ❀

ननु च त्रिरूपलिङ्गसूचकस्यैव शब्दस्यार्थाव्यभिचारित्वेन प्रमाणत्वं, तस्य च परार्थानुमानत्वमेव[1] तदन्येषां तु शब्दानां प्रामाण्यमेव नास्ति। यदाह—

नान्तरीयकताऽभावाच्छब्दानां वस्तुभिः सह।
नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचकाः॥
(प्र० वा० १।२१४)।

प्रतिबन्धे हि सत्यर्थोऽर्थं गमयति, यथाग्निं धूमो, वृक्षं शिंशपेति। न च शब्दानां वस्तुभिः सह[2] अन्यतरोपि सम्बन्धोऽस्ति तेन नार्थसिद्धिस्ततस्तेभ्यः शब्देभ्यो नार्थसिद्धिरित्यर्थः। वक्त्रभिप्रायपूर्वकास्तु शब्दास्तेन ते वक्त्रभिप्रायसूचका इति।

## ❀ तन्निरासः ❀

अत्रोच्यते—यत्तावन्नान्तरीयकताभावादिति। अथ केयं नान्तरीयकता? किं सम्बन्धमात्रम्? उताविनाभावः? सम्बन्धमात्रं तावदस्त्येव शब्दार्थयोर्वाच्यवाचकभावोपपत्तेः। अथाविनाभावः, तदभावादेव शब्दस्य प्रमाणान्तरत्वमुच्यते, प्रत्यक्षवत्। अविनाभावत्वेनार्थप्रतिपादकत्वेनानुमानमेव शब्दः स्यात्, कः प्रमाणान्तरं ब्रूयात्? अथाविनाभावित्वाभावादर्थप्रतिपादकत्वमेव नास्ति, तन्न, अक्षैर्व्यभिचारात्। तेषां स्वाभाविकमर्थप्रत्यायकत्वमित्यप्ययुक्तम्, प्रदीपाद्यपेक्षित्वात्। यथा च प्रदीपादिसहकारिविशेषमपेक्ष्याक्षाण्यर्थं साधयन्ति, तथा शब्दा अपि संकेतस्मृत्यादिसहकारिविशेषमपेक्ष्यार्थं साधयन्ति। अनियतसहकारिणो हि हेतवस्तेन कस्यचित् किंचित् सहकारीति। तस्मान्नान्तरीयकताया अभावेऽपि शब्दानामर्थाऽसाधकत्वमयुक्तम्।

स्यान्मतम्—प्रत्यक्षज्ञानानामपि स्वाकारसाधकत्वं तादात्म्येन, बाह्यार्थसाधकत्वं तु तदुत्पत्त्या। अक्षाणामप्यर्थैः सह तदुत्पत्तिसम्बन्धोऽस्त्येव तेन

१. तदन्येषाम्=त्रिरूपलिङ्गसूचकादन्येषामित्यर्थः।
२. अन्यतरः। तादात्म्यतदुत्पत्त्योरित्यादिः।

सर्वेषां नान्तरीयकतयैवाऽर्थसाधकत्वमिति । तत्र[1] सम्बन्धद्वयनियमस्य निरस्तत्वात् क्षणिकत्वासिद्धेश्चाक्षार्थयोस्तदुत्पत्तिरसिद्धा ।

किं चातीतानागतार्थैः सह योगिज्ञानानामपि कः सम्बन्धः ? न हि तदर्थानां जनकत्वमस्तीत्युक्तं प्राक्। पारम्पर्येण तत उत्पत्तिरिति चेत्, न; अनागतार्थानां पारम्पर्येणाप्यजनकत्वात् । न हि तैः किंचिज्ज्ञानं साक्षादुत्पादितं येन तद्वासनोत्पत्तिक्रमेण ज्ञानान्तराणां पारम्पर्येण तत उत्पत्तिः कल्प्येत। तज्जातीयस्यास्ति जनकत्वमिति चेत्, न; जनकस्यातीतत्वात् । न च तज्जातीयत्वेऽप्यन्यत उत्पन्नं ज्ञानमन्यत् परिच्छिनत्ति, अतिप्रसंगात् । एकस्मात् स्त्रीसुवर्णाद्यर्थादुत्पन्नस्य ज्ञानस्य सर्वस्त्रीसुवर्णाद्यर्थपरिच्छेदकत्वप्रसंगात् ।

अपि चैवं शब्दस्याप्यर्थादुत्पत्तिः किन्न कल्प्यते ? तस्याप्यर्थजज्ञानाहितवासनाक्रमेणोत्पत्तेः । व्यभिचारान्नेष्यते इति चेत्, स्यान्मतम्—यदि शब्दार्थयोस्तदुत्पत्तिलक्षणः प्रतिबन्धः स्यात्तदा न शब्दः कदाचिदप्यर्थं व्यभिचरेत्, व्यभिचारप्रतिबन्धयोर्विरोधादिति। एवं तर्हि भावनाप्रकर्षेन्द्रिययोरप्यर्थव्यभिचारात् प्रतिबन्धो नैष्टव्यस्तथाहि–इन्द्रियं तावदसत्स्वपि केशाद्यर्थेषु तन्निर्भासं ज्ञानमुत्पादयति । भावनाप्रकर्षेऽप्यसत्स्वपि स्त्र्यादिषु तन्निर्भासं ज्ञानं जनयतीत्यतो भावनाप्रकर्षजेन्द्रियज्ञानयोरप्यर्थप्रतिबन्धो नैष्टव्यः । सर्वमिन्द्रियज्ञानं भावनाप्रकर्षजं च नार्थप्रतिबद्धमिष्टं, किं तर्हि ? यस्यैवार्थाव्यभिचारस्तस्यैव तत्प्रतिबद्धत्वमिति चेत्, नन्वव्यभिचारसिध्यर्थं प्रतिबन्धोऽन्विष्यते। स चेत्प्रतिबन्धसिद्धिं विनापि सिद्धः, किं प्रतिबन्धसाधनेन ? प्रतिबन्धसिद्धयैवाऽव्यभिचारसिद्धावन्योऽन्यसंश्रयप्रसंग इति ।

किं च शाब्दज्ञानस्यापि यस्य व्यभिचारोऽस्ति, तस्य प्रतिबन्धो मा भूद्, यस्य त्वर्थाऽव्यभिचारोऽस्ति, तस्यार्थप्रतिबन्धः किन्नेष्यते ? तत्सदृशस्य व्यभिचारादप्रतिबन्धेऽक्षजादिज्ञानस्यापि तत्सदृशस्य व्यभिचारादप्रतिबन्धप्रसंगः । यथा चाक्षजादिज्ञानयोर्व्यभिचार्यव्यभिचारिणोर्भेदं तज्ज्ञा विवेचयन्ति, तथा शाब्दज्ञानयोरपीति सर्वं समानम् ।

"यच्चोक्तं वक्त्रभिप्रायसूचकाः" इति, तदयुक्तम्, ततोऽर्थेष्वप्रवृत्तिप्रसंगात्। न ह्यन्यप्रतीत्यान्यत्राप्रतिपन्नेषु प्रवृत्तिः सम्भवति, अतिप्रसंगात् । भ्रान्तितः प्रवृत्तौ च शब्दविशेषादर्थविशेषे प्रवृत्तिनियमाभावप्रसंगात्, संवादाभावप्रसंगाच्च ।

---

१. उक्तामाशङ्कामपाकरोति—तत्रेति ।

## ❀ विवक्षाद्वारार्थप्रतीतिनिरासः ❀

शब्दाद्विवक्षाप्रतीतौ ततोऽर्थप्रतीतिरिति चेत्, न; विवक्षाया अप्यर्थेन सम्बन्धाभावादसत्यप्यर्थे विवक्षोत्पत्तिदर्शनात्। का चेयं विवक्षा? किं शब्दोच्चारणेच्छामात्रं? किं वानेन शब्देनामुमर्थं प्रतिपादयामीत्येषोऽभिप्रायः। किं चातः? शब्दनिमित्तेच्छाप्रतीतौ वक्तृश्रोत्रोः शास्त्रादिष्वपि प्रवृत्तिर्न स्यात्। न हि कश्चिदनुन्मत्तः शब्दनिमित्तेच्छामात्रप्रतिपत्त्यर्थं शास्त्रं वाक्यान्तरं च प्रणेतुं श्रोतुं वा प्रवर्तते। किं च कचटतपादिदशदाडिमादिवाक्यैः सह सर्ववाक्यानामविशेषप्रसंगः, सर्वेषां स्वप्रभवेच्छामात्रानुमापकत्वाविशेषात्। अथानेन शब्देनामुमर्थं प्रतिपादयामीत्यभिप्रायो विवक्षा, तत्सूचकत्वेन शब्दानामनुमानत्वमुच्यते। तथापि व्यभिचारान्नानुमानं शब्दः शुकसारिकोन्मत्तादयो हि न तथाभिप्रायेण वाक्यमुच्चारयन्ति। अपि च किं समयनिरपेक्षं वाक्यं तादृशमभिप्रायं गमयति? आहोस्वित्समयापेक्षमिति? समयानपेक्षत्वे सर्वप्रतिपत्तिप्रसंगात्, न कश्चिद्भाषानभिज्ञः स्यात्। समयापेक्षस्तु शब्दोऽर्थमेव किं न गमयति? न ह्ययमर्थाद्बिभेति, येन तत्र साक्षान्न प्रवर्त्तते। न चाभिप्रायप्रतीतिक्रमेणार्थप्रतीतिरनुभूयते। यश्चाशक्यसमयत्वादिकेऽर्थे शब्दाप्रवृत्तौ न्यायः, सोभिप्रायेपि समान इत्यभिप्रायावगमोऽपि शब्दान्न स्यात्। येन वा प्रकारेणाभिप्रायविशेषे शब्दप्रवृत्तिस्तेनार्थ एवास्तु, किं प्रतीतिविरुद्धेन पारम्पर्याश्रयणेन?

## ❀ अर्थे साक्षात् शब्दप्रवृत्तौ दोषः ❀

ननु चार्थे साक्षात् शब्दस्य प्रवृत्तिमिच्छतः परोक्षाकारजनकत्वविरोध इन्द्रियवत्। न ह्यभिन्ने विषये प्रतीतिवैलक्षण्यं युक्तम्; अस्ति चाक्षजशब्दजज्ञानयोर्वैलक्षण्यम्। तस्मान्नाभिन्नविषयत्वमिति। तदुक्तम्—

अन्यदेवेन्द्रियग्राह्यमन्यः शब्दस्य गोचरः।
शब्दात्प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते॥

तत्र पूर्वार्द्धेन प्रतिज्ञा कृता तत्साधनमुत्तरार्द्धेनोक्तम्। नष्टाक्षोऽपि शब्दादर्थं प्रत्येति, न तु प्रत्यक्षवदीक्षत इत्यर्थः। एतदेव स्पष्टयति—

अन्यथेन्द्रियसम्बन्धाद्दाहं दग्धोऽभिमन्यते।
अन्यथैवाग्निशब्देन दाहार्थः सम्प्रतीयते॥ (वा० प० २।४१९)

तस्मान्नेन्द्रियविषये शब्दः प्रवर्तते इति।

## ❀ तन्निरसनम् ❀

तदेतदयुक्तम्; यस्मान्नात्र विषयभेदकारितं प्रतीतिवैलक्षण्यं, किं तर्हि ? करणभेदकारितम्। यदि तु विषयभेदकारितं स्यात्तदा तत्पूर्विका प्रवृत्तिर्जलाग्निप्रतीतिपूर्विकेवाभिन्नविषया न स्यात्। किं चाग्निशब्दजायाः प्रतीतेः प्रवृत्तस्य ज्ञातुरिन्द्रियेणाग्निप्राप्तौ संवादो न स्यात्। न हि निर्विषयस्य ज्ञानस्यार्थान्तरविषयस्य वार्थान्तरप्राप्तौ संवादव्यवस्था लोकेऽपि दृष्टा। [1]तदभावान्न सत्यवादित्वं कस्यचित्स्यात्। प्रतिज्ञापदयोश्च व्याघातस्तथा हि—"अन्यदेवेन्द्रियग्राह्यम्"—इत्यनेन शब्देन योऽर्थ उच्यते, स कथं शब्दस्य गोचरो न भवति ? साक्षादगोचर इति चेत्; पारम्पर्येणापि शब्दात् तस्मिन्नर्थे किं प्रतीतिर्भवति ? न वा ? यदि न भवति, ततः पारम्पर्येणाप्यगोचर एव। अथ भवति, सा किमिन्द्रियजप्रतीतितुल्या ? तद्विलक्षणा वा ? यदि तुल्या, तदा "न तु प्रत्यक्षमीक्षते" इत्यनेन विरोधः। तद्विलक्षणा चेत्, न तर्हि प्रतीतिवैलक्षण्यं विषयभेदसाधनम्।

दाहशब्देन च कोऽर्थ उच्यते—किमग्निरुष्णस्पर्शो वा ? रूपविशेषो वा ? विस्फोटो वा ? तद्दुःखं वेति ? किं चातः ? सर्वोऽप्ययमर्थः प्रत्यर्थकृतसमयाच्छब्दात्तथैव प्रतीयते। अग्निशब्दस्त्वग्नावेव कृतसमयस्तेनासौ विस्फोटादिकं नाभिधत्ते। अग्निश्च ततः प्रतीयते। यद्येवं किमिति विस्फोटः तद्दुःखं वा न भवति ? न, अन्यकार्यत्वात्, न खलु दहनप्रतीतिकार्यं विस्फोटादि, किं तर्हि ? दहनदेहसम्बन्धविशेषकार्यम्, सुषुप्ताद्यवस्थायामप्रतीतावप्यग्नेः सम्बन्धविशेषाद्विस्फोटादेर्दर्शनात्, दूरस्थस्य चक्षुषा प्रतीतावप्यदर्शनात्। तथा दुःखशब्दात्तत्प्रतीतौ दुःखित्वप्रसंग इत्यपि निरस्तम्, दुःखसमवायो हि दुःखित्वं, न दुःखज्ञानमात्रम्। यस्य तु दुःखज्ञानान्नान्यदस्ति दुःखित्वं तस्य परदुःखज्ञानेऽपि दुःखित्वं प्रसक्तम्। ततश्च बुद्धस्यापि दुःखित्वं स्यादसर्वज्ञत्वं वा। प्रत्यक्षं च बुद्धस्य सर्वविषयज्ञानमिष्टम्। तच्च साक्षात्तत्स्वरूपं स्वीकुर्वदर्थस्य ग्राहकं भवति। तेन बुद्धस्य परदुःखं प्रत्यक्षेण गृह्णतः परस्येव दुःखाकारतापत्तेर्दुःखित्वं प्राप्तम्। एतेन रागादिमत्त्वप्रसङ्गोऽपि द्रष्टव्य इति। तस्मादभिन्नेऽपि विषये सामग्रीवैलक्षण्यात्प्रतीतिवैलक्षण्यमेष्टव्यं, तेन शब्दान्नेन्द्रियार्थे सर्वथा तुल्या प्रतीतिर्भवतीत्यतोऽन्धस्यानन्धत्वप्रसङ्गोऽप्ययुक्त इति।

## ❀ शब्दस्य स्वार्थप्रतिपादने प्रकरणाद्यपेक्षा ❀

ननु विधिविषयत्वे घटादिशब्दस्य नास्त्यस्तीति पदाभ्यां सामानाधिकरण्यं

---

१. तदभावात् = संवादाभावादित्यर्थः।

न प्राप्नोति, नास्तीति पदेन विधिविरोधादस्तीति पदस्य च वैयर्थ्यादिति, नैष दोषः; प्रकरणाद्यनपेक्षस्य शब्दस्य स्वार्थानुवादमात्रकर्तृत्वात्। यो हि ब्रूते 'प्रकरणाद्यनपेक्षोपि शब्दः स्वार्थं विधत्त इति', तं प्रति स्यादयं दोषः। सामान्येनाऽर्थमात्रानुवादकत्वे तु तस्योभयथादर्शनात्। स्यात् सन्देहः— किमस्य विधिः? उत प्रतिषेध इति? तत्र विधिविवक्षायामस्ति घट इत्याह, प्रतिषेधविवक्षायां तु नास्तीत्याह। तत्रापि क्वास्ति क्व च नास्तीति सन्देहे तन्निश्चायकं देशविशेषादिपदं प्रयुङ्क्ते, पुनर्विशेषणान्तरमाकांक्षतस्तद्विशेषणान्तराभिधायि पदं प्रयुंक्ते यावन्निराकांक्षो भवति। तदेवं वाक्येनैव निःसन्दिग्धोऽर्थः प्रत्याय्यत इति तदेव वस्तुतः प्रमाणम्, "पदं त्वभ्यधिकाभावात्स्मारकान्न विशिष्यते" ( श्लो० वा० शब्द० १०७ ) इति। प्रमाणत्वेऽप्यदोषः, सामान्यवतोऽर्थमात्रस्याभिधानात्। यथोर्ध्ववस्तुमात्रे दूराच्चक्षुषा निश्चितेऽपि स्थाणुत्वादि विशेषेणानिश्चितत्वात्, तथानिश्चयार्थं तदुपसर्पणं विशेषदर्शनं च व्यर्थं न भवति, तथापदेन सामान्यवतोऽर्थमात्रस्याभिधानेऽपि कालदेशादि-विकल्पेन विधिप्रतिषेधवत्त्वदर्शनात् स्यात्सन्देहस्ततः प्रतिपाद्याकांक्षितविशेष-वत्त्वेन निश्चायनार्थमस्तीत्यादि पदं सार्थकं भवति। नास्तीत्यनेन सामानाधि-करण्यविरोधोऽपि नास्ति—तदेव ह्यन्यत्रान्यदा वा नास्तीत्युच्यते। खपुष्पं सर्वत्र सर्वदा नास्तीत्यत्र का वार्तेति चेद्, अत्रापि दृष्टमेव पुष्पं स्वाभावान्यत्वेनात्यन्तं प्रतिषिध्यते। ननु खपुष्पशब्दादेवायमर्थः सिद्धो, न ह्याकाशात्मकं पुष्पं कदाचित् क्वचिदस्तीति, सत्यम्; तथापि यः केनचित्प्रतारितोऽन्येन वा निमित्तेन नैव प्रतिपद्यते, तं प्रति पदान्तरं सार्थकम्। आकाशं सर्वत्र सर्वदास्तीत्यत्रापि अयमेव न्यायः।

## ❀ अपोहस्य शब्दार्थत्वाशंका तन्निरासश्च ❀

ननु यदि आशंकानिवृत्त्यर्थं पदान्तरमिष्यते, तदापोह एव शब्दार्थ इष्टः स्यात्। कोऽयमपोहः? यः शब्दात्प्रतीयते। कः शब्दात्प्रतीयते? न किंचित्। भ्रान्तिमात्रत्वादित्यभिप्रायः। तदयुक्तम्; शब्देभ्योऽर्थं परिच्छिद्य प्रवर्तमानस्य तदर्थप्राप्त्यर्थक्रियासंवादेन विसंवादनिवृत्तौ तद्व्या-प्तस्य भ्रान्तत्वस्य निवृत्तेः। प्रत्यक्षस्यापि अभ्रान्तत्वेऽयमेव न्यायः। सत्या-नृतव्यवहाराभावप्रसंगश्चेत्युक्तम्, संवृतिसदसतोः सत्यानृतव्यवहार इति चेत्, न; प्रागेव विस्तरेणासांवृतत्वस्य निराकृतत्वात्। अपि च सविकल्पकप्रत्यक्षसमर्थने वस्तुसामान्यसमर्थने च वस्तुन्यपि शब्दः प्रवर्तत इति विस्तरेण समर्थितम्। तत्सर्वमनुस्मृत्य वक्तव्यमित्यलं प्रसंगेन।

## ❀ शब्दस्यानुमानाद्भेदसाधनम् ❀

एवं च शब्दविशेषस्यार्थप्रतिपादकत्वेन प्रमाणत्वे स्थितेऽनुमानाद्भेदः साध्यते—नानुमानं शब्दः, पक्षधर्मत्वादिग्रहणानपेक्षत्वात्, प्रत्यक्षवदिति।

असिद्धोऽयं हेतुरित्यपरे, तथा हि—गोशब्दो धर्म्मी, ककुदादिमदर्थप्रतिपादक इति साध्यो धर्म्मः, गोशब्दत्वात्, संकेतकालोपलब्धगोशब्दवत्। एवमिन्द्रादिशब्दानामपि इन्द्राद्यर्थप्रतिपादकत्वं साधयितव्यमिति। तदेतदयुक्तम्; संकेतकालेऽर्थप्रतिपादकत्वसिद्धौ दृष्टान्ताभावात्।

किं चार्थप्रतिपादकत्वस्य शब्दधर्मस्य सिद्धावपि कथं देशादिविशिष्टोऽर्थः सिध्यति? न हि रूपग्राहकं चक्षुः चक्षुष्ट्वादित्यनुमानादेव रूपविशेषः सिध्यति, एवं हि प्रत्यक्षस्याप्यनुमानत्वप्रसंगः। प्रदेशविशेषेऽग्निसिद्धयेऽपि न कश्चिदेवमनुमानं करोति—अग्निप्रतिपादकोऽयं धूमो धूमत्वादिति। किं तर्हि? अग्निमानयं प्रदेशो धूमवत्त्वादिति। यदापि धूमः पक्षीक्रियते, तदापि तस्य समानदेशस्थेनाग्निना सम्बन्धित्वसिद्धौ प्रदेशविशेषेऽग्निः सिध्यति, न त्वग्निप्रतिपादकमात्रसाधनादेव। न चैवं शब्दस्य समानदेशस्थेनाऽर्थेन व्याप्तिः प्रतिपत्तुं शक्यते। नापि समुद्रवृद्धिं चन्द्रोदयादिवत् कालविशेषावच्छिन्नेनार्थेन गोशब्दस्य व्याप्तिः सम्भवति। पदान्तरसन्निधिं प्रकरणादिकं चापेक्ष्य गोशब्दो देशाद्यवच्छेदेनार्थं प्रतिपादयति। लिङ्गन्यूनलिङ्गान्तरं प्रकरणादिकं चाऽनपेक्ष्यापि देशाद्यवच्छिन्नमेवार्थं प्रतिपादयति, वागादिप्रतिपादकगोशब्देनानेकान्तश्च। विशिष्टस्याव्यभिचार इति चेत्, कोऽत्र विशेषः? प्रकरणादिरेवेति चेत्, न; धूमस्योर्ध्वंगामित्वादिवदव्यभिचारित्वेन ककुदादिमदर्थप्रतिपादकाशेषगोशब्देष्वविशिष्टस्य प्रकरणादिधर्मस्यादृष्टत्वात्।

किं च लिङ्गमनाप्तकृतमपि स्वसाध्यं न व्यभिचरति, शब्दस्त्वनाप्तकृतोऽसत्यार्थ एव स्यात्। किं च लिङ्गस्य पक्षधर्मत्वादिनिश्चयेनैवाव्यभिचारित्वं निश्चीयते। शब्दस्य त्वाप्तोक्तत्वनिश्चयेन प्रवृत्तिसामर्थ्येनैव, न तु पक्षधर्मत्वादिनिश्चयेनेति।

## ❀ ज्ञापनप्रकारभेदाद् भेदः शब्दानुमानयोः ❀

किं च लिङ्गस्याविनाभावबलेनार्थप्रतिपादकत्वं, शब्दस्य तु संकेतमात्रेण। स एवाविनाभाव इति चेत्, न; स्वाभाविकपुरुषायत्तत्वविशेषात्। स्वाभाविको ह्यविनाभावसम्बन्धः, संकेतस्तु पुरुषेच्छानुविधायीति। विरुद्धाविरुद्धार्थभेदाच्च—शब्दो हि सास्नादिमदर्थविरुद्धेष्वपि वागादिषु तदन्येषु च व्युत्पा-

**स द्विविधः—दृष्टादृष्टार्थभेदात्। तत्र दृष्टार्थानां वाक्यानां प्रायेण प्रवृत्तिसामर्थ्यात् प्रामाण्यमवगम्यते। अदृष्टार्थानां पुनराप्तोक्तत्वेन।**

दितसमयः प्रयुज्यमानः प्रतीतिं जनयति। धूमादिं लिङ्गं तु नाग्न्यादिविरुद्धेषु जलादिष्वविनाभावेन प्रतीतिं कुतश्चित्प्रस्तावादपि जनयति। तस्मान्नानुमानं शब्दः। किं चाप्तोपदेशत्वेन लक्षणेन प्रत्यक्षादपि भिद्यते इति।

## ❀ आप्तोक्तत्वे शङ्का ❀

ननु चाप्तोक्तत्वं शब्दस्य कुतो निश्चीयते ? सर्वपुरुषाणां ज्ञानाज्ञानाद्युपपत्तौ सत्यानृतवक्तृत्वसम्भवेन संशयाद्यनिवृत्तेः। प्रवृत्तिसामर्थ्येन तन्निश्चये तु व्यर्थस्तन्निश्चयस्तदभावेऽपि प्रवृत्तेः, चक्रकं वा स्यात्—यावन्नाप्तोक्तत्वनिश्चयस्तावन्न प्रामाण्यनिश्चयः, तदभावान्न प्रवृत्तिः, तदभावान्न तत्सामर्थ्यम्, तदभावाच्च नाप्तोक्तनिश्चय इति। अथ सर्वविदोऽत्यन्तवीतरागस्यानृतवक्तृत्वासम्भवात् तत्प्रणीतस्यागमस्य प्रामाण्यनिश्चय इति, न; तत्प्रणेतुर्दुरन्वयत्वात्। यद्यपि तथाविधः पुरुषोऽस्ति, तथापि तत्प्रणीतोयमागम इति कुतो निश्चीयते ? तदागमादेवेति चेत्, न; इतरेतराश्रयत्वप्रसंगात्—यावदागमस्य प्रामाण्यं न सिद्ध्यति, तावन्न पुरुषविशेषप्रणीतत्वं सिध्यति, यावच्च न तत्प्रणीतत्वसिद्धिस्तावन्न प्रामाण्यसिद्धिरिति।

## ❀ तत्समाधानम् ❀

अत्रोच्यते—स्यादयं दोषो यदि सर्वस्यागमस्याप्तोक्तत्वेनैव प्रामाण्यं साध्यते। यावता कस्यचिदाप्तोक्तत्वेन कस्यचित्प्रवृत्तिसामर्थ्येनेति। न च प्रवृत्तिसामर्थ्येन प्रामाण्यसिद्धौ चक्रकं, कस्मात् ? अनिश्चितेपि प्रामाण्येऽर्थसंशयादेव प्रवृत्तेरुक्तत्वात्। न चैवं व्यर्थस्तत्प्रामाण्यनिश्चयः, अन्यत्राप्तोक्तत्वेन प्रामाण्यसिद्धौ दृष्टान्तार्थत्वात्। प्रवृत्तिसामर्थ्येन निश्चितस्य पुनराप्तोक्तत्वेन निश्चयोऽनर्थक इति चेत्, स्यादेतदेव यद्येकविध एवागमः स्यात्। यावता स द्विविधो दृष्टादृष्टार्थभेदात्।

## ❀ दृष्टादृष्टार्थानां प्रामाण्यम् ❀

तत्र दृष्टार्थानां वाक्यानां प्रायेण प्रवृत्तिसामर्थ्यात्प्रामाण्यं गम्यते। तत्र हि अनिश्चितेऽपि प्रामाण्येऽर्थिनः का(य)पीडया प्रवृत्तिर्भवति। स्वर्गादिषु पुनरत्यन्तादृष्टत्वेन प्राप्तिसम्भावनापि नास्ति, तेन तत्र विचारकस्य प्रामाण्यानिश्चये प्रवृत्तिर्न सम्भवति। तस्माददृष्टार्थानां वाक्यानामाप्तोक्तत्वेन प्रामाण्यं निश्चित्य तदर्थेषु प्रेक्षावन्तः प्रवर्तन्त इति।

**कथम् ? 'पुत्रकामो यजेत'—इत्यादिवाक्यानां प्रवृत्तिसामर्थ्यात् प्रामाण्यमनुमाय, तत्प्रणेतुरतीन्द्रियार्थदर्शित्वेन परमाप्तत्वमवधार्य, तत्प्रणीतानां सर्ववाक्यानाम्, अप्रामाण्यकारणाभावात्, प्रामाण्यमनुमीयते; न नित्यत्वेन ।**

कथं पुनरत्यन्तादृष्टार्थानां वाक्यानां प्रणेतुरदर्शनेऽप्याप्तोक्तत्वं प्रत्येतुं शक्यत इति ? उच्यते—"कारीरिं निर्वपेत वृष्टिकामः", "पशुकामो यजेत" ( तै० सं० २।४।६।१ ), "पुत्रकामो यजेत" इत्येवमादिवाक्यानान्तावत्प्रवृत्तिसामर्थ्येन प्रामाण्यमनुमीयते । प्रवृत्तिश्चात्र वृष्ट्यादिभिरत्यर्थित्वादन्यस्य निश्चितोपायस्यानुपलम्भादनिश्चितसामर्थ्येषु वैद्योपदेशेष्वातुरवत् । जिज्ञासातः कापीडयापीत्युक्तम् ।

## ॐ वैदिकवाक्येष्वप्रामाण्याशङ्का तन्निरासश्च ॐ

प्रवृत्तस्यापि प्रायेण वृष्ट्यादिफलानुपलम्भात् प्रामाण्यावगमो न युक्त इति चेत्, "न; कर्मकर्तृसाधनवैगुण्यात्" ( न्या० सू० २।१।५८ )। तत्र कर्मवैगुण्यम्—अयथाकरणं, कर्तृवैगुण्यम्—अविद्वत्त्वं[1] प्रायश्चित्तित्वं च यजमानस्य [2]ऋत्विजां वा, साधनवैगुण्यम्—हविरसंस्कृतमुपहतं[3] वा मंत्रा न्यूना अधिका वा स्वरवर्णभ्रष्टा वा, दक्षिणा [4]दुरागता हीना वा निन्दिता

१. अविद्वत्त्वम् = अनधीतवेदत्वम् । तच्चानधिकारापादकम्—"अङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जम्" ( का० श्रौ० सू० १।१।५ )। अविद्वत्त्वादेव शूद्रस्यानधिकारं महर्षिः सूचयति—"अवैद्यत्वादभावः कर्मणि स्यात्" ( जै० सू० ६।१।३७ )।

२. ऋत्विजः = अध्वर्युमुखा याजकाः । ते च यजमानस्य स्वामिनः कर्मकरा दक्षिणामात्रभुजः—"अन्वाहार्यो दक्षिणा" ( श० ब्रा० ११।१।३।५ ), "गौर्दक्षिणा" ( श० ब्रा० २।४।३।१३ ) इत्यादिना विहिता दक्षिणा कर्मकरेभ्यो ब्राह्मणेभ्य एव प्रदीयते—"दक्षिणाभिर्मनुष्यदेवान्" ( श० ब्रा० २।२।२।१६ ) इति श्रुतेः । मनुष्यदेवाः = ब्राह्मणाः । तेषां वैगुण्यं स्वामिनः कर्तुरेव वैगुण्यं गण्यते, अङ्गवैगुण्यस्य प्रधानवैगुण्यवत् । प्रधानं कर्म तु यजमान एव कुरुते—"प्रधानं स्वामी, फलयोगात्" ( का० श्रौ० सू० १।७।१६ ) ।

३. उपहतम् = व्यापन्नम् । तच्च—"व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत्प्रतीयेत" ( जै० सू० ६।५।४८ )। "व्यापन्नम् = दूषितम्, येन कार्यं न क्रियते । यदभोज्यमार्याणां केशकीटावपन्नम् । अन्येन वोपघातेनोपहतम्" इति शाबरे विवृतम् ।

४. दुरागता = दौत्यद्यूतोत्कोचादिदुष्टोपायादागतेति मिश्राः ।

वेति। तदेषामन्यतमवैगुण्येपि फलं न निष्पद्यते। अविगुणेभ्यस्तु कर्मकर्तृसाधनेभ्यः फलनिष्पत्तेर्नाप्रामाण्यम्। लोकेऽपि अग्निकामो दारुणी मथ्नीयादिति वाक्यम्। तत्र कर्मवैगुण्यम्—मिथ्याभिमंथनम्, कर्तृवैगुण्यम्—प्रज्ञाप्रयत्नगतः प्रमादः, साधनवैगुण्यम्—आर्द्रं सुषिरं वा दार्विति। तत्रैकवैगुण्येऽपि फलं न निष्पद्यते इति। तावता नाप्रामाण्यं, गुणयोगे फलनिष्पत्तिदर्शनात्। तदेवं लौकिकवद्वैदिकवाक्यानामपि दृष्टार्थानां कर्मकर्तृसाधनवैगुण्याभावे सति फलनिष्पत्तिदर्शनात् प्रामाण्यमनुमीयते, अनुमाय च तत्प्रणेतुरतीन्द्रियार्थदर्शित्वेन परमाप्तत्वमवधार्यते। न ह्यज्ञस्य यथार्थोपदेशकर्तृत्वं सम्भवति। न च यज्ञविशेषफलविशेषयोः साध्यसाधनभावोऽस्मदादिप्रत्यक्षगोचरः। प्रत्यक्षाप्रवृत्तौ तत्रानुमानस्याप्यप्रवृत्तिः, तत्पूर्वकत्वात्सामान्यतोऽप्यत्र व्याप्त्यप्रसिद्धेः। आगमान्तरेण तत्प्रतीतौ वानवस्था स्यात्, सा च प्रमाणाभावादनुपपन्ना, क्वचिन्मूलवक्त्रभ्युपगमे च स एवातीन्द्रियार्थद्रष्टेत्यवगम्यते। ततस्तत्प्रणीतानां सर्ववाक्यानामप्रामाण्यकारणाभावात् प्रामाण्यमनुमीयते।

## *वेदवाक्यानां त्रैविध्यं प्रत्यक्षादिसंवादात्प्रामाण्यमिति पूर्वपक्षः*

अपरस्त्वाह--यद्यनेन प्रकारेण प्रामाण्यमुच्यते, तदा ये ब्राह्मणादिवधं स्वर्गस्य मोक्षस्य वा साधनं वदन्ति, तच्छास्त्रस्यापि प्रामाण्यप्रसङ्गः, तत्राप्येकदेशसंवादोपपत्तेः। तथा जिनबुद्धाद्यागमानां च प्रामाण्यप्रसङ्गः; तदेकदेशसंवादसद्भावात्। तस्मात् (१) येषामेव वेदवाक्यानां प्रत्यक्षेणानुमानेन वा संवादः सम्भवति तेषामेव प्रामाण्यम्। (२) येषां तु विसंवादस्तेषामप्रामाण्यम्। पूर्वपक्षवाक्यानि च तानि द्रष्टव्यानि तेनाप्तोक्तत्वमपि न विरुध्यते। (३) येषां तु सप्तद्वीपाद्यर्थानां न संवादो नापि विसंवादः, तेषां न प्रामाण्यनिश्चयो नाऽप्रामाण्यनिश्चयः, सन्देह एव तत्रेति। एवं त्रिधा वेदवाक्यानि द्रष्टव्यानि। अन्यथा "अङ्गुष्ठमात्रः पुरुषः" (म० ना० उ० ५।६), "एकमेवेदं न द्वितीयम्" (छां० उ० ६।२।१), "अजामेकाम्" (ना० पू० ता० उ० ५।५) इत्यादिवाक्यानामपि प्रामाण्यप्रसङ्गः, ततश्चादित्यवर्णः पुरुषो रूपादिरहितश्च; व्यापकोऽङ्गुष्ठमात्रश्च, अद्वितीयोऽनेकश्चेत्यादिव्याघातः स्यादिति। तस्मात्प्रत्यक्षानुमानसंवादादेव प्रामाण्यव्यवस्थापनं युक्तम्। तत्र पशुकामेष्ट्यादीनामनुष्ठानोत्तरकालं तावत्पश्वादयः प्राप्यन्ते, ततस्तदनुष्ठानाद्धर्मो भवतीत्यनुमीयते। कथम्? यजमानगुणेनाकृष्टा पश्वादयः, यजमानं प्रति उपसर्पणवत्त्वाद्, भक्तसूपादिवत्। [1]परिशेषाद् धर्मसिद्धिः। तत्सिद्धौ चाग्निहोत्रादीनामपि धर्मसाधनत्वमनुमीयते।

---

१. परिशेषात्। कोयं यजमानगुणः येनाकृष्टाः पशवः तमुपसर्पन्ति? अन्येषां गुणानां व्यभिचारित्वेन, परिशेषात् पुण्यात्मा धर्मः स इति सिध्यतीत्यर्थः।

तथा हि—अग्निहोत्राचरणं धर्मनिष्पादकं, श्रद्धोपगृहीतत्वे सत्याचरणत्वात्, पशुकामेष्ट्याद्याचरणवदिति ।

## ॐ तन्निरासः ॐ

अत्रोच्यते—यत्तावदुक्तम्—ठकशास्त्रादेरप्येकदेशसंवादोपपत्तेः प्रामाण्यं प्रसज्यत इति, तन्न; अभिप्रायापरिज्ञानात्—न ब्रूम एकदेशसंवादमात्रेण सर्वस्य प्रामाण्यम्, किं तर्हि ? यत्रैकदेशसंवादस्तत्प्रणेतुरतीन्द्रियार्थद्रष्टृत्वं पूर्वोक्तेन न्यायेन व्यवस्थापयति । तस्याप्रामाण्यकारणभावात् प्रामाण्यमित्युक्तम् । न चान्नभक्षणादिवाक्यसंवादोऽपि अतीन्द्रियार्थद्रष्टृत्वं साधयति, सामर्थ्याभावादतिप्रसङ्गाच्च ।

ननु च [1]चुलिकमासादिज्ञानं दिव्यं तदुपदेष्टुरतीन्द्रियार्थद्रष्टृत्वं ज्ञापयति, सत्यम्; किन्तु मूलोपदेष्टुरेवातीन्द्रियार्थद्रष्टृत्वं ज्ञापयति नोपदेष्टृमात्रस्य, अतिप्रसङ्गात् । मूलोपदेष्टा च वेदप्रणेतैव तद्विज्ञानं वेदाङ्गे ज्योतिर्ज्ञानेन्तर्भवति चातुर्लक्ष्यं हि ज्योतिर्ज्ञानं, तत्र हि द्रव्यायुःस्त्रीपुरुषलक्षणचौरादिगणितम् सर्वमस्ति । तेन ततोऽर्थं विज्ञाय शब्दान्तरेण चुलिकमासादिज्ञानमुपदिश्य रागाद्युपहतेनैव दृष्टार्थं ठकशास्त्रादि प्रणीतम् ।

जिनादिभिस्तु दृष्टार्थेन वञ्चितैरनाद्यविद्याभ्यासजनितेन मिथ्याभिमानेन स्वपक्षरागेण च वेदवेदाङ्गेभ्योऽर्थं विज्ञाय स्वदर्शने प्रत्ययोत्पादनार्थं गारुडादिकं च भाषान्तरेणोपदिष्टमिति । विपर्ययो न कस्मादिति चेत्, न; तदप्रतिपादितस्यापि शान्तिपुष्ट्यभिचारादिफलस्य यज्ञप्रकारस्य ज्योतिर्ज्ञानान्तरस्य चेहोपदिष्टस्य संवादोपलम्भात् । जिनबुद्धाद्यागमेषु च यानि वैदिकसिद्धान्ताद्यनुपादिष्टार्थाभिधायीनि वाक्यानि, तेषां विसंवाद एवेति कुतस्तत्प्रणेतॄणां सर्वज्ञत्वं निश्चीयते ?

## ॐ वेदस्य सर्वज्ञप्रणीतत्वम् ॐ

वेदस्तु यदि असर्वज्ञप्रणीतः स्यात्तदा जिनादिप्रणीतागमवत् पुराणाद्यागमेष्वपरिमितेषु न प्रमाणत्वेन प्रशस्येत । लोकेऽपि देशान्तरस्थितार्थवार्त्तायास्तद्वक्तृगुणदोषसन्देहेपि प्रभूतवार्तासंवादात् प्रामाण्यं दृष्टं कण्ठस्थत्वानुप-

---

१. चुलिकमासादिज्ञानम्—चुलिकं दिव्यविशेष इति प्राचीनटिप्पणम् । मासादिकालकलनमकलङ्केनैवमङ्कितम्—'सप्तप्राणाः स्तोकः, सप्तस्तोका लवः, सप्तसप्ततिर्लवा मुहूर्त्तः, त्रिंशन्मुहूर्ता अहोरात्रः, पञ्चदशाहोरात्राः पक्षः, द्वौ पक्षौ मासः, द्वौ मासावृतुः' ( त० वा० ३।३८ ) ।

पत्तिप्रसंगाच्च। न ह्यसर्वज्ञः पुस्तकनिरपेक्षो ग्रन्थानामनेकसहस्राणि प्रणेतुं शक्नोति। प्रणीतानि च यद्यप्रमाणानि, तदा प्रतिराष्ट्रमसंख्यातैः पुरुषैर्न गृह्येरन्। क्लेशभूयस्त्वाद् दृष्टार्थानुशयानुपलब्धेश्च।

## ❀ जैनाद्यागमानां वेदवैषम्यम् ❀

ननु जिनाद्यागमोपि दृष्टं प्रयोजनं विनापि बहुभिर्गृहीतस्तेन तस्यापि प्रामाण्यमेष्टव्यम्, न; अन्यथा तस्य ग्रहणात्। अध्ययनाध्यापने महाभाग्यं श्रुत्वा शूद्राः केचिदध्ययनाद्युत्सुकाः संजातास्ते चाऽनधिकारित्वेन वेदानध्येतुमलभमाना जिनादिना ख्यातिमिच्छता स्वप्रणीतागमाध्ययने फलातिशयमुपवर्ण्य प्रवर्तिताः, तैस्त्वन्ये तथाविधाः प्रवर्तिताः, तैरप्यन्ये ब्राह्मणादयोपि केचन मन्दप्रज्ञा दारिद्र्यदुःखसन्तप्ताश्च दुःखक्षयोपदेशेन प्रतार्य प्रवर्तिताः—इत्येवं तदागमः प्रचयं गतः, न; वेदवद्वनस्थैरपि सर्वागमाबहिष्कृतैश्च कण्ठस्थः क्रियते, नापि ब्राह्मणेनैवाध्याप्यमानस्त्रिभिरेव वर्णैरभिधीयमानः प्रचयं गतः। तस्मान्न वेदवज्जिनाद्यागमानामपि प्रामाण्यं प्रसज्यते। यच्चोक्तं त्रिधा वेदवाक्यानि—प्रमाणान्यप्रमाणानि सन्दिग्धप्रामाण्यानीति, तदनुपपन्नम्; असर्वज्ञप्रणीतानां हि वाक्यानां कदाचिदप्रामाण्यमपि सम्भाव्यते, सर्वज्ञप्रणीतानां त्वप्रामाण्यकारणाभावात्तदनुपपत्तिः। तथाचोक्तम्—

रागाज्ञानादिभिर्दोषैर्ग्रस्तत्वादनृतं वदेत्।
ते चेश्वरे न विद्यन्ते स ब्रूयात् कथमन्यथा॥

पूर्वपक्षार्थत्वादित्यप्ययुक्तम्, तद्दूषणसिद्धान्तयोरनभिधाने ह्यागमस्य पूर्वपक्षार्थाभिधानानुपपत्तेः। अन्यथा हि श्रोतॄणां संमोहजनकत्वेन तत्प्रणेतुरनाप्तत्वप्रसङ्गः। किं च युक्तिशास्त्रेषु पूर्वपक्षोपन्यासः क्रियते। वेदस्त्वाज्ञासिद्धत्वेनोपदिष्टः पित्रादिवाक्यवत्, न ह्यत्र युक्त्या कश्चिदर्थः प्रतिपादितस्तस्माच्छुष्कतर्काभ्यासजनितभ्रमस्याऽयमुल्लापः—पूर्वपक्षार्थानि कानिचिद्वेदवाक्यानीति।

## ❀ विरुद्धार्थादिवेदवाक्यप्रामाण्यप्रकारः ❀

कथं तर्हि विरुद्धार्थानां वाक्यानां प्रामाण्यम्? न; विरुद्धार्थत्वाभावात्। यो हि वेदवाक्यानां तत्त्वतोऽर्थं न विवेचयति, तस्यैव विरोधः प्रतिभात्युदितादिवाक्यवत्। तद्यथा—"उदिते होतव्यम्", "अनुदिते होतव्यम्" "समयाध्युषिते होतव्यम्"—इत्येवं विधाय तत्प्रतिषेधार्थं निन्दां करोति [1]"श्यामो

१. शां० ब्रा० २।८-९। श्यामशबलौ द्वौ सारमेयौ यमस्याम्नातौ—

वास्याहुतिमभ्यवहरति, य उदिते जुहोति" । "शवलो वाऽस्याहुतिमभ्यवहरति, योऽनुदिते जुहोति" "श्यामशवलौ वास्याहुतिमभ्यवहरतो, यः समयाध्युषिते जुहोति" इति । अस्य विरोधं परिहरन् आह—"अभ्युपेत्य कालभेदं दोषवचनात्" (न्या० सू० २।१।५९) इति । एतदुक्तं भवति—यो येन कालोऽभ्युपगतस्तस्य तत्कालमतिक्रम्याऽन्यत्र कालभेदे जुह्वतोऽयं दोष उक्त इति । तथान्येषामप्यागमवाक्यानामविरोधेन व्याख्यानं कर्तव्यम् । न ह्यन्यान्यपि शास्त्राणि कुबुद्धिभिर्व्याख्यातानि यथाभिमतमर्थं ज्ञापयन्ति ।

तत्राद्वैताभिधायीनि वाक्यानि परमात्मार्थत्वेन प्रमाणानि प्रकृत्यभिधाय्यजामेकामित्यादि वाक्यं परमाण्वर्थत्वात्प्रमाणम् । परमाणवो हि लोहितादिरूपयुक्ता अजन्मानः सदृशमसदृशं च कार्यं स्थावरजंगमाद्यनन्तभेदं जनयन्ति । समवायि कारणं प्रकृतिस्तदपेक्षया स्त्रीलिङ्गत्वं समुदायापेक्षया त्वेकामित्युक्तम्, अन्यथा प्रधानस्यापि त्रिगुणत्वादेकत्वानुपपत्तिः । तथांगुष्ठमात्र इत्यादेरप्यातिवाहिकतैजसशरीराभिधायित्वेन प्रमाणत्वं, स्थूलेपि शरीरे पुरुषशब्दः प्रवृत्तो दृष्टः किमुत तस्मिन्नन्तरङ्गे । अथवा परमात्मैवात्यन्तनिर्मलत्वादादित्यवर्ण इत्युपचर्यते । अनंगुष्ठमात्रमप्यंगुष्ठमात्रे हृत्प्रदेशेऽन्तःकरणसंयमाद्योगिभिरुपलभ्यमानत्वेनोपचर्यत इत्येवमन्येषामपि वाक्यानामविरोधेन यत्नतोऽर्थः प्रतिपत्तव्यो न तु प्रज्ञादारिद्र्यादालस्याद्वा यथार्थप्रतिपत्त्यशक्तावप्रामाण्यं प्रतिपत्तव्यमिति ।

## * आगमप्रामाण्ये प्रत्यक्षादिसंवादानपेक्षा *

यत्पुनरेतत्प्रत्यक्षानुमानसंवादेनैवागमस्य प्रामाण्यमिति, तदयुक्तम्; स्वर्गादृष्टविशेषदेवतादिप्रतिपादकागमस्य प्रामाण्याभावप्रसङ्गात् । न च सुखमात्रं स्वर्गः को हि बुद्धिमानुपनतं सुखं परिहृत्य जन्मान्तरभाविसुखमात्रार्थं तपश्चरणयज्ञादिषु महाप्रयासेषु प्रवर्तते ? यश्च प्रवृत्तिहेतुरागमदर्शितोऽनेकान्यब्दसहस्राणि यावन्नैरन्तर्येण सुखविशेषः, तत्र प्रत्यक्षानुमानाप्रवृत्तेः, संवादाभाव इत्यप्रवृत्तिरेव स्वर्गार्थिनां प्राप्ता ।

किं चादृष्टविशेषं प्रति साधनविशेषाभिधायिनः पवित्रापवित्रादिविशेषाभिधायिनश्चागमस्य न प्रत्यक्षानुमानसंवादोऽस्तीत्यप्रामाण्यप्रसङ्गः । तथाहि—

---

अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना यथा ।
अथा पितॄन्त्सुविदत्रां उपेहि यमेन ये सधमादं मदन्ति ॥
(ऋ० १०।१६।१०) ।

[1]पञ्चमहायज्ञादिकं गृहस्थस्य धर्म्मसाधनं, यतेस्त्वधर्म्मसाधनम्। किञ्चित् कस्यचित्पवित्रं तदेवान्यस्यापवित्रम्। हिंसादिकमपि क्वचिद्धर्मसाधनत्वेनोक्तम्, क्वचिदधर्म्मसाधनत्वेनेत्येवंविधे आगमविषयविभागेऽस्मदादीनां नैव प्रमाणान्तरं प्रवर्तत इति। श्रद्धोपगृहीतत्वे सत्याचरणत्वं सामान्यमात्रसाधकं यदि स्यात्, न च तदपि युक्तम्; यतः केनचिदनाप्तेन प्रतारितस्य कस्यचिद्-धर्मसाधनमपि श्रद्धोपगृहीतं सम्भवति। तस्यापि धर्मसाधनत्वे प्रतारकाप्रतारक-प्रणीतागमयोरविशेषः स्यान्न चैतदुपपन्नम्।

## ❋ दृष्टान्तसाधनस्य हेत्वाभासत्वम् ❋

यदपि दृष्टान्तसिद्ध्यर्थं साधनमुक्तम्—देवदत्तगुणेनाकृष्टाः पश्वादयो देवदत्तं प्रत्युपसर्पणत्वादिति, नैतदपि युक्तम्। सन्दिग्धानैकान्तिकत्वात्। अन्यगुण-प्रेरितस्याप्यन्याभिमुखमुपसर्पणं दृष्टम्, न चात्र बाधकं किञ्चिदस्ति, येनान्य-गुणप्रेरितानां पश्वादीनां देवदत्तं प्रत्युपसर्पणं न स्यात्।

## ❋ धर्मसाधनत्वानुपपत्तिः ❋

अपि च धर्म्मसाधनत्वं कुतः प्रतिपत्तव्यम्? सुखसाधनविशेषो हि धर्म्मः प्रसिद्धः, तन्न ज्ञायते धर्मेणाधर्म्मेण वाकृष्टाः। किं चात एव दशमो गुणः सिध्यत्विति। धर्माकृष्टत्वसिद्धावपि न तदिष्टेस्तद्धर्म्मोत्पादकत्वसिद्धिः, जन्मान्तरकृतस्य धर्मस्याधर्मसाधनापेक्षस्यापि फलदातृत्वसम्भवात्, यथाभिचाराकर्षणादिकर्मानुष्ठायिनां डाकिनीतन्त्रादिषु क्रौर्यस्तेयमैथुनाद्यतिनिन्दित-कर्मोपेतव्रतानुष्ठायिनां धनेश्वरादेशेन तच्छत्रुं ब्राह्मणादिकमपि विश्वास्य घातयतां चौर्यादिकर्मकारिणां चेति। तथान्येषामपि धर्माधर्मकारणविशेषसाधनायोक्तानां हेतूनां सन्दिग्धानैकान्तिकत्वं सन्दिग्धकालातीतत्वं वा द्रष्टव्यम्। न हि प्रतिपक्ष-बाधकमन्तरेण विपक्षादर्शनमात्राद्धेतोर्व्याप्तिः सिध्यति, अतिप्रसङ्गात्। तथा हि—स श्यामस्तत्पुत्रत्वात् परिदृष्टतत्पुत्रवत्, पक्वानि तानि फलान्येतच्छाखा-प्रभवत्वादुपभुक्तफलवत्, 'लोहलेख्यो वज्रमणिः पार्थिवत्वात्'—इत्येवमादीनामपि हेतुत्वं स्यात्।

---

१. पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः।
कण्डनी चोदकुम्भश्च वध्यते यास्तु वाहयन्॥
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः।
पञ्च क्लृप्ता महायज्ञा प्रत्यहं गृहमेधिनाम्॥ (मनु० ३।६८-६९)

धर्मिहेतुदृष्टान्तग्राहकैरेव प्रमाणैर्विरोधात्कालातीतो हेतुर्भवति, तदभावे सम्यग्घेतुरेवेत्ययमपि मिथ्याभिनिवेशः, तत्पुत्रत्वादीनामपि सम्यक्त्वप्रसङ्गात्। न हि तत्पुत्रत्वादीनां धर्म्याद्यन्यतमग्राहकप्रमाणेन बाधोऽस्ति, किन्तूत्तरकालभाविना तत्पुत्ररूपदर्शनेन, तत्फलास्वादनेन, लोहव्यापाराफलदर्शनेन, आप्तवचनेन वेति ।

## ❀ सर्वथाऽबाधितत्वावगमासम्भवः ❀

किं च कस्यापि बाधो नास्तीत्यसर्वविदावगन्तुमशक्यम्, तत्प्रत्यक्षदर्शिनां च बाधा भविष्यतीत्यतोऽसर्वविद्बाधानुत्पादेऽपि सन्दिग्धानैकान्तिकत्वं सन्दिग्धकालात्ययापदिष्टत्वं वा हेतोर्दूषणं न निवर्तते । न चानिश्चितमबाधितविषयत्वं गमकांगं हेतुरूपत्वात्पक्षधर्मत्वादिवत्तस्मादबाधितविषयत्वनिश्चये साध्याभावसाधनयोर्विरोधः प्रदर्शनीयः सम्भावितागमसंवादो वाऽन्यथाऽनुमानमात्रं स्यादिति ।

## ❀ सप्तलोकादिवाक्यानां सन्दिग्धार्थत्वनिषेधः ❀

यत्पुनरेतत्सप्तलोकादिप्रतिपादकानामागमानां साधकबाधकप्रमाणाभावादागमान्तराणामुभयथा दर्शनाच्च सन्दिग्धार्थत्वमिति, तदयुक्तम्; इन्द्रियादिज्ञानस्याप्युभयथा दर्शनेन साधकबाधकप्रमाणाभावेन च सन्दिग्धार्थत्वप्रसङ्गात्। विशेषदर्शनात्तत्र सन्देहनिवृत्तिरिति चेत्, न; विशेषदर्शनस्याप्युभयथा दृष्टत्वात्, साधकबाधकयोरप्युभयथा दृष्टत्वात्सन्दिग्धार्थत्वमनवस्था वा स्यात्। अथ यादृशेन चक्षुरादिना लिङ्गेन वा जनितं निश्चयज्ञानं प्रवृत्तिसामर्थ्यादव्यभिचारीति निश्चितम्, तादृशेनैव चक्षुरादिना लिङ्गेन वोत्पादितं निश्चयज्ञानं भ्रान्तिनिमित्तानुपलम्भमात्रादेव प्रमाणफलत्वेन व्यवस्थाप्यते। अन्यस्योभयथा दर्शनेऽपि न तस्य सन्दिग्धार्थत्वं, नाप्यनवस्थाप्रसंग इति। यद्येवमन्येषामागमानामुभयथा दर्शनेऽपि पूर्वोत्तराविरोधेन व्याख्यातैर्वेदवाक्यैरुत्पादितस्य निश्चयज्ञानस्य प्रमाणान्तरसंवादाभावेपि सन्दिग्धार्थत्वमयुक्तम्, मिथ्यात्वनिमित्तस्य लेशतोऽप्यनुपलम्भाद्यथावद् व्याख्यातवेदवाक्यजनितज्ञानस्य दृष्टेष्वर्थेषु सम्यक्त्वेनावधारितस्य दृष्टान्ताभावादिति ।

## ❀ मीमांसकानां वेदापौरुषेयता ❀

अन्ये त्वपौरुषेयत्वेन वेदानां प्रामाण्यं वर्णयन्ति । पौरुषेयत्वे हि दुर्लभः प्रामाण्यनिश्चयः, पुरुषाणां दोषाश्रयत्वेन तत्संशयनिवृत्तेः । यतः—

शब्दे दोषोद्भवस्तावद्वक्त्रधीन इति स्थितिः ।
तदभावः क्वचित्सिद्धो गुणवद्वक्तृकत्वतः ॥

( श्लो० वा० २।६२ )

वेदे तु गुणवान् वक्ता दुर्ज्ञानस्तेन दोषाभावोप्यशक्यनिश्चयः, कर्तुरभावे तु सुखेनैव निश्चीयते । तथाहि—

दोषाः सन्ति न सन्तीति पौरुषेयेषु युज्यते ।
वेदे कर्तुरभावाद्धि दोषशंकैव नास्त्यतः ॥

( त० सं० का० २६५ )

पुरुषो हि दोषानामाश्रयस्तदभावे कुतो दोषाशंकेति ।

तदयुक्तम्; यतः—

## * तन्निरासः *

शब्दे प्रमाणता तावद्वक्त्रधीनैव निश्चिता ।
[1]तदभावोऽपि सर्वत्र गुणवद्वक्त्रभावतः ॥

ततश्च—

प्रामाण्यं विद्यते नेति पौरुषेयेषु युज्यते ।
वेदे कर्तुरभावे वस्तद्वार्तापि हि दुर्लभा ॥

यथैव हि रागादिपरिगतः पुरुषो मृषावादी दृष्टः, तद्वत्परिज्ञानदयादियुक्तः सत्यवादी, ततश्च यथा शब्दे वक्तृवशान्मिथ्यार्थता, तथा सत्यार्थतापीति स निवर्तमानः [2]तामपि निवर्तयतीत्यानर्थक्यमेव स्यात् । वक्तृगुणास्तद्दोषानेवापघ्नन्ति प्रामाण्यं तु स्वत एवेति चेत्, न; स्वतः प्रामाण्यस्य प्रागेव निरस्तत्वात् । किं चान्वयव्यतिरेकाभ्यां सिद्धस्य प्रामाण्यं प्रति गुणानां हेतुभावस्यान्यथात्वं कल्पयितुमयुक्तम्, अतिप्रसङ्गात् । अपि च वक्तृदोषास्तद्-

---

१. तदभावः=तस्याः प्रमाणताया अभावः । एवमेवाह धर्मकीर्तिः—

गिरां सत्यत्वहेतूनां गुणानां पुरुषाश्रयात् ।
अपौरुषेयं मिथ्यार्थं किं नेत्थं वै प्रचक्षते ॥ ( प्र० वा० १।२२७ ) ।

जयराशिरपि—"अथ पुरुषव्यावृत्त्या तद्दोषव्यावृत्तिनिबन्धनं प्रामाण्यम्, तद्व्यावृत्त्या तद्दोषव्यावृत्तिनिबन्धनमप्रामाण्यं किन्नेष्यते ?" ( तत्त्व० सिं० पृ० ११८ ) ।

२. ताम्—मृषावादितां सत्यवादितां च ।

गुणानेवापघ्नन्त्यप्रामाण्यं तु स्वत एवेत्येवमपि [1]ब्रुवतो न मुखं वक्रीभवति।

## ❀ संकेतापेक्षणे व्यर्थैवापौरुषेयता ❀

अपि चापौरुषेयोऽप्यवश्यं पुरुषकृतं समयमपेक्ष्यार्थं प्रतिपादयत्यन्यथा हि बालगोपालादीनामपि वेदपाठश्रवणमात्रात् तदर्थप्रतीतिः स्यात्। न चासंकेतिताः शब्दाः क्वचिदप्यर्थमभिदधाना दृष्टाः। संकेतश्च पुरुषेण यद्यनाप्तेन कृतः, तदा तमपेक्ष्य वेदस्यार्थमभिदधतोऽप्रामाण्यमेव प्रसक्तम्। आप्तेन कृतश्चेन्नन्वेवमाप्तप्रामाण्यादेव प्रामाण्यं वेदस्याभ्युपगतं भवति। ततश्च व्यर्थमपौरुषेयत्वोपवर्णनं पुरुषविशेषप्रतिषेधविरोधश्च।

## ❀ सम्बन्धापेक्षणेऽपि स एव दोषः ❀

सम्बन्धबलेन शब्दाः संकेतानपेक्षिणोऽर्थमभिदधतीति चेत्, सम्बन्धोप्यनित्यः स्यात्? नित्यो वेति? अनित्यत्वे, संकेतवद्दोषः। नित्यत्वेपि सर्वेषां वेदपाठश्रोतॄणां तदर्थप्रतिपत्तिप्रसङ्गः। व्युत्पत्त्यपेक्षित्वादप्रसङ्ग इति चेत्, स्यान्मतम्—स्थितोऽस्य वाचकस्य वाच्येन सम्बन्धः संकेतस्तु तमेवाभिज्वलयति, यथा पितापुत्रयोरवस्थित एव सम्बन्धः संकेतेनाभिद्योत्यत इति, न; प्रमाणाभावात्। यथा पितापुत्रयोर्जन्यजनकलक्षणः सम्बन्धोऽन्वयव्यतिरेकाभ्यां प्रतीयते, नैवं शब्दार्थयोः सम्बन्धविशेषास्तित्वे प्रमाणमस्ति।

## ❀ शब्दार्थयोः स्वाभाविकसम्बन्धस्थापना ❀

न नास्ति, व्यवस्थादर्शनात्। शब्द एव वाचकोऽर्थ एव वाच्य इत्येषा व्यवस्था नासति सम्बन्धे युक्ता। संकेतकारितैवेति चेत्, न; विपर्ययेणापि वाच्यवाचकभावप्रसङ्गात्—अस्य शब्दस्यायमर्थो वाचकोऽस्यार्थस्य चायं शब्दोऽभिधेय इत्येवमपि हि संकेतः कर्तुं शक्यते।

अनवस्थाप्रसङ्गाच्च—यदि संकेतबलेनैव शब्दोऽर्थं प्रतिपादयति, स संकेतो नाऽवाचकेन शब्देन कर्तुं शक्यते, संकेतहेतोरपि शब्दस्य वाचकत्वं

---

१. ब्रुवतो बौद्धादेरिति शेषः। ब्रवीति शान्तरक्षितस्तथैव—

तस्मादेव च ते न्यायादप्रामाण्यमपि स्वतः।
प्रसक्तं शक्यते वक्तुं यस्मात्तत्राप्यदः स्फुटम्॥ (त० सं० ३०६६)।

जयराशिरपि—"अथ पुरुषगतगुणदोषव्यावृत्तौ निसर्गगुणानुवेधेन प्रामाण्यमिष्यते, पुरुषगुणदोषव्यावृत्तौ निसर्गदोषानुवेधेनाप्रामाण्यं किन्न गीयते" (तत्त्व० सि० पृ० ११८)।

संकेतान्तरसामर्थ्यादित्यनवस्थाप्रसङ्गः, तस्माद्स्तिशब्दार्थयोः [1]स्वाभाविकः सम्बन्ध इति।

## ❀ शब्दार्थयोः स्वाभाविकसम्बन्धनिरासः ❀

अत्रोच्यते—यत्तावद्व्यवस्थादर्शनादिति, तन्न; व्यवस्थाया शक्तिनिमित्तत्वात्। या एषां शब्दानामभिधात्री शक्तिः, साऽर्थेषु नास्तीति तेनेयं व्यवस्था, अन्यथा हि सर्वेषां कारकाणां व्यञ्जकानां च व्यवस्थादर्शनात् स्वकार्यैर्व्यंग्यैश्च स्वाभाविकः सम्बन्धः प्रसज्यते।

यदप्युक्तम्—अनवस्थाप्रसङ्गादिति, तदप्ययुक्तम्। नियमानभ्युपगमात्—नायं नियमोऽभ्युपगम्यते—वाचकशब्देनैव संकेतः क्रियते, किन्त्वन्यथापि—यथाऽङ्गुल्यादिना निर्दिश्य हस्तेन संस्पृश्य वाऽयं गौरिति संकेतं करोति। वृद्धव्यवहारेषु चावापोद्वापाभ्यां पराभिप्रायस्थं संकेतं प्रतिपद्यन्ते। यथा कर्णाटादिव्यवहारेष्वार्य इति संबन्धव्युत्पत्त्यर्थं संकेतापेक्षणेप्ययं न्यायोवश्यमभ्युपगन्तव्यः। तस्मात्समयबलेनैव शब्दानां वाचकत्वान्न स्वाभाविकः सम्बन्धोऽस्ति।

## ❀ देशविशेषेऽनियमादपि न स्वाभाविकः सम्बन्धः ❀

देशविशेषे चानियमात्—यथा[2] चोरशब्दस्तस्करमार्येष्वभिधत्ते, द्रविडेष्वोदनमिति। स्वाभाविकसम्बन्धे त्वनियमानुपपत्तिः, न हि धूमः क्वचिदग्निं प्रतिपादयति क्वचिज्जलमिति। किं च यत्र यत्रार्थे पुरुषेण शब्दः संकेत्यते तं तमर्थं प्रतिपादयन्नुपलभ्यते। स्वाभाविकसम्बन्धे तु धूमादिवत् पुरुषेच्छानुविधानानुपपत्तिः स्यात्। पुत्रादिषु च स्वेच्छया नामकरणं दृश्यते। तस्मादवस्थित एव सम्बन्धः। संकेतेनावद्योत्यत इत्यप्ययुक्तम्। वैदिकशब्दानामेवार्थैः सह स्वाभाविकः सम्बन्ध इति चेत्, न; प्रमाणाभावात्। न चात्र विशेषोऽस्ति, येनैकत्र शब्दार्थयोः स्वाभाविकः सम्बन्धोऽन्यत्र सांकेतिक इति। नामाख्यातोपसर्गादीनां चोभयत्र विशेषात्। ननु च सांकेतिकत्वे शब्दार्थसम्बन्धस्य सर्वत्र च व्यवहारहेतुत्वं न स्यात्, स्वपुत्रा-

---

१. स्वाभाविकः=नित्यः। तथा च सूत्रम्—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः," (जै० सू० १।१।५)। "औत्पत्तिक इति नित्यं ब्रूमः"—इति तत्र शावरं भाष्यम्।

२. 'चोर'शब्दः। तन्त्रवार्तिकेऽप्युदाहृतम्—"तद्यथौदनं चोरित्युक्ते चोरपदवाच्यं कल्पयन्ति" (तं० वा० पृ० २२५)।

दिषु नरसिंहादिसंकेतवद्, घृतादिषु भवामित्रादिसंकेतवच्चेति न, असिद्धत्वात्—नैव सर्वदा सर्वत्र व्यवहारः कश्चिदस्ति म्लेच्छादिव्यवहाराणामन्योऽन्यत्राऽप्रसिद्धत्वात्।

## * व्यवहारस्य सादित्वान्न स्वाभाविकः सम्बन्धः *

आदिमत्त्वाच्च सर्वव्यवहाराणां, नन्द-विक्रमादित्य-श्रीहर्षादिव्यवहारवत्। अनादित्वे तु दृष्टान्तो नास्ति। आदिमत्त्वेपि समयकारप्रभावादन्यस्माद्वा कुतश्चिन्निमित्ताद् भूयःस्वपि देशादिषु कश्चिद् व्यवहारः प्रसिद्धिं गतः कश्चिन्नेति, यथा—रामरावणयुधिष्ठिरादिनामान्येव प्रसिद्धार्थान्यद्यापि व्यवहरन्ति न सर्वपुरुषनामानि। निघण्टावुक्तानामपि पर्यायनाम्नां किंचिद्बहुष्वपि शास्त्रेषु लोकेषु च प्रसिद्धार्थं किंचिन्नेति। नैतावता स्वाभाविकसांकेतिकसम्बन्धभेदः।

किं च संकेतस्य यद्यसामर्थ्यं स्यात् तदान्यः कल्पयते। यदा त्वेकत्रापि संकेतस्य सामर्थ्यमिष्टं तदान्यत्रापि समयादेव शब्दानां वाचकत्वं भविष्यतीति व्यर्था[1] सम्बन्धान्तरकल्पना। नह्यत्र विशेषोऽस्ति येन क्वचित् समयस्य सामर्थ्यं क्वचित् सम्बन्धान्तरस्येति।

## * स्वाभाविके सम्बन्धेऽर्थव्यवस्थाभावः *

सर्वत्रापि स्वाभाविकसम्बन्धस्यैव सामर्थ्ये धूमादिवद्यथाभिप्रेतार्थेषु शब्दानां प्रवृत्तिर्न स्यादित्युक्तम्। प्रत्येकं शब्दस्य सर्वैरर्थैः सम्बन्धोऽस्तीति चेत्, यद्येवं गोशब्दादेव सर्वार्थप्रतिपत्तिप्रसंगः[2]। समयापेक्षित्वादप्रसंग इति चेत्, समय एव तर्हि अस्तु, किं सिद्धोपस्थायिना स्वाभाविकसम्बन्धेनाप्रमाणकेन कल्पितेनेति? अयोग्ये समयो न युक्त इति चेत्, ननु योग्यताप्युक्ता शब्दानामभिधानत्वम्, अर्थानां तु अभिधेयत्वमिति।

यदि च प्रत्येकं शब्दस्य सर्वैरर्थैः सम्बन्धोऽस्ति, स पुरुषकृतेन समयेन

---

१. सम्बन्धान्तरकल्पना=स्वाभाविकसम्बन्धकल्पना।
कीर्तिरप्यकीर्तयदेतं दोषम्—
गिरामेकार्थनियमे न स्यादर्थान्तरे गतिः।
अनेकार्थाभिसम्बन्धे विरुद्धव्यक्तिसम्भवः॥ ( प्र० वा० १।२३० )

२. तदुक्तं शबरस्वामिना—"कथं सम्बन्धा नास्ति? प्रत्यक्षस्य प्रमाणस्याभावात्, तत्पूर्वकत्वाच्चेतरेषाम्। ननु चिरवृत्तत्वात् प्रत्यक्षस्याविषयो भवेदिदानींतनानाम्, न हि चिरवृत्तः सन्न स्मर्येत" ( शा० भा० पृ० ५३ )।

नियमितोऽर्थविशेषप्रतीतिहेतुर्भवति; तदा वैदिकशब्दानां समयकारानभ्युपगमेऽर्थप्रतिपादकत्वं न स्यात्। अथ तत्रापि समयकारः कश्चिदस्ति, ततः पौरुषेयापौरुषेययोर्न्न कश्चिद्विशेषः। शंका च वेदेष्वनिवृत्ता—किं दोषवान् तत्र समयकारः? अथ गुणवानिति? ततश्चाप्रामाण्यशंकापि स्यादिति व्यर्थोऽपौरुषेयत्वप्रयासः।

## ❀ अपौरुषेयत्वे प्रमाणाभावः ❀

न चापौरुषेयत्वे प्रमाणं किंचिदस्ति। ननूक्तम्— कर्तुरस्मरणादिति, न; व्यधिकरणत्वात्। अथास्मर्यमाणकर्तृत्वादिति विवक्षितम्, तथापि दृष्टान्तो नास्ति—नित्यं हि न स्मर्यमाणकर्तृकं, नाप्यस्मर्यमाणकर्तृकं; किंत्वकर्तृकमेवेति। अकर्तृकत्वविवक्षायान्तु अस्मर्यमाणग्रहणं व्यर्थम्।

जीर्णारामकूपादिभिर्व्यभिचारश्च। [1] संप्रदायाविच्छेदे सतीति चेत्, तथाप्यसाधारणो हेतुः। न हि नित्यस्याकाशादेः सम्प्रदायः कश्चिदस्ति। प्रयोजनाभावेऽपि कर्तुरस्मरणं दृष्टम्—सन्ति हि अनेकानि अस्मर्यमाणकर्तृकानि श्लोकादीनि, येषां सम्प्रदायोऽपि न सिद्धः, न च तेषामपौरुषेयत्वं भवतापीष्यते।

[2]असिद्धोऽपि अयं हेतुः—पौराणिका हि ब्रह्मकर्तृकत्वं स्मरन्ति वक्त्रेभ्यो वेदाः तस्य विनिःसृता इति। "प्रतिमन्वतरं चैव श्रुतिरन्या विधीयते" इति। किं च "यो वै वेदाँश्च प्रहिणोति" (श्वेता० ६।१८) इत्यत्र वेदेनैव च भगवान् रुद्रः कर्ता प्रतिपादितः। किं च स्मृतिपुराणादिवदृषिनामांकिताः काण्वमाध्यन्दिनतैत्तिरीयादयः शाखाभेदाः कथमस्मर्यमाणकर्तृकाः? अथवा येन दृष्टा प्रकाशिता वा शाखा सा तन्नामाङ्किता, न तु तेन कृतेति[3], तदिदं व्यामूढ-

१. सम्प्रदायाविच्छेदः=शब्दार्थव्यवहर्तृपरम्परासम्प्रदायः, तस्याविच्छेदः। भणितं हि भाष्ये—"न च हिमवदादिषु कूपारामादिवदस्मरणं भवितुमर्हति, पुरुषवियोगो हि तेषु भवति, देशोत्सादेन कुलोत्सादेन वा। न च शब्दार्थव्यवहारवियोगः पुरुषाणामस्ति" (शा० भा० पृ० ५३)।

२. कीर्तिरप्यसिद्धतां वक्ति—
अपौरुषेयतापीष्टा कर्तृणामस्मृतेः किल।
सन्त्यस्याप्यनुवक्तार इति धिग् व्यापकं तमः॥ (प्र० वा० १।२४१)।

३. तथा च सूत्रमसृजत् जैमिनिर्मुनिः—"आख्या प्रवचनात्" (जै० सू० १।१।३०)। "प्रकर्षेण वचनमनन्यसाधारणं कठादिभिरनुष्ठितं स्यात्, तथापि हि समाख्यातारो भवन्ति"—इति तद्भाष्यम्।

भाषितम् । तथा हि—यदि तावदुत्सन्ना शाखा तेन दृष्टा, तदा सम्प्रदायाविच्छेद-विरोधोऽतीन्द्रियार्थदृक्प्रतिक्षेपविरोधश्च । अथानुत्सन्नैव सम्प्रदायेन दृष्टा, तदा यावद्भिः उपाध्यायैः सा दृष्टा प्रकाशिता च तावतां नामभिरंकिता स्यात् । किं च बुद्धाद्यागमोऽपि बुद्धादिभिर्दृष्टः प्रकाशितो वा, न तु पौरुषेय इत्युक्ते किमुत्तरम् ? अभ्युपगमविरोध इति चेत्, पौरुषेयत्वमेवाह तस्य कथमभ्युपगम-विरोधः ? न चाभ्युपगमवशेन वस्तुव्यवस्थितिः, किं तर्हि ? प्रमाणवशेन । न चात्र विशेषकं प्रमाणमस्ति, येन वेदेषु श्रूयमाणोपि कर्ता मिथ्याऽन्यथा वा कल्प्यते, न बुद्धाद्यागमेष्विति ।

एतेन [1]वेदाध्ययनमध्ययनान्तरपूर्वकं वेदाध्ययनत्वादिदानींतनाध्ययनवदि-त्यादि निरस्तम्, बुद्धाद्यागमाध्ययनेपि [2]तुल्यत्वात् ।

## ❀ अपौरुषेयत्वे परिशेषप्रमाणनिरासः ❀

यदप्यपौरुषेयत्वे वेदस्य परिशेषतः प्रामाण्यमित्युक्तम्—[3]न तावत् अनुत्पत्तिलक्षणमप्रामाण्यं, ज्ञानोत्पत्तिदर्शनात् । नापि संशयलक्षणं 'किं जुहुयाम् ? न वा ?' इत्येवंप्रकारसंशयाजननात् । नापि विपर्ययलक्षणम्, देशान्त-रादिष्वबाध्यमानत्वात् । न चान्यदप्रामाण्यलक्षणमस्ति, यतो "अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः" इति । "सहस्रशीर्षा पुरुषः" ( ऋ० सं० १०।९०।१) इत्यादेस्तु अर्थवादत्वान्न तदुपरोधेन विधिवाक्यानामप्यप्रामाण्यम् । [4]चोदनार्थे च प्रमाणान्तरवृत्तिर्निषिद्धा—धर्मं प्रति अनिमित्तं प्रत्यक्षं

---

१. वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाऽध्ययनं यथा ॥ (श्लो० वा० वाक्याधि० ३६६)

२. कीर्तिरप्यमुं दोषमाह—
म्लेच्छादिव्यवहाराणां नास्तिक्यवचसामपि ।
अनादित्वाद्भवेदेवं पूर्वसंस्कारसन्ततेः ॥ ( प्र० वा० १।२४७ )

३. "विप्रतिषिद्धमिदमुच्यते—ब्रवीति वितथं चेति । ब्रवीतीत्युच्यते—अवबोध-यति । न च 'स्वर्गकामो यजेत'—इत्यतो वचनात् सन्दिग्धमवगम्यते । न चैष कालान्तरे पुरुषान्तरेऽवस्थान्तरे देशान्तरे वा विपर्येति" (शा० भा० पृ० १४) इति भाष्येऽप्रामाण्यं निराकृत्य प्रामाण्यं परिशेषितं दर्शितम् । अप्रामाण्यं त्रिविधमेव—
"अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः" ( श्लो० वा० २।५४ ) ।

४. चोदना—विधिवाक्यम्, उक्तं हि—"चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः" ( शा० भा० १।१।२ ) ।

"विद्यमानोपलम्भनत्वाद्" (जै० सू० १।१।४) इत्यादिना, तेनापौरुषेयत्वं वेदस्येति, तदप्ययुक्तम्; एवं हि स्वर्गकामः केशानुत्पाटयेत्, चैत्यवन्दनं कुर्यात् पुरीषादिभक्षणं ब्राह्मणादिवधं च कुर्यात् स्वर्गकामः[1] —इत्येवमादीनामपि चोदनानामपौरुषेयत्वं प्रामाण्यं च प्रतिपत्तव्यम्। जिनः सर्वज्ञ इत्यादीनां चार्थवादत्वं तुल्यन्यायत्वादिति।

ननु च पौरुषेयत्वे वेदानां मन्त्रत्वानुपपत्तिर्मन्त्रो हि जप्यमानः फलदायी दृष्टो न च तथा पौरुषेयं वाक्यं, तस्मान्न पौरुषेयो वेद इति, न; शैवसिद्धान्तादीनामप्यपौरुषेयत्वप्रसंगात्, तत्रापि हि मन्त्राः फलदायिनः सन्ति। तेऽपि वैदिका एवेति चेत्, न; शूद्राणामपि फलदायित्वाद्वेदेषु च शूद्राणामधिकारो नास्ति, अनधिकारिणश्च न मन्त्राः फलं प्रयच्छन्ति।

किं च प्राकृता अपि मन्त्राः फलदा दृश्यन्ते। न च वेदेषु प्राकृतः शब्दोऽस्ति तस्मात्प्राकृतमंत्रवद्वैदिका अपि मंत्राः पौरुषेया इति।

## ❀ पौरुषेयत्वेऽपि मन्त्राः सत्यसंकल्पैरेव क्रियन्ते ❀

नन्वेवं सर्वे पुरुषा मंत्रकारिणो भवेयुरिति, न; सर्वेषामतुल्यशक्तित्वात्। ये हि सत्यसंकल्पास्त एव मंत्रान् कर्तुं शक्नुवन्ति। सत्यसंकल्पता चेश्वरस्य स्वाभाविकैश्वर्यप्रभावात्। महर्षीणां चाहिंसाब्रह्मचर्यसत्यादिस्थैर्यप्रभावात् तपःप्रभृतिप्रभावाद्वा। स च इत्थं प्रभावो नेतरपुरुषाणामस्ति, तेन सर्वेषां न मंत्रकर्तृत्वम्।

## ❀ अनुपलब्धस्यापि कर्त्तुः कल्पना ❀

अपि च काव्यस्यापि पौरुषेयत्वे सर्वे पुरुषाः काव्यकृतः स्युर्न वा कश्चिदित्यपूर्वैषा वाचो युक्तिः। ननु काव्यं कुर्वाणः पुरुषो दृश्यते न मन्त्रं कुर्वन्निति, न; मंत्रकृतोऽपि अनुमानागमाभ्यां दर्शनात्। नचाऽसर्वविद्दर्शनं समस्तवस्तुव्यापि येन तन्निवृत्तावेवादृष्टस्याभावः स्यात्।

किं च भारतादीनि कुर्वाणोऽपि कश्चिदिदानीं न दृश्यते इति तेषामप्यपौरुषेयत्वप्रसंगः। कश्च मन्त्राणां विशेषो येन वर्णपदवाक्यात्मनोऽपि सन्तोऽकृतका इति? फलनिष्पादनं विशेष इति चेत्, न; पौरुषेयैरेव मुद्रामण्डलध्यानादिभिः फलनिष्पादनदर्शनात्।

---

१. कीर्तिरप्यकथयदित्थम्—

तेनाग्निहोत्रं जुहुयात् स्वर्गकाम इति श्रुता।

खादेच्छ्वमांसमित्येष नार्थ इति का प्रमा॥ (प्र० वा० १।३२०)

## ❀ कर्त्तुः समयादेव मन्त्राणां फलदातृत्वम् ❀

न च शब्दशक्तितः फलनिष्पत्तिः उपांशुमानसयोर्निष्फलत्वप्रसंगात्कालविकल्पाभावप्रसंगात्, विध्यभिसंधिविशेषानपेक्षित्वप्रसंगाच्च। पुरुषशक्तितः फलनिष्पत्तौ च नायं दोषः। तेन हि यत्र यथा समयः कृतस्तत्र तथा समयानुपालनात्फलं निष्पद्यते, [1]तत्समभिव्याहारसामर्थ्यात्। [2]स एव वा देवताविशेषस्तत्समयमनुपालयंस्तमनुगृह्णाति राजादिवत्, तदेवं मुद्रामण्डलादिवन्मन्त्रोऽपि समयमात्रमेव तथा चैकस्मादेव मन्त्रात् समयभेदानुविधानेन फलभेदोऽप्युपपद्यतेऽन्यथाऽग्नेर्दाहादिवदविशेषेण फलं स्यात्। कस्यचिदचिरात् सिद्धिरन्यस्य चिराद्, अपरस्य ब्रह्मचर्याद्यपेक्षणात्, कस्यचित्तत एवाऽनर्थ इत्येवं विकल्पो न स्यात्।

किं च समयाभिज्ञेनोच्चारितमेकैकमपि अक्षरं विषाप्नुत्यादिकार्यं कुर्वदुपलभ्यते, नेतरैः। स्वाभाविकत्वे त्वग्निवदतद्विद्प्रयोगेऽपि स्वकार्यं कुर्यात्तस्मान्न मंत्रोप्यपौरुषेय इति।

## ❀ वेदस्यापौरुषेयत्वे व्याख्यानानुपपत्तिः ❀

किं चापौरुषेयोऽपि वेदस्तावदव्याख्यातो नार्थं प्रतिपादयति, अदर्शनात्। व्याख्यानं च पौरुषेयं, पौरुषेयाच्च प्रतिपत्तौ कथं न दोषाशंका? पुरुषा हि विपरीतमपि शब्दार्थं व्याचक्षाणा दृश्यन्ते। संवादेन प्रामाण्याभ्युपगमे चापौरुषेयत्वकल्पनाऽनर्थिका वेदस्यापि तद्व्याख्यानवत्। प्रमाणान्तरसंवादादेव प्रामाण्योपपत्तेः। न च तद्व्याख्यानस्यापि नित्यत्वमनाद्यविच्छिन्नसम्प्रदायरूपत्वं वा वेदेष्वपि व्याख्यानभेदस्यात्यन्तविरुद्धस्य सांख्यवैशेषिकमीमांसकादिकृतस्य दर्शनात्। न च तत्र कस्यचिदेवानादित्वं न सर्वस्येत्यत्र प्रमाणं किंचिदस्ति। यदि चापौरुषेयो वेदः, तदा तच्छब्दानामन्य एवार्थाः स्युः, पौरुषेयाणामपि म्लेच्छार्यादिशब्दानामेकार्थत्वं नास्ति कुतोऽपौरुषेयशब्दानाम्? ततश्चाग्निहोत्रहवनादिशब्दानां श्वमांसखादनादयोऽन्य एवार्था भविष्यन्तीत्याशंका न निवर्तते। न च य एव लौकिकशब्दानामर्थाः, त एव मदीयानामित्येवं वेदः स्वयं प्रतिपादयति। जैमिनिप्रभृतयस्तु प्रतिपादयन्तोऽपि न प्रमाणीभवन्ति, पुरुषत्वात्। न हि जैमिनिरप्यतीन्द्रियार्थद्रष्टा भवद्भिरिष्यते, येन लौकिकवैदिकशब्दयोरेकार्थतां पश्यति। अदृष्टाभिदधतश्च वाक्यं कथं प्रमाणम्? प्रकरणादिभिरपि तस्यार्थो निश्चीयते यः शब्दः क्वचिदनेकेष्वप्यर्थेषु गृहीतसमयः

१. तत्समभिव्याहारः=समयकारसमयः।

२. स एव=समयकार एव।

**वाक्यानां हि नित्यत्वे प्रमाणाभावात्। अनित्यत्वे पुनर्वाक्यत्वाद्यनेकानुमानम्।**

---

स्यात्, न च वैदिकस्य शब्दस्य कस्याप्यर्थः क्वचित् प्रसिद्ध इति म्लेच्छ-शब्दवदनिश्चितार्थ एव प्रसज्येत्।

## ❀ पौरुषेयत्वे तु नायं दोषः ❀

पौरुषेयत्वे तु नायं दोषः। [1]स हि परानुजिघृक्षया प्रवृत्तः प्रसिद्धार्थैः संस्कृतशब्दैर्वेदान् रचयित्वा स्वयं व्याख्यातवानिदानींतनग्रन्थकारवत्। ततस्तत्सम्प्रदायेनान्येऽपि व्याचक्षीरन्। क्वचित्पदार्थविप्रतिपत्तौ च प्रकरणादिभिरप्यर्थानवधारयते शास्त्रान्तरवत्। प्रत्यक्षेऽपि लौकिकेनाग्न्यादिशब्देनाविशिष्टो वैदिकाग्न्यादिशब्दः कथं न तदर्थ इति चेत्, नन्वेवं सति पौरुषेयेनापि विशिष्टः कथं न पौरुषेय इति? किं च लौकिकस्याग्न्यादिशब्दस्यार्थवत्त्वं पौरुषेयत्वेन व्याप्तं, तत्रायं वैदिकोऽग्न्यादिशब्दः कथं पौरुषेयत्वं त्यक्त्वा तदर्थं ग्रहीतुं शक्नोति? उभयमयि हि गृह्णीयात् जह्याद्वोभयमपीति।

अपि च वाक्यस्य नित्यत्वं साध्यते? वर्णानां वेति? न तावद्वाक्यस्य, वर्णाव्यतिरेकात्—न हि वर्णव्यतिरिक्तं शब्दात्मकं वाक्यमस्ति। तथा च वर्णसमूहः पदं, पदसमूहो वाक्यम्—इत्येतत्प्रपंचेन [2]प्राक् प्रसाधितम्। समूहश्च वस्तुतो न भिद्यते, कल्पनया तु भेदः। तथापि कल्पनाया ज्ञानात्मकत्वादनित्यत्वमेव। न च वाक्यनित्यत्वे प्रमाणमस्ति, अनित्यत्वे तु वाक्यत्वाल्लौकिकवाक्यवदित्यनुमानम्। अथ वर्णा एव नित्यास्तेषां नित्यत्वेऽपि न प्रामाण्यसिद्धिः सर्वशास्त्राणां प्रामाण्यप्रसंगादसत्यवचनाभावप्रसंगाच्च। न ह्यन्य एव वैदिका वर्णाः, प्रत्यभिज्ञाया अप्रामाण्यप्रसंगात्।

## ❀ वैदिकवर्णानुपूर्व्या न नित्यत्वम् ❀

अथ वेदेषु वर्णानामानुपूर्वी नित्या नान्यत्रेति,[3] न; आनुपूर्व्या अपि शब्दात्मकत्वे वर्णेभ्योऽर्थान्तरत्वासम्भवात्। यदि च वर्णानुपूर्वी नित्या, तदाग्निरित्यकारगकारयोः पूर्वापरभावस्य नित्यत्वात् गच्छतीत्यादौ विपर्ययानुपपत्तिः[4]। न च वर्णबहुत्वमिष्यते, येन गच्छतीत्यादौ अन्यौ एवाकार-

---

१. सः=पुरुषः, महेश्वरादिः वेदकार इति यावत्।

२. प्राक्=वाक्यविचारे (पृ० २७४-७८)।

३. अन्यत्रेति=वेदातिरिक्ते शास्त्रादावित्यर्थः।

४. तदुक्तं कीर्तिनापि—

वर्णानुपूर्वी वाक्यं चेन्न वर्णानामभेदतः।

गकारावुच्येते तयोरेव च हिमवद्विन्ध्ययोरिवान्यथा क्रमो न सम्भवति। कृतकानामपि हेतुपरिणामनियमवतां न क्रमविपर्ययः कर्तुं शक्यते। यथा बीजाङ्कुरपत्रादीनामृतुसंवत्सरादीनां च कुत एव नित्याऽविचलितस्वभावानामिति ? नहि पूर्वावस्थात्यागमन्तरेणान्यथावस्था सम्भवति। त्यागे चानित्यत्वम्। अपि चेयमानुपूर्वी देशकृता वा स्याद्यथा पिपीलिकादीनां पंक्तौ, कालकृता वा यथा—वृद्धानुपूर्वी बीजांकुरादीनां च। सा द्विविधाप्यत्र न सम्भवति सर्ववर्णानां सर्वदेशव्यापित्वान्नित्यत्वाच्चाकाशात्मादिवत्। न चान्यथास्ति पौर्वापर्यम्। [1]अभिव्यक्तिपौर्वापर्याद् वर्णानां पौर्वापर्यमिति चेत्, न; मिथ्यात्वप्रसंगात्—उपाधिधर्माध्यारोपात्-स्फटिकादिषु नीलाद्याकारारोपवत्। किं चोपाधिनिवृत्तौ नीलाद्याकारनिवृत्तिवदभिव्यक्तिनिवृत्तौ वर्णानां पौर्वापर्यनिवृत्तिस्तत्कुतोऽपौरुषेयत्वम्।

## ❀ अनादिप्रवाहेणापि न नित्यत्वम् ❀

अनादिप्रवाहत्वेनापौरुषेयत्वमिति चेत्, न; अतिप्रसंगात्। तथा हि—[2]म्लेच्छव्यवहाराणामपि मातृविवाहादीनां नास्तिकवचनादीनां च परलोकादृष्टात्माद्यपवादानामनादिप्रवाहत्वादपौरुषेयत्वप्रसंगः। तेषामपि हि परेभ्य अहितसंस्कारैः प्रवृत्तिः कर्तुं शक्यते, नान्यथा; न ह्यनाहितसंस्कारः कश्चिदपूर्वं व्यवहारं प्रवर्तयति। आदिसर्गेऽपि व्यवहारस्य पूर्वसर्गदर्शनाहितसंस्कारपूर्वकत्वात्। न चादिसर्गस्त्वयेष्टः, प्रथमपुरुषो वा कश्चिदपूर्वव्यवहारप्रवर्त्तयितेति। सर्वव्यवहाराणामनादित्वादपौरुषेयत्वं प्रसज्येत्। अभ्युपगमाददोषः

---

तेषां च न व्यवस्थानं क्रमान्तरविरोधतः।
देशकालक्रमाभावो व्याप्तिनित्यत्ववर्णनात्॥ (प्र० वा० २६१-६२)

१. कीर्तिरप्यब्रवीत्—
व्यक्तिक्रमोऽपि वाक्यं न नित्यव्यक्तिनिराकृतेः। (प्र० वा० १।२६३)।

२. कीर्तिरपि कथयति स्म—
म्लेच्छादिव्यवहाराणां नास्तिक्यवचसामपि।
अनादित्वाद् भवेदेवं पूर्वसंस्कारसन्ततेः॥ (प्र० वा० १।२४७)।
धर्मोत्तरोऽपि म्लेच्छव्यवहारमुदाजहार—"मातृविवाहक्रमोपदेशवत्" (धर्मोत्तर० पृ० १४)। तट्टीकायां दुर्वेकमिश्रः प्राह—"पारसीकशास्त्रेण हि मृते पितरि माता प्रथममग्रजेन पुत्रेण परिणेतव्या, तदनु तदनुजेनेत्युपदिश्यते" (धर्मो० प्र० पृ० १५)।

इति चेत्; तादृशापौरुषेयत्वे सिद्धेऽपि को[1] गुणः? प्रमाणसिद्ध्यर्थं ह्यपौरुषेयत्वमिष्टं, तच्च नास्तिकवचनेष्वपि अस्तीत्यसाधनम्।

## ❀ शब्दनित्यत्वसाधकप्रत्यभिज्ञाया निरासः ❀

यदपि सर्वेषां वर्णानां पदानां च नित्यत्वसिद्धौ [2]प्रत्यभिज्ञाख्यं साधनमुक्तम्, तदपि असिद्धत्वादसाधनम्। नहि यो मया कांच्यां शब्दः श्रुतः, स एवोज्जयिन्यां श्रूयत इति भवति। ननु स एवानुवाकोऽष्टकृत्वोऽधीत इत्यस्ति प्रत्यभिज्ञा, तथा सर्वेषु पदेषु वर्णेषु च प्रत्येकं प्रत्यभिज्ञा द्रष्टव्या, न; प्रदीपादिषु व्यभिचारात्। ननु च लिङ्गस्य व्यभिचारादसाधनत्वं युक्तं, प्रत्यभिज्ञा तु प्रत्यक्षमुपन्यस्तम्। न च प्रत्यक्षस्यानैकान्तिकत्वदोषोऽस्ति, जलादिज्ञानस्यैकत्र भ्रान्तत्वेप्यन्यत्र प्रमाणत्वाभ्युपगमात्। यत्रैव हि बाध्यते, तत्रैवाप्रमाणं युक्तं न च शब्दे प्रत्यभिज्ञा देशान्तरे कालान्तरे पुरुषान्तरेऽवस्थान्तरे वा बाध्यते इति, न; शब्देऽपि प्रत्यभिज्ञाया प्रत्यक्षानुमानाभ्यां बाध्यमानत्वात्। प्रत्यक्षेण तावदस्मिन् देशे शब्द उत्पन्नः, शमितोऽनेन कलकल इत्युत्पादविनाशौ गृह्येते। अभिव्यक्तिभावाभावाभ्यामेव प्रतीतिरिति चेत्, न; केशनखादिष्वपि एवं प्रसंगस्तत्रापि हि प्रत्यभिज्ञामात्रेण नित्यत्वमभ्युपगम्याभिव्यक्त्यनभिव्यक्तिकृतावुत्पादविनाशप्रत्ययाविति ब्रुवाणः केन वार्यते? न च क्वचिदभिव्यक्त्यनभिव्यक्तिकृतावुत्पादविनाशप्रत्ययौ दृष्टौ। प्रत्यभिज्ञा तु सादृश्यवशादनेकत्र दृश्यते। अपि चैवं लौकिकवाक्यानामपि सर्वेषां नित्यत्वप्रसंगः। तत्राप्यष्टकृत्व उच्चारितमिदं वाक्यमष्टकृत्वोऽयं पठितः श्लोक इत्यस्ति प्रत्यभिज्ञा सर्ववाक्यानां च नित्यत्वे प्रागुक्त एव दोषः।

## ❀ अध्येत्रनुमानसाधनत्वाच्छब्दानां भेदः ❀

किं च वैदिकशब्देनापि परोक्षाध्येतृविशेषानुमानं दृष्टम्—देवदत्तोऽधीते, विष्णुमित्रोऽधीत इति। तच्च शब्दाभेदेऽनुपपन्नम्। न ह्यनेकसाधारणं दण्डच्छत्रादिकं यदा येन धृत्वा प्रकटं क्रियते, तदा तमनुमापयितुं शक्नोति। तीव्रमन्दतरादिभेदोपलब्धेश्च न हि नित्यस्य तीव्रतरादिधर्मोऽस्ति। नाप्येकस्मिन्नखंडात्मनि तीव्रमन्दादिभेदोपलम्भः सम्भवति।

---

१. तदाह कीर्तिः—

तादृशेऽपौरुषेयत्वे कः सिद्धेऽपि गुणो भवेत्। (प्र० वा० १।२४८)।

२. साधनं प्रत्यभिज्ञानं सत्प्रयोगादि यन्मतम्।

अनुदाहरणं सर्वभावानां क्षणभङ्गतः॥ (प्र० वा० १।२६८)

## ❀ शब्दाभिव्यक्तिपक्षनिरासः ❀

[1]व्यञ्जकतीव्रमन्दादिभेदात् सम्भवति चेत्, किं व्यञ्जकतीव्रमन्दादिभेदेन शब्दे तथाभावः क्रियते ? किं वा व्यञ्जकधर्म एवारोप्यत इति ? न तावत् क्रियते। न हि नित्यस्य भेदः केनचिद्धेतुना कर्तुं शक्यते। नापि धर्मभेदः एव क्रियते, तीव्रत्वादिधर्मस्य शब्दत्वादिवत्सामान्यलक्षणत्वेन नित्यत्वात्। अभिव्यक्तिभेद एव क्रियत इति चेत्, न; तीव्रत्वादिविरुद्धधर्मभेदस्यैकत्रास्तित्वे प्रमाणाभावात्। असति च तीव्रत्वादिधर्मभेदे तथाभिव्यक्तिभेदोऽसत्यार्थत्वाद्विसंवाद्येव स्यात्। अथ मुखादिषु खड्गादिधर्मारोपवद् व्यंजकधर्म एव शब्देऽपि आरोप्यते, न, अदृष्टत्वात्। खड्गादिधर्मो हि दीर्घतादिः समानेन्द्रियदृष्ट एवारोप्यते नाऽदृष्टो नान्येन्द्रियदृष्टो वा शब्दव्यंजकस्य वायुसंयोगादेः स्वरूपेणैवादृष्टत्वात्, कुतस्तद्धर्मारोपः सम्भवति ? न हि पिशाचादिधर्मः क्वचिदिन्द्रियबुद्ध्यारोपितो दृश्यते, रूपधर्मस्त्वगिन्द्रियबुद्ध्या चेति।

अथ श्रोत्रग्राह्यः कश्चिदर्थः शब्दस्य व्यञ्जकस्तीव्रत्वादिधर्मवाननित्यश्चेष्यते, न; तस्यापि शब्दाव्यतिरेकात्—सामान्यवतः श्रोत्रग्राह्यत्वं हि शब्दलक्षणं, तल्लक्षणयुक्तस्य च ततोऽर्थान्तरत्वमयुक्तम्। श्रोत्रग्राह्यस्य सामान्यवतः कस्यचिदप्यनित्यत्वे सर्वस्याप्यनित्यत्वसिद्धिर्विशेषाभावादिति। उत्तरत्रापि अभिव्यक्तौ दोषं वक्ष्यामः।

## ❀ शब्दनित्यत्वेऽर्थापत्तिनिरासः ❀

यच्चोक्तम्—"[2]दर्शनस्य परार्थत्वाद्" (जै० सू० १।१।१८) इति। अनेन किलार्थापत्तिरुक्ता। कथम् दर्शनम्=उच्चारणं, तच्च परप्रतिपत्त्यर्थं, सा चार्थप्रतिपत्तिः शब्दनित्यत्वेन स्यात्। यो हि गृहीतसम्बन्धः शब्दः स तदैव नष्टः—इत्यनित्यत्वादिना नियमपूर्व एव शब्दः श्रूयते। तेन शब्दार्थप्रतिपत्तिर्न प्राप्नोति। न ह्यगृहीतसम्बन्धाच्छब्दादर्थप्रतिपत्तिर्युक्तेति। तस्मादर्थ-

---

१. एतेन "नादवृद्धिपरा" (जै० सू० १।१।१७) इति सूत्रं तद्भाष्यं च समनुक्रान्तं भवति।

२. "नित्यस्तु स्याद् दर्शनस्य परार्थत्वात्" (जै० सू० १।१।१८)। इति समग्रं सूत्रम्। तद्भाष्यं तु—'नित्यः शब्दो भवितुमर्हति, कुतः ? दर्शनस्य परार्थत्वात्। दर्शनम्=उच्चारणं, तत्परार्थं प्रत्याययितुम्। उच्चरितमात्रे हि विनष्टे शब्दे, न चान्योऽन्यान् अर्थं प्रत्याययितुं शक्नुयात्। अतो न परार्थमुच्चारयेत्'। (शा० भा० पृ० ८४)

प्रतिपत्त्याऽन्यथाऽनुपपत्त्याऽवगम्यते—नाऽनित्यः शब्दः इति, नैतदस्ति; धूमादिवदनित्यत्वेप्यर्थप्रतिपादकत्वस्योपपत्तेः।

किं चाऽनेन न्यायेनार्थस्यापि नित्यत्वमेकत्वं च त्वयाऽभ्युपगन्तव्यम्, अन्यथा वाहुलेये गृहीतसम्बन्धोऽपि गोशब्दः शाबलेयादिष्वगृहीतसम्बन्धः कथं प्रतिपत्तिं कुर्यात्? सामान्यस्यैव शब्दार्थत्वं लिङ्गत्वं लिङ्गित्वं च, अतो न दोष इति चेत्, न; सामान्यस्यैव शब्दार्थत्वे सामानाधिकरण्याद्यभावादिदोषस्योक्तत्वात् सामान्यविचारो लिङ्गलिङ्गिभावेऽपि व्याप्तिग्रहणविचारे तद्वतोरेव समर्थितस्तथा तद्वतोर्वाच्यवाचकभावेऽप्यदोषः। किं च यथा लिङ्गत्वं सामान्यस्यैव त्वयेष्यते, तथा वाचकत्वमपि सामान्यस्यैवास्तु, व्याप्तिवद्वाच्यवाचकसम्बन्धोऽपि सामान्ययोरेव ग्रहीष्यत इति क्षीणाऽर्थापत्तिः। ननु गोशब्दे किं सामान्यं? गोशब्दबुद्धिहेतुत्वम्। येन खलु सामर्थ्येन सर्वे गोशब्दाः स्वात्मन्येकाकारबुद्धिहेतवो भवन्ति तत् सामान्यम्। न चैक एव गोशब्दः, तस्य तीव्रमन्दादिभेदभिन्नस्य प्रसिद्धत्वात्सुखादिभेदसिद्ध्या च तुल्ययोगक्षेमत्वात्। यद्यपि गोशब्देषु सामान्यं साक्षात् नास्ति, तथापि तत्र पाचकादिष्विव कथंचिदस्त्येव सामान्यं न ह्यन्यथा भिन्नेष्वभिन्नाकारः प्रत्ययः सम्भवतीत्युक्तम्। तस्मात् सामान्याश्रयणेनानित्यानामेव शब्दानां वाचकत्वोपपत्तेर्नार्थापत्तितोऽपि नित्यत्वसिद्धिः।

## ❀ शब्दनित्यत्वसाधनस्य श्रावणत्वस्य निरासः ❀

यदपि साधनम्—नित्यः शब्दः श्रावणत्वाच्छब्दत्ववदिति, तन्न; अनैकान्तिकत्वात्। तथा हि—स्वर्गकामः श्वमांसं पुरीषादिकं च खादेदित्येवमादिकानुपूर्वी श्रोत्रग्राह्या, न च नित्या। सापि नित्येति चेत्, न; वैदिकचोदनावत्प्रामाण्यप्रसंगात्। तदर्थानुष्ठानातिक्रमे च प्रत्यवायप्रसंगात्। तथावेदपाठकक्तैर्दोषैर्विस्वरादिभिरनैकान्तस्तेषामपि नित्यत्वे हि नित्यं विस्वरादिदोषोपहता वेदाः स्युः।

किं च तीव्रमन्दादिधर्म्मैर्भेर्यादिशब्दैश्चानैकान्तः, तेषामपि नित्यत्वे प्रतिनिमित्तं शब्दभेदोपलब्धिर्न स्यात्, एकस्यापि ह्यनेकं व्यञ्जकं दृष्टमनेकस्याप्येकमिति। ततश्च शब्दविशेषेण निमित्तविशेषानुमानं न स्यात्। न च परोक्षं व्यञ्जकं व्यंग्येनानुमीयमानं क्वचिदुपलब्धं, यथा—कार्येण कारणमिति। अथ कस्यचिच्छब्दस्य शब्दधर्मस्य वाऽनित्यत्वमपीष्यते। यतः परोक्षनिमित्तानुमानं स्यात्तथा सति तेनैव श्रावणत्वमनैकान्तिकम्। कालात्ययापदिष्टत्वं च सर्वस्यापि नित्यत्वसाधनस्य वक्तव्यम्।

## ❀ प्रत्यक्षेणापि शब्दानित्यत्वग्रहः ❀

प्रत्यक्षेणापि हि शब्दाभावो गृह्यते, यस्मादिन्द्रियव्यापारे सति नास्ति शब्दो, विनष्टः कलकल इति ज्ञानमसदिग्धमबाध्यं च भवति, असति न भवतीति। पदार्थान्तरप्रत्यक्षत्वेऽपि अयमेवोपायः। सम्बन्धाभावादयुक्तं प्रत्यक्षत्वमिति चेत्, स्यादेतदिन्द्रियेण शब्दाभावस्य संयोगसमवायाद्यन्यतमो न कश्चित्सम्बन्धोऽस्ति, तस्मान्नेन्द्रियेण शब्दाभावो गृह्यत इति, न; विशेषणविशेष्यभावाख्यस्य सम्बन्धस्य विद्यमानत्वात्। कस्य पुनः शब्दाभावं प्रति विशेषणत्वाविशेष्यत्वम्? कर्णशष्कुल्या—इत्याचार्याः। कर्णशष्कुली च त्वगिन्द्रियेण गृह्यते, भिन्नेन्द्रियग्राह्ययोरपि विशेषणविशेष्यभावः सुरभि द्रव्यमित्यादौ दृष्टस्तेनात्राप्यविरुद्ध इति। गृहादिप्रदेशो वास्तुविशेषणम्। यथैव हि शब्दस्य विशेषणं, तथा तदभावस्यापि, यद्, विषयस्य विशेषणत्वेन विशेष्यत्वेन वोपलब्धं, तद्, तदभावस्यापीति। विशेषणविशेष्यभावस्तु विशिष्टप्रतीतिवशेन व्यवस्थाप्यते, तेन यत्र विशिष्टप्रतीतिरस्ति तत्र देशादिप्रत्यासत्त्यभावोऽपि विशेषणविशेष्यभाव इष्यते। यथा—गोक्षेत्रादिभिः शत्रुग्रहनक्षत्रादिभिश्च देवदत्तस्येति। प्रत्यक्षनिमित्तत्वमप्यस्य[1] प्रत्यक्षज्ञानोत्पत्तौ व्यवस्थाप्यते। संयोगादिवन्नैकत्रानिमित्तत्वे सर्वत्राप्यनिमित्तत्वं युक्तमिति तस्मात् प्रत्यक्षेणापि शब्दस्यानित्यत्वं गृह्यते।

## ❀ अनुमानेनापि शब्दानित्यत्वसाधनम् ❀

किं चानित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वाद् घटादिवत्। विषयत्वाच्च रूपादिवत्। न चात्र ज्ञेयत्वमेव विषयत्वं विवक्षितं येनानैकान्तिकत्वं स्यात् किं तर्हि? योऽर्थः प्रत्यक्षेणोपलभ्यमानः, कस्यचिद्रागं जनयति, कस्यचिद् विद्वेषं, कस्यचिन्मोहमिति; तस्याभावोऽत्र विषयत्वमभिप्रेतम्। तच्चानित्यत्वं न व्यभिचरति।

## ❀ तीव्रत्वादिधर्मयुक्तत्वादनित्यः शब्दः ❀

इतश्चानित्यः शब्दः, तीव्रत्वादिधर्मयुक्तत्वात् सुखदुःखादिवत्। [2]व्यञ्जकधर्मत्वे हि श्रोत्रग्राह्यत्वानुपपत्तिस्तेनासिद्धत्वं नाशंकनीयम्।

---

१. अस्य=शब्दाभावस्य।

२. स्यादेतत्—तीव्रत्वादिधर्मयुक्तत्वात्—इत्यसिद्धोऽयं हेतुः, यतः खलु तीव्रत्वादयो धर्मा शब्दव्यञ्जकं नादमधिशेरते, न शब्दमित्यत आह—व्यञ्जकधर्मत्व इति।

सर्वदोपलब्ध्यनुपलब्धिप्रसङ्गश्च। विपर्यये नियामकाभावाद्। अभिव्यञ्जकभावाभावौ तन्नियामकाविति चेत्, न; तदनिर्देशात्। वायुसंयोगविभागाविति चेत्, न; सर्वशब्दानां युगपद् ग्रहणप्रसङ्गात्। कथम्? श्रोत्रं तावत् समानेन्द्रियग्राह्यसमानदेशस्थानां ग्रहणाय प्रतिनियतसंस्कारसंस्कार्यं न भवति, इन्द्रियत्वाच्चक्षुर्वत्। शब्दा वा प्रतिनियतसंस्कारसंस्कार्या न भवन्ति, समानेन्द्रियग्राह्यत्वे सति युगपदिन्द्रियसम्बद्धत्वात्, घटादिवत्।

## ❀ वस्तुत्वे सति कार्यत्वादनित्यः शब्दः ❀

किं च वस्तुत्वे सति कार्यत्वाद् घटादिवत्। असिद्धमिति चेत्, न; इच्छाप्रयत्नधर्मानुविधायित्वात्। इच्छानुविधायित्वं तावद्—यादृशशब्दमुच्चारयितुमिच्छति, तादृश एव भवति। अभिव्यक्तौ च नायं नियमः; सुवर्णाद्यभिव्यक्ताभिप्रायेणोपात्तात् प्रदीपात् सर्पादेरप्यभिव्यक्तिदर्शनात्। प्रयत्नधर्मानुविधायित्वमपि—तीव्रात्प्रयत्नात्तीव्रः शब्दो, मन्दान्मन्दः, तीव्रतरमन्दतरादिभेदात् तथाभूत इति। तथा भेर्याद्यभिघातादिधर्मानुविधायी द्रष्टव्यः। न चाकार्यस्यैवं प्रयत्नादिधर्मानुविधायित्वं सम्भवति। न हि प्रदीपादिव्यञ्जकभेदात्तद्धर्मभेदाच्च घटादिव्यंग्यमन्यथाऽन्यथोपलभ्यमानं दृष्टम्। यदि चैवं कार्यधर्मानुगतत्वेन गृह्यमाणस्यापि शब्दस्य कार्यत्वमसिद्धमुच्यते, नन्वेवं बुद्धिघटादीनामपि कार्यत्वं कथं सिध्यति। तत्रापि हि शक्यते वक्तुम्—सति व्यापकत्वनित्यत्वे बुद्धिघटादीनि चक्षुरादिमृद्दण्डादिभिर्यत्र व्यज्यन्ते, तत्रैव गृह्यन्ते इत्यतः कार्यत्वाव्यापकत्वव्यवहाराभावप्रसंगस्तस्माद् घटादिवत्कारकातिशयेनातिशय्यमानत्वात् कृतकः शब्दः, कृतकत्वाच्चानित्योऽसर्वगतश्चेति।

## ❀ शब्दस्य नित्यत्वे उपलम्भकादाचित्कत्वानुपपत्तिः ❀

किं चाकाशादिवदनुपलभ्यस्वभावत्वे शब्दानां कदाचिदप्युपलम्भो न स्यात्। उपलभ्यस्वभावत्वे तु सर्वदैवोपलम्भः स्याद्, अनुपलम्भनिमित्तानामावरणादीनामसम्भवात्। व्यञ्जकाभावादनुपलब्धिरिति चेत्, न; व्यञ्जकस्वरूपानवधारणात्।

## ❀ संयोगस्य शब्दव्यञ्जकत्वनिषेधः ❀

संयोगविशेष इति चेत्, न; [1]चिरनिवृत्तेऽपि दारुपरश्वादिसंयोगविशेषे शब्दोपलब्धेर्व्यञ्जकनिवृत्तौ च व्यंग्योपलब्धिर्न युक्ता प्रदीपसंयोगनिवृत्ताविव।

१. तदुक्तं भाष्ये—'दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते। न च व्यञ्जकाभावे व्यङ्ग्यग्रहणं भवति; तस्मान्न व्यञ्जकः संयोगः।

## ❋ प्राप्त्यप्राप्त्यसम्भवाद्व्यञ्जकत्वं संयोगस्य ❋

प्राप्त्यप्राप्त्यसम्भवाच्च—यदि तावदिन्द्रियप्राप्तिमपेक्ष्य संयोगः शब्दव्यंजकः तदा भेर्यादिसंयोगस्य श्रोत्रप्राप्त्यभावाच्छब्दव्यंजकत्वं न स्यात्। इन्द्रियाणां व्यापकत्वान्न प्राप्त्यभाव इति चेत्, न; सर्वदेशावस्थितपुरुषाणां ग्रहणप्रसंगात्। योग्यदेशावस्थाने सति विषयाकारेणेन्द्रियपरिणामतः तद्विषयोपलब्धेर्न सर्वग्रहणप्रसंग इति चेत्, न; इन्द्रियतत्प्राप्त्यादिव्यतिरेकेण योग्यदेशत्वस्य सम्भवात्। सत्कार्यप्रधानयोः सिद्धौ हि सांख्यदर्शनसिद्धिस्तया वक्ष्यमाणन्यायेनानुपपत्तिस्तेन तत्प्रक्रियाप्यनुपपन्नैवेति न विस्तरेण पूर्वपक्ष्यते।

अथेन्द्रियप्राप्त्यनपेक्षः संयोगः शब्दस्य व्यञ्जकः, तदापि सर्वपुरुषव्यञ्जकप्रसंगः। एतेन वंशदलादिविभागोऽपि शब्दस्य व्यञ्जकः प्रत्युक्तः।

## ❋ आश्रितानाश्रिताभिव्यक्तौ दोषः ❋

किं चाश्रितस्याभिव्यक्तिः ? अनाश्रितस्य वा ? यद्याश्रितस्याभिव्यक्तिः, तदा सामान्यवदाश्रयेण सहाभिव्यक्तिप्रसंगः। गन्धादिवदाश्रयानभिव्यक्तावप्यभिव्यक्तिरिति चेत्, न; गन्धादेरनित्यत्वादुत्पादकहेतुभिरेवोपलब्धियोग्यस्योत्पादात्। प्रागनुपलब्धियोग्यस्येन्द्रियप्राप्तस्याप्याश्रयानभिव्यक्तावेव न कस्यचिदभिव्यक्तिर्दृष्टा। प्रस्वेदस्पर्शस्यापि वायुसम्बन्धात् सहाश्रयेण पूर्वस्य निवृत्तौ विशिष्टस्योत्पादान्न कस्यचिदवस्थितस्याश्रयाभिव्यक्तौ पश्चादभिव्यक्तिरिति।

## ❋ अव्यापकस्याभिव्यक्तिरयुक्ता ❋

अथानाश्रितस्याभिव्यक्तिः। तत्रापि—किमसर्वगतस्य ? अथ सर्वगतस्य वेति ? यदि असर्वगतोऽभिव्यज्यते, तदा यत्र यत्र भेरीदण्डाभिघातादिर्व्यञ्जकः, तत्र शब्दाभिव्यक्तिरित्ययं नियमो न स्यात्; अव्यापकस्य घटादिवत् सर्वत्रासम्भवात् ! न हि घटाद्यभिव्यक्त्यर्थिनो यत्र यत्र दीपोपादानं कुर्वते, तत्र तत्र घटाद्यभिव्यक्तिर्भवति।

## ❋ व्यापकस्याप्यभिव्यक्तिरसङ्गता ❋

अथ व्यापकस्याभिव्यक्तिः, तदा सर्वशब्दानामेकदेशत्वाद् युगपदभिव्यक्तिप्रसंगः, एकदेशावस्थितघटादिवत्। सर्वपुरुषोपलम्भप्रसंगश्च, सर्वपुरुषेन्द्रियसम्बद्धानामेवाभिव्यक्तत्वादखण्डात्मना व्यापकत्वात्। सामान्यैर्व्यभिचार

इति चेत्, न; तेषां स्वाश्रयाभिव्यक्तावेवाभिव्यक्तेः। शब्दानां त्वाश्रितत्वमेव त्वया नेष्टम्।

ननु चोत्पत्तिपक्षेऽपि भेर्यादिदेशे प्रादुर्भूतस्य शब्दस्य श्रोत्रेणाप्राप्तेर्ग्रहणानुपपत्तिः, न; सन्तानेन श्रोत्रप्राप्तस्य ग्रहणात्।

## ❀ सन्तानानुपपत्तिशङ्का ❀

ननु शब्दसन्तानः प्रमाणेनापास्तत्वादनुपपन्नः, तथा हि—यदि स्वाऽवरुद्धे नभोदेशे शब्दमारभते शब्दः, तदा श्रोत्रदेशे शब्दारम्भः कदाचिदपि न स्यात्। अथ स्वावरुद्धव्यतिरिक्ते नभोदेशे शब्दमारभते, तदा भेर्यादिदेशे जातः शब्दः श्रोत्रदेश एवारभतां, किमन्तरालदेशे शब्दारम्भेण ?

किं च सन्तानोपरमहेत्वभावाद् द्वीपान्तरोत्पन्नस्यापि शब्दस्य सन्तानेन श्रोत्रप्राप्तौ श्रवणप्रसंगः। किं च शब्दं नारभते शब्दः, शब्दत्वात्, अन्त्यशब्दवत्। आरम्भकत्वे तु प्रमाणं नास्तीति।

## ❀ तत्प्रत्याख्यानम् ❀

अत्रोच्यते—यत्तावत्किं स्वावरुद्धे नभोदेशे शब्दः शब्दमारभते ? तद्व्यतिरिक्ते वेति ? तत्र प्रथमपक्षो नाभ्युपगम्यते। द्वितीये तु पक्षे यदुक्तम्—श्रोत्रदेश एवारभतां, किमन्तरालदेशे शब्दारम्भेणेति, तदयुक्तम्; एवमपि सन्तानोपपत्तेः। शब्दादुत्पन्नो हि शब्दः शब्दसन्तान उच्यते। तेनैकशब्दारम्भेऽप्युपपन्नः सन्तानः। किं च संयोगारम्भवत्तदुपपत्तेः—यथा इष्वादिकर्म, न पूर्वसंयोगावरुद्धे नभोदेशे संयोगान्तरमारभते, नाप्यतिदूरप्रदेशे; किन्तु तत्प्रत्यासन्ने, ततः क्रमेण दूरदेशे संयोगारम्भः। तथा शब्दोऽपि स्वप्रत्यासन्ने प्रदेशे शब्दान्तरमारभते, न स्वावरुद्धे, दूरदेशे वा।

निष्प्रदेशत्वादाकाशस्य तत्प्रदेशप्रत्यासत्तिरयुक्तेति चेत्, न; अव्याप्यवृत्तिसंयोगशब्दोपाधिकृतत्वात् प्रदेशस्य। तत्र भेर्याकाशसंयोगात्तदवच्छिन्ने नभोदेशे शब्द उत्पद्यते, ततः शब्दाद् भेरीप्रत्यासन्नमूर्तद्रव्यसंयोगावच्छिन्ने नभोदेशे शब्द उत्पद्यते, ततः पुनः तद्द्रव्यानन्तरमूर्तद्रव्यसंयोगावच्छिन्ने नभोदेशे शब्दोत्पत्तिः—इत्येवमुत्तरोत्तरप्रत्यासन्नमूर्तद्रव्यसंयोगापेक्षः शब्दारम्भो द्रष्टव्य इति।

यदप्ययुक्तम्—सन्तानोपरमहेत्वसम्भवादिति, तदप्ययुक्तम्; कर्मसन्तानोपरमवत्तदुपरमात्। यथा—आकाशे प्रक्षिप्तानामिष्वादीनां कर्मणः तरतमादिभावेन कर्मान्तरारम्भकत्वं, ततोऽत्यन्तमन्दस्यानारम्भकत्वात् तत्सन्ता-

नोपरमः, तथा [1]शब्दस्यापि तीव्रमन्दतरादिभावेनारम्भकत्वादत्यन्तमन्दस्यानारम्भकत्वात् तत्सन्तानोपरम इति। तथा च भेरीदेशस्थस्तीव्रं शब्दं शृणोति, ततो दूरस्थो मन्दम्; अतिदूरस्थस्तु मन्दतरं मन्दतममिति। न चैवं नित्यत्वे तीव्रमन्दतरादिभावेन श्रवणमुपपद्यते।

यच्चेदं साधनम्--शब्दं नारभते शब्दः, शब्दत्वादन्त्यशब्दवदिति तत्राद्यादिशब्दपक्षीकरणे, धर्मिग्राहकप्रमाणबाधितत्वम्--न ह्यनारम्भकस्याद्यादिभाव उपपद्यते। कोऽपि शब्दो नारम्भकः--इति प्रतिज्ञार्थे सिद्धिसाध्यता, अन्त्यशब्दस्यानारम्भकत्वात्। सर्वस्यानारम्भकत्वे साध्ये दृष्टान्तो नास्ति। अन्त्यव्यतिरिक्तस्यापि धर्मित्वे, धर्मिग्राहकप्रमाणबाधितत्वम्, अनारम्भकस्यान्त्यव्यतिरेकित्वासिद्धेः। किं च दृष्टान्तग्राहकप्रमाणबाधितत्वादयुक्तम्--न हि सन्तानाभावे शब्दस्यान्त्यत्वं सिध्यति।

## ❀ सन्तानसाधनमनुमानम् ❀

शब्दस्य शब्दारम्भकत्वेऽपि प्रमाणं नास्तीत्येतदप्ययुक्तम्, तथा हि--अस्मदादीन्द्रियप्राप्तः शब्दो धर्मी, सजातीयादुत्पन्न इति साध्यो धर्मः, अस्मदादिबाह्येन्द्रियप्रत्यक्षत्वे सति विशेषगुणत्वात्, अवयविरूपादिवदिति।

## ❀ अर्थापत्तितः शब्दसन्तानसाधनम् ❀

ग्रहणान्यथानुपपत्तितश्च शब्दसन्तानः प्रतीयते, न हि श्रोत्रमप्राप्तस्य विषयस्य ग्राहकं, बाह्येन्द्रियत्वात्, सर्वशब्दग्रहणप्रसंगाच्च। प्राप्तिश्च सन्तानं विना न सम्भवति। न हि शब्द आगत्य श्रोत्रं प्राप्नोति, अमूर्तत्वेन निष्क्रियत्वात्। नापि श्रोत्रं गत्वा शब्दं प्राप्नोति, उक्तादेव हेतोः। श्रोत्राधिष्ठानमपि न तदा गच्छदुपलभ्यते। तस्मात् सन्तानेनैव श्रोत्रप्राप्तस्योपलब्धिरिति।

नन्वन्यथापि ग्रहणोपपत्तौ सन्तानासिद्धिः, तथा हि--सर्वे शब्दा व्यापका आकाशवत्तिष्ठन्ति। ते वायुसंस्कारोपकृतेन श्रोत्रेण गृह्यन्ते। तत्र गोविवक्षा-

---

१. वार्तिककारोऽप्याह--"परिशेषात्तु सन्तानसिद्धिः। तत्राद्यः शब्दः संयोगविभागहेतुकः, तस्माच्छब्दान्तराणि कदम्बगोलकन्यायेन सर्वदिक्कानि, तेभ्यः प्रत्येकमेकैकः शब्दो मन्दतरतमादिन्यायेनाश्रयाप्रतिबन्धमनुविधीयमानः प्रादुरस्ति। ततोऽन्त्यस्यातिमान्द्याच्छब्दान्तरोत्पत्तिशक्तिविघातो येन केनचित् प्रतिबन्धाद् भवति। अतः शब्दसन्तानोच्छेदः" (न्या० वा० पृ० २८६)।

प्रेरितो वायुः सर्वदिक्षु [1]स्तिमितानि वाय्वन्तराणि प्रतिबाधमानः श्रोत्रदेशं गच्छति । तेनावरको वायुः प्रोत्सार्यते, तस्मिन् प्रोत्सारिते च गोशब्द उपलभ्यते । यद्वा विवक्षाप्रेरितेन वायुना यः श्रोत्रदेशस्य संयोगः, स एव शब्दव्यञ्जक इत्येवं भेरीदण्डाभिघातादिप्रेरितस्यापि वायोः शब्दव्यञ्जकत्वं द्रष्टव्यमिति, न; नित्यत्वासिद्धेः । शब्दानां नित्यत्वव्यापकत्वसिद्धौ ह्येषा प्रक्रिया शोभेत । तदसम्भवश्च प्रमाणाभावादुक्तः । साधितं चानित्यत्वं तत्सिद्धौ च शब्दसन्तानकल्पनैव ज्यायसी; न व्यञ्जककल्पनेति ।

## ❀ स्पर्शानुपलब्ध्या व्यञ्जकवायोरभावः ❀

स्पर्शादिलिंगानुपलब्धेश्चायुक्ता वायुकल्पना । यदि हि वायुर्वेगेन श्रोत्रदेशमागच्छति, तदा तल्लिङ्गस्य स्पर्शस्य सुकसुकाशब्दस्य वा तृणकेशादिकम्पस्य चोपलम्भः स्यात् । यस्तु वायुस्तृणादिकस्पर्शनेऽप्यशक्तः, सोऽपि मन्दत्वादल्पेनापि प्रतिवातेन प्रतिहन्यते, ततश्च प्रतिवाते भेरीशब्दस्याग्रहणं स्यात् । अथ भेरीदण्डाभिघातजो वायुर्बलीयस्त्वात् प्रतिवातं निर्जित्यागच्छति । तथा सति प्रतिवातस्यापि तृणादिसहितस्य प्रत्यागमनं स्यात्, मेषनिर्जितमेषान्तरवत् ।

किं च तद्वायुप्रतिघातजोऽपि शब्दः श्रूयेत, न चैतत्किंचिदुपलभ्यते; तस्मादयुक्ता व्यञ्जकवायुकल्पनेति । यदि च वायोः शब्दव्यञ्जनसामर्थ्यं स्यात्, तदा यस्य कस्यचिद्वायोरविशेषेण सर्वशब्दव्यञ्जकत्वं स्याद् रूपालोकवत्—यथैव हि रूपव्यञ्जकानामालोकानां पुरुषाभिप्रायतृणकाष्ठादिहेतुविशेषजन्यत्वेऽपि, न विशेषः कश्चिददिति । केनापि कृत आलोकः सर्वेषां योग्यदेशावस्थितानां रूपविशेषाणां व्यञ्जकः, तथा वायूनामपि हेतुविशेषजन्यत्वे विशेषो नास्तीति । केनापि प्रेरितो वायुः सर्वशब्दानां व्यञ्जकः स्यात्; सर्वेषां व्यापकत्वेनैकदेशावस्थानात् ।

वायुसंस्कृतं श्रोत्रं शब्दं गृह्णाति—इत्यत्रापि प्रतिनियमानुपपत्तिः, आलोकाञ्जनादिसंस्कृतचक्षुर्वत् सर्वसर्वग्राहकत्वप्रसङ्गात् ।

---

१. शबरस्वामिनः प्राहुः—"अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्तो यावद्वेगमभिप्रतिष्ठन्ते । अनुपरतेषु एव तेषु शब्द उपलभ्येत" ( शा० भा० १।१।१३ ) ।

## * शब्दस्याव्यङ्ग्यत्वे प्रयोगान्तरम् *

प्रयोगोऽप्यत्र प्रदर्श्यते—समानेन्द्रियग्राह्यसमानदेशार्थानां ग्रहणाय प्रतिनियतसंस्कारकसंस्कार्यं श्रोत्रं न भवतीन्द्रियत्वाच्चक्षुर्वत्। विषयसंस्कारपक्षे तु शब्दाः पक्षीकर्तव्याः—शब्दाः प्रतिनियतसंस्कारसंस्कार्या न भवन्ति, समानेन्द्रियग्राह्यत्वे सति युगपदिन्द्रियसम्बद्धत्वादेकदेशस्था इव घटादयः।

## * अत्रानैकान्तिकत्वाशङ्का तन्निरासश्च *

तप्ततैलादिष्वग्निज्वालायाः संस्कारान्तरेणाभिव्यक्तेरनैकान्त इति चेत्, न; अभिव्यक्तेरसिद्धत्वात्। अवस्थितस्य हि व्यक्तिश्चिन्त्यते, न च ज्वालायाः प्रागवस्थितौ प्रमाणं किञ्चिदस्ति। एतेन सुधादिषु तोयैरुष्णस्पर्शाभिव्यक्तिः, पृथिव्यां गन्धाभिव्यक्तिश्च प्रत्युक्ता। उत्पत्स्यमानानां च समानदेशग्रहणेन युगपदिन्द्रियसम्बन्धग्रहणेन च व्यवच्छेदः कृतः, तस्मान्नानैकान्तिकत्वम्।

मन्दप्रकाशेन शुक्लरूपाभिव्यक्तावपि कृष्णादिरूपविशेषानभिव्यक्तेरनैकान्त इति चेत्, न; विपक्षाभावात्। प्रतिनियतव्यञ्जकव्यंग्यत्वाभावो हि साध्यः, तेन प्रतिनियतव्यञ्जकव्यंग्यानामेव विपक्षत्वम्। न च रूपविशेषाणां प्रतिनियतव्यञ्जकव्यंग्यत्वमस्ति, कृष्णरूपाभिव्यञ्जकप्रकाशेन सर्वरूपविशेषाणामभिव्यक्तेः। शुक्लं त्वतैजसमपि रूपमीषत्प्रकाशस्वभावं, तेनालोकविशेषं नापेक्षते। नैतावता प्रतिनियतव्यञ्जकव्यंग्यत्वम्।

अन्ये त्वनैकान्तिकत्वपरिहारार्थं समानधर्मापन्नत्वविशेषणमुपाददते, तन्न; असिद्धविशेषणत्वप्रसंगात्। अकारककारादीनां ह्यसमानधर्मत्वात्। वैधर्म्याभावे हि वर्णैकत्वं स्यात्। अथ सत्यपि वैधर्म्ये शब्दत्वेन सर्वशब्दानां समानधर्मत्वम्, तदा शुक्लकृष्णादिरूपविशेषाणामपि सत्यपि वैधर्म्ये रूपत्वेन समानधर्मत्वमेवेति, कथं व्यभिचारपरिहारः ? यदि पुनः सूक्ष्मस्थूलो ज्वालानुज्वालात्वविशेषरहितत्वं समानधर्मत्वं विवक्षितम्, तदा नासिद्धं विशेषणं भवति। यदि हि ककारस्याभिव्यक्तौ खकारस्य सूक्ष्मत्वादनभिव्यक्तिः, तदा खकाराभिव्यक्तौ ककारस्याभिव्यक्तिर्भवतु, सर्षपाद्यभिव्यक्तौ तद्देशस्थबिल्वाद्यभिव्यक्तिवत्। अथ ककाराभिव्यक्तौ खकारस्यानुज्वलत्वेनानभिव्यक्तिः, तथापि खकाराभिव्यक्तौ ककाराभिव्यक्तिप्रसंगः; कृष्णरूपाभिव्यक्तौ शुक्लरूपाभिव्यक्तिवत्। तदेवं सतः शब्दस्याभिव्यक्तौ युगपद्ग्रहणप्रसंगोऽपरिहार्य एवेत्यनित्यस्यैव सन्तानेनागतस्य ग्रहणमेष्टव्यम्, तत्र दोषाभावादिति।

उत्पत्तिपक्षेऽप्ययं समानो दोष इति चेत्, न; मृत्पिण्डप्रदीप-दृष्टान्ताभ्यां संस्कारकव्यञ्जकवैधर्म्यसिद्धेरित्यलमतिप्रसङ्गेन।

एवमेतानि त्रीण्येव प्रमाणानि।

एष्वेवोपमानार्थापत्तिसम्भवाभावैतिह्यादीनामन्तर्भावः। तत्र यथा गौः, तथा गवयः—इत्युपमानं शब्देऽन्तर्भूतम्। अनेन सदृशी मदीया

## ❀ उत्पत्तिपक्षेऽपि समानदोषताशंका ❀

नन्वनित्यत्वेऽपि तुल्यदोषः—ककारार्थं प्रेरितो हि वायुर्वर्णान्तरोत्पादक-वायुभिरविशिष्टत्वात्, सर्ववर्णानपि कुर्यात्सर्ववर्णानां तत्राविद्यमानत्वा-विशेषात्। अथाविद्यमानत्वाविशेषेऽपि ककारार्थं प्रेरितो वायुः ककारमेव कर्तुं शक्तो, न वर्णान्तरम्। यद्येवं विद्यमानत्वाविशेषेऽपि ककाराभिव्यक्त्यर्थं प्रेरितो वायुः ककारमेव संस्कर्तुं शक्तो, न वर्णान्तरमिति तुल्यः परिहारः।

## ❀ तन्निराकरणम् ❀

तदयुक्तम्, कारकव्यञ्जकयोर्वैधर्म्यात्—कारके हि नियमो दृश्यते, न तु व्यञ्जके। तथा हि—स एव मृत्पिण्डचक्रादिकारकनिकरः कुलालाभि-प्रायेण नियमितः शरावमेव करोति घटमेवेति, नत्वेवं प्रदीपाद्यादिव्यञ्जकं कस्यचिदभिप्रायेण नियमितम्—तदभिप्रेतमेवार्थं व्यनक्तीति। अस्मत्पक्षे च वायूनां कारकत्वं, भवत्पक्षे व्यञ्जकत्वमिति कथं चोद्यपरिहारयोस्तुल्यत्वम्? तस्मादनित्याः सर्वे शब्दाः। तत्र नित्यत्वेन वेदस्य प्रामाण्यं, किं त्वाप्तो-क्तत्वेनेति स्थितम्।

## ❀ त्रिष्वेव प्रमाणेषूपमानादीनामन्तर्भावः ❀

एष्वेवोपमानार्थापत्तिसम्भवाभावैतिह्यादीनामन्तर्भावः। तस्मात् त्रीण्येव प्रमाणानि। अत्र यथा गौस्तथा गवयः—इत्युपमानं शब्दान्तर्भूतं, वाक्य-रूपत्वात्, अग्निमानयेत्यादिवाक्यवत्। उपमानरूपत्वेन भेदे तु विध्यर्थ-वादानुवादादिभेदादपि प्रमाणभेदप्रसंगस्ततः प्रमाणानामानन्त्यं स्यात्।

## ❀ मीमांसकसम्मतोपमितेः स्मृतित्वम् ❀

ननु च अटव्यामटतो गवयपिण्डदर्शने सत्यनेन सदृशी मदीया गौरितिज्ञानं यदुत्पद्यते, तदुपमानमिष्यते[1]। न च तस्य क्वचिदन्तर्भावः सम्भवति, अटव्यां स्थितस्य गृहावस्थिते गवि प्रत्यक्षादेः प्रवृत्त्यसम्भवादिति,

१. मीमांसावृत्तिकाराः प्राहुः—"उपमानमपि सादृश्यम् असन्निकृष्टेऽर्थे बुद्धिमुत्पा-दयति। यथा—गवयदर्शनं गोस्मरणस्य" (शा० भा० पृ० ३७)।

**गौरित्युपमानमिति चेत्, न; तस्य स्मृतित्वात्। पूर्वमेव हि सादृश्यविशिष्ट उपलब्धो गोपिण्डः। कस्मात्? उपलब्धियोग्यत्वात्। अयोग्यत्वे वा न कदाचिदुपलभ्येत, अदृष्टवत्। निर्विकल्पकेन तु प्रत्यक्षेण पूर्वं सादृश्यमुपलब्धम्, तेन तदुपलब्ध्यभिमानो न भवति।**

---

नैतदस्ति; प्रागेव प्रत्यक्षेण अनुभूतत्वात्। तदा च स्मृतिरेवेयम्—मदीया गौरनेन सदृशीति। स्मृतिसाधनस्य च प्रमाणत्वं त्वयापि नेष्टम्।

सादृश्यस्य प्रागगृहीतत्वादिति चेत्, नैतदेवम्; पूर्वमेव हि सादृश्यविशिष्टो गोपिण्ड उपलब्धः। कस्माद्? उपलब्धियोग्यत्वात् सादृश्यस्य, विषाणादिवत्। उपलब्ध्ययोग्ये वा सादृश्येऽभ्युपगम्यमाने, कदाचिदपि तन्नोपलभ्येतादृष्टवत्। ततश्च गवयमुपलभ्य पश्चाद् गां पश्यतः 'तेन सदृशीयम्'—इति प्रतीतिर्न स्यात्।

किं च मदीयया गवा सदृशोऽयम्—इत्येषापि प्रतीतिर्भवति। न चैवं केवलेन्द्रियेण पिण्डमात्रस्मृतिसहकारिणा वा जन्यते, वनेचरकेन्द्रियेणापि महिषादिपिण्डमात्रस्मृतिसहकारिणापि वा जन्येत। अथ विशिष्टपिण्डस्मृतिसहकारिणेन्द्रियेण जन्यते, नन्वेवं सति गवयसादृश्यविशिष्टपिण्डदर्शनमभ्युपगन्तव्यम्। अन्यथा हि विशिष्टपिण्डस्मृतिर्न स्याद्, अदृष्टे स्मृत्ययोगात्। सादृश्यमात्रेण विशिष्टदर्शनेऽप्यतिप्रसंगो, महिषादेरपि सादृश्यमात्रविशिष्टदर्शनादिति। गवयादर्शनेऽपि तत्सादृश्यदर्शनं प्रतीत्यभावादयुक्तमिति चेत्, न तद्दर्शनस्य निर्विकल्पकत्वात्। निर्विकल्पकेन हि प्रत्यक्षेण गवयदर्शनात् पूर्वं तत्सादृश्यं गोपिण्डस्थमुपलब्धम्, तेन तदुपलब्ध्यभिमानो न भवति, प्रथमगोपिण्डोपलम्भकाले गोत्वोपलम्भवत्।

नन्वनेन सदृशीतिगवयविशेषणत्वप्रतीतेः कथं स्मृतित्वम्? एवं हि सविकल्पप्रत्यक्षस्यापि स्मृतित्वप्रसंगः, तुल्ययोगक्षेमत्वादिति, न; अर्थापत्तितस्तत्सिद्धेः—यद्यनेन सदृशी सा न स्यात्, ततस्तया सदृशोऽयं नोपलभ्येत, सादृश्यस्योभयनिष्ठत्वाद्। उपलभ्यते चायं तया सदृशः, तस्मात्साऽप्यनेन सदृशीति। प्रयोगोऽपि—अनेन सदृशी गौः, स्वसादृश्येनास्यावच्छेदकत्वात्, यत्स्वसादृश्येन यस्यावच्छेदकं, तत्तेन सदृशं दृष्टं, यथा—भ्रात्रा भ्रात्रन्तरम्।

किं चैवं प्रमाणान्तरत्वेऽतिप्रसंगः स्यात्, तथाहि—पूर्वं दृष्टं वस्तु, एतस्मात् स्थूलम्, एतस्माद्दीर्घम्, एतस्माद् ह्रस्वम्—इत्येवमादिज्ञानं न तावदुपमानम्, तस्य सादृश्याविषयत्वात्। नापि प्रत्यक्षाद्यन्तर्भूतम्, उपमानेन सहास्य तुल्ययोगक्षेमत्वादतः प्रमाणपरिसंख्या प्रसज्यते। तस्मादेवंविधस्य

निर्विकल्पकोपलम्भेऽपि सहकारिसामर्थ्याद्भावादिषु सविकल्पका स्मृतिर्दृष्टेति । संज्ञासंज्ञिसम्बन्धप्रतिपत्तिराप्तवचनकार्या, तथा प्रश्नोत्तराभिधानात् । अन्यप्रमाणानिर्देशाच्च ।

---

ज्ञानस्यार्थापत्त्यनुमानेऽन्तर्भावः । स्मृतित्वं चानिर्विकल्पकप्रत्यक्षेण, तथार्थस्य दर्शनात् । तथा हि—कथं जानीषे त्वमत्र स्थितोऽनेन सदृशी सा गौरित्येवं परेण पृष्टः, प्रत्यक्षेणैव पूर्वं दृष्टा मयेत्येवमेव निर्दिशति । एतस्मात्तत् स्थूलं दीर्घमित्यादिज्ञानस्यापि स्मृतित्वेऽयं न्यायो द्रष्टव्यः ।

## ❀ निर्विकल्पकानुभवादपि सविकल्पस्मृतिसम्भवः ❀

स्मृतेरनुभवाकारानुकारित्वान्निर्विकल्पकानुभवे सविकल्पकाकारानुकारिणी स्मृतिरयुक्तेति चेत्, न; निर्विकल्पकानुभवेऽपि सहकारिसामर्थ्याद्भावसामान्यस्थूलत्वदीर्घत्वादिषु सविकल्पकाकारायाः स्मृतेर्दृष्टत्वात् । दृष्टानुमितानां हि नियोगः प्रतिषेधो वा न युक्त इति ।

## ❀ जरन्नैयायिकानामुपमानम् ❀

संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरुपमानार्थं इत्यपरे[1]—क्वचिद्यागविशेषे गवयस्योपयोगं श्रुत्वा तदर्थी कश्चिद् 'यादृशो गौस्तादृशो गवयः'—इति वनेचरवाक्यं श्रुत्वा गवयान्वेषणे प्रवृत्तोऽटव्यां वृत्तकण्ठं गोसदृशं चार्थं दृष्ट्वा अयं गवय इति प्रतिपद्यते । एवं [2]यथा माषस्तम्बः तथा माषपर्णी, यथा मुद्गस्तम्बः तथा मुद्गपर्णीति वाक्यं श्रुत्वाऽऽहितसंस्कारः तत्सादृश्यं दृष्ट्वा तामोषधीं प्रतिपद्य भैषज्यायाहरत्येवमन्योऽप्युपमानस्य विषयो लोकतो बुभुत्सितव्य इति । तत्र वाक्यजज्ञानजनितसंस्कारजनितस्मृतिसहकारिणेन्द्रियेण जनितं सारूप्यज्ञानमुपमानं, संज्ञासंज्ञिसम्बन्धश्च प्रतिपत्तिः तत्फलमिति ।

## ❀ तत्खण्डनम् ❀

तदपि अयुक्तम्, यतः संज्ञिसम्बन्धप्रतिपत्तिः प्रागेवाप्तवचनादुत्पन्ना,

---

१. अपरे=भाष्यकारादयः, तथा चोक्तम्—"समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थः" ( न्या० भा० १।१।६ ) ।

२. "यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णी—इत्युपमाने प्रयुक्ते उपमानात् संज्ञासंज्ञिसम्बन्धं प्रतिपद्य तामोषधीं भैषज्यायाहरति । एवमन्योऽपि उपमानस्य लोके विषयो बुभुत्सितव्य इति" ( न्या० भा० १।१।६ ) इत्येवं भाष्ये तद्वार्तिकादौ विस्तरः ।

गवयदर्शने तत्स्मृतिरेवेति। तथा हि—कथं जानीषेऽयं गवय इत्येवं पृष्टः केनचिद्, वनेचरकवचनादवगतो मयेत्येवमेवोत्तरमभिधत्ते, न तूपमानेन जानामीति।

## ❀ पृथगनिर्देशादपि तस्य प्रमाणान्तरताऽसिद्धिः ❀

तथा हि—यथा प्रत्यक्षेण घटं पश्यामि, धूमेनाग्निं जानाम्यागमेन स्वर्गमवगच्छामीति प्रमाणत्रयनिर्देशं सर्वत्र व्यवहारिणः कुर्वन्त उपलभ्यन्ते, न त्वेवमुपमाननिर्देशं प्रतिपत्तारः क्वचित्कुर्वन्तो दृश्यन्ते, तस्मान्नोपमानं प्रमाणान्तरमस्ति।

## ❀ अदृष्टे संज्ञिन्यपि संज्ञाप्रतिपत्तिः ❀

अदृष्टे गवये संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरयुक्तेति चेत्, न; अप्रत्यक्षेऽपि शक्रादौ तत्प्रतिपत्तिदर्शनात्। संज्ञाकारणमपि क्वचिदप्रत्यक्षे पुत्रादौ दृष्टं, किमुत तद्ग्रहणमिति? निमित्ताभावादयुक्तमिति चेत्—स्यादेतत्—यथा शक्रादौ नेत्रसहस्रादिकं संज्ञाग्रहणे निमित्तमस्ति, नैवं गवयादिष्विति। न; अत्रापि गवादिसादृश्यं निमित्तमुपादाय गवयादिसंज्ञा व्युत्पाद्यते। गवयत्वमेव गवयसंज्ञाप्रवृत्तौ निमित्तं तदग्रहणे कथं तत्संज्ञाप्रवृत्तिरिति चेत्, ननु गवयत्वमपि तत एव वाक्यात् प्रतिपद्यते।

## ❀ चित्रलेखादिवन्नोपमानं प्रमाणान्तरम् ❀

यथा चित्रलेखाद्याकृतिं प्रदर्श्य कश्चिद् व्युत्पादयति—इत्थंभूत उष्ट्रः, इत्थंभूतो गज इति। यद्वा ग्रीवादिपरिमाणविशेषाभिधानेनोष्ट्रं, दन्तादिपरिमाणविशेषाभिधानेन गजं च व्युत्पादयति। व्युत्पाद्यमानस्तु तदा वाक्यादेवोष्ट्रत्वगजत्वेऽपि प्रतिपद्यते। न हि ग्रीवादन्तादिविशेषद्वारेणोष्ट्रगजादिसंज्ञाव्युत्पादने तद्व्युत्पत्तिर्न भवति, प्रमाणान्तरं वा तत्र सम्भवति।

## ❀ अनुपप्लुतप्रतिपत्तिरुपमानमितिमतनिरासः ❀

ननु वाक्यादुपप्लुता प्रतिपत्तिरासीदुपमानात्तु संज्ञिविशेषावच्छेदेन व्यवस्थिता भवतीति, कोऽयमुपप्लवः? न तावद् भ्रान्तिः, कालान्तरादिष्वबाध्यमानत्वात्। नापि संशयः, स्थाणुपुरुषवद् विकल्पात्मकत्वाननुभवात्। गोसदृशो गवयः इत्यस्याः प्रतीतेः सन्देहत्वे विपर्ययत्वे वा तन्मूलोपमानस्यापि तथात्वप्रसंगः। प्रमाणत्वे चास्याः कथमुपप्लवः? संज्ञिविशेषानिष्टत्वम्

**अस्य गवयशब्दः संज्ञेति प्रतिपत्तावुपमानसिद्धिः, तथा शब्दाऽश्रवणादिति चेत्, एवं तर्हि गौरयमित्येवं संकेते कृतेऽस्य गोशब्दः संज्ञेति प्रतिपत्तौ प्रमाणान्तरं वाच्यं, समानन्यायत्वात्। गोपिण्डान्तरेऽपि संकेतग्रहणे प्रमाणान्तराभिधानप्रसङ्ग इति। तथा शब्दानभिधानेऽपि**

---

उपप्लव इति चेत्, न; आत्मान्तःकरणाणुधर्माधर्मादिप्रतीतेरुपप्लुतत्वप्रसंगात्। न हि तत्रापि अयमात्मा, इदं मनः, अयमणुः, अयं धर्म इत्येवंप्रकारा प्रतीतिरनुमानादागमाद्वा भवति। किं तर्हि? यत्रेच्छादयः समवेताः, स आत्मा; यतो युगपद् ज्ञानानुत्पत्तिः, तन्मनो; यतोऽल्पतरं नास्ति, स परमाणुरित्येवंप्रकारा प्रतीतिर्भवति। तथा चास्याः प्रतीतेः को विशेषो येनोभयोरुपप्लुतत्वमनुपप्लुतत्वं वा नोच्यते?

## * यथा गौस्तथा गवय इति वाक्यानुरोधादपि नोपमानं प्रमाणान्तरम् *

ननु यत्र गोसादृश्यमस्ति स गवयः, तस्य गवयसंज्ञा वेत्येवं संकेते कृते मा भूदुपमानं प्रमाणान्तरम्, यदा तु यादृशो गौस्तादृशो गवयः— इति वाक्यं, तदा ततः सादृश्यमात्रं प्रतिपन्नं न संज्ञासंज्ञिसम्बन्धस्तेन तदर्थमुपमानमिष्यते। यदि वाक्यान्न सम्बन्धः प्रतिपन्नः, अनर्थकं तर्हि वाक्यं, सादृश्यमात्रं हि गोस्मृतिसहितेन अश्रुतवाक्योऽपि चक्षुषा प्रतिपद्यते, न च ततः सम्बन्धप्रतीतिः। तस्माद् यादृशो गौस्तादृशो गवयः, तादृशो गवयसंज्ञकः, तादृशस्य गवयसंज्ञेत्येक एवार्थः प्रतीयते। यथेच्छादिलिंग आत्मा, इच्छादिलिंगस्यात्मसंज्ञेत्येवमादिवाक्यैः संज्ञासंज्ञिसम्बन्ध एव व्युत्पाद्यते। अन्यथा गौरयमित्येवं संकेते कृतेऽस्य गोशब्दः संज्ञेतिप्रतिपत्तेरत्र प्रमाणान्तरं वाच्यं समानन्यायत्वात्।

## * अस्य गवयशब्दः संज्ञेति विशेषप्रतिपत्त्यर्थमुपमानमित्यपि न *

स्यादेतत्—अस्य गवयशब्दः संज्ञेति विशेषप्रतिपत्तिर्न पूर्वं वाक्यादुत्पन्नेति तदर्थमुपमानमिष्यते, एवं तर्हि गौरयमित्येवं वाक्यादन्योऽप्येवंभूतो गौरिति प्रतिपत्तिर्न जातेति तत्रापि प्रमाणान्तरं वाच्यम्। किं च पिण्डान्तरेऽस्य गोशब्दः संज्ञेति प्रतीतिर्न पूर्ववाक्यादुत्पन्नेति प्रतिपिण्डं संज्ञासंज्ञिसम्बन्धप्रतिपत्त्यर्थं प्रमाणान्तरं वक्तव्यम्। तथा शब्दानभिधानेऽपि प्रतिपादकप्रति-

प्रतिपादकप्रतिपत्त्रोरेवमेवाभिप्रायः—ईदृशस्य सर्वस्य गोशब्दः संज्ञेति । सामर्थ्यादेवं प्रतिपत्तिरिति चेत्, समानमेतदत्रापि गोसदृशो गवय इति शब्दादुभयोरेवमेवाभिप्रायो गोसदृशस्यार्थस्य गवयशब्दः संज्ञेति सामर्थ्यादेवं प्रतिपत्तिः ।

न च प्रत्यक्ष एवार्थे संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरप्रत्यक्षेऽपि शक्रादौ संज्ञासंज्ञिसम्बन्धप्रतिपत्तिदर्शनात् सूत्रविरोध इति चेत्, न; प्रमाणनिग्रहस्थानाभ्यां दृष्टान्तहेत्वाभासादीनामिव प्रयोजनवशेन पृथगभिधानात् ।

---

पत्त्रोरेवमेवाभिप्रायः—ईदृशस्य सर्वस्य गोशब्दः संज्ञेतिसामर्थ्यात् त्वेवं प्रतिपत्तिरिति चेत्, समानमेतदत्रापि – गोसदृशो गवय इति शब्दादुभयोरेवमभिप्रायो गोसदृशस्यार्थस्य गवयशब्दः संज्ञेति सामर्थ्यात्त्वेवं प्रतिपत्तिरिति लोके हि प्रस्तावविशेषादन्यथाभिप्रायेऽपि अन्यथोक्तिर्दृश्यते, यथा—विषं भुङ्क्ष्व, माऽस्य गृहे भुङ्क्ष्वेति । तेनान्यथोक्तावपि प्रतिपत्तुर्वक्त्रभिप्रायाऽव-गतिर्भवति । सामर्थ्याद्वेति—सामर्थ्यमर्थापत्तिर्यादृशो गौस्तादृशो गवय इत्युक्तेऽर्थादापद्यते—गोसदृशस्य गवयसंज्ञेति । प्रतिभा वा सामर्थ्यशब्देनोक्ता अथवोहः, शक्तिर्वा । तेन गौरयमिति संकेतेऽपि सर्वस्य गोजातीयसंज्ञा प्रति-पद्यते । गवयसंज्ञा च गोसादृश्यविशिष्टस्य, यथा गौस्तथा गवय इत्यभिधानेऽपीति ।

## ❀ सूत्रविरोधपरिहारः ❀

यद्युपमानं न प्रमाणान्तरं ततः "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" (न्या० सू० १।१।३) इत्यत्र सूत्रं किमर्थं पृथगुक्तम्? नैष दोषः; [१]प्रमाणनिग्रहस्थानाभ्यां दृष्टान्तहेत्वाभासादीनामिव प्रयोजनवशेन पृथग-भिधानात् । विभागसूत्रमेव न्यूनाधिकसंख्याव्यवच्छेदार्थं, न दण्डकसूत्रमिति चेत्, न; प्रागेव घ्राणादिसूत्रेण व्यभिचारित्वप्रतिपादनात् त्रिविधं प्रमाणमित्यत्र।

## ❀ उपमानस्य पृथगभिधाने सूत्रकारस्य प्रयोजनम् ❀

जातिनिग्रहस्थानविभागसूत्रयोश्च न चतुर्विंशतिसंख्यानियमोऽस्ति—इत्यु-

---

१. यथा दृष्टान्तः प्रमाणान्तर्भूतोऽपि पृथक् कथितः? कस्मात्? तदाभासेभ्यो विविच्य निदर्शयितुम् । यथा च हेत्वाभासा निग्रहस्थानान्तर्गता अपि पृथगभिहिताः स्वरूपविशेषव्युत्पादनाय, तथोपमानं प्रमाणत्रयान्तर्भूतमपि पृथगभिहितमिति भावः ।

**तर्हि प्रयोजनं वाच्यम्, उच्यते—शब्दप्रामाण्यसमर्थनं प्रयोजनम्। कथम्? केचिदाहुः—प्रत्यक्षानुमानविषयत्वे शब्दस्यानुवादकत्वमेव। तदविषयत्वे सम्बन्धाग्रहणादवाचकत्वम्। पदार्थस्याप्रसिद्धत्वान्न पदेन सम्बन्धग्रहणमितरेतराश्रयत्वात्। वाक्यार्थस्तु प्रसिद्धार्थानां पदानामन्वयमात्रमिति। तन्निराकरणार्थमुपमानं निदर्शनार्थत्वेन पृथगुक्तम्।**

**यथा कार्यार्थिनोऽप्रसिद्धगवयस्य प्रसिद्धगोसादृश्यमुपादायोपमाना-**

---

क्रम्। तस्माद् यथा जातीनां कासांचित् पृथगभावेऽप्युक्तिभेदेन सम्मोहो मा भूत् इत्येतदर्थं तद्दूषणप्रकारव्युत्पत्त्यर्थं च पृथगभिधानम्, तथोपमानस्य प्रयोजनवशेन पृथगभिधानम्। तत्तर्हि प्रयोजनं वाच्यम्, तदुच्यते—शब्दप्रामाण्यसमर्थनं प्रयोजनम्।

परीक्षायां "मन्त्रायुर्वेदसूत्रेण" "न, कर्मकर्तृत्वसाधनवैगुण्यात्" (न्या० सू० २।१।५८) इत्यादिना च शब्दप्रामाण्यसमर्थनं कृतं, न च तत्रोपमानस्योपयोगः श्रूयत इति, न; तत्रानृतत्वादिदोषपरिहारेण शब्दविशेषस्य प्रामाण्यं समर्थितम्। उपमानस्य पृथगभिधानेन त्वन्यथाक्षेपपरिहारेण शब्दप्रामाण्यं समर्थ्यते। कथम्?

## ❀ केषांचिच्छब्दप्रामाण्याक्षेपः ❀

केचिदाहुः—प्रत्यक्षानुमानविषयत्वे शब्दस्यानुवादकत्वमेव, न प्रामाण्यम्। तदविषयत्वे च सम्बन्धाग्रहणादवाचकत्वं, तथा हि—पदार्थस्य प्रत्यक्षानुमानाभ्यामप्रसिद्धत्वान्न पदेन सम्बन्धग्रहणम्। शब्देन चेत् पदार्थप्रसिद्धिः, किं तेनैव? पदान्तरेण वा? यदि तेनैव, तदेतरेतराश्रयत्वप्रसंगः। पदान्तरेणापि पदार्थप्रसिद्धौ तुल्यो दोषोऽनवस्थाप्रसंगश्च। अथ वाक्यार्थे पदवचनाद्—वाक्येनार्थमभिधाय तत्र पदं संकेत्यते।

तदप्ययुक्तम्; यस्माद् वाक्यार्थस्तु प्रसिद्धार्थानां पदानामन्वयमात्रम्। प्रसिद्धाश्च ते अर्थाश्च प्रसिद्धार्थास्ते एव पद्यन्त इति पदानि। तेषामन्वयमात्रं वाक्यस्यार्थः। अथवा प्रसिद्धा अर्था येषां, तानि प्रसिद्धार्थानि पद्यन्त एभिरिति पदानि, तेषामन्वयमात्रं वाक्यमेवार्थो वाक्यार्थः। वाक्यादपि नाप्रसिद्धोऽर्थः प्रतिपत्तुं शक्यते इत्यन्वयमात्रमित्युक्तम्। तस्मान्न शब्दस्य प्रामाण्यम्—इत्येवं कैश्चिदाक्षेपे कृते—

## ❀ तन्निरासार्थमुपमानप्रतिपादनस्योपयोगः ❀

तन्निराकरणार्थमुपमानं निदर्शनार्थत्वेन पृथगुक्तम्। यथा—कार्यार्थि-

**ख्येन वाक्येन संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः क्रियते। तथा किञ्चिन्निमित्तमुपादाय शक्रादिपदपदार्थयोरपीति। तस्मादन्यार्थत्वान्न सूत्रविरोधः। परीक्षा त्वर्थापत्तिवत्प्रमाणस्य सतः प्रमाणेष्वन्तर्भावज्ञापनार्थम्।**

---

नोऽप्रसिद्धगवयस्य प्रसिद्धं गोसादृश्यमुपादायोपमानाख्येन वाक्येन संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः क्रियते, तथा किंचिन्निमित्तमुपादाय शक्रादिपदपदार्थयोरपीति। न च दृष्टेऽप्यनुपपन्नता नाम। दृश्यते हि प्रत्यक्षाद्यप्रसिद्धेऽप्यर्थे सादृश्यादिनिमित्तमुपादाय वाक्येन पदसम्बन्धप्रतीतिः क्रियमाणा, तस्मान्नाप्रत्यक्षाद्यविषयत्वे शब्दस्यावाचकत्वेन प्रामाण्यम्। प्रत्यक्षानुमानविषयत्वेऽपि नानुवादकत्वादप्रामाण्यं सम्प्लवप्रतिपादनात्, प्रकरणाद्यपेक्षस्य विशिष्टार्थप्रतिपादकत्वाच्च। तथा चैतद् वाक्यविचारे प्रपञ्चितम्। तस्मादन्यार्थमुपमानस्योद्देशसूत्रे पृथगभिधानमतो न सूत्रविरोधः।

### ❀ लक्षणसूत्रादप्युपमानस्य न प्रमाणान्तरता ❀

पृथगुपदिष्टस्याप्यलक्षितस्य सप्रयोजनत्वमन्तर्भावो वा सुखेन ज्ञातुं न शक्यत इत्यतो लक्षणमप्युक्तम्—"प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्" (न्या० सू० १।१।६) इति। प्रसिद्धात् प्रज्ञातात् साधर्म्यान्निमित्ताद् यद्वाक्यं निष्पद्यते यथा गौस्तथा गवय इत्यादिकं, तदेव साध्यसाधनमुपमानं साध्यस्य संज्ञासंज्ञिसम्बन्धस्य साधनं ज्ञापकम्।

अथवा संज्ञासंज्ञिसम्बन्धविषयज्ञानं साध्यं, तस्य साधनं निष्पादकं वाक्यमुपमानम्। एवं च लक्षणसूत्रादपि न शब्दव्यतिरिक्तमुपमानं प्रतीयते। न चैवं व्याख्याने दोषोऽस्ति, येनान्यथा व्याख्यानं क्रियते। लोकेऽपि हि उपमीयतेऽनेनेत्युपमानं वाक्यमेव प्रसिद्धम्।

### ❀ परीक्षातोऽपि न प्रमाणान्तरता ❀

परीक्षातोऽप्येतद् व्याख्यानं निश्चीयते। तथा हि—पूर्वपक्षसूत्रं तावद्—"अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः" (न्या० सू० २।१।४४)। अत्यन्तसाधर्म्यात्तावन्नोपमानं सिध्यति, न हि भवति—यथा गौस्तथा गौरिति। प्रायसाधर्म्यादप्यसिद्धिः, न हि भवति—यथानड्वानेवं महिष इति। एकदेशसाधर्म्यादप्यसिद्धिः, न हि सर्वेण सर्वमुपमीयत इति।

अत्रोत्तरसूत्रम्—"प्रसिद्धसाधर्म्यादुपमानासिद्धेर्यथोक्तदोषानुपपत्तिः" (न्या० सू० २।१।४५)। यद्यत्यन्तप्रायैकदेशसाधर्म्यादुपमानस्यासिद्धिः तदान्यथा-

सिद्धिर्वाच्या । अथान्यथाप्यसिद्धिस्तदोपमानसिद्धिरेवेति वाच्यम् । तदपि दृष्टिविरुद्धम्, "प्रसिद्धसाधर्म्यादुपमानसिद्धेः" (न्या० सू० २।१।४५)। सर्वथापि दृष्टत्वात्—[1]तत्रात्यन्तसाधर्म्यात्—तत्क्रिययैव तत्क्रियान्तरमुपमीयते, यथा रामरावणयोर्युद्धं रामरावणयोरिव इति। प्रायः साधर्म्यादपि—गवा गवयस्योपमानम्। महिषस्य त्ववयवरचनादिसाधर्म्यं तदप्रसिद्धम्, तेन न तस्योपमानम्। यस्य तु रूपेण बलेन वा साधर्म्यं प्रसिद्धं, तस्य भवत्येवोपमानम्—यादृग्रूपी यादृग्बली वायं गौः, तादृशोऽसौ महिष इति। एकदेशसाधर्म्यादपि—यथा रूपमात्रजिज्ञासायां यादृशः सर्षपः, तादृशो मेरुरिति। तस्मादत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिरित्यनुपपन्नोऽयं दोषः। तदेवं परीक्षातोऽपि शब्दविशेष एवोपमानमिति गम्यते। यद्येवं शब्दपरीक्षातोऽस्य पृथक् परीक्षा न युक्ता, न; अन्तर्भावेप्यर्थापत्त्यभावयोः पृथक् परीक्षाकरणात्। प्रमाणस्य सतः प्रमाणे अन्तर्भावज्ञापनं पृथक्परीक्षायाः प्रयोजनम्। पृथगुद्देशेऽस्य प्रयोजनमुक्तम्, तदप्यपरीक्षितस्य नोपपद्यते। अतश्च नायुक्ता पृथक् परीक्षापि।

## ❀ अन्तर्भावनिषेधोऽनुमानविषयः ❀

अन्तर्भावस्तु अनुमान एवास्य प्रतिषिद्धो न त्वागमेऽन्तर्भावप्रतिषेधो यथा—श्रुतोप्यस्ति। तथा च पूर्वपक्षसूत्रम्—"उपमानमनुमानं प्रत्यक्षेणाप्रत्यक्षसिद्धेः" (न्या० सू० २।१।४६)। यथा प्रत्यक्षेण धूमेनाप्रत्यक्षस्याग्नेः सिद्धिः, तथा प्रत्यक्षेण गवाऽप्रत्यक्षस्य गवयस्य सिद्धिस्तस्माद् अनुमानमेवोपमानम्। अत्र प्रतिसमाधानसूत्रं कंठोक्तं नास्ति, अभिप्रायतस्त्वस्ति; यतस्तदभिप्रायमाशंकते परः—"परार्थमुपमानमिति चेत्" (न्या० भा० २।१।४७), यदविनाभावित्वेन परोक्षार्थसाधकं, तदनुमानमुक्तम्; न चोपमानं पक्षधर्मत्वादिबलेन प्रवर्तते, किं त्वाप्तप्रामाण्यबलेन। प्रसिद्धोभयोः प्रसिद्धोभयस्य परस्य

---

१. वार्तिकेऽप्यभिहितम्—"अत्यन्तसाधर्म्यादप्युपमानं सिध्यति—तत्क्रिययैव तत्क्रियोपमीयते, यथा—रामरावणयोर्युद्धं रामरावणयोरिवेति। भूयःसाधर्म्येणापि भवति, यदा गोर्बलप्रकर्षजिज्ञासा भवति, तदा भूयःसाधर्म्येणोपमानम्—यथा महिषस्तथा गौरिति। एकदेशसाधर्म्यादपि—यदा तु सन्मात्रं जिज्ञासानिमित्तं भवति—मेरोः सत्ता किंरूपेति? तदेदम्—यथा सर्षपस्य, तथा मेरोरिति" (न्या० वा० २।१।४५)।

चतुष्ट्वाभिधानं सूत्रे पञ्चत्वादिनिराकरणार्थं, न त्रित्वप्रतिषेधार्थम्; प्रमाणसिद्धत्वादन्तर्भावस्य। त्रित्वानभिधानादयुक्तमिति चेत्, न; अस्य सूत्रकारस्यैवंस्वभावात्—यत् स्वसिद्धान्तमपि क्वचिन्नाभिधत्ते। यथा कृत्स्नैकदेशविकल्पादिना अवयविनिराकरणे शिष्याणामूहातिशययुक्ता-

प्रतीत्यर्थं तत्प्रसिद्धसाधर्म्यमुपादायोपमानं प्रवर्तयतीत्येवं चेत् मन्यसे, एवं सूत्रकाराभिप्रायमाशंक्य परः प्रतिषेधमाह—"न, स्वयमप्यस्याध्यवसायात्" (न्या० भा० २।१।४७)। वक्तुरप्युपमानवाक्यादध्यवसायो भवत्येव, तस्मान्न परार्थमेवोपमानम्। अत्रापि चोद्यस्यासारतां मन्यमानः सूत्रकृन्न किञ्चिदप्युक्तवान्। न[1] हि वक्तुरध्यवसायो न भवतीत्युच्यते, किन्तु तस्य तदुपमानं न भवति। तदर्थस्य तेनान्यत एव प्रतिपन्नत्वान्न चासावात्मप्रतिपत्त्यर्थं वाक्यमुच्चारयति, किं तु परार्थमेव। नन्वनुमानवाक्यमपि परार्थमेवोच्चार्यते, ततस्तेन सहोपमानस्याविशेष इत्याह—"तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः" (न्या० सू० २।१।४८)। उपमानं हि यथा गौस्तथा गवय इत्येवमेवोपसंह्रियते, न त्वनुमानवदत्र पक्षधर्मत्वाद्यप्युच्यते, न चानुमानं यथा धूमस्तथाग्निरित्येवं प्रवर्तते; तस्मान्न परार्थानुमानेनाप्युपमानस्याविशेषः। तदेवमागमविशेष एवोपमानं परीक्षासूत्रेभ्योऽपि प्रतीयते।

## ❀ चतुष्ट्वपरीक्षाविरोधपरिहारः ❀

चतुष्ट्वपरीक्षाविरोध इति चेत्, न; पञ्चत्वाद्याशंकानिराकरणार्थत्वात्। तथा च "न, चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्" (न्या० सू० २।२।१) इत्यनेनाधिक्यमेव पूर्वपक्षितम्। तस्यैव च प्रतिषेधमाह—"शब्दैतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः" (न्या० सू० २।२।२) इति। यथेन्द्रियपञ्चत्वपरीक्षायां न्यूनत्वमेव प्रतिषिद्धमित्याधिक्याभ्युपगमः प्रमाणसिद्धत्वान्न विरुध्यते, तथा प्रमाणानामाधिक्यमेव प्रतिषिद्धमतः त्रित्वाभ्युपगमः प्रमाणसिद्धत्वान्न विरुध्यते। चतुष्ट्वव्यवहारोऽपि पदार्थषोडशत्वेन्द्रियपञ्चत्वजातिचतुर्विंशतित्वादिव्यवहारवद् द्रष्टव्यः।

ननु यदि सूत्रकारस्य शब्देऽन्तर्भूतमुपमानं विवक्षितं, तदा किमर्थमैतिह्यवदन्तर्भावो नाभिहितः? त्रित्वं वा प्रमाणानां किं न क्वचिदुक्तम्? न; अस्य सूत्रकारस्यैवंस्वभावत्वात्—यत्सिद्धान्तमपि क्वचिन्नाभिधत्ते शिष्याणामूहादि-

१. तात्पर्यटीकायामपि—"सिद्धान्तवाद्याह—नाध्यवसाय उच्चारयितुः प्रतिषिध्यते, उपमानमुच्चारयितारं प्रति न भवति" (न्या० वा० ता० २।१।४७)।

**नामेवात्राधिकार इति ज्ञापनार्थम्। तस्मात् स्थितमेतत्—उपमानं शब्देऽन्तर्भूतम्। अर्थापत्तेरप्यनुमान एवान्तर्भावोऽविनाभावबलेनार्थ-प्रतिपत्तिसाधनत्वात्। अन्यथा नोपपद्यत इत्युक्ते, सत्येवोपपद्यत इति लभ्यते। अयमेवाविनाभाव इति।**

शक्त्यतिशययुक्तानामेव प्रधानतोऽत्राधिकार इति ज्ञापनार्थम्। यथेन्द्रियाणां षट्त्वं नोक्तमथ च तदभिप्रेतम्, तथा चादिमत्त्वादीनां [1]हेतूनां [2]"घटाभाव-सामान्यनित्यत्वादित्यादिना व्यभिचारे कृते, भाष्यकारः स्वयं परिहारमभिधाय "कस्मात् पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयते" (न्या० भा० २।२।१७) इत्यनुयुज्य इदमाह—"शीलमिदमस्य भगवतः सूत्रकारस्य बहुष्वधिकरणेषु द्वौ पक्षौ न स्थापयति, शास्त्रसिद्धान्तात्तत्त्वं प्रतिपत्तुमर्हतीति मन्यते। शास्त्र-सिद्धान्तस्तु न्यायसमाख्यातमर्थगतं बहुशाखमनुमानमिति" (न्या० भा० २।२।१७)। तथा "विद्याऽविद्याद्वैविध्यात् संशयः" (न्या० सू० ४।२।४), "तदसंशयः पूर्वहेतुप्रसिद्धत्वात्" (न्या० सू० ४।२।५) इत्यभिधाय "कृत्स्नैक-देशावृत्तित्वात्" (न्या० सू० ४।२।७) इत्यादिनाऽवयव्यादिकं निराकृत्य सूत्रकारस्तत्समर्थनार्थं सूत्रं नोक्तवान्, न चैतावताऽवयव्यादेरसिद्धिः। प्रदीप-स्थानीयानि च प्रमाणान्यादौ यत्नेन प्रतिपादयन्नेतज्ज्ञापयति—अनुक्तमप्येभिः परीक्ष्य प्रतिपत्तव्यमिति। यदि पुनः सूत्रोक्तमात्रसिद्धमेव ग्राह्यमिति, तदा परीक्षां न कुर्यात्। तस्मात्सूत्रोक्तमपि परीक्ष्य प्रतिपत्तव्यम्। परीक्षितं च यथोपमानस्य प्रमाणान्तरत्वं न सम्भवतीति। तस्मात् स्थितमेतत्—उपमानं शब्देऽन्तर्भूतमिति।

## ❀ अर्थापत्तेरनुमानेऽन्तर्भावप्रतिज्ञा ❀

अर्थापत्तेरप्यनुमानेऽन्तर्भावोऽविनाभावबलेनार्थप्रतिपत्तिसाधनत्वात्।

## ❀ भाट्टसम्मताऽर्थापत्तिः ❀

केयमर्थापत्तिः ?

प्रमाणषट्कविज्ञातो यत्रार्थोऽन्यथाभवन्।
अपूर्वं कल्पयेदर्थं साऽर्थापत्तिरुदाहृता॥ (श्लो० वा० अर्था० १)

---

१. "आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च" (न्या० सू० २।२।१३) इतिसूत्रोपात्तानां शब्दानित्यत्वसाधनानामित्यर्थः।

२. "न, घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च" (न्या० सू० २।२।१४) इति समग्रं सूत्रम्।

तत्राग्निसम्बन्धादनन्तरं विस्फोटादिकार्यं प्रत्यक्षेण दृश्यते, तदन्यथानुपपत्त्या अग्नेर्दाहिकाशक्तिप्रतिपत्तिः प्रत्यक्षपूर्विकाऽर्थापत्तिः[1] । सामान्येऽनुमिते तदन्यथाऽनुपपत्त्या विशेषप्रतिपत्तिरनुमानपूर्विकाऽर्थापत्तिः । शब्देन च सामान्येऽवगते तदन्यथानुपपत्त्या विशेषप्रतिपत्तिः शब्दपूर्विकाऽर्थापत्तिः । उपमानेन विशिष्टगोप्रतीतौ तदन्यथानुपपत्त्या वाहदोहादिसामर्थ्यप्रतिपत्तिरुपमानपूर्विकाऽर्थापत्तिः । रूपज्ञानान्यथानुपपत्त्या चक्षुषि प्रतिपन्ने तदन्यथानुपपत्त्या ज्ञानजननशक्तिप्रतिपत्तिरर्थापत्तिपूर्विकार्थापत्तिः । जीवतः पुंसो गृहेऽभावान्यथानुपपत्त्या बहिर्भावप्रतिपत्तिरभावपूर्विकाऽर्थापत्तिरिति ।

## ॐ तस्याः प्रमाणान्तरत्वखण्डनम् ॐ

अत्राहुः—संयोगविशेषोऽग्नेर्दाहिका शक्तिः, सा च प्रत्यक्षेणैव गृह्यते । तत्रार्थापत्तिरनर्थिका । अनुमानपूर्विका चार्थापत्तिः प्रागेव निरस्ता, तद्वतोरेवाविनाभावो गृह्यते इत्यत्र तद्वतः शब्दार्थसमर्थने शब्दपूर्विकाप्ययुक्तोपन्यस्ता । उपमानस्याप्रमाणान्तरत्वे तत्पूर्विकाप्ययुक्ता । तथाऽभावपूर्विकापि, अभावस्य वक्ष्यमाणन्यायेन प्रमाणान्तरत्वानुपपत्तेः ।

बहिर्भावप्रतिपत्तिः कुत इति चेत्, अनुमानात् । तथाहि—बहिर्देशे तिष्ठति देवदत्तो, जीवनसम्बन्धित्वे सति गृहेऽनुपलभ्यमानत्वात्, तदन्यपरिदृष्टपुरुषवत् । जीवनसम्बन्धित्वासिद्धौ चार्थापत्तिरपि न स्यात्, तथैकत्र स्थितस्य पुंसोऽन्यत्राभावप्रतिपादिकाप्यर्थापत्तिरनुमानमेव । तथा हि—विवादविषयाः सर्वे देशाः देवदत्तशून्याः, देवदत्ताऽवष्टब्धदेशव्यतिरिक्तत्वात्, तत्सन्निहितदेशवत् । देवदत्तावष्टब्धास्ते देशाः, तत्सन्निहितदेशव्यतिरिक्तदेशत्वादिति प्रत्यनुमानमिति चेत्, नेदं साधीयः, चन्द्रादिदेशेनानैकान्तिकत्वादविसंवादिवचनबाधितत्वाच्च । तथाऽयं देवदत्तो रात्रिभोजी, दिवाभोजनरसायनादिसिद्धिरहितत्वे सति पीनत्वादुभयप्रतिपन्ननक्तभोजिवत् । विशेषणासिद्धौ चार्थापत्तेरप्यनुपपत्तिः । चक्षुषस्तज्ज्ञानजननशक्तिप्रतिपत्तिरनुमितानुमानम्, क्रियात्वेन करणानुमानं, करणत्वेन शक्त्यनुमानमिति । ननु च शक्तिः क्वचिदपि न प्रत्यक्षा, तदुक्तम्—

---

१. तदुक्तं वार्तिके—

तत्र प्रत्यक्षतो ज्ञानाद् दाहाद् दहनशक्तता ।
वह्नेरनुमता सूर्ये यानात् तच्छक्तियोग्यता ॥ (श्लो॰ वा॰ अर्था॰ ३)

यत्र सामान्याकारेणाप्यन्वयग्रहणं नास्ति, यथा मुख्यकारणत्वा-

[1]"शक्तयः सर्वभावानां कार्यार्थापत्तिगोचराः" इति। अनुमानेनैवाऽविनाभावसिद्धावनवस्थाप्रसंगः। तस्मान्न शक्तिप्रतिपत्तिरानुमानिकीति। यद्यविनाभावेन शक्तिर्न गृह्यते, तदार्थापत्त्यापि सा पिशाचादिवत् कथं गम्यते? यतोऽन्यथा नोपपद्यत इत्युक्ते, सत्येवोपपद्यत इति लभ्यते— अयमेव चाविनाभावः, अन्वयव्यतिरेकरूपत्वात्। न हि एवमुपपत्त्यनवगमेऽन्यथानुपपत्तिरवगन्तुं शक्यते। तदुभयावगमे च गृहीतोऽविनाभाव इति।

## ❀ शक्तिसाधिकाऽर्थापत्तिरेवेतिमतनिरासः ❀

यत्र सामान्याकारेणाप्यन्वयग्रहणं नास्ति, तत्रार्थापत्तिः प्रमाणान्तरमिति चेत्, न; उदाहरणाभावात्। ननु शक्तिरेवोदाहरणम्, न; शक्तेः संयोगादिरूपत्वेन क्वचित्प्रत्यक्षत्वात्। तथा हि—यद्यव्यतिरिक्ताऽग्न्यादेर्दाहादिशक्तिः, तदाग्न्यादिप्रत्यक्षत्वादेव तत्प्रत्यक्षत्वमव्यतिरेकविरोधो वा। अथ व्यतिरिक्ता, सा दाहादिहेतुर्वा? न वा? यदि न हेतुः, कथं सा दाहादन्यथानुपपत्त्याऽवगम्यते? अतिप्रसंगात्। अथ तद्धेतुः, सा किं केवला? अग्न्यादिसहिता वा? केवला चेत्, नन्वग्न्यादीनामहेतुत्वं स्यात्ततश्च विपरीतैव हेतुकल्पना स्यात्। अथाग्न्यादिसहिता, नन्वेवं सहकारिकारणमेव शक्तिः, सहकारिकारणं च सर्वमतीन्द्रियम्। अथ न सर्वं सहकारिकारणं शक्तिः, किं तु विशिष्टम्। कोऽत्र विशेषः? यद्यजहद्वृत्तित्वं, तदाग्नित्वादिसामान्यमौष्ण्यादिगुणो वा शक्तिः। चरमत्वं विशेषः। एवमपि संयोगादेरन्या न शक्तिः। किं च शक्तिशब्दवाच्यसहकारिणः शक्तिरस्ति वा? न वा? यदि नास्ति, अव्यतिरिक्ता वा अस्ति; तदाग्न्यादेरप्यन्या शक्तिर्न वाच्या, तुल्यन्यायत्वात्। अथ शक्तेरप्यन्यास्ति शक्तिः, न तर्हि चरममेव सहकारिशक्तिः, चरमस्य चरमान्तराभावात्। तस्मादन्योऽन्यं कारकाणां सहकारिभाववच्छक्तिभावोपि द्रष्टव्य इति।

## ❀ प्रतिबन्धकादिनाऽपि नातिरिक्तशक्तिकल्पना ❀

ननु च मन्त्रादिप्रतिबन्धादग्निसंयोगे सत्यपि न दाहादिकार्यं दृश्यते। तस्मान्न सामान्यसंयोगादिसहकारिकारणं शक्तिरिति तदन्यशक्तिपक्षेऽपि

१. शक्तयोऽपि च भावानां कार्यार्थापत्तिकल्पिताः।
प्रसिद्धाः पारमार्थिक्यः प्रतिकार्यं व्यवस्थिताः॥ (श्लो० वा० शून्य० २५४)

प्रतिबद्धशक्त्योस्तत्रार्थापत्तिः पृथक् प्रमाणमिति चेत्, न; तस्यापि केवलव्यतिरेक्यनुमानादव्यतिरेकात्। केवलव्यतिरेक्यर्थापत्तिरिति संज्ञाभेदमात्रम्। अन्वयाभावान्नैतदनुमानमिति चेत्, न; केवलान्वयिनो व्यतिरेकाभावेन प्रमाणान्तरत्वप्रसङ्गात्। अपि च प्रत्यक्षादिभेदानां केनचिद् वैधर्म्येण प्रमाणान्तरत्वप्रसङ्गस्तस्मादविनाभावबलेनार्थप्रतिपादकत्वाविशेषादर्थापत्तिरनुमानमिति स्पष्टम्।

---

कस्मान्न दाहादिकार्यं भवति ? शक्तेः प्रतिबद्धत्वादिति चेत्, न; सामान्यात्—संयोगादिशक्तिपक्षेऽपि समानः प्रतिबन्धः।

तत्प्रतिबद्धत्वं तर्हि शक्तेः कार्यान्यथानुपपत्तिमन्तरेण कथं गम्यते ? न हि सर्वस्य दैवमनुष्यस्यमन्त्रध्यानौषधिप्रयोगस्य प्रतिबन्धकस्याभावो सर्वविदाध्यक्षेण क्वचिदवगन्तुं शक्यते। किं च जनकत्वमपि मुख्यं कारणस्य साकल्यम्, तच्चातीन्द्रियत्वात् न क्वचिद् दृष्टमिति अनुमानतोऽपि न गृह्यते। तस्मान्मुख्यकारणत्वाप्रतिबद्धशक्त्योः प्रतिपत्तिरर्थापत्तित एवेति, न; तस्या अपि केवलव्यतिरेक्यनुमानादव्यतिरेकात्। यत्र हि साध्यविशेषेणान्वयदृष्टान्ताप्रसिद्धौ विपक्षबाधकप्रमाणेन व्याप्यव्यापकभावः समर्थ्यते, तत्र व्यतिरेक्यनुमानमुक्तम्। अस्ति चैतद्रूपमत्रापि, तथा हि—यदि सर्वथाप्यप्रतिबद्धशक्तिकोऽग्निर्न स्यात् तदा दाहादि कार्यं न कुर्यात्; शक्तिप्रतिबन्धकार्यकर्तृत्वयोर्विरोधात्। मन्त्राद्यन्यतमेनापि प्रतिबन्धे कार्याकर्तृत्वदर्शनाद्विरोधावगमः।

शक्तेश्च योग्यताख्याया एव प्रतिबन्धो, न तु चरमायाः। कारकसाकल्यं हि चरमा शक्तिर्न च तस्याः प्रतिबन्धः सम्भवति, अनन्तरमेव कार्योत्पत्तेः। अनुत्पत्तौ वा न साकल्यम्—प्रतिबन्धाभावोऽपि हि कारणं, स च प्रतिबन्धे सति नास्तीति कथं साकल्यम् ? तस्माद्योग्यताख्याया एव शक्तेः प्रतिबन्धः सम्भवति। तेन च कार्योत्पत्तेर्विरोध इति कार्योत्पत्तिव्यतिरेकबलेन प्रतिबन्धकाभावं गमयति। तथैककारकवैकल्येऽपि कार्योत्पत्त्यदर्शनात्, सामस्त्ये सति कारणत्वं गम्यते। यदभावेऽपि कार्यमुत्पद्यते, तत्कारणमेव न भवति। यच्च कारणं तद्वैकल्येऽपि कथं कार्यं भवेत् ? इत्यतः कार्योत्पत्तिव्यतिरेकवलेन स्वहेतुसामस्त्यं गमयति। तस्मान्न केवलव्यतिरेकितोऽर्थापत्तिर्भिद्यते, अर्थापत्तिः केवलव्यतिरेकीति संज्ञाभेदमात्रम्। अन्वयाभावान्न तदाऽनुमानमिति चेत्, न केवलान्वयिनोऽपि व्यतिरेकाभावेन प्रमाणान्तरत्वप्रसंगात्।

अल्पसंख्याविषयत्वे बहुत्वसंख्याविषयत्वस्य सर्वत्रोपलब्धत्वान्नानुमानात् सम्भवो भिद्यते। अभावस्य त्रिष्वपि यथासम्भवमन्तर्भावः। तथाहि—कौरव्याद्यभावप्रतिपत्तिरागमात्। आत्मादिषु रूपाद्यभावप्रतिपत्तिरनुमानात्। भूतलादिषु घटाद्यभावप्रतिपत्तिः प्रत्यक्षादिन्द्रियव्यापारभावभावित्वात्। अन्यत्र तद्भावभावित्वं पर्यवसितमिति चेत्, न; रूपादिष्विव बाधकाभावात्।

---

अपि चाविनाभावबलेनार्थप्रतिपादकत्वमनुमानलक्षणमुक्तम्। तेन चार्थापत्तिः संगृहीता, कथं प्रमाणान्तरम्? अन्वयदृष्टान्ताभावस्त्ववान्तरवैधर्म्यमात्रं, तावतैव प्रमाणान्तरत्वे प्रत्यक्षादिभेदानामप्यवान्तरवैधर्म्यमस्तीति प्रमाणान्तरत्वप्रसंगः। तस्मादविनाभावबलेनार्थप्रतिपादकत्वादर्थापत्तिरप्यनुमानमिति स्थितम्।

## ❀ सम्भवस्याप्यनुमानेऽन्तर्भावकथनम् ❀

सम्भवोऽप्यविनाभावबलेनार्थप्रतिपादकत्वात्, अनुमानमेव। [1]द्रोणपूरणक्षमस्याढकपूर्णक्षमत्वप्रतिपत्तिः सम्भवः, सहस्रादिसंख्याविषयस्य चैकद्वित्र्यादिसंख्याविषयत्वप्रतिपत्तिश्च। कथमत्राविनाभावः? स्वल्पसमाहाररूपत्वात् प्रभूतस्य, स्वल्पाभावे प्रभूतानुपपत्तेरिति।

## ❀ अभावस्य तु त्रिष्वप्यन्तर्भावः ❀

अभावस्य तु त्रिष्वपि यथासम्भवमन्तर्भावस्तथा हि—कौरवादीनां सद्भावप्रतिपत्तिवदभावप्रतिपत्तिरप्यागमभावाभावानुविधायिनी दृश्यते। तत्र प्रमाणान्तरकल्पनानुपपन्ना। आत्मादिषु च रूपाद्यभावप्रतिपत्तिश्चानुमानात्। तथा जलफलादीनां पातेन गुरुत्वप्रतिबन्धकाभावोऽनुमीयते। तथानुपलब्धिप्रभेदोदाहरणेष्वभावानुमानं द्रष्टव्यम्। भूतलादिषु घटाद्यभावप्रतिपत्तिः प्रत्यक्षात्, करतलादिप्रतिपत्तिवदक्षव्यापारभावाभावानुविधायित्वात्।

नन्वन्यत्र तद्भावभावित्वं पर्यवसितं, यस्मादुक्तम्—

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया॥"

(श्लो० वा० अभाव० २७)

वस्तुग्रहणाभावज्ञानयोराशुभावित्वेन क्रमो न लक्ष्यते, वृक्षादिकम्पदर्श-

---

१. द्रोणादिकं मानविशेषः--"अष्टाढको भवेद् द्रोणः"—इत्यादिकोशवाक्यादवगन्तव्यः।

**सम्बन्धाभावोऽत्र बाधक इति चेत्, न; स्वपरपक्षयोरसिद्धत्वात्। स्वपक्षे तावद्रूपादिष्विवापरोक्षानुभवकार्यानुमेयो योग्यताख्यः सम्बन्धः। परपक्षेऽपि संयुक्तविशेषणविशेष्यभावादिरिति। संयोगसमवायरहितस्य विशेषणविशेष्यभावानुपपत्तिरिति चेत्, न; विशिष्टप्रत्ययवशेन तत्सिद्धेरिति।**

---

नानिलानुमानयोरिवेति, न; प्रमाणाभावात्। वस्तुग्रहणाद् अनन्तरं नास्तीत्यनक्षजं ज्ञानं भवतीत्यत्र न प्रमाणं किञ्चिदस्ति। वचनमात्रेण रूपादिप्रत्यक्षत्वप्रतिषेधोऽपि स्यात्, तत्राप्येवं शक्यते वक्तुम्—रूपादीनामाश्रयग्रहणे सत्तारूपत्वादिग्रहणे वाक्षव्यापारः पर्यवसित इत्यक्षानपेक्षमेव रूपादिज्ञानं भवतीति। अथ रूपादिज्ञानस्य साक्षादक्षजत्वेऽपि बाधकं नास्ति, चक्षुषा रूपं पश्यामीत्यादिप्रतीतेश्चाक्षजत्वमिष्टम्, यद्येवमभावज्ञानस्याऽप्यक्षजत्वे बाधकं न किञ्चिदस्ति; प्रतीतिरप्यस्ति—चक्षुषैव पश्याम्यत्र घटो नास्तीति।

## ❀ अभावेन सहेन्द्रियस्य सम्बन्धोपपादनम् ❀

सम्बन्धाभावोऽत्र बाधकः इति चेत्, स्यादेतत्—सम्बद्धं हि इन्द्रियमर्थग्राहकं भवति, न चाभावेन सहेन्द्रियस्य सम्बन्धः कश्चिदस्ति—नह्यभावस्य संयोगः समवायो वास्ति, तदभावात् संयुक्तसमवायादयोऽपि न सम्भवन्ति। तस्मान्नाक्षजमभावज्ञानमिति, नैतदस्ति; स्वपरपक्षयोरसिद्धत्वात्, त्वत्पक्षे तावन्न संयोगः समवायो वा कस्यचिदस्ति। चक्षुरादीनां तु स्वार्थैः सह योग्यताख्य एव सम्बन्ध इष्टः। स चाक्षजानुभवान्यथानुपपत्त्याऽवगम्यते। अक्षजानुभवश्च भूतलघटाभावयोरविशिष्टस्तेन भूतलस्येव घटाभावस्यापीन्द्रियेण सह योग्यताख्यः सम्बन्ध सिद्ध इति। मत्पक्षेऽपि संयुक्तविशेषणभावादिरभावेन्द्रिययोः सम्बन्धः प्रत्यक्षपरिच्छेदे दर्शितः। संयोगसमवायादिरहितस्य विशेषणविशेष्यभावानुपपत्तिरिति चेत्, नायं नियमस्त्वयाऽभ्युपगतो, नापि मया, इत्यतः स्वतन्त्रप्रसंगसाधनयोरप्यनुपपत्तिः। संयोगादिसम्बन्धाभावेऽपि हि विशिष्टप्रत्ययवशेन विशेषणविशेष्यभाव इष्यते, अन्यथा गोमानित्यादिप्रत्ययो न स्यात्। गोमतस्तर्हि इन्द्रियेण संयोगे, व्यवहिते विप्रकृष्टेऽपि गवि संयुक्तविशेषणविशेष्यभावादुपलब्धिप्रसंग इति, नेदं साधीयः, कार्यं हि दृष्ट्वा कारणशक्तिर्निश्चीयते, न च यस्यैकत्र शक्तिरशक्तिर्वा, तस्य सर्वत्र शक्तिरशक्तिर्वेति न्यायोऽस्ति। न हि यथा चक्षुरंगुलिमात्रसंयोगे सति संयुक्तसमवायादिसम्बन्धाद् रूपत्वादिज्ञानं भवति, तथा हस्तशरीरज्ञानमपीति। विचित्रशक्तयो हि पदार्थाः, कस्यचित् क्वचित् शक्तिरिति।

## ❀ विविक्तलक्षणाभावान्नाभावः प्रमाणान्तरम् ❀

विविक्तलक्षणाभावाच्च नाभावः प्रमाणान्तरम्। यथा हि—प्रत्यक्षानुमानागमानामन्योऽन्यव्यवच्छेदकं लक्षणमुक्तं, न तथाऽभावस्य प्रत्यक्षादिभ्यो व्यावर्तकं लक्षणमस्ति।

## ❀ भाट्टाभिमतलक्षणाशंका तन्निरासश्च ❀

न नास्ति, यस्मादुक्तम्—

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।

वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता॥" (श्लो० वा० अभाव० १) इति। स तर्हि प्रमाणपञ्चकाभावः केनावगम्यते? यदि प्रमेयाभावेन, तदेतरेतराश्रयत्वप्रसंगः—प्रमेयाभावो यावन्न सिद्धस्तावन्न प्रमाणपञ्चकाभावः सिध्यति, यावच्च न तत्सिद्धिस्तावन्न प्रमेयाभावसिद्धिरिति। प्रमाणपञ्चकाभावोऽप्यन्येन प्रमाणपंचकाभावेन प्रतीयते, सोऽपि तर्हि प्रमाणपञ्चकाभावोऽन्येन प्रमाणपञ्चकाभावेन प्रतिपत्तव्यः, सोऽप्यन्येनेत्यनवस्था। अथेन्द्रियवदज्ञात एव प्रमाणपञ्चकाभावः प्रमेयाभावपरिच्छेदक इष्यते, न; मत्तमूर्च्छाद्यवस्थायामपि परिच्छेदकत्वप्रसंगात्। वस्तुग्रहणप्रतियोगिस्मृत्यपेक्षत्वादप्रसंग इति चेत्, न; अनुमानागमाभ्यामपि देशविशेषमात्रग्रहणे तत्र घटादिस्मृतौ च तदभावप्रतीतिप्रसंगात्। चक्षुषा च दूराद् गृहादिग्रहणे तत्र स्मर्यमाणानां मणिरत्नौषधादीनां रसादिविशेषाणां चाभावनिश्चयप्रसंगात्। त्वगिन्द्रियेणाप्यन्धकारे गृहादिमात्रग्रहणे तत्र सतां स्मर्यमाणानां द्रव्यविशेषाणां चासत्त्वनिश्चयप्रसंगात्। देशसन्निधीन्द्रियविशेषालोकाद्यपेक्षणे च प्रत्यक्षमेवाभावपरिच्छेदकमस्तु, तावती हि सामग्री प्रत्यक्षस्यैव दृष्टा। तदभावेऽपि यदि लिंगवदभावस्य सामर्थ्यं क्वचिदुपलब्धं स्यात्, तदा युक्तं तस्य प्रमाणान्तरत्वं, तथा हि—यतः कुतश्चित्प्रमाणाद्धेत्वादिग्रहणेऽनुमानं प्रवर्तते, तथा यतः कुतश्चित्प्रमाणाद् भूतलादिग्रहणे, यदि तत्र द्रव्यविशेषस्य रूपादिविशेषस्य चाभावः प्रतीयेत, स्यादभावस्य प्रमाणान्तरत्वं, पृथक्सामर्थ्यानवधारणे हि प्रमाणान्तरत्वेऽतिप्रसंगः स्यात्।

## ❀ देशान्तरस्थस्याभावज्ञानं स्मृतिः ❀

यच्चात्रोक्तम्—[1]"भूतलादिकं दृष्ट्वा देशान्तरं गतः प्रतियोगिनमपूर्वं

---

१. प्रतिपादितं हि भट्टमिश्रैः—

स्वरूपमात्रं दृष्ट्वाऽपि पश्चात् किञ्चित् स्मरन्नपि।

तत्रान्यनास्तितां पृष्टस्तदैव प्रतिपद्यते॥ (श्लो० वा० अभाव० २८)

यदा पश्यति, तदभावं तदैव प्रतिपद्यते—अयं पदार्थस्तत्र प्रदेशे नास्तीति", तदयुक्तम्; प्रदेशोपलम्भकाल एवाभावस्योपलब्धत्वात्। प्रतियोगिदर्शने च तत्संस्कारप्रतिबोधात्स्मृतिरेव भवति। न हि कथं जानासीत्यनुयुक्तः प्रमाणपञ्चकाभावेन जानामीत्यभिधत्ते, किं तर्हि ? स्मराम्यहम्—नायं तत्रासीदिति। नायं दृष्टस्तदेति चानुस्मृतिः—'नायं दृष्टः', 'अस्याभावो दृष्टः' इत्येकोऽर्थः, तथा हि—प्रदेशमात्रस्मृतौ प्रतियोगिदर्शनेऽपि सन्देह एव भवति—दृष्ट एवासौ देशः, किं तु अयं मया न निरीक्षितः—किं तत्रास्ति ? नास्तीति ?

## ❀ प्रतियोगिविविक्तवस्तुग्रहणापेक्षतानिरासः ❀

स्यादेतत्—प्रतियोगिविविक्तवस्तुग्रहणमपेक्ष्याभावः प्रमाणं भवत्यतः प्रतियोगिविविक्तत्वाप्रतीतौ वस्तुमात्रग्रहणेऽप्यभावनिश्चयस्तत्र न भवतीति, स तर्हि विवेकः केन गृह्यते ? यदि प्रत्यक्षेण, ततः कथं प्रत्यक्षेणाभावो न गृह्यते ? विवेकस्याभावलक्षणत्वात्। अभावेनैव ग्रहणे त्वितरेतराश्रयप्रसंगः। तथा हि—यावन्न विवेकग्रहणं तावन्नाभावः प्रमाणम्, यावन्नाभावः प्रमाणं तावन्न विवेकग्रहणमिति।

निर्विकल्पकप्रत्यक्षेणाभावग्रहणमिष्यते, सविकल्पकेन कोऽपराधः कृतो, यतस्तेन ग्रहणं नेष्यते ? प्रतियोगिज्ञानं विना न युक्तं सविकल्पकमिति चेत्, सत्यम्; तथापि निर्विकल्पकेनाशेषाभावग्रहणे सति पश्चाद्यदा यस्य प्रतियोगिस्मृत्यादिसहकारी सम्पद्यते, तदा तस्य सविकल्पकं ग्रहणं भवत्येवेति।

देशान्तरे तर्हि पश्चादपूर्वप्रतियोगिग्रहणे कथं तदभावस्यासन्निहितदेशस्य सविकल्पकं प्रत्यक्षम् ? स्मृतिरपि न युक्ता, तत्सम्बन्धत्वेन प्रागननुभूतत्वात्—न हि शुद्धं गां दृष्ट्वाऽन्यत्र तत्स्वामिनं पश्यन्नस्य गामहं दृष्टवानिति स्मर्तुमर्हतीति, न; मानसप्रत्यक्षेण तत्सम्बन्धित्वेनाभावस्य प्रागेव गृहीतत्वात्। एतच्च विशिष्टस्मृत्यन्यथानुपपत्त्यावगम्यते, व्याप्तिग्रहणवदेतस्मात्तदधिकं स्थूलमित्यादिग्रहणवच्च। अथवा पश्चादेवाभावस्य तत्सम्बन्धित्वं गृह्णाति। न च तदभावस्य तदानीमसन्निहितत्वेनाप्रत्यक्षत्वं, प्रतियोगिसमीपेऽपि तदभावस्य सत्त्वाद्, गोत्वादिवद् भेदाभावाच्च। ततश्च यथा गोत्वं पूर्वं पिण्डान्तराविशिष्टमेव दृष्ट्वा पश्चात् पिण्डान्तरे तद्विशिष्टं दृष्ट्वा प्रथमपिण्डेऽपि तद्विशिष्टत्वेनानुस्मरति—एतद्सारूप्यं तत्राहमद्राक्षमिति, तथा प्रतियोग्यवच्छेदेन तत्समीपस्थं तदभावं गृहीत्वाऽन्यत्रोपलब्धमपि तदवच्छेदेनैवानुस्मरति—अयं पदार्थस्तत्र नासीदिति। तस्मान्नाभावः प्रमाणं पृथगस्तीति।

अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यमागमेऽन्तर्भूतम्। यथेह वटे यक्षः प्रतिवसतीति।

प्रयत्नजनिता शरीरतदवयवक्रिया चेष्टा। सा नाट्यशास्त्रादिप्रसिद्धसमयबलेन पुरुषाभिप्रायविशेषमर्थविशेषं गमयन्ती नागमाद्भिद्यते। लिप्यक्षरादर्थप्रतिपत्तिवदिति। तदेवं व्यवस्थितम्—एवमेतानि त्रीण्येव प्रमाणानि।

## ❀ ऐतिह्यस्य प्रमाणान्तरत्वनिरासः ❀

अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यं प्रमाणं कैश्चिदिष्टं, यथेह वटे यक्षः प्रतिवसतीति। तच्च यद्यवितथं, तदा शब्देऽन्तर्भूतम्। यदि नाम प्रयोजनाभावादाप्तनिर्देशोऽत्र नास्ति, नैतावताऽस्य शब्दरूपता निवर्तते इति।

## ❀ चेष्टायाः प्रमाणान्तरत्वनिरासः ❀

अन्ये तु चेष्टाख्यं प्रमाणमिच्छन्ति। का पुनरियं चेष्टेति? प्रयत्नजनिता शरीरतदवयवानां क्रिया चेष्टा। सा नाट्यशास्त्रप्रसिद्धसमयबलेन लोककृतसमयबलेन च पुरुषाभिप्रायविशेषमर्थविशेषं च प्रतिपादयन्ती प्रमाणमिष्यते। तथा चागमान्न भिद्यते, तल्लक्षणयोगित्वात्। अशब्दात्मकत्वे न प्रमाणान्तरत्वे लिप्यक्षराणामपि प्रमाणान्तरत्वप्रसंगः, समानन्यायत्वात्। अविनाभावित्वेन प्रयत्नादिप्रतिपादकत्वे त्वनुमानत्वं चेष्टाया द्रष्टव्यमिति। तदेवं व्यवस्थितमेतत्—त्रीण्येव प्रमाणानि।

## ❀ प्रमाणानां प्रयोजनम् ❀

ततः किं? न ह्येतावतैवापवर्गसिद्धिः। प्रमाणैः खलु कस्यचिद्वस्तुनो हेयस्योपादेयस्य वा तत्साधनस्य वाऽधिगमान्निःश्रेयसमिष्यते। तच्च [1]केचित् प्रधानादिकं मन्यन्ते। [2]अपरे नैरात्म्यादिकमित्येवमादिविप्रतिपत्तेः सन्दिहानः

१. केचित्=सांख्याः, सञ्चक्षते हि ते—प्रधानप्रसंख्यानात्कैवल्यम्—
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥ (सां० का० २१)
दृष्टा मयेत्युपेक्षक एक दृष्टाऽहमित्युपरमत्यन्या।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य॥ (सां० का० ६६)

२. अपरे=ताथागताः, तेषां कृतान्तः—
आत्मात्मीयग्रहकृतः स्नेहः संस्कारगोचरः।
हेतुर्विरोधि नैरात्म्यदर्शनं तस्य वाधकम्॥ (प्र० वा० १३६)

किं पुनरेभिः प्रमाणैः प्रमातव्यमिति ? उच्यते—प्रमेयम् । किं-लक्षणम् ? यद्विषयं ज्ञानमन्यज्ञानानुपयोगित्वेनैव निःश्रेयसाङ्गं भवति, तत्प्रमेयम् । तदेव तत्त्वतो ज्ञातव्यम्, सर्वदा भावयितव्यञ्च । न च कीटसंख्यादि, तज्ज्ञानस्यानुपयोगित्वात् । तच्चतुर्विधम्—हेयं, तस्य निर्वर्त्तकं, हानमात्यन्तिकं, तस्योपाय इति ।

---

प्रश्नयति—किं पुनरेभिः प्रमाणैः प्रमातव्यमिति ? उच्यते—प्रमेयम् । प्रधानादेस्तु प्रमाणविषयत्वमेव नास्त्यतस्तद्विषयं ज्ञानं भ्रान्तत्वान्न निःश्रेयससाधनम् ।

## ❀ प्रमेयपदार्थनिरूपणम् ❀

किंलक्षणमिति प्रश्नानुपपत्तिः, प्रमाविषयः प्रमेयमित्युक्तत्वात्, न; प्रमेय-विशेषविषयत्वात्प्रश्नस्य । दण्डकसूत्रे प्रमेयपदेन यस्योद्देशः कृतस्तस्येदानीं लक्षणं वक्तव्यम् । तदुच्यते— [1]यद्विषयं तत्त्वज्ञानमन्यज्ञानानुपयोगित्वेनैव निःश्रेयसाङ्गं भवति, मिथ्याज्ञानं च संसारं प्रतनोति, तत् प्रमेयम् । तदेव तत्त्वतो ज्ञातव्यं सर्वदा भावितव्यं च । न तु [2]कीटसंख्याद्यपि प्रमेयं, तेषां ज्ञानस्य निःश्रेयसानुपयोगित्वात् । तच्चतुर्विधम्—१. हेयम्, २. तस्य निर्वर्तकम्, ३. हानमात्यन्तिकम्, ४. तस्योपाय इति ।

---

किं चावरणद्वयापवृत्त्यैवापवर्गः समवाप्यते । आवरणद्वयं च ज्ञेयावरणं क्लेशा-वरणं च । तत्र पूर्वं धर्मनैरात्म्यभावनयाऽपनीयते, परं पुद्गलनैरात्म्यदर्शनेन विनाश्यते । आह च भगवान् लङ्कावतारसूत्रे—"ज्ञेयावरणं पुनर्महामते धर्मनैरात्म्यदर्शनाद्विशुध्यते । क्लेशावरणं तु पुद्गलनैरात्म्यदर्शनाभ्यासपूर्वकं प्रहीयते" ( लं० सू० ७, पृ० २४१ ) ।

अपि च त्रिविधेषु मोक्षेषु शून्यतामोक्षो नैरात्म्यैकभावनया सम्पाद्यते—"अनत्तानुपस्सना, अनिच्चानुपस्सना, दुःखानुपस्सना चेति तिस्सो अनुपस्सना । विपस्सनागमनवलेन सुञ्ञतादिविमोक्खो होति" (अभि० सं० ९।२७,३७) ।

१. भाष्यकारा अप्याहुः—"अस्य तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात्संसारः" ( न्या० भा० १।१।९ ) । वार्तिकेऽप्येवम्—"यस्तत्त्वज्ञानविषयत्वेन व्यवतिष्ठ-मानः संसारव्यवच्छेदहेतुर्भवति । यश्च मोहविषयत्वात् संसारं प्रतनोति, स तत्त्वतो ज्ञेय इति" ( न्या० वा० पृ० ५०० ) ।

२. अपरेऽपि संगिरन्ते—

तस्मादनुष्ठेयगतं ज्ञानमत्र विचार्यताम् ।
कीटसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ॥ ( प्र० वा० २।३२ )

## ❀ द्वादशविधं प्रमेयम् ❀

ननु च द्वादशधा सूत्रे प्रमेयं विभक्तं, तथा च—"आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" (न्या० सू० १।१।९) इति सूत्रम्। तुशब्दो विशेषणे अस्त्यन्यदपि प्रमेयं, किं त्वयं विशिष्टप्रमेयस्य निर्देश इत्यर्थः। तस्य लक्षणतोऽपि द्वादशविधत्वं गम्यते, द्वादशानां लक्षणाभिधानात्।

## ❀ (१) आत्मा ❀

तत्रात्मलक्षणम्—"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मलिंगम्" (न्या० सू० १।१।१०) इति। यथा वा इच्छादीनामात्मलिंगत्वं, तथोत्तरत्र वक्ष्यामः। लिंगमपि तल्लक्षणं भवति, असाधारणत्वात्। मुक्तात्मनामव्यापकत्वादलक्षणमिति चेत्, न; प्रागेव विचारितत्वात्। द्रव्यक्रियावत्त्ववदिच्छादेरप्यव्यापकत्वं दूषणं यथा भवति, यथा न भवति च, तथा प्रागेव विचारितम्।

## ❀ (२) शरीरम् ❀

"चेष्टेन्द्रियार्थाश्रयः शरीरम्" (न्या० सू० १।१।११)। क्रियाविशेषे चेष्टाशब्दो लोकेऽपि रूढो 'धावति', 'लङ्घते'—इत्यादिवत्। सा चेष्टा यत्रान्त्यावयविनि समवेता तच्छरीरम्। इन्द्रियाश्रयत्वं नेन्द्रियसमवायित्वं, किं तु तदुपघातानुग्रहाभ्यामिन्द्रियाणां तथाभावस्तेनेन्द्रियाश्रयत्वं शरीरस्य। अर्थाश्रयत्वमपि—तस्मिन् सत्येव तदवच्छिन्ने चात्मप्रदेशे सर्वेऽर्थाः सुखदुःखादिकं जनयन्तीति।

## ❀ (३) इन्द्रियाणि, तेषां विषयग्राहकत्वव्यवस्था च ❀

"घ्राणरसनचक्षुःत्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः" (न्या० सू० १।१।१२) इति। विशेषोद्देशार्थं विशेषलक्षणार्थं च सूत्रम्, सामान्यलक्षणं तु नोक्तम्; परिभाषातोपीन्द्रियशब्दप्रवृत्तेः स्वयं बोद्धम्। तत्र जिघ्रत्यनेनेति घ्राणम्, रसयत्यनेनेति रसनम्, चष्टेऽनेनेति चक्षुः, स्पृशत्यनेनेति स्पर्शनम्। तच्च स्थाननिमित्तत्वात् त्वगित्युपचर्यते व्यवहारार्थम्, शृणोत्यनेनेति श्रोत्रम्। एवं चात्र विशेषलक्षणार्थानि [1]पञ्चसूत्राणि, विशेषोद्देशार्थं चैकमिति षट्सूत्री द्रष्टव्या।

---

१. "लक्षणसूत्राणि समानासमानजातीयविशेषणार्थानीति सूत्रार्थो द्रष्टव्यः" (न्या० वा० १।१।१२) इति वार्तिके लक्षणानीति वक्तव्ये लक्षणसूत्राणी-

भूतेभ्यः इत्याहंकारिकत्वप्रतिषेधार्थम्। [1]अहंकारोपि भूतशब्दवाच्यस्तस्य च त्रिगुणत्वाद् बहुवचनमपीत्याशंक्याह—"पृथिव्यापस्तेजोवायुराकाशमिति भूतानि" (न्या० सू० १।१।१३)। तत्र चतुर्णामिन्द्रियकारणत्वम्, आकाशस्य तु विशिष्टप्रदेशस्येन्द्रियस्वभावत्वज्ञापनार्थमिति तत्त्वमुपचर्यते। यद्वा कर्णशष्कुलीसंयोगापेक्षया करणत्वं, तेन भूतेभ्य इति निमित्तपञ्चमी न विरुध्यते। नह्येकप्रकृतित्वे व्यवस्थितविषयत्वमुपपादयितुं शक्यते; दृष्टान्ताभावात्। नानाप्रकृतित्वे तु प्रदीपादिदृष्टान्तः प्रागुक्तस्तस्माद् भौतिकानि पञ्च बाह्येन्द्रियाणि।

## * (४) अर्थाः *

"गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः" (न्या० सू० १।१।१४)। तदर्थत्वमेवात्रार्थानां लक्षणम्। [2]पृथिव्यादयश्च गुणाश्चेत्यर्थानां विभागः। सर्वस्याश्रितस्य विशेषणस्य चात्र गुणग्रहणेन संग्रहः। ततश्च भावोऽभावो वा

---

त्युक्तिमापातायातां मेनिरे मिश्रवराः—"लक्षणसूत्राणीत्यापाततः सूत्रे विचार्यमाणानि च सूत्राणीत्यर्थः" (न्या० वा० ता० पृ० २२१)। तदेतेन समाहितं भवति—पञ्चसूत्राणीत्यादिना।

१. अहङ्कारादिन्द्रियाणां सम्भवोऽभिमतः सांख्ये—"प्रकृतेर्महांस्ततोऽहङ्कारः तस्माद् गणश्च षोडशकः" (सां० का० २२)। तस्य तु भूतात्मकत्वं, भूतप्रकृतेः प्रकृतित्वात्—"तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि" (सां० का० २२)। तर्हि 'भूतादिति' वक्तव्यम्, न तु 'भूतेभ्यः' (न्या० सू० १।१।१३)। इत्यत आह—तस्य त्रिगुणत्वाद् बहुवचनमिति।

२. "पृथिव्यादीनां यथाविनियोगं गुणा इन्द्रियाणां यथाक्रममर्थाः" (न्या० भा० १।१।१४) इति भाष्यकारस्य षष्ठीसमासपक्षमुपेक्ष्य वार्तिककारो द्वन्द्वमवधारयति स्म—"तस्माद् व्यवस्थितमेतत्—पृथिव्यादीनि गुणाश्चेति द्वन्द्वः समासः" (न्या० वा० पृ० ७८)। भूषणकारोऽपि तमेव सूचयति—पृथिव्यादयश्च गुणाश्चेति।

तत्र "गुणशब्दोऽयं बह्वर्थः—१. अस्त्येव समेष्ववयवेषु वर्तते, तद्यथा—द्विगुणा रज्जुस्त्रिगुणा रज्जुरिति। २. अस्ति द्रव्यपदार्थकः, तद्यथा—गुणवानयं देश इत्युच्यते, यस्मिन् गावः सस्यानि च वर्तन्ते। ३. अस्त्यप्रधाने वर्तते, तद्यथा—गुणभूता वयमत्रेति। ४. अस्त्याचारे वर्तते, तद्यथा—गुणवानयं ब्राह्मणः। ५. अस्ति संस्कारे वर्तते, तद्यथा—संस्कृतमन्नं, गुणवदित्युच्यते" (पा० भा० ५।१।११६) इति महाभाष्यं मनसिकृत्याह—सर्वस्याश्रितस्येति।

यः कश्चिद् इन्द्रियविषयः, स सर्वोऽप्यर्थ इति। देहस्य च चेष्टाद्याश्रयत्वेन भोगायतनत्वेन शरीरत्वमिन्द्रियविषयत्वेन चार्थत्वं द्रष्टव्यम्।

## ❋ गन्धादीनां पृथग्ग्रहणप्रयोजनम् ❋

गन्धादीनां तु पृथग्वचनं प्राधान्येन दोषनिमित्तत्वज्ञापनार्थम्। यथा हि गन्धादीनामेकैकशोऽपि दोषनिमित्तत्वं, न तथान्येषां द्रव्यगुणादीनां गन्धाद्युपकृतानां दोषजनने सामर्थ्यमस्ति। तथा हि—गन्धोपकृतेषु पुष्पवृक्षादिषु रागद्वेषादयः, रसोपकृतेष्वाहारविशेषेषु रूपोपकृतेषु नृत्यस्तनमहत्त्वकेशबहुत्वादिषु, स्पर्शोपकृतेषु शयनादिषु, शब्दोपकृतेषु वंशादिषु, रत्यादीनां च पंचोपकृतत्वं चतुस्त्रयद्वयोपकृतत्वं वा यथासम्भवं द्रष्टव्यम्। तथेष्टवियोगादेरभावस्यापि स्मृत्यारोपितरूपाद्युपलक्षितस्य दोषनिमित्तत्वमिति। एवं च "दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः" (न्या० सू० ४।२।२), "तन्निमित्तं त्ववयव्यभिमानः" ( न्या० सू० ४।२।३ ) इत्येतयोः सूत्रयोरप्यविरोध इति।

## ❋ (५) बुद्धिः ❋

"बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" (न्या० सू० १।१।१५)। प्रधानस्याद्यः परिणामो बुद्धिः, पुंसः प्रतिबिम्बोदयलक्षणो भोग उपलब्धिः, विषयाकारेण बुद्धेः परिणामो ज्ञानम्—इत्यस्य दर्शनस्य[1] निराकरणार्थं पर्यायोऽपि लक्षणमुक्तम्। प्रतीतिः, अवगमः, विज्ञानम्—इत्यादिशब्दानामपि अर्थभेदकल्पनायां किं वक्तव्यम्? तत्राप्येतदेवोत्तरम्—पर्यायशब्द एव एते इति। सा चेयं बुद्धिर्दोषनिमित्तेभ्यः प्रसंख्यानेन निवर्तिता अपवर्गहेतुः, अनिवर्तिता च संसारहेतुरप्येवं ज्ञातव्या।

## ❋ (६) मनः ❋

"युगपज्ज्ञानानुत्पत्तिर्मनसो लिंगम्" ( न्या० सू० १।१।१६ )। अतीन्द्रियस्यान्यथा लक्षयितुमशक्यत्वादात्मवन्मनसोऽपि लिंगं लक्षणमुक्तम्। घ्राणादेरपि गन्धादिज्ञानं लिंगमेव लक्षणमिति। आत्मा तावद् व्यापकत्वात् सर्वैरिन्द्रियैः सम्बद्धः, इन्द्रियाण्यप्यनिद्रस्य प्रेक्षणाद्यवसरे तैस्तैरर्थैः सम्बद्धानि, तथापि गन्धादिज्ञानानि युगपन्नोत्पद्यन्ते, व्यासंगदर्शनात्। तत्र यस्य सन्निधेरसन्निधेश्च ज्ञानस्योत्पत्तिरनुत्पत्तिश्च, तन्मनः। प्रयोगश्चात्र—आत्मे-

---

१. दर्शनस्य = सांख्यदर्शनस्येत्यर्थः।

न्द्रियार्थादयः क्रमसंयोगिसहकार्यन्तरापेक्षाः, सन्निहितानामपि क्रमकार्योत्पादकत्वाद्वस्त्रोपहितचित्रोत्पादका इव वर्णकादयो मनसो लिंगमित्यसमासाभिधानात् लिंगान्तरमपि सूचयति—सुखादय इन्द्रियपरिच्छेद्याः प्रत्यक्षसंवेद्यत्वाद्रूपादिवत्। बाह्येन्द्रियाणां सामर्थ्यानुपलब्धेः सुखादिपरिच्छेदकं यदिन्द्रियं, तन्मन इति। स्मृत्यनुमानागमसंशयादिज्ञानानां च करणपूर्वकत्वमिन्द्रियपूर्वकत्वं वा साध्यते, ज्ञानत्वाच्चक्षुरादिजनितज्ञानादिवत्। इच्छादेरपि क्रियात्वात्करणपूर्वत्वसिद्धौ परिशेषान्मनः सिद्धिमिच्छति। यद्वाऽक्षजत्वमिच्छादीनामपि साध्यमात्मविशेषगुणत्वेन हेतुना।

## ❀ मनसः पृथगुक्तेः प्रयोजनम् ❀

यदि मनोपीन्द्रियं ततः किमर्थं पृथगुक्तम्? सर्वार्थत्वाभौतिकत्वादिवैधर्म्यादित्येके। अपरे तु आहुः—मनोमूलत्वात्सर्वेन्द्रियाणां प्रवृत्तेः, तज्जयादेव सर्वेन्द्रियजयसिद्धिरतो मनोजये मुमुक्षुणाऽतियत्नः कर्तव्य इति ज्ञापनार्थं मनः पृथगुक्तमिति।

## ❀ (७) प्रवृत्तिः ❀

"प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः" (न्या० सू० १।१।१७)। वाचिको मानसः कायिकश्च व्यापारः प्रवृत्तिरित्यर्थः। मनोऽत्र बुद्धिशब्देनोक्तं [1]करणव्युत्पत्त्या। सा चेयं त्रिविधापि विहितप्रतिषिद्धभेदेन द्विविधा। प्रवृत्तेः पुण्यं पापं फलम्। तद्भेदश्च सूक्ष्मः परिसंख्यातुं न शक्यते, स्थूलश्च धर्मशास्त्रेषु दर्शित इति।

## ❀ (८) दोषाः ❀

"प्रवर्तनालक्षणा दोषाः" (न्या० सू० १।१।१८)। विहिते प्रतिषिद्धे च पुरुषं प्रवर्तयन्तीति प्रवर्तना रागद्वेषमोहाः। तल्लक्षणास्तत्स्वभावा इत्यर्थः। [2]अन्ये तु वर्णयन्ति—प्रवर्तना प्रवृत्तिहेतुत्वं रागादिगतो धर्मः स्वसंवेद्यस्तल्लक्षणं चिह्नं येषां, तथोक्ताः। सर्वथापि रागादय एव दोषा उच्यन्ते। "तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्" (न्या० सू० ४।१।३) इति वचनाद् गम्यते।

---

१. करणव्युत्पत्त्या—"बुध्यतेऽननेति बुद्धिः" (न्या० भा० १।१।१७)।

२. अन्ये = भाष्यकारादयः, तथा च भाष्यम्—"प्रवर्तना = प्रवृत्तिहेतुत्वम्" (न्या० भा० १।१।१८)।

## ❀ (९) प्रेत्यभावः ❀

"पुनरुत्पत्तिः प्रेत्यभावः" ( न्या० सू० १।१।१९ )। पूर्वोपात्तं शरीरादिकं हित्वा पुनः शरीराद्यन्तरप्राप्तिरात्मनः प्रेत्यभावः, मृत्वा पुनर्जन्मेत्यर्थः। [1]पुनरित्यनाद्या न कदाचिदाद्या याऽऽत्मन उत्पत्तिः शरीरादिसम्बन्धविशेषलक्षणा। सा सर्वा पुनर्भवति, न कदाचित्प्रथमेत्यर्थः, तस्मादनादिरयं प्रेत्यभावः। पर्यवसानमप्यपवर्गं विनास्य नास्तीत्येतज्ज्ञापनार्थं जन्ममरणदुःखातिशयभावनार्थं च देहाद्याभ्यां प्रेत्यभावः पृथगुपदिष्टः।

## ❀ (१०) फलम् ❀

"प्रवृत्तिदोषजनितोऽर्थः फलम्" ( न्या० सू० १।१।२१ )। प्रवृत्तिर्दोषाश्च पूर्वोक्तास्तैः किंचिद् व्यवधानेन जनितोऽर्थः प्रयोजनं फलम्। द्विविधं हि प्रयोजनम्—हेयमुपादेयं च। तत्र हेयं मुख्यगौणभेदभिन्नमनेकप्रकारं दुःखम्। उपादेयं त्वविदुषां मुख्यगौणभेदभिन्नं सुखं, विदुषां तु सर्वं हेयं, सुखस्यापि दुःखहेतुत्वेन प्रतिपादनात्। तथा च "सर्वंदुःखं विवेकिनः" ( यो० सू० २ ) इत्यध्यात्मविदः। तत्र सुखदुःखयोः स्वकर्मोपार्जितत्वेन समताभावनार्थं फलं दुःखात् पृथगुपदिष्टम्।

## ❀ (११) दुःखम् ❀

"बाधनालक्षणं दुःखम्" ( न्या० सू० १।१।२० )। बाधनालक्षणं = बाधनास्वभावं मुख्यं दुःखं, गौणापेक्षया तु—बाधनालक्षणं यस्य शरीरादेस्तत्तथोक्तम्। बाधना पीडा सन्ताप इत्यर्थः।

## ❀ (१२) अपवर्गः ❀

"तदत्यन्तविमोक्षोऽपवर्गः" ( न्या० सू० १।१।२२ )। तस्मान्मुख्यगौणभेदभिन्नाद् दुःखादत्यन्तविमोक्षः=सततं विच्छिन्नता, आत्मनोऽपवर्ग इति। तदेवं लक्षणभेदादपि द्वादशविधं प्रमेयमुक्तम्, न तु चतुर्विधमिति।

## ❀ द्वादशविधप्रमेयाशङ्कानिरसनम् ❀

सत्यम्, द्वादशविधमुक्तं, किं तु तद्द्वादशविधमपि हेयादिरूपेण चतुर्धा भाव्यमानं निःश्रेयसनिमित्तं भवतीत्यतश्चतुर्विधमुक्तम्। सूत्रकारस्तु न्याय-

१. वार्तिकेऽप्येवम्—"पुनर्ग्रहणं संसारानादित्वज्ञापनार्थम्" ( न्या० वा० पृ० ८२ )।

प्राप्तं चातुर्विध्यमिति मन्यमानः साक्षान्नोक्तवान्। न हि हेयादिरूपानिश्चये शरीरादिष्वहंकारनिवृत्तिर्वैराग्योत्पादनद्वारेण तदत्यन्तविमोक्षोऽपवर्गः सम्भवति चतुर्वर्गान्तर्भूतत्वाच्च द्वादशविधस्यापि।

## ❀ सूत्रे चातुर्विध्यानभिधानरहस्यम् ❀

यद्येवं, चातुर्विध्यमेव सूत्रकृता कस्मान्नोक्तम्? न; परमतनिषेधार्थत्वात्।

तत्र सांख्यानां मतम्—हेयं दुःखं रजोवृत्त्यात्मकम्—"द्रष्टृदृश्ययोः संयोगो हेयहेतुः" (यो० सू० २।२७), "तस्य हेतुरविद्या" (यो० सू० २।२४), "तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम्" (यो० सू० २।२५), "विवेकख्यातिरविप्लवा हानोपायः" (यो० सू० २।२६) इति।

[1]शाक्यानां च—१. दुःखम्, २. समुदयः, ३. निरोधः, ४. मार्गाख्यं चतुरार्यसत्यं ज्ञानं मुक्त्यर्थमिष्टम्। तत्र १. दुःखं संसारिणः स्कन्धा—रूपम्, संज्ञा, वेदना, विज्ञानं, संस्कार इति पञ्चस्कन्धाः। तत्र "भूतभौतिकसमुदायो रूपम्" इति वचनाद्रसादिरपि रूपस्कन्ध उच्यते। येनार्थोऽभिलप्यते सोऽभिलापः, सुखदुःखादिर्वेदना, बोधाकारो विज्ञानं, शुभादिवासना संस्कार इति। एषां संसारित्वं दुःखस्वभावत्वं च प्रपंचेन शाक्यैः समर्थितं ग्रन्थातिगौरवभयान्नेहोच्यते। २. तस्य हेतुः समुदयः—शरीरेन्द्रियस्थानादिष्वात्मात्मीयाभिनिवेशजाऽऽग्रहलक्षणा तृष्णा प्रधानं निमित्तं समुदयः। ३. वितृष्णस्य हि अविद्याकर्माद्युपनीतेष्वपि रजतराज्यादिष्वप्रवृत्तेः सर्वदुःखहानं निरोधः। ४. तस्योपायो नैरात्म्यज्ञानं मार्ग इति। तदेवं परमतेऽपि हेयादिचतुष्टयज्ञानं मुक्तिनिमित्तमिष्टम्। तन्मतनिषेधार्थमात्मादिभेदोपन्यासः कृतः।

## ❀ आत्मादिज्ञानक्रमोपकारः ❀

तत्रात्मज्ञाने सति परलोकाकांक्षा भवति, नान्यथेति—वक्ष्यामः। तद्व्यतिरिक्तदेहज्ञाने च तत्रात्मबुद्धिर्निवर्त्तते, ततस्तदर्थं हिंसादिकं न करोति। दुःखायतनं च प्रतिपद्य तत्राग्रहो निवर्त्तते। सत्स्वपि दोषनिमित्तेषु इन्द्रियाणामप्रवृत्तौ न दोषोत्पत्तिस्तत्प्रवृत्तौ वावश्यं दोषोत्पत्तिरित्येवमिन्द्रियस्वरूपं ज्ञात्वा तत्प्रत्याहारार्थं यतते। यतमानस्तदर्थेषु विपाकफलवत्परिणामदुःखहेतुत्वेनावगतेषूपादेय-

---

१. तदुक्तं शाक्यमुनिना—"इमे खो पन भिक्खवे दुक्खं अरियसच्चं, दुक्खसमुदयं अरियसच्चं, दुक्खनिरोधं अरियसच्चं, दुक्खनिरोधगामिनी पटिपदा अरियसच्चं" (वि० महावग्गो पृ० १५–१६)।

**तत्र "हेयम्—दुःखमनागतम्" ( यो० सू० २।१६ )।**

**एकविंशतिप्रकारम्—शरीरं, षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखं, दुःखं चेति। तत्र शरीरं दुःखायतनत्वाद् दुःखं, इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावात्, सुखं तु दुःखानुषङ्गाद् दुःखम्। दुःखं तु बाधापीडासन्तापात्मकं मुख्यतयैवेति।**

---

बुद्धिं त्यक्त्वा वैराग्यं भावयति। मिथ्यातत्त्वबुद्धीनां च संसारापवर्गहेतुत्वं ज्ञात्वा मिथ्याबुद्धीः परिसंख्यानेन तिरोभाव्य तत्त्वबुद्धिमभ्यासेन पुष्णाति। मनसस्तु पृथक् परिग्रहे प्रयोजनं प्रागेवोक्तम्। प्रवृत्तीश्च धर्माधर्मादिजननद्वारेण दुःखमूलं ज्ञात्वा परिहरति। "न प्रवृत्तिः प्रतिसन्धानाय क्षीणक्लेशस्य" ( न्या० सू० ४।१।६४ ) इत्येवं दोषस्वरूपं ज्ञात्वा तत्क्षयेऽतियत्नं करोति। प्रेत्यभावफलयोः परिज्ञाने प्रयोजनमुक्तम्। दुःखं च भावनार्थं ज्ञातव्यम्। ब्रह्मादिस्तम्बान्तं विश्वं सर्वं दुःखानुविद्धं ज्ञात्वा तत्र विरज्यते, विषानुविद्धमध्वादिष्विव। अपवर्गं चानुत्तममनन्तमतिनिर्मलं सर्वदुःखोपरमं ज्ञात्वा तदर्थमेव यतते। तदेवं द्वादशप्रकारेष्वपि तत्त्वज्ञानभावना चोपयुज्यत इत्यतोऽपि द्वादशधा प्रमेयमुक्तम्। संक्षेपभावनार्थं च तस्य चातुर्विध्यमुच्यते—

## ❀ दुःखनिरूपणम् ❀

तत्र "हेयं दुःखमनागतम्" ( यो० सू० २।१६)। अतीतं हि प्रहीणत्वान्न हेयम्, वर्तमानमप्युपभोगप्राप्तत्वादशक्यहानमुपभोगेन तु हीयते। अत एव तत्त्वविदोऽनागतमेव दुःखं मन्यन्ते, न वर्तमानम्। न हि वर्तमानमाध्यात्मिकादि दुःखं हिंसादिरहितेन शुद्धेन मार्गेण परिहर्तुं शक्यते, अहिंसादिक्रमेण च परिहरतोऽनन्तमेवागामिदुःखं परिहरन्ति। अनागतदुःखपरिहारे च विशिष्ट एवोपायोऽस्ति, स च दुःखसूत्रे प्रदर्शितः, प्रदर्शयिष्यते चाग्रतः। तस्मादनागतमेव दुःखं हातव्यम्।

## ❀ दुःखस्यैकविंशतिभेदाः ❀

तच्च दुःखं एकविंशतिप्रकारम्—शरीरं, षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखं दुःखं चेति। विषया कथं षडिति चेत्, उच्यते—घ्राणादीनां पंचानां गन्धादयः पंचविषयाः प्राधान्येनोक्ताः। षष्ठमिन्द्रियं मनस्तेन संवेद्यमानो यः सुखस्य दुःखस्य च हेतुर्भवति, स षष्ठो विषयः। कोऽसौ सुखदुःखषड्बुद्धिव्यतिरिक्त इति चेत्, स्मृतिसंकल्पौ—इत्येके, निद्रालस्यादिरित्यन्ये। कामादेः स्वावच्छिन्नात्मप्रदेशे सुखदुःखादिजनकत्वं वा चेष्टेन्द्रियार्थाश्रयत्वं वेति। इन्द्रियाणि विषयास्तद्बुद्धयश्च दुःखसाधनत्वेनैव दुःखमित्युच्यन्ते।

**तस्य निर्वर्तकमसाधारणकारणम्—अविद्यातृष्णे धर्माधर्मौ चेति सम्यगध्यात्मविद्भिः प्रदर्शितार्थविपरीतज्ञानमविद्या सह संस्कारेणेति। पुनर्भवप्रार्थना तृष्णा।**

## ❀ सुखस्य दुःखरूपताप्रकारनिरूपणम् ❀

सुखं तु दुःखानुषंगाद् दुःखम्। अविनाभावत्वमनुषङ्गार्थः—सुखं भोक्तुकामिनाऽवश्यं दुःखं भोक्तव्यम्। दुःखं वा जिहासताऽवश्यं सुखं हातव्यम्, विवेकहानस्याऽशक्यत्वादिति।

अन्ये त्वाहुः—सुखदुःखयोः परस्परं जन्यजनकभावोऽस्ति, यथा हि क्षुत्पिपासादिदुःखं विना अन्नपानादितः सुखं न भवतीति क्षुदादिदुःखस्यापि सुखहेतुत्वं, तथा शरीरेन्द्रियविषयविशेषेषु स्नेहसुखं विना तद्वियोगतः तद्विरोधिसंसर्गतो वा दुःखं न भवतीति सुखस्यापि दुःखसाधनत्वं, ततो विषयादर्थान्तरं न वाच्यम्।

नैतदस्ति, खड्गप्रहारादिभ्यः सुखाभावेऽपि दुःखोत्पत्तेः। किं च यथा विषयोऽनुभूयमान एव दुःखहेतुः, न तथा सुखं, किं तु सुखापगमात् दुःखमनुभूयते। अत एव सुखप्राप्तौ दुःखं न भविष्यतीति सर्वसंसारिणां भ्रान्तिः। विपाकफलोपभोगसुखवत् सर्वस्यापि विषयोपभोगसुखस्य परिणामेऽतितीव्रदुःखहेतुत्वात्। अतः सर्वेषु सुखतत्साधनेषु आसक्तिप्रतिषेधार्थं, दुःखतत्साधनेषु द्वेषप्रतिषेधार्थं चोभयोः समताभावनार्थं, सुखमपि दुःखमेवेत्युक्तम्। दुःखं तु बाधनापीडासन्तापात्मकं मुख्यत एव दुःखमिति।

## ❀ दुःखकारणनिरूपणम् ❀

तस्यैकविंशतिप्रकारस्यापि दुःखस्य निर्वर्तकमसाधारणं कारणम्—अविद्यातृष्णे, धर्माधर्माविति।

## ❀ अविद्या ❀

तत्र सम्यगध्यात्मविद्भिः प्रदर्शितस्यार्थस्य विपरीतज्ञानमविद्या, तत्संस्कारोऽपि अविद्यैवोच्यते। आत्मानमधिकृत्य यद्वर्तते शरीरादि अपवर्गपर्यन्तं तदध्यात्मम्, तद् ये तत्त्वतो विवेचयन्ति, ते सम्यगध्यात्मविदस्तैः प्रदर्शितम्—

"अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्।
चर्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः॥
जराशोकसमाविष्टं रोगायतनमातुरम्।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत्॥"

सुखदुःखयोरसाधारणौ हेतू धर्माधर्माविति। ज्ञानं दुःखविच्छेदः। आत्यन्तिकमिति न कदाचित् कथञ्चिद् दुःखसम्बन्ध इत्यर्थः।

इत्येवमादि। रागान्धानां तु तद्विपरीतज्ञानम्—

अमृतस्येव कुण्डानि सुखानामिव राशयः।
रतेरिव निधानानि योषितः केन निर्मिताः॥

इत्येवमादि। एवमात्मादिष्वपवर्गान्तेषु रागद्वेषमोहैरन्धीकृतानां विपरीतज्ञानं द्रष्टव्यम्। दुःखसूत्रे च किंचिदुदाहृतं तदिहाविद्येत्युक्तम्।

## ❀ तृष्णा ❀

"पुनर्भवप्रार्थना तृष्णा" यथा विषसंपृक्तेष्वन्नपानविशेषेष्वसंपृक्ताध्यवसायेऽपि परस्वेष्वपरस्वाध्यवसायेऽपि वितृष्णो न प्रवर्तते। सोऽप्रवर्तमानो नाऽनर्थेन युज्यते। तृष्णाग्रस्तस्तु जानन्नपि प्रवर्तते। सोऽनर्थेनापि युज्यते। तथा शरीरेन्द्रियादिषु यस्याग्रहोऽस्ति, स जन्मान्तरमपि प्रार्थयमानः तथा प्रवर्तते। यथाऽसौ पुनर्भवितुं कैरिष्टानिष्टस्थानशरीरेन्द्रियादिभिर्युज्यते। वितृष्णस्य तु यदि क्वचित्कथंचिन्मोहोऽपि भवति, तथाप्यसौ वैतृष्ण्याद-प्रवर्तमानः संसारं नाधिगच्छतीत्यतः तृष्णापि दुःखकारणम्।

अविद्या तर्हि असमर्थेति चेत्, न; वितृष्णस्यापि अविदुषो प्रवर्तमानस्यापि सर्पादिदुःखपरिहारासामर्थ्यवदन्यत्राप्यसामर्थ्यात्। न वितृष्णोपि निश्चली स्थातुं शक्तः, प्राणिधर्मत्वादावश्यकेऽपि कर्मणि विद्वान् विवेच्य हिंसादिपरिहार-द्वारेण प्रवर्तमानोऽनागतं दुःखं न प्राप्नोति।

## ❀ धर्माधर्मयोः दुःखहेतुत्वम् ❀

किं च दुःखसूत्रोक्तन्यायात् "तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः" (न्या० सू० ४।१।६) इति सूत्राच्च निश्चितं प्रधानं दुःखनिमित्तमविद्येति। अविद्यातृष्णयोर्निवृत्तावपि शीतवातघर्मसन्निपातादिभ्यो दुःखोत्पत्तिर्दृष्टेत्यतो धर्माधर्मयोरपि दुःखकारणत्वं निश्चीयते। ननु च धर्मः सुखस्यासाधारणो हेतुः, कथं दुःखस्य कारणमिति ? न, सुखस्यापि दुःखत्वेनोक्तत्वात्। यश्चायं शरीरेन्द्रियविषयादिसम्पादनद्वारेण सुखहेतुर्धर्मः सोऽत्र दुःखकारणत्वेनोक्तस्तस्य किंचिद्व्यवधानेन महतो दुःखस्य हेतुत्वात्। यस्तु शुद्धैरीश्वरभक्तियोगाङ्गा-दिसाधनैरकामितफलैर्जनितः तत्त्वज्ञानशमसन्तोषसुखहेतुः, स न दुःखस्य व्यवधानेनापि हेतुर्निःश्रेयसहेतुरेवासौ। तथा च तदर्थम्—"यमनियमाभ्या-मात्मसंस्कारो योगाच्चाध्यात्मविद्युपायैः" (न्या० सू० ४।२।४६) इत्युक्तम्।

तस्योपायस्तत्त्वज्ञानमात्मविषयम् । तथा चोक्तम्—"आत्मा वारे ! द्रष्टव्यः, श्रोतव्यो, मन्तव्यो, निदिध्यासितव्यश्च" (बृह० उ० ४।५।६)। "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । मत्वा च सततं ध्येय एते दर्शनहेतवः" "तरति शोकमात्मवित्" ( छां० उ० ७।१।३ ) इति। स च द्विविधः—परश्चापरश्चेति । तथा चोक्तम्—"द्वे ब्रह्मणी वेदितव्ये

---

## ❀ हाननिरूपणम् ❀

हानं दुःखविच्छेदः । धर्माधर्मार्थकामवैद्यशास्त्रैरुक्तानामुपायानामनुष्ठानेऽप्याध्यात्मिकादिदुःखविच्छेदाख्यं हानं भवतीति तद्व्यवच्छेदार्थमात्यन्तिकग्रहणम्, न हि ब्रह्मलोकादिप्राप्तस्याप्यात्यन्तिकं दुःखहानमस्ति, धर्मक्षयादावृत्तिश्रवणात्, अन्योऽन्याभिभवव्याघातादिश्रवणाच्च । अपवर्गप्राप्तस्य तु दुःखहेतोरविद्यातृष्णादेरत्यन्तोच्छेदान्न कदाचित् कथंचिद् दुःखसम्बन्ध इति ।

## ❀ हानस्योपायः ❀

तस्यात्यन्तिकदुःखहानस्योपायः तत्त्वज्ञानम् । तदुपायत्वे चोक्त एव न्यायो दुःखसूत्रे । किंविषयं तत्तत्वज्ञानमपवर्गनिमित्तम् ? आत्मविषयम् । ननु द्वादशप्रमेयविषयमुक्तम्, सत्यम्; किं त्वात्मनः प्राधान्यज्ञापनार्थमात्मविषयमित्युक्तम् । अत एवादौ स निर्दिष्टः ?

## ❀ आत्मनिरूपणम् ❀

स च नित्यव्यापकाचलनिर्मलस्वभावोऽपि शरीरादिभिर्दशभिर्योगात् जायते, म्रियते, प्रदेशस्थः प्रवर्तते, निवर्तते, रागी, द्विष्टो, मूढो, दुःखीत्येवं निकृष्टरूपेणाभाति । यदा त्वेवं दोषयुक्तानि शरीरादीनि दुःखान्तानि भावनयैव सन्त्यज्यात्मज्ञानैकरतिर्भवति, तदा स्वेनैव नित्यत्वादिरूपेण प्रकाशमानोऽपवर्गं प्राप्यात्यन्तनिर्मलः स्वात्मन्येव तिष्ठतीत्यतोऽपवर्गोऽन्तेऽभिहितस्ततः परं हातव्यप्राप्तव्याभावात्, सर्वव्यापारनिवृत्तेरिति । वेदेऽप्यात्मैवाऽतिप्रयत्नेन ज्ञातव्य इत्युपदिश्यते, तथा चोक्तम्—"आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ( बृ० उ० ४।५।६ )।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शनहेतवः ॥ इति ।

तथा "तरति शोकमात्मवित्" ( छां० उ० ७।१।३ ) इति ।

परं चापरं च" (त्रि० उ० ४।१७) इत्यादि। तत्रैश्वर्यादिविशिष्टः संसारधर्मैरीषदप्यसंस्पृष्टः परो भगवान् महेश्वरः सर्वज्ञः सकलजगद्विधाता। स कथं ज्ञातव्यः? अनुमानादागमाच्च। तथा हि—विवादाध्यासितमुपलब्धिमत्कारणकं, अभूत्वा भावित्वात्, वस्त्रादिवदिति।

---

## * आत्मभेदौ *

स द्विविधः—परश्चाऽपरश्च। उभावप्येतौ मुमुक्षुणा ज्ञातव्यौ। तथा चोक्तम्—"द्वे ब्रह्मणी वेदितव्ये परं चापरं च" (त्रि० उ० ४।१७) इत्यादि।

## * परमेश्वरस्य निरूपणम् *

तत्र परमात्मा भगवान् महेश्वरः। तस्य लक्षणम्—परमैश्वर्यविशिष्टत्वं, संसारधर्मैर्रागद्वेषमोहदुःखादिभिरनाद्यसंस्पृष्टत्वम्, अनादिसर्वज्ञत्वं, सकलजगद्विधातृत्वं चेति। कथमेवंलक्षणोऽसौ ज्ञातव्य इति? अनुमानादागमाच्च।

## * ईश्वरेऽनुमानप्रमाणम् *

तत्रानुमानं तावदुच्यते—विवादाध्यासितम्, उपलब्धिमत्कारणम्, अभूत्वा भावित्वाद्, वस्त्रादिवदिति। धर्मिविशेषानभिधानात् सन्दिग्धः पक्ष इति चेत्, न; विवादविषयाभिधानेन धर्मिविशेषसिद्धेर्यत्र धर्मिणि विवादः स एव पक्ष इति। विवादस्यानेकरूपत्वादनिश्चय एवेति चेत्, न; साध्यविशेषाभिधानेन तद्विशेषसिद्धेर्भोजनादिक्रियाविशेषवचनेन ब्राह्मणादिविशेषनिश्चयवदिति। यत्रैव बुद्धिमत्पूर्वकत्वं वादिनाऽभ्युपगतं परेण नाभ्युपगम्यते, तस्यैव विवादाध्यासितशब्देनाऽभिधानं, नाकाशादेः वस्त्रादेर्वा। तत्राभ्युपगमविरोधेनापि दृष्टान्तासिद्धिरिति चेतनपूर्वकत्वं वस्त्रादेरप्यसिद्धं चेतनस्याकर्तृत्वादिति चेत्, न; चेतनप्रेरितशरीरादेः प्रवृत्तेश्चेतनस्यैव हि कर्तृत्वम्। स्वतन्त्रो हि कर्तेति उच्यते। शरीरादेश्च स्वातन्त्र्यं नास्ति, पुरुषाभिप्रायानुविधायित्वात्, मृतशरीरादेः कर्तृत्वानुपलम्भाच्च।

## * सांख्याक्षेपस्तन्निरासश्च *

वत्सादिविवृद्ध्यर्थमचेतनस्य क्षीरादेः स्वातन्त्र्येण प्रवृत्त्युपलम्भादिति चेत्, न; साध्येनाव्यभिचाराभावात्। एवं हि सर्वोऽपि हेतुर्व्यभिचारी स्यात्।

चेतनस्याऽकर्तृत्वेऽनुमानेनागमेन च विरोधस्तथा हि—लोकेऽपि शास्त्रशिल्पादिकार्यविशेषं दृष्ट्वा ज्ञानविशेषं तत्कर्तुरनुमिनोति । तज्ज्ञानरहितानां चाकर्तृत्वमेवेति । आगमेष्वपि वेदस्मृतिपुराणादिषु ज्ञानिन एव कर्तृत्वं श्रूयते। "विद्वान् यजेत"—इत्यादिवचनाद्धर्मादिकर्तृत्वमपि चेतनस्यैवेति । ननु च शास्त्रशिल्पादिकर्तृत्वं ज्ञानेच्छाप्रयत्नवतोऽचेतनस्यैव बुद्धितत्त्वस्य, न तु चेतनस्येति । तदिदं महामोहविजृम्भितं यज्ज्ञानवान् अचेतन इति । योऽसौ ज्ञानेच्छादीनामाश्रयः, स एव ह्यात्मा, न ततोऽन्यश्चेतनोऽस्तीति वक्ष्यामः । प्रतिपादितं च बुद्धिः, उपलब्धिः, ज्ञानम्—इत्यादिशब्दानां पर्यायत्वमिति ।

## * मीमांसकाक्षेपस्तत्समाधानं च *

अपरस्त्वाह—कस्यचिद् हेतुमात्रस्य यद्यधिष्ठातृतोच्यते, कर्मभिः सर्वजीवानां तत्सिद्धेः सिद्धसाधनमिति, इदं तावदसम्बद्धाभिधानं निग्रहस्थानम्—बुद्धिमत्पूर्वकत्वे साध्ये कः प्रस्तावोऽचेतनैः कर्मभिः सिद्धसाध्यतोद्भावनस्य? बुद्धिमत्कृतैः कर्मभिः कृतं स्थावरादिकार्यं कथं न बुद्धिमत्पूर्वकमिति चेत्, न; विवक्षितापरिज्ञानात् । बुद्धिमता हि साक्षात्कृतं बुद्धिमत्पूर्वकं विवक्षितं, न तु पारम्पर्येणापि कृतम् । बुद्धिमत्पूर्वकमपि हि कर्म यावन्न तच्छक्तिं ज्ञात्वा विज्ञानवताऽधिष्ठितं भवति, तावन्न स्वकार्यं करोति । न हि बुद्धिमत्कृतं स्थाल्यादि बुद्धिमदधिष्ठातृनिरपेक्षमेव स्वकार्यं कर्तुं शक्नोति । तच्छरीरेणैवाऽनैकान्तिकत्वात् । तच्छरीरस्यापि अन्यबुद्धिमत्कारणत्वे वाऽनवस्थाप्रसंग इति चेत्, न; ईश्वरस्य शरीरास्तित्वे प्रमाणाभावात् । न चाप्रमाणकस्य शरीरस्यासिद्धौ तस्याप्यसिद्धिः, अतिप्रसंगात् । कर्तृत्वेनैव शरीरयोगं साधयतोऽपसिद्धान्तप्रसङ्गः, कर्तृत्वस्य त्वयाऽनिष्टत्वात् । प्रसङ्गसाधनमप्ययुक्तम्, प्रसङ्गस्य मूलानुमानबाधितत्वादाश्रयासिद्धत्वाच्च ।

## * ईश्वरस्य व्यापाराक्षेपः तत्समाधानं च *

नन्वशरीरस्य मुक्तात्मवद् व्यापार एव नास्ति, निर्व्यापारस्य च कर्तृत्वमयुक्तं, मुक्तात्मनो वा कर्तृत्वप्रसङ्गः । कोऽयं व्यापारः ? यद्युत्क्षेपणादिलक्षणः, सोऽमूर्तत्वान्न कस्यचिदात्मनोऽस्तीति सर्वस्यात्मनोऽकर्तृत्वप्रसङ्गः । शरीरस्यैव हि मुख्यमुत्क्षेपणादि कर्म, तथा च कर्तृत्वमपि शरीरस्यैव मुख्यं स्यान्नात्मनः। ततश्चान्यकृतं कर्मान्येनोपलभ्य भुज्यते इति स्यात्ततः सांख्यशास्त्रादिमतानुप्रवेशः स्यात् ।

**सामान्यव्याप्तेरनवद्यत्वेन निराकर्तुमशक्यत्वात्। ततः सामान्यसिद्धौ परिशेषात् कार्यविशेषाच्च कर्तृविशेषसिद्धिः, चित्रादिकार्यविशेषात्तत्कर्तृविशेषसिद्धिवत्।**

---

धात्वर्थलक्षणश्चेद् व्यापारः, सोऽशरीरस्याप्याकाशादेरस्तीति। मुक्तात्मनां तु न कर्मादिकृतास्ति शक्तिर्नापि स्वाभाविकीत्यकर्तृत्वम्। परमेश्वरस्य तु स्वाभाविकी शक्तिरुत्तमैश्वर्यलक्षणास्ति, तेन तस्य कर्तृत्वम्। तथाभूता च शक्तिः कार्यविशेषैर्वाऽनुमीयते।

## ❀ ईश्वरानुमाने दृष्टान्तस्य साध्यविकलता हेतोश्चासिद्धता ❀

नन्वेवं विशिष्टकर्त्रनुमाने दृष्टान्तस्य साध्यविकलता हेतुश्च विरुद्धः प्रसज्यत इति। तदुक्तम्—

कुम्भकाराद्यधिष्ठानं घटादौ यदि चेष्यते।
नेश्वराधिष्ठितत्वं स्यादस्ति चेत् साध्यहीनता॥
यथासिद्धे च दृष्टान्ते भवेद्धेतोर्विरुद्धता।

अस्यार्थः—कुम्भकाराधिष्ठितत्वं दृष्टान्ते यद्यभ्युगम्यते, तदेश्वराधिष्ठितत्वं न स्यात्ततश्च साध्यविकलता, अथेश्वराधिष्ठितत्वमप्यस्तीत्यभ्युपगम्यते, तथापि साध्यविकलता; यस्मादुभयसम्प्रतिपत्तौ दृष्टान्तत्वं युक्तम्। न चेश्वराधिष्ठितत्वं क्वचिदुभयोः सम्प्रतिपन्नं, येन साध्यहीनता न स्यात्। यथासिद्धे च दृष्टान्ते न केवलं साध्यहीनत्वं दृष्टान्तस्य, हेतोरपि विरुद्धता स्यात्। येन येन दृष्टान्ते हेतुर्व्याप्तः, तं तमर्थं व्याप्तिबलेन साधयति। घटादौ च दृष्टान्तेऽनीश्वरः, शरीरी, विनाशी, रागादियोगी च कर्त्ता दृष्टस्तेन साध्येऽपि तथाभूत एव कर्ता प्राप्नोतीति।

## ❀ तन्निरासः ❀

तदेतदविदितहेतुदृष्टान्तस्वरूपस्याभिधानं, तथा हि—किं शब्दोपात्तसाध्याऽपेक्षया साध्यहीनत्वादिदोष उच्यते? किं वाभिप्रायव्याप्तसाध्यापेक्षयेति? प्राचीनपक्षे तावन्न साध्यहीनत्वादिदूषणम्—न हीश्वरपूर्वकत्वं साध्यं शब्देनोपात्तम्, किं तर्हि? बुद्धिमन्मात्रपूर्वकत्वं सामान्यम्। तादृशा च साध्यसामान्येन व्याप्तिः प्रसिद्धैवेति कथं साध्यहीनत्वाद्यवकाशः? अथाभिप्रायव्याप्तसाध्यापेक्षयोच्यते, तदा सर्वानुमानानां साध्यहीनत्वादिप्रसङ्गः—सर्वानुमानेष्वपि हि प्रतिपत्तिविषयस्यार्थविशेषस्यानुमात्राभिप्रायेण व्याप्तत्वान्न हि निर्विशेषं

सामान्यं प्रतिपत्तिप्रवृत्त्योर्विषयस्तस्य प्रागेव सिद्धत्वाद् दाहाद्यसमर्थत्वाच्च। नाप्यग्निमात्रेण तद्वत्ता साध्यते, देशकालव्यवहितेनाग्निना तद्वत्तायाः साधयितुमशक्यत्वात्, नापि प्रदेशमात्रस्य वैफल्यात्तस्मादयं प्रदेशः तेनाग्निनाग्निमानित्ययमभिप्रायो वादिनः। तथा च तादृशा साध्यविशेषेण साधनस्य व्याप्तेरसम्भवादप्रवृत्तिरनुमानस्य ततोऽनुमानादग्न्यर्थिनां देशादिविशेषाभिमुख्येन प्रतिपत्तिः प्रवृत्तिश्च न स्यादिति। किंचापूर्वविशेषाऽप्रतिपादकत्वेनानुमानस्य गृहीतग्राहित्वेन स्मृतिवदप्रामाण्यप्रसङ्गः। यश्चापूर्वोंऽशः साध्यते, न तेन दृष्टान्तेऽन्वयः प्रतीयत इति साध्यहीनत्वादिदोषप्रसङ्गस्तस्मादभिप्रायव्याप्तविशेषविरुद्धत्वेन सर्वानुमानानामप्रामाण्यप्रसङ्गादनुमानप्रमाणवादित्वं निवर्तते। अप्रामाण्यवादिनोऽपि विरोधः प्रपञ्चेन प्रागेवोक्तः, प्रमाणस्यागौणत्वादीत्यादिपूर्वपक्षदूषणावसरे। यदप्युक्तम्—दृष्टान्ते हेतुर्येन येन व्याप्तो दृष्टस्तं तं प्रतिपादयतीति, तदप्ययुक्तम्; न हि महानसादौ स्थाल्यादीनां सम्बन्धी दृष्टो धूमः स्थाल्यादिकमपि प्रतिपादयतीति। स्थाल्यादिना न नियतो धूमस्तेन तन्न प्रतिपादयतीति चेत्, कोयं नियमः? यदपि नाभावदन्यः, तन्न विद्मः। अथाविनाभाव एव, तदाऽनीश्वरत्वादिभिरपि कार्यत्वस्य नियमो नास्ति। तत्प्रतिपत्तिरपि माभूद्, ईश्वरानीश्वरत्वादयो हि कर्तृविशेषाः, सामान्येन च व्याप्तिर्न विशेषेण। न हि कारणत्वादिभिर्विशेषणैरग्निर्धूमस्य व्यापक इति। ननु च धूमविशेषात्तारणादिविशेषोऽपि तद्विदा प्रतीयते, सत्यम्; अत्रापि कार्यविशेषेण कर्तृविशेषं विशेष्यव्याप्तिज्ञः प्रतिपद्यत एव। विशेषव्याप्त्यनभिज्ञस्तु धूमादपि न तारणादिविशेषं प्रत्येति, तथाप्यग्निमात्रमनुमिनोति।

स्यादेतत्—तारणादिविशेषेण धूममात्रं न व्याप्तम्, धूममात्रात्तारणादिविशेषाननुमानेऽप्यग्न्यनुमानं युक्तम्। अनीश्वरशरीरित्वादिविशेषेण तु कार्यमात्रं व्याप्तम्, तेन कार्यमात्रादप्यनीश्वरत्वादिविशेषप्रतीतौ कर्तुरनुमानं न युक्तमिति, नैतदस्ति; यदि ह्यनीश्वरत्वादिविशेषेणापि कार्यमात्रं व्याप्तं स्यात्, तदा यत्र यत्र कार्यं दृश्यते, तत्र तत्राऽनीश्वरत्वादिविशेषयुक्तकर्तृसिद्धिरेकस्य धूमाग्निसिद्धिवत्, न चैतदस्ति; न हि क्षित्यादि कार्यमस्मद्विधः कर्त्ता जनयितुं शक्नोति, तदशक्तश्च कथं तत्कर्ता वा तेनाऽनुमीयते? न च दृष्टान्ते सम्बन्धदर्शनमात्रेण व्याप्तिः सिध्यति, कार्यत्वाऽनुष्णत्वादीनामपि तथात्वप्रसङ्गात्। न चाऽनीश्वरत्वादिविशेषासिद्धौ कर्तृत्वस्याप्यसिद्धिर्युक्ता, न हि तेजसः कार्यत्वेनानुष्णत्वासिद्धौ अनित्यत्वस्याप्यसिद्धिः, परमाणूनां वा रूपादिसंस्कारसमवायिकारणत्वेनानित्यत्वादिविशेषासिद्धौ रूपादिमत्त्व-

स्याप्यसिद्धिर्युक्तेति। शरीरित्वादिविशेषसिद्धौ ह्यबाधितविषयत्वाङ्गविकलत्वादसमर्थो हेतुर्नैव कर्तृमात्रसाधने हेतोः केनचिदङ्गेन वैकल्यमस्ति, येन तत्राप्यसमर्थो हेतुः स्यात्। कथं तर्हीश्वरत्वादिविशेषसिद्धिः? व्यतिरेकबलेन स एव हेतुः प्रतिपक्षप्रतिषेधप्रमाणैरुपकृतः सर्वज्ञत्वादिविशेषविषयत्वेन व्यवतिष्ठमानः केवलव्यतिरेकी भवतीत्युक्तम्। न ह्यन्यथा क्षित्यादेः कर्तृसामान्यं सिध्यति।

## ❀ क्षित्यादिकर्त्तुरीश्वरसंज्ञा ❀

कथं पुनरीश्वरकृतकार्यविशेषापरिज्ञानेपि तत्सिद्धिः? कार्यवैलक्षण्यात्। यथाऽगरुकृतधूमविशेषापरिज्ञानेऽपि तृणादिकृतधूमविशेषेभ्यो विलक्षणं धूममुपलभमानस्तृणादिभ्यो विलक्षणमिवेन्धनमनुमाय तत्रास्मादगरुसंज्ञां प्रत्येति स्वयं वा संज्ञान्तरं करोति। तथाऽस्मदादिकृतकार्यविशेषेभ्यो विलक्षणं क्षित्यादिकार्यमुपलभमानोऽस्मदादिभ्यो विलक्षणं कर्तारमनुमाय तत्रास्मादीश्वरसंज्ञां प्रत्येति, स्वयं वा संज्ञान्तरं करोतीति।

यद्यप्यनुमात्रागरुद्रव्यं न दृष्टं, तथाप्यन्येन दृष्टमीश्वरस्तु केनापि न दृष्ट इति चेत्, केनापि न दृष्ट इति कथं जानीषे? न हि त्वं सर्वप्राणिनां दर्शनं वेत्सि। किञ्चादृष्टेन्द्रियादिकेनापि न दृष्टमिति तदनुमानमपि न स्यात्। न च क्रियात एव स्वर्गनरकादिफलं, तस्याः क्षणिकत्वेन जन्मान्तरे फलारम्भेऽसामर्थ्यात्। सूक्ष्मीभूत्वावतिष्ठते इत्येतदपि न केनचिद् दृष्टमिति कथं गम्यते? अर्थापत्तेश्चेत्, न; अर्थापत्तेरनुमानान्तर्भावित्वात्। तथा नाऽधिष्ठानमेवेन्द्रियं, गोलकेनाऽप्राप्तस्य चन्द्रादेर्ग्रहणात्। अप्राप्तस्य च ग्राहकत्वं नास्तीत्युक्तम्। चक्षुर्दृष्टान्तेनाऽन्येन्द्रियाणामप्यधिष्ठानव्यतिरेकित्वं द्रष्टव्यम्। पार्थिवाप्यादिरूपत्वं चेन्द्रियाणां साधितमतोपि नाधिष्ठानमिन्द्रियम्। तस्माद्यथा सुखादिलिङ्गेन रूपाद्युपलब्ध्या चात्यन्तपरोक्षस्य कर्मात्मादेरनुमानं, तथा क्षित्यादिकार्येणेश्वरस्येति।

यथा च कर्मात्मादौ व्यञ्जकत्वादिदृष्टान्तधर्मो नापाद्यते, तथेश्वरेपि दृष्टान्तधर्मोऽनीश्वरत्वादिर्नापादनीयः। उत्कर्षादिप्रसङ्गस्य विशेषविरुद्धानां च सर्वानुमानेषु समानत्वान्न तैरनुमानस्य विघातः सर्वानुमानाप्रामाण्यप्रसङ्गात्। स्यादेतत्—यदि सर्वानुमानेषूत्कर्षापकर्षाभ्यां विशेषविरुद्धैश्च साध्यविशेषः प्रतिक्षिप्यते, तदा कर्मेन्द्रियाग्न्यादिविशेषाभावे सति सुखदुःखरूपाद्युपलब्धिधूमादिविशेषो नोपपद्यते। अत्र तु सर्वज्ञत्वादिविशेषनिराकरणे किं नोपपद्यते येन तत्प्रतिषेधोऽप्रतिषेधः स्यात्।

क्षित्यादिकार्यमेवात्र नोपपद्यते। न ह्याकस्मिकं कार्यं सम्भवति, "नित्यं सत्त्वमसत्त्वं च" इत्याद्युक्तत्वात्। नाप्यचेतनेभ्य एव हेतुभ्यः कार्योत्पादः अचेतनानां स्वतः प्रवृत्त्यसम्भवात्, स्वभावेन हि प्रवृत्तावनुपरमप्रसङ्गस्तन्त्वादीनामपि स्वतःप्रवृत्तिप्रसङ्गश्च, विशेषाभावात्।

## ❀ चेतनस्यैवाचेतनाधिष्ठातृत्वम् ❀

कर्मणोऽप्यचेतनत्वान्न स्वतःप्रवृत्तिर्नापि प्रवर्तकत्वं, न ह्यचेतनो हेतुश्चेतनानामधिष्ठाता कश्चिदविशेषाददृष्टत्वाच्च। अधिष्ठातुरचेतनत्वे च निरभिप्रायव्यापारत्वात्तदधिष्ठितेभ्यो घुणादिपदविन्यासवन्न देशादिनियतस्वभावं कार्यमुपपद्यते। न हि स्थावरजंगमेष्ववयवविशेषाणां बाह्यानामाभ्यन्तराणां च नियतानियतजातीयेषु नियतानियतामेव रचनां बुद्धिविशेषेण नियमितो चेतनो हेतुः कर्तुं शक्नोति। बुद्धिमदधिष्ठितेभ्य एव हि चित्रलेखाद्युपादानोपकरणेभ्यः स्थावरजंगमजातिविशेषाकृतिष्ववयवरचनाविशेषनियमोपलब्धिः। तथा च विवादाध्यासितानि, उपादानोपकरणानि बुद्धिमदधिष्ठितान्येव कार्यं कुर्वन्ति, अचेतनत्वात् चित्राद्युपादानोपकरणवदिति।

## ❀ जीवानां क्षित्याद्यधिष्ठातृत्वं न सम्भवति ❀

भोक्त्रैवाधिष्ठितत्वात्सिद्धः साध्यते इति चेत्, न; शरीरोत्पत्तेः प्राक्तस्याचेतनत्वादस्वतन्त्रत्वाच्च। न हि गर्भादिदुःखप्राप्त्यर्थं क्वचिदात्मनः शरीरादिकं करोति। यदापि तस्य चैतन्यं स्वातन्त्र्यं च भवति। तदापि न तद्रसमलधात्वदृष्टादिविषयं ज्ञानम्। अदृष्टादिशक्तिमपि हि ज्ञात्वा प्रवर्तमानस्येच्छाविघातः क्वचिदपि न स्यात्।

न चायं स्वशरीरेऽपि अस्थिमज्जाशुक्रशोणितादीनां तत्संचारणाय नाडीविशेषाणां च यथा हि सन्निवेशं कर्तुं जानाति। नापि प्रतिदिनं शरीरोपचयार्थं रसमलधातुभावेनाहारं पाचयित्वा रसादीन् पृथक्-पृथक् कृत्वा नाडीविशेषैर्यथास्थानं संचारयितुं शक्नोति। एतेन पित्रोरपि कर्तृत्वं निषिद्धं, न हि तद्विषयज्ञानेच्छाप्रयत्नाभावेऽपि तत्कर्तृत्वं युक्तं, सर्वस्य सर्वकर्तृत्वप्रसंगात्। सति भावमात्रेणापि कर्तृत्वे व्योमादेरपि कर्तृत्वप्रसंगात्। यो हि ज्ञात्वा स्वेच्छयोपादानोपकरणानि प्रयुंक्ते, स एव लोके शास्त्रे च स्वतन्त्रः कर्तेति प्रसिद्धस्तद्बुद्धीच्छाप्रयत्ननियमितानामेवोपादानादीनां स्वयमचेतनानामप्रतिनियतसन्निवेशादिहेतुत्वं युज्यते, नान्यथा मृत्पिण्डादीनामिव।

तद्योऽसौ स्थावरजंगमेष्वन्तर्बहिर्वर्तिनां सूक्ष्माणामप्युपादानादीनां ज्ञानेच्छा-प्रयत्नैर्नियमयिता स भगवानीश्वरः।

## ❀ ईश्वरस्य शरीराभावः ❀

शरीरादिरहितोऽप्यत एवाऽयम्। शरीरी हि हस्तादिना स्थावरादिषु व्यापारं कुर्वन् कुलालादिवत् प्रत्यक्ष एव स्यात्। अन्तःशुषिरेषु चातिसूक्ष्मेषु हस्तादेरनवकाशाद्रसादिसंचारणं न स्यात्ततश्च रूपपरिवर्त्तावयववृद्धिपुष्ट्यादिकं न स्यात्। दुःखादियोगेऽपि तदभिभवेन शक्तिव्याघातात् सातत्येन च स्थावरादीनां यथार्हमुत्पत्तिवृद्ध्यादिकं न स्यादिति। एवं च शरीरवृक्षादिकार्यमप्यनीश्वरः शरीरादियोगी च कर्तुं न शक्नोति, किमुत भूभूधरादिकार्यमिति।

## ❀ क्षित्यादेः कार्यत्वसाधनम् ❀

भूभूधरादेश्च कार्यत्वं सावयवत्वेन प्रतीयते। सावयवस्य नित्यत्वविरोधात्। खननादिना चैकदेशविनाशदर्शनात्। अवयवविनाशेऽपि अवयविविनाश इत्ययुक्तं सर्वावयवानाशेप्यविनाशप्रसंगादिति। यच्चोक्तम्—

कुलालवच्च नैतस्य व्यापारो यदि कल्प्यते।
अचेतनः कथं भावस्तदिच्छामनुरुध्यते॥

## ❀ परमाण्वादीनां प्रवृत्तिप्रकारः ❀

यद्यस्य भवतः कुलालादिवद् हस्ताद्युत्क्षेपणादिरूपो व्यापारो नास्तीति कल्प्यते। कथं तर्हि परमाण्वादीनां तद्व्यापारात् प्रवृत्तिः। तदिच्छामात्रात्तु न युक्ता। न हि कुलालेच्छात एव दण्डादीनां प्रवृत्तिरुपलभ्यते। राजेच्छातो मन्त्रिप्रभृतिवदित्ययुक्तम्। मन्त्रिप्रभृतयो हि राज्ञाभिप्रायं कुतश्चिदवगम्य प्रवर्त्तन्ते। परमाण्वादिभावस्त्वचेतनः, स कथं तदिच्छां वेत्ति? अजानानश्च कथं तदिच्छानुविधानेन प्रवर्तत इति?

अत्रोच्यते—किमनेनाकस्मिकी परमाण्वादीनां प्रवृत्तिः प्रतिपादयितुमिष्टा? किं वा चेतनानधिष्ठितकर्मादिनिमित्ता? उत देहादिमत्पुरुषव्यापारनिमित्तेति? न तावदाकस्मिकी कस्यचित् प्रवृत्तिः देशकालादिनियमाभावप्रसंगात्। नापि चेतनानधिष्ठितकर्मादिनिमित्ता, मृत्पिण्डादिष्वनुपलम्भादचेतनस्य च कर्मादेः स्वतः प्रवृत्तिरन्यप्रवृत्तिहेतुता च प्राक्प्रतिषिद्धेति। शरीरादिमत्पुरुषव्यापार-निमित्तापि स्थावराद्युपादानादीनां प्रवृत्तिरनन्तरमेव प्रतिषिद्धा। तदेवं परिशेषात् मूलानुमानस्य सिद्धत्वादिदोषाभावाच्चेश्वरेच्छात एव परमाण्वादीनां प्रवृत्तिः

सिद्धा, कुलालस्य तु व्याहतशक्तित्वान्न तदिच्छामात्रात् दण्डादीनां प्रवृत्तिः। यच्चोक्तमचेतनः कथं भावः तदिच्छामनुरुध्यते इति, तन्न; शरीरतदवयवानामचेतनत्वेऽप्यात्मेच्छानुविधानेन प्रवृत्तेरुपलम्भात्। नह्ययं स्वशरीरं प्रेरयन्नात्मा शरीरान्तरेण प्रेरयति। कर्मणा पुरुषस्योपभोग्यत्वेन समर्पितं शरीरं, तेन तदिच्छावशेन प्रवर्तत इति चेत्, भवतु नामैवं तथा याऽचेतनत्वादिच्छामात्रान्न परमाण्वादेः प्रवृत्तिरित्यस्यानैकान्तिकत्वं परिहृतम्। यथा च भवतामयं विशेष उक्तस्तथास्माभिरपीश्वरेच्छालक्षणे विशेष उक्त इति।

अपि च विषयोऽपि कर्मणैवोपभोग्यत्वेन समर्पितः। स किं न शरीरवदिच्छामात्रेण प्रवर्तते ? यथाभूतेन कर्मणा शरीरं समर्पितं न तथाभूतेन विषय इति चेत्, एवं तर्हि यथाभूतेश्वरस्येच्छा न तथाभूता कुलालादेस्तेनेश्वरेच्छात एव परमाण्वादेः प्रवृत्तिर्न दण्डादेः कुलालेच्छामात्रेणेति किमत्र विरुद्धम् ?

किं च ध्यानविदः केचिदभिध्यानमात्रेण दृष्टकवद् दण्डादिकमपि प्रेरयन्तो दृश्यन्ते। ततोऽपि परमाण्वादेरीश्वरेच्छातः प्रवृत्तिर्नाऽसम्भाव्या। शक्तितारतम्यं च पुरुषेषु दृष्टं, तेन कस्यचिदीदृशं सामर्थ्यं यदिच्छामात्रेण सर्वप्रेरकत्वमिति।

## ❀ कर्मवदीश्वरस्यापि स्वातन्त्र्यम् ❀

कश्चायं वादिनां मोहो येनादृष्टपूर्वकत्वाविशेषेऽपि कर्मणः स्वातन्त्र्येण हेतुत्वं विरुद्धमप्यभ्युपगम्यते, भगवतस्त्वनेकागमयुक्तिप्रतिपादितमपि नेष्यते। न च कर्मापि चिद्रूपं, यतो 'अनेनाहं कृतम्'—इति ज्ञात्वा तस्यैव शरीरादि भोगयोग्यं कृत्वा समर्पयेत्। नापि शरीरं चिद्रूपं, येन 'अस्यैव कर्मणाहं समर्पितम्'—इति ज्ञात्वा भृत्यवदिच्छानुरोधेन प्रवर्त्तेत।

## ❀ कर्मपरमात्मनोर्वैषम्यकारणम् ❀

ननु च "स्वर्गकामो यजेत"—इत्यनेनागमेन पुरुषस्य भोक्तृत्वं प्रतिपादितं, तच्च सर्वकर्मणां भोगसम्पादकत्वं शरीरानपेक्षं न सम्भवति। भोग्यत्वं च तदिच्छानुरोधित्वे सति भवति। तस्मात् [1]श्रुतार्थापत्त्या सर्वस्यैवाऽस्य प्रतिपादको वेदः कल्प्यते। न च परमाणूनामीश्वरेच्छानुरोधित्वप्रतिपादकं प्रमाणं किञ्चिदस्तीति।

---

१. श्रुतार्थापत्तिः—आगमपूर्विका अर्थापत्तिः। सा द्विविधा "प्रमाणग्राहिणीत्वेन तस्मात् पूर्वविलक्षणा" ( श्लो० वा० अर्था० २ )।

## ❀ तस्य भङ्गः ❀

तदेतदयुक्तम्, यतः "स्वर्गकामो यजेत"—इति येनायं नियोगो दत्तः, स एव तत्कर्मकारिणां फलं दास्यति, राजादिवत्। अतः क्षीणार्थापत्तिर्न कर्मणः कारणत्वं प्रतिपादयति। समर्थितं च वेदस्य पौरुषेयत्वम्।

किं च यथा कर्मणां सूक्ष्मरूपेणाऽवस्थानमपूर्वोत्पादकत्वं वाऽर्थापत्तितः शरीरादिहेतुत्वं च कल्प्यते, तथा बुद्धिमदधिष्ठितत्वमपि श्रुतार्थापत्तितः किं न कल्प्यते? अन्यथा ह्यचेतनं कर्म स्वकर्तारमजानत् कथं तस्यैव फलं समर्पयेत्? तत्स्वभावत्वेऽप्यात्मलाभानन्तरमेव फलं सम्पादयेत् प्रदीपप्रकाशवत्। चेतनेच्छापेक्षित्वे तु नायं प्रसंगः, तदिच्छाया राजादिवत्कालनियमाभावात्।

परमाणूनामीश्वरेच्छानुरोधित्वप्रतिपादकं प्रमाणं नास्तीत्येतदप्यन्धचेष्टितं, अनुमानस्योक्तत्वात्, आगमस्य वक्ष्यमाणत्वाच्च। किं च विवादास्पदीभूताः परमाण्वादयः, कस्यचिदिच्छानुरोधिनः, प्रवृत्तिमत्त्वाद्वस्त्रादिवत्। यस्येच्छानुरोधिनः, स भगवानीश्वरः। तस्य हि स्वभावेन परमैश्वर्यसामर्थ्यात् स्वशरीरकल्पाः सर्वे भावास्तदिच्छानुविधानेन प्रवर्तन्ते। अस्मदादेरैश्वर्याभावात् [1]तदधिष्ठितकर्मवशात् स्वशरीरमेवेच्छानुरोधि सञ्जातमिति कोऽत्र विरोधः?

## ❀ क्षित्यादिकर्तृत्वाभावसाधनस्य प्रमेयत्वस्य हेतोर्निरासः ❀

यदप्याह—

प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य तु।
सद्भाववारणे शक्तं को नु तं कल्पयिष्यति॥ इति।

तदप्ययुक्तम्; प्रमेयत्वादेः सदसदुभयधर्मत्वेऽपि प्रतिबन्धासिद्धेः। सद्धर्मो ह्यसत्त्वे साध्ये विरुद्ध एव स्यात्। अभावधर्मत्वसिद्धे धर्मिण्यसिद्धः स्यात्। धर्मिणस्तु सत्त्वेन सिद्धौ बाधितविषयोऽसत्त्वेन सिद्धौ तु व्यर्थः प्रमेयत्वादिहेतुः। उभयधर्मत्त्वनैकान्तिक एवेति। तस्मान्न प्रमेयत्वादिधर्मोऽसत्त्वं साधयति।

अथ जगत्कर्तृत्वादिधर्मः प्रमेयत्वादिना प्रतिषिध्यते, न तर्हि धर्मिसद्भाववारणं, न ह्यग्नेः शैत्यादिधर्मप्रतिषेधात्सद्भावः प्रतिषिद्धो भवति। सामर्थ्यादत्र धर्मिसद्भावः प्रतिषिध्यते इति चेत्, न; आश्रयासिद्धत्वदोषात्। न ह्यसति धर्मिणि प्रमेयत्वादेः पक्षधर्मत्वसिद्धिस्तदसिद्धौ च कथं गमकत्वम्? स्वरूपेणा-

---

१. तदधिष्ठितकर्मवशात् = ईश्वराधिष्ठितकर्मवशात्।

प्यसिद्धं प्रमेयत्वम्, न हि प्रमाणेनाप्रतीयमानस्येश्वरस्य प्रमेयत्वं युक्तम्। प्रमाणेन प्रतीतौ च कथं कर्तृत्वादिनिषेधः? कर्तृत्वादिसाधनादेव तत्स्वरूपासिद्धेः। अकर्तृत्वादिरूपेण प्रसिद्धस्य तु कर्तृत्वादिप्रतिषेधोऽनर्थक इति पराभ्युपगतस्य धर्मित्वम्। तस्य पराभ्युपगमादेव प्रमेयत्वं नासिद्धमिति चेत्, स पराभ्युपगमः प्रमाणम्? अप्रमाणं वा? प्रमाणं चेत्, तेनैव कर्तृत्वादिप्रतिषेधो बाध्यते, कर्तृत्वादिविशिष्टस्यैव परेणाभ्युपगतत्वात्। अथाप्रमाणं, ततः कथं नाश्रयासिद्धत्वादिदोषः? प्रमाणात्प्रमेयत्वाभ्युपगमः परस्याप्रमाणात्तु कर्तृत्वाभ्युपगम इत्ययं विशेषः कुतस्त्वया निश्चितः? पराभ्युपगतत्वप्रतीतेरुभयत्राविशेषात्। न मया कर्तृत्वप्रमेयत्वयोरेकस्यापि सिद्धिरिष्यते, किं तर्हि? प्रमेयत्वस्याजगत्कर्तृत्वेनान्यत्र व्याप्त्युपलब्धेरिहापि प्रमेयत्वमिच्छतो कर्तृत्वप्रसङ्गश्चोद्यत इति चेत्, न; प्रसङ्गस्य कार्यानुमानेन बाधितविषयत्वात्। समानम् बाधितविषयत्वमिति चेत्, न; प्रसङ्गस्य कार्यानुमानानपेक्षस्य पक्षधर्मत्वासिद्धिः कार्यानुमानस्य तु प्रसङ्गस्यानपेक्षस्यैव पक्षधर्मत्वसिद्धिरिति कथं समानताऽनयोः? समानत्वे चोभयोरीश्वरः कर्ता चाऽकर्ता च प्रसज्यते। न चैतदुपपादयितुं शक्यते, कर्तृत्वाकर्तृत्वयोरेकत्र विरोधात्।

किं चैवंभूतः प्रसङ्गः सर्वानुमानेष्वपि समानस्तथा हि—चक्षुरादेः प्रमेयत्वमिच्छतोऽनिन्द्रियत्वादिप्रसङ्गः, पुरुषस्य प्रमेयत्वमिच्छतोऽपरलोकित्वादिप्रसङ्गः, अग्नेः प्रमेयत्वमिच्छत एतद्धूमाजनकत्वप्रसङ्ग इत्येवं सर्वानुमानोच्छेदः प्रसज्यते।

## ❀ जगत्कर्तृत्वप्रमेयत्वयोरविरोधः ❀

न च जगत्कर्तृत्वादिना सह प्रमेयत्वादेर्विरोधः कश्चिदस्ति, येन प्रमेयत्वाद्यभ्युपगमे जगत्कर्तृत्वादिनिवृत्तिः प्रसज्यते। व्यापकत्वाऽणुत्वयोरिवैकत्राऽनुपलब्धेः सहाऽवस्थितिलक्षणोऽस्ति विरोध इति चेत्, न; उभयप्रतिपत्तिमन्तरेण विरोधस्याऽधिगन्तुमशक्यत्वात्। कोटियोजनप्रमाणविषाणित्वप्रमेयत्वयोरिवाऽन्यत्रादर्शनेऽपि विरोधावगतिरिति चेत्, न; अत्रापि विरोधासिद्धेः। क्वचिद्देशे कस्यचित्तादृशमपि अस्तु विषाणं को विरोधः? स्याद्विरोधो यदि यज्जातीया विषाणिनो दृष्टास्तज्जातीयस्य कस्यचित्तादृशं विषाणं ब्रूयात्। अत्रापि यज्जातीयाः कर्तारो ज्ञातारश्च दृष्टाः, तज्जातीयस्यैव यदि कस्यचिज्जगत्कर्तृत्वाद्यभ्युपगम्यते; तदा स्याद्विरोधः। कुलालादिविलक्षणस्येश्वरस्य जगत्कर्तृत्वाद्यभ्युपगमे त्वविरोध इति।

## ❀ ईश्वरप्रतिषेधहेतूनामन्येषामपि निरासः ❀

एतेनेश्वरः क्षित्यादेः कर्ता सर्वस्य ज्ञाता वा न भवति, पुरुषत्वाद् वक्तृत्वादित्येवमादयः कुहेतवोऽयुक्ताः। तथा नेश्वरकर्तृकं क्षित्यादिकार्यं, प्रमेयत्वादस्मदादिनिर्मितेतरत्वादाकाशादिवदित्याद्यप्ययुक्तम्। विशेषप्रतिषेधस्य शेषाभ्यनुज्ञायां सामर्थ्योपपत्तौ कर्त्रन्तरप्रसिद्धावपसिद्धान्तप्रसङ्गात् प्रमेयत्वाऽस्मदादिनिर्मितेतरत्वादेरीश्वरकर्तृत्वेन विरोधासिद्धेः। सन्दिग्धानैकान्तिकत्वं सन्दिग्धाऽबाधितविषयत्वं वा—बलीयसा च कार्यानुमानेन सर्वस्याऽपीश्वरप्रतिषेधहेतोर्बाधितविषयत्वेनाप्रमाणत्वं द्रष्टव्यम्। कार्यस्य हि शरीरादेर्बुद्धिमत्कारणं विनोत्पत्तौ विरोधः प्रदर्शितस्तेन तस्य सन्दिग्धानैकान्तिकत्वमपि नास्तीति निरवद्यत्वाद् बलीयस्त्वमिति।

## ❀ आप्तकामस्य जगद्रचनायां कथं प्रवृत्तिरित्याशङ्का ❀

नन्विष्टानिष्टोपादानप्रतिषेधार्थमेव प्रेक्षापूर्वकारिणः प्रवर्तन्ते। तथैवेश्वरस्यापि प्रवृत्तावप्राप्तकामत्वादनीश्वरत्वप्रसङ्गोऽस्मदादिवत्। अपुरुषार्थायां तु प्रवृत्तावप्रेक्षापूर्वकारितैव स्यादपुरुषार्थक्रियानुष्ठानत्वात्। तदाह—

जगच्चासृजतस्तस्य किं नामेष्टं न सिध्यति।
प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते॥
एवमेव प्रवृत्तिश्चेच्चैतन्येनास्य किं भवेत्।
क्रीडार्थायां प्रवृत्तौ न विहन्येत कृतार्थता।
बहुव्यापारतायां हि क्लेशो बहुतरो भवेत्॥ इति।

## ❀ तन्निरासः ❀

किं पुनरेतदीश्वरानुमानप्रतिषेधार्थमुपन्यस्तम्? किं वा स्वतन्त्रसाधनमीश्वरप्रतिषेधार्थम्? न तावदनुमानप्रतिषेधार्थं, तस्यासिद्धत्वादिदोषरहितत्वेन प्राक् समर्थितत्वान्निरवद्यस्य धूमानुमानवन्निषेद्धुमशक्यत्वात्। सावद्यतायां वा सैव वाच्या किमनेनाऽसम्बद्धेन? न ह्यनेन हेतोः कश्चिद्दोषः प्रतिपाद्यत इति।

अथेश्वरप्रतिषेधार्थं साधनमनेनोक्तम्—न जगतः स्रष्टा भगवान्, दृष्टादृष्टप्रयोजनविकलत्वान्मुक्तात्मवदिति, अत्रापि यदि धर्मी न प्रतीयते तदाश्रयासिद्धो हेतुः। अथ प्रतीयते, तदा तद्ग्राहकप्रमाणेन बाध्यते। परप्रसिद्धिमात्रेण च यथा पक्षधर्मत्वादिसिद्धिस्तथा प्रागेव प्रपञ्चितम्।

किं च स्वनिश्चयवदन्येषां निश्चयोत्पिपादयिषया परार्थानुमानस्य प्रवृत्तिमिच्छन्त्यनुमानविदः। तेन स्वयं निश्चितपक्षधर्मत्वादिरेव हेतुः परं प्रत्युपादेयोऽन्यथा स्वयमप्रतिपन्नः, ततः प्रतिपादकोपि न स्यात्। न ह्यव्युत्पन्नः प्रतिपादयिता कश्चिदस्ति।

अपि चायं परेण प्रतिपन्न इति कुतस्तन्निश्चयः? शास्त्रादिति चेत्, न विप्रतिपत्तिकाले तस्याप्रमाणत्वात्। प्रमाणत्वे वा हेतुवत्साध्यस्यापि ततः सिद्धिरविशेषात्। प्रतिवादिवचनाद्धेतुसिद्धिरिति चेत्, तत्किमिदानीं? पक्षनिर्देशानन्तरमनेन प्रतिवादी प्रष्टव्यः—को नु भवतः प्रसिद्धो हेतुरिति? स चाज्ञानादन्यतो वा निमित्तान्न ब्रवीतीति कथं ततो हेतुसिद्धिरिति?

## ❀ ईश्वरप्रवृत्तेः प्रयोजनम् ❀

तथापि विचार्यमेतत्—किमर्थं प्रवर्तते भगवानिति? परानुग्रहार्थमित्येके। न च स्थानशरीरेन्द्रियाद्यनुत्पाद्य परानुग्रहः कर्तुं शक्यत इति स्थानादिकमपि करोति। स्वात्मनस्तु न किञ्चित्प्रयोजनम्। महानुभावतया हि शक्तः परार्थमेव प्रवर्तते।

## ❀ ईश्वरः सुखमेव जनयेन्न दुःखमित्याशङ्का ❀

नन्वेवं सुखमेव जनयतु, न हि महानुभावः परेषां मोहदुःखाद्युत्पादने प्रवर्तते, वैद्यवदिति चेत्, न; अप्रवृत्त्यैव तत्सिद्धेः। स्यान्मतम्—यथा गण्डगुल्मादिव्याधिनिवृत्त्यर्थं दाहच्छेदतीव्रौषधादिना दुःखोत्पादनं महानुभावोऽपि वैद्यः करोति, तथेश्वरोप्यधर्मव्याधिनिवृत्त्यर्थं दुःखमप्युत्पादयतीति, तच्च नैवं; कस्मात्? अप्रवृत्त्यैव तत्सिद्धेः—अनिष्टस्थानाद्युत्पत्तावधर्माधिष्ठातृत्वे च यदा भगवान्न प्रवर्तते, तदा चाधर्मस्य व्याधिदुःखानुत्पादकत्वम्। किं चाऽधर्मं कस्मात्कारयति? न हि निवृत्त्यर्थं प्रवृत्तो महानुभावस्तं पुनः कारयति, एवं हि कुवैद्यः स्यात्। न चेश्वरेणानधिष्ठितस्याऽविहिते प्रवृत्तिरधर्मोत्पत्तिश्च सम्भवतीति। तन्निमित्ताऽधर्मक्षपणार्थमधर्मेपि प्रवर्तयतीति चेत्, यद्यन्यथा तस्य क्षपणं न सम्भवति, तदा तस्याऽक्षपणमेव न्याय्यम्। क्षपणे ह्यधर्मवृद्धिस्तत्क्षपणे पुनरधर्मवृद्धिस्तत्क्षपणे पुनरित्येवं महाननर्थः। पश्चाच्छान्तिर्भविष्यतीति चेत्, असंख्यातकोटिजन्मसु शान्तिर्न भूता पश्चाद् भविष्यतीति का प्रत्याशा? किं च वैद्योपि विवेकज्ञः संग्रहपरिच्छेदं ज्ञात्वा प्रवर्तते। भगवतस्तु सर्वज्ञत्वादचिकित्स्येषु प्रवृत्तिर्न युक्तेति।

## ❀ तन्निरासः ❀

अत्रोच्यते—यस्य यदभिप्रेतं, तस्य तत्सम्पादनार्थं यः प्रवर्तते स परार्थं प्रवृत्त इत्युच्यते। सुखं च सर्वसंसारिणामनादिवासनातोऽभिप्रेतं, तत्सम्पादनार्थं च प्रवर्तमानो भगवानधर्ममप्यनुषङ्गतः कारयति। न ह्यन्यथा विषयोपभोगनिमित्तं सुखं सम्भवति। धर्मप्रतिबन्धकाऽधर्मानुपरमे च न तस्माद्धर्मात्सुखं भवतीति तन्निमित्तसुखसम्पादनार्थं तत्प्रतिबन्धकमधर्ममेव तावत् अधिष्ठाय फलद्वारेण निवर्तयत्यन्यथा तन्निवृत्त्यसम्भवात्। यस्य तु प्रायश्चित्तादिद्वारेण निवृत्तिः सम्भवति, तस्य तथा निवृत्तियोग्यस्योत्पन्नत्वात्तथैव निवृत्तिं कारयति। तदेवं परार्थं प्रवृत्तोऽप्यनुषङ्गतो नरकादिदुःखमपि जनयतीति। एवं संसारचक्रे सुखप्रार्थनातः परिवर्तमानानां यदा कस्यचित् कदाचित् कथंचिन्मुक्तिमार्गप्रवृत्तिबीजोत्पादने सहकारिणं हेतुं प्राप्नोति, तदा तद्बीजं जनयित्वा तत्पुरुषं मुक्तिमार्गेऽपि प्रवर्तयति। ततः प्रतिजन्माभ्यासेन प्रवर्तयन् संसारहेतून् संस्कारांस्तनूकारयति। मुक्त्युपायहेतून् संस्कारांश्च प्रतानयति तावद्यावन्मोक्षं प्रापयतीति। तन्न परार्थप्रवृत्त्यभ्युपगमेपि कश्चिद्विरोधः।

## ❀ ईश्वरप्रवृत्तौ स्वार्थमपि सम्भवति ❀

अथवा स्वार्थमेव प्रवर्तते। किं तद्भगवतः प्रयोजनमिति चेत्, जगदुत्पत्त्याद्येव। कथमिति चेत्, सुखप्राप्तिदुःखाभावावपि कथं प्रयोजनम्? यदि तदर्थं पुरुषस्य प्रवृत्तत्वादिष्टत्वाच्च, तदा भगवतोऽपि जगदुत्पत्त्याद्यर्थं प्रवृत्तत्वादिष्टत्वाच्च तदेव प्रयोजनम्। किमर्थं तदिष्टमिति चेत्, सुखं किमर्थं पुरुषस्येष्टमिति? यत्किंचिदेतत्? तस्माद्यो यमर्थमधिकृत्य प्रवर्तते, तत्तस्येष्टत्वात् प्रयोजनमिति। न च स्वार्थं प्रवर्तमानस्यानाप्तकामत्वादनीश्वरत्वं प्रसज्यते, यस्य हि यथाऽभिप्रेतं न सिध्यति, सोऽनाप्तकाम इत्युच्यते। भगवतस्तु तत्तथैव सिध्यतीति कथमनाप्तकामत्वम्?

## ❀ अथवा स्वाभाविकी प्रवृत्तिरीश्वरस्य ❀

अथवा आदित्यवत्स्वभावेनैव प्रवर्तते—यथादित्यः स्वभावेन जगत्प्रकाशयति, प्रकाशिते च जगति स्वकर्मानुविधानेन सुखदुःखादिवैचित्र्यं प्राणिनोऽनुभवन्ति; तथा भगवानपि स्वभावेनैव जगतामुत्पत्तिस्थितिविनाशान् करोति। प्राणिनश्च तत्कर्मानुरूपैः सुखदुःखज्ञानाऽज्ञानादिभिः संयोजयतीति। न च

एको रुद्रो न द्वितीयाय तस्थे, य इमान् लोकानीशत ईशनीभिरिति।

स्वभावतः प्रवृत्तौ चैतन्यविरोधः, चेतनानामपि स्वभावनियमोपलब्धेः। विदुषोऽपि कस्यचिदनर्थकेषु तृणखण्डनादिषु प्रवृत्तिनियमोपलम्भेन स्वभावनियमव्यवस्थानात्। व्यसनं तदिति चेत्, भगवतोऽपि व्यसनमेवैतत्—यन्निरतिशयज्ञानैश्वर्योऽपि सन् येषां भावानां यदोत्पत्तिहेतवः सन्ति, तदा तद्धेतूनधिष्ठाय तानुत्पादयतीति। तच्च व्यसनं भगवतः कुतश्चिन्नोत्पन्नमिति स्वभाव इत्युच्यते।

न चादृष्टोपादानादिहेत्वनुरूपं कार्यं कुर्वतः स्वातन्त्र्यविरोधः, स्वतन्त्राणामप्युपादानाद्यनुरूपकार्यकर्तृत्वोपलम्भात्। परिदृष्टसामर्थ्यकारणकप्रयोक्तृत्वं हि स्वातन्त्र्यमुच्यते, तच्चास्ति महेश्वरस्येति। यथा यथा भगवतः क्षित्यादिकार्यकर्तृत्वं सम्भवति, तथा तथाभूतो भगवानभ्युपगन्तव्यः, कार्यानुमानबलेन तस्य निरवद्यत्वेन समर्थितत्वात्।

## ❀ आगमादप्येकेश्वरासिद्धिः ❀

आगमादप्येको भगवानशेषजगदुत्पादनशक्तिमान्निश्चीयते, यदाह—"एको रुद्रः न द्वितीयः" ( तै० सं० १।८।६ ) "यः सूर्य इव इमाँल्लोकानीशते [1]ईशनीभिः" ( वटुको० २२ ) इति।

"न तस्य कार्यं करणं च विद्यते।
न तत्समश्चाभ्यधिकश्च दृश्यते॥
पराऽस्य शक्तिर्विविधैव श्रूयते।
स्वाभाविकी ज्ञानबलक्रिया च॥"

इति श्वेताश्वतरोपनिषत् ( ३।२ )।

तथा सर्वोपनिषत्स्वपि जगद्विधातृत्वादिधर्मकात्मज्ञानं मुक्तिनिमित्तं निश्चितम्। तथा "विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्" ( तै० आ० १० ), "सं बाहुभ्यां धमति सं पत्त्रैः", "द्यावाभूमी जनयन् देव एकः" इति। पुनश्चाह—"एतस्य चाक्षरस्य प्रशासने गार्गि! द्यावापृथिवी विधृते तिष्ठतः" ( बृह० उ० ३।८।९ ) इति। मन्वादयोऽप्याहुः—

"प्रशासितारं सर्वेषामणीयांसमणोरपि।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम्॥"

( मनु० १२।१२० )

---

१. ईशनीभिः = शक्तिभिरित्यर्थः।

"एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ।
जन्मवृद्धिक्षयैर्नित्यं संभ्रामयति चक्रवत् ॥"

(मनु० १२।१२४)

इत्येवमादि ।

## ❀ स्वरूपप्रतिपत्तौ नाप्रामाण्यमागमवाक्यानाम् ❀

न स्वरूपप्रतिपत्तावप्रामाण्यमेषां प्रतिपत्तव्यम्, मेध्यामेध्यत्वस्वरूपप्रतिपादकानां स्वर्गनरकादिस्वरूपतत्साधनाङ्गस्वरूपप्रतिपादकानां च वाक्यानां प्रामाण्योपपत्तेः । न हि स्वरूपप्रतिपत्तिमन्तरेणोपादानपरिहारावुपपद्येते, अन्यस्मिन् प्रतीतेऽन्यत्र प्रवृत्तावतिप्रसङ्गात् । विधिप्रतिषेधाङ्गत्वात् प्रवृत्तिनिवृत्तिपरत्वं, न स्वरूपार्थत्वमिति चेत्, न; स्वरूपप्रतिपत्तिमन्तरेण ततस्तन्नियतयोः[1] प्रवृत्तिनिवृत्त्योरयोगात् । न हि शशविषाणादिवचसां विध्यङ्गत्वेनापि प्रामाण्यं प्रवृत्तिनिवृत्तिपरत्वं च सन्तोऽनुमन्यन्ते । तस्माद् "आत्मा वारे द्रष्टव्यः" (बृह० उ० २।४।५) इत्यादिविध्यङ्गत्वेऽपि जगत्स्रष्टृत्वसर्वज्ञत्वादिवचनानां [2]घृतयूपादिवचसामिव यथार्थत्वमेव स्वरूपार्थत्वादिति ।

## ❀ आत्मज्ञानस्य मोक्षार्थता ❀

यच्चोक्तम्—आत्मज्ञानं यागप्रवृत्त्यर्थं विहितं, न तु मोक्षार्थम्; अश्रुतत्वादिति, तदयुक्तम्; वेदस्य प्रामाण्यनिश्चयेऽर्थिनामात्मज्ञानं विनाप्यग्निहोत्रादिज्ञानादेव प्रवृत्तिर्भवति, अर्थापत्तितो वात्मापि ज्ञायते । अप्रामाण्ये त्वात्मज्ञानविधानेपि न प्रवृत्तिः । तस्मान्न यागप्रवृत्त्यर्थमात्मज्ञानं विहितं, किन्तु मोक्षार्थं; वाक्यान्तरेषु श्रुतत्वात्—"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" (श्वेता० उ० ३।७), "तमेव विदित्वाऽतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय" (श्वेता० उ० १।८) इत्येवमादिषु । यागार्थत्वं च वाक्यान्तरेऽपि न श्रुतमित्यप्रामाणकमेव कल्पितम् । तस्माद् "यावज्जीवमग्निहोत्रं जुहुयात्" (बह्वृ० ब्रा० ? ) इत्यादेरिव वाक्यान्तरोक्तफलेन सम्बन्धो वेदितव्यः, [3]"यस्य येनार्थसम्बन्धः" (भाह० वा० बृहट्टीका) इत्यादिन्यायेन ।

---

१. तन्नियतयोः = हेयोपादेयनियतयोरित्यर्थः ।

२. घृतयूपादिवचसाम्—"घृतं देवानामस्तु" (तै० सं० ६।१।१।४), "यूपं मिनोति" (तै० सं० ६।३।४।७) इत्यादिवाक्यानामिवेत्यर्थः ।

३. यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥

अन्यथा निष्फलो विधिर्न केनचिदनुष्ठीयत इति अनर्थकः स्यात्। प्रत्यवायपरिहारार्थमनुष्ठीयत इति चेत्, न; तस्याप्यश्रुतत्वात्। श्रुतहान्यश्रुतकल्पनादोषश्चैवं स्यात्। तस्मान्मुक्त्यर्थमात्मज्ञानं विहितम्।

स चात्मा किंधर्मको द्रष्टव्य इत्यपेक्षायां पूर्वोक्तानि वाक्यानि "अरूपमरसमगन्धवत्" (कठो० ३।१५) एवमादीनि च सम्बध्यन्ते। एवं चागमबाधित्वेनाप्यप्रामाण्यमीश्वरप्रतिषेधहेतूनां द्रष्टव्यम्।

## ❋ ईश्वरासर्वज्ञत्वसाधननिरासः ❋

एतेनासर्वार्थमीश्वरज्ञानत्वादस्मदादिज्ञानवदित्येवमादेरपि धर्मिग्राहकप्रमाणबाधितत्वमाश्रयासिद्धत्वं वा पूर्वोक्तं द्रष्टव्यम्। न ह्यसर्वज्ञत्वे भगवतोऽनन्तकार्योत्पत्तिः सम्भवत्यनधिष्ठितेभ्योऽचेतनहेतुभ्यः कार्योत्पत्त्यसम्भवादनिश्चितकारकशक्तेरधिष्ठातृत्वासम्भवाच्चेत्युक्तं समस्तकार्याणामुपादानाद्यवबोद्धृत्वे च सिद्धं सर्वज्ञत्वमिति।

## ❋ भाट्टाक्षेपस्तदपाकरणं च ❋

ततश्च यदुक्तम्—

"सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः।
[1]निराकरणवच्छक्या न चासीदिति कल्पना॥" (श्लो० वा० २।११७)
"सर्वज्ञोयमिति ह्येवं तत्कालैरपि बोद्धृभिः।
तज्ज्ञानज्ञेयविज्ञानरहितैर्ज्ञायते कथम्॥" (श्लो० वा० २।१३४)

न ह्यसर्वज्ञः सर्वज्ञं जानातीति, तदपास्तम्; तज्ज्ञानज्ञेयविज्ञानरहितत्वेऽपि हि लौकिकैः शास्त्रशिल्पाद्यभिज्ञास्तच्छिष्यैश्च ज्ञायन्ते। अन्यथा ज्ञानोपार्जनार्थं तेषां शास्त्रश्रवणादिषु प्रवृत्तिर्न स्यात्। यथा च शास्त्राद्यनभिज्ञैः शास्त्राद्यभिज्ञस्तत्कार्येणाप्तवचनेन च निश्चीयते, तद्वदसर्वज्ञैरपि सर्वज्ञ इति।

## ❋ प्रथमसर्गापरिज्ञत्वशङ्कापरिहारः ❋

यच्चोक्तम्—प्रथमसर्गापरिज्ञत्वं, तत्परिज्ञाने च संसारानादित्वविरोध इति, तदतिजाड्यविजृम्भितम्; न हि खरमस्तके विषाणमपश्यन्नन्धो भवति।

---

१. निराकरणवच्छक्त्येति पाठे—निराकरणवती चासौ शक्तिश्च सा, तयेति वदन्ति। वस्तुतः निराकरणवत् शक्या—इति पाठः। निराकरणवत् आसीदिति कल्पना न शक्येत्यन्वयबोधः।

यदस्ति तत्सर्वं पश्यतीत्यसतः प्रथमसर्गादिरदर्शनेपि सर्वज्ञत्वं न विहन्यते। कुत्सितरसास्वादनादप्ययुक्तम्। यस्य हीन्द्रियेण रसगन्धादिविशेषं गृह्णतः सुखदुःखरागद्वेषादियोगो भवति, तस्यास्वादनादिव्यपदेशस्तत्कृतदोषो वा। भगवतस्तु नेन्द्रियजं ज्ञानं, नापि रागः क्वचिद् द्वेषो वा, नापि किञ्चित्पवित्र-मपवित्रं वा। किन्तु यद्यथावस्थितं किञ्चित्तत्तथा वेत्ति नित्येनैव ज्ञानेन, "पश्यत्यचक्षुः" (श्वेता० उ० ३।१९) इत्यादिवचनात्।

## ❀ ईश्वरज्ञानस्य प्रत्यक्षत्वम् ❀

चक्षुषा विना कथं पश्यतीतिव्यवहार इति चेत्, उपचारात्। तज्ज्ञान-स्यापरिस्फुटत्वाशङ्कानिवृत्तिरुपचारस्य प्रयोजनं, निमित्तं पुनश्चाक्षुषेण ज्ञानेन, साधर्म्यमीश्वरज्ञानस्यापरोक्षाकारत्वम्। तस्य हि स्वकरतलवत् सर्वोऽर्थोऽपरोक्ष एवेति। एतेन प्रत्यक्षव्यवहारोऽपि व्याख्यातः—प्रमाजनकत्वाभावान्नेश्वरज्ञानं मुख्यं प्रत्यक्षं, नाप्यक्षजन्यत्वेन प्रत्यक्षं, नित्यत्वात्।

## ❀ ईश्वरज्ञानस्य नित्यत्वसाधनम् ❀

नित्यत्वं कुत इति चेत्, अनुमानादागमाच्च। तत्र नित्यं परमेश्वरज्ञानं गन्धाधर्मध्वनिसमवायिकारणार्थान्तरनित्यद्रव्यविशेषगुणत्वात्, तोयादिपरमाणु-रूपादिवदित्यनुमानम्। गन्धाधर्मध्वनिनां समवायिकारणानि क्षित्यपरात्मा-काशानि, तेभ्योऽर्थान्तरं यन्नित्यं द्रव्यं तद्गुणत्वादित्यर्थः। तत्र कार्यतोया-दिगुणैर्व्यभिचारनिवृत्त्यर्थं नित्यद्रव्यगुणग्रहणम्, नित्यद्रव्यगुणैः संयोगादि-भिर्व्यभिचारनिवृत्त्यर्थं विशेषगुणग्रहणम्। तथापि पाकजैः, अपरात्मविशेष-गुणैः, शब्देन च व्यभिचारः, तन्निवृत्त्यर्थं गन्धाधर्मेत्यादिविशेषणम्। ननु परमयोगी गन्धादिसमवायिकारणेभ्योऽर्थान्तरं, तस्य विशेषगुणो ज्ञानं, तच्चा-नित्यमित्यनेकान्तः, नैतदस्ति; न हि करोति—इत्येव कारणं, किं तर्हि? करिष्यत्यकार्षीदित्यपि। यस्माद् "अनिर्दिष्टकालाः प्रत्ययास्त्रिष्वपि[1] कालेषु भवन्ति"—इति शब्दविदः। ततः कारणादिदं कार्यं निष्पन्नमित्यादिव्यवहारो-प्यस्ति, कार्यकारणानुमानयोरतीतानागतविषयत्वप्रसिद्धेश्च।

तदयमर्थो गन्धाधर्मेत्यादिवाक्यस्य—नित्यं परमेश्वरज्ञानं, क्षित्याकाश-

---

१. न्यायभाष्यकारा अप्याहुः—"समाख्याहेतोः त्रैकाल्ययोगात् तथाभूता समाख्या। प्रमितोऽनेनार्थः, प्रमीयते, प्रमास्यते इति प्रमाणम्" (न्या० भा० पृ० ५३–५४)।

संसारिपुरुषानाश्रितत्वे सति नित्यद्रव्यविशेषगुणत्वाच्छलिलादिपरमाणुरूपादिवदिति। परमेश्वरेच्छाप्रयत्नाभ्यामनेकान्त इति चेत्, न; तयोरप्यत एव हेतोर्नित्यत्वसिद्धेः, साध्येन व्यभिचाराभावाच्चेति।

## ❀ केवलव्यतिरेकितो नित्यज्ञानाश्रयत्वसिद्धिः ❀

केवलव्यतिरेकी वा हेतुस्तथा हि—नित्यज्ञानाश्रयो भगवान्, [1]निरतिशयकर्तृत्वात्, वैधर्म्यदृष्टान्तोऽस्मदादिः। अप्रसिद्धविशेषणः पक्ष इति चेत्, न; अप्रसिद्धविशेषणत्वादेव केवलव्यतिरेकित्वं, विशेषणप्रसिद्धौ ह्यन्वयोऽपि स्यात्। अप्रसिद्धविशेषणत्वं च दोषमभ्युपगच्छतः [2]सर्वानित्यवादिनं प्रत्याकाशादौ नित्यत्वसिद्धिरनुमानान्न स्यात्। न चास्मदादिप्रत्यक्षेण क्वचिन्न नित्यत्वं गृह्यते, अनाद्यनन्तसत्तायाः प्रत्यक्षेण प्रतिभासनात्। अनित्यत्वं घटादिषु दृष्टं, तदाकाशादौ प्रतिषिध्यत इति, ततः कथं नित्यत्वसिद्धिः? सामर्थ्यादिति चेत्, किमिदं सामर्थ्यं नाम? न हि प्रत्यक्षागमव्यतिरिक्तमनुमानादन्यत्प्रतिपत्तिसाधनमस्ति। अथानुमानमेव सामर्थ्यं, ततोऽपि नित्यत्वसिद्धौ कथं नाप्रसिद्धविशेषणत्वम्? किं चात्राप्यस्मदादौ नित्यज्ञानानाश्रयत्वं दृष्टं, तदीश्वरे प्रतिषिध्यते, तत्प्रतिषेधे च सामर्थ्यान्नित्यज्ञानाश्रयत्वसिद्धिरिति। यद्येवं नित्यज्ञानानाश्रयो भगवान्न भवतीत्येवं साध्यनिर्देशः करणीयः। कोऽत्र विशेषः? एवं कारणेऽपि स एवार्थः, प्रतिषेधद्वयस्य विध्यर्थत्वात्।

## ❀ व्याप्त्यसिद्ध्याशंका तन्निरासश्च ❀

ननु च नित्यज्ञानाश्रयत्वनिरतिशयकर्तृत्वयोः प्रतिबन्धासिद्धेर्नित्यज्ञानाश्रयत्वनिवृत्तावेव निरतिशयकर्तृत्वनिवृत्तिरयुक्ता, नित्यदुःखाद्याश्रयत्वनिवृत्तावपि तन्निवृत्तिप्रसंगात्। ततश्च निरतिशयकर्तृत्वेन नित्यज्ञानाश्रयत्वसिद्धिवन्नित्यदुःखाश्रयत्वसिद्धिरपि स्यात्। विपक्षदर्शनाव्यभिचारस्योभयत्राविशेषादिति, नैतदस्ति; नित्यज्ञानाश्रयत्वेन हि निरतिशयकर्तृत्वस्य व्याप्तिप्रतिपक्षबाधकप्रमाणैः काकतीरादर्शनन्यायेन पक्ष एव सिद्ध्यति। नत्वेवं नित्यदुःखाद्याश्रयत्वेन तदसिद्धावेव निरतिशयकर्तृत्वोपपत्तेः? सर्वदानिःशेषकार्योत्पादनसामर्थ्यं हि निरतिशयकर्तृत्वमुच्यते तच्च दुःखादिमात्रेणाप्यभिभूतस्य नोपपद्यते, कुतो

---

१. सर्वदा निःशेषकार्योत्पादनसामर्थ्यं निरतिशयकर्तृत्वमित्यनुपदं वक्ष्यति।
२. सर्वानित्यत्ववादी बौद्धः। तस्य नित्यत्वं न क्वचित् प्रसिद्धमिति भावः।

नित्यैर्दुःखद्वेषादिभिरभिभूतस्येति ? तथा शशविषाणाद्याश्रयत्वसिद्धिरपि न चोदनीया, तदभावेन निरतिशयकर्तृत्वस्य विरोधासिद्धेः।

## ❀ नित्यज्ञानाश्रयत्वमन्तरा जगत्कर्तृत्वासम्भवः ❀

न चैवं नित्यज्ञानाश्रयत्वेन विना निरतिशयकर्तृत्वमुपपद्यते, तथा हि—अचेतनस्यासर्वज्ञस्य वा भुवनाद्यशेषकार्यकर्तृत्वं न सम्भवतीत्युक्तम्। सर्वज्ञत्वं चानाद्यनन्तकालमव्युच्छेदेन भगवतोऽभ्युपगन्तव्यम्, अव्युच्छेदेनात्र— [1]त्रस-स्थावराद्यनन्तकार्योत्पत्तिदर्शनात्। तच्च सातत्येन सर्वार्थविषयत्वं सहेतुकत्वे ज्ञानस्य न स्यात्। न ह्येकाकारकार्योत्पादककारणसामग्रीणामविगुणानां पूर्वापरकालावच्छिन्नः सन्तानः सम्भवति, अनित्यानां खलु पराधीनात्मलाभ-तयोत्कर्षापकर्षादियोगस्य कदाचिदवश्यंभावित्वेन सम्भाव्यत्वान्न तत्सामग्र्या-यत्तजन्मनो ज्ञानस्य निरतिशयोऽवधिवर्जितः सन्तान उपपद्यते।

कारणं चेश्वरज्ञानस्याभ्युपगच्छता परिदृष्टसामर्थ्यमेवाभ्युपगन्तव्यम्। धूमाग्न्यादिवत्सामर्थ्यं तु ज्ञानोत्पत्तौ शरीरेन्द्रियादेः सुखाद्युत्पत्तौ इव निश्चितम्, शरीराद्युत्पत्तावप्यविद्यातृष्णादेः सामर्थ्यं निश्चितं, तेनानित्यं ज्ञानमिच्छतः सर्वसंसारिधर्माभ्युपगमः प्रसज्यते। ततश्च निरतिशयं कर्तृत्वं सर्वज्ञत्वं च विरुध्यते, तद्विरोधाच्च जगदुत्पत्तिविरोध इति।

## ❀ शरीराद्यभावान्नित्यं ज्ञानम् ❀

नित्यं शरीरमिन्द्रियं च भगवत इति चेत्, न; प्रमाणाभावाद्, युक्ति-विरोधाच्च। एवमेव नित्यत्वाभ्युपगमे च पत्न्यादयोऽपि नित्या एष्टव्याः। परमाण्वाद्येव शरीरमित्यप्ययुक्तम्, चेष्टेन्द्रियार्थाश्रयत्वाभावात्। भोगायतनं च शरीरमुच्यते, न च भगवतः किंचिद्भोगायतनमस्ति। क्षित्यादिमूर्तिप्रति-पादकागमविरोध इति चेत्, न; तस्योपचारेण प्रवृत्तेः शरीरवदिच्छामात्रानु-विधायित्वात्। अन्यथा यजमानोऽपि शरीरं स्यात्। न च चेतनं शरीरं युक्तम्। तथेन्द्रियस्यापि नित्यत्वमयुक्तम्, आकाशमनसोरप्यदृष्टोपगृहीतत्वेने-न्द्रियत्वात्, तद्वैकल्ये वाऽनिन्द्रियत्वात्। न चेश्वरस्य धर्मोऽधर्मो वास्ति, असंसारित्वविरोधात्। केवलधर्मास्तित्वे च प्रमाणाभावात्। नित्यानित्य-विकल्पासम्भवात्—नित्यत्वे च ज्ञानमेव नित्यमस्तु, कल्पनागौरवपरिहारश्चैवं भवत्यनित्यत्वे च [2]तत्साधनमनुतिष्ठतः संहारकर्तृत्वादिविरोधः, परदुःखो-

१. त्रसम्=जङ्गमम्, "चरिष्णुजङ्गमचरं त्रसमिङ्गं चराचरम्"—इति कोशात्।
२. तत्साधनम् = धर्मसाधनम्।

त्पादनादेरधर्महेतुत्वात् । यच्चोक्तमज्ञानमेवाधर्महेतुस्तदभावाद्विशेषतोऽपि नाधर्म इति, तदयुक्तम्; जानतः प्रतिषिद्धाचरणेऽस्याभ्यधिकप्रायश्चित्तश्रवणात् । क्षीणदोषस्य नाधर्मोत्पत्तिरिति चेत्, धर्मोत्पादोऽपि तस्य नास्ति तुल्यप्रमाणत्वात् । तदेवं ज्ञानोत्पादकहेतोः शरीरादेरभावान्नित्यमेव ज्ञानं भगवत इति ।

ननु च ज्ञानमात्रस्यानित्यत्वेनाऽव्यभिचारित्वात्कथं कस्यचिन्नित्यत्वसिद्धिः ? सिद्धौ वा न केनापि कस्यचिदविनाभावसिद्धिः, सर्वत्रानाश्वासप्रसंगादिति, नैतदस्ति; सातिशयस्यैव हि ज्ञानस्यानित्यत्वेनाव्यभिचार उपलब्धो, न निरतिशयस्य, महत्त्वाणुत्वादिवत् । यैश्च प्रतिपक्षबाधकप्रमाणैर्नित्यज्ञानाश्रयत्वनिरतिशयकर्तृत्वयोः [1]प्रतिबन्धः प्रसाधितः तैरेवानित्यत्वसाधनस्य ज्ञानत्वविभुद्रव्यविशेषगुणत्वादेर्बाधितत्वादप्रामाण्यमेव द्रष्टव्यम् । न हि यथा ज्ञानत्वविभुद्रव्यविशेषगुणत्वादेर्नित्यत्वेन सह विरोधः कश्चिदस्ति येन निरतिशयकर्तृत्वस्य नित्यज्ञानविपर्ययेण विरोधः प्रदर्शितः, तथा ज्ञानत्वादेरनित्यत्वेन न व्यभिचारः सिध्येत् । न च विपक्षादर्शनमात्रेणाव्यभिचारसिद्धिः, अतिप्रसंगात् । न चाऽन्यत्रादर्शनमेव विरोधो, महत्त्वाणुत्वादेरपि नित्यत्वेन विरोधप्रसंगात्, न चैवं परिदृष्टसामर्थ्यकारणाभावोऽपि परमेश्वरज्ञानस्य कारणान्तरादुत्पत्तावविरोधः, परिदृष्टसामर्थ्यकारणाभावे कारणान्तरात्कार्योत्पादविरोधस्य दृष्टप्रमाणसिद्धत्वादग्निधूमादिषु । अन्यथा क्षित्यादेरप्युपलब्धोपादानादिसामर्थ्यकर्तुरभावेऽपि कारणान्तरेभ्यः कार्योत्पत्तावविरोधप्रसंगात् । ततश्चेश्वरसिद्धिरेव नास्ति कस्य ज्ञानं नित्यमनित्यं वा चिन्त्येत ? तस्मात् क्षित्यादिकार्यानुमानस्य बलीयस्त्वात्तत्कर्तुर्यथा दिग्देशकालानवच्छिन्नानन्ततत्कार्योत्पादकत्वान्यथाऽनुपपत्त्याऽस्मदादिधर्मैर्दुःखासर्वज्ञत्वादिभिरसंस्पर्शोऽनुमीयते । तद्वदनित्यज्ञानधर्मशरीराद्यपेक्षकर्तृत्वाभावोऽपीति । तथा च "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० उ० २।१।१ ) इति श्रुतिः "न तस्य कार्यं करणं च" ( श्वे० उ० ६।८ ) इत्यादिना "अपाणिपादः" (श्वे० उ० ३।१९) आदिवाक्येन चाकृतकं ज्ञानं, निष्कलस्य कर्तृत्वं च भगवतः प्रतिपादितम् । इच्छाप्रयत्नयोरप्यत एव नित्यत्वं सिद्धम्, शरीराद्यभावे तयोरप्युत्पत्तेरसम्भवात् । नित्यत्वेनैकत्वेऽपि तयोः कार्यभेदेन भेदस्त्रैकालिकत्वं चोपचर्यते, ज्ञेयभेदेन ज्ञानवत् । यदत्रानुक्तं परोक्तचोद्यप्रतिसमाधानं प्रतिपक्षबाधकं च, तत् [2]"नित्यज्ञानविनिश्चये" द्रष्टव्यं स्वयं चान्यदप्यूह्यम् ।

---

१. प्रतिबन्धः = अविनाभावो व्याप्तिरिति यावत् ।

२. नित्यज्ञानविनिश्चयाख्ये मदीये ग्रन्थे इति प्राचीनटिप्पणम् ।

## ॐ सौगताक्षेपः ॐ

अपरस्त्वाह—

नित्यं प्रमाणं नैवास्ति प्रामाण्याद् वस्तुसद्गतेः[1] ।
ज्ञेयानित्यतया तस्या[2] अध्रौव्यात् क्रमजन्मनः ॥ ( प्र० वा० २।८ )
नित्यादुत्पत्तिविश्लेषादपेक्षाया अयोगतः ।
कथंचिन्नोपकार्यत्वादनित्येऽप्यप्रमाणता ॥ ( प्र० वा० २।९ )

नैव नित्यं प्रमाणमस्ति, वस्तुसद्गतेः प्रामाण्यात् । यदि नाम वस्तु सतो गतिः प्रमाणं, नित्यत्वं किं नेत्याह—ज्ञेयानित्यतया तस्या वस्तुसद्गतेरध्रौव्यात् । न ह्यनुत्पन्ने नष्टे वा वस्तुनि, तद्गतिर्युक्ता । ज्ञेयानित्यत्वेन ज्ञानस्यास्तु अनित्यत्वं, ज्ञाता तु नित्य एवेत्यत्राह—क्रमजन्मनो ज्ञानस्य नित्यादुत्पत्तिविश्लेषात् । नित्यादेकस्वभावात् क्रमोत्पत्तेरसम्भवादित्यर्थः । सहकारिक्रमादपि न क्रमः, अपेक्षाया अयोगात् । नित्यस्यानुपकार्यत्वे परापेक्षा न युक्ता । अनित्येऽपीश्वरज्ञाने न प्रमाणता कथंचिदनुपकार्यत्वात् । यो हि कथंचित्केनचिदुपकृतः, तदन्येषामुपकारार्थं करुणयोपदिशति, स लोकस्य प्रमाणं भवति । न चेश्वरस्येयं व्युत्पत्तिरस्ति । न ह्यखण्डितः पण्डितो भवतीति ।

## ॐ तस्य परिहारः ॐ

अत्रोच्यते—यत्तावदुक्तं नित्यं प्रमाणं नैवास्तीति, तत्र यदि प्रमासाधनं नित्यं प्रतिषिध्यते, तन्न; अन्तःकरणादेः प्रमाणसाधनस्य नित्यत्वात् । सामग्र्यवस्थं तु न किंचिन्नित्यमित्यत्र सिद्धसाधनं, अन्तःकरणादेरप्यनित्यत्वाभ्युपगमे, नित्यं नैवास्ति—एतावद्वाच्यं, प्रमाणग्रहणमनर्थकम् । प्रमाणस्यापि नित्यत्वप्रतिषेधे सिद्धसाधनम् । न चेश्वरज्ञानमञ्जसा प्रमाणं फलं चेत्युक्तम् ।

अथाविसंवादिज्ञानं नित्यं नैवास्तीत्युच्यते, तदयुक्तम्; परमेश्वरज्ञानस्य हि तत्सत्त्वग्राहकप्रमाणादेवाऽविसंवादित्वं च सिद्धम् । तथा च व्यतिरेक्यनुमानं प्राक् समर्थितं, तेनैव "ज्ञेयाऽनित्यतया"—इत्यादिबाधितत्वादनुपपन्नम् । न चार्थजत्वेनैव ज्ञानस्याऽर्थविषयत्वं येनाऽर्थस्य क्रमभावात् ज्ञानस्यापि क्रमभावः स्यात् । तथा चाऽजनकस्याप्यर्थस्य विषयत्वं समर्थितं प्रत्यक्षलक्षणे । न चाजनकस्य विषयत्वे सर्वेषां सर्वज्ञत्वप्रसंगः, संसारिपुरुषज्ञानानां धर्मादिसामग्रीविशेषनियमितानां नियतार्थविषयत्वेनोत्पादात् । अत एव परमेश्वरज्ञानं

---

१. वस्तुसद्गतेः—वस्तुसतः = परमार्थसतोऽर्थक्रियाकारिणः गतिः=ज्ञानमित्यर्थः ।

२. तस्याः = वस्तुसद्गतेः ।

सर्वार्थविषयमुपपन्नम्; निर्हेतुकस्य नियतार्थत्वे नियामकाभावात्। सर्वार्थविषयत्वं हि परमेश्वरज्ञानस्य स्वाभाविको धर्म इत्याकाशात्मवादीनां सर्वगताऽसर्वगतत्वादिधर्मवन्न पर्यनुयोगमर्हतीति।

## ❀ नित्यैकज्ञानविषयत्वसमानेऽप्यतीतादिव्यवस्था ❀

ननु च नित्यस्यैकज्ञानस्य सर्वार्थविषयत्वेऽतीतानागतार्थानामपि वर्तमानत्वप्रसंगः, एकज्ञानालम्बनत्वात्, कृत्तिकादिवदिति, नैतदस्ति; योगिज्ञानं खल्वेकमप्यतीतानागतवर्तमानार्थविषयं समाधिबलाद् भवति, न च सर्वार्थानां वर्तमानत्वम्। यथा वा सत्ताख्येनैकेन सामान्येन सम्बद्धानामर्थानां नैकदेशत्वमेकस्वभावत्वं वा, प्रत्यक्षादिविरोधात्। तत्र केषांचिदर्थानां देशान्तरं गच्छतां न सत्तया सहगमनं, नापि सत्तावियोगः। तदेकसम्बन्धित्वे तेषां पूर्वदेशाद्यपरित्यागोऽपि नास्ति—एतच्च सामान्यसमर्थने विस्तरेण प्रसाधितम्। तद्वन्महेश्वरज्ञानेनैकेन संबद्धानामर्थानां नैककालादियोग इत्यनागतोऽर्थः परमेश्वरज्ञानविषयः स्वकारणसामर्थ्याद् वर्तमानीभवन्नागममेव स्वभावं हित्वा भवति, न तु ईश्वरज्ञानसम्बन्धं जहाति। वर्तमानस्वभावं हित्वाऽतीतभावमुपगच्छन् नेश्वरज्ञानसम्बन्धं जहाति—इत्येवं च सति यः कश्चिदर्थः पूर्वधर्मं सद्रूपमसद्रूपं वा परित्यज्य धर्मान्तरमापद्यते, स सर्वः परमेश्वरज्ञानसम्बद्ध एवापद्यते, सत्तासम्बन्धवदिति।

## ❀ सत्तासम्बन्धेश्वरीयज्ञानसम्बन्धयोर्विशेषः ❀

एतावांस्तु विशेषः—सत्ताया सद्भिः सहाश्रयाश्रयिभावः समवायाख्यः सम्बन्धः, तेनातीतानागतार्थैः सह सम्बन्धो न भवति। महेश्वरज्ञानस्य तु सर्वैरप्यर्थैः सह विषयविषयिभावलक्षणः सम्बन्धः, स चातीताद्यर्थैरप्यस्तीति समर्थितं प्रत्यक्षलक्षणे। तदेवमर्थ एवान्यथाऽन्यथा भवति, नेश्वरज्ञानम्। तद्ध्येकस्वभावमप्यन्यथान्यथाभवद्भिरर्थैरन्यथान्यथोपधीयमानं दर्पणस्फटिकादिवदन्यथान्यथा व्यपदिश्यते। तन्न मेयाऽनित्यतयापीश्वरज्ञानस्याध्रौव्यं, नाप्यविसंवादित्वं निवर्तते इति।

## ❀ ईश्वरज्ञानाजनकत्वेऽर्थस्य दृष्टत्वादिव्यवहारः ❀

यदीश्वरज्ञानं नार्थे व्याप्रियते नाप्यर्थादुत्पन्नं [1]तत्स्वभावं वा, ततः कथं तेनार्थो दृष्ट इत्युच्यते, न; तेन सम्बद्ध एवार्थस्तेन दृष्ट इत्युच्यते अतीतानागतार्थवदित्युक्तम्।

---

१. तत्स्वभावम् = अर्थस्वभावम्।

## * धर्मकीर्तिप्रज्ञाकराक्षेपाः तन्निरासश्च *

यदप्याह—

"सम्बन्धोऽन्वयपूर्वेण व्यतिरेकेण सिद्ध्यति ।
नित्यस्याव्यतिरेकस्य कुतः सम्बन्धसम्भवः ॥" (प्र० वा० अ० २।२२७)

तदप्यतीतानागतार्थतज्ज्ञानयोः सामान्यतद्वतोश्च सम्बन्धसमर्थनेन प्रत्युक्तम् ।

यदप्याह—

"सर्वार्थदर्शनाज्जातः शब्दः सर्वस्य वाचकः ।
विवक्षानियमो नाम न नित्यस्योपपत्तिमान् ॥" (प्र० वा० अ० २।२३३)

तदप्ययुक्तम्, न हि यस्य यावत्यर्थे ज्ञानमस्ति, तेनोच्चारितः शब्दस्तावतोऽर्थस्य वाचको भवति । न च ज्ञानमेव विवक्षा, ज्ञानवन्तोऽपि हि मौनव्रताः केचिदुपलभ्यन्ते । नित्यैवेच्छा भगवतः सर्वकृत्येषु यथा देशकालोपादानाद्यपेक्षोत्पादेऽप्यविपर्ययेण स्वभावतो वर्तते, ततः कार्यमपि देशकालाद्यविपर्ययेणैव भवति, तस्माद् "विवक्षानियमो न नित्यस्योपपत्तिमान्"—इत्येतदप्ययुक्तम्; नित्यस्यापि द्रव्यगुणसामान्यादेः प्रतिनियतस्वभावस्य प्रमाणेनोपलम्भात् ।

यच्चोक्तम्—"न ह्यखण्डितः[1] पण्डितो भवति" (प्र० वा० अ० पृ० ३४), तदपि नित्यानित्यत्वानभ्युपगमेनैव निरस्तं, स्वाभाविकं हि भगवतः पाण्डित्यमिति ।

[2]ननु रागाद्यननुभवे कथं तत्प्रतिपक्षं जानाति ? अजानानश्च कथमुपदिशन् प्रमाणं भवति ? रागाद्यनुभवे तु रागादियुक्तः प्राप्तस्ततश्च संसार्येवासाविति, तदयुक्तम्; न हि रागादिज्ञानादेव तद्वान् भवति, किं तु तत्समवायात् । अन्यथा बुद्धावस्थायामपि रागादिमत्त्वप्रसंगोऽसर्वज्ञत्वं वा ।

यच्चात्रोक्तम्—

"हेयोपादेयतत्त्वस्य हान्युपायस्य वेदकः ।
यः प्रमाणमसाविष्टो न तु सर्वस्य वेदकः ॥" (प्र० वा० २।३२)

---

१. अखण्डितः=अपीडितः, अदुःखितः, अननुभूताध्ययनादिबाध इति यावत् ।

२. यदुक्तं प्रज्ञाकरेण—"अथ स्वभावसिद्धं तस्य सकलपरिज्ञानम्—अयुक्तमेतत, रागादीनामननुभवे कथं संसारप्रपञ्चस्वलक्षणावबोधः ? अनुभवे संसार्येवासाविति कथं प्रमाणता" (प्र० वा० अ० पृ० ३४) इति । तदनुवदति—नन्वित्यादिना ।

"दूरं पश्यतु वा मा वा तत्त्वमिष्टं तु पश्यतु ।
प्रमाणं दूरदर्शी चेदेते गृध्रानुपास्महे" ॥ ( प्र० वा० २।३४ )

तस्मादार्यसत्यचतुष्टयदर्शनमात्रं बुद्धस्य सर्वज्ञत्वमिति । एवमपि रागाद्यननुभवे कथं दुःखसत्यदर्शनं, तदनुभवे वा कथं न रागादिमत्त्वम् ?

## * ईश्वरनित्यपक्षोक्तदूषणनिरासः *

किं चार्यसत्यचतुष्टयात्मको बुद्धः प्राप्तश्चतुष्टयानुभवात्, अननुभवे तु चतुष्टयस्याप्यवेदकः कथं प्रमाणम् ? क्रमेण वेदक इति चेत्, न; एकस्य क्रमवेदकत्वाऽसम्भवात् । किं च मार्गवेदनकाले निरोधवेदनं तस्यास्ति वा ? न वा ? यद्यस्ति, तदा विरोधात्मकत्वप्राप्ते मार्गाभ्यासे प्रवृत्तिर्न स्यात् । अथ नास्ति, तथापि न मार्गाभ्यासे प्रवृत्तिः, तत्प्रयोजनाप्रतीतेः । अनुमानादुपदेशाद्वा ज्ञात्वा प्रवर्तते इति चेत्, अनुमानादितोऽपि तदाकारानापत्तौ कथं तद्वेदनम् ? यदि स्यात्प्रत्यक्षतोऽपि तदाकारानापत्तावेव, तद्वेदनं भविष्यत्यविरोधात् । विस्तरेण चार्थाकारत्वं प्रत्यक्षज्ञानस्याऽपि निरस्तम् । तस्मात्तटस्थ एव भगवानीश्वरः परात्मस्थान् रागादीन् पश्यन्न तद्वान् भवतीति ।

यदप्याह—

"वरप्रदानशक्तिः सा विद्यते तस्य तादृशी ।
ययानुष्ठानहीनोऽपि ददात्यैश्वर्यमर्थिने ॥"
"अथ नास्त्येव सा शक्तिस्तस्यान्यापि कथं भवेत्"
( प्र० वा० अ० २।२४३,४४ )

इति, तदप्ययुक्तम्; यतोऽन्यस्यापि कारणस्य या यथा शक्तिरस्ति, सा तथा कार्योत्पत्त्यैव निश्चीयते, हुतभुजस्तृणादिदहनतण्डुलविक्लेदनादिशक्तिवत् । तस्माद् यत्र यथा कार्यप्रादुर्भावो दृश्यते, तत्र तथा भगवतः शक्तिर्गम्यत इति ।

यदप्याह—

"ईदृशी तस्य सा शक्तिः कारणात् कुत आगता ।
स्वभाव एष तस्येति कुत एतत् प्रतीयताम् ॥" (प्र०वा०अ० २।२४७)

तदप्ययुक्तम्, यतः स्वाभाविकी तस्य शक्तिः कार्यानुमेयेत्युक्तम् । [1]ननु

---

१. कथितं ह्यलङ्कारे—"नन्वीदृशी तस्य शक्तिः सर्वदर्शनानुग्राहकरूपा कुतः कारणादागता ? अत्र वस्तुस्वभावैरुत्तरं वाच्यम्—एवं भवतीति । तथा हि—
इदमेवं न चेत्येतत् कस्य पर्यनुयुज्यताम् ।
अग्निर्दहति नाकाशं कोऽत्र पर्यनुयुज्यताम् ॥ २४९ ॥"
( प्र० वा० अ० पृ० ३४ )

यदि निर्हेतुकेश्वरस्य तादृशी शक्तिस्ततोऽस्मदादेरपि किं न तादृशी शक्तिरिति ? अत्र वस्तुस्वभावैरुत्तरं वाच्यम्——य एवं भवति अग्नेर्दाहशक्तिरस्ति, नाकाशादेरिति कस्यात्र पर्यनुयोगः क्रियते ? यच्चोक्तम्——

"स्वभावेऽध्यक्षतः सिद्धे यदि पर्यनुयुज्यते ।
तत्रोत्तरमिदं न्याय्यं न दृष्टेऽनुपपन्नता ॥" ( प्र० वा० अ० २।२४६ )

"अन्यथा यत्किंचिदभिधाय निरुत्तरस्तत्र कृतः परेण वस्तुस्वभावैरित्याद्युत्तरमुक्त्वा तिष्ठेत्ततः सर्वोऽपि विजयी स्यादिति" (प्र० वा० अ० पृ० ३५ )। तदप्यसत्, प्रत्यक्षसिद्धिवदनुमानादिसिद्धेऽपि स्वभावे पर्यनुयुञ्जानं प्रत्येतदुत्तरं न्याय्यमेव, अन्यथा धर्माधर्मापवर्गादौ प्रतिनियतसाधनसाध्यत्वादिस्वभावे पर्यनुयुञ्जानं प्रत्येतदुत्तरं न वाच्यं स्यात्। जन्मान्तरसुखदुःखादिजननस्वभावौ धर्माधर्माविष्येते, न च तादृक्स्वभावौ कचिदध्यक्षेण सिद्धौ। ततश्च तत्राप्येवं पर्यनुयोगः स्यात्—यावदितः साधनाद् धर्मस्य जन्म, तावदधर्मस्य खपुष्पादेर्वा किं न ? हेतुपरम्परातोऽपि यावदस्यैव शक्तिरायाता, तावदन्यस्य किं न ?— इत्येवं सर्वत्र पर्यनुयोगः कर्तुं शक्यते। तस्मात्कुतः प्रमाणादित्थंस्वभावो निश्चीयते इत्येवंविध एव पर्यनुयोगो न्याय्यः। प्रमाणसिद्धे तु स्वभावे पर्यनुयोगोऽनुपपन्न एवेति। परमेश्वरस्य हि तथाविधः स्वभावः कार्यानुमानबलेन सिद्धस्तस्मादयुक्तस्तत्र पर्यनुयोग इति।

## * ईश्वरानुमाने धर्मकीर्तेराक्षेपः *

ननु तदनुमानमेव न युक्तं यदाह—

[1]"स्थित्वाप्रवृत्तिसंस्थानविशेषार्थक्रियादिषु ।
इष्टसिद्धिरसिद्धिर्वा दृष्टान्ते संशयोऽथवा ॥" ( प्र० वा० २।१० )

विवक्षितमुपादानादि बुद्धिमदधिष्ठितं, स्थित्वा प्रवर्तमानत्वाद् दण्डादिवत्। क्षित्यादिकार्यं बुद्धिमत्कृतं, संस्थानविशेषविशिष्टत्वाद्, गृहादिवत्। धर्मादिनिमित्तं, बुद्धिमदधिष्ठितं प्रवर्तते, अर्थक्रियाकारित्वाद्, घटादिवदित्येवमादिषु कार्यविशेषेषु हेतुषु यदि सामान्यं साध्यं, तदेष्टसिद्धिः सिद्धं साध्यते इत्यर्थः। अथेश्वराधिष्ठानं साध्यं, ततोऽसिद्धिः दृष्टान्ते साध्यहीनतेत्यर्थः। संशयो वा दृष्टान्ते, दण्डादावीश्वराधिष्ठानस्यानिश्चयात्। अथवा संशयः=अनैकान्तिकत्वं तेनैवेश्वरेण,

---

१. स्थित्वाप्रवृत्तित्व-संस्थानविशेषत्व-अर्थक्रियाकारित्वादिषु हेतुषु इष्टसिद्धिः (=सिद्धसाधनम्), दृष्टान्तेऽसिद्धिः संशयः (=अनैकान्तिकत्वम्) वा— इत्यन्वयबोधः।

सोऽपि हि स्थित्वा प्रवर्तते, न च केनचिदधिष्ठितोऽनवस्थाप्रसंगात्। संस्थान-विशिष्टत्वमपि तेनैव वानैकान्तिकम्—वस्तुव्यतिरेकेण संस्थानविशेषाभावाद्, वस्तुत्वं चेश्वरेप्यस्तीति। तथार्थक्रियाकारित्वमपि तेनैवानैकान्तिकमिति।

## ❀ तन्निराकरणम् ❀

अत्रोच्यते—यत्तावत् तत्सिद्धसाधनमिति, तदयुक्तम्; न ह्यनीश्वरवादिनां क्षित्यादेः कर्ता तदुपादानादेरधिष्ठाता च कश्चित्सिद्धः, येन सिद्धसाधनं स्यात्।

## ❀ कर्मणश्चैतन्यसन्देहस्तन्निरासश्च ❀

ननु च [1]कर्मजलोकवैचित्र्यमिच्छद्भिः सौगतैः न कर्तृमात्रस्याऽधिक्षेपः क्रियते। न च कर्मणोऽचेतनत्वात्तेन सिद्धसाध्यतानुपपत्तिः, "चेतना मानसं कर्म" (अभि० को० ४।१) इति वचनात् तदन्यस्य चेतनत्वासिद्धेः। चेतनस्याप्यन्यचेतनाधिष्ठितत्वेऽनवस्थाप्रसंग इति, तदप्यसत्; न हि कर्मणः चिद्रूपत्वे किंचित्प्रमाणमस्ति। तथा चात्मैव चैतन्ययोगाच्चेतन इति वक्ष्यामस्ततोऽर्थान्तरं च कर्म न चेतनमिति। अपि च तस्य कर्मणः समस्तोपादानादिपरिज्ञानमस्ति वा? न वा? यद्यस्ति, ततः संज्ञामात्रं भिद्यते। अथ नास्ति, ततः कथं तस्य कर्तृत्वम्? न हि यस्य तन्त्वादिशक्तिपरिज्ञानं नास्ति, स पटं रचयितुं शक्नोति। चेतनोऽपि हि यो यत्राऽनभिज्ञः, स तत्रान्यबुद्ध्युपगृहीतः प्रवर्तमानः कार्यं निष्पादयितुं शक्नोति, नान्यथा। एतेनैतदपि प्रतिक्षिप्तं, यदाह—

"चेतनाकर्मरूपैव प्रवृत्तेर्यदि कारणम्।
निरूपणेऽपि न परं तन्निरूपणमिष्यते॥" (प्र० वा० अ० २।२५१)

---

१. तथा स्थविरो वसुबन्धुर्निबबन्ध—

"कर्मजं लोकवैचित्र्यं चेतना तत्कृतं च तत्।
चेतना मानसं कर्म तज्जे वाक्कायकर्मणी॥" (अभि० को० ४।७)

कुशलाकुशलादिकर्मवैचित्र्यात् लोकवैचित्र्यं भवति। तत् = कर्म त्रिविधम्—चेतना, चेतनाकृतं च द्विविधम्। तत्र चेतना मानसं कर्म, तदुक्तं मध्यमकावतारे—"तत्र चेतनेत्युक्तं कर्म तन्मानसं स्मृतम्"। चेतनाजन्यम्—वाचनिकं कायिकं च। अभिधर्मप्रदीपेऽप्युक्तम्—

कायिकं वाङ्मयं चैव चेतनाख्यं च मानसम्।
कर्माण्येतानि लोकस्य कारणं नेश्वरादयः॥ (४।१।१५४)

कार्यं प्रत्युपादानादिशक्तिपरिज्ञानं हि निरूपणमुच्यते। न च कर्मणस्तदस्ति, तस्यैवेश्वरत्वप्रसंगात्। यो हि इदमत्र शक्तं नेदमत्रेत्येवं निरूप्य जगदुत्पत्तौ प्रवर्तते स एवेश्वर इति। कुलालादिर्घटादौ तदुपादानादिशक्तिं निरूप्यैव प्रवर्तत इति न दृष्टान्ताभावः। कुलालादेः स्वातन्त्र्ये [1]'अज्ञो जन्तुरनीशोऽयमित्यादि-विरोध इति चेत्, न; सर्वत्रस्वातन्त्र्यानभ्युपगमात्। दण्डादिप्रेरकत्वे हि तस्य स्वातन्त्र्यं प्रसिद्धं, तावतांशेन च दृष्टान्तत्वमिति।

## ❀ ईश्वरस्यान्यप्रेर्यत्वनिरासः ❀

यच्चोक्तम्—[2]'कुलालादिवदीश्वरोऽप्यनेन प्रेर्यः स्यात्'—इत्यनवस्थेति, तदयुक्तम्, यो हि यत्रानभिज्ञः सन् प्रवर्तते स तत्रान्येन ज्ञानवता प्रेर्यत इति। युक्तम्, न चेश्वरः क्वचिदनभिज्ञः, सर्वज्ञत्वात्। यच्चोक्तम् कर्तृत्वसिद्धौ सर्वज्ञत्वसिद्धिः सर्वज्ञत्वे च प्रेरकत्वमित्यन्योन्याश्रय इति, तदयुक्तम्; न हि देवकुलादिकार्येण तदुपादानाद्यभिज्ञकर्त्रनुमानेऽन्योन्याश्रयदोषावकाशोऽस्तीति।

## ❀ ईश्वरस्याधर्मे प्रवर्त्तकत्वानुपपत्तिः ❀

[3]ननु यदि सर्वज्ञः शक्तश्चेश्वरः, ततः किमज्ञं जनमसद्व्यवहारे

---

१. अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा॥ (म० भा० वन० ३।२८)

२. उक्तं हि प्रज्ञाकरेण—
अथ प्रवर्तते सोऽपि कुलालादिः प्रवर्तितः।
अज्ञानादीश्वरस्तज्ज्ञो न सोऽन्येन प्रवर्तितः॥ (प्र० वा० अ० २।२५३)
जानानोऽपि कुलालादिः प्रेर्यमाणो यदि क्षमः।
ईश्वरोऽपि तथान्येन प्रेर्यः स्यादविशेषतः॥ (प्र० वा० अ० २।२७१)

३. तदुक्तम्—"यद्यसौ सर्वज्ञः, किमज्ञं जनमसद्व्यवहारे प्रवर्तयति? विवेकवन्तो हि सदुपदेशदायिनो दृष्टाः। स तु विपर्ययप्रवृत्तमपि जनं जनयति, तत्कथं प्रमाणम्? अथोपदेशमसौ सन्तमेव करोति, तेन प्रमाणम्। अधर्मकारिणं तु फलमसदनुभावयति, तदुचितफलदायी विवेकवानेव। तदप्यसत्; यस्मात्—
अधर्मकरणेऽप्येष वर्तयत्येव जन्मिनः।
अयुक्तं कारयित्वासौ कथं युक्ते प्रवर्तयेत्॥ २५६॥
प्रथमं तावत् पाप एव प्रवर्तयति, ततः तद्व्यावर्तनाय धर्म इति कथं प्रेक्षापूर्वकारितेश्वरस्य? तदिदमायातम्—प्रक्षाल्य परित्यक्ष्यामीति।"
(प्र० वा० अ० पृ० ३६)

प्रवर्तयति ? एवं हि अनुचितकरणादविवेकज्ञः स्यात्। तथाभूतमधर्मफलमनुभावयन्नुचितकार्येवातोऽसौ विवेकवान् चेत्, नैतदस्ति; यस्मात्—

"अधर्मकरणेप्येष वर्तयत्येव जन्मिनः।
अयुक्तं कारयित्वाऽसौ कथं युक्ते प्रवर्तयेत् ॥" (प्र० वा० अ० २।२५६)

पापं कारयित्वा तद्व्यावर्तनाय धर्मे प्रवर्तयतीति। केयं प्रेक्षापूर्वकारिता भगवतः ? तदिदमायातम्—प्रक्षाल्य त्यक्ष्यामीति (प्र० वा० अ० पृ० ३६)।

"क्रीडार्थैव प्रवृत्तिश्चेत्प्रेक्षापूर्वक्रिया कुतः।
एकस्य क्षणिका तृप्तिरन्यः प्राणैर्वियुज्यते ॥"
(प्र० वा० अ० २।२६१)।

किं च—

"शास्त्रान्तराणि सर्वाणि यदीश्वरविकल्पतः।
सत्यासत्योपदेशस्य प्रमाणं दानतः कथम् ॥" (प्र० वा० अ० २।२६२)

असत्योपदेशस्यापि दानादसौ प्रमाणमिति महदद्भुतम् (प्र० वा० अ० पृ० ३७)। अथासत्यानि शास्त्राणि नेश्वरकृतानि तद्वदन्यदपि कार्यं नेश्वरकृतमिति।

## * तन्निरासः *

अत्रोच्यते—यत्तावदज्ञं जनमसद्व्यवहारे किं प्रवर्तयतीति, तन्न; विचारितत्वात्। विचारितमेतत्—यथा भगवानधर्मेऽपि जनं प्रवर्तयन्नाऽयुक्तकारयिता भवतीति। क्रीडार्थत्वे च यदुक्तं तदभ्युपगमेनैव परिहृतम्। न हि भगवतः क्रीडा राजादिवत्सुखार्था, किं तु बालक्रीडावत् स्वभावविशेषः। किंचित्साधर्म्याद् बालोदाहरणम्।

## * रागादिरहितस्यौदासीन्यापत्तिः *

ननु रागादिवियुक्तस्यौदासीन्यमेव युक्तम्, अथ लोककर्माधिपत्यादौदासीन्यं लभते, तदान्यकर्मपरतन्त्रः कथमीश्वरः ?

किं च—

"उपेक्षैव हि साधूनां युक्ताऽसाधौ क्रियाक्रमे।
न क्षते क्षारनिक्षेपः साधूनां साधुचेष्टितम् ॥" (प्र० वा० अ० २।३५०)

अथैवंभूत एवायं क्रमस्तमेवासौ प्रकाशयति चेष्टते च तत्करणाय। एवंभूत एव क्रमस्वभावो न मया निवारयितुं शक्यस्तत्र लोकैर्यथायोगं विहर्तव्यमिति। नैतत्; तथा हि—

"आत्मन्यपि वशी नासाविति स स्फुटमीश्वरः ।
स्वकर्मोचितचेष्टस्य लोकस्य किमनीशता ॥" (प्र० वा० अ० २।३५१)

## ❀ तत्खण्डनम् ❀

तदेतदप्ययुक्तम्; तथा हि—रागादिवियुक्तस्यौदासीन्यमेव युक्तमिति—किमिदं प्रसङ्गसाधनम् ? उत स्वतन्त्रमिति । यद्युदासीनो भगवान् रागादिवियुक्तत्वान्मुक्तपुरुषवदिति स्वतन्त्रसाधनमुच्यते, तथा सत्यविनाभावसिद्ध्यर्थं धर्मी प्रतिपत्तव्यस्तस्य च कार्यानुमानेनैव प्रतीतेः कथमौदासीन्यसिद्धिः ? तदप्रतीतौ वाश्रयासिद्धो हेतुः ।

अथ रागादिवियुक्तत्वमभ्युपगच्छत औदासीन्याभ्युपगमार्थं प्रसङ्गः क्रियते, न; तस्य क्षित्यादिकार्यानुमानेन बाधितत्वात् । न हि रागादियुक्ते उदासीने वा भगवति त्रसस्थावराद्यनन्तकार्योत्पत्तिः सम्भवतीत्युक्तम् । यच्चोक्तम्—"अन्यकर्मतन्त्रः कथमीश्वरः"—इति, तन्न; अनभ्युपगमात् । चेतनतन्त्रं ह्यचेतनं, नत्वचेतनः, तन्त्रश्चेतनः कुविन्दतन्त्वादिदृष्टान्तात् । न च कर्मानुरूपं कार्यं कुर्वन्नीश्वरः कर्मतन्त्रो भवति । न हि तन्त्वाद्यनुरूपपटादिकारी कुविन्दादिस्तन्त्वादितन्त्र इत्युच्यते ।

नन्वेवं तर्हि यथा तन्त्वादिषु सत्स्वपि कृतार्थः कुविन्दादिः पटादिकार्यं न करोत्येव, तथेश्वरः कृतार्थत्वात्कर्मादिषु सत्स्वपि उदासीनः किं नास्ते ? वयमपि न जानीमः, स एव प्रष्टव्यः—कस्मात्त्वं भगवन् ! नोदासीन इति ? वयं तु कार्यदर्शनेन तदनुरूपं कर्तारमवगच्छन्तो नोपालम्भमर्हामः । प्रागुक्तं च परार्थं प्रवर्तते । परार्थे प्रवृत्तस्यापि यथा दुःखादिजनकत्वं, तथोक्तम्, ततो "न क्षतक्षारनिक्षेपः" (प्र० वा० अ० २।३५० )—इत्याद्यप्ययुक्तम् ।

## ❀ ईश्वरस्यावशित्वशङ्कानिरासः ❀

स्वभावतः प्रवृत्तिपक्षेऽपि यदुक्तम्—"आत्मन्यपि वशी नासौ" ( प्र० वा० अ० ३५१ ) इत्यादि, तदप्ययुक्तम्; न हि वशीति कृत्वा नित्यानित्यादितत्त्वविपर्ययं करोति, अकरणे वा तस्य वशित्वं निवर्तते । क्षित्याद्यनन्तकार्यकर्तृत्वमेव हि वशित्वं परमैश्वर्यं चेति ।

## ❀ ईश्वरस्य शास्त्रकर्तृत्वम् ❀

यदपि "शास्त्रान्तराणि" (प्र० वा० अ० २।२६२) इत्यादि, तदप्ययुक्तम्; सर्वशास्त्राणां साक्षादीश्वरप्रणीतत्वाऽनभ्युपगमात् । यच्च शास्त्रं साक्षादी-

श्वरेणोक्तं, तत्सत्यमेवातः सत्योपदेशदानात् प्रमाणमेव भगवान्। मिथ्याज्ञानादिनिमित्तादृष्टाधिष्ठातृत्वद्वारेण सर्वस्य हेतुः कर्तेत्यतोऽसौ सर्वशास्त्रकृदप्युच्यते। नत्वेवमसत्योपदेशदाता यथा स्वप्नेन्द्रजालादिनिमित्तेनालीकार्थानुपदिशन्त एवाऽसत्योपदेशदातारो भण्यन्ते, न तु तन्निमित्तप्रयोक्तारोपीति।

## ❀ सर्वस्य जगत एक एव कर्त्ता ❀

ननु चैकस्यापि कार्यस्यैकः कर्ता, [1]बहवश्च दृश्यन्ते। तथा बहूनामप्येको बहवश्चेति। तत्कथमवगम्यते—सर्वस्य जगत एक एवेश्वरः कर्ता, न तु बहवोऽनीश्वरा इति ? उक्तमत्र यः परिदृष्टानि कारणानि प्रयुङ्क्ते, तैश्च न प्रयुज्यते; स स्वतन्त्रः कर्तेत्युच्यते। न चानीश्वरस्य परमाण्वदृष्टादिषु भूभूधरशरीराभ्यन्तराऽवयवादिषु च परिदर्शनपूर्वकं प्रयोक्तृत्वं सम्भवति। तत्र बहवोऽपि अनीश्वराः क्षित्यादेः कर्तारः प्रासादविशेषस्येवाऽसंख्याता अपि स्तनन्धया इति।

अथेश्वरा एव बहवः क्षित्यादेः कर्तार इष्यन्ते। तथा सत्यपसिद्धान्तस्ते प्राप्नोति। एकनिराकरणे च बह्वभ्युपगमोऽनिष्टपरिहारेऽतिकौशलं ख्यापयति। किं च तेषामीश्वराणां किमैश्वर्यं सर्वज्ञत्वमनुत्तमा शक्तिश्चास्ति ? न वा ? यद्यस्ति, तदानेकेश्वरकल्पनया किम् ? वैयर्थ्यात्। अथ नास्ति, तदा तेषां नियमयिता कश्चित्प्रभुरस्ति, अन्यथा कथमविरोधेन सदा जगदुत्पत्त्यादिषु प्रवर्तेरन्निति ?

## ❀ नित्यैकेश्वरस्य कर्तृत्वाभावाशङ्का ❀

ननु च [2]गुणतारतम्यदर्शनादभियोगविशेषात् सामर्थ्यसम्भवः प्रागसमर्थानामपि पश्चादिति युक्तमेतत्, अत्यन्तविलक्षणस्य तु स्वभावसिद्धसामर्थ्यात्मनोऽनुगमरहितस्य साधनासम्भवात् कुतः सिद्धिः ? तदाह—

"संस्थानसङ्गमाद् भावाः कृताः कर्तेति सिध्यतु।
अहेतुगुणयुक्तस्य कुत एव तु सिद्धता॥" (प्र० वा० अ० २।३००)

---

१. तथा चाह—
"तथा बहुभिरेकस्य बहूनां चैकतः क्रिया।
अथैक एव सर्वस्य कारकः कश्चिदिष्यते॥" (प्र० वा० अ० २।२६४-६५)

२. तदाक्षिप्तं प्रज्ञाकरेण—"गुणतारतम्यदर्शनादभियोगविशेषात् सामर्थ्यसम्भवः प्रागसमर्थानामपि पश्चादिति युक्तमेतत्। अत्यन्तविलक्षणस्य तु स्वभावसिद्धसामर्थ्यात्मनोऽनुगमरहितस्य साधनासम्भव एव" ( प्र० वा० अ० पृ० ४० )।

"स्वाभाविकत्वे तत्त्वस्य जगत् स्वाभाविकं भवेत् ।
तस्यैवैकस्य तदिदं व्यक्तमीश्वरचेष्टितम् ॥" (प्र० वा० अ० २।२९६)

किं च—

"ईश्वरादीश्वरत्वस्य प्राप्तिस्तस्यापि साऽन्यतः ।
तदन्यस्याऽपि साऽन्यस्मान्न स्वाभाविक ईश्वरः ॥" (प्र०वा०अ० २।२९७)

"उत्कर्षोंस्ति गुणानां चेच्छक्रब्रह्मत्वसम्भवे ।
ईश्वरत्वमपि प्राप्तं नास्ति नित्येश्वरस्थितिः ॥" (प्र० वा० अ० २।२९८)

## ❀ तस्या निरासः ❀

अत्रोच्यते—यदि क्षित्यादीनामीश्वरः कर्ता नास्त्येव, ततः "संस्थान-सङ्गमाद् भावाः कृताः कर्ता" ( प्र० वा० अ० २।३०० ) इत्यादिसर्वमयुक्तमेव स्यात् । अथास्ति, तथापि नेश्वरे विवादः किन्तु तन्नित्यत्वे । न चास्माभिः प्रथमं नित्येश्वरपूर्वकत्वं क्षित्यादिः साध्यते, किन्तु बुद्धिमत्कर्तृमात्रपूर्वकत्वम् । ततोऽधिकरणसिद्धान्तबलेन ईश्वरसिद्धिरनीश्वरस्य क्षित्याद्युत्पत्तावसामर्थ्या-दित्युक्तम् । सिद्धे तु सामान्येनेश्वरे, पश्चात्तस्य नित्यत्वं विचार्यते । तच्च विचारितं प्रागिति । ततश्च "स्वाभाविकत्वेन तत्त्वस्य" (प्र० वा० अ० २।२९६) इत्याद्यप्ययुक्तम् ।

अपि च भुवनप्रकाशनतापनस्वभावत्वेऽर्कस्य जगत्तत्स्वभावं भवेदित्यपूर्वेषा वाचो युक्तिः । स्वाभाविकत्वं नास्त्यर्कस्येति चेत्, ननु विशिष्टहेतुकत्वेऽपि जगत् तद्‌हेतुकं भवेदिति समानः प्रसङ्गः । किं च नित्यानामपि गोत्वाश्वत्वा-दीनां नियतस्वभावत्वं प्रपञ्चेन प्राक् समर्थितमिति ।

"ईश्वरादीश्वरत्वस्य" ( प्र० वा० अ० २।२९७ ) इत्याद्यप्ययुक्तम्, धर्मि-ग्राहकेण क्षित्यादिकार्यानुमानेन बाधितत्वादाश्रयासिद्धत्वं वा ।

## ❀ सातिशयमपि ज्ञानादिकमीश्वरे स्वाभाविकम् ❀

यदपि "उत्कर्षोऽस्ति गुणानाम्" ( प्र० वा० अ० २।२९८ ) इत्यादि, तदप्ययुक्तम्; न ह्यागमादृते शक्राद्युत्कर्षसद्भावेऽस्ति प्रमाणं, न चागमस्ते प्रमाणम् । तत्प्रामाण्ये वा तत एव नित्यस्येश्वरस्यापि सिद्धिः । बुद्धागमश्चा-स्माकं न प्रमाणम् । किं च शक्रादिवदनीश्वरस्यापि यदि योगाभ्यासतपश्चरणा-द्यनुष्ठानाद्वोत्कर्षः, ततः सातत्येनाऽसंख्या त्रसस्थावराद्युत्पत्तिविनाशौ न स्यातां हिंसाद्यधर्मोत्पादनाभिभवादित्युक्तम् ।

[1]ननु ज्ञानादिप्रकर्षस्याभ्यासप्रभवत्वं सानुगमं यः प्रत्याचक्षीत, तस्य निरनुगमे स्वाभाविकत्वे कथं न प्रतिक्षेपः ? यो हि ग्राममपि मुष्णाति, तस्यारण्ये त्राणासम्भविनि काऽऽक्षमेति, तदयुक्तम्; न हि वयं ज्ञानादेरभ्यासात्तारतम्यभाविनं प्रकर्षं प्रत्याचक्ष्महे, योगिनां तथाभ्युपगमात्। जगत्कर्तुश्च तत्कार्याऽन्यथानुपपत्तिबलेन स्वाभाविकत्वं ज्ञानादेरिष्टम्, परमाण्वाकाशादेरणुत्वमहत्त्वादिवत्। निरनुगमस्य प्रतिक्षेपे तु क्षणिकत्वादेरपि प्रतिक्षेपः स्यात्। तत्र बाधकप्रमाणादनुगमसिद्धावत्रापि तत एव सिद्धः। प्रत्यक्षेण क्षणिकत्वस्य वस्तुनिवृत्त्योस्तादात्म्यस्य च ग्रहणेऽप्यनिश्चयात्तन्मोहनिवृत्तिरेव बाधकप्रमाणात् क्रियत इति चेत्, नन्वेवं क्षित्यादीनां नित्यैश्वर्योपेतकर्तृपूर्वकत्वे प्रत्यक्षेण गृहीतेऽप्यनिश्चयात्तन्मोहनिवृत्तिरेव बाधकप्रमाणेन क्रियत इति ब्रुवाणः कथं वार्यते ? चोद्यपरिहारयोः समानत्वादिति।

## ❀ स्थित्वा प्रवृत्तिमत्त्वादिहेतुषु दोषपरिहारः ❀

तदेवं स्थित्वा प्रवृत्तिसंस्थानविशेषार्थक्रियादिषु भेष्टसिद्धिः नाप्यसिद्धिदृष्टान्ते दण्डादौ बुद्धिमदधिष्ठानस्य सिद्धत्वात्। साध्यविशेषापेक्षया तु सर्वानुमानेष्वप्यसिद्धिर्दृष्टान्ते स्याद्, एतेन संशयोऽपि दृष्टान्ते प्रत्युक्तः, साध्यसामान्यस्य निश्चितत्वादिति।

यदपि संशयोऽनैकान्तिकत्वमिति, तदप्ययुक्तम्, यस्मादुभयसंप्रतिपन्ने विपक्षे व्यभिचारोद्भावनं युक्तं, न चेश्वरस्त्वया प्रतिपन्नः।

किं चाचेतनस्य कालदेशादेर्विवेकशून्यस्य स्थित्वा प्रवृत्तिर्न सम्भवति, चेतनस्तु स्वयं देशकालादिनिमित्तं तत्प्रयोजनं च ज्ञात्वा स्थित्वापि प्रवर्तते इत्यविरोधः।

## ❀ संस्थानस्येश्वरेऽनैकान्तिकत्वनिरासः ❀

संस्थानमविशेषोपीश्वरेणानैकान्तिकः इत्येतदपि व्यामोहजृम्भितम्, न हि वस्तुमात्रं संस्थानविशेषत्वेन लोकेऽपि प्रसिद्धं, किं तर्हि ? अवयवानां संयोगविशेषः संस्थानविशेष इत्युच्यते। प्रसाधितश्चावयवानां संयोगविशेषोऽवयवी

---

१. अलङ्कारानुपूर्वी तु—"यो हि ग्राममेव मुष्णाति साधुजनसमवाये, तस्यारण्ये त्राणासम्भविनि काऽऽक्षमा ? तथा यस्तारतम्यसम्भविन्यामवस्थायां तदनुगमने प्रकर्षसम्भवं प्रत्याचक्षीत। तस्य निरनुगमे वस्तुनि न प्रतिक्षेप इति क एवं प्रत्येति ?" ( प्र० वा० अ० पृ० ४० )

चातः परमाणुव्यतिरेकेण[1] संस्थानं नास्त्येतदप्ययुक्तम्। किं च परमाणवोऽपि कुतश्चिदतिशयात् त्रिकोणचतुष्कोणवर्तुलाद्याकारेण प्रतिभासन्त इत्यवश्यमेष्टव्यम् अन्यथा तत्प्रतिभासस्याविसंवादो न स्यात्। यतश्चातिशयात् त्रिकोणादिप्रतिभासः, स एव संस्थानविशेषः। स चेश्वरे नास्तीति कथं भगवानपि संस्थानविशेष इति ? यदप्युक्तमर्थक्रियाकारित्वमपि तेनैवानैकान्तिकमिति, तदप्ययुक्तम्, सविशेषणस्यार्थक्रियाकारित्वस्यानैकान्तिकत्वाभावात् अचेतनस्य सतः कार्यस्य चार्थ-क्रियाकारित्वं हि न बुद्धिमत्प्रयुक्तत्वं व्यभिचरति, न हि भगवतोऽचेतनत्वं कार्यत्वं वास्तीति।

## ❀ कार्येऽप्रेक्षापूर्वकत्वशङ्का तन्निरासश्च ❀

यदप्याह—

"अप्रेक्षापूर्वकत्वस्य पदार्थेषूपलब्धितः।
अचेतनत्वं तद्धेतोरिति युक्तिविदां नयः॥" (प्र० वा० अ० २।२८३)

"अप्रेक्षावत्पदार्थानां कारणं न च युक्तिमत्।
छागादीनां पुरीषादेर्वर्तुलीकरणेन किम्॥" (प्र० वा० अ० २।२८४)

तदप्ययुक्तम्, प्रेक्षापूर्वकारिनिमित्ताभावे हि चक्षुरादिष्वपि दन्तोत्थानमपानादिष्वपि जिह्वाऽपि स्यात्, तद्धेतूनां निर्विवेकत्वादिति।

## ❀ छागपुरीषादिवर्तुलीकरणमपि सप्रयोजनम् ❀

छागादिपुरीषादेर्वर्तुलीकरणे प्रेक्षावतः किं प्रयोजनमिति चेत्, छागादीनां तादृशेनैव पुरीषविशेषेणोत्सर्गकाले सुखं दुःखं व भवतीति तन्निमित्तकर्मफलसम्पादकत्वमेव प्रयोजनम्। एतेन वदरीकण्टकमयूरचन्द्रिकादिवैचित्र्यकरणेऽपि प्रयोजनं द्रष्टव्यम्। तत्राप्यवश्यं कस्यचित् सुखं दुखं वा, दर्शनं स्पर्शनं वा भवतीत्यतो विचित्रं प्राणिनां कर्माधिष्ठाय तदनुरूपं फलं कुर्वतः कथमप्रेक्षापूर्वकारित्वम् ? भवतु वा निष्प्रयोजनं कार्यं, तथापि नेश्वरस्यासिद्धिस्तदनुमानस्य निरवद्यत्वात्। यथा बालक्रीडाकृतानि हस्त्यश्वरथादीनि निष्प्रयोजनान्यपि नाऽचेतनैरेव हेतुभिः कृतानि, तथा क्षित्यादीन्यपीति। न खलु असिद्धत्वादिदोषरहितस्य हेतोः साध्य-साधकत्वं न युक्तम्। असिद्धत्वादिदोषसद्भावे तु स एव वक्तव्यः, किमन्येन विकल्पेनासाधनाङ्गेनेति ?

---

१. प्रज्ञाकरेणोक्तम्—"न खलु परमाणुभ्यो व्यतिरिच्यमानशरीरं (संस्थानं) द्रव्याश्रितमस्ति। परमाणव एव केवलाः।" (प्र० वा० अ० पृ० ४०)

## ❀ सन्निवेशादिहेतोरसिद्धत्वाद्याशङ्का ❀

नन्वसिद्धत्वदोषोऽप्यत्रास्ति, बुद्धिमदधिष्ठातृव्याप्तस्य सन्निवेशादेः क्षित्यादावनुपलम्भात् । तदाह—

[ क ] "सिद्धं [1]यादृगधिष्ठातृभावाभावानुवृत्तिमत् ।
सन्निवेशादि तद् युक्तं तस्माद् यदनुमीयते ॥" (प्र० वा० २।११)

अक्रियादर्शनेऽपि कृतबुद्धिर्भवति प्रासादादिभेदेष्विव । यदि तादृशं सन्निवेशादि क्षित्यादिष्वपि स्यात्तदा ततोऽधिष्ठात्रनुमानं युक्तम् । तद्विलक्षणसन्निवेशादिदर्शने त्वधिष्ठात्रनुमितिर्न युक्तेत्याह—

"वस्तुभेदे प्रसिद्धस्य शब्दसाम्यादभेदिनः ।
न युक्तानुमितिः पाण्डुद्रव्यादिव हुताशने ॥" ( प्र० वा० २।१२ )

वस्तुभेदे दृष्टे संस्थानादिविशेषे घटादौ यः प्रसिद्धो विशेषः, पुरुषाधिष्ठानलक्षणस्तस्य, क्षित्यादिगतस्यानुमितिः संस्थानादिशब्दसाम्येनाभेदमात्रान्न युक्ता ।

[ ख ] न हि पाण्डुशब्दसाम्येनाऽभेदवतो वाष्पादितोप्यग्नावनुमितिर्भवति ।

प्रत्यक्षाबाधातः पाण्डुत्वादग्न्यनुमानं प्रवर्तत, ईश्वरानुमानं तु न बाध्यते, ततस्तत्प्रवृत्तिर्युक्तेति चेत्, नैतत, यस्मात् ।

[ ग ] "न न बाध्यत इत्येवमनुमानं प्रवर्तते ।
सम्बन्धदर्शनात्तस्य प्रवर्तनमितीरितम् ॥" (प्र० वा० अ० २।३२७)

[ घ ] "अन्यथा कुम्भकारेण मृद्विकारस्य कस्यचित् ।
घटादेः करणात्सिध्येद् वल्मीकस्यापि तत्कृतिः ॥" (प्र० वा० १३)

[ ङ ] कुलालानुपलम्भ एवत्र बाधेति चेत्, ईश्वरे किं किमुपलम्भोऽस्ति ? तस्माद् घटवल्मीकादीनामिव वस्तुसादृश्याभावान्नानुमानं युक्तम् । वस्तुसामान्याभावेऽपि शब्दानुवृत्तित एवानुमानं भविष्यतीति चेत्, तदयुक्तम्, यतः—

[ च ] "जात्यन्तरे प्रसिद्धस्य शब्दसामान्यदर्शनात् ।
न युक्तं साधनं गोत्वाच्छागादीनां विषाणिवत् ॥"
( प्र० वा० २।१४ )

---

१. यादृगित्युभयान्वयि पदम् । यादृशस्याधिष्ठातुर्भावाभावानुवृत्तिमद् यादृक् सन्निवेशादि सिद्धम् । तस्माद् यदनुमीयते, तद् युक्तमित्यन्वयः ।

"विवक्षापरतन्त्रत्वान्न शब्दार्थाः सन्ति कुत्र वा ।
तदभावादर्थसिद्धौ तु सर्वं सर्वस्य सिद्धयति ॥ ( प्र० वा० २।१६ )

[ छ ] किं च यथा भगवान्नित्यव्यापित्वादिधर्मयुक्तस्तथाकाशमपि, तत्रेश्वर एव कारणम्, नाकाशमिति कुतोऽयं विभागः ? यदि च सद्भावमात्रेण कारणत्वं कल्प्यते, तदा शास्त्रौषधादिसम्बन्धाच्चैत्रस्य व्रणरोहणेऽसम्बद्धस्य, किं स्थाणौ कारणत्वं न कल्प्यते ? अथ स्थाणौ व्यापारानुलम्भादकारणत्वं, यद्येवमीश्वरस्यापि ।

[ ज ] "स्वभावभेदेन विना व्यापारोऽपि न युज्यते ।
[ झ ] नित्यस्याऽव्यतिरेकित्वात्सामर्थ्यं च दुरन्वयम् ॥"
( प्र० वा० २।२४ )

किं च—

[ ञ ] "येषु सत्सु भवत्येव यत्तेभ्योऽन्यस्य कल्पने ।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिः ॥" (प्र० वा० २।२५)

"तस्माद्यतो यतो यद्यत्तत्तदस्तु ततस्ततः ।
किंचिच्चेतनतः किंचिदन्यतश्चेति निश्चयः ॥"
( प्र० वा० अ० २।३२३ )

## ❀ तस्या अपाकरणम् ❀

[ क ] अत्रोच्यते—यत्तावदुक्तम्—यादृक् सन्निवेशादि प्रासादादिषु दृष्टं, तादृगेव यदि क्षित्यादिषु स्यादिति, तन्न; मठप्रासादघटादिषु तद्भेदेषु च मिथः संस्थानवैलक्षण्येऽप्यधिष्ठातृपूर्वकत्वाव्यभिचारात् । अथ तेषु सर्वत्राक्रियादर्शनेऽपि कृतबुद्धिर्भवति, न क्षित्यादिष्विति; तत्किमिदानीमकार्यत्वमेव क्षित्यादीनाम् ? न हि कृतकत्वेनाप्रतीयमानानां कार्यत्वं वक्तुं शक्यम् । कृतकत्वेन प्रतीतौ च कथं न कृतबुद्धिः ? सर्वेषां तु प्रासादादिष्वपि कृतबुद्धिर्न भवति, यथा च चिरन्तनेषु प्रासादादिषु व्याप्त्यभिज्ञस्यैव कृतबुद्धिर्भवति, व्याप्तिमूढानां त्वकृत-बुद्धिरेव भवति तथा क्षित्यादिष्वपीति न कश्चिद्विशेषः ।

पुरुषकृतबुद्धिः प्रासादादिष्विव न क्षित्यादिषु भवतीति चेत्, केषां न भवति ? किं प्रसिद्धाविनाभावानामपि ? उत व्याप्तिस्मृतिविकलानाम् ? प्रसिद्धा-विनाभावानामभ्रष्टस्मरणानां तावद् भवत्येव पुरुषकृतबुद्धिः, लोकेऽपि हि वैचित्र्यं जगतः केनचिद्धात्रा निर्मितमित्यस्ति प्रतीतिः । व्याप्तिग्रहणस्मृति-

विमूढानां तु प्रासादादिष्वपि केषुचिन्न पुरुषकृतबुद्धिर्भवति । नैतावता तेषामपुरुषकृतत्वम् । अपि चैवं वेदेष्वपि पुरुषकृतबुद्धिर्लौकिकानां मीमांसकानां च न भवतीत्यतश्च तत्रापि पुरुषकृतत्वसाधनायोक्ता वाक्यत्वादयोऽसिद्धा हेतवः स्युः ।

किं चानित्यत्वसिद्ध्यर्थमप्युक्तं कृतकत्वादिसाधनमसिद्धं स्यात्, न हि यादृशं कृतकत्वादि घटादिषु दृष्टं, यच्छ्रोत्रग्राह्यं न भवति, तादृशं शब्देऽस्तीति। तस्माद् दृष्टान्तदार्ष्टान्तिकवैधर्म्यमात्रमेतत् सर्वानुमानेषु समानं नेश्वरानुमानस्यैव बाधकमिति ।

[ ख ] यत् पुनरेतत्—पाण्डुद्रव्यादिवेति, तदयुक्तं; पाण्डुत्वस्य हि दहनसिद्धावनैकान्तिकत्वं बाधितविषयत्वं वा ।

[ ग ] यत्पुनरेतत्—न न बाध्यत इत्येवमादि, तन्न; अनभ्युपगमात् । न खलु अबाधात एवानुमानप्रवृत्तिं ब्रूमः, किं तु पक्षधर्मत्वादिरूपाणां पञ्चानां चतुर्णां वा ग्रहणादिति ।

[ घ ] यच्चोक्तम्—अन्यथा कुम्भकारेण इत्यादि, तत्र कुम्भकारशब्दस्य कोऽर्थोऽभिप्रेतः ? किमविवक्षितविशेषः कश्चिच्चेतनः कर्ता ? किं वा चक्रादिसामग्रीयुक्तः पुरुष इति ? किं चातः ? प्रथमे पक्षे न किंचिद् बाधितं, वल्मीकारेदपि चेतनकर्तृपूर्वकत्वाभ्युपमात् । द्वितीये तु पक्षे प्रत्यक्षबाधापि भवति, चक्रादिसामग्रीयुक्तपुरुषविशेषानुपलम्भेऽपि वल्मीकादेरुत्पत्तिदर्शनात् ।

[ ङ ] यत्पुनरेतत्—ईश्वरस्याप्यनुपलम्भादभाव इति, तदयुक्तं; दृश्याऽनुपलम्भो ह्यभावं साधयति, नानुपलम्भमात्रं, धर्माधर्मादेरप्यनुपलम्भादभावप्रसंगात् ।

[ च ] यदप्याह—[1]नन्वेवमदृष्टं कर्मापि न कल्पनीयम्, तत्किमिदानीं शुषिरमित्येव जानुप्रवेशः ? यदि हि कर्मापि परिकल्प्यापर ईशः कल्प्यते, ततस्ततोऽप्यपरमित्यनवस्थेति, तदप्ययुक्तं; कर्मणो हि कारणशक्तिपरिज्ञानपूर्वकप्रयोक्तृत्वाभावात् मृत्पिण्डादिवदधिष्ठात्रपेक्षित्वं युक्तम् । तदधिष्ठानात् कुलालादिवत् परिदृष्टशक्तीनि कारकाणि । स्वेच्छया प्रयुञ्जानस्तुल्यज्ञानशक्तिकमधिष्ठात्रन्तरं नापेक्षत इति कथमनवस्था ? अधिकज्ञानशक्तिकमपेक्षते, ततोऽनवस्थेति चेत्, न; यावत्सु तस्य व्युत्पत्तिस्तावत्स्वनपेक्षित्वात् ।

---

१. नन्वेवमदृष्टं कर्मापि न कल्पनीयम्, तत्किमिदानीं शुषिरमित्येव जानुप्रवेशः ( प्र० वा० अ० पृ० ४६ ) ।

न चाधिकापेक्षत्वेऽप्यनवस्था, निरतिशयान्निवृत्तेः। यतो ह्यन्यस्याधिकं ज्ञानं सामर्थ्यं च नास्ति, स निरतिशयेन ज्ञानेन सामर्थ्येन च युक्तोऽधिष्ठात्रन्तरं नापेक्षते इत्यतोऽनवस्था निवर्तते। निरतिशयानभ्युपगमेऽनवस्थां साधयतः प्रमाणं नास्ति, कार्योत्पत्तिविरोधश्च। तस्माद् यो यत्रानभिज्ञः, स तत्रान्यं तज्ज्ञमपेक्षते, न तज्ज्ञोऽप्यन्यं तज्ज्ञमिति।

## ❀ भ्वादिशोभनाशोभनसंस्थाननिमित्तम् ❀

यदि तर्हि भूभूधरादि कार्यं प्रेक्षावता कृतं, तदा तत्संस्थानं किमिति अतिशोभनं न भवति? एवं तर्हि येषां भूभूधरप्रदेशानां शरीरवृक्षादिविशेषाणां च संस्थानमतिशोभनम्, तेषां कर्ता प्रेक्षावानभ्युपगन्तव्यः।

किं च केनापि प्रज्ञाकृतानां चित्रादिकार्यविशेषाणां, न सर्वेषां संस्थानमतिशोभनं भवति। यथैव हि प्रेक्षावानेव चित्रकारादिः विचित्रं कार्यं कर्तुमिच्छन् किंचित् शोभनसंस्थानं, किंचिन्मध्यमसंस्थानं करोति; तथा भगवानपि सर्वज्ञ एव विचित्रसंस्थानं जगत् करोतीति। अथवा शरीरेन्द्रियवद् भूम्यादिकमपि प्राणिकर्मानुरूपं भगवान् करोति—तत्र देवानां धर्मबहुलत्वादतिशोभनं संस्थानमेव तद्भूम्यादिकं करोति, नारकिणां त्वधर्मबहुलत्वात् तद्भूम्यादिकमशोभनसंस्थानमेव करोति, इदं भूभूधराख्यं भुक्तशेषधर्माधर्मविपाकवतां प्राणिनां स्थानं, तेन तत्सुखदुःखप्रकारनिमित्तं कृतवानिति।

[च] यत्पुनः "जात्यन्तरे प्रसिद्धस्य" इत्यादिश्लोकद्वयम्; तदप्ययुक्तम्; न हि यथा वागादिषु [1]नवस्वर्थेष्वभिन्नं निमित्तं विनैव गोशब्दः प्रवृत्तस्तथा क्षित्यादिष्वपीति। यदि हि घटादिषु क्षित्यादिषु चैकं वस्तुगतं कार्यत्वादिलक्षणं सामान्यं नास्ति, ततः कथं संस्थानत्वेन कार्यत्वं साध्यते, कार्यत्वेनानित्यत्वमिति? नह्यत्र विशेषः कश्चिदस्ति, येनानित्यत्वसाधने क्षित्यादिषु कार्यशब्दसाम्यमात्रत्वेनासिद्धं न भवति, बुद्धिमदधिष्ठातृपूर्वकत्वसाधने त्वसिद्धम्। उभयत्रापि घटादिरेव दृष्टान्तस्तत्रानित्यत्वेन यथा कार्यत्वस्य व्याप्तिः प्रसिद्धा, तथा बुद्धिमदधिष्ठातृपूर्वकत्वेनेत्युभयोः सिद्धिरसिद्धिर्वाऽस्तु। न चाचेतनानां विशेषः कश्चिदस्ति, येन भटादिहेतव एवाचेतना बुद्धिमदनधिष्ठिता न प्रवर्तन्ते। क्षित्यादिहेतवस्त्वचेतना अपि बुद्धिमदनधिष्ठिता एव प्रवर्तन्त इति।

## ❀ नित्यत्वादिसामान्येऽपीश्वरस्यैव कर्तृत्वं, नाकाशादेः ❀

यत्पुनरेतत्—"नित्यव्यापित्वाद्यविशेषेऽपीश्वर एव कारणं, नाकाशमिति

---

१. नवस्वर्थेषु गोशब्दप्रवृत्तिर्दर्शिता ३४१ तमे पृष्ठेऽत्रैव।

कुतोऽयं विभागः" ? इति, तदप्यविचारितार्थम्; कार्यानुमानेनैव विभागस्य प्रदर्शितत्वात् । कुम्भादौ दृष्टान्ते हि बुद्धिमानेव कर्ता लौकिकपरीक्षाणां प्रसिद्धः, न त्वाकाशम्, तेन क्षित्यादौ साध्येऽपि बुद्धिमानेव कर्ता सिध्यति । स एवेश्वरः, अनीश्वरस्य तत्र सामर्थ्याभावादित्युक्तम् । एतेन "शास्त्रौषधादिसंबन्धाद्" इत्याद्यपि निरस्तम् । यदि नाम व्रणरोहणादिषु स्थाणोः कारणत्वं प्रमाणाभावान्न कल्प्यते, भगवतः क्षित्यादिषु कारणत्वं किं न कल्प्यते ? न ह्यत्रापि प्रमाणाभावः, नापीश्वरः प्रत्यक्षः, येन स्थाणुवदस्य क्षित्यादिकार्ये प्रत्यसम्बद्धता गृह्यते ।

## ❋ निर्व्यापारस्येश्वरस्य कर्तृत्वशङ्कानिरासः ❋

अथ मतम्—निर्व्यापारस्य कारणत्वं न युक्तम्, व्यापारश्चेश्वरस्य स्वभावभेदेन विना न युज्यत इति । स्वभावभेदेन विनेति कोऽर्थः ? किं सहकारिभेदेन विना ? किं वा धर्मभेदेन विना ? आहोस्विदात्मभेदेन विनेति ? तत्र यदि सहकारिभेदेन विनेति अभिप्रेतं, ततोऽसिद्धम्; यस्मादीश्वरस्यापि सहकारिभेदोऽस्त्येव । तदतद्रूपाकरणेऽपि यथा न सहकारिवैयर्थ्यं, तथा वक्ष्यामः । अथ धर्मभेदेन विनेत्यभिप्रेतं, तदप्यसिद्धम्; भगवतोऽपि धर्माणां सर्वज्ञत्वजगत्कर्तृत्वनित्यत्वादीनां परस्परभेदोपपत्तेः । अथ धर्माणां भेदेन विनाशेन विनेत्यभिप्रेतं, तदप्यसिद्धम्; संयोगादिधर्माणां विनाशोपपत्तेः । अथ सर्वधर्मविनाशेन विना व्यापारो न युज्यत इति, तदप्ययुक्तम्; सर्वधर्मविनाशे तु प्रारब्धस्य व्यापारासम्भवात् । अथात्मभेदेन विनेत्यर्थः, तत्रेश्वरात्मा किं परस्मान्न भिद्यते ? किं वा स्वस्मादिति ? परस्मान्न भिद्यत इत्ययुक्तम्, अद्वैतप्रसंगात् । अद्वैतं च निराकरिष्यामः । अथ स्वस्मान्न भिद्यते, तदान्यस्यापि कारकस्य स्वस्माद् भेदो नास्तीति न व्यापारः स्यात्, ततः सर्वं जगन्निष्कारणं स्यात् । अथ स्वभावभेदः स्वात्मविनाशस्तेन विना व्यापारो न युज्यते, तत्किमिदानीं विनष्टस्य व्यापारः सम्भवतीति ? अथाजनकस्वभावनिवृत्तौ जनकस्वभावस्योत्पत्तौ च व्यापारः सम्भवति, न नित्यस्येति; एतच्च क्षणिकत्वप्रतिषेधे निराकरिष्यामः ।

## ❋ नित्यस्य सामर्थ्यं न दुरन्वयम् ❋

[ झ ] यत्पुनरेतत्—"नित्यस्याऽव्यतिरेकित्वात्सामर्थ्यं दुरन्वयम्" इति, तदयुक्तम्; तत्सत्त्वग्राहकप्रमाणादेव सामर्थ्यसिद्धेः, न ह्यन्यथा क्षित्यादिकार्योत्पत्तिः सम्भवतीत्युक्तम् । गोत्वादेश्च सामान्यस्य नित्यत्वेऽप्यनुगतव्या-

वृत्तगोप्रत्ययादिषु सामर्थ्यं विस्तरेण प्रसाधितम्। अतश्च न नित्यस्य सामर्थ्यं दुरन्वयमिति।

## ❀ कार्यस्य चेतनाचेतनपूर्वकत्वशंकानिरासः ❀

[अ] यद्यपि "येषु सत्सु"—इत्यादि, तदप्ययुक्तम्; कर्मादेरप्यकल्पनाप्रसंगात्। न हि पित्रादिषु सत्सु भवतः शरीरादेः कर्मतृष्णादिकं हेतुत्वेनोपलभ्यते, ततस्तत्कल्पनेपि हेतूनामनवस्थितिः स्यात्। अथ कर्मतृष्णादेरेकत्रसामर्थ्यं दृष्ट्वाऽन्यत्रानुमानेन गम्यते? बुद्धिमदधिष्ठातुरप्येकत्र सामर्थ्यं दृष्ट्वाऽन्यत्रानुमानेन किं न गम्यते? यत्र दृष्टं, तत्र गम्यतां, न क्षित्याद्युपादानोपकरणेष्विति चेत्, कर्मतृष्णादेरपि यत्र सामर्थ्यं दृष्टं, तत्र गम्यतां, न गर्भशरीरादिष्विति। शरीरत्वाद्यविशेषाद् गर्भशरीरादिष्वपि गम्यत इति चेत्, अचेतनत्वाद्यविशेषात् क्षित्याद्युपादानोपकरणेष्वपि किं न गम्यते? बुद्धिमतोऽप्यधिष्ठातृमात्रस्य सामर्थ्यं गम्यतां, नेश्वरस्यादृष्टत्वादिति चेत्, यद्येवं कर्मतृष्णादिमात्रस्य साधर्म्यं गम्यतां न जन्मान्तरोत्पन्नस्यादृष्टत्वात्। गर्भशरीरादिहेतोः सामर्थ्यात् जन्मान्तरोत्पादसिद्धिरिति चेत्, यद्येवं क्षित्याद्युपादानाधिष्ठातुर्बुद्धिमतः सामर्थ्यादीश्वरत्वसिद्धिरिति न कश्चिद् विशेषः। तदेवं सर्वकार्याणां बुद्धिमत्पूर्वकत्वसिद्धेः, किंचिच्चेतनतः, किंचिदन्यतश्चेत्येतदप्ययुक्तम्।

## ❀ ईश्वरस्य कारणत्वे कर्मवैयर्थ्याशङ्का तन्निरासश्च ❀

नन्वीश्वरस्य कारणत्वे व्यर्थं कर्म स्यात्। कर्मणः कारणत्वे वा नेश्वरोऽभ्युपगन्तव्यः, तथा हि—

"यदि कर्मादि निर्भर्त्स्य कारणं कारणं भवेत्।
अन्यथा कारणं सर्वं सर्वस्यापि प्रसज्यते॥" (प्र० वा० अ० २।३४७)

तदेतदयुक्तम्; न हि कुलालस्य कारणत्वे चक्रदण्डादेर्वैयर्थ्यं चक्रादि निर्भर्त्स्य वा घटादीनां कुलालः कारणं, तदनिर्भर्त्सने वा नैव कारणमिति। भिन्नप्रमाणग्राह्यत्वाच्च। तथा हि—बुद्धिमत्पूर्वकत्वानुमानेनेश्वरः प्रतीयते, जन्मादिवैचित्र्येण तु कर्मेति। विचित्रं हि कार्यं विचित्रकारणप्रभवं दृष्टं, यथा चित्रादि, तथा च जन्मादिकार्यं विचित्रं दृश्यते।

## ❀ जन्मनो वैचित्र्यम् ❀

जन्म तावद्विचित्रम्—कस्यचित्प्रशस्ते कुले जन्म कस्यचिदप्रशस्ते, कस्यचित्सधने, कस्यचिन्निर्धने। तरतमयोगेनापि द्रष्टव्यं जातिप्रज्ञाशीलरूपवैरूप्यव्याधिवैचित्र्येण चेति।

## ❀ मरणस्य वैचित्र्यम् ❀

तथा मरणं विचित्रम्—कस्यचिद् गर्भे, कस्यचिज्जातमात्रस्य, मासवर्षादिकालविकल्पेन, दीर्घदीर्घतरादिदुःखविकल्पेन च, प्रशस्ताप्रशस्तनिमित्तविकल्पेन चेति। न चैतज्जन्ममरणवैचित्र्यं भूतवैचित्र्याद्युक्तम्, आहारादिनिमित्ताविशेषेऽपि वैचित्र्योपलब्धेः। पुरुषाणां स्वभावेन विचित्रत्वात्तत्कृतकर्मवैचित्र्यादेव जन्मादिवैचित्र्यमिति गम्यते, तदधिष्ठानाच्चेश्वरश्चित्राद्युपकरणानामधिष्ठाने वास्तीति कथमितरस्यावैयर्थ्यमिति ?

## ※ अपरिणामिनोऽहेतुत्वाशङ्का तन्निरासश्च ※

यदप्याह--

"स्वभावपरिणामेन हेतुरंकुरजन्मनि।
भूम्यादिस्तस्य संस्कारे तद्विशेषस्य दर्शनात्॥" (प्र० वा० २।२६)

ईश्वरस्य तु स्वभावपरिणामेऽपि नास्ति संस्कार्यताऽतो न भूम्यादिवदपि कारणम्।

"तस्मात्पृथगशक्तेषु येषु सम्भाव्यते गुणः।
संहतौ हेतुता तेषां नेश्वरादेरभेदतः॥" (प्र० वा० २।२६)

तदप्ययुक्तम्, न हि परिणामादेव हेतुस्तथा हि--स्थितोपविष्टगच्छतां प्राणिनां धारणे स्वात्मनि ज्ञानोत्पादने च भूम्यादिरविकृतोऽपि हेतुरुपलभ्यते। मणिविशेषश्च निश्चलोऽपि ज्ञानसुखादिहेतुर्दृष्टः। केषुचित्कार्येषु स्वभावपरिणामेन हेतुत्वसिद्धौ सर्वस्य तथैव हेतुत्वं विशेषाभावादिति चेत्, न; क्षणिकत्वप्रसंगात्। क्षणिकत्वं च निषेत्स्यामः।

## ※ अचेतनानां चेतनाधिष्ठितत्वसिद्धिः ※

किं केषांचिदचेतनानां चेतनाधिष्ठितत्वेन हेतुत्वसिद्धौ सर्वेषामचेतनत्वाविशेषात् तथात्वं किं नानुमीयते ? भूमिस्फटिकादिविकारस्य ह्यनुपलम्भादभावः सिध्यत्युपलब्धिलक्षणप्राप्तत्वात्, न त्वधिष्ठातुस्तस्यातीन्द्रियत्वात्। कुलालादेरैन्द्रियकत्वात्तस्य कथं नानुपलम्भादभावसिद्धिरिति चेत्, न; स्वव्यतिरिक्तस्य चेतनस्याप्रत्यक्षत्वात्। शरीरमात्रं तु कुलालादेः प्रत्यक्षं, तस्य चानुपलम्भादभावः सिध्यतु, न ततोऽन्यस्य बुद्धिमत इति। देहाभावसिद्धावेतस्याभावसिद्धिरदेहस्य कर्तृत्वानुपलम्भादिति चेत्, एवं तर्हि मृतस्याशरीरत्वाज्जन्मान्तरारम्भकत्वं न स्यात्, तथोपलम्भाभावात्। नापि सदेह एव जन्मान्तर-

संसारफलोपभोक्ताऽनन्तोऽपरः। स खलु बुद्ध्यादिकार्याणामाश्रयभूतोनुमातव्यः। न हि कार्यमनाधारं किञ्चिदुपलभ्यत इति। न चेन्द्रियाणामाश्रयत्वम्, उपहतेन्द्रियविषयस्मरणायोगात्, अन्यानुभूतेऽ-

मारभते, तथोपलम्भाभावादेव न ह्येकं देहसन्तानं त्यक्त्वान्यत्र बुद्धेरनुप्रवेशः कदाचिद् दृष्टः। बालकौमारादिभेदेषु संक्रमणवदिति चेत्, न; अवस्थाभेदेप्येकसन्तानत्वात्। स एव जीवतीति दर्शनात्। विपर्ययस्तु जन्मान्तरेण च बुद्धशरीरं त्यक्त्वा गर्भशरीरानुप्रवेशः क्वचिद् दृष्टः। स्वप्ने शरीरान्तरानुप्रवेशो दृष्टः इति चेत्, न; तस्य हि मिथ्यात्वात्। सत्यत्वे हि सुप्तस्य प्राणादिनिरोधोप्यन्यैरुपलभ्येत। न चोपादानकारणाद्विप्रकृष्टदेशे कार्योत्पत्तिर्दृष्टा तस्माद्यथादृष्टमात्रानुवादिनां परलोकसिद्धिः दुर्लभेति। तस्मात्कार्यसामान्येन कारणसामान्यानुमितौ तत्कार्यविशेषानुरूपस्तत्कारणविशेषोऽपि प्रतिपत्तव्योऽन्यथा तत्सामान्यानुमितिरेव स्यादिति। यदप्युक्तम्—"तस्मात्पृथगशक्तेष्वित्यादि," तदप्ययुक्तम्, यस्मादत्रापि दृष्टान्तधर्मिणि घटादौ चेतनानां कर्तृकर्मादीनां पृथगसामर्थ्यं च दृष्टं, तेन क्षित्यादिष्वपि संहतानामेव कर्तृकर्मादीनां सामर्थ्यमनुमीयते। तेषां कर्तृकर्मादीनां नित्यत्वं भवत्वनित्यत्वं वा, व्यापकत्वमव्यापकत्वं वा। यथाभूतानां तत्कार्योत्पादकत्वं सम्भवति, तथाभूतानामेव सिद्धिरभ्युपगन्तव्येत्यलमसद्ग्रहाभिनिवेशेनेति।

## ❀ अपरात्मविचारः ❀

एवं तावत्परमात्मा निर्णीतः, साम्प्रतमपरमात्मा विचार्यते संसारफलोपभोक्ता नामानन्तोऽपरः। स खलु बुद्ध्यादिकार्यविशेषाणामाश्रयभूतोऽनुमातव्यः।

बुद्धेरादयो बुद्ध्यादयो ज्ञानान्ता इच्छादय इत्यर्थः। तथा च सूत्रम्—"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिंगम्।" (न्या० सू० १।१।१०) [1]वैशेषिकपाठप्रसिद्ध्या तु बुद्धिरादिर्येषामिति द्रष्टव्यम्। कथं पुनर्बुद्ध्यादिभिरात्मानुमीयते? तदुच्यते—बुद्ध्यादयः क्वचित् समवेताः, कार्यत्वात्, गुणत्वाद्वा, रूपादिवत्। नन्वत्र साध्यविकलो दृष्टान्तः, रूपादेरात्माश्रितत्वाऽप्रसिद्धेः। विरुद्धश्च हेतुः साध्यविपर्ययेण व्याप्तत्वादिति, नैष दोषः; सामान्येनाश्रयमात्राश्रितत्वसाधनात्।

१. वैशेषिकः पाठस्तु—"बुद्ध्यादयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः" (वै० सू० १।१।६)।

र्थेऽन्यस्य स्मरणादर्शनात्। अत एव शरीरस्य बाल्यकौमारादिभेदभिन्नत्वादस्मरणम्।

---

## ❀ शरीरादीनां बुद्ध्याश्रयत्वप्रतिषेधः ❀

एवं तर्हि सिद्धसाध्यता, बुद्ध्यादीनां शरीरेन्द्रियाश्रितत्वाभ्युपगमात्, नैतदस्ति, यो हि बुद्ध्यादीनां नैवाश्रितत्वं मन्यते तं प्रति तावदाश्रितत्वमेव साध्यते, तत्सिद्धौ च, शरीराद्याश्रयप्रतिषेधादात्मसिद्धिर्भवति। तथा हि— शरीरं बुद्ध्याद्यधिकरणं न भवति, भूतकार्यत्वाद्, घटादिवत्।

## ❀ न साध्यहीनं निदर्शनम् ❀

ननु साध्यहीनं निदर्शनं, बुद्ध्यादिशून्यत्वेन घटादेः प्रत्यक्षतोऽधिगन्तुमशक्यत्वादनुमानेनैवाधिगमे चानवस्थाप्रसंगादिति, न; घटाद्याश्रयत्वे तद्दर्शिभिर्बहुभिर्बुद्ध्यादेर्ग्रहणं प्रसज्येत, बाह्येन्द्रियग्रहणप्रसंगाच्च। न हि भूताश्रयिणां गुणानां नियतैकपुरुषग्राह्यत्वमन्तःकरणैकग्राह्यत्वं च दृष्टम्। किं च यावदाश्रयोपलम्भप्रसंगाद्रूपादिवन्न हि भूतकार्यविशेषाणामाश्रये सत्यप्यत्यन्तोच्छेदो दृश्यते। लावण्यादिवदिति चेत्, न; लावण्यादीनां रूपसंयोगस्पर्शानामन्यतमस्वभावत्वात्। न च रूपादिमात्रं मृतशरीरेप्यत्यन्तमुच्छिद्यते।

किं च जीवच्छरीरवदघटादावपि बुद्ध्यादिसूचकस्य प्रवृत्त्यादेरुपलम्भप्रसंगात्, द्वयोर्बुद्ध्याद्याश्रयत्वाऽविशेषात्। जीवच्छरीरेष्वेव प्रवृत्त्यादिजननसमर्थं बुद्ध्यादि, न घटादौ। तेन तत्र सत्यपि बुद्ध्यादौ तत्सूचकस्य प्रवृत्त्यादेरनुपलम्भ इति चेत्, न; तदनुपलम्भे बुद्ध्यादिमात्रस्यापि सत्त्वे प्रमाणाभावात्। असत्त्वेऽपि प्रमाणं नास्तीति चेत्, न; तथाविधस्याप्रसिद्धत्वात्। न हि यत्र कदाचिदपि प्रवृत्त्यादिलिङ्गं नोपलभ्यते, तत्र बुद्ध्यादिप्रसिद्धिरस्ति। तथा भूतं वाऽस्तु मा वा भूत्, यत्तावत्प्रसिद्धं बुद्ध्यादि तस्याभावस्तावद् घटादौ निश्चिततल्लिङ्गस्य तत्र प्रवृत्त्याद्यन्यतमस्य कदाचिदप्यनुपलम्भात्। ततो न साध्यहीनं निदर्शनमिति।

एतेनेन्द्रियमनसां करणत्वेन बुद्ध्याद्याश्रयत्वं प्रतिषिद्धमेव स्यात्। निदर्शनस्य साध्यहीनत्वं परिहृतं द्रष्टव्यम्। एवं च शरीरेन्द्रियादिगुणत्वे प्रतिषिद्धे, परिशेषाद्यत्रैते गुणा वर्तन्ते, स आत्मेति गम्यते।

## ❀ इच्छादीनां क्रमविशेषादात्माश्रितत्वमेव ❀

किं च येन क्रमेणेच्छादयो गुणा उत्पद्यमाना दृश्यन्ते, तेन क्रमेणैषां शरीराश्रयत्वे सत्युत्पत्तिर्न स्यात्। तथा हि—यज्जातीयस्यार्थस्य सन्निकर्षात्

सुखमात्मोपलब्धत्वात्, तज्जातीयमर्थं पश्यन् आदातुमिच्छति, सेयमादातुमिच्छा एकस्यानेकार्थदर्शिनो दर्शनप्रतिसंधानाद् भवन्ती लिंगमात्मतत्त्वस्य। न ह्यन्येनानुभूते सुखहेतावन्यस्य प्रतिसंधानादिच्छा भवतीति।

तथा यज्जातीयस्यार्थस्य सन्निपाते दुःखमनुभूतवानात्मा, तज्जातीयमर्थं दृष्ट्वा द्वेष्टि, सोऽयं द्वेष एकस्यानेकार्थदर्शिनो दर्शनप्रतिसंधानाद् भवन् आत्मलिंगम्। न ह्यन्यथास्य दर्शनप्रतिसंधानादुत्पादः सम्भवत्यन्यदृष्टेन्यस्य प्रतिसंधानासम्भवात्। नाप्यन्यदीयाद् दुःखहेतुदर्शनप्रतिसंधानादन्यस्य द्वेषः सम्भवतीति।

यज्जातीयस्यार्थस्य सन्निपाते सुखहेतुः दुःखहेतुर्वावधारितस्तज्जातीयमर्थं पश्यन्नीप्सन् जिहासन्वाप्तिपरिहारार्थं प्रयतते, सोऽयं प्रयत्नः एकस्यानेकार्थदर्शिनो दर्शनप्रतिसंधानाद्भवन्नात्मलिंगम्, पूर्वोक्तान्न्यायात्।

यज्जातीयस्यार्थस्य सन्निधाने सुखमुपलब्धवांस्तज्जातीयेऽर्थे प्रतिसंधानादुक्तस्य सुखमुत्पद्यते, तदिदं सुखदर्शनप्रतिसंधानजाद्रागादुत्पन्नमात्मलिंगम्, नियतविषये हि बुद्धिभेदमात्रे न स्याद्देहान्तरवत्।

तथा यज्जातीयार्थसन्निपाते दुःखमुपलब्धवांस्तज्जातीयमर्थं चिरेणापि दृष्ट्वा तत्प्रतिसंधानाद् द्विषतो दुःखमुत्पद्यते, तदिदं दुःखं तद्धेतुदर्शनप्रतिसंधानभाविनो द्वेषादुत्पन्नं लिंगमात्मनः, न ह्यन्यथाप्रतिसंधानादिक्रमः सम्भवतीति।

किं चान्यदूर्ध्वत्वादिधर्मकमर्थं दृष्ट्वा तद्विशेषापेक्षायां विमृशन् बुभुत्सते, ततोऽस्य विशेषदर्शनान्निर्णयज्ञानं भवति, तदिदं ज्ञानं विमर्शबुभुत्साभ्यां सहैककर्तृकं गृह्यमाणमात्मनो लिंगमिति। न ह्यदृष्टेन्यदृष्टे वा स्मृतिः प्रतिसंधानं च भवति, तदभावे तदेककर्तृकाणामिच्छादीनामप्युत्पादो न स्यादिति।

## ❀ इन्द्रियाणां चैतन्याभावोपपादनम् ❀

इन्द्रियाणां कर्तृत्वेऽप्येककर्तृकत्वसम्भवात् नात्मसिद्धिरिति चेत्, न; इन्द्रियाणां नानात्वादेकत्वानुपपत्तेस्ततश्चैकेन्द्रियविषयोपलब्धाविन्द्रियान्तर्विषये स्मृतिप्रतिसंधानादिकं न स्यात्, दृश्यते च तत्; तस्मान्नेन्द्रियवृत्तय इच्छादय इति।

किं चेन्द्रियोपघातेऽपि तद्विषये स्मृतिदर्शनात्, न चानुभवितुरुपघाते स्मृतिः सम्भवति, साधारणविग्रहप्रसंगात्ततश्च भिन्नाभिप्रायेण प्रवृत्तेः कदाचिद्देहः खण्डशो भवेत्।

किं च नानादेहेषु इव नानाचेतनानुमापिका सुखादिव्यवस्थैकस्मिन्नपि देहे गृह्यते, विप्रतिपत्तिश्च स्यादेकगृहावस्थितानेकचेतनानामिव कदाचिद्विवादादयश्च प्रवर्तेरन्। शिष्याचार्यादिसम्बन्धोऽपि क्वचिच्छरीरे गृह्येत।

चेतनानीन्द्रियाणि, [1]व्यवस्थितविषयत्वात्, सद्गृहस्थवदिति चेत्, न; [2]व्यवस्थितविषयत्वादेव हि प्रदीपादिवदचेतनानि। न च रूपादिषु व्यवस्थितविषयः कश्चिच्चेतनोऽस्ति योऽत्र दृष्टान्तः स्यात्।

## ※ इन्द्रियाणां चैतन्ये प्रवृत्तिनिवृत्त्यभावप्रसङ्गः ※

प्रवृत्तिनिवृत्त्याभावप्रसंगश्च—यस्मादोदनादौ दृष्टे तद्रसाद्यनुमानात् पुरुषः प्रवर्तते, निवर्तते वा। तच्चानुमानं न चक्षुषो, नापि रसनादेः, सम्भवति, रूपरसादीनामन्योन्यादृष्टत्वेन तत्सम्बन्धस्य केनचिदप्यगृहीतत्वात्। स्वार्थ-परार्थासम्भवाच्च—न स्वार्थं चक्षुः प्रवर्तते, स्वार्थस्य तेनाननुभूतत्वात्। रसादिकं च प्रवर्तमानमप्यनुभवितुं न शक्नोति। नापि रसनाद्यर्थं प्रवर्तते, सह तदर्थेन रसनादिस्वरूपापरिज्ञानात्। नापि रसनादेरेव प्रवृत्तिः, तस्य हि देशाद्यज्ञाने क्व प्रवृत्तिः स्यात्? तस्मादेको रूपरसादीनामिन्द्रियव्यतिरिक्तोऽनुभविता स्मर्ता वास्ति, यो रूपं दृष्ट्वा रसादिकमनुमाय प्रवर्तत इति।

## ※ देहस्यात्मत्वशङ्का तन्निरासश्च ※

देह एव तर्हि अस्तु, तथा चोक्तम्—"चैतन्यविशिष्टः कायः पुरुष" इति। कोऽयं कायः? किमवयवाः? आहोस्विदवयवीति? यद्यवयवाः, ततस्तेषां बहुत्वाद् भिन्नाभिप्रायेण प्रवृत्त्यादयो दोषाः पूर्वोक्ता भवेयुः। खण्डखण्डीकृतानां चावयवानां ज्ञानादयः स्वलिंगैरुपलभ्येरन्, रूपादिवत्। न हि रूपरसादयः खण्डखण्डीकृतानामवयवानां नोपलभ्यन्त इति।

## ※ अवयवसङ्घातस्य चैतन्यनिषेधः ※

अथ तत्सङ्घातः काय उक्तः, स किमव्यतिरिक्तः? व्यतिरिक्तो वा? यद्यव्यतिरिक्तः, तदावयवा एव नामान्तरेणोक्ताः, तत्र चोक्तं दोषजातम्। केनचिद् धर्मेण विशिष्टा अवयवाः संघातः—इत्यत्रापि चेतनबहुत्वादिदोषा-

१. एतेन "न, विषयव्यवस्थानात्" ( न्या० सू० २।१।२ ) इति सूत्रं समनुक्रान्तं भवति।

२. तथा च सूत्रम्—"तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः" ( न्या० सू० २।१।३ )।

निवृत्तिः । अथ व्यतिरिक्तः संघातः, स सन्निवेशरूपः ? अवयवी वा स्यात् ? उभयथापि प्रतिदिनं विनाशित्वात्कालान्तरानुभूतेष्वर्थेषु स्मृतिप्रतिसन्धानाद्यनुपपत्तिः । संयोगविशेषो हि संयोगस्य निवेशसंचयसंस्थानादिशब्दैरभिधीयते, तस्य च प्रतिमुहूर्तं विनाशोऽन्यथा ह्यन्नपानोपभोगानुपभोगाभ्यां देहस्य पुष्टिदौर्बल्यादयो न स्युः । संयोगविनाशाच्चावयविनोऽपि विनाशः ।

## ❀ क्षणभङ्गुरस्य देहस्य सन्तानः ❀

किं च यत्प्रतिक्षणं क्षीयमाणं हेतुमाश्रित्यावतिष्ठते, तत्सदृशपरापरोत्पत्तिः सन्तानेनैवावतिष्ठते, यथा तैलमाश्रित्य प्रदीपः, तथा चाहारमाश्रित्य देहस्तिष्ठति । तस्मात् प्रतिक्षणविनाशी सन्तानेनोत्पद्यमानः प्रदीपवदुपलभ्यते, प्रत्यभिज्ञायते चेति ।

## ❀ अवस्थाभेदाद् देहस्यापि भेदः ❀

तथा च यत्कैश्चिदुक्तम्—"बालकौमाराद्यवस्था एव भिद्यन्ते न त्ववस्थावानिति", तन्निरस्तम्, एवं हि प्रदीपादेरपि विनाशसिद्धिर्न स्यात्, तत्राप्यवस्था एव भिद्यन्त इति पादप्रसारिकोपपत्तेः ।

सत्कार्यसिद्धिश्च प्रसज्यते—मृत्पिण्डघटकपालाद्यवस्था एव व्यक्ताव्यक्तस्थूलसूक्ष्मदृश्यादृश्याद्यवस्था एव भिद्यन्ते । तथा च प्रधानब्रह्माद्वैतादिसिद्धः—एकस्यैव हि पृथिव्युदकज्योतिरनिलाद्यवस्था एवेति । अवस्थाश्चावस्थावतोऽन्यत्वानन्यत्वाभ्यामनिर्वचनीयाः—इत्येवं पादौ प्रसार्य तिष्ठन्नद्वैतवादी सांख्यश्च कथं प्रत्याख्यातुं शक्यते ? तस्माद् भेदवादभिच्छद्भिर्विरुद्धधर्माध्यासाद् भेदोऽभ्युपगन्तव्यः । स च देहेऽस्ति, बालकौमारादिधर्माणां परिणामभेदस्य च विरुद्धत्वादिति । तदेवं देहस्याप्यनवस्थितत्वान्न स्मृतिप्रतिसन्धानाद्याश्रयत्वं सम्भवति ।

## ❀ शरीरसन्ताने कार्यकारणभावानुपपत्तिः ❀

कार्यकारणभावादुत्तरदेहस्य पूर्वदेहानुभूतेऽर्थे स्मृत्याद्युत्पत्तिरिति चेत्, किं पुनः पूर्वदेह उत्तरदेहं प्रति समवायिकारणम् ? उतासमवायिकारणम् ? आहोस्विन्निमित्तकारणमिति ? किं चातः ? समवायिककारणत्वे, वृद्धशरीरकालेऽपि तदाश्रयत्वेन पूर्वशरीराणां सर्वेषां ग्रहणप्रसंगः, समवायिकारणस्य कार्येण विरोधाभावात् । न च समवायिकारणनिवृत्तौ कार्यस्यावस्थानं क्वचिदस्ति ।

किं च द्वयोर्बहूनां [1]वा द्रव्याणां द्रव्यं प्रति समवायिकरणत्वं न त्वेकस्य,

१. तथा च कणादसूत्रम्—"अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम्" (वै० सू० १।२।११) ।

न ह्येकद्रव्याश्रितं द्रव्यं क्वचिदुपलभ्यत इति । किं चातः ? समवायिकारणत्वं द्रव्यस्यासमवायिकरणत्वासम्भवात् । कार्यानाधारत्वे सत्यन्यतरया प्रत्यासत्त्या प्रत्यासन्नं यत्कारणं, तदसमवायिकारणमुच्यते ।

## ❀ असमवायिकारणप्रत्यासत्तिः ❀

प्रत्यासत्तिस्तु--कार्यकारणैकार्थसमवायिलक्षणा । यथा—अवयवरूपादीनामवयविरूपादिभिः सह कार्यैकार्थसमवायिलक्षणा च [1]लघ्वी, यथाऽन्तःकरणसंयोगादेर्बुद्ध्यादिभिः सहेति ।

## ❀ इच्छादीनां समवायिकारणत्वस्थापनम् ❀

एवं चेच्छादीनां प्रयत्नाद्यारम्भे निमित्तकारणत्वमयुक्तम्,[2] असमवायिकारणलक्षणोपपत्तेः । अवधृतसामर्थ्यत्वाभावान्नेति चेत्, सामर्थ्यानवधारणे तर्हि कारणत्वमेव नास्ति ।

अथाऽन्तःकरणस्य यथा सर्वात्मविशेषगुणोत्पत्तौ सामर्थ्यम्, न तथेच्छादीनां, तेन तेषामसमवायिकारणत्वं नेष्टम्, मनःसंयोगस्यैव समर्थत्वादिति, न; अदृष्टाभावे मनःसंयोगस्य सामर्थ्यानवधारणात् । अदृष्टस्यापि वा असमवायिकारणत्वमस्तु ।

किञ्च गुरुत्वद्रवत्वादीनां कर्मोत्पत्तावसमवायिकारणत्वं नाऽभ्युपगन्तव्यम्, मूर्त्तेरेव समर्थत्वात् । न हि मूर्त्यभावे क्वचित्क्रिया भवति, तस्या उभयोरथ समवायिकारणत्वम् । न चायं नियमोऽस्ति एकस्यैव वा समवायिकारणत्वमित्यास्तां तावदयं विचारः ।

तन्न देहोऽसमवायिकारणम्, निमित्तकारणत्वे तु न स्मरणाद्युपपत्तिः । पितृप्रपितामहाद्यनुभूतार्थेष्वपि स्मरणादिप्रसंगात् ।

## ❀ देहावयवसंस्कारसन्तानशङ्का ❀

स्यादेतत्--नास्माकं बौद्धानामिव निरन्वयो विनाशः, किन्त्ववयवि-

---

१. "असमवायिकारणत्वं च—कार्यकारणभावसम्बन्ध्येकार्थसमवेतकारणत्वम् । तच्च कार्यैकार्थसमवायात् कारणैकार्थसमवायाद्वा । तत्राद्या लघ्वी, द्वितीया महतीति वैशेषिकपरिभाषा" ( वै० सू० उप० १०।२।३ ) ।

२. एतेन "बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावानां निमित्तकारणत्वम्" ( प्र० भा० पृ० २४६ ) इति वैशेषिककृतान्तः कृतान्तो भवति ।

विनाशानन्तरमवस्थितसंयोगैरवयवैरन्यद् द्रव्यान्तरमारभ्यते। तत्र यथा पूर्वदेहाश्रितरूपादिविनाशेऽपि तत्सदृश एव रूपादयस्तदवयवरूपादिभिरारभ्यन्ते, तथा पूर्वदेहसंस्कारनिवृत्तावपि तत्सदृश एव संस्कारस्तदवयवसंस्कारैरारभ्यते, ततः पूर्वदेहानुभूतेष्वपि अर्थेषूत्तरदेहे स्मरणाद्युपपत्तिरिति।

## ❀ तन्निरासः ❀

नैतदस्ति, रूपादीनां हि सर्वत्र कार्यद्रव्ये कारणगुणपूर्वकः प्रादुर्भावस्तेन यावत्परमाणुषु गुणान्तरप्रादुर्भावो न भवति, तावद्योऽवयवी, तैः परमाणुभिः पारम्पर्येणाप्यारभ्यते, तत्र तत्र तत्सदृशा एव रूपादय उत्पद्यन्ते इति युक्तम्। नत्वेवं परमाणुषु संस्काराः सन्ति, अननुभवितृत्वात्। अनुभवितृत्वे तु चेतनबहुत्वादयो दोषा उक्ताः। शरीरस्य चानुभवितृत्वे, तस्यैव संस्कारोऽस्तु, न, तदवयवानां ततोऽन्यत्वात्।

किंच मांसाशिनां शरीरं शशमहिषवराहादिशरीरावयवैरप्यारभ्यते। ततस्तदानुभवसंस्काराणामपि उत्पत्तौ तदनुभूतार्थेष्वपि स्मृत्यादिप्रसंगः स्यात्। अथवा शशमहिषादिदेहावयवानां चर्वणाद्यभिघातादापरमाण्वन्तो विनाशः, तेन संस्कारो नाऽनुवर्त्तते इति। एवं तर्हि बालादिशरीरावयवानामप्यापरमाण्वन्तो विनाशः सर्वत्र संचरद्भिर्वाय्वग्निरसादिभिः क्रियते, ततस्तत्संस्कारानुवृत्तिरप्ययुक्ता। अविनाशे वा बालादिदेहावयवानामंगुल्यादीनां तथाभूतानामेव सर्वदैव ग्रहणं स्यात्, पथ्यौषधादिकृतविशेषोपलब्धिश्च न स्यादिति। तस्माच्छरीरस्यापि प्रतिक्षणविनाशित्वात् नेच्छाद्याश्रयत्वं युक्तम्।

किञ्च पूर्वाभ्यस्तस्मृत्यनुबन्धादित्यादिनाऽनादिरिच्छादीनामाश्रय इति वक्ष्यामः। तन्न देह इन्द्रियाणि वा प्राणादिर्वा विषयो वेच्छादीनामाश्रयः सम्भवति, देहवदिन्द्रियादीनामप्यनादित्वासम्भवादिति।

## ❀ मनसोऽपि नेच्छाद्याश्रयत्वम् ❀

मनसस्तर्हि नित्यत्वादिच्छाद्याश्रयत्वमस्तु, न; तस्यापि करणत्वाद्वास्यास्यादिवत्। असिद्धिमिति चेत्, न; तत्सत्त्वग्राहकप्रमाणैरेव करणत्वसिद्धेः। किञ्चेच्छाद्याधारस्य विभुत्वप्रतिपादनात्, मनसस्तु युगपज्जानानुपपत्त्याऽणुत्वं प्रसाधितम्। मनसः खलु विभुत्वेच्छाधारत्वाभ्युपगमे, संज्ञामात्रे विवाद इति।

## ❀ ज्ञानस्य वासनाश्रयत्वानुपपत्तिः ❀

ज्ञानमेव वासनाभिर्वासितं मन इत्युच्यते, तदाश्रय एवेच्छाद्य इति चेत्, न; अस्थिरत्वेन ज्ञानस्य वासनाद्याश्रयत्वानुपपत्तेः। स्थिरं हि वासकेन

वास्यमानं दृष्टम्। सम्बद्धं च यथा—पुष्पादिना वस्त्रादिकम्। आश्रयत्वमपि स्थिरस्य सम्बद्धस्य च दृष्टम्, यथा—कुड्यादेरिति। नच ज्ञानस्य स्थैर्यमस्ति, ज्ञानान्तरेणेच्छादिना वा विनष्टत्वात्। तस्मान्न ज्ञानं केनचिद्वासितम्, नापि कस्यचिदाश्रय इति।

## ❀ क्षणिकवादे वास्यवासकभावानुपपत्तिः ❀

नन्विदमसिद्धं निदर्शनं न हि क्षणिकवादिनां स्थिरं किञ्चिदस्ति। नापि सम्बन्धः कस्यचित्। वस्त्रादेरपि हि वासना पुष्पादिसहितात् पूर्वक्षणाद्विशिष्टोत्पाद एव। आश्रयभावस्तु कुड्यादेरपि। जनकत्वविशेष एवेति। न, अत्रापि दृष्टान्ताभावात्। नह्यक्षणिकवादिनां किञ्चिदसम्बद्धं भिन्नकालं च वास्यमानं दृष्टं, नापि भिन्नकालस्यासम्बद्धस्य च कस्यचिदाश्रयत्वं दृष्टमिति।

## ❀ बीजाङ्कुरवन्निरन्वयसन्तानशङ्का ❀

बीजादिवदिति चेत्=अथ मन्यसे—यथा शालिबीजादङ्कुरस्तच्छक्तिविशिष्ट उत्पद्यते, ततोऽपि पत्रनालादिकं तच्छक्त्यनुविधानेनोत्पद्यमानं शालिबीजमेव जनयति, न यवादिबीजम्; अतत्पूर्वकत्वात्। तथा पूर्वबुद्धिविशेषादुत्तरोत्तरं बुद्ध्यन्तरं पूर्वबुद्धिशक्त्यनुविधानेन सकलाहितशक्तिकलापमुत्पद्यते। यच्च तदुत्तरबुद्धिषु पूर्वबुद्धिशक्तीनामाधानम्, सा वासनेति।

## ❀ तत्खण्डनम् ❀

न; असिद्धत्वात्—न तावद् बीजादीनां निरन्वयौ विनाशोत्पादौ सिद्धौ, नाप्युत्तरबुद्धिषु पूर्वबुद्धिशक्तीनामाधानं सिद्धम्। बीजादीनां तावत्सूक्ष्मावयवानुवृत्तिरस्ति, शुक्रशोणिताद्यवयवानुवृत्तिवत्। यथा मातुरुदरे शुक्रशोणिताद्यवयविनिवृत्तौ तदवयवैरवस्थितैरेव रसावयवसहितैरवयव्यन्तरमारभ्यते। गर्भान्निष्क्रान्तस्याप्यवयविनिवृत्तावक्यवानुवृत्तिर्द्रष्टव्या। तथा बीजादिनिवृत्तावपि तदवयवैरवस्थितैरेव भूम्यवयवसहितैः पत्रनालादिकमारभ्यते। तत्र शुक्रशोणिताद्यवयवैः स्थिराः संबद्धाश्च रसावयवा बीजाद्यवयवैर्भूम्यवयवाश्च भाव्यन्ते। ते तथा भावितास्तदविपरीतं कार्यमारभन्ते, तथा पूर्वबुद्धिभिः स्थिरः संबद्धश्चात्मा भाव्यते। किमुक्तं भवति? तत्र संस्कारविशेषः क्रियते, स च तथा भावितस्तद्बुद्ध्यनुकारेण स्मृतिं प्रतिसंधानं च स्वात्मसमवेतं करोतीत्येवं च सांख्योक्ता प्रक्रिया, न नैयायिकानां सिद्धा, नापि नैयायिकोक्ता प्रक्रिया सांख्यानां सिद्धा। ततश्च पक्षद्वयेऽपि उभयप्रसिद्धो दृष्टान्तो नास्ति।

ततः कस्यात्र सिद्धिः स्यात्? यत्र पक्षे स्मृतिप्रतिसन्धाने चोपपद्येते, तस्य सिद्धिः। न चानात्मवादिनां स्मृतिः सम्भवति, अन्यदृष्टस्यान्येन स्मरणाऽसम्भवात्। अन्यथैकेन दृष्टोऽर्थः सर्वैः स्मर्येत। यथा चास्माकमन्यानुभूतोऽर्थो नान्येन स्मर्यत इत्यत्रोभयप्रसिद्धोऽस्ति दृष्टान्तः—सन्तानान्तरम्, न तथा भवतः किञ्चिदुभयप्रसिद्धमुदाहरणमस्ति। स एवानुभवः स्मर्ता न दृष्ट इत्यस्ति दृष्टान्त इति चेत्, मा भूदनुभवः स्मर्ता। अनुभविता हि स्मर्तेष्यते, न चानुभव एवानुभविता, तयोः क्रियाकर्तृरूपयोरेकत्वायोगात्। न हि च्छेद एवच्छेत्तेति युक्तम्। यश्चानुभविता स यदि तथैव स्मर्ता न भवति, मा भूत् कालान्तरेण भविष्यतीति कोऽत्र विरोधः? ततोऽन्यस्य च कालान्तरेणापि स्मर्तृत्वे सन्तानान्तराणामपि स्मर्तृत्वप्रसङ्ग इत्युक्तम्।

कार्यकारणभावादप्रसङ्ग इति चेत्=अथ मनुषे—स्यादयं प्रसङ्गो यद्यविशेषेणान्यदृष्टमन्यः स्मरतीत्युच्यते, किन्तु कार्यकारणभावादन्यत्वेपि स्मृतिरिति। भिन्नसन्तानबुद्धीनां तु कार्यकारणभावो नास्ति, तेन सन्तानान्तराणां स्मृतिर्न भवति। न पुनरेकसान्तानिकीनां बुद्धीनां कार्यकारणभावो नास्ति, येन पूर्वबुद्ध्यनुभूतेऽर्थे तदुत्तरबुद्धीनां स्मृतिर्न स्यादिति।

न, नानात्वस्यावञ्चनात्। नानात्वं हि स्मृत्यसम्भवे साधनमुक्तम्, तच्च कार्यकारणाभिधानेऽपि न वञ्चितम्। न हि कार्यकारणभावाभिधानेन तस्याऽसिद्धत्वादीनामन्यतमो दोषः प्रतिपाद्यते, नापि स्वपक्षसिद्धिरनेन क्रियते। न हि कार्यकारणभावात् स्मृतिरिति—अत्रोभयप्रसिद्धोऽस्ति दृष्टान्तः।

कर्पासेरक्तताववदिति चेत्, अथापि स्यात्—

"यस्मिन्नेव हि सन्ताने आहिता कर्मवासना।
फलं तत्रैव बध्नाति कर्पासे रक्तता यथा॥" इति,

न; [1]साधनदूषणासम्भवात्—अन्वयाद्यभावान्न साधनम्। न हि कार्यकारणभावात् स्मृतिः कर्पासे रक्ततावदित्यन्वयः संभवति। नापि यत्र न स्मृतिः, तत्र न कार्यकारणभाव इति व्यतिरेकोऽस्ति। असिद्धत्वाद्यनुद्भावनान्न दूषणम्। न हि पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धीनां स्मृतिर्न सम्भवतीति, ततोऽन्यत्वात् सन्तानान्तरबुद्धिवदित्यस्य हेतोः कर्पासे रक्ततावदित्यनेन कश्चिद्दोषः प्रतिपाद्यते।

---

१. अत्रत्यं ज्ञानश्री प्रोक्तं (ज्ञान० नि० पृ० ७२) दूषणजातम् अपरार्कदेवेन (न्या० मु० परि० ३ पृ० ८७) सम्यक् समाहितम्।

## ❀ स्मृत्यनुभवयोरेकाधाराभावशङ्का ❀

परिशेषासिद्धत्वप्रतिपादनादिति चेत् = स्यादेतत्—न खलु प्रत्यक्षेणानुभवस्मृत्योः क्वचिदेकाधारत्वं दृष्टम्, येन तयोरात्माश्रितत्वं प्रतिपद्येमहि। परिशेषश्चासिद्धः। कार्यकारणभावेन स्मरणेऽप्यविरोधात्। अथान्यत्वे स्मरणं न दृष्टम्, नन्वेकत्वेऽपि न दृष्टमिति समानम्। किञ्चान्यस्मिन् रक्तेऽन्यद्रक्तं न दृश्यत इति। कर्पासबीजे रक्ते तत्सन्तानभाविनोऽपि कर्पासस्य रक्तता मा भूत्, तत्राप्यात्माश्रिता रक्ततेत्यभ्युपगन्तव्यम्, तुल्यन्यायत्वात्।

किञ्च त्वत्पक्षेऽपि "कर्मानवस्थायिग्रहणात्" (न्या० सू० ३।२।४२) इत्यनेन सूत्रेण बुद्धीनामाशुतरविनाशित्वं प्रतिपादितम्। ततश्च येनानुभवेनानुभूतोऽर्थः, स नष्टः। कालान्तरे स्मृतिः कुतः स्यात्? संस्कारादिति चेत्, न; तस्यानुभवादर्थान्तरत्वात्। तदर्थान्तरस्य च तदर्थस्मृतिहेतुत्वे ह्यतिप्रसङ्गः स्यात्। अथार्थान्तरत्वाऽविशेषेऽपि यः संस्कारो येनानुभवेन जनितः, स एव तदर्थस्मृतिं जनयतीति नातिप्रसङ्गः, यद्येवम्; त्वयापि कार्यकारणभाव एव नियामकोऽभ्युपगन्तव्यः, ततः स एव नियामकोऽस्तु, किं तत्रान्तर्गडुनात्मना कल्पितेन?

## ❀ तन्निरासः ❀

अत्रोच्यते—यत्तावदुक्तम्—प्रत्यक्षेणानुभवस्मृत्योः क्वचिदेकाधारत्वं न दृष्टमिति, तन्न; दृष्टत्वात्। तथा हि—पूर्वं यमर्थमनुभूतवानहम्, तमेतर्हि स्मरामीति। योऽहमनुभविता, सोऽहं स्मर्तेत्यनुभवस्मरणयोरभिन्नात्माधारत्वं लिङ्गलिङ्गिसम्बन्धस्मृत्यनपेक्षमाप्तोपदेशानपेक्षं च निश्चिनोति। न चेयं भ्रान्तिः, विसंवादाभावात्। सुखादेरपि प्रत्यक्षत्वमपह्नुवानोऽनेनैव न्यायेन प्रतिबोधयितव्यः। तथानुसन्धानेच्छाद्वेषादीनामप्येककारणत्वं प्रत्यक्षतो गृह्यते-यमहमस्प्राक्षम्, तमेतर्हि पश्यामीति तं दृष्ट्वाऽहमेवेच्छामि वा द्वेष्मि वा। तमिच्छन् द्विषन् वा प्रयते, प्रयतमानोऽहं तमर्थं प्राप्य सुखी दुःखी वा संवृत्तोऽस्मीति। तदेवमहमित्येतस्मिन् विज्ञाने योऽर्थश्चकास्ति, तदधिकरणाः स्मृत्यनुसन्धानेच्छादयः प्रत्यक्षतः प्रतिभान्तीत्यतः प्रत्यक्षेणाप्यात्मा गृह्यते। न ह्यहमिति ज्ञानं सन्दिग्धं भ्रान्तं वा, नापि लैङ्गिकं शाब्दं वा।

## ❀ नापि शरीरालम्बनाऽहम्प्रतीतिः ❀

नापि शरीरालम्बनम्, तदालम्बनत्वे हि बाल्यावस्थायां मूर्खोऽहं सुखी

दुःखी वाऽऽसम्, इदानीं तु विद्वान् निरुजो रोगी वाभूत् इत्यवगमो न स्यात्, बाल्यादिशरीराणां भिन्नत्वात्। न हि योऽहं गौरः, सोऽहं कृष्ण इति।

नन्वस्ति—पीनोऽहं गौरोऽहमित्येवमादिप्रत्ययः, स कथमात्मालम्बनः स्यात्, तस्य पीनत्वादिधर्मासम्भवात्? तत्किमिदानीमास्रवः सन्तीति गृहमादीप्यते। न हि नीलः स्फटिक इत्येवमादि ज्ञानं यथार्थं न सम्भवतीत्येतावता शुक्लः स्फटिक इत्यपि मा भूत्। पीनोऽहमित्याद्यपि ज्ञानं शरीरोपाधिकमात्मालम्बनमेव। तत्र यदि भेदं तिरस्कुर्वदुपजा तदा तद् भ्रान्तमेव नीलः स्फटिक इत्यादिकज्ञानवत्। अथ पीनोऽहं पीनशरीरवानहमित्येवं प्रत्येति, ततः सत्यमेवेति।

## ❀ शरीरादिषु भेदप्रतीतिः ❀

अस्ति च भेदेनापि प्रतिपत्तिः—स्थूलं कृशं वा मम शरीरमिति, गौरं कृष्णं वा मदीयं शरीरमिति। तथा—ममात्रेच्छा द्वेषो वेति, अस्ति मे प्रयत्नः, सुखं ममोत्पन्नं दुःखं वेति, गुरुप्रसादान्मया विशिष्टं ज्ञानं प्राप्तमित्येवमिच्छादयोऽपि भेदेनैव प्रतीयन्ते। तथा—मदीयं चक्षुरित्येवमादि ज्ञानमात्मेन्द्रियभेदग्राहकं द्रष्टव्यम्।

## ❀ मदीय आत्मेत्यात्मभेदनिर्देशस्य सामञ्जस्यम् ❀

ननु मदीय आत्मेत्येषापि प्रतिपत्तिरस्ति, यद्येवं प्रतिपन्न आत्मा, प्रतिपन्ने च विवादो न युक्तः, स्ववचनविरोधात्। अनिष्टापादनार्थत्वादिति चेत्=स्यादेतत्—मम शरीरं ममेन्द्रियं ममेच्छादय इत्यत्र शरीरादिव्यतिरिक्तमालम्बनमहमिति ज्ञानस्याभ्युपगच्छतो ममात्मेत्यत्रात्मव्यतिरिक्तमालम्बनं प्रसज्यत इति? न; अप्रतिभासनात्। न हि ममायमात्मेति शरीरेच्छादिवत् प्रत्यक्षतः प्रतिभाति, नापीन्द्रियवदनुमानेन मत्प्रत्ययविषयादन्य आत्मा प्रतिभाति, किंत्वहमित्यात्मानं प्रत्यक्षयतः प्रतिपद्यात्मान्तरव्यवच्छेदेन परप्रतीत्यर्थमात्मेति निर्दिशति—ममात्माऽहमेवेत्यर्थः। यदा पुनः शरीरमिन्द्रियं वाऽऽत्मशब्देन निर्देष्टुमिच्छति, तदा ममात्मेति भेदाभिधानमेवेदम्, शरीरादेरप्यात्मोपकारकत्वेन भृत्यवदात्मत्वेनोपचारात्।

## ❀ आत्मभेदप्रतीतभ्रान्तत्वेऽपि शरीरभेदप्रतीतेरभ्रान्तत्वम् ❀

किंच मत्प्रत्ययविषयाद्भेदेनात्मज्ञानं यदि बाध्यमानत्वाद्भ्रान्तं भवति, शरीरादिभेदज्ञानं तु कस्माद् भ्रान्तम्? न ह्येकत्र केशादिज्ञानस्य भ्रान्तत्वे सर्वत्र

**एतेन पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धेः कार्यकारणभावात् स्मरणमपास्तम्' अन्यत्वावञ्चनात् ( विशेषात् ) इति ।**

भ्रान्तत्वं युक्तम्, भ्रान्ताभ्रान्तविशेषणाभावप्रसंगात् । तस्माद्यथातीतानागतवर्तमानानां शरीरभेदानां ममेत्येकाधिष्ठातृत्वेन प्रतिसन्धीयमानत्वान्मत्प्रत्ययालम्बनादर्थान्तरत्वम्, तथेच्छाद्वेषप्रयत्नसुखदुःखभेदज्ञानभेदानां त्रैकालिकानां ममेत्येकसम्बन्धित्वेन प्रतिसन्धानात्तदेकस्मादर्थान्तरत्वं तदेककर्तृकत्वं चेति ।

किं चाभिन्नसम्बन्धिन इच्छादिभेदाः, ममेत्येकप्रतिसन्धानविषयत्वाद्, एकनर्तकीप्रतिसन्धानविषय इव प्रेक्षकाः—इत्यनुमानेनाप्येकाधारत्वं स्मृत्यनुभवेच्छादिभेदानां निश्चितम् । तस्माद्यदुक्तम्—"नानुभवस्मृत्योः क्वचिदेकाधारत्वं दृष्टम्" इत्येतदयुक्तम् ।

## ❀ परिशेषासिद्धिनिरासः ❀

यदप्युक्तम्—"परिशेषश्चासिद्धः कार्यकारणभावेन स्मरणेऽप्यविरोधादिति" तदप्ययुक्तम् ; शिष्याचार्यादिबुद्धीनां कारणभावेऽपि स्मृत्यादिदर्शनात् । एकसन्तानत्वे सतीति चेत् ; कार्यकारणभावं मुक्त्वा कोऽन्यः संतानः तदभ्युपगमे वाऽऽत्मैव नामान्तरेणाभ्युपगतः स्यात् ।

## ❀ सन्तानस्य लोकप्रसिद्धोऽर्थः ❀

उपादानकारणकृतः कार्यकारणभाव एव सन्तान इति चेत् , न; सम्बन्धविशेषाभावकारणत्वमात्राऽविशेषादुपादानेतरविभागानुपपत्तेः । यथास्माकं जनकत्वाविशेषेऽपि समवाय्यसमवायिनिमित्तकारणविभागः सम्बन्धविशेषात्, न तथा तव कारणानामुपादानेतरविभागे निमित्तं पश्यामः । सन्तानजनकं यत्तदुपादानकारणमिति चेत्, न; इतरेतराश्रयत्वप्रसंगात्—सन्तानजनकत्वेनोपादानकारणत्वम्, उपादानकारणजन्यत्वेन च तत्सन्तानत्वमिति । लोके तु समानजातीयानां कार्यकारणभावे सन्तानव्यवहारस्तद्यथा—ब्राह्मणसन्तानः शूद्रसन्तान इति । तत्प्रसिद्ध्या चास्माभिरपि शब्दप्रदीपादिषु सन्तानव्यवहारः क्रियते ।

## ❀ तस्य सौगताभ्युपगमे दोषः ❀

तवापि यद्येवमभिप्रेतः सन्तानः, ततः कथं न शिष्याचार्यबुद्धीनामेकसन्तानत्वम् ? न ह्यासां समानजातीयत्वं, कार्यकारणभावो वा नास्ति । ततः शिष्यस्य यथा चिरव्यवहिता अपि बुद्धयः पारम्पर्येण कारणमिति

कार्पासे रक्ततावत्स्यादिति चेत्, न; साधनदूषणसम्भवात्--

तदनुभूतेऽप्यर्थे स्मृतिर्भवति, तथोपाध्यायबुद्धयोऽप्याजन्मप्रभृत्युत्पन्नाः पारम्पर्येण कारणमिति। तदनुभूतेऽप्यर्थे स्मृतिर्भवेत्।

किं च धूमशब्दादीनामुपादानकारणं विनैवोत्पत्तिः स्यात्। न हि तेषामप्यनादिप्रबन्धेन समानजातीयं कारणमस्तीति शक्यते वक्तुम्। तथा च ज्ञानस्यापि गर्भादावनुपादानैवोत्पत्तिः स्यादिति परलोकाभावः।

अथ धूमशब्दानां विजातीयमप्युपादानमिष्यते, एवं तर्हि ज्ञानस्यापि गर्भशरीरमेवास्तु न जन्मान्तरज्ञानं कल्पनीयम्। यथादर्शनं ह्युपादानमिष्टमन्यथा धूमशब्दादीनामप्यनादिसन्तानः कल्पनीयः स्यात्।

## ❀ अविशेषाद्विशेषानुत्पत्तिशङ्का तत्समाधानं च ❀

ननु शरीरस्योपादानत्वे तस्याविशेषादनेकविकल्पज्ञानोत्पत्तिर्न स्यात्, न हि धूमशब्दादीनां तदुपादानादविशिष्टात् विशेषः सम्भवतीति, न; वीणाद्युपादानाविशेषेपि शब्दवैलक्षण्योपलब्धेः। प्रयत्नादिवैलक्षण्यादत्र वैलक्षण्यमिति चेत्, एवं तर्हि प्रतिक्षणं रसधात्वादिपरिणामवैलक्षण्याज्ज्ञानवैलक्षण्यं भविष्यति। न च शरीरान्तवर्तिनोऽवयवाः पित्तवातादयः प्रत्यक्षाः, यतस्तेषां विशेषाविशेषौ प्रत्यक्षौ स्याताम्; तयोः कार्यैकसमधिगम्यत्वात्।

## ❀ मृत्युहेत्वपगमे पुनरुज्जीवनशङ्का तन्निरासश्च ❀

एतेन यदुक्तम्—'यादृशाद् वातादिवैषम्यान्मरणं, तन्निवृत्तौ पुनरुज्जीवनप्रसंग इति', तदप्यपास्तम्; मरणहेतोरप्यन्तर्वर्तित्वेन कार्यैकसमधिगम्यत्वान्न तन्निवृत्तिरप्यप्रत्यक्षा। बाह्यस्यापि हि पदार्थस्य मरणशक्त्यशक्ती न प्रत्यक्षे; मन्त्रादिनापहतशक्तिषु विषद्रव्येषु संक्रामितविषशक्तिषु च दध्यादिष्वप्रतिभासनात्।

एतेन यदुक्तम्—'तथाभूतादेव व्याधिविशेषात् कश्चिन्म्रियते, कश्चिन्नेत्यतो न वातादिवैषम्यमपि मरणस्य हेतुरिति', तदपि निरस्तम्; तथाभूतत्वस्य निश्चेतुमशक्यत्वात्।

न च कर्मनिमित्तं मरणमपि त्वत्पक्षे सम्भवति, कर्मणोऽनवस्थितत्वेन हेतुत्वासम्भवात्। विनष्टस्यापि हेतुत्वे, मोक्षाभावप्रसंगात्। शक्त्युत्पादपरम्परया नियतकालफलहेतुत्वम्[1], कर्पासे रक्ततावदिति चेत्, न; दृष्टान्त-

---

१. हेतुत्वम्। कर्मण इति शेषः।

अन्वयाभावान्न साधनम्, असिद्धत्वाद्यनुद्भावनाच्च न दूषणम्।

न च कार्पासेऽपि निरन्वयविनाशोत्पादे रक्ततोत्पद्यते कार्पासान्तरवत्।

---

स्याप्यसिद्धत्वात्। न हि कर्पासेपि निरन्वयविनाशोत्पादे रक्तता सम्भवति। किं तर्हि? बीजाद्यवयवान्वये सतीति। अपि चैवं भूतचैतन्यवादिनोऽपि शक्नुवन्ति वक्तुम्—मातापित्रोरन्वये केनचित्कृतं कर्म शुक्रशोणितादिशक्त्युत्पादपरम्परया कियति पुरुषे कदाचित् फलति कर्म, विपाककालस्त्वनियतः त्वयापीष्टः। अकृताभ्यागमादिदोषोऽप्युभयोः सम इति।

## ❀ कार्यकारणभावादपि न स्मृतिनियमः ❀

यदि च कार्यकारणभावात्स्मृत्यादिनियमः, तदा बीजाङ्कुरपत्रनालादिवदवस्थानियमेनैव कालनियमेन च भवेत्, तथाहि—बीजाद् भूम्युदकादिसम्बन्धान्नियतेनैव कालेनाङ्कुर एव भवति, न पर्णनालादीनामन्यतमम्। अङ्कुरात्पत्रमेव भवति, न नालाद्यन्यतमं बीजं वा। पत्रान्नालमेव भवति। यथाऽदृष्टकालनियमेन तत्त्वनन्तरमेव द्वित्रादिमासव्यवधानेन वा। न चैवं स्मृत्यनुभवादीनामवस्थानियमः, कालनियमो वास्ति, तस्मान्न कार्यकारणभावात् स्मृत्यादिनियम इति।

किं च सर्वकर्मवासनानामेकज्ञाने तादात्म्येनावस्थानादेकविपाककाले सर्वविपाकप्रसंगः, तादात्म्यविरोधो वा बीजवदिति चेत्, स्यादेतत्—यथाङ्कुरनालाद्यनेकवासनात्मकस्यापि बीजस्य न युगपत् सर्वजनकत्वम्, तथा ज्ञानमप्यनेकसंस्कारात्मकं न यौगपद्येन स्मृतिसुखादीनि च जनयतीति, न; अनभ्युपगमात्। न मया बीजस्य नालादिजनिका अपि शक्तयः इष्यन्ते, किन्तु विशिष्टं बीजं विशिष्टाङ्कुरोत्पत्तावेव शक्तम्, विशिष्टोऽङ्कुरस्तु विशिष्टपर्णोत्पत्तावेवेति। युगपद्विचित्रशक्तियुक्तं ज्ञानं न च युगपद्विचित्रं कार्यं जनयतीत्यतियुक्तिमत्।

## ❀ ज्ञानशक्तिक्रमादपि न स्मृतिक्रमः ❀

अथ क्रमेणोत्पद्यमानानां ज्ञानानां क्रमेणैव शक्तियोगः, ततः क्रमेण स्मृत्याद्युत्पत्तिरपि। क्रमेणापि शक्तिर्भवन्ती किमनन्तरक्षणादेव भवति? उत व्यवहितक्षणादपीति? यद्यनन्तरक्षणादेव भवति, ततः परलोकवादस्य दत्तो जलाञ्जलिः स्यात्—अर्द्धमुहूर्तान्तरितानुभवादेरपि स्मृत्यादिजननिमित्तवासनाधायकत्वं नास्ति, कुतो जन्मान्तरकृतस्य कर्मादेः? त्वन्मते हि न सुख-

दुःखमरणादिजननशक्तिव्यतिरेकेण पुण्यापुण्यसंस्कारादिशब्दानामन्योऽर्थोऽस्ति। शक्तिश्चानन्तरक्षणादेवेष्टा।

अथ व्यवहितादपि क्षणात् शक्तिर्भवतीति, न; कालव्यवहितस्याकारणत्वात्। पारम्पर्येण तु सर्वेषामप्यनुभवकर्मणां कारणत्वादेकस्यापि सर्वशक्त्युत्पादप्रसंगः, तत्कार्ययौगपद्यप्रसंग इति। तदेव दूषणम्।

## ❀ व्यवहितस्यापि कारणत्वाशङ्का ❀

ननु च कालव्यवहितमपि साक्षात्कारणं दृष्टम्, यदाह—

"गाढसुप्तस्य विज्ञानं प्रबोधे पूर्ववेदनात्।
जायते व्यवधानेऽपि कालेनेति विनिश्चितम्॥" (प्र० वा० अ० ४३६)

न हि पूर्वाभ्यासमन्तरेण स्मृत्यादिपाटवं सम्भवति। तेन स्मृतिरागद्वेषादिपाटवोपलम्भात् तदभ्यासस्य व्यवहितस्यापि कारणत्वम्।

व्यवहितस्याविद्यमानत्वात् कथं कारणत्वमिति चेत्, अविद्यमानत्वमनन्तरस्यापि तुल्यं स्वकाले तु व्यवहितस्यापि विद्यमानत्वम्। कार्योत्पादकाले यदस्ति, तदेव कारणमिति चेत्, कोऽयमुत्पत्तिकालः? किं कार्यकाल एव? अथ ततः प्रागिति? कार्यकालत्वे द्वयोरेककालत्वात्, कार्यकारणविवेकानुपपत्तिः। अथकार्यात्प्राक्, तदा कार्याभावे कथं तदुत्पादः? न ह्यसति धर्मिणि धर्मः। किं च तदुत्पादस्यापि तत्कारणत्वप्रसंगात्, तत्प्राक्कालभावित्वाविशेषात्।

एतेनोत्पद्यमानतापि प्रत्युक्ता, पर्यायत्वाच्चोत्पादोत्पत्त्युत्पद्यमानतादिशब्दानाम्; तस्मान्न कार्यकाले कारणम्, न कारणकाले कार्यमतो न परस्परतः सम्बन्धोऽपि। पारतन्त्र्यं हि सम्बन्धः, सिद्धस्य च किं पारतन्त्र्यम्? असिद्धस्यापि स्वयमसतः किं पारतंत्र्यमिति? तस्मात्तद्भावभावित्वमात्रे कार्यकारणभावव्यवहारः। तद्भावभावित्वं वाऽन्वयव्यतिरेकित्वमेव। न च कालव्यवधानेऽप्यस्तीति चिरनिवृत्तमपि कारणमिति।

## ❀ तन्निरासः ❀

तदेतदयुक्तम्, निवृत्तस्यासत्त्वादसतश्च जनकत्वे शशविषाणादेरपि जनकत्वं स्यादसत्त्वाविशेषात्।

अथ विनष्टं प्रागासीत्तेन तज्जनकम्, यदा तदस्ति तदा न जनयति यदा नास्ति तदा जनयतीति साध्वी व्यवस्थितिः। तदिदमायातम्—जीवन्नशक्तोऽहं मृतस्ते पुत्रं जनयिष्यामीति।

किं च निवृत्तस्यापि कारणत्वे, कार्योत्पादानुपरमप्रसंगः। कारणव्यावृत्तौ हि कार्योत्पत्त्युपरमः—इति प्रमाणसिद्धमेतदग्निधूमाद्यनेकोदाहरणात्, यदा तु व्यावृत्तादपि कार्योत्पत्तिः, तदा सातत्येन तत्कार्योत्पादप्रसंगः, तद्धेतोस्तज्जननशक्तिव्याघाताभावात्, नहि व्यावृत्तस्य पुनर्व्यावृत्तिरस्ति। न च तदवस्थे हेतौ कार्यानुत्पादः, [1]तदाप्यनुत्पादप्रसंगात्। तत्सहकारिव्यावृतौ तत्कार्योत्पत्त्युपरम इति चेत्, न; सहकारिणोऽपि व्यावृत्तस्यैव हेतुत्वात्तुल्यन्यायत्वात् व्यावृत्तस्य च पुनर्व्यावृत्तिर्नास्तीत्युक्तम्। यदि च सहकारिव्यावृत्तावेव कार्यव्यावृत्तिः, तदा व्यावृत्तौ च कार्योत्पत्तिः, ततस्तस्यैव हेतुत्वम्, न नष्टस्य; तत्र हेतुधर्मानुवृत्तेः। नित्यहेतुवादिवन्ममापि परिहार इति चेत्, न; अव्यतिरिक्तशक्त्यभ्युपगमविरोधान्नित्यस्य सहकारिप्रतिक्षेपे चासम्बद्धत्वप्रसंगादिति।

## ❀ अनागतस्यापि कारणत्वनिरासः ❀

[2]एतेनानागतस्यापि कारणत्वं प्रतिक्षिप्तम्। किं चानागतस्य कारणत्वे, कारणनिष्पत्त्यर्थं कार्यमुपादत्ते—इति स्यादेतच्च विरुद्धम्। ननु कारणत्वमपि तस्यास्त्येव, न हि प्राग्भाविनः कारणत्वं निषिध्यते, किं तर्हि ? भाव्यव्यभिचारापेक्षया तस्य कार्यत्वमप्यस्तीति भण्यते।

यच्च कारणत्वे सत्युपादानं, तत्कार्यत्वे भविष्यति; को ह्युपादाने विशेषः ? अव्यभिचारमात्रेणोपादानमियता किन्न पर्याप्तमिति ? तदेतदप्ययुक्तम्; परस्परं कार्यकारणभावः प्रागेव निरस्तः। कारणानुमानं च समर्थितं, ततः परलोकानुमानं भविष्यति। न तदुपरोधेन समस्तमर्यादामतिक्रम्य कारणेपि कार्यत्वमभ्युपगन्तव्यम्।

## ❀ भूतस्यैव कारणत्वम् ❀

सर्वलोकशास्त्रेषु हि यन्निष्पत्त्यर्थं यदुपादीयते, तत्तस्य कारणम्—इति प्रसिद्धम्, न चैतद्रूपं भाविनोऽस्ति, तस्माद् [3]भूतमेव कारणं भावीति।

## ❀ भूतमात्रस्य कारणत्वप्रसञ्जनम् ❀

नन्वेवं तर्हि सर्वस्य भूतस्य कारणत्वप्रसङ्गः। अव्यभिचारविषयत्वे [4]तदेष कारणत्वम्। अथाव्यभिचारविषयत्वे पूर्वभावः ? तदपि यत्किञ्चित्, तथा हि—

१. तदापि=कारणकालेऽपि।

२. एतेन=अतीतस्य कारणत्वनिरासेनेत्यर्थः।

३. भूतमेव=निष्पन्नमेव।

४. तदेव=अव्यभिचारविषयत्वमेव।

"तद्भावभावितामात्राद्यदि कारणकार्यता ।
को विरोध, स्तदा पूर्वपरभावः किमर्थकः ।" ( प्र० वा० अ० २।४४० )

## ❀ तन्निरासः ❀

तदयुक्तम्; अकृतकत्वनित्यत्वादीनामपि कार्यकारणत्वप्रसंगात्। अर्थान्तरत्वाभावान्नेति चेत्, तदयुक्तम्;

यतस्तद्भावभावितामात्राद्यदि कारणकार्यता ।
तदाऽनर्थान्तरत्वेपि तद्भावे का विरोधिता ॥

न हि यदृच्छातः संज्ञाकरणे कश्चिद्विरोधोऽस्ति, येनार्थान्तर एव व्यापके कारणासंज्ञा क्रियते, नाऽनर्थान्तरे। जनकत्वं च न यथा स्वात्मनः सम्भवति, तथाऽतीतानागतयोरपि जनकत्वं न सम्भवतीत्युक्तम्।

यच्चोक्तम्--न कार्यकाले कारणं, न कारणकाले कार्यमित्यतो न तयोः सम्बन्धोऽपीति, तन्न; क्षणिकत्वानभ्युपगमात्।

यदप्युक्तम्—पारतन्त्र्यं हि सम्बन्धस्तच्च सिद्धस्यासिद्धस्य वा नोपपद्यते इति। तदप्ययुक्तम्; हेत्वनायत्तत्वे हि कार्यस्य निर्हेतुकत्वान्नित्यं सत्त्वमसत्त्वं वा स्यादन्यानपेक्षत्वात्; हेत्वपेक्षित्वे वा कथं न पारतंत्र्यम्?

## ❀ सिद्धासिद्धयोरुभयोः पारतन्त्र्यम् ❀

तस्मात्सिद्धस्यासिद्धस्य वाऽवस्थाद्वयेऽपि पारतंत्र्यम्। तथाहि--यद्यसिद्धं परतंत्रं न स्यात्, ततोऽसिद्धमेव सदा तिष्ठेत्, स्वयं वा सिद्ध्यान्नियतदेशकालादियोगं नापेक्षेत, तस्मात्स्वभावतोऽसिद्धमेव हेतुभिर्बलात्साध्यत इति परतंत्रम्। अत एवासत्कार्यमुच्यते। खपुष्पाद्यपि हेतुभिः किं न साध्यत, इति चेत्, एतदुत्तरत्र विचारयिष्यामः।

सिद्धस्यापि पारतन्त्र्यम्, समवायिकारणेष्ववस्थानात्। दृष्टं च लोकेपि—सिद्धस्य भृत्यपुत्रादेः पारतंत्र्यम्। स्वातन्त्र्यं चेत्सिद्धं कदाचिदपि न विनश्येत्, तस्मादस्ति सम्बन्धो यदि नाम क्षणिकवादिना सम्भवति।

## ❀ अक्षणिकवादे एव कार्यकारणभावाञ्जस्यम् ❀

नन्वक्षणिकवादिनामपि सामग्र्यवस्थं जनकम्, तच्च कार्यकाले नास्ति तत्कथं जन्यजनकसम्बन्ध इति? न; नियमानभ्युपगमात्। नायं नियमः—समानकालयोरेव सम्बन्ध इति, किन्तु यथादर्शनमभ्युपगम्यते। जन्यजनक-

सम्बन्धस्त्वेवमेव दृश्यते यत् कारणसामग्र्यनन्तरं कार्यमिति। क्षणिकवादिनां त्वस्यैव ग्रहणं न सम्भवतीति वक्ष्यामः। तेन तन्मते सम्बन्धासम्भव उच्यते।

न चानन्तरभाविवत्कालव्यवधानेऽपि जन्यजनकभावः कश्चिदञ्जसा प्रतीयते। तन्न; नष्टानुत्पन्नयोरञ्जसा कारणत्वम्। यदा खलु सामग्र्यवस्थं कारणं भवति, तदैवाञ्जसा कार्यकारणसम्बन्धस्तेन विद्यमानस्यैव जनकत्वमसत्कार्यत्वं च प्रमाणसिद्धं न विरुध्यते। कार्यसत्त्वकाले तु जनकत्वकल्पने किं स्याद्? अविद्यमानेन विद्यमानं जन्यत इति स्यात्—एतच्च लोकशास्त्रयोर्विरुद्धम्। तस्मान्न नष्टस्यानुभवादेः स्मरणादिजनकत्वम्। न च पूर्वाभ्यासमन्तरेण स्मृत्यादेरुत्पत्तिः सम्भवति, तस्मात् पूर्वाभ्यासादुत्पन्नः संस्कारः कश्चिदविनश्यन्नेवावस्थितः सहकारिविशेषप्राप्तौ स्मृत्यनुसन्धानरागद्वेषादिकं जनयति। तन्निवृत्तौ चान्यनिमित्तसद्भावेऽपि स्मृत्यादिकं नोत्पद्येत इति युक्तम्।

## * अनात्मवादिनां संस्कारानुपपत्तिः *

अनात्मवादिनां तु पूर्वाभ्यासस्य सह संस्कारेण निवृत्तत्वात् कुतः स्मृत्यादिकं स्यात्? सन्तानेनावस्थितौ च ज्ञानसन्तानोच्छेदाद् यदि तस्योच्छेदः, तादात्म्यविरोधो वा। निरंशस्यांशेनोच्छेदाभावात्।

एतेन कर्मजस्यापि संस्कारस्यानात्मवादिनां जन्मान्तरफलहेतुत्वं प्रत्युक्तम्। तस्यापि ज्ञानादव्यतिरेके ज्ञानाकारवन्नोपभोगादपि निवृत्तिर्नाऽपि कुतश्चिद्धेतोः। संस्कारविविक्तस्य ज्ञानस्योत्पत्तौ संस्कारनिवृत्तिव्यवहारः संस्कारस्य ज्ञानोत्पादनत्वात्तदुत्तरं च ज्ञानं यद्युपादानाकारं ततः संस्काराकारमेव भवेन्नो चेत् तदा ज्ञानाकारमपि न भवेन्निरंशस्यांशेनाकारार्पणाऽसम्भवात्।

## * घृतद्रवादिवन्न ज्ञानस्य संस्काराकारितशङ्का *

घृतादिवदिति चेत्, अथ मन्यसे—यथाग्निसम्बन्धाद् घृतजतुसुवर्णादिकं द्रुतं भवति, शैत्यसम्बन्धात् पुनः कठिनमिति न सुवर्णाद्याकारवत्सर्वदा द्रुताद्याकारानुवृत्तिः, तथा ज्ञानाकारानुवृत्तावपि न सर्वदा संकारानुवृत्तिरिति।

## * तन्निरासः *

न; अनभ्युपगमात्—न मया काठिन्यद्रवत्वादैस्तादात्म्यमिष्यते येन दृष्टान्तसिद्धिः स्यात्। धर्मधर्मिणोर्ह्यर्थान्तरभावः प्रसाधितः, तेन धर्मनिवृत्तावपि धर्मिणोऽनुवृत्तिर्युक्ता, तादात्म्ये त्वनुवृत्त्यननुवृत्ती दुर्घटे एवेति।

## ❀ ज्ञानभिन्नस्य संस्कारस्याश्रितत्वानाश्रितत्वानुपपत्तिः ❀

अथ ज्ञानादर्थान्तरं संस्कारः, स किमाश्रितः ? अनाश्रितो वा ? यद्यनाश्रितः, तदान्यत्रापि स्वकार्यारम्भकः स्यात्, वृक्षफलादिवत्—यथा वृक्षात् पतितानि फलादीनि पृथगेव सन्तानान्तराणि कुर्वन्ति, तथा संस्कारा अपि ज्ञानसन्तानं परित्यज्य स्वं स्वं सन्तानं कुर्युः, सन्तानान्तरोद्भूतैर्वा सह कार्यजनकाः, स्फुरन् दुहितर इवान्यपुत्रैः सहेति।

अथाश्रितः संस्कारः, तदाश्रयाश्रयिसम्बन्धो वाच्यः—संयोगः, समवायो वा न त्वयेष्यते। तादात्म्यसम्बन्धे त्वाश्रयाश्रयिभावानुपपत्तिः, न हि स्वात्मापेक्षयाश्रयाश्रयिभावः क्वचिद् दृष्टः। प्रतिषिद्धश्च पूर्वं तादात्म्यसम्बन्धः। कार्यकारणभाव एवाश्रयाश्रयिभाव इति चेत्, न; कार्यकारणभावेपि वृक्ष-फलादिवत् पृथग् गमनप्रसंगात्।

## ❀ कार्यकारणभावादात्मनो मतार्थत्वाशंकानिरासः ❀

यत्पुनरेतन्नैयायिकैरपि कार्यकारणभाव एव नियामक इष्टस्ततः स एवास्तु किमात्मनेति, तन्न; अस्माकं जात्याश्रयविशेषनियमेन कार्यकारण-भावस्य नियामकत्वात्।

## ❀ जातिनियमः ❀

तत्र जातिविशेषनियमाद्यथा—शालित्वबीजत्वविशिष्टादङ्कुरत्वशालित्व-विशिष्टमेव कार्यं भवति, ततः शालित्वपत्रत्वविशिष्टमेव भवति, ततः शालि-त्वनालत्वविशिष्टमित्येवमुत्तरोत्तरं द्रष्टव्यम्। बीजाऽवयवानुवृत्तेराश्रयनियमोऽ-प्यस्ति। तथा पूर्वाभ्यासविशेषात् संस्कारविशेषः, ततः स्मृतिविशेषः, ततोऽनु-सन्धानादिविशेष इति।

## ❀ आश्रयनियमात्कार्यकारणभावः ❀

तथाश्रयनियमोऽपि—यत्रैवाभ्यासः तत्रैव संस्कारः, यत्रैव संस्कारः तत्रैव स्मृत्यनुसन्धानादय इत्येवं नियम उपपद्यते।

## ❀ रक्तताज्ञानसंस्कारयोराश्रयनैचित्र्यम् ❀

यच्चोक्तम्—रक्तताप्यात्माश्रिताभ्युपगन्तव्येति, तन्न; अन्यथापि रक्तो-पपत्तेः। तथा च बीजावयववासनाक्रमेण रक्ततोपपत्तिः प्रागुक्तेति। यथा तर्हि बीजावयवैर्वासितैः तत्सहकारित्वेन सम्बद्धेषु भूम्यवयवेषु तत्संस्कारः क्रियते,

तथानुभवजनितसंस्काराश्रयोऽन्यत्राऽपि तत्संस्कारं करिष्यति, न; तत्संस्काराश्रयबाहुल्याग्रहणात्—नहि यथा रक्ततासंस्कारो बह्वाश्रयः, तत्फलानां युगपदुपलम्भेन गृह्यते, तथानुभवसंस्कारोपीति। तथाभावे हि कर्पासवदेकसन्तानादपरिमितसन्तानोत्पादोऽपि स्यात्। यथा चैकस्मात् प्रदीपसन्तानाद् बहवोऽपि प्रदीपसन्ताना भवन्ति। सर्वेषामत्यन्तोच्छेदोपि कदाचिद् भवति। तद्वदत्रापि स्यात्। तस्मादेकाश्रयनियतत्वेनैवेच्छादीनामेकसन्ताननियमः क्रमोत्पादनियमश्चेति।

## ❀ सदसदानाधारत्वाशङ्का ❀

नन्वाश्रयोऽसतः? सतो वा स्यात्? असतस्तावदाश्रयो नास्ति, न हि खरविषाणस्य कश्चिदाश्रयः। केवलमसत्कारणादुत्पत्तिमीहते, ततोऽसतः कारणमेव सम्भवति, नाश्रयता सतोऽपि नाश्रयः, अकिंचित्करत्वात्—नहि सतः किंचिदाश्रयेण क्रियते। स्थितिः क्रियत इति चेत्, न; व्यतिरेकाऽव्यतिरेकासम्भवात्—अव्यतिरेके, स एव कृतः स्यात्। न च स्वरूपमेव स्थितिः, सत्यपि स्वरूपे गतिदर्शनात्। नापि व्यतिरिक्ता, स्थितेरपि व्यतिरिक्ता स्थितिरित्यनवस्था स्यात्। स्थितिहेतुश्च कथं भविष्यत्याश्रयः,? नहि घटस्य हेतुः पटस्याधारो युक्तः। तस्मान्न कश्चित्कस्यचिदाधार इति।

## ❀ तत्समाधानम् ❀

तदेतदप्यसत्, यत्तावदसतो नास्त्याश्रयः—इत्यत्राविवादः। सतोऽपि नास्ति—एतन्न क्षम्यते, दृष्टत्वात्—दृष्टो हि सत आश्रयः समवायी संयोगी च। तत्र रूपादीनां घटादिः समवायी, जलादीनां तु संयोगीति। न च दृष्टं विकल्पशतेनाप्यपाकर्तुं शक्यते।

## ❀ कल्पनामात्रादाधाराधेयभावानुपपत्तिः ❀

कल्पनयैवाधाराधेयभावप्रतीतिरिति चेत्, न; दृष्टादृष्टकल्पनानुपपत्तेः। यदि स्थाणवादौ पुरुषादिककल्पनावदन्यत्र दृष्टस्यान्यत्र कल्पना, तदा नाधाराधेयभावस्याऽत्यन्तासत्वम्। अथ [1]प्रधानादिशब्दवासनातः कल्पनेति, तदप्यसत्, निरर्थिका हि कल्पना कथमर्थविशेषेष्वेव भवेत्? विशिष्टार्थदर्शनात् प्रतिबुद्धा वासना कल्पनां जनयतीति चेत्, कोऽसावर्थस्य विशेषः? स एव ह्याधाराधेयभावो यदभावादन्यत्रार्थदर्शनेऽप्याधाराधेयत्वप्रतीतिर्न भवति,

---

१. प्रधानेति सांख्यसम्मता प्रकृतिरभिप्रेताऽत्र।

तथोत्पत्तिहेतुरेवाधार इति चेत्, स्यादेतत्—प्रतिक्षणविनाशिनामपरापरदेशोत्पादवतामुपादानदेशोत्पत्तिराधारसमागमकृता तेन भूम्यादिर्जलादीनां विशिष्टावस्थां कुर्वन्नाधार इत्युच्यते। तस्माद्विशिष्टहेतुरेवाधार इति। न; क्षणिकत्वासिद्धेः। स्यादेतदेव, यदि क्षणिकत्वं स्यात्, तच्चासिद्धमिति वक्ष्यामः।

## ❋ अक्षणिकवादे एवाधाराधेयव्यवस्था ❋

अक्षणिकत्वे तु सिद्धे धर्मधर्मिभेदे च सति भूजलादीनामवश्यमाधाराधेयाभावोऽभ्युपगन्तव्यः, तत्प्रतीतेर्नीलस्फटिकादिप्रतीतिवदप्रामाण्याभावात्।

यत्पुनरेतत्—न हि सतः किंचिदाश्रयेण क्रियत इति, तदयुक्तम्; न हि हेतुरेवाश्रयोऽभ्युपगम्यते, येनाकिञ्चित्करत्वे चाश्रयो न स्यात्। किं तर्हि ? आश्रयधर्मयोगात्, आश्रयपरत्वापरत्वादिधर्मयोगात् परापरादिवत्।

## ❋ यस्य येन स्थितिः स आधारः ❋

इहेदम्—इति प्रतिपत्तिश्चाऽविसंवादिनी नाधाराधेयभावमन्तरेण युक्ता। यस्य वा येन स्थितिः क्रियते, स तस्याधारः। क्रमेणानेककार्यकर्तृत्वं स्थितिः, सा चावयविगुणकर्मादीनामाश्रयसामर्थ्याद्भवतीत्युक्तम्।

ननु गतिनिवृत्तिः स्थितिः प्रसिद्धा, सत्यम्, अस्माभिरप्येवं व्याख्याता तदाधाराभावे ह्यनित्यानां विनाश एव गतिरित्यादिना।

यद्याधारः स्थितिः, तदा शब्दबुद्ध्यादीनां नित्याधारत्वादस्थितिः कदाचिन्न स्यादिति चेत्, न; तन्नाशहेत्वभावसहितस्याधारस्य स्थितिहेतुत्वात्। नाशहेतुसम्बन्धात्तु सत्यप्याधारे न स्थितिरिति।

## ❋ स्थित्यनवस्थापरिहारः ❋

यच्चोक्तम्—यदि व्यतिरिक्ता स्थितिः, ततः स्थितेरप्यन्या स्थितिरित्यनवस्था स्यादिति, तदप्यसत्; प्रकाशसत्तादिवत्तत्स्वभावस्य तत्स्वभावान्तरानपेक्षित्वात्। न हि यथा घटादयः प्रदीपेन प्रकाश्यन्ते, तथा प्रदीपोऽपि प्रदीपान्तरेण। यथा वा द्रव्यादिषु सत्तातः सदिति प्रत्ययः; तथा सत्तायामपि सत्तान्तरादिति।

यत्पुनरेतत् स्थितिहेतुस्तदन्यस्य स्थातुः कथमाधार इति, न; स्थितेस्तद्धर्मत्वात्। स्थातुर्धर्मो हि स्थितिः तेन तद्धेतुः स्थातुराधारः, पटस्य तु घटो न धर्म इति।

ऐतेनैव क्षणिकत्वमपि निरस्तम् ।

## ❀ सर्वस्याधारत्वानभ्युपगमः ❀

शब्दादिहेतुस्तर्हि आकाशादेराधारः प्राप्तः, शब्दादेराकाशधर्मत्वात्, न; अनभ्युपगमात्—न ब्रूमो धर्ममात्रस्य हेतुधर्मिण आधारः, किं तु यस्य स्थितिं प्रति योऽसाधारणो हेतुः स तस्याधार इति । आत्माकाशादेस्तर्हि स्थितिं प्रति कोऽसाधारणो हेतुः ? न कश्चिदत एव तेषां निराधारत्वम्—न ह्यात्माकाशादेः संयोगी समवायी वा कश्चिदाधारः सम्भवति । सहकारिमात्रे वाधारव्यवहारो नास्ति यथा त्वत्पक्षे न हेतुमात्रमुपादानमाधारो वा, किं तु विशिष्ट एव हेतुर्यथा—दध्नः क्षीरमेवोपादानम्, कुण्डमेवाधार इति । तद्वदस्माकं हेतुविशेषः सहकारिविशेषो वाधारः, स च संयोगी समवायी वा । यथाभूते ह्याधारव्यवहारो दृष्टः, तथाभूत एव हेतुः सम्बन्धी वाधारः प्रतिपत्तव्यः, न त्वदृष्टेश्वरादेरपीति ।

## ❀ उत्पत्तेः प्राक् स्थित्यभावाशङ्का तन्निरासश्च ❀

ननु यद्याधारेण भावस्य स्थितिः पश्चात्क्रियते, तदा स्थित्युत्पत्तेः प्रागस्थितो भावः स्यात्, व्यतिरिक्तोत्पन्ना च कथं भावस्य ? तादात्म्यतदुत्पत्तिः सम्बन्धाभावादिति । अत्रोच्यते—यस्य पश्चादचलनलक्षणा, क्रमेणाऽनेकसहकारिलाभलक्षणा वा स्थितिर्भवति, स तदपेक्षया भवत्वस्थितः, को दोषः ? सद्भावलक्षणा तु स्थितिः पश्चात्क्रियत इत्येतन्नेष्यते, तदुत्पादकहेतुभिरेव तत्सद्भावकरणात् । तादात्म्यतदुत्पत्तिसम्बन्धाभावेऽपि कथम् ? भावस्य स्थितिरित्येतदप्ययुक्तम्, सम्बन्धद्वयनियमस्याप्रमाणकत्वात्, तादात्म्यसम्बन्धस्य च निषिद्धत्वात् । ततः सामान्यादेरिव स्थितेरप्यस्ति सम्बन्धः कश्चिदिति ।

स्थितिहेतुराधार इत्येतस्मिन्नपि पक्षे न दोषः कश्चिदिति ।

## ❀ इच्छाद्याधारता न शरीरादेः ❀

प्रसाधितं च रूपादीनां द्रव्याश्रितत्वम्, तद्वदिच्छादीनामप्याश्रयः कश्चिदस्ति, यः स्वयमनुभूय स्मरति, स्मृत्वा चानुसन्धत्ते, अनुसन्धाय चेच्छति, द्वेष्टि वा, ततः प्रयतमानः सुखं दुखं वाऽनुभवति । यश्च परलोकार्थं प्रवर्तते स्वकृतकर्मविपाकं च योऽनुभवति, स कथमस्थिरः शरीरादिलक्षणो वा स्यादिति ?

एतेनैव क्षणिकत्वं निरस्तम्—न हि सर्वस्य क्षणिकत्वे स्वयमनुभूतस्यैव स्मृतिरित्याद्युपपादयितुं शक्यते ।

**प्रत्यभिज्ञाख्येन च प्रत्यक्षेण स्फटिकादिष्वक्षणिकत्वं गृह्यते। प्रदीपादिष्विव भ्रान्तिमिति चेन्न, एकत्राबाध्यत्वेन भ्रान्तत्वे सर्वत्र भ्रान्तत्वकल्पनायामतिप्रसङ्गात्, अनभ्युपगमाच्च, सादृश्यस्य क्षणिकत्वे भ्रान्तिबीजाभावः।**

---

## ❀ प्रत्यभिज्ञयाऽक्षणिकत्वसिद्धिः ❀

प्रत्यभिज्ञाख्येन च प्रत्यक्षेण स्फटिकादिष्वक्षणिकत्वं गृह्यते। यस्मादक्षव्यापारानन्तरमेव 'स एवायं स्फटिकः'—इति पूर्वापरकालावच्छिन्नार्थग्राहि विज्ञानमुत्पद्यते, तथानेककालावच्छिन्नप्रमातृस्वरूपग्राहि प्रत्यभिज्ञानं भवति। तद्यथा—यस्यांकुरमहमद्राक्षं, तस्याहमेवेदानीं फलं पश्यामीति।

प्रदीपादिष्विव भ्रान्तमिति चेत्, न; अत्र बाधकाभावात्। न चैकत्र बाध्यत्वेन भ्रान्तत्वे सिद्धे, प्रत्यभिज्ञासाधर्म्यमात्रात् सर्वत्र भ्रान्तत्वकल्पना युक्ता, अतिप्रसंगात्। तथाहि—जलकेशादिज्ञानस्यैकत्र भ्रान्तत्वदर्शनात् सर्वत्र भ्रान्तत्वं स्यात्। तस्माद्यदेव प्रत्यभिज्ञानं बाध्यते, तदेव भ्रान्तं युक्तं, केशादिज्ञानवन्न सर्वमिति।

## ❀ सौगतानां क्षणिकवादः ❀

ननु च सर्वं प्रत्यभिज्ञानं भ्रान्तमेवाक्षणिकाकारावभासित्वात्। न चाक्षणिकोऽर्थः कश्चिदस्ति, तदाह—

"यदेवार्थक्रियाकारि तदत्र परमार्थसत्।
असन्तोऽक्षणिकास्तेषां क्रमाक्रमविरोधतः॥" (प्र० वा० ३।३)

तथा हि—न तावदनेकोऽर्थः क्रमेण कार्याणि करोति एकस्वभावत्वात्। स ह्येकस्वभावो यावतां कार्याणामुत्पादने समर्थस्तावन्ति सकृदेव कुर्यात्, समर्थस्य क्षेपायोगात्। क्षेपे वा प्रथमकार्योत्पादकोपि न स्यात्। प्रथमकार्योत्पादनकाले तस्यागामिऽकार्योत्पत्तावसामर्थ्यमिति चेत्, एवं तर्हि न ततः कदाचिदागामिकार्योत्पत्तिः, तदशक्तस्वरूपापरित्यागात्। परित्यागे वा न पूर्वोत्तरक्रियाहेतोरेकत्वं तद्भेदे च प्राप्तं क्षणिकत्वम्। नापि युगपदेव करोति, तथा निर्वर्तनस्वभावस्यापरिभ्रंशात्। सततमेवार्थक्रियायौगपद्यं कुर्यात्तत्स्वभावनिवृत्तौ चोक्तं क्षणिकत्वमिति। नापि सहकारिक्रममपेक्ष्य क्रमेणैकः कार्यं करोति, अनुपकारिण्यपेक्षायोगात्तदुक्तम्—

"अपेक्ष्येत परः कार्यं यदि विद्येत किंच न।
यदि किञ्चित्करं वास्तु किं केनचिदपेक्ष्यते॥" (प्र० वा० ३।५७६)

## ❋ व्यतिरिक्ताव्यतिरिक्तोपकारासम्भवः ❋

अनुपकारित्वं च व्यतिरिक्ताऽव्यतिरिक्तोपकारासम्भवात्—यदि हेतोरव्यतिरिक्तः सहकारिभिरुपकारः क्रियते, तदा स एव क्रियते इत्यापद्यते, तथा च व्यर्थाः सहकारिणस्तद्रूपस्य प्रागेव सिद्धत्वात्। व्यतिरिक्तश्चेदुपकारः, स तस्येति कः सम्बन्धः ? तादात्म्यपक्षे न व्यतिरेकः। तदुत्पत्तिपक्षेऽपि यदि सहकारिनिरपेक्षात्तत उत्पत्तिः, तदा कथं न व्यर्थाः सहकारिणः ? तदपेक्षित्वे वा पुनस्ततः उपकार एष्टव्यस्ततः पूर्ववद्व्यतिरिक्ताव्यतिरिक्तपक्षयोः प्रसंगस्ततोऽनवस्था स्यात्। तस्मान्न सहकारिष्वपेक्षणं युक्तम्।

## ❋ शक्ताशक्तविकल्पासम्भवः ❋

शक्ताशक्तविकल्पासम्भवाच्च—यदि शक्तो हेतुस्ततः स्वयं शक्तत्वादेव कार्यं करोति, न सहकारिभिः किंचित्। अशक्तश्च सहकारिसद्भावेऽपि न करोति, पाषाण इव तैलं सहकारिषु सत्सु शक्तो भवतीति चेत्, एवं तर्हि अशक्तस्वभावनिवृत्तौ सहकारितः शक्तं रूपमुत्पन्नमित्यापन्नम्, तथा चानित्यत्वमिति। तदेवं क्रमेणोत्पद्यमान एव हेतुः क्रमेण कार्यकारी बीजादिवन्न त्वेकोऽक्रमः क्रमकारी कश्चिदस्तीति।

## ❋ क्षणिकत्वेऽनुमानप्रयोगः ❋

प्रयोगोऽप्यत्र—यदक्षणिकं तत्सन्न भवति, यथा शशविषाणादि, सच्च सर्वं तस्मात् क्षणिकमिति। सत्त्वस्याक्षणिकात् व्यतिरेकसिद्ध्यर्थं क्रमयौगपद्याभ्यामर्थक्रियायोगादिति बाधकमुक्तम्। शक्तिः खलु भावलक्षणं, सर्वशक्तिविरहस्त्वभावलक्षणम्। तच्च शक्तिलक्षणं सत्त्वं क्रमाक्रमकार्योत्पादेन व्याप्तं तेन तथोत्पादोऽक्षणिकान्निर्वर्तमानः स्वव्याप्यं सत्त्वं गृहीत्वा निवर्तते, तस्मान्न सतोऽक्षणिकत्वमिति।

## ❋ क्षणिकवादनिरासः ❋

अत्र प्रतिविधीयते—[1]'यदि तावदक्षणिकानामसत्त्वं प्रसाधयितुमभिप्रेतम्, तदा कस्यात्र धर्मित्वम् ? तस्यैव धर्मित्वे, तस्यैवासत्त्वासाधनमयुक्तम्। न ह्यसति धर्मिणि हेतोः पक्षधर्मत्वम्, न चाऽसति पक्षधर्मत्वे गमकत्वम्; तस्मादसन्तोऽक्षणिका इत्युक्ता प्रतिज्ञा। अथ सन्तोऽर्था अक्षणिका न भवन्तीति प्रतिज्ञार्थः, तथापि तस्यां 'क्रमाक्रमविरोधाद्'—इत्यस्य कथं पक्ष-

---

१. ज्ञानश्रीनिबन्धावल्यां ( पृ० ८६ ) अस्यालोचना कृता।

धर्मत्वम् ? अथ सत्त्वमेव हेतुः क्षणिकत्वं साधयदक्षणिकत्वाभावं साधयतीति, तथापि नाऽन्वयो न व्यतिरेक इत्यसाधारणः कथं हेतुः, प्रतिपक्षेऽपि समानत्वात् ? प्रदीपादावस्त्यन्वय इति चेत्, न; असिद्धत्वात्--न हि प्रदीपादेरपि क्षणिकत्वं सिद्धम्; जातस्य नाशहेतुप्रतीक्षणादिति वक्ष्यामः। व्यतिरेकबलेनैवास्य गमकत्वमिति चेत्, न; वैधर्म्यदृष्टान्तस्याप्यभावात्। शशविषाणादिरेव दृष्टान्त इति चेत्, न; तस्य प्रतिपत्त्यविषयत्वात्—न हि स्वरूपेणापि यन्न प्रदीयते, तत्साध्यसाधनधर्मरहितं प्रतिपत्तुं शक्यते, न चाऽप्रतिपन्नस्य दृष्टान्तत्वं युक्तम्। शब्दात् तत्प्रतिपत्तिरस्त्येवेति चेत्, सा किं प्रमाणम् ? अप्रमाणं वा ? प्रमाणं चेत्, न; तादात्म्यतदुत्पत्तिप्रतिबन्धाभावात्। प्रतिबन्धे हि वस्तुत्वप्रसंगस्ततोऽक्षणिकमपि वस्त्वस्तीति। प्रतिबन्धाभावेऽपि प्रमाणत्वाभ्युपगमे "नान्तरीयकताभावात्" (प्र० वा० १।२१४) इत्यादिविरोधः ?

अथाप्रमाणम्, ततः कथमदृष्टो दृष्टान्तः सिध्यति ? अप्रमाणप्रतीतेः प्रतिदृष्टान्तेऽपि सम्भवान्न व्यतिरेकदृष्टान्तस्यापि सिद्धिः।

## ❀ क्रमाक्रमविरोधात् क्षणिकत्वाशङ्का ❀

स्यादेतत्--पक्ष एव बाधकसामर्थ्यादन्वयव्यतिरेकसिद्धिस्तथा हि—क्षणिकस्यार्थक्रियायां क्रमाक्रमविरोधत इत्युक्तम्। तेनार्थक्रियालक्षणं सत्त्वमक्षणिकाद् व्यावृत्तं क्षणिकेऽर्थक्रियाविरोधाभावादन्वितमिति।

## ❀ तन्निरासः ❀

तदयुक्तम्; [1]विरोध्यप्रतीतौ विरोधस्य प्रत्येतुमशक्यत्वात्—न हि दहनतुहिनयोरन्यतराप्रतीतौ विरोधप्रतीतिरस्ति। क्रमाक्रमविरोधि चाक्षणिकं यदि प्रतीयते, ततः कथमसत्, प्रतिपत्तिरूपार्थक्रियाकारित्वात् ? अतत्कारित्वे च कथं प्रतीयते ? न हि त्वयाऽर्थान्तरमजनकं प्रतीतिविषयत्वेनेष्टम्। अथाक्षणिकं नैव प्रतीयते, ततः कथं तस्य क्रमाक्रमाभ्यां विरोधोऽवगम्यते ? न हि तयोः स्वरूपेणैव विरोधः, स्वरूपेण विरोधे हि सर्वस्य प्रलयप्रसंगात्।

## ❀ सांवृतिकाक्षणिकेनापि विरोधाभावः ❀

संवृतिसिद्धेनाक्षणिकेन विरोधसिद्धिरिति चेत्, संवृतिसिद्धमपि वास्तवम् ? काल्पनिकं वा स्यात् ? यदि वास्तवं, ततः कथं तस्यासत्त्वम् ? कथं वाऽर्थ-

---

१. अस्यालोचना ज्ञानश्रीनिबन्धे ( पृ० १०९ ) कृता।

क्रियाविरोधः ? अर्थक्रियां कुर्वद्धि वास्तवमुच्यते। अथ काल्पनिकम्, तद्विरोधः किं वास्तवः ? काल्पनिको वा ? न तावद्वास्तवः, कल्पितविरोधिविरोधत्वात्, वन्ध्यापुत्रविरोधवत्। अथ विरोधोऽपि काल्पनिक एव, न तर्हि परमार्थतोऽक्षणिकस्यार्थक्रियायां क्रमाक्रमाभ्यां विरोध इत्यतोऽक्षणिकात् सत्त्वस्य व्यतिरेकसिद्धिरप्यपारमार्थिकीत्यवास्तवव्यतिरेकत्वात् सत्तायाः, तदायत्तं क्षणिकत्वमप्यवास्तवमेवेति। तथा चैतदशक्यमिवर्च्छिद्रपिधानायासबहुलं क्षणभंगवादव्यसनमेकप्रहारेण निहतम्।

## ❀ अक्रमात् क्रमिणामभावसाधनं तन्निरासश्च ❀

स्यादेतत्—बीजादिकारणक्रमादंकुरादिकार्यक्रमस्योपलम्भादेव न क्रमात् क्रमिणां भाव इति व्यतिरेकोऽपि सिध्यतीति चेत्, कथमुपलम्भः ? किं क्रमवत एव कारणादयं कार्यक्रमः ? कि वाऽनवधारणेनैवोपलम्भ इति ? यदि क्रमवत एवायं कार्यक्रम इत्युपलम्भः, सोऽक्षणिकाभावनिश्चये कथम् ? न ह्यन्याभावानिश्चयेऽत्रेदमेवेत्युपलम्भः प्रमाणं भवति। अभावश्चानुपलब्ध्याऽपि दृश्यस्यैव निश्चीयते। दृश्यत्वे चाक्षणिकस्य क्वचिदस्ति दर्शनहेतुत्वम्।

अथ क्रनवतः कारणात्कार्यक्रम इत्यनवधारणेनैवोपलम्भः, तदा नाक्रमात् क्रमिणो भाव इति कथं निश्चयः ? न हि पित्रादितः पुत्रादिजन्मदर्शनादेव कर्मादितो न तज्जन्मेति निश्चयः सम्भवति।

## ❀ अर्थाद् व्यतिरेकसिद्धिशङ्का तन्निरासश्च ❀

स्यादेतत्—यथा दहनाद्धूम इत्युपलम्भादेव नाऽदहनाद्धूम इति निश्चयो भवति, तथा क्रमवतः क्रमिणां भाव इत्युपलम्भादेव नाऽक्रमात् क्रमिणां भाव इति निश्चयो भवति। विषमोऽयमुपन्यासः। तत्र हि सत्स्वप्यन्येषु दहनाभावाद्धूमो नोपलभ्यतेऽग्निसद्भावात्तूपलभ्यत इत्यन्वयव्यतिरेकसिद्धौ कार्यकारणनियमः सिध्यतु, न पुनरत्र सत्स्वपि क्रमेषु क्रमवतोऽभावान्न क्रमिणां भाव इत्युपलम्भोऽस्ति, येन व्यतिरेकसिद्धिः स्यात्।

## ❀ अक्रमस्य नासत्त्वम् ❀

उपलम्भे चोपलम्भलक्षणार्थक्रियाकारित्वादक्रमस्य नासत्त्वं यथादर्शनं च कार्यकारणस्वभावाभ्यनुज्ञातं युक्तम्, न सर्वाविशेषप्रसंगः साधीयस्तथा हि-धूमकारणत्वाऽविशेषेऽपि न काष्ठादीनामप्यग्निस्वभावता, दहनजन्यत्वाऽविशेषे-

ऽपि न भस्मविस्फोटादीनामपि धूमस्वभावता, तस्मादंकुरादिजनकत्वाविशेषेऽपि बीजादीन्येव क्रमवन्ति, न ईश्वरशालित्वादीनि। तथा क्रमभावित्वाविशेषेऽप्यङ्कुरादीन्येवैकस्माद् बीजान्नोत्पद्यन्ते, ज्ञानादीनि तु कानिचिदुत्पद्यन्ते। तथा बीजं क्रमेणापि किंचित्करोति, कारणत्वात्, चक्रादिवत्। एवमङ्कुरादेरप्येकैकात्मनः क्रमकर्तृत्वं साधनीयं चक्रादिवदिति। यथैकस्माच्चक्राद घटादीनि क्रमेणैव भवन्ति, कुठाराद् वृक्षच्छेदादीनि, एवमन्यदपि मणिप्रभृतिभिन्नस्वभावं क्रमेण कार्याणि कुर्वंदुपलब्धमिति। साध्यसमत्वादनुदाहरणमिति चेत्, प्रत्यक्षसिद्धस्य साध्यसमत्वायोगात्। एवं हि न किंचिदुदाहरणं सिध्येत्। सर्वत्र साध्यसमत्वदूषणस्याप्रतीघातात्।

## ❀ वर्तमानत्वात् क्षणिकत्वमेव प्रत्यक्षग्राह्यमित्याशंका ❀

ननु च वर्तमानमात्रग्राहकं प्रत्यक्षं न तत्पूर्वोत्तरकालव्यापित्वं परिच्छिनत्त्यप्रतिभासनात्। न हि प्रत्यक्षज्ञाने पूर्वोत्तरकालावस्थितरूपेण वस्तु प्रतिभाति, अपूर्वदर्शिनोऽपि प्रतिभासप्रसंगात्। तस्मान्नाक्षणिकत्वं प्रत्यक्षग्राह्यं किंतु क्षणिकत्वमेव प्रत्यक्षेणापि गृह्यते क्षणांतरासंसृष्टं हि वस्तु क्षणिकमुच्यते। तच्च तथा प्रतिभात्येवेति।

## ❀ तन्निरासः ❀

तदप्ययुक्तम्, क्षणमात्रप्रतिभासित्वे हि कार्यकारणभावप्रतिपत्तिरपि न स्यात्, कुत एव क्रमवत्कारणात्। क्रमवत्कार्योत्पादसिद्धिः? तथा हि—कार्यकारणभावप्रतीतिरर्थयोः स्यात्? अर्थज्ञानयोर्वा? किं वा ज्ञानयोरेवेति?

## ❀ सौगतनयेऽर्थयोः कार्यकारणभावप्रतीतिनिरासः ❀

न तावदर्थयोः, करणकाले कार्यस्य, कार्यकाले कारणस्य चाप्रतिभासनात्। न चैकस्यैव ग्रहणे कार्यत्वं कारणत्वं वा सिध्यति तयोरितरेतरसम्बन्धग्रहणात् [1]तत्त्वव्यवस्थितेः।

स्वरूपमेव कार्यत्वं कारणत्वमिति चेत्, तथाप्येकस्वरूपग्रहणे अस्येदं कार्यं कारणं वा इति प्रतिपत्तिः कुतः? परस्परसम्बन्धित्वेनाऽप्रतिपत्तौ च कार्येण कारणानुमानं, कारणेन कार्यानुमानं च न स्यात्तथा चेष्टानिष्टप्राप्तिपरिहारार्थिनां तत्साधनेषु प्रवृत्तिनिवृत्ती न प्राप्नुत इत्यपुरुषार्थं शास्त्रमपि स्यात्।

---

१. तत्त्वव्यवस्थितेः = कार्यकारणभावव्यवस्थितेः।

## ❀ अन्वयव्यतिरेकतोऽपि नार्थयोः कार्यकारणत्वग्रहः ❀

तद्भावे भावात्तदभावे चाभावात् कार्यकारणभावव्यवस्थेति चेत्, न; एकक्षणमात्रवेदिना तद्भावे भावस्याधिगन्तुमशक्यत्वात्। क्रमेण द्वयोरपि वेदनमिति चेत्, कस्य क्रमेण वेदनम्? न हि क्षणद्वयानुगामित्वमेकस्य कस्यचिदस्ति, यस्य क्रमेण वेदनं स्यात्। द्वयोस्तु क्रमोत्पन्नयोरपीतरेतरस्वरूपासंवेदनान्न सम्बन्धग्रहणम्। विकल्पात् सम्बन्धाप्रतीतिरिति चेत्, विकल्पः खलु कतरत् प्रमाणम्? न हि प्रत्यक्षानुमानं व्यतिरिक्तं प्रमाणं तवास्ति। न चायं विकल्पोऽनुमानम्, त्रिरूपलिंगपूर्वकत्वाभावात्। नापि प्रत्यक्षम्, कल्पनापोढत्वाभावात्। प्रत्यक्षगृहीतानुसन्धातृत्वमप्यस्य नास्ति, प्रत्यक्षेण ग्रहणासम्भवात्।

अपि च तद्भावभावित्वमात्रेण कार्यकारणत्वे गर्दभादिभावेपि धूमादेर्भावदर्शनात् तस्यापि तत्कारणत्वप्रसंगः। तदभावेऽपि तद्भावादप्रसंग इति चेत्, नैतदस्ति; यो हि धूमादिक्षणः तद्भावे भवति, स कथं तदभावेऽपि भवति, उत्पन्नस्य पुनरुत्पादायोगात्? अन्य एव हि क्षणा गर्दभाद्यभावेऽपि सम्भवन्ति तान् प्रति गर्दभादेस्त्वकारणत्वम्।

## ❀ सन्तानेऽप्यन्वयव्यतिरेकासम्भवः ❀

अथ सन्तानस्यान्वयव्यतिरेकाभ्यां कार्यकारणभाव इष्यते, न; सन्तानस्य क्षणव्यतिरेकेणासम्भवात्। भावे वा तस्यैव कार्यकारणभावः। क्षणानां च सामर्थ्यानवधारणादसत्त्वप्रसंगोऽर्थक्रियालक्षणत्वाद् वस्तुन इति।

सन्तानश्चाक्षणिक इत्यक्षणिकस्यैव सामर्थ्यमिष्टं स्यात्। सन्तानोऽपि क्षणिक एवेति चेत्, न; तस्याप्यन्वयव्यतिरेकासिद्धेः सामर्थ्यासिद्धिः। न हि क्षणमात्रस्थायिनामन्वयः सम्भवति, तदभावाद् व्यतिरेकस्याप्यसिद्धिः, अनन्वयो न व्यतिरेक इति हि त्वयैवाभ्युपगतम्।

तत्रापि सन्तानापेक्षयाऽन्वयव्यतिरेकग्रहणमिति चेत्, नन्वेवं सत्यनवस्था स्यात्, तत्सन्तानस्यापि क्षणिकत्वेन सन्तानान्तरापेक्षित्वात्।

अथ सामान्येनाग्निभावे धूमभावः, तदभावान्न धूमभाव इत्यन्वयव्यतिरेकग्रहणमिति, न; अत्रापि प्रमाणाभावात्। न तावत्प्रत्यक्षेणान्वयो गृह्यते, प्रत्यक्षं हि द्वयोः क्रमेण स्वरूपमात्रग्राहकम्, न जन्यजनकसम्बन्धवेदकम् न ह्यग्निसंवित्त्यैवेतत्सम्बन्धप्रतीतिः, अदृष्टान्वयव्यतिरेकस्याप्यग्निदर्शनादेव धूमजनक-

त्वविनिश्चयप्रसंगात्। नापि धूमवित्त्यैव तत्सम्बन्धप्रतीतिः, अदृष्टान्वयव्यतिरेकस्यापि धूमदर्शनादेवाग्निजन्यविनिश्चयप्रसंगात्।

नन्वग्निभावदर्शनादनन्तरमेव धूमभावो दृश्यते, तेनाग्निः कारणं, धूमः कार्यमिति, न; अत्रापि समानत्वात्। तदानन्तर्यमपि नाग्निसंवित्त्या नापि धूमसंवित्त्या गृह्यते। न ह्येकार्थसंवेदनमपरेणादृष्टं स्वरूपेणानन्तर्यमपि ग्रहीतुं शक्नोति।

## ❀ कार्यकारणभावग्राहकशब्दप्रकारनिरासः ❀

अपि च कारणभावात् कार्यभावः कथं गृह्यते? किमत एव भवति? आहोस्विदतो भवत्येव? किंवाऽतोपि भवतीति? नात्र पक्षान्तरं पश्यामः। तत्र यद्यत एव भवति, सामर्थ्यादन्यतो भवतीति गम्यते। तत्रापि विकल्पद्वयम्—इदानीम्? अन्यदा वेति? यदीदानीमत एवेति मतिः, अन्यदा न हि भवत्यन्यत इति स्यात्। अन्यदाप्यत एवेति। नात्र प्रत्यक्षस्य व्यापारः इदानीमपि देशान्तरेण भवत्यन्यत इति कुतः प्रतीतिः? न चैवं कार्यकारणभावे नियमाभावात्।

नाप्यतो भवत्येवेत्यवधारणम्, देशान्तरे कालान्तरे कदाचिन्न भवत्येवेत्यतो नान्वयव्यतिरेकगतिरध्यक्षात्।

अथातोऽपि भवतीति पक्षः, तत्रापि सामर्थ्यादन्यतोपि भवतीति स्वयमेव व्यभिचारावगमान्न कार्यकारणभावः, अन्वयव्यतिरेकासिद्धेः।

## ❀ अनुपलम्भतो व्यतिरेकप्रतीत्यसम्भवः ❀

अथैतदभावे न भवतीति अनुपलम्भतः प्रतीयते, कोऽयमनुपलम्भः? प्रत्यक्षम्? अनुमानं वा? न तावत्प्रत्यक्षम्, तस्य क्षणान्तरासंसृष्टवस्तुविषयत्वात्। तेन च यथा नान्वयव्यतिरेकग्रहणं तथोक्तम्। नाप्यनुमानमेवाऽनुपलम्भः, कस्मात्? अनुमानस्यान्वयव्यतिरेकग्रहणपूर्वकत्वात्। तद्यदि तेनैवान्वयव्यतिरेकग्रहणम्, तदेतरेतराश्रयदोषः स्यात्। अथानुपलम्भान्तरेण, तत्राप्यन्वयव्यतिरेकग्रहणमन्येनानुपलम्भान्तरेणेत्यनवस्था स्यात्।

## ❀ प्रत्यक्षानुपलम्भान्न कार्यकारणभावग्रहः ❀

एतेन प्रत्यक्षानुपलम्भसाधनः कार्यकारणभाव इत्यपि प्रत्युक्तम्, तथा हि—प्रत्यक्षानुपलम्भशब्देन यद्यन्वयव्यतिरेकावेवोच्येते, तदा तयोरगृहीतयोः साधकत्वं नास्ति, ग्रहणं च प्रत्यक्षेणानुमानेन वा यथा न सम्भवति, तथोक्तम्।

अथ विधिप्रतिषेधग्राहि प्रत्यक्षमेव तथोच्यते, तदप्ययुक्तम्। न प्रत्यक्षेण तद्भावे भावो गृह्यते, नापि तदभावेऽभाव इत्युक्तम्। अव्यभिचारेण कार्यकारणभावः प्रतिपत्तव्योऽन्यथा कार्यात्कारणानुमानं न स्यात्। प्रत्यक्षं तु क्षणान्तरेऽपि न व्यापृतम्, कुतो देशकालानन्तभेदेषु ?

नापि प्रत्यक्षपृष्ठभाविनौ विधिप्रतिषेधविकल्पौ प्रत्यक्षानुपलम्भशब्दवाच्यौ, तयोरप्रमाणत्वात्। न ह्यनुमानादन्योपि विकल्पः प्रमाणं त्वयेष्यते। नापि प्रमाणपृष्ठभावित्वेन प्रमाणोपचारः, तद्धेतोः प्रत्यक्षस्य कार्यकारणभावग्राहकत्वेन प्रतिषिद्धत्वात्। नापि प्रत्यक्षमनुपलम्भाख्यो हेतुश्च प्रत्यक्षानुपलम्भशब्दवाच्यौ, प्रत्यक्षानुमानयोरेकत्र व्यापारासम्भवात्। अन्वयव्यतिरेकग्रहणमन्तरेणानुपलम्भाख्यस्याप्यनुमानस्यावतारो नास्ति, तेनैव चान्वयव्यतिरेकग्रहणे त्वितरेतराश्रयादिदोष उक्त इति। तस्मान्नार्थयोः कार्यकारणभावावगमः सम्भवति।

## ❀ अर्थज्ञानयोः कार्यकारणभावनिरासः ❀

नाप्यर्थज्ञानयोः कार्यकारणभावो गृह्यते, समानत्वात्। न ह्यत्र विशेषः कश्चिदस्ति। येनार्थयोरेव कार्यकारणभावः प्रतिपत्तुं न शक्यते, ज्ञानार्थयोस्तु शक्यत इति। किं च योऽयं प्रतिभात्यर्थः, स ज्ञानस्यैवाकारः—इत्यभिमतम्, न च स्वात्मभूतेनार्थकारेण जन्यजनकभावः सम्भवति। स्वात्मनि क्रियाविरोधात्। ततोऽन्यश्चार्थः कदाचिन्न गृह्यते, ज्ञानसंश्लिष्टासंश्लिष्टार्थाकारद्वयाप्रतिभासनात्। प्रत्यक्षेण सम्बन्धाग्रहणादनुमानस्याप्यप्रवृत्तिः। न चार्थाकारदर्शनेनार्थस्य कारणत्वव्यवस्थापनम्, भ्रान्तिज्ञानेऽप्यर्थाकारदर्शनात्।

## ❀ संवाद्याकारस्यार्थादुत्पत्तिरितिनिरासः ❀

संवादिन एवाकारस्यार्थादुत्पत्तिरिति चेत्, कुतोऽयमविनाभावः सिद्धः ? किं च संवादोऽप्यर्थक्रिया ? अर्थप्राप्तिर्वा ? तदुभयं ज्ञानाव्यतिरिक्तम् ? अव्यतिरिक्तं वा ? व्यतिरिक्तं चेत्, साधनेऽपरोऽनर्थः स्यात्। अथाव्यतिरिक्तम्, तत्रापि द्वयी गतिः—तदेव ज्ञानम् ? अपरं वा ? यदि तदेव ज्ञानं पुनरुत्पद्यमानसंवादः, तदाभ्रान्तिज्ञानेऽपि स्यात्, भ्रान्तिज्ञानमपि पुनः पुनरुत्पद्यत एव। न ह्येक एव भ्रान्तिज्ञानम्।

## ❀ सौगतनये संवादनिराकरणम् ❀

अथापरं स्पर्शादिविज्ञानम्, तदप्यसत्; न ह्यर्थान्तरविज्ञानेऽर्थान्तरविज्ञानस्य संवादः अतिप्रसंगात्। केन वा विशेषेण चक्षुरादिविज्ञानस्य

स्पर्शादिविज्ञानात् संवाद उच्यते ? न हि नैयायिकवत् त्वया दर्शनस्पर्शनाभ्यामेकार्थस्य ग्रहणमिष्टम्, नापि पूर्वोत्तरकालविज्ञानानामेकविषयत्वम्। तत्कथं ज्ञानान्तरोत्पत्तौ पूर्वज्ञानस्य संवादः।

## ❀ परितोषशंका तन्निरासश्च ❀

परितोषादिति चेत्=स्यादेतत्—जलाद्यर्थस्य चक्षुर्विज्ञाने जातेऽप्यनाश्वासः तावद् यावन्न स्पर्शादिज्ञानं भवति। स्पर्शादिज्ञाने च परितोषो भवति, ततोऽनाश्वासनिवृत्तेः प्रामाण्यव्यवहार इति, नैतदस्ति; परितोषस्य पूर्वज्ञानार्थप्रतिबन्धासिद्धेः—न हि प्रत्यक्षेण स्पर्शादिज्ञानादुत्पन्नः परितोषश्चक्षुर्विज्ञानसत्यत्वप्रतिबद्धः क्वचिदुपलब्धः, नाप्यनुमानेन, तत्प्रतिबन्धासिद्धावनुमानप्रवृत्तेरयोगात्। न चाप्रतिबद्धादेव परितोषात् प्रामाण्यसिद्धिः, अतिप्रसंगात्। किं च स्वप्नादिष्वपि परितोषसम्भवात्। अपि च—

"संवेदनं प्रमाणं चेत् परितोषः किमर्थकः"। यदि संवेदनं प्रमाणम्, तत एवार्थसिद्धिः, किमपरं परितोषः करिष्यति ? संवेदनान्न सिद्धं यत्परितोषशतैरपि कथं तत्साध्यं संवेदनादपरस्य हि परितोषस्य क उपयोगः ? अर्थसाधनमिति चेत्, कथमन्येनान्यस्य सिद्धिः ? सम्बन्धाच्चेत्, सम्बन्धः केन सिद्धः ? परितोषत एवेति चेत्, तत्रापि सम्बन्धसिद्धिरपेक्षणीयेत्यनवस्था। संवेदनाच्चेत्, तत एवार्थसिद्धिरिति व्यर्थः परितोषः। संवेदनादर्थसिद्धिपक्षेऽप्युक्त एव दोषः।

एतेनार्थाविमुक्तिरपि प्रत्युक्ता—तस्याः अपि संवेदनादर्थान्तरत्वे परितोषवन्नार्थसाधकत्वम्। तदनर्थान्तरत्वेऽपि स्वाकारमात्रवेदनात् भ्रान्तिज्ञानवन्नार्थसाधकत्वमित्युक्तम्। एतेन स्मृत्यभिलाषद्वेषादयः प्रत्युक्ता इति। तस्मान्न ज्ञानार्थयोरपि कार्यकारणभावः सिध्यति।

## ❀ ज्ञानयोः कार्यकारणभावनिरासः ❀

नापि ज्ञानयोः स्वात्मसंविन्मात्रत्वात्—न हि त्वन्मते ज्ञानं ज्ञानान्तरं वेत्ति। न च कारणकाले कार्यसंवित्तिः, अनुत्पन्नत्वादेव, नापि कार्यकाले कारणसंवित्तिः विनष्टत्वादेव। न चैकरूपसंवित्तावेव कार्यकारणभावप्रतिपत्तिरित्युक्तम्। परितोषाविमुक्तिस्मृत्यादीनां तु पूर्वोक्तेनैव न्यायेनात्रापि प्रतिक्षेपो द्रष्टव्यः, ततश्चान्वयव्यतिरेकाधिगमोऽप्यसम्भवी तेनानुमानादपि ज्ञानयोः कार्यकारणभावोऽशक्यनिश्चयः। तदेवं वर्तमानैकक्षणमात्रग्रहणवादिनां न कथंचित्कार्यकारणभावः प्रतीयते, तदप्रतीतौ चार्थक्रियालक्षणं सत्त्वमसिद्धत्वान्न साधनम्।

तथा [1]क्रमाक्रमाभ्यां कार्योत्पत्तिर्व्याप्तेत्येतदप्यसिद्धम् ।

## * संवृत्या कार्यकारणभावोपपत्तिशंका *

ननु यद्यपि परमार्थतः कार्यकारणभावप्रतिपत्तिर्नास्ति संवृत्त्या त्वस्त्येव तावतैवानुमानं प्रवर्तते । परमार्थतो हि शून्यतैवाऽवशिष्यते । न तत्र व्यवहारहेतुः प्रमाणवृत्तिस्तस्मात्संवृत्त्यैव कार्यकारणभावप्रतिपत्तिः ।

का पुनरियं संवृत्तिः ? प्रमाणान्तरेण प्रतीत्यभिमानमात्रं संवृत्तिरनादिव्यवहारवासनातोऽर्थाधिमुक्तिरेव संवृत्तिरित्यर्थः । अविचारप्रतीत्यर्थो हि संवृत्त्यर्थः । यथा क्वचिद्देवदत्तादावदृष्टेऽपि दृष्टाभिमानः, स परामर्शान्निवर्तते तथा चासौ न परमार्थः तथा सकलोऽपि लोकव्यवहार एवमेवेति संवृतिमात्रं सकलं जगत्, तथा हि--अन्वयव्यतिरेकाभ्यां कार्यकारणतागतिः प्रमाणं च न तत्रास्ति प्रत्यक्षमनुमानमपि वा ।

## * तर्कतः कार्यकारणभावग्रहाशङ्का *

अथ तर्कप्रमाणगम्यः कार्यकारणभावः । अदृष्टसम्बन्धात् परीक्षार्थप्रतिपत्तिरितितर्कलक्षणम् । तथा हि—तद्भावेऽभाव उपलभ्यते न कार्यकारणभावोऽग्निधूमयोर्नियमलक्षणम् । सम्बन्धोऽपि न तद्भावभावेन सह कार्यकारणभावस्योपलभ्यते । प्रतियन्ति च लौकिकाः—यस्मादत इदं भवति, तस्मादस्येदं कार्यमित्यत इयं प्रतीतिस्तर्कतः अर्थापत्तितो वा--यद्येतत्कार्यं न स्यादतोऽस्य भवनमेव न घटत इत्यदृष्टार्थपरिकल्पनार्थापत्तिः ।

## * तन्निरासः *

तदयुक्तम् , यदि हि कार्यकारणभावः प्रतीतिविषयो भवेत्, ततः तस्य प्रतीतिस्तर्कतोऽन्यतो वा स्यात् । न चायं ततो भावादपरेण रूपेण निरूप्यते प्रयत्नवतापि । न च नियमेन ततो भाव इति कुतश्चित्प्रतीतिः । तावत्कालस्यैव तद्भावस्य ग्रहणान्न वाऽसौ कार्यकारणभावः ।

अथ तर्कादर्थापत्तेर्वा नियमः प्रतीयते, यत इदानीमेतदनन्तरमुपलभ्यते । ततोऽन्यदाप्यत एवैतदित्यन्यथैतदेव न भवेत् । तदयुक्तम् , यदि नामेदानीमत उपलभ्यतेऽन्यदापीति कुतः प्रतीतिः ? एवमेवेति चेत्, घटोपि पटानन्तरमुपलभ्यते, तत्राप्येवं भवेत् । दृश्यतेऽत्र व्यभिचार इति चेत्, अनेनैव तर्हि तत्राप्यनाश्वासः । अनाश्वासप्रतीतिर्नास्त्येवेति चेत्, अदीर्घदर्शिनां भूयोदर्शनादेतत् । लोकव्यवहार एवमेवेति चेत्, यद्येवं कथं न संवृत्त्या कार्यता-

१. अस्यालोचना ज्ञानश्रिया विहिता ( ज्ञा० नि० पृ० ५ )

दिगतिः ? अनिरूपिततत्त्वा हि प्रतीतिः संवृतिर्मता। तथाचैवमेव व्यवहारो न कुतः ? न लोकव्यवहारे परमार्थ उपयुज्यते, अधिमुक्तिविभागमात्रेण सिद्धेः, स्वप्ननियतव्यवहारवत्। परमार्थविचारेण हि लोकव्यवहारप्रलोपप्रसंगः, तस्मात् क्षणिकपक्षेऽपि संवृतिसिद्धः कार्यकारणभाव इति।

## ❋ संवृत्या कार्यकारणभावोपपादनशंकानिरासः ❋

तदेतदप्ययुक्तम्--यदि हि संवृत्यैव कार्यकारणभावस्ततः सर्वेषां संवृत्तिसत्त्वं स्यान्न किंचित्परमार्थसत् सिध्येत्। परमार्थतः कस्याप्यर्थक्रियासामर्थ्यासिद्धेः। सत्यमेवेतदिष्टमिति चेत्, सामान्याऽवयविसंयोगादेः किं न तथा सत्त्वमिष्टम् ? तस्य संवृत्याप्यसामर्थ्यमिति चेत्, न अन्वयव्यतिरेकप्रतिभासस्योभयत्र तुल्यत्वात्। तथा हि—यत्र यत्र चक्षुः प्रवर्तते, तत्र तत्र तैमिरिककेशादिप्रतिभासवन्न स्तम्भादिप्रतिभासो भवतीति। स्तम्भादेः सामर्थ्यगतिस्तथा महिष्यादिषु गवान्वयबुद्धिर्न भवति। परमाणुमात्रेषु संयोगादिरहितेषु चावयविसंयोगादिबुद्धिर्न भवतीति सामान्यादेरपि सामर्थ्यगतिः। किं च यद्यनिरूपिततत्त्वाप्रतीतिः संवृतिः, तत एव कार्यकारणभावव्यस्थितिरिष्टा, तथा सत्यक्षणिकानामेव कार्यकारणभावः सर्वव्यवहारिप्रसिद्धोऽभ्यनुज्ञेयः, किं तत्र सूक्ष्मविचारेण ? सूक्ष्मेक्षिकया हि कार्यकारणभावोच्छेद एव स्यादुक्तात् न्यायात्। तथाप्यसिद्धत्वान्न सत्त्वेन क्षणिकत्वसिद्धिर्नाप्यर्थक्रियायाः क्रमाक्रमाभ्यां व्याप्तिसिद्धिः। [1]सूक्ष्मेक्षिकयापि त्वन्मत एव कार्यकारणभावग्रहणं न सम्भवत्यन्येनान्यस्याप्रतिबद्धस्य ग्रहणानभ्युपगमात्। प्रतिबन्धश्च द्विष्ठः प्रत्यक्षेणाऽन्वयग्राहिणा न गृह्यत इत्यनुमानस्यापि तत्राप्रवृत्तिः। अस्मन्मते तु कार्यकारणभावस्यापि न ग्रहणाऽनुपपत्तिः। प्रत्यक्षस्यैकक्षणिकविषयत्वनियमानभ्युपगमात्। तथा च व्याप्तिग्रहणसमर्थनप्रस्तावेऽस्मदादिप्रत्यक्षमपि अतीतानागतादिविषये कदाचिददृष्टादिहेतुविशेषात् प्रवर्तत इति समर्थितम्। नह्यन्यथा कार्यकारणभावादिप्रतीतिः सम्भवति। [2]अनादिव्यवहाराभ्यासवासनात एवेयं प्रतीतिरिति चेत्, न; अत्रापि प्रमाणाभावात्। असंसृष्टैकक्षणमात्रवेदनवादिनो हि व्यवहारस्यानादिरभ्यासः, ततो वासना, ततो मिथ्याप्रतीतिरित्येतत् सर्वमन्धपरम्परावदप्रमाणकमिति।

## ❋ कार्यकारणभावप्रतीतिवदेव प्रत्यभिज्ञादिप्रतीतिः प्रमाणम् ❋

यथा चेदमस्य कार्यमित्यस्याः प्रतीतेर्विसंवादाभावादेव प्रामाण्यम्,

---

१. अयं खण्डलकोऽप्यालोचितो ज्ञानश्रिया ( ज्ञान० नि० पृ० ८ )।

२. अस्यालोचना ज्ञानश्रीनिबन्धे ( ज्ञान० नि० पृ० ११ ) द्रष्टव्या।

तथानेनैतानि क्रमेण कृतान्येतानि युगपदिति प्रतीतेः। 'स एवायं स्फटिकः' 'स एवाहम्' इत्येवमादिप्रत्यभिज्ञायाश्च विसंवादाभावादेव प्रामाण्यमेष्टव्यम्, तुल्ययोगक्षेमत्वात्।

अथ विसंवादिन्यपि प्रत्यभिज्ञा दृश्यते, कार्यकारणभावप्रतीतिः किं न विसंवादिन्यपि दृश्यते? या विसंवादिनी, सा कार्यकारणभावप्रतीतिरेव न भवत्यप्रमाणत्वादिति चेत्। समानमत्रापि विसंवादिनी या, सा प्रत्यभिज्ञैव न भवतीति। तदाभासत्वादिति भ्रान्तापि प्रत्यभिज्ञावश्यं सादृश्यनिमित्ताऽभ्युपगन्तव्याऽन्यथा सर्वत्र भवेत्। सादृश्यं त्वनुगतैकवस्तु अनभ्युपगमान्न सम्भवतीति विचारितम्। तदभ्युपगमे च कथं सर्वं क्षणिकम्?

## ❀ कार्यं क्रमेण? युगपद्वा? इत्यस्योत्तरम् ❀

यच्चोक्तम्—अक्षणिकोऽर्थः किं क्रमेण करोति? युगपद्वेति। यथादर्शनमुभयथापि करोति—येषु कार्येषु युगपत्सहकारिप्राप्तिः तानि युगपत्करोति। येषु क्रमेण सहकारिप्राप्तिः तानि क्रमेणैव करोतीति। तदतद्रूपाकारणे सहकारिवैयर्थ्यमिति चेत्, न; तत्साहित्ये कार्यस्यैव निष्पत्तेः। तैर्विनाऽपि यदि अक्षणिकः कार्यं कुर्यात्स्यात्तेषां वैयर्थ्यम्। [1]सहकारिणस्तस्य कमुपकारं कुर्वंति, येन तैर्विना न करोतीति चेत्, कार्यमेव कुर्वन्त्यन्योपकारकरणे हि सहकारित्वमेव न स्यात्, तथा हि—यदि तमेव कुर्वन्ति, तदा तत्कारिण एव स्युर्न तत्सहकारिणः। अथ तदन्यत्तदकार्यं कुर्वन्ति, तथापि कथं तत्सहकारिणः तेन सहैकं कार्यं कुर्वंतो हि तत्सहकारिणोऽभिधीयन्ते। न हि भवत्पक्षेऽपि येषां रूपालोकमनस्कारादीनां सहकारित्वम्, तेषामेककार्यकारणव्यतिरेकेणान्यः परस्परोपकारोऽस्ति। नाप्येकसामग्र्यधीनानामिव सहकारिनियमः, आलोकेन जनितस्यापि विज्ञानस्य विशिष्टज्ञानोत्पत्तिं प्रत्यालोकसहकारित्वात्। तदप्यालोकसहकारिविज्ञानमालोकेन जनितमिति चेत्, न; किं केवलेन? विज्ञानसहितेन वा? केवलेनेति चेत्, कथं विज्ञानोपादानं विना विज्ञानोत्पत्तिः। उत्पत्तौ वा परलोकसिद्धिर्न स्यात्। अथ विज्ञानसहितेन, तदपि विज्ञानं यद्यालोकेन जनितम्, तदालोकसन्तानोप्यनादिरेष्टव्यस्तत्र च प्रत्यक्षबाधापि स्यात्। अथ न जनितम्, तदा तस्य विज्ञानस्याऽनुपकारक एवालोकः सहकारी कथम् अनुपकारिणः सहकारित्वं नास्ति।

## ❀ शक्ताशक्तत्वव्यवस्था ❀

भवतु नामानुपकारकोऽपि सहकारी, तथापि यदि तस्य प्रागेव शक्तिरस्ति,

---

१. समालोचनाऽस्य ज्ञानश्रीग्रन्थे (ज्ञान० वि० पृ० १६)।

किं न करोति ? नास्ति चेत् पश्चादप्यशक्तः कथं करोति ? पश्चाच्छक्तश्चेत् , शक्ताशक्तयोः कथं नान्यत्वम् , विरुद्धधर्माध्यासस्य भेदलक्षणत्वादिति ? नैतदस्ति; सहकारिसाकल्यं हि तस्य शक्तिः , तद्वैकल्यं चाशक्तिः । तेन सहकारिवैकल्ये प्रागशक्त उच्यते; पश्चात्तत्साकल्ये च शक्त इति । धर्मधर्मिणोर्भेदः प्रसाधितः, तेन शक्त्युत्पादेऽपि नावश्यं तद्वत उत्पादो, शक्तेर्निवृत्तावपि नावश्यं तद्वतो निवृत्तिः प्रतिबन्धाभावात् । कथमर्थान्तरमर्थान्तरस्य शक्तिरिति चेत् । आत्मैवात्मनः कथं शक्तिः ? तादात्म्यादिति चेत्, अतादात्म्यात्किं नेष्यते ? सर्वं सर्वस्य शक्तिः प्रसज्येत इति चेत् । न; आलोको विज्ञानाद्भिन्नोऽपि न सर्वस्य सहकारी तस्य स्वहेतुनियमात्तथोत्पत्तिरिति चेत् , सहकारिसाकल्यमपि स्वहेतुनियमात्तथोत्पन्नं, येन कस्यचिदेव शक्तिर्न सर्वस्येति ।

किं च कारणमपि नार्थान्तरस्य कार्यस्य युक्तम्, सर्वं सर्वस्य प्रसज्येत । सर्वस्य ततोऽनुत्पादात्तेन न सर्वस्य तत्कारणमिति चेत्, एतदेव कुतः, यदर्थान्तरत्वाविशेषेऽपि कस्यचिदेव तत उत्पत्तिः, न सर्वस्येति ? वस्तुस्वभाव एष इति चेत् , तत्किमसद्ग्रहाभिनिवेशेनात्रापि वस्तुस्वभाव एवैष यदर्थान्तरत्वविशेषेऽपि किंचिदेव कस्यचिदेव शक्तिर्न सर्वं सर्वस्येति ।

## ❀ कार्यकारणभाववच्छक्तिव्यवस्था ❀

यथैवार्थान्तरत्वाविशेषेऽप्यन्वयव्यतिरेकाभ्यां प्रतिनियतस्वभावयोरेव कार्यकारणभावः प्रतीयते, तथाऽर्थान्तरत्वाविशेषेऽप्यन्वयव्यतिरेकाभ्यां प्रतिनियतस्वभावयोरेव साहकारिसाकल्यहेत्वोः शक्तिशक्तिमद्भावः प्रतीयते । यथाऽऽलोकादिसहकारिसाकल्यं चक्षुष एव शक्तिर्न घ्राणादेः, स्वविषयविज्ञानोत्पादने तु रूपस्यैव सा शक्तिर्न गन्धादेः, तथाहि—रूपमेव नयनालोकादिसाकल्ये सति स्वात्मनि ज्ञानमुत्पादयदुपलभ्यते नासति तत्साकल्ये । अत एव न शक्तिरेव हेतुः, शक्तिमतोऽप्यन्वयव्यतिरेकाभ्यां हेतुत्वावधारणादिति ।

## ❀ कालभेदेन शक्ताशक्तत्वव्यवस्था ❀

यच्चोक्तम्—शक्ताशक्तयोर्विरुद्धधर्माध्यासाद् भेद इति, [1]तन्न; कालभेदेनाविरोधात् । यथा क्रियोत्पत्तेः पूर्वं निष्क्रियः स्फटिकः, स एव पश्चात्सक्रिय इति । साध्यत्वाददृष्टान्त इति चेत्, न; प्रमाणसिद्धस्य साध्यत्वाऽयोगात् । एवं हि विरुद्धधर्माध्यासाद्भेदोऽसिद्ध इत्यपि ब्रुवाणः कथं वार्यते ? तस्माद् यथो-

१. अयं परिहारो ज्ञानश्रिया परिहृतः ( ज्ञा० वि० पृ० २२ ) ।

धर्मयोर्यथाविरोधो दृष्टः तयोस्तथैवाभ्युपगन्तव्यः। यथा स एव हेतुः स्वकार्यं प्रति शक्तः, कार्यान्तरं प्रत्यशक्त इत्येकस्यैव विषयभेदेन शक्त्यशक्ती न विरुद्धे, तथा कालभेदेनापि शक्तिभेदेपि शक्तिमदभेदस्य प्रमाणसिद्धेरुभयत्राविशेषादिति।

## ❀ शक्तिभेदेऽपि शक्ताशक्तयोर्भेदः ❀

[1]यद्यपि भिन्ना शक्तिः शक्तिमतोऽभ्युपगम्यते, तथापि नावश्यं शक्ताशक्तयोर्भेदः। कस्मात्? त्वन्मतेऽपि धर्मभेदाद्धर्मिभेदनियमासिद्धेः, तथा चाभिन्नेऽपि कार्ये सहकारिणां पृथगुपयोगं दर्शयताऽभिहितम्—[2]यथा मृत्पिण्डकुलालसूत्रादिभ्यो भवतो घटस्य मृत्पिण्डादमृत्स्वभावेभ्यो भेदः कुलालात्तस्यैव संस्थानविशिष्टः सूत्रात्तस्यैव चक्राद् विभक्तः स्वभावः। तदेवं न कुलालान्मृत्स्वभावता, न मृदः संस्थानविशेषः। तथा चक्षुर्विज्ञानेपि पूर्वज्ञानक्षणादुपलम्भात्मता, नयनाद्रूपग्रहणयोग्यता, विषयात्तत्तुल्यरूपतेत्येवं सर्वत्र सहकारिणां पृथगुपयोगो द्रष्टव्य इत्यभिप्रायः। यथा चात्र मृदात्मतादिस्वभावभेदेऽपि न कार्यस्य भेदः, तथा शक्ताशक्ततादिस्वभावभेदेऽप्यभेदो भविष्यति, अबाधितैकत्वाध्यवसायस्य समानत्वात्, स्वभावभेदबाधकस्य च व्यभिचारित्वात्। अथ नैवाऽभिन्नात्मनः कस्यचित्स्वभावभेद इष्यते, एवं तर्हि सहकारिणां पृथगुपयोगकथनं बालोन्मत्तप्रलपितं स्यात्। न च पृथगुपयोगमन्तरेण कार्यविशेषस्य प्रतिनियतकारणपूर्वकत्वं सिध्यति, सर्वकालभाविनस्त्रैलोक्यस्यापि कारणत्वप्रसंगात्। ततश्च कार्यविशेषात् कारणविशेषानुमानं न स्यात्।

---

१. ज्ञानश्रिया समालोचितोऽयमंशः ( ज्ञान० वि० पृ० २५ )।

२. हेतुबिन्दुप्रकरणस्यायमंशस्तदानुपूर्वी तु—"यथा मृत्पिण्डकुलालसूत्रादिभ्यो भवतो घटस्य मृत्पिण्डाद् अमृत्स्वभावेभ्यो वृक्षादिभ्यो भिन्नः स्वभावः, कुलालात् तस्यैव मृदात्मनः सतः संस्थानविशेषात्मतया तदन्येभ्यो भिन्नः, सूत्रात् तस्यैव मृत्संस्थानविशेषात्मनः चक्रादिभिर्विभक्तः स्वभावो भवति। तदेवं न कुलालात् मृत्स्वभावता, न मृदः संस्थानविशेषः।" ( हे० बिं० पृ० ५८ )। "तथा चक्षुरादिभ्यो विज्ञानोत्पत्तौ उन्नेयः, तथा हि—समनन्तरप्रत्ययाद्विज्ञानात् चक्षुर्विज्ञानस्योपलम्भात्मनः सतः चक्षुरिन्द्रियाद् रूपग्रहणयोग्यताप्रतिनियमः, विषयात् तत्तुल्यरूपतेति अभिन्नत्वेऽपि वस्तुतः कार्यस्य कारणानां भिन्नेभ्यः स्वभावेभ्यो भिन्ना एव विशेषा भवन्ति।" ( हे० बिं० पृ० ५९ )।

## ※ अतद्व्यावृत्तिशक्तिधर्मादिशब्दानामेकार्थत्वम् ※

अथातद्व्यावृत्तिभेदेन स्वभावभेदः कल्प्यते, तत्किमुक्तिभेदमात्रेणैव वयं प्रतारयितव्याः ? न ह्यतद्व्यावृत्तिशक्तिधर्माकारशब्दैः स्वभावशब्दार्थादन्योऽर्थोऽभिधीयते, त्वच्छास्त्रेऽपि एकार्थत्वेन व्यवहारदर्शनात् ।

अथातद्व्यावृत्तिभेदोऽपि कल्पनात एवोच्यते, असन्नेव तर्हि व्यावृत्तिभेदः, कल्पितस्वभावत्वाद्, रज्ज्वादिषु सर्पाद्याकारवत् । ततश्च व्यावृत्तिभेदेन लिंगलिंगिस्वभावो मिथ्यैव स्यात्—[1]तस्मान्न धर्मभेदादेव धर्मिभेद इति ।

## ※ कालभेदात्स्वभावभेदः ※

यत्पुनरिदमुक्तम्—प्रथमकार्योत्पादनकालेऽप्युत्तरकार्योत्पादनस्वभावोऽक्षणिकस्यास्त्यभिन्नात्मकत्वात्, अतः प्रथमकार्यक्रियाकाल एवाशेषाणि कार्याणि कुर्यादिति, तदिदं माता वन्ध्येत्यादिवत् स्ववचनविरोधादयुक्तम् । यो हि उत्तरकार्यकरणस्वभावः, स कथमादौ तत्कार्यं कुर्यात् ? अथ कुर्यात्, न तर्हि असावुत्तरकार्यकरणस्वभावः । न हि नीलोत्पादनस्वभावः पीतादिकमपि करोति । न च प्रथमोत्तरकार्योत्पादनस्वभावभेदात्तद्वतोपि भेदः, स्वभावभेदस्य व्यभिचारित्वेनोक्तत्वात् ।

[2]अपि च येन स्वभावेन रूपं रूपान्तरं करोति, न तेनैव रसादिकम्, रसादेरपि रूपस्वभावत्वप्रसंगात् । ततः सर्वं रूपकार्यं चक्षुषा गृह्येत । न चैतदिष्टम्, तस्माद्यथा रूपं रूपान्तरोत्पादनस्वभावेन तदेव करोति, ज्ञानोत्पादनस्वभावेन ज्ञानमेव करोति, न रूपादिकम् । रसोत्पादनस्वभावेन च रसमेव, गन्धस्पर्शजननस्वभावाभ्यां तावेव जनयतीति । तद्वदक्षणिकोऽप्याद्यकार्योत्पादनस्वभावेनाद्यमेवोत्पादयति न तदुत्तरम् । तदुत्तरकार्योत्पादनस्वभावेन तदुत्तरमेव जनयति, नाद्यमुत्तरोत्तरं वा । एवमुत्तरोत्तरकार्येष्वनन्तकालभाविष्वपि प्रतिनियताः स्वभावा द्रष्टव्याः ।

स्वभावा एव हेतवः, न स्वभावीत्यप्ययुक्तम्, रूपस्याप्यहेतुत्वप्रसंगात्, स्वभावानामेव हेतुत्वात् ।

## ※ रूपादेरेकस्वभावत्वाशङ्का ※

अथ न रूपस्य स्वभावभेद इष्यते, किं त्वेक एव तथाभूतः स्वभावः, येन

१. ज्ञानश्रीनिबन्धेऽस्यालोचनास्ति ( ज्ञान० नि० पृ० २७ ) ।
२. अस्यालोचनं द्रष्टव्यम्—( ज्ञा० नि० पृ० ३२ ) ।

भिन्नाकारं भिन्नदेशं च कार्यमुपादयति। तस्याभिन्नस्वभावस्यैव भिन्नस्वभावकार्योत्पादनानुरोधेन स्वभावभेदः कल्पित इति।

## ❀ तन्निरासः ❀

नन्वेवं परोप्यभिन्नस्वभावस्यैवाक्षणिकस्य क्रमभाव्यनेकस्वभावकार्योत्पादनानुरोधेन स्वभावभेदं कल्पयन् नोपालम्भमर्हति इति। न चानन्तरभावित्वेनैव कारणत्वम्, त्रैलोक्यस्याप्यनन्तरभाविनः कारणत्वप्रसंगात्। तस्माद्यदेव कार्योत्पत्तौ व्याप्रियते, तदेव कारणम्। ततश्च नित्यमपि क्रमव्यापारणस्वभावत्वात् क्रमेण व्याप्रियमाणं क्रमभाविकार्याणां कारणम्। क्रमव्यापारणस्वभावत्वं चाक्षणिकस्य क्रमभाविकार्योपलम्भादेवावगम्यते। यथा युगपत्कार्योपलम्भाद्युपगद्व्यापारणस्वभावत्वम्।

निरंशस्य युगपद्व्यापारकल्पनापि न युक्तेति चेत्, यदि युगपद्व्यापारं विनैव रूपादिहेतुर्युगपदनेकं कार्यं करोति, तदाऽस्माकमपि क्रमव्यापारकल्पनया न किंचित्प्रयोजनम्। तत्स्वाभाव्यादेवाऽक्षणिकः क्रमेण कार्यं करिष्यतीति।

## ❀ शक्तिस्वभावादीनामप्रत्यक्षत्वे नाप्रामाणिकत्वम् ❀

ननु यद्यक्षणिकः क्रमकरणस्वभावः, तदा किं न तत्स्वभाव एव प्रतिभाति? क एवमाह—न प्रतिभाति? तत्कार्याप्रतिभासनेऽपि कथं तज्जननस्वभावः प्रतिभातीति चेत्, न; तत्कार्याणां ततोऽर्थान्तरत्वात्तदप्रतिभासने तेषां जनकोऽयमित्येवं प्रतिभासो मा भूद्विशेषणाग्रहणे विशेष्यबुद्धेरनुत्पत्तेः स्वरूपतस्तु गृह्यत एव। यथा त्वन्मते रसाद्यग्रहणेऽपि तज्जननस्वभावं रूपं गृहीतमेव निरंशस्यांशेन ग्रहणयोगात्। न च रसादयोऽपि चक्षुषा गृह्यन्ते। अपि च पाषाणादीनां गुरुत्वं दर्शनमात्रेणैव न गृह्यते। न च तद्भिन्नं त्वयेष्टम्। नापि तन्नास्त्येव। किं च क्षणिकताद्याकारोऽपि रूपादिषु गृह्यमाणेषु न प्रतिभाति, अनुमानवैफल्यप्रसंगात्।

## ❀ क्षणिकत्वाक्षणिकत्वयोर्न्यायसाम्यम् ❀

प्रतीत एव क्षणिकताद्याकारः, किं तु तद्ग्रहणस्यापटुत्वात्तन्निश्चयो न भवतीति चेत्, यद्येवं नित्यव्यापिताद्याकारग्रहणेऽपि पाटवाभावान्निश्चयो न भवति—इत्येवं कस्मान्न कल्प्यते? न च सर्वत्र ग्रहणस्यापटुत्वं सम्भाव्यते। न हि खपुष्पादयोपि अर्था गृहीता एव तद्ग्रहणस्यापटुत्वान्न निश्चीयन्त इति युक्तम्। क्रमकरणस्वभावे तु क्वचिन्निश्चयोऽप्यस्ति तेन तद्ग्रहणस्य क्वचिदपाटवकल्पनापि युक्ता तृणादिग्रहणानां निश्चयाभ्यां पाटवात्।

क्रमकरणस्वभावत्वान्न कदाचित्ततो युगपत्कार्योत्पत्तिरिति चेत्, न; तत्कार्यापेक्षया युगपत्करणस्वभावत्वात्।

## ❀ विषयभेदाद्विरोधपरिहारः ❀

क्रमयुगपत्करणस्वभावयोर्विरोध इति चेत्, न; भिन्नविषयत्वेनाविरोधात् कारणाकारणस्वभाववत्। यथा स्वकार्यापेक्षयाऽन्यादिः कारणस्वभावोऽतत्कार्यापेक्षया त्वकारणस्वभावः, तद्वान्नित्योपि हेतुः केषांचित्क्रमेण, केषांचिद्युगपदुत्पत्तिं करोतीत्येवंस्वभावः। स्वभावतस्तथाभूतत्वे नित्यस्य सहकार्यनपेक्षत्वप्रसंग इति चेत्, न; ईदृशस्वभावत्वात्तस्य, यदन्यसहित एव युगपच्च कार्यविशेषं करोतीति। नित्यस्यैवं स्वभावः कुतोऽभूदिति चेत्, नित्यत्वादेव, न कुतश्चित्। नित्यस्यानादेर्निर्हेतुकस्य हेतुं पृच्छतीति अहो पाण्डित्यम् [1]प्रभातभोजिनः!

## ❀ नित्यत्वे प्रमाणं प्रत्यभिज्ञानम् ❀

यदि चावश्यं वयं प्रष्टव्यास्तत एवं पृच्छ—नित्यसद्भावे किं प्रमाणमिति? तत्र विपक्षबाधकसाधनं व्यतिरेक्यनुमानमित्युक्तमिति। निर्हेतुकत्वे नित्यस्य सर्वत्र स स्वभावः प्रसज्येत नियामकहेतोरभावादिति चेत्, न; नित्यस्वभावत्वेनैवानादित्वात्। यो हि स्वभावः कदाचिद्भवति, स हेतुनियमान्नियतो युज्यते, न त्वनादिः। हेतुनियमादेव नियतस्वभावोऽर्थ इति नायमृषिसमभिव्याहारः, प्रमाणसिद्धत्वं चेतरत्रापि समानम्। तथा च निर्हेतुकानामपि गोत्वाश्वत्वादीनां प्रतिनियतस्वभावत्वं प्रत्यक्षेणापि गृह्यत इति समर्थितम्। प्रत्यभिज्ञायाश्चाप्रामाण्येऽन्वयव्यतिरेकग्रहणमपि न प्राप्नोति। एकजात्येकसन्तानत्वस्याप्यसिद्धेः, क्षणानां चान्वयग्रहणं न सम्भवतीत्युक्तम्। तस्मादबाधितप्रत्यभिज्ञानस्य प्रामाण्यमेष्टव्यम्, तदन्यप्रत्यक्षानुमानज्ञानवत्। स्फटिकादिषु च प्रत्यभिज्ञानं न बाध्यते। क्रमयौगपद्यादिबाधकस्य परिहृतत्वात्।

## ❀ शरीरादिवत्स्फटिकादौ न प्रत्यभिज्ञाया गौणता ❀

शरीरादिष्विव स्फाटिकादिष्वपि प्रत्यभिज्ञानं सदृशापरापरोत्पत्तेर्विवेका-

---

१. प्रभातभोजी = बौद्धभिक्षुः। यतो हि "विकालभोजना वेरमणी" (विनय० म० वग्ग० पृ० १२७) इति शिक्षापदमाददानस्य भदन्तस्य मध्याह्नोत्तरभोजने दोषः प्रकीर्तितः—"यो पन भिक्खु विकाले खादनियं वा भोजनियं वा खादेय्य वा भुञ्जेय्य वा पाचित्तियं" (पाति० ५।३७)। एवं क्षपान्तं यावत् क्षुत्क्षामकण्ठो भिक्षुवरो वराकः प्रभात एव भोक्तुमारभते।

ग्रहणादवितथमिव प्रतिभातीति चेत्, न; उत्पत्तिविनाशकारणानुपलब्धेः। नहि यथा शरीरस्य प्रतिदिनमुत्पत्तिकारणमन्नपानादि, विनाशकारणं चावयवक्रियादि, प्रमाणेनोपलभ्यते, तथा स्फटिकादेः प्रतिक्षणमुत्पत्तिविनाशकारणं किंचिदुपलभ्यते। न चाकस्मिकः कस्यचिद्विनाशः सम्भवत्युत्पत्तिवद्विनाशस्याप्यन्वयव्यतिरेकाभ्यां हेतुत एवोपलम्भादिति।

## ❀ विनाशस्याहेतुकत्वाद्भावक्षणिकत्वाशङ्का ❀

ननु च विनाशहेतुरसामर्थ्यवैयर्थ्याभ्यामपास्तः, तथा हि—यद्ययं भावः स्वहेतोरेवानश्वरस्वभाव उत्पन्नः, ततोऽसौ नाशयितुमशक्य इत्यसामर्थ्यं[1] नाशहेतोः। न ह्यशुक्लस्वभावः स्वहेतोरुत्पन्नो हेत्वन्तरेण शुक्लस्वभावः कर्तुं शक्यते। तदन्यो नाशश्चेत्क्रियते, तदा नाशोत्पादेऽपि किं तस्येति? न हि नाशेनाप्यसौ नाश्यते। नाप्याव्रियते, अनावृतस्वभावो ह्युत्पन्नः कथमावृतस्वभावः कर्तुं शक्यते? न खलु कृष्णस्वभावः केनचिच्छुक्लः क्रियमाण उपलभ्यते।

अथ नश्वरस्वभावः स्वहेतोरेवोत्पन्नः, तदा तत्स्वभावतयैव नाशाद् व्यर्थो नाशहेतुः। [2]यो हि यत्स्वभावः स्वहेतुत उत्पन्नः, स पुनस्तद्भावे हेत्वन्तरं नापेक्षते, प्रकाशोष्णकठिनत्वादिवत्—न हि प्रकाशादिस्वभावाः प्रदीपादयः स्वकारणादुत्पन्नाः पुनः प्रकाशादिभावे हेत्वन्तरमपेक्षन्ते। तस्माद्विनाशं प्रति निरपेक्षो भावः। सापेक्षत्वे चावश्यंभावनियमो न स्याद् वस्त्रे रागादिवत्। अतः कृतकानां घटादीनां केषाञ्चिन्नित्यतापि स्यात्। यद्यपि बहुलं विनाशकारणानि सन्ति, तेषामपि स्वप्रत्ययभावाधीनं सन्निधित्वान्नावश्यं सन्निधानमिति कश्चिन्न विनश्येदपि। न ह्यवश्यं हेतवः फलवन्तः, वैकल्यप्रतिबन्धसम्भवादिति। तदुक्तम्—

"अहेतुत्वाद्विनाशस्य स्वभावादनुबन्धिता।
सापेक्षाणां हि धर्माणां नावश्यंभावितेक्ष्यते॥" (प्र० वा० १।१९५)
"बाहुल्येपि हि तद्धेतोर्भवेत्क्वचिदसम्भवः॥" (प्र० वा० १।१९६) इति।

---

१. तथा चाह कीर्तिः—
सर्वेषां नाशहेतूनां हेतुमन्नाशवादिनाम्।
असामर्थ्याच्च तद्धेतोर्भवत्येव स्वभावतः॥ (प्र० वा० १।१९७)

२. कीर्तिनैव कीर्तितम्—"यो हि यत्स्वभावः, स स्वहेतोरेवोत्पद्यमानः तादृशो भवति, न पुनस्तद्भावे हेत्वन्तरमपेक्षते, प्रकाशद्रवोष्णकठिनद्रव्यादिवत्।" (हेतु० वि० पृ० ५६)।

## ❀ तन्निरासः ❀

अत्रोच्यते--यत्तावन्नश्वरस्वभावस्याऽनश्वरस्वभावस्येति, तन्न; हेतुवादोच्छेदप्रसङ्गादित्थं विकल्पस्य सर्वत्र सम्भवात्, तथा हि—हेतुः किं भवनस्वभावो भवति ? आहोस्विदभवनस्वभाव इति ? यद्याद्यः पक्षः, तदा स्वयमेव भवति; तत्स्वभावत्वादिति व्यर्थो हेतुः। द्वितीयपक्षे त्वसमर्थः, न ह्यभवनस्वभावः शशशृङ्गादिः केनचिदुत्पादयितुं शक्यते। तथा छेददाहादिहेतवोऽपि। तत्स्वभावाऽतत्स्वभावपक्षयोर्वैयर्थ्यासामर्थ्याभ्यामनुपपन्ना द्रष्टव्याः। तथा चैवं सर्वहेतुप्रतिक्षेपसम्भवान्मोक्षार्थोऽपि प्रयासः शास्त्रश्रवणादौ व्यर्थं इति।

## ❀ अग्निधूमकार्यकारणभावस्याकाट्यताशङ्का ❀

अथाग्निभावे धूमभावः, तदभावे वाऽभाव इत्यन्वयव्यतिरेकाभ्यामग्निधूमयोर्हेतुहेतुमद्भावः सर्वलोकप्रतिपन्नः स विकल्पशतेनाप्यपाकर्तुं न शक्यते। न च भावस्य निर्हेतुकत्वे प्रतिनियतदेशकालादियोगः सम्भवति। यद्येवं विनाशोपि प्रतिनियतदेशकालादिमान्नैव निर्हेतुकः सम्भवति, अन्वयव्यतिरेकाभ्यां च नाशहेतवोपि दृश्यन्ते--घटादेर्मुद्गरादयः, काष्ठादेरग्न्यादयश्चेति।

नन्वत्रोक्तम्--

"सत्तामात्रानुबन्धित्वान्नाशस्यानित्यता ध्वनेः।
अग्नेरर्थान्तरोत्पत्तौ भवेत् काष्ठस्य दर्शनम् ॥" (प्र० वा० ३।२६६)

अस्यार्थः—सत्तामात्रानुबन्धी नाशः सत्तास्वभाव एवेत्यर्थः। तेन ध्वनेरन्यस्य वा सत्ताहेतुत एवानित्यतोत्पन्ना न निर्हेतुकी। जातस्वभावो हेत्वन्तरं नापेक्षत इत्यहेतुको नाश उक्तः। काष्ठस्यापि नाग्निना विनाशः क्रियते, किं तर्हि ? पूर्वस्य स्वरसनिरोधेऽन्यस्याग्निनाधिकृतस्योत्पत्तिः, अन्यथाग्नेरर्थान्तरोत्पत्तौ भवेत्काष्ठस्य दर्शनम्। न ह्यर्थान्तरादर्थान्तरजन्मनि काष्ठं नाम न दृश्यते, अतिप्रसङ्गो ह्येवं स्यादिति।

## ❀ तत्खण्डनम् ❀

तदप्ययुक्तम्; सत्तानाशयोस्तादात्म्ये हि सर्वदैवोपलब्धिः स्यात् स्वभावेन विरोधाभावाद्विरोधे चैकक्षणोपलम्भोऽपि न स्यात्तद्विरोधिनस्तदात्मत्वेन तत्सहभावित्वात्। अथ नास्य स्वभावेन विरोधः, किं तर्हि ? स्वहेतोरेवायमेकक्षणस्थायी जातः क्षणान्तरे नोपलभ्यते। तथा चाह—[1]भाव एव

१. कीर्तिकीर्तितम्—"न च विनाशानामपरः स्वभावः, भावच्युतिरेव विनाशः।" (हेतु० बिं० पृ० ६२)।

क्षणस्थितिधर्मा नाश इत्युच्यते। यद्येवं क्षणस्थितिरित्यभिधाना क्षणादूर्ध्व-मस्यास्थितिः। तथा कथं तादात्म्यं क्रमोत्पन्नयोरेकत्वायोगाद् बीजाङ्कुरवत्, अत एव भिन्नहेतुकत्वमेकसामग्र्यापन्नजन्मनोः क्रमासम्भवादिति।

ननु यद्ययं भावो नंष्टा, तदा स्वयमेव नंक्ष्यति। को हि नाशविघ्नस्तस्य? न चेन्नंष्टा, ततो नैव नंक्ष्यतीति। नंष्टेति कोर्थः? किं नाशात्मक एव? आहोस्विन्नाशकृदिति? यदि तावन्नाशात्मक एव तदैकक्षणोपलम्भोपि न स्यान्नाशाविष्टस्योपलम्भसम्भवात्। उपलम्भे वा, सर्वदैवोपलम्भः स्यात्, तत्स्वरूपापरित्यागात्। परित्यागो वा स एव नाशोत्पादस्तस्य वस्तुस्वरूपपरित्यागलक्षणत्वात्तस्य च तादात्म्यानुपपत्तिर्विधिप्रतिषेधयोरेकत्वविरोधात्। न हि तदेव तदस्ति, तदेव तन्नास्ति; यदेव स्थितिः, तदेवास्थितिरिति युक्तम्। अथ नंष्टा नाशकृदित्युच्यते, तथापि न तादात्म्यम्, कार्यकारणभावादग्निधूमयोरिव। नाशस्याऽकार्यत्वाऽभ्युपगमविरोधः। तदतद्रूपाकारणाच्चाकिञ्चित्कर इत्यस्य विरोधश्च। अथ नंष्टा नश्वर इत्युच्यते, नश्वर इत्यस्यापि कोऽर्थो नाशस्वभावः? नाशकृद्वा? इत्युभयत्राप्युक्तो दोषः।

## ❀ प्रकाशादिदृष्टस्यायुक्तता ❀

प्रकाशादिदृष्टान्तोऽप्ययुक्तः, तथा हि—न तावदस्मन्मते प्रदीपप्रकाशादीनामेकत्वं सिद्धं नाप्येकहेतुकत्वम्। द्रव्योत्पत्त्यन्तरं हि सामग्र्यन्तरतः प्रकाशादयो गुणा उत्पद्यन्त इति नः सिद्धान्तः। त्वन्मते तु प्रदीपादिवस्तु रूपाद्यात्मकमेवेत्यस्ति प्रसिद्धिर्न्न तु तद्विनाशकत्वं युक्तम्। नाशो ह्यभाव उच्यते। न च भाव एवाभावः, तयोर्भेदस्याविसंवादेन सर्वजनप्रसिद्धत्वात्। त्वयाऽपि लक्षणभेदाभिधानात्। न च भावस्योत्पत्तिकालेऽपि सत्त्वविच्छेदः, पश्चादिव प्रागप्यर्थक्रियासामर्थ्यविरहप्रसंगात्। अविनाशे वा प्रागिव पश्चादप्यवस्थानप्रसंगः स्थितेरप्रतिषेधात्। पश्चादस्य सर्वसामर्थ्यविरह इति चेत्, ननु स एव नाशः सर्वलोकप्रसिद्धः स च पश्चाद्भवतीति कथं भावनाशः, क्रमभाविनोरेकत्वायोगादित्युक्तम्। न चाहेतुकत्वेऽपि पश्चाद्भावनियमः सम्भवतीति।

## ❀ सापेक्षस्याप्यवश्यम्भावितासमर्थनम् ❀

यच्चोक्तम्—हेत्वपेक्षत्वे नाशस्यावश्यम्भावनियमो न स्याद्वस्त्रे रागवदिति तन्न; अनेकान्तात्—सापेक्षस्यापि मरणादेरवश्यंभावदर्शनात्। प्राणादिनिरोधलक्षणं हि मरणमुच्यते, न तत्स्वभावत एव भवत्यदृष्टादिनिमित्ता-

क्षित्वात्। प्रदीपादेः सन्तानोच्छित्तिः, घटादेरसभागक्षणोत्पत्तिः, चन्द्रादेरुदितस्यास्तमय—इत्येवमादिकं निमित्तविशेषापेक्षं कालान्तरेणावश्यं भवतीत्यतः सापेक्षत्वेऽप्यभिचारः।

## ❀ हेतूनां साफल्योपपादनम् ❀

समर्थितं च कारणानुमानम्, ततो न ह्यवश्यं हेतवः फलवन्त इत्येतदप्ययुक्तम्। न चात्र नाशस्य हेतुः कालो वा नियम्यते, किंतु कृतकं वस्तु कदाचित्कुतश्चिन्नश्यतीति। तेनैकदा घटादिनिवर्तकस्य मुद्गरादेः प्रतिबन्धवैकल्यसम्भवेऽप्यन्यदाऽन्यतश्च घटादिनिवृत्तिर्भविष्यतीति। भवताप्येतदवश्यमभ्युपगन्तव्यम्, अन्यथा मृत्योः प्रत्ययान्तरापेक्षित्वादव्यभिचारो न स्यात्। प्रत्ययान्तरानपेक्षित्वे च सर्वप्राणिनां जन्मान्तरमेव मरणं स्यात्। न च जातोऽपि कश्चिदमरः सम्भवति, सर्वप्राणिनां मरणधर्मित्वोपलम्भात्। तस्माद् बाहुल्येऽपि हि तद्धेतोरित्याद्यप्ययुक्तम्।

## ❀ कार्यत्वेन समानयोरपि भावाभावयोर्नैकत्वम् ❀

यत्पुनरेतत्—अग्नेरर्थान्तरोत्पत्तावित्यादि, तदयुक्तम्, भावाभावयोः परस्परविरुद्धयोरेकात्मत्वाभावलक्षणत्वादितरात्महानेः कथं नष्टात्मनः काष्ठस्य दर्शनं भवेत्तदभावोपलम्भादेव तन्नोपलभ्यते तन्नास्तीति च भवति। तादात्म्यवादिनस्तु दृश्यमानमेव काष्ठमदृष्टं नष्टं चेति स्यात्। अर्थान्तरत्वाविशेषेऽपि कथं कश्चिदेव कस्यचिन्नाश इति ? स एव प्रष्टव्यः, य एवं वदति। दृश्यते हि दहनादुत्पन्नः काष्ठस्यैव नाशो, नाकाशादेः। न चासौ नाशः काष्ठमेव, प्रत्यक्षविरोधादन्यत एवोत्पन्नत्वाच्च। न चोत्पन्नस्य पुनरुत्पत्तिः सम्भवति।

## ❀ अर्थान्तरत्वमात्रसाम्येन नैकस्वभावता ❀

न चार्थान्तरत्वमात्रसाम्याद् दृष्टस्य स्वभावविशेषस्य प्रत्याख्यानं युक्तम्। न हि यथा घटः पटादेरप्रकाशकः, तथा प्रदीपोप्यर्थान्तरत्वाविशेषादिति युक्तम्। यथा चान्येषामहेतुरग्निः, तथा धूमादेरपि मा भूदर्थान्तरत्वाविशेषादित्येवंविधमेतद्धृदयम्, तस्योत्तरम् स्वभावपर्यनुयोगस्योभयत्राविशेषादिति।

ननु भावेन स्वरसनिरोधिना नैव नाशहेतुरपेक्ष्यते, तस्याऽसामर्थ्यात्क्रियाप्रतिषेधाच्च। असमर्थस्तावन्नाशहेतुः सिद्धे हि भावे न तं करोति। नाप्यन्यकरणे तस्य किंचिदिति। तदतद्रूपाकरणाच्चाकिंचित्करो नापेक्ष्यते। क्रियाप्रति-

षेधाच्च कथं विनाश इति हि भावाभावं मन्यन्ते। तदयं विनाशहेतुरभावं करोतीति प्राप्तम्। तत्र यद्यभावो नाम कश्चित्कार्यः स्यात्स्वभावः ततः स एव भाव इति नाऽभावः स्यात्। तस्मादभावं करोति भावं न करोतीति।

क्रियाप्रतिषेधोऽस्य कृतः स्यात्तथाप्यकिंचित्करः किमित्यपेक्ष्यत इति? तदेतदप्ययुक्तम्, तथा हि—भावस्य विनाशः किमस्ति वा? न वा? नास्ति चेत्, सर्वदैव भावोपलम्भः स्यात्तत्स्वरूपस्य तदवस्थत्वात्। अतादवस्थ्ये च कथं नास्ति विनाशः, अतादवस्थस्यैव विनाशत्वात्। अथास्ति विनाशः, स यद्यव्यतिरिक्तः तदा पश्चादिव भावस्य प्रागप्यनुपलम्भप्रसंगः, पश्चादपि वा प्रागिवोपलम्भः स्यात्, तदुपलम्भविघातानुत्पत्तेः, उत्पत्तौ च पश्चाद्भावी विनाशः कथं न हेत्वन्तरापेक्षी?

यत्पुनरेतत्—यद्यभावः कार्यः स्यात्, तदा भवतीति भाव एव स्यादिति, तदयुक्तम्; निमित्तान्तरात् संज्ञान्तरसंयोजनेऽपि अर्थतथाभावस्य प्रतिषेद्धुमशक्यत्वात्। [1]विप्रतिपत्त्यव्यवस्थादिषु सम्प्रतिपत्तिव्यवस्थादिसंज्ञासंयोजनवत्।

यदप्यकिंचित्करो नापेक्ष्यत इति। तदप्ययुक्तम्; भावस्य सामर्थ्यविघातं कुर्वंत्कथमकिंचित्करः? सामर्थ्याविघाते च प्रागिव पश्चादपि कर्तृत्वप्रसंगो दुर्निवार इति।

## ❀ नाशस्य सम्बन्धाभावाद्याशङ्का ❀

नन्वग्निजनितेन विनाशेन सह कः सम्बन्धः काष्ठस्य? न तावदाश्रयाश्रयिभावः, कुण्डदध्यादिवदिव तयोरुपलम्भप्रसंगात्। नापि तदुत्पत्तिः, काष्ठादनुत्पत्तेः। न वा दहनादुत्पत्तिः। तदपेक्षात् काष्ठात्तदुत्पत्तिरिति चेत्, अनतिशयलाभिनः काऽपेक्षा? न च कार्योत्पत्तौ कारणं तदवस्थमेव नष्टं नाम। भवत्यर्थान्तरं नाशः। काष्ठं कस्मान्न दृश्यते? कोयमर्थान्तरोत्पत्तिकाष्ठदर्शनयोर्विरोधस्तेनार्थान्तरेण परिगृहीतत्वादेव काष्ठं न दृश्यत इत्येवमप्यावरणं तत्काष्ठस्य प्राप्तम्। न चैतद्युक्तम्; आवरणं हि दर्शनं विबध्नीयान्नाभिघातादीनि द्रव्यसामर्थ्यानीति।

## ❀ तन्निरासः ❀

तदेतदप्यसत्, यत्तावन्नाशेन सह कः सम्बन्ध इति। तन्न, आश्रयाश्रयिभावादयः सम्बन्धा नैवाभ्युपगम्यन्ते, किं तु भावाभावयोः प्रतिषेध्यप्रतिषेधन-

१. तथा च न्यायसूत्रम्—"विप्रतिपत्तौ च सम्प्रतिपत्तेः" (न्या० सू० २।१।२)। "अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः" (न्या० सू० २।१।३)।

लक्षणयोः एव सम्बन्धः। त एव नावरणकल्पो नाशः, आवरणेन हि दर्शनशक्तिः प्रतिवध्यते प्रच्याव्यते वा। न तु नाशेन कस्यचित्प्रतिबन्धः प्रच्यावो वा क्रियते, नाश एव हि काष्ठस्य सर्वशक्तिप्रच्यावः। स चाग्न्यादिना कृत इति।

## ❀ नाशस्य नाशाशंका ❀

ननु यदि नाशोपि क्रियते, तदा तस्यापि नाशित्वं स्यात्, कृतकत्वात्। ततः पुनः काष्ठादेरुन्मज्जनं स्यात्। हन्तृघाते चैत्रस्यानुन्मज्जनवदिति चेत्, न; हन्तुर्नाशहेतुत्वात्। न हि हन्तैव चैत्रस्य नाशः, तयोः सहभावस्यापि दर्शनात्। नाशहेतोश्चाग्न्यादेर्निवृत्तौ काष्ठस्योन्मज्जनं मा भूत्, नाशस्तु भावस्याभावः, तदभावनिवृत्तौ च भावस्य काऽन्या गतिः, प्रतिषेधद्वये विधेः सम्भवादिति ?

## ❀ तन्निरासः ❀

न; असिद्धत्वात्—नैव नाशस्य नाशित्वं सिद्धम्। ननूत्पत्त्याभ्युपगमः कथमसिद्धः ? न; निमित्तकारणमात्रादुत्पत्तेः। यस्य हि समवाय्यसमवायिनिमित्तकारणेभ्य उत्पत्तिः, तस्यैवोत्पन्नस्य निवृत्तिरिति। भावधर्मविपरीतो ह्यभावधर्मः, तेन भावेऽयं नियमः—कृतकस्यैव नाशः, नाश एव च कृतकस्येति। अभावे त्वयं नास्ति नियमः, तथा हि—प्रागभावोऽकृतक एव नश्यति। प्रध्वंसाभावः पुनः कृतकोऽप्यविनाश्येवेति। न चायं सहेतुकनाशवादिनां प्रसंग उपपद्यते, सहेतुकस्यावश्यम्भावनियमाभावात्। न हि सर्वत्र हेतवः सम्भवन्ति।

## ❀ नाशस्यापि नाशोक्तिः ❀

नन्वेवं सर्वत्र विनाशनिवृत्तिहेतवो न सन्तीत्येतदप्यनिश्चयम्। यद्येवं नाशस्यापि क्वचिन्निवृत्तिर्भवतु। श्रूयतेऽपि—काष्ठकूटपित्रोऽर्यमाथर्ववशिष्ठादीनां च शरीरं नष्टं भस्मीभूतं पुनर्महेश्वरानुग्रहात् प्रत्युपस्थितम्। मृताश्च पुनरुज्जीविता इति। दीपालोकादयोऽपि कार्यविशेषाः केचिन्नष्टाः पुनर्भवन्तो दृश्यन्ते। तत्र न ज्ञायते—किं तन्नाशापगमे पुनस्त एव भवन्ति ? किं वाऽन्ये तत्सदृशा इति ? न चान्यतरपक्षेऽपि बाधकमस्ति।

## ❀ दुःखाभावनिवृत्तावपि न मुक्तस्य दुःखित्वम् ❀

मुक्तस्य दुःखनिवृत्तिनिवृत्तौ पुनर्दुःखित्वप्रसंग इति चेत्, न; हेत्वभावात्। भावोत्पादको हि हेतुरभावस्य निवर्तकः, मुक्तस्य तु दुःखोत्पादको

नास्ति हेतुः, तेन दुःखाभावो न निवर्तते। यथा शशविषाणाद्युत्पादकहेत्वभावात्तत्प्रागभावो न निवर्तते। शशविषाणादेरत्यन्ताभावः, न प्रागभाव इति चेत्, न; अभावद्वैविध्याभ्युपगमात्तथा च सूत्रम्—"प्रागुत्पत्तेरभावोपपत्तेश्च" (न्या० सू० २।२।१२) इति, चशब्दोऽवधारणार्थ इतरेतराभावस्यापि प्रागभावेऽन्तर्भावात्। ये तु चतुर्विधमभावमिच्छन्ति, ते चशब्दं समुच्चये व्याचक्षतो तन्मतेऽपि नावश्यं प्रागभावस्य निवृत्तिर्मुक्तस्य दुःखादिप्रागभावाऽनिवृत्तेः, तन्निवृत्तौ हि मुक्तस्यापि दुःखाद्युदयप्रसंगः स्यात्। न चासावप्यत्यन्ताभावः, स्वभावमुक्तत्वप्रसंगात्, ईश्वराकाशादिवत्। ततोऽपवर्गार्थं प्रयासो व्यर्थः स्यात्। तस्मात् प्रागभावस्य प्रध्वंसस्य वा न सर्वस्य निवृत्तिः, किं तु यस्यैव तत्प्रतियोग्युत्पादका हेतवः सन्ति, तस्यैव निवृत्तिरिति कोऽत्र विरोधः ?

## ❀ अकृतकस्यापि नाशाशङ्का ❀

नन्वेवं भावस्यापि कृतकस्य सर्वस्यापि नाशोऽकृतकस्य त्वनाश एवेत्ययं नियमो न स्यात्, अकृतकोऽपि कश्चित्कुतश्चिद् विनश्यति। कृतकोऽपि कश्चिद्धेत्वभावान्न विनंक्ष्यतीति।

## ❀ तत्खण्डनम् ❀

स्यादेतदेवं यद्यकृतकस्यापि भावस्य निवर्तको हेतुः कदाचित् केनचिदुपलब्धः, कृतकस्य वा यदि निवर्तको हेतुर्नैवोपलभ्यते। तथा हि—द्रव्यस्य तावदवयवविनाशस्तत्संयोगविनाशश्च निवर्तकौ हेतू प्रमाणेन प्रतिपन्नौ, तयोरन्यतरोऽपि हेतुराकाशात्मादेर्न सम्भवति, निरवयवत्वात्। कृतकस्य तु द्रव्यस्य सर्वस्य सावयवत्वादवश्यं कदाचित् कुतश्चिदवयववियोगः सम्भवति घटादिवदिति। एवं गुणादिषु कृतकाकृतकवर्गयोर्नाशहेतूनां सम्भवासम्भवौ प्रमाणतः साधयितव्यावेवेति।

## ❀ नाशस्य सहेतुकत्वाहेतुकत्वाशङ्का ❀

सहेतुकत्वे तावन्नाशस्य निवर्तकहेत्वसम्भवादनाशित्वं युक्तम्, निर्हेतुकत्वे तु सर्वनाशानां नाशित्वमपरिहार्यम्। अकृतकत्वान्न नाशित्वम्, खपुष्पाद्यभाववदिति चेत्, तद्वदेव तद्दर्शनादित्वप्रसंगः। ततः खपुष्पादिवन्न कदाचिद् भाव उपलभ्येत। तद्विरोधिनः सर्वदावस्थानात्। अविरोधित्वे च भावतन्नाशयोः सर्वदा सहभावः स्यादिति।

## ❀ तन्निराकरणम् ❀

नन्वेतद्भदन्तेन स्वयमेवाशंक्य परिहृतम्, यस्मादुक्तम्—

"अहेतुत्वेऽपि नाशस्य नित्यत्वाद्भावनाशयोः ।
सहभावप्रसंगश्चेदसतो नित्यता कुतः ॥" ( प्र० वा० १।२७६ )

नित्यानित्यविकल्पो हि न नाशे सम्भवति, तयोर्वस्तुधर्मत्वात्। नाशस्य चाकिंचित्त्वादिति,[1] तदयुक्तम्; पश्चाद् भवतोऽकिंचित्त्वायोगात्। अभवने वा न कदाचिन्नष्टो भावः स्यात्, न ह्यसिद्धनाशो नष्टो नाम, प्रत्युत्पन्नावस्थायामिवेति ।

## ❀ नाशे नास्तिव्यवहाराभावस्तन्निरासश्च ❀

अत्राह—न वै विनाशो नास्त्येव, स तु नास्ति यो भावस्य भवति । भाव एव क्षणस्थायी नाशः, तमस्यमन्दस्वभावमूर्ध्वं व्यवस्यति, न प्राग्दर्शनेऽपि, पाटवाभावात्। तद्वशेन पश्चाद् व्यवस्थाप्यते, विकारदर्शनेनेव विषमशैरिति। तदेतदप्यसंगतम्; यदि हि नाशो नास्ति, तत्किमुच्यते—स तु नास्ति यो भावस्य भवतीति ? भावस्यैव हि विनाशो भवन्नुपलभ्यते, न त्वन्यस्य कस्यचित्। न च भाव एव नाशः, तस्य भावप्रतिषेधलक्षणत्वात्। न हि भावः स्वरूपेण नष्ट इति प्रतीयते ।

## ❀ नाशस्य पाटवाभावनिरासः ❀

यच्चोक्तम्—दर्शनेऽपि पाटवाभावान्न प्राग्व्यवस्यतीति, तन्न; यदि भावस्य दर्शनमेव नाशदर्शनं स्यात्, तस्य पटुत्वं कुतो न ? अपटुत्वे हि भावव्यवसायो न स्यात्। अथ भावेऽस्ति तस्य पाटवम्, ननु किं तस्य भिन्नो विषयो येनैकत्र पाटवमन्यत्रापाटवमिति ? तथा च न भाव एव नाशः स्यात्। न च नाश इति संज्ञाकरणादेव भावो भावस्वरूपं जहाति, अत्यक्तस्वरूपश्च कथं न प्रागिवोपलभ्येत ?

---

१. कीर्तेर्भणितिरियम्—

"भावे ह्येष विकल्पः स्याद् विधेर्वस्त्वनुरोधतः ।
न भावो भवतीत्युक्तमभावो भवतीति न ॥" ( प्र० वा० १।२८० )

"अपेक्षेत परं कार्यं यदि विद्येत किञ्चन ।
यदकिञ्चित्करं वस्तु किं केनचिदपेक्ष्यते ॥" ( प्र० वा० १।२८१ ).

## ❀ नाशस्य विकारनिरासः ❀

विकारदर्शनेनैवेत्येतदप्यसम्बद्धम्, नाशस्याकिंचित्त्वेन विकारासम्भवात्। विकारकारी च कथमकिंचिदित्युच्यते ? भावविकार एव नाशविकारः, तयोस्तादात्म्यादिति चेत्, किं सर्व एव भावविकारो नाशव्यवस्थापकः ? किं वा कश्चिदेवेति ? सर्वश्चेत्, न; अदृष्टत्वात्। न हि यतोऽपि विकाराद्भावस्य स्थितिं लौकिका व्यवस्यन्ति, ततोऽपि विनाशमिति। उत्तरविकल्पा तु कश्चिदेव भावविशेषो नाशः स्याद्विषवत्। क्षणस्थायित्वाच्च क्षणादूर्ध्वं स्थित्यभावोत्पत्तेः कथं स तु नास्ति यो भावस्य भवतीत्युच्यते ?

## ❀ भावः स्वयमेव न तिष्ठति इत्युक्ते सामञ्जस्यम् ❀

ननु स्थित्यभावोऽपि न तस्य भवत्यर्थान्तरानार्थान्तरविकल्पतोऽसम्भवात्। तस्मादित्थंस्वभावोऽसौ स्वहेतोरुत्पन्नो येन स्वयमेव न तिष्ठतीति। स्वयं न तिष्ठतीति कोऽर्थः ? किं तदवस्थ एवानुपलभ्यः ? किं च हेत्वन्तरानपेक्षः स्वयं नाशमनुभवतीति ? तदवस्थ एवानुपलभ्यत इति चेत्, कुत इदममन्त्रौषधमिन्द्रजालं भावेन शिक्षितम्, यदयमनुत्पन्नविनाशोऽव्यवधानादूरस्थानस्तदवस्थेन्द्रियादेरेव पुरुषस्य कदाचिदध्यक्षो[1]ऽत्यक्षश्चेति ? [2]को ह्येवं श्रद्दधीत प्रत्युत्पन्नावस्थायामेव सन् भावः पश्चात् त्वसन्, न च पश्चान्नश्यतीति ? अथ स्वयं पश्चान्नाशमनुभवति, स नाशोऽर्थान्तरम् ? अनर्थान्तरं वेति ? अहेतुकनाशवादेऽपि समो दोष इति।

## ❀ कीर्तेरत्र शङ्कापरिहारः ❀

नन्वेतदप्याशंक्य परिहृतम्, यदाह--

"स्वतोपि भावे भावस्य विकल्पश्चेदयं समः।
न तस्य किंचिद्भवति न भवत्येव केवलम् ॥"

निर्हेतुकत्वेऽपि नाशस्य तत्त्वान्यत्वविकल्पः समस्तुल्यो दोषस्तदन्योत्पादे भावः किं न दृश्यते ? अनन्यत्वेऽपि स एव भवतीति सुतरां दृश्यते। अत्रोत्तरम्--न तस्य किंचिद्भवतीत्यादि। न ह्ययं विनाशोऽन्यो वा कश्चिद्भावस्य भवतीत्याह, किं तर्हि ? स एव भावो न भवति।

---

१. अत्यक्षः = परोक्षः।

२. अस्यालोचना कृता ज्ञानश्रिया ( ज्ञा० नि० पृ० १३२ )।

यदि हि कस्यचिद्भावं ब्रूयात्, भावोऽनेन निवर्तितः स्यात्। तथा च भावनिवृत्तौ प्रस्तुतायामप्रस्तुतमेवोक्तं स्यान्न हि कस्यचिद्भावेन भावो न भूतो नाम तदायमभूतो यदि स्वयं न भवेदिति।

## * तस्यायुक्तत्वोपपादनम् *

सत्यमाशंकितम्, न तु परिहृतम्, तथा हि—यदि न तस्य किंचिद् भवति, ततः प्रतिषेधोऽपि तस्य न भवतीत्यप्रतिषेधस्वरूपस्तदवस्थत्वात्प्रागेवोपलभ्येत।

ननु स एव भवतीत्युक्तम्, सत्यमुक्तमिदमयुक्तं तूक्तम्; प्रमाणपरिदृष्टस्यापह्नवाऽयोगात्। न हि प्रत्यक्षेणोपलभ्यमानो अग्निः अग्निरेवायं न भवतीति युक्तम्। क्षणमात्रमेवोपलभ्यत इति चेत्, क्षणान्तरे किं तस्य ज्ञानम्? न किंचिदिति चेत्, तत्किं नोपलभ्यते? स्वयं नोपलभ्यते स्वभाव इति चेत्, प्रागपि तर्हि नोपलभ्येत, शशविषाणादिवत्। पश्चादेव भावोऽनुपलभ्यस्वभाव इति चेत्, नन्वेवं भिन्नकालत्वादुपलभ्यानुपलभ्यस्वभावयोः कथमैक्यम्?

किं च—

"अभावो यदि पश्चान्न भावस्तस्य किमिष्यते।
सोऽपि न प्रतिषेधो यमभावः किं निषिध्यते॥"

यश्च भावस्य पश्चादभावः, स एव नाश इत्युच्यते। कथं भावस्य विनाशोऽन्यो वा कश्चिन्नोच्यते। अथ भावस्य विनाश उच्यते, किं तु स भवतीति नोच्यते। भवतीत्यभिधानेऽपि को दोषः? भाव एव स्यादिति चेत्, तत्किमिदानीमभिधानादेवार्थस्य रूपपरिवर्तो भवति? यदि भावोऽत्र जायत इत्येवमुच्यते, जन्माप्यभावस्य कुत इति चेत्, कादाचित्कत्वाद्भाववत्। अकादाचित्कत्वे तु प्रत्युत्पन्नावस्थायामप्यभावः स्यात्।

यच्चोक्तम्—यदि हि कस्यचिद्भावं ब्रूयान्न भावोऽनेन निवर्त्तितः स्यादिति, तदप्ययुक्तम्; वचनस्य ज्ञापकत्वात्। न हि वचनेन किंचिन्निवर्त्यते जन्यते वा, किं त्वभूतपूर्वकः कुलालादिभिर्यथा घटो जन्यते, तद्वदभूतपूर्वः स एव मुद्गरादिभिर्निवर्त्यत—इत्यागोपालांगनादि प्रसिद्धमेतदन्वयव्यतिरेकप्रतीतेरुभयत्राप्यविशेषादिति। अथायमभिप्रायः—यदि कस्यचिद्भावं ब्रूयात्, तदा न भावोऽनेन निवृत्तः ख्यापितो भवेदिति। सत्यमेव तद्; यदि कस्यचिद्भावं भावान्तरस्योत्पादं ब्रूयात्, तदा न भावनिवृत्तिरुक्ता भवति। यदा तु तन्नि-

वृत्तेरेव भावं ब्रवीति, तदा कथं भावनिवृत्तौ प्रस्तुतायामप्रस्तुताभिधानं न भवति ? न तस्य किंचिद्भवतीति अभिदधतो हि भावनिवृत्तौ प्रस्तुतायामप्रस्तुताभिधानं प्रसक्तम् तन्निवृत्तेरनभिधानात् ।

यत्पुनरेतत्—तदाऽयमभूतो यदि स्वयं न भवेदिति, तदप्ययुक्तम्; स्वयमपि ह्यनुत्पन्नविनाशः कथमभूतः, प्रत्युत्पन्नावस्थायामिव न ह्यनुत्पन्नरागः स्वयमेव रक्तो भवति—इत्येवम्प्रकारकमभिधानं मतिमता केनचित्प्रमाणीक्रियते । तस्माद्यथा प्रागरक्तः कारणान्तराद्रागोत्पत्तावेव रक्तो भवति, तथा प्रागनष्टः कारणान्तरान्नाशोत्पत्तावेव नष्टो भवतीति ।

## ❀ न भवतीति प्रसज्यप्रतिषेधमात्रोपवर्णनम् ❀

ननु न भवतीत्ययं प्रसज्यप्रतिषेधो न कस्यचिद्भावाभिधायी, पर्युदास एवान्यथा स्यात् । न च सोऽपि युक्तः, कस्यचिदप्रतिषेधात् । यदि हि किंचिन्निवर्त्येत, तदा तद्व्यतिरेकि संस्पृश्येत तत्पर्युदासेन, तच्च नास्ति सर्वत्र निवृत्तिर्भवतीत्युक्ते कस्यचिद्भावस्यैव प्रतीतेः । तथा चानेनार्थान्तरभाव एवोक्तः स्यान्न तयोः परस्परं विवेकः । अविवेके च न पर्युदासः । तदेवं व्यतिरेकाभावादन्वयोपि न स्यात्तस्यैकस्वभावस्थितिलक्षणत्वात् । स्थितिश्च तदन्यविवेके सति स्यात्स च नास्तीत्यप्रवृत्तिनिवृत्तिकं जगत् स्यात् । तस्माद्यस्य नाशो भवतीत्युच्यते, स स्वयमेव न भवतीत्युक्तं स्यादिति ।

## ❀ तत्खण्डनम् ❀

तदेतदप्ययुक्तम्, यो हि अभावं नाऽभ्युपगच्छति, तस्यैव प्रसज्यपर्युदासानुपपत्तावुक्तन्यायेनाप्रवृत्तिनिवृत्तिकं जगत् प्रसज्यते, नास्माकम् । यदि ह्यभावोऽभ्युपगम्यते ततः सोऽवश्यं भावलक्षणत्वाभ्युपेयोऽन्यथा हि भाव एवाभावः स्यात् । न च पर्यायाभिधानादेव प्रतिषेधसिद्धिः, न हि घटादेः कलशादिशब्दाभिधानेन कश्चिदर्थातिशयः सिध्यति । न चैकात्मनोंऽशभेदोऽप्यस्ति येन कश्चिदेवांशः प्रतिषेधविषयः स्यान्निर्विषयत्वे च प्रतिषेधस्याऽप्रामाण्यमेव स्यात् । ततश्चानित्यतादिसिद्धिरवास्तवी स्यात् । भेदे तु भावाभावयोस्तच्छब्दावप्यर्थवन्तौ स्याताम् । प्रसज्यपर्युदासभेदोऽप्यस्ति—प्रसज्यस्याभाव एव विषयः, पर्युदासस्य तु भावान्तरमिति । भावयोः परस्परविवेकोऽपीतरेतराभावस्तत्क्रोडीकृतो हि भावो भावान्तरविविक्त इत्युच्यते । यद्यप्यभावोपि भावविविक्तः, तथाप्यसौ न पर्युदासविषयः, तद्विविक्तस्यापि तस्य तदभावरूपत्वात् ।

## ॐ अभावानवस्था तत्परिहारश्च ॐ

ननु यदीतरेतराभावोपि भावादर्थान्तरम्, ततः तद्व्यावर्तकोऽपर इतरेतराभावोऽभ्युपेयः, पुनस्तद्व्यावर्तकोऽपर इत्यनवस्थेति। प्रदीपप्रकाशवन्नानवस्थेत्येके। वयं तु पश्यामः—तत्रानवस्था नाभ्युपगम्यते, यत्रानवस्थया किंचिद् दृष्टं विरुध्येत। न चात्र दृष्टं किंचिद्विरुध्यते। यत्तावद् घटस्य पटादिभ्यो व्यावृत्तिः, तयैव घटः पटादिभ्यो व्यावृत्तः सिद्धस्तत्र व्यावृत्त्यन्तरानवस्थया न किंचिद्विघटितम्। व्यावृत्तिपरम्पराग्रहणोपक्षीणशक्तित्वाद्वस्तु व्यावृत्तं न सिध्यतीति चेत्, न; विशेषविशेषणानामपि ग्रहणानभ्युपगमात्। अथ चानिर्विकल्पेन [1]मेचकज्ञानेन व्यावृत्तिः, व्यावृत्त्यानन्त्यमपि गृहीतमिति।

## ॐ व्यावृत्तिवैयर्थ्याशङ्का तन्निरासश्च ॐ

[2]ननु स्वरूपेण तद्वस्तु व्यावृत्तम्? अव्यावृत्तं वा? यदि व्यावृत्तम्, तदाऽनर्थिकाऽन्या व्यावृत्तिः। न चेद् व्यावृत्तम्, वस्तुसंकरप्रसंग इति। स्वरूपेणेति कोऽर्थः? किं व्यावृत्तिं विना? किं वा व्यावृत्तिव्यतिरिक्तेन रूपेण? व्यावृत्तिं विनेति न युक्तम्, व्यावृत्तेर्नित्यधर्मत्वात्। यो हि धर्मः कदाचिद् भवति, तेन विना अन्यथा धर्मी व्यपदिश्यते, यथा कुण्डलेन विना पुरुषोऽकुण्डलीति, नाशात्प्रागनष्ट इति। न च वस्त्वन्तराद् व्यावृत्तिविहीनं वस्तु कदाचिदस्ति, यथा न गोत्वविहीनोऽस्ति गौर्नौष्ण्यविहीनोऽग्निरिति। अथ व्यावृत्तिव्यतिरिक्तेन रूपेण स्वरूपेण व्यावृत्तमित्यभिप्रेतम्, तदिष्टमस्माकम्, भेदाभ्युपगमात्। न चैवं व्यावृत्तिरनर्थिका, यदि नाम धनव्यतिरिक्तेन रूपेण धनी पुरुषः किमेतावता धनं व्यर्थं भवेत्? तस्मादितरेतराभावोऽपि भावादर्थान्तरमेवेति।

## ॐ निवृत्तेर्भावरूपताशङ्कायाः परिहारः ॐ

यच्चोक्तम्—सर्वत्र निवृत्तिर्भवतीत्युक्ते कस्यचिद्भावस्यैव प्रतीतेरिति, तदप्ययुक्तम्; न ह्युत्पत्तिर्भावस्य लक्षणम्, येन निवृत्तिर्भवन्ती भावः स्यात्, अनुत्पत्तिमतामप्याकाशादीनां भावत्वात्। स्वरूपनिवृत्तिलक्षणा चोत्पत्तिः प्रध्वंसस्येष्यते न तु प्रागसतः सत्तासम्बन्धलक्षणा, कारणसमवायलक्षणा वा।

---

१. मेचकं ज्ञानम्=अनेकविषयं ज्ञानम्।

२. अस्यालोचनं ज्ञानश्रीनिबन्धे (पृ० १४१)।

## ❀ निवृत्तेरादिमत्त्वोपपादनम् ❀

स्वरूपनिवृत्तिरपि आदिमत्येवोच्यते। सा च निवृत्तिरभावस्वरूपेणैवादिमती, भावोपलम्भकाले तद्रूपानुपलम्भात्। आदिमत्त्वाच्च सहेतुकत्वम्। सहेतुकत्वादिमत्त्वमात्रसाधर्म्यान्निवृत्तिर्भवतीत्युच्यते, नैतावन्मात्रेण भावान्तरत्वप्रसक्तिर्नाप्यर्थक्रियाहेतुत्वमात्रेण भावत्वप्रसक्तिः, त्वदुक्तभावलक्षणानभ्युपगमात्। किं तर्हि! भावस्य वस्तुत्वं लक्षणम्? द्रव्यादिष्वनुगतः प्रागभावादिभ्यो व्यावृत्तश्च धर्मो वस्तुत्वमुच्यते, तत्संश्लिष्टासंश्लिष्टत्वेन भावाभावयोर्भेदः। विधिप्रतिषेधप्रधानप्रतीतिविषयत्वेन वा तयोर्भेदः।

## ❀ स्वतन्त्रपरतन्त्रत्वाभ्यां भावाभावयोर्भेदः ❀

स्वतन्त्रपरतन्त्रोपलब्धिभावाद्वा। तथा हि—भावः स्वधर्मेणैव समानासमानलक्षणयोगिभ्यः प्रत्येकं व्यावृत्तः उपलभ्यमानो विवेच्यते—अयं घटोऽयं पट इति, विलक्षणोऽयं विलक्षणोऽयमिति वा। न त्वेवमभावः, प्रतियोगिग्रहणं विनापि स्वधर्मेण प्रत्येकं लक्ष्यते। न खल्वेकत्राप्यानन्त्येनावस्थितानामभावभेदानां प्रत्येकं विशेषः प्रतिभासमानोऽपि लक्षयितुं शक्यते। अतः प्रतियोगिग्रहणत एव प्रत्येकं तद्विशेषोपलब्धिव्यवस्थापनात् परतन्त्रोपलब्धिरभावलक्षणमित्यतो न भाव एवाभावः।

## ❀ भावाभावयोर्लक्षणभेदः सौगतैरपीष्टः ❀

किं च त्वयापि भावाभावयोर्लक्षणभेदोऽभिहितः, तत्कथमेकत्वम्? सर्वार्थानां लक्षणभेदादेव भेदव्यवस्था। ततोऽपि चेन्न भेदव्यवस्थितिः, न कस्यचित् कुतश्चिद् भेदसिद्धिरित्यद्वैतप्रसङ्गः। सर्वशक्तिविरहोपि भावस्य। यदि पश्चाद् भवति, ततोऽवश्यं भिन्नहेतुकोऽभ्युपगन्तव्यः। अथ प्रागप्यस्ति, तदा प्रागपि भावः कार्यं न कुर्यादिति दुरुत्तरः प्रसङ्गः। सर्वशक्तिविरहो हि सर्वाकारप्रतिषेधः, तस्य भवनमयुक्तमिति चेत्, तत्किमिदानीं भावस्य सर्वशक्तिविरहो न भवत्येव तथा च प्रागिव शक्त एव भावः स्यात्, प्रतिषेधद्वये हि प्रकृत एवार्थः स्यात्, अवृक्षो न भवतीति यथा। स्यादेतत्—भावप्रतिषेध एवेष्यते, स तु कारणाद् भवतीति नेष्यते भवता हि वस्तुतस्तत्त्वान्यत्वभाजा भवितव्यम्। तत्रोक्तं दूषणम्। यस्य तु विनश्यतो भावस्य न किंचिद् भवति, तस्य न तत्त्वान्यत्वविकल्पावकाशोऽस्ति—भावे ह्येष विकल्पः स्याद्विधेर्वस्त्वनुरोधतः।

## ❀ भावस्याभावरूपतासम्भवः ❀

यदपि—अयं भावस्य भावो भवतीत्याह, तदपि भावो न भवतीत्येवोक्तं भवति। एवं हि स निवर्तितो भवति प्रतिषेधे विधेरसम्भवात्। अत एवास्य विनाशे कश्चिन्न हेतुस्तथा हि—

"अपेक्ष्येत परः कार्ये यदि विद्येत किंचन।
यदकिंचित्करं वस्तु किं केनचिदपेक्ष्यते॥"

सति हि कार्ये कारणं भवति। न च नश्यतः किंचित्कार्यमिति।

तदप्ययुक्तम्; भावप्रतिषेधो हि यदि कादाचित्कः, ततः कथं न सहेतुकः? सर्वदा चेन्न कदाचिदप्यप्रतिषिद्धं वस्तु स्यादित्युक्तम्।

## ❀ तत्त्वान्यत्वविकल्पस्याद्वेषकता ❀

तत्त्वान्यत्वविकल्पश्च तवैष दोषकृन्नास्माकम्। भेदे हि पदार्थवैचित्र्योपलम्भात् कश्चित्कीदृशो धर्मस्तेन घटविनाशो घटस्य विरोधी धर्मः स्वहेतुनियमितस्वभाव उत्पन्नः, तस्मिन्नुत्पन्ने कथं घटोऽस्तीत्युच्यते? नकुलादिविरोध्युत्पादेपि सर्पादिषु सद्व्यवहारो दृष्ट इति चेत्, न; नकुलादीनामुपचारेण विरोधित्वात्, तत्साधनादन्नप्राणवत्। मुख्यस्तु भावाभावयोरेव विरोध इति।

यत्पुनरेतत्—भावे ह्येष विकल्पः स्यादिति, तदपि स्ववचनविरोधादयुक्तम्। त्वया हि भावाभावयोस्तादात्म्यमुक्तम्, तच्च तत्त्वानभ्युपगमे विरुध्यते। तत्त्वाभ्युपगमेऽपि लक्षणभेदो विरुध्यते। यस्य हि लक्षणभेदेन भेद उच्यते, तस्य कथं तत्त्वं तत्त्वानिर्वचनीयत्वं वा?

यदप्युक्तम्—अभावो भवतीति ब्रुवतापि भावो न भवतीत्येवोक्तं भवतीति, तदपि यत्किंचित्। न ह्यभिधाने विप्रतिपत्तिः, किं तर्हि? अर्थे। नञर्थ एव तावद्विचार्यते—किमस्ति? नास्ति वा? भावादर्थान्तरमनर्थान्तरं चेति। निश्चितस्य ह्यर्थस्य क्रियाविशेषणत्वेन? कारकविशेषणत्वेन वा? व्यवहितान्वयेनाप्यभिधानं युक्तम्। न च त्वन्मते नञर्थः कश्चिदस्ति, उत्तरपदार्थव्यतिरेकाव्यतिरेकासम्भवात्। भावो न भवतीति कस्यात्र प्रतिषेधः? किमाख्यातार्थस्य? नामार्थस्य वा? उभयोर्वेति? यद्याख्यातिकार्थप्रतिषेधः, तदा भावो न प्रतिषिद्धः स्यात्—न हि देवदत्तो न भुङ्क्त इति भोजनक्रियाप्रतिषेधाद् देवदत्तस्यासत्त्वं गम्यते। अथ नामार्थस्य प्रतिषेधः, तथाप्यप्रतिषिद्धा क्रिया कंचिदाश्रयमाक्षिपति। तेनाभावाऽभावो नाम कश्चिद्भवतीति गम्यते। अथोभयोः प्रतिषेधः, स यदि भावकाले, तदा यदैव भावो भवति,

तदैव भावो न भवतीति स्यात्। अथोत्तरत्र तदभावाभावयोः क्रमवत्त्वात्सिद्धं भिन्नहेतुकत्वम्।

यच्चोक्तं सति हि कार्ये कारणमिति, तदप्यसत्; अभावानुत्पत्तौ हि तदवस्थ एव भावः, कथं नष्टो नाम ? नन्वर्थान्तरोत्पत्तावपि तदवस्थो भावः। कथं नष्टो नाम ? न; भावस्य भावतादवस्थ्यलक्षणत्वादतादवस्थ्ये चोत्पन्ने, कथं भावस्तदवस्थः ? कार्यमप्यत एव न करोति। सर्वशक्तिविरहो ह्यस्याभावो न त्वर्थान्तरमात्रम्। नन्वभावस्य सर्वभावधर्मविवेकलक्षणत्वादुत्पत्तिर्न युक्ता। सा हि भावधर्म एवेति, न; ज्ञेयत्वादेर्भावधर्मस्याऽभावेऽपि सद्भावात्, अन्यथा ह्यसावज्ञात एव स्यात्। प्रतिषेधे विधिः कथमिति चेत्, ननु भावस्यासौ प्रतिषेधानात्मनः सर्वशक्तिविरहोऽप्यसौ भावस्यैव न तु स्वात्मन एव स्वयं, स्वात्मोपलम्भादिकरणसमर्थत्वात्। यथा प्रकाशस्तमस एव विरोधी, नात्मन इति।

## * स्वयं न भवतीति वाक्यार्थविकल्पः *

स्वयं न भवतीति कोऽर्थः ? (१) किं स्वयमेवायमभावः ? (२) किं वा स्वयमभवनं करोति ? (३) उत भवनं न करोति ? (४) किं वा न किंचित्करोति ? (५) स्वयं वा न किंचित् ? (६) किं वा स्वयमभावी भवतीति ?

(१) न तावद्भाव एव स्वयमभावः सम्भवति, विरोधात्।

(२) नापि स्वयमभवनं करोति, अभवनस्य तत्त्वान्यत्वाऽसम्भवात्।

(३) अथ भवनं न करोति, तदापि विशेषप्रतिषेधाच्छेषाभ्यनुज्ञोपपत्तेरन्यत् किंचित् करोतीति प्राप्तम्।

(४) अथ किंचिदपि न करोति, तत्किमुदासीनो भूत्वा तिष्ठति ? नैवेति चेत्, तत्कथं न किंचित्करोति ? अकुर्वन्नपि न तिष्ठतीति चेत्, तत्किं देशान्तरं वा कालान्तरं वा, अवस्थान्तरं वा याति ? तथा च देशादिव्यापी भावः स्यात्।

(५) अथ स्वयं न किंचित्, तदयुक्तम्; नीलादिस्वभावोऽर्थः प्रतीयमानः कथं स्वयं न किंचिदित्युच्यते ? अथ पश्चादसौ न किंचित्, पश्चादप्यसौ तत्स्वभाव एव न किंचित् ? उतातत्स्वभाव इति ? तत्स्वभाव एवेति चेत्, प्रागपि न किंचित्स्यात्, स्वभावाविशेषात्। अथ पश्चादतत्स्वभावः सन्न किंचित्, अतत्स्वभावः पश्चात् कुतोऽसौ जातः ? स्वहेतुतो हि तत्स्वभावोऽ-

तत्स्वभावाद् व्यावृत्त उत्पन्नः, स कथं पश्चादप्यतत्स्वभावः स्यात् ? न हि लघुस्वभावाद् व्यावृत्तः पाषाणः कदाचिल्लघुः स्यादिति ।

(६) एतेन स्वयमभावी भवतीति प्रत्युक्तम्, स्वयं ह्यभावाद् व्यावृत्तोऽसौ स्वहेतुभ्य उत्पन्नः, कथं कदाचिदभावी भवेदिति ? तस्मात्स्वहेतोरयं भावस्वभाव उत्पन्नः कारणान्तरादेवाभावी भवति। यथा शुक्लः पट उत्पन्नः कारणान्तरादेव कृष्णीभवतीति ।

एवं तर्हि भाव एवान्यथान्यथा भवति, नाभावोऽन्योऽस्ति। न; परिणामवादप्रसंगात्। स च सत्कार्यत्वे सति युज्यते। तस्य चानुपपत्तिं वक्ष्यामः। पूर्वस्वरूपापरित्यागे च कथं भावोऽन्यथा भवति ? तद्रूपस्याप्युपलम्भप्रसंगात्। तत्परित्यागे वा, स एवाभावः पश्चादुत्पन्नस्तस्य रूपपरित्यागलक्षणत्वादित्युक्तम्। प्रतीयमानश्चाभावः कथं नास्ति ? न चेत्प्रतीयते किंविषयस्तर्हि प्रतिषेधः ? न ह्यसदित्यनेन तदेव वस्त्वभिधीयते, विविधविषयत्वाद्वस्तुनः। सदसच्छब्दयोः पर्यायत्वाप्रसिद्धेश्च। नाप्यर्थान्तरम्, तस्यापि वस्तुत्वेन विधेर्विषयत्वादवस्तु च वस्तुनोर्थान्तरं प्रतीतिगोचरापन्नं त्वया नेष्टम्। निर्विषयश्च प्रतिषेधोऽप्रमाणमेव स्यात्ततोप्रतिषिद्धं वस्तु सदा स्यात्, अप्रमाणतः प्रतिषेधासिद्धेः। सर्वप्रतिषेधप्रसंगो वा, वचनमात्रस्याप्रमाणस्य सर्वत्र सम्भवात्। अर्थान्तरविषयोऽपि प्रतिषेधः कथं वस्तुप्रतिषेधक इति चेत्, तदभावाभिधायी कथं न तत्प्रतिषेधकः ? तयोरेव भावाभावयोरित्थंधर्मत्वाद्, यदेकविधानेनेतरत्प्रतिषिद्धं भवति ।

## ❀ अप्रस्तुताभिधाननिरासः ❀

अत एव च नाप्रस्तुताभिधानप्रसंगः, एवमेव हि भावनिवृत्तिः प्रस्तुता भवति—यदि तन्निवृत्तिरेवाभिधीयते। अन्यथा हि भावनिवृत्तिप्रस्तावोऽपि न स्यादित्यप्रयोग एव प्रतिषेधस्य, तदर्थाभावात् ।

विकल्पाकारः प्रतिषेधार्थ इति चेत्, तत्किमिदानीं यत्किंचिदशंकितेन वक्तव्यमित्ययं विधिरनुष्ठातुं भवताभिप्रेतः ? स हि विकल्पाकारो वस्तुनोऽर्थान्तरं कथं तदभिधानाद्वस्तु प्रतिषिद्धं भवति ? न हि वस्त्वन्तरेऽभिहिते वस्तु प्रतिषिद्धं नाम। अवस्तु चेद्विकल्पाकारः, तथापि कः सम्बन्धः ? येन तदभिधानाद्वस्तु प्रतिषिद्धं स्यात्। प्रतिषेध्यप्रतिषेधनलक्षणः सम्बन्ध इति चेत्, सिद्धं तर्हि नः समीहितम्, नाममात्रे हि विवादः। अथ वस्तुधर्मः कश्चित् प्रतिषेधार्थः, स तस्माद्भिन्नः ? अभिन्नो वा ? यदि भिन्नः, तदास्म-

न्मतानुप्रवेशः, अथाभिन्नः, तदा तदेव वस्तु प्रतिषेधार्थः स्यान्न चैतद्युक्तम्, न हि घटोऽस्तीत्यस्य योऽर्थः, स एव घटो नास्तीत्यस्याप्यर्थ इति। वस्तुनोऽवस्थाविशेषः प्रतिषेधार्थः इति चेत्, न; तस्यापि भिन्नाभिन्नत्वासम्भवात्। अर्थान्तरमिव प्रतिभासमानः, तथाभिधीयत इति चेत्, समारोपितार्थः। तर्हि प्रतिषेधस्तथा चाप्रमाणमेव स्यात्। रज्ज्वादिषु सर्पादिविधानवद् भेदः समारोप्यते, नार्थोऽपीति चेत्, प्रतिषेधस्य को विषयः? अर्थः? भेदो वा? यद्यर्थ एव, ततः पुनरायातं विधिप्रतिषेधयोरेकविषयत्वम्। अथ भेदः, ततः कथं न समारोपितविषयत्वेन प्रतिषेधस्याप्रामाण्यम्? समारोपितविषयस्यापि पारम्पर्येणार्थप्रतिबन्धान्नाप्रामाण्यम्, मणिप्रभायामिव मणिज्ञानस्येति चेत्, किं विधिप्रतिषेधयोरेकस्मिन्नेवार्थे प्रतिबन्धः पटवस्त्रशब्दयोरिव? किं वा शुक्लकृष्णशब्दयोरिव प्रतिनियतार्थप्रतिबन्ध इति? प्राचीने पक्षे, कथं न पर्यायत्वम्? पर्यायाभिधाने च कथं वस्तु प्रतिषिद्धं भवति? द्वितीये तु पक्षे शुक्लकृष्णयोरिव सिद्धं भावाभावयोरन्यत्वम्। अथापि नीलोत्पलशब्दयोरिव एकस्मिन्नर्थे प्रतिबन्ध इति, न; तत्रापि विशेषणभेदादिति समर्थितम्। यदि च नीलोत्पलशब्दयोरिवैकस्मिन्नर्थे धर्मभेदमाश्रित्य विधिप्रतिषेधौ प्रवर्तयेताम्, तदा देशकालभेदेनैव प्रवृत्तिर्न स्यान्न हि भवति प्रागत्र देशे च यन्नीलम्, तदेव पश्चादन्यत्र चोत्पलमिति। सक्रियनिष्क्रियवदिति चेत्, न; क्षणिकत्वप्रसङ्गात्, न हि क्षणिकत्वे क्रमेणानेकधर्मयोग एकात्मनः सम्भवति। भिन्नहेतुकत्वं च सक्रियत्वनिष्क्रियत्वयोरिव स्यात्। अथ योऽन्यदान्यत्र प्रतिषेधः, तस्यानुपलम्भ एव विषयो यस्मादनुपलब्धिरेवार्थानामसत्त्वमिति। कोऽयमनुपलम्भो नाम? यद्युपलम्भाभावः, स कथं घटादिप्रतिषेधस्य विषयः? न ह्यन्यस्याभावाभिधानेनान्यत्प्रतिषिद्धं भवति, अतिप्रसङ्गात्। नाप्यनुपलम्भात् कस्यचिद्भावः सिद्धः। व्यवहारस्यैव सिद्धिरिति चेत्, सविषयस्य? निर्विषयस्य वा? सविषयस्य चेत्, कोऽसौ विषयः? स एव विचारयितुं प्रारब्धः। निर्विषयव्यवहारस्य तु साधनं न प्रमाणमित्युक्तम्। किं च यत् तन्नास्तीति ज्ञानं घटाद्यभावव्यवहारसाधनम्, तत्किं सविषयम्? निर्विषयं वा? निर्विषयं तावन्न साधनमनैकान्तिकत्वात्—सत्यपि घटादौ कुतश्चिन्निमित्तान्नास्तीति मिथ्याज्ञानं दृष्टम्। अथ सविषयम्? कोऽस्य विषयः? न तावद् घटादिरेव, तस्य देशकालान्तरव्यवहितत्वादस्तीति ज्ञानविषयत्वाच्च। नाप्यर्थान्तरमात्रम्, अतिप्रसङ्गात्। अथ तद्विविक्तः प्रदेशादिरेव घटाद्यनुपलम्भविषयः, स एव वा घटाद्यनुपलम्भः, तदभावव्यवहारविषयत्वात्। न भूतलादिः वस्त्वन्तरत्वान्न वस्त्वन्तरे प्रतिपादिते, प्रतीते वा, घटादिवस्त्वभूत-

**तत्सिद्धमेतच्छरीरादिव्यतिरिक्त आत्मा नित्यो व्यापक इति। नित्यत्वं कुत इति चेत्, (भावत्वे सति) अनादित्वात् गगनवदिति। तदेव**

मिति प्रतिपादितं प्रतीतं वा भवति। एवं हि वस्त्वन्तरमेव नाश इत्यस्मिन्मते यद्दूषणमुक्तम्, तत्स्वयमेव परिहृतं स्यात्। न च तद्विवेकाप्रतीतौ तद्विविक्तग्रहणं सम्भवति। तद्विवेकश्च न भूतलादिस्वरूपमेव, विशेषणत्वात्, तत्संसर्गवत्। तत्संसर्गोऽपि भूतलादिस्वरूपमेवेति चेत्, न; विशेषणस्य विशेष्यादर्थान्तरत्वाद्, दण्डादिवत्। अभेदे तु न प्रमाणं किंचिदस्ति। यदि च घटोऽत्र नास्तीत्यस्य ज्ञानस्याभिधानस्य च भूतलमेव विषयः, न ततोऽन्यो घटाभावः, तदाऽत्र घटोऽस्तीत्यस्यापि भूतलमेव विषयः स्याद्, घटोपि ततोऽन्यो न कल्पनीयस्तथोत्पादेन विशिष्टं भूतलमेवोभयत्राप्यस्त्विवति। न चैतद्युक्तम्, तस्माद् घटसद्भाववद् घटासद्भावोऽपि भूतले ततोऽन्यः प्रतिभाति। एवं हि विधिप्रतिषेधयोः प्रयोगोऽप्यर्थवान् भवेत्।

## * तमस आलोकाभावरूपता *

समस्तालोकाभावे, स्वगृहादिषु तमोऽन्धकार इति प्रतिभाति। न तत्रालोकविविक्तं किंचिद्वस्त्वन्तरं गृह्यते। स्पर्शादिस्तु नयनाविषयत्वादिन्द्रियान्तरेण तद्विविक्तग्रहणेऽपि नाभावसिद्धिः, अन्धादेरप्यालोकाभावपरिच्छेदप्रसंगात्। अत एव नालोकविविक्तज्ञानग्रहणादप्यालोकाभावसिद्धिः, तस्यापि नयनाविषयत्वादन्धादेरपि तथाभूतज्ञानग्रहणात्। गृहादिरूपं त्वालोकाभावादेव न प्रतिभाति। कृष्णं तम इति प्रतिभासनाद्रूपविशेष एव तमः, तस्य लोकविविक्तस्य ग्रहणमालोकानुपलम्भ इति चेत्, न; कृष्णरूपस्यालोकेन विना ग्रहीतुमशक्यत्वात्। तथा प्रतिभासश्च निमीलिताक्षस्याप्यस्ति, न च तावतैवालोकाभावनिश्चयः, सन्देहदर्शनात्। यदा तु चक्षुरुन्मील्येक्षते, तदा निस्सन्दिग्धस्तदभावनिश्चयो भवति। यथा चालोकग्रहणं प्रति चक्षुरालोकमन्यन्नापेक्षते, तथा तदभावग्रहणेऽप्यालोकं नापेक्षते[1]। यो हि भावो यावत्या सामग्र्या गृह्यते तदभावोऽपि तावत्यैवेति। तदेवं भावाभावयोस्तादात्म्यानुपपत्तेः सहेतुको नाशस्ततश्च स्फटिकादिषु प्रतिक्षणं विनाशकारणानुपलब्धेर्न क्षणिकत्वमतस्तत्र प्रत्यभिज्ञानं न भ्रान्तम्। तथात्मन्यपि प्रत्यभिज्ञानमिच्छादीनामेकाश्रयत्वग्राहकं न भ्रान्तम्, अबाध्यमानत्वात्। तदेवमिच्छादीनामाश्रयः शरीरादिव्यतिरिक्तः सिद्ध इति।

१. ज्ञानश्रीनिबन्धे ( पृ० १९३ ) अस्यालोचना द्रष्टव्या।

कथम् ? जातमात्रे जन्मान्तरानुभवसूचकस्मरणलिङ्गस्य हर्षभयशोकस्तन्याभिलाषादेरुपलम्भात् ।

धर्मादेराश्रयसंयोगापेक्षस्य गुरुत्वादिवदाश्रयान्तरे वाय्वादौ क्रियाकर्तृत्वात् अणिमाद्युपेतस्य योगिनो युगपदसंख्यातशरीराधिष्ठातृत्वाच्च व्यापकत्वसिद्धिः । तथा चोक्तम्—

## * आत्मनः परिमाणविचारः *

स किंपरिमाणक ? इति विचार्यते—

एके तावद् बालाग्रशतसहस्रधाकल्पितभागपरिमाणकं[1] मन्यन्ते। तदयुक्तम्, सर्वशरीरेषु सुखदुःखादेरनुपलम्भप्रसङ्गात्। तदाश्रयस्य सर्वत्रासम्भवात्, क्रमेण सर्वत्र सम्बध्यते इति चेत्, न; युगपदपि सर्वशरीरेषु सुखाद्युत्पाददर्शनात्। आशुभावाद्युगपदभिमान इति चेत्, न, नित्याशुसंचारित्वासम्भवात्। कदाचिदेकत्र स्थितौ शेषाः शरीरावयवा निर्जीवाः स्युः । किं चाणुत्वे सत्याशुसंचारित्वं कल्पयितुं युक्तम्। न चात्मनोऽणुत्वसिद्धौ प्रमाणं किंचिदस्ति।

[2]शरीरमात्रपरिमाणत्वमप्ययुक्तम्, देहस्य वृद्धिक्षयाभ्यामात्मनोऽपि वृद्धिक्षयधर्मित्वप्रसङ्गात्, ततश्चानित्यत्वं स्यात्; तस्मादाकाशवद् व्यापकः पुरुषः ।

## * जीवस्य व्यापकत्वे प्रमाणम् *

व्यापकत्वेऽपि किं प्रमाणमिति चेत्, उच्यते—मच्छरीरं मुक्त्वाऽन्यानि मूर्तद्रव्याणि सर्वाणि, मदात्मना संयुक्तानि, मूर्तत्वान्मच्छरीरवत्। धर्मादेः स्वाश्रयसंयोगापेक्षस्य गुरुत्वादिवदाश्रयान्तरे वाय्वादिक्रियाहेतुत्वात्। तथा योगी खल्वणिमाद्यृद्धौ प्रादुर्भूतायां सेन्द्रियाणि शरीराणि असंख्यातानि निर्माय युगपद् भोगान् भुंक्त इति श्रूयते। तच्चैतद् विभौ ज्ञातरि सत्युपपद्यते, नाणौ देहमात्रे वा। यदि च देहमात्रः स्यादात्मा, तदा सावयवो विनाशी च

---

१. वैष्णवमतमेतत् तथा च श्रूयते—
"बालाग्रशतभागस्य शतधाकल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥" (श्वे० उ० ५।९)

२. आर्हतमते शरीरपरिमाणः संकोचविकासशीलो जीवो गीयते—
"जीवो उवयोगमओ अमुत्ति कत्ता सदेहपरिमाणो ।
भोक्ता संसारत्थो सिद्धो सो विस्ससोड्ढगई ॥" (द्रव्य० २)
"प्रदेशसंहारविसर्गाभ्यां प्रदीपवत्" (तत्त्वा० ५।१६)

आत्मनो वै शरीराणि बहूनि मनुजेश्वर।
प्राप्य योगबलं कुर्यात्तैश्च सर्वां महीं चरेत्।
भुञ्जीत विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत्।
संहरेच्च पुनस्तानि सूर्यो रश्मिगणानिव ॥
(म० भा० १२।३००।२७-२८) इति।

---

स्याद्, व्यापकपरमाणुव्यतिरेकेण सर्वद्रव्याणां सावयवत्वविनाशित्वोपलम्भात्। तस्माद्विभुरात्मा, परमाणुपरिमाणानाश्रयत्वे सति नित्यद्रव्यत्वाद्, आकाशवत्।

## जीवस्य नित्यत्वे प्रमाणम्

नित्यत्वं कुत इति चेत्, अनादित्वात्। तदेव कुत इति चेत्, उच्यते—पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात्। न हि सुखदुःखसाधनानुस्मृतिमन्तरेण हर्षभयशोकादेरुत्पत्तिः सम्भवति। दृश्यन्ते च जातमात्रस्यापि हर्षादयः; तैः स्मृतिरनुमीयते, स्मृत्या च संस्कारः, संस्कारेण पूर्वाभ्यासः। स चेह जन्मनि न सम्भवतीति जन्मान्तरभावीति गम्यते, यथा सुप्तप्रतिबुद्धस्य हर्षादयः पूर्वदिनभाविनमभ्यासं गमयन्ति।

नन्वेवं तर्हि दिनान्तरानुभूतवज्जन्मान्तरानुभूतस्य स्मृतिप्रसङ्ग इति, न; तत्संस्कारस्य मरणादिदुःखेनातितीव्रेण विनष्टत्वात्। हर्षभयशोकादिसंस्कारस्य चातिदृढत्वादविनाश इत्येके। वयं तु ब्रूमः—सत्यपि संस्कारे तत्प्रतिबोधकनिमित्ताभावादपि स्मरणं न भवति। यत्र सत्सूद्बोधकनिमित्तेषु स्मरणं न भवति, तत्रावश्यं संस्कारविनाशः कल्पनीयः।

## संस्कारोद्बोधनिमित्तानि

कानि पुनस्तानि निमित्तानि, येभ्यः संस्कारप्रतिबोधो भवतीत्युच्यते—प्रणिधानादीनि। तथा च सूत्रम्—"प्रणिधाननिबन्धाभ्यासलिंगलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः" (न्या० सू० ३।२४१)। सुस्मूर्षया मनसो धारणं प्रणिधानं चित्तसमाधानमेकाग्रतेत्यर्थः। सामान्येनार्थं स्मृत्वा तद्विशेषाननुस्मर्तुमिच्छन् प्रणिधानं करोति। निबन्धस्त्वेकग्रन्थोपयमोऽर्थानाम्। एकग्रन्थोपयमा ह्यर्थाः परस्परं स्मृतिहेतवो भवन्ति आनुपूर्व्याऽन्यथा वेति। अथवा स्मर्तव्यानामुपनिक्षेपः क्वचित्प्रदेशे वस्त्रे ग्रन्थे वाऽन्यत्र वा

निबन्ध इति। अभ्यासः समाने विषये ज्ञानानामभ्यावृत्तिः, ततः पूर्वसंस्कार-प्रतिबोधः संस्कारातिशयोत्पत्तिश्च स्वल्पाभ्यासेन हि ग्रन्थावधारणे पूर्वसंस्कार-प्रतिबोधोऽनुमीयते, गृहीतविस्मृताभ्यासवत्। लिङ्गं धूमादि दहनादेः स्मृति-हेतुः। लक्षणम्—पश्चाद्यवयवस्थं चिह्नं शृङ्गादि गोत्वस्य स्मारकम्। सादृश्यं चित्रादिगतं सिंहादेः। परिग्रहः स्वस्वामिनः। आश्रयो ग्रामणीः, तदधीनस्य स्मारकः, तद्विपर्ययेणाश्रितो व्याख्यातः। सम्बन्धः शिष्याचार्यादीनामन्योन्य-स्मारकः। आनन्तर्यादिति करणीयेष्वर्थेषु क्रमेण स्मृतिः। वियोगाद्—यो येन केन वियुक्तः, स तं स्मरति। एककार्यात् कर्त्रन्तरे स्मृतिः। विरोधाद्विजिगीष-माणयोरेकदर्शनादितरत्र स्मृतिः। अतिशयप्राप्तेः—येन यतोऽतिशयः प्राप्तः, प्राप्तव्यो वा, स तमभीक्ष्णं स्मरति। व्यवधानात्—कोशादिभिरसिप्रभृतीनि। सुखात् तद्धेतुं स्मरति, दुःखहेतुं च दुःखात्। इच्छाद्वेषाभ्यां यमिच्छति, यं द्वेष्टि, तमभीक्ष्णं स्मरति। भयात्—यतो बिभेति, तं स्मरति। अर्थित्वात्—येनार्थी, तं स्मरति। क्रियया—रथेन रथकारम्। रागात्—यत्र स्त्र्यादौ विषये रक्तः, तं स्मरति। धर्माधर्माभ्यां जन्मान्तरानुभूतेष्वपि स्मृतिः।

निदर्शनार्थं चेदं सूत्रम्, स्मृतिनिमित्तानां संस्कारप्रतिबोधकानामपरिसंख्या-तत्वात्। सर्वाणि निमित्तानि धर्माधर्माभ्यामनुगृहीतानि संस्कारप्रतिबोधकानि भवन्ति। तत्प्रतिबन्धकानि चाप्रतिबोधकानि, अत एव कश्चिदेव जातिस्मरो भवति, न सर्वः। तथा च जैगीषव्यप्रभृतीनां योगजधर्मेणानुगृहीतेभ्यः संस्कारे-भ्योऽनेकसहस्रेषु पूर्वजन्मसु यथानुभवं स्मृतिर्भूतेति श्रूयते। इतरेषां तु प्राणिनां जन्मान्तरानुभूतेष्वर्थेषु सामान्यत एव स्मृतिर्भवति, न तु देशकालादिविशेषेणेति, विशेषस्मृतिहेत्वनुग्राहकस्यादृष्टविशेषस्याभावात्, प्रतिबन्धकस्य सद्भावाच्च। तथा चैवमपि स्मृतिरुपलभ्यते यथा—अयं पुरुषः क्वचिन्मया दृष्ट एवेति स्मरामि, क्व दृष्टः कदेत्येतन्न स्मरामि। तथेदं मया भक्षितं क्व कदेत्येतन्न स्मरामीति।

ननु च यदि जन्मान्तरेऽमुकस्मिन् देशे वा काले वाऽमुमर्थमहं दृष्टवानित्येवं स्मृतिर्न भवति, तदा जन्मान्तरानुभूतेषु सुखसाधनादिषु स्मृतिर्भवतीत्यत्र किं प्रमाणम्? उक्तमत्र हर्षादिसम्प्रतिपत्तेरिति। न ह्यननुभूतपूर्वेषु सुखदुःख-साधनविशेषेषु तद्भावानुसन्धानमन्तरेण हर्षादयः सम्भवन्ति। तथा तिर्यञ्चोऽ-प्यपत्यादिवियोगाच्छोकापन्नाः तल्लिङ्गत उपलभ्यन्ते। जातमात्रस्य च बालस्य रुदितेन शोकोऽनुमीयते। सोऽपि पूर्वाभ्यासं गमयति। स्तन्यम्=क्षीरम्, तदभिलाषेण जातमात्रस्यापि बालादेः स्तनदेशोपसर्प्पणं दृश्यते। न च तेनेह

जन्मनि स्तनपानमभ्यस्तमतोऽवगम्यते पूर्वजन्माभ्यासात् प्रेत्येह भवतीति, यथोत्तरदिनेषु पूर्वदिनाभ्यासादिति। एवं पूर्वपूर्वजन्मसु तदभ्यासस्यानुमितानुमानात् सिद्धावनादित्वमात्मनः सिध्यति।

न चैवं तर्हि विडालादीनां पूर्वजन्मस्वपि विडालादिभावोऽनुमातव्योऽन्यथा कथं मूषिकादिष्वभिलाषादिनियमः स्यादिति। सत्यमेवैतत्, न त्वनन्तरजन्मन्येवेति नियमः। यथा विद्याशिल्पादिषु कौशलं पूर्वाभ्यासं सामान्येनैव गमयति, न त्वनन्तरे दिने तृतीये चतुर्थे वाऽभ्यासं गमयति, एवं विडालादीनां मूषिकादिग्रहणे कौशलं पूर्वाभ्यासमन्तरेण न युक्तमित्येतावदनुमीयते। स त्वभ्यासोऽनन्तरे वा जन्मन्यनेकजन्मव्यवहिते वा भवतु, नात्र विशेषहेतुरस्ति।

## ❀ पूर्वसंस्कारनाशाशङ्का तन्निरासश्च ❀

ननु ज्ञानमरणदुःखविरोधी संस्कारः, तस्यानेकजन्मव्यवहितस्य कुतोऽवस्थानम्, प्रतिपक्षज्ञानेनानेकप्रकारेण मरणादिदुःखेन च विनाशात्? न; प्रमाणाभावात्—प्रतिपक्षज्ञानादिनाऽवश्यं संस्कारस्य विनाश इत्यत्र प्रमाणं नास्ति। विस्मरणं तु प्रतिपक्षज्ञानादिजनितसंस्कारेणादृष्टविशेषेण वा प्रतिबन्धेऽप्युपपद्यते। यथा ग्रन्थशिल्पादिसंस्कारस्य तत्प्रतिपक्षसंस्कारेणेति। यदि तु न दृष्ट एव तत्संस्कारः, तदा यावता प्रयासेनापूर्वस्य ग्रन्थादेर्ग्रहणं तावतैव गृहीतविस्मृतस्यापि स्यात्। न चायं नियमोऽस्ति, तस्मान्न ज्ञानमरणदुःखैर्नष्ट एवेति। यस्तु नाशमेवाभ्युपैति, तन्मते मृगवराहश्वविडालादीनां स्वजातिकर्मसु कौशलं न स्यात्। न हि तेषामत्र जन्मनि कश्चिदुपाध्यायोऽस्ति। एकीकृत्य पोषितानामपि तत्कर्मकौशलदर्शनात्। नापि तेषां जन्मनि जन्मनि तज्जातीयत्वमेव, विचित्रकर्मवशेनानेकजातिषु क्रमेण जन्मसम्भवादिति।

## ❀ सजातीयसंस्काराणामेव वृत्तिलाभः ❀

भवतु संस्कारस्यानेकजन्मावस्थानम्, तथाप्यनन्तरजन्मभाविसंस्कारानभिभूयानेकजन्मव्यवहितसंस्काराणामेव वृत्तिलाभो न युज्यते। न हि यस्यानेकसंवत्सरव्यवहिताभ्यासजः संस्कारः स्मृतिं जनयति, तस्यानन्तरदिनाभ्यासजो न जनयतीति, न; उक्तत्वात्—उक्तमत्र शुभाशुभाख्यं कर्म संस्कारप्रतिबोधे प्रधानं निमित्तम्। तेन यतः कर्मविशेषात् नियतजातियोगित्वम्, तत एव तज्जातिसंस्काराणां वृत्तिलाभोऽन्यसंस्काराणां प्रतिबोधश्चेति। अन्यथा हि तत्कर्मानुपभोग्यमेव स्यात्। तथा हि—श्ववराहादिजन्मन्यपि यदि ब्राह्मणादिसंस्काराणां वृत्तिलाभः स्यात्, ततोऽस्य पुरीषादिभक्षणे मैथुने च प्रवृत्तिर्न

**तदेवमपरमात्मतत्त्वज्ञानं परलोकिसद्भावेन परलोकप्रवृत्त्युपयोगित्वाद्धर्मक्षयहेतुत्वाच्च निःश्रेयसमिति ।**

---

स्यात् । ब्राह्मणादेस्तद्विषये हि विचिकित्सैवास्ति न राग इति । तस्माजन्मविशेषनिमित्तकर्मसामर्थ्यात् तज्जातिसंस्काराणामेव वृत्तिलाभ इति ।

## ❀ कर्मणा संस्कारस्यान्यथासिद्धिशंका तन्निरासश्च ❀

कर्मविशेषसामर्थ्यादेव प्राणिनां स्वकर्मसु कौशलं हि संप्रतिपत्तिश्च, किं संस्कारेणेति चेत्, कर्माभ्युपगमेप्यात्मनोऽनादित्वं न निवर्तते । न हि कर्मणा विना जन्म, नापि जन्मना विना कर्मेति ।

न च कर्महेतुकत्वेऽपि दृष्टप्रत्याख्यानं युक्तम् । दृष्टं तावदेतत्—येन यदभ्यस्तम्, तस्य तत्र कौशलमिति । अननुभूतपूर्वकत्वे च मण्डूकादेर्मक्षिकादिष्विव भक्षणाभिलाषेण सर्पादिभ्य.........इव मक्षिकादिभ्योपि भयान्निवर्तनमेव स्यात् । न हि मण्डूकादिनात्र जन्मनि सर्पादिभ्यो मरणं स्वयमनुभूतं येन तस्य सर्पादिदर्शनादेव त्रासः स्यात् । तस्मादनेकजन्मान्तरमृत्युदुःखानुभवजनितसंस्कारात् मृत्युहेतुं स्मरत एव भयं भवति । तथैककुलसम्भूतानामपि ब्राह्मणादीनां कस्यचित् कस्मिन्नर्थेऽवगमादीनां च तरतमादियोगेन पाटवमपाटवं च दृश्यते, तदपि पूर्वजन्मसंस्कारवैचित्र्यादेवोपपद्यत इति । तदेवं पूर्वपूर्वजन्मानुमानादनादित्वसिद्धिः, ततः कृतकत्वादिविनाशहेत्वसम्भवाच्च नित्यात्मेति स्थितम् ।

नन्वित्थमात्मज्ञानेन किं प्रयोजनम्? येनात्रातियत्नः कृतः । परलोकसिद्धिरेव प्रयोजनम् । अनिश्चिते हि तस्मिन्परलोकिनोऽसिद्धेः परलोकस्याप्यसिद्धिरिति । प्रेक्षावतः स्वर्गार्थापि प्रवृत्तिर्न स्यादतः परलोकिसद्भावेन परलोकसद्भावे निश्चिते, परलोके प्रवृत्तिः, ततोऽभिप्रेतार्थसिद्धिः, तदेवं परलोके प्रवृत्त्युपयोगित्वादधर्मक्षयहेतुत्वाच्च निःश्रेयसांगमात्मज्ञानम् । अधर्मक्षयहेतुत्वं च तस्य "तरति शोकमात्मवित्" ( छां० उ० ७।१ ) इत्येवमाद्यागमादवगन्तव्यम् ।

## ❀ आत्मनोऽनर्थहेतुत्वाशङ्का ❀

नन्वात्मज्ञानं मुमुक्षुणा न कर्तव्यम्, तस्य संसारहेतुत्वात्, तथा चाह—

"यः पश्यत्यात्मानं तत्रास्याहमिति शाश्वतः स्नेहः ।
स्नेहात्सुखेषु तृष्यति तृष्णादोषांस्तिरस्कुरुते ॥" ( प्र० वा० १।२१९ )

दोषान् प्रच्छाद्य तृष्णा गुणान् दर्शयतीत्यर्थः। ततश्च--

"गुणदर्शी परितृप्यन्ममेति तत्साधनान्युपादत्ते।
तेनात्माभिनिवेशो यावत्तावत् स संसारी॥" (प्र०वा० १।२२०)
"सत्यात्मनि परसंज्ञा, स्वपरविभागात् परिग्रहद्वेषौ।
अनयोः सम्प्रतिबद्धाः सर्वे दोषाः प्रजायन्ते॥"
(प्र० वा० १।२२१) इति

## ❀ तन्निरासः ❀

तदेतदयुक्तम्। तथा हि—किं शरीरादिष्वात्मज्ञानं संसारनिमित्तम्? किं वा तद्व्यतिरिक्ते? यद्याद्यः पक्षः, तदा न किंचिद् बाधितम्, अनात्मन्यात्मज्ञानस्य संसारहेतुत्वाभ्युपगमात्। द्वितीये तु पक्षे प्रमाणं नास्ति। न हि यथोक्तात्मपरिज्ञाने सति कश्चित्संसारी दृश्यते।

आत्मज्ञानादात्मनि स्नेह इति, तदप्ययुक्तम्, न हि यत्र यत्र ज्ञानं भवति, तत्र तत्र स्नेह इति, अस्ति व्याप्तिस्तृणपश्वादिदर्शनेऽपि स्नेहानुपलब्धेः। तृणादिष्वात्मोपयोगित्वेन दर्शनाभावान्न स्नेह इति चेत्। एवं तर्ह्यात्मन्यप्यात्मोपयोगित्वेन दर्शनं नास्तीति। तत्रापि स्नेहो माभूत्। यस्यात्मोपयोगिनि स्नेहः तस्य कथं नात्मनीति चेत्, न; आत्मोपयोगिन्यविद्यासामर्थ्यात् स्नेहसम्भवात्। अविद्याक्षेपे त्वात्मोपयोगिष्वपि न स्नेह इति।

## ❀ सौगतैरप्यात्मज्ञानमभ्युपगतम् ❀

अपि च परलोकी पदार्थ आत्मेत्युच्यते। तत्परिज्ञानं च त्वयापि यत्नेन कृतं तद्दर्शनेऽप्ययं दोषः प्रसक्तः। क्षणिकत्वज्ञानात् स्नेहनिवृत्तिरिति चेत्, न; क्षणिकपक्ष एवोपकार्योपकारकभावस्य त्वयेष्टत्वात्। ततश्चात्मत्वेन प्रतिपन्नेष्वनन्तसन्तानेष्वपि स्नेहोऽस्त्येव, नान्यथामोक्षे प्रवृत्तिः स्यात्ततश्च मोक्षार्थप्रवृत्त्युपदेशोऽनर्थकः, तस्मादात्मस्नेहादेव सुखसाधनेष्विव मोक्षसाधनेपि प्रवृत्तिः।

तेन यदुक्तम्—"यस्य हि यत्र स्नेहः, स तत्सुखेन हर्षवान्, यथा पुत्रादिसुखेनेति तत् स्वज्ञानसन्तानेपि समानम्।

## ❀ अनात्मवादिनां स्नेहानुपपत्तिः ❀

अथानात्मवादिनां स्वज्ञानसन्तानेऽपि नास्ति स्नेहः परसन्तानेषु कथम्? नहि यस्यात्मन्यपि न स्नेहः, तस्य परत्रेति युक्तम्। महानुभावतया करुणातः

परत्र स्नेह इति चेत् । न; स्वार्थसंमूढस्याबुद्धिपूर्वकत्वप्रसंगात् । परार्थक्रियैव महानुभावस्य स्वार्थं इति चेत्, एवं तर्हि गणिकाङ्गमर्दनाद्यपि कुर्यात् तत्रापि परार्थोपपत्तेः । नरकादिगमनप्रसंगान्न क्रियत इति चेत्, ननु परार्थे नरकादिगमनांगीकरणे महती महानुभावता स्यात् । तस्मादनात्मवादिनोऽपि स्वदुःखपरिहारेण प्रवृत्तेः स्वबुद्धिसन्तानेऽस्त्येव स्नेहः पुत्रादिष्विव लोकस्य । ततः तत्स्नेहात् सुखं तृष्णा, ततो दोषतिरस्कारेण गुणदर्शी शाक्यः परितृष्यन् ममेदमिति, तत्साधनान्युपादत्ते, तेन ममेत्यभिनिवेशाद् बुद्धस्यापि संसारो न निवर्तते ।

"सत्यात्मनि परसंज्ञा"—इत्याद्यप्ययुक्तम्, न हि स्वपरविभागज्ञानमात्रादेव परिग्रहदोषादयो भवन्ति, बुद्धस्यापि हि परविभागज्ञानमात्रमस्त्येव, अन्यथोपदेशदानादौ न प्रवर्तते । करुणाभ्यासश्च भवतां सर्वज्ञत्वसाधनमिष्टम् । न च स्वपरविभागज्ञानमन्तरेण करुणा सम्भवति । स्वात्मदुःखानुस्मरणपूर्विका हि परेषु दुःखवियोगेच्छा भवति, सा च कृपेत्युच्यते । तस्मान्न स्वपरविभागज्ञानमात्रं तृष्णापरिग्रहादीनां निमित्तं, किं तर्हि ? मिथ्यासंकल्पः, तथा च भगवान् व्यासः—

"इन्द्रियार्था ह्यनर्थाय यदि स्फुटं [1]विकल्पिताः ।
सर्वोऽनर्थेन युज्येत चरन्निन्द्रियगोचरे ॥"

## ❀ अहन्ताया दोषरूपतानिरासः ❀

इदं च तावदत्र विचार्यते—किमत्रात्मेति संज्ञैव दुष्टा ? किं वा ममेत्यहमिति वा ज्ञानं दुष्टम् ? किं वा तद्विषय एव दुष्ट इति ?

यद्यात्मेति संज्ञा दुष्टा, तदा वयमपि संज्ञान्तरं करिष्यामः ।

अथाहङ्कारो दुष्टः, स कथं निवर्तते ? क्षणिकविज्ञानवादिनोऽप्यस्त्येव; इष्टानिष्टप्राप्तिपरिहारेण प्रवृत्तिदर्शनात्, इदमहमनुभूतवानिदमहं जानामीति प्रतीतेश्च । अथ पूर्वसंस्कारादनात्मवादिनोऽहंकारः, स नैरात्म्याभ्यासान्निवर्तते, न; असम्बन्धात् । निरहंकाराभ्यासाच्चाहंकारनिवृत्तिर्युक्ता, निर्विकल्पाभ्यासाद् विकल्पवत्, तत्त्वज्ञानाभ्यासादतत्त्वज्ञानवच्च । आत्मा तु तत्त्वान्तरम्, कथं तदभावाभ्यासादहंकारनिवृत्तिः ? वचनमात्रेण निर्बुद्धत्वाभ्यासादेवाहंकारनिवृत्तिः स्यात् ।

---

१. विकल्पिताः=मिथ्याज्ञानविजृम्भिताः ।

अथात्माहंकारस्य विषयस्तेनात्मनि सत्यहंकारनिवृत्तिर्न प्राप्नोति, न; स्वपरमतासम्भवात्—त्वन्मते तावन्नित्यस्य जनकत्वमेव नास्ति। अस्मन्मते तु नैकस्यैव जनकत्वमतः सहकारिविरहात् सत्यपि विषयेऽहंकारनिवृत्तिः, सत्यप्यग्नाविन्धनाभावाद्धूमनिवृत्तिवत्। त्वयाप्येतदवश्यमभ्युपगन्तव्यमन्यथा बुद्धिसन्तानानिवृत्तावहंकारनिवृत्तिर्न स्यात्, त्वत्पक्षे बुद्धेरेवात्मत्वात्।

## ❀ नित्यत्वज्ञानस्य दुष्टतानिरासः ❀

अथ नित्यत्वादिज्ञानं तत्र दुष्टम्, तदप्ययुक्तम् यस्मादनित्यत्वादिज्ञानादात्मरक्षाद्यभिप्रायेणाकार्येऽपि प्रवृत्तिः स्याद्, यदा त्वेवं जानाति—

"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥"
(भ० गी० २।२२)

"नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥" (भ० गी० २।२८) इति।

तदा शरीरादिषु निरपेक्ष एव भवति। कुतस्तत्परिग्रहद्वेषादयः? तथा च प्रमेयविभागसूत्रे शरीरादिषु हेयबुद्धिरात्मतत्त्वज्ञानाद् यथा भवति, तथोक्तम्।

## ❀ नैरात्म्यज्ञानस्य संसारनिमित्ततासाधनम् ❀

नैरात्म्यज्ञानं संसारस्यैव निमित्तम्, विपर्ययज्ञानत्वाद्, अनित्येषु नित्यत्वाध्यवसायवत्। असिद्धमिति चेत्=स्यादेतत्—आत्मनोऽसत्त्वमजातत्वादिसाधनैः साधितम्, तन्न नैरात्म्यज्ञानं मिथ्येति। तदयुक्तम्; यस्मात्—

[1]"नासिद्धे भावधर्मोऽस्ति व्यभिचार्युभयाश्रयाः।
धर्मो विरुद्धोऽभावस्य सा सत्ता साध्यते कथम्॥" (प्र० वा० ३।१९०)

सत्तावदसत्तासाधनेऽपि समानो दोषः।

## ❀ शब्दानां विकल्पविषयत्वसन्देहस्तन्निरासश्च ❀

नन्वत्रोक्तम्—

"अनादिवासनोद्भूतविकल्पपरिनिष्ठितः।
शब्दार्थस्त्रिविधो धर्मो भावाभावोभयाश्रयः॥" (प्र० वा० ३।२०४)

---

१. भावसत्तायाः साधनं भावधर्मः? अभावधर्मः? भावाभावोभयधर्मो वा? आद्ये पक्षासिद्धिः, द्वितीये विरोधः, तृतीयेऽनैकान्तिकतेति कथं सा सत्ता साध्यते? इति भावः।

[1]तस्मिन् भावानुपादाने साध्यस्यानुपलम्भनं तथा हेतुर्न तस्यैवाभावः शब्दप्रयोगः तत्र नीलादिविकल्पस्य भावाश्रयत्वं स्वलक्षणज्ञानाहितवासनापूर्वकत्वात्। शशविषाणादिविकल्पस्य त्वभावाश्रत्वमभावज्ञानाहितवासनापूर्वकत्वात्। प्रमेयामूर्तादिविकल्पः पुनरुभयाश्रयः सदसतोरपि प्रमेयत्वामूर्तत्वादिधर्मसम्भवात्। तदेवं शब्दार्थस्य त्रिप्रकारत्वदर्शनात् तस्मिन्नात्मादिशब्दार्थे संदेहे सति भावानुपादानत्वं साध्यमित्यतो नाश्रयासिद्धत्वादिदोष इति।

तदेतदप्ययुक्तम्। शब्दानां हि वस्तुविषयत्वमेव समर्थितम्। विकल्पप्रतिबन्धविषयत्वं च प्रतिषिद्धं प्रागिति। कुतश्चात्मादिविकल्पस्य भावानुपादानत्वसिद्धिः? तथानुपलब्धेरिति चेत्, न; साध्यविशिष्टत्वात्, न हि भवत्यग्न्युपादानो धूमस्तथोपलब्धेरिति।

किं च मेरुपातालादिविकल्पस्य तद्भावोपादानत्वे नानुपलम्भेऽपि न मेरुपातालादेरभावनिश्चयः

किं च धर्माधर्मबुद्ध्यादिविकल्पस्यापि तदुपादानत्वेनानुपलब्धेस्तेषामप्यभावः स्यात्। सद्व्यवहारनिषेधो वा। अथ तेषामस्तित्वेऽस्त्यनुमानम्, ततो न सद्व्यवहारनिषेधोऽपि तत्र युक्तः, यद्येवमात्माद्यस्तित्वेऽप्यनुमानं समर्थितम्। तेनात्राप्ययुक्तः प्रतिषेध इति।

## ❀ आत्मनित्यत्वे संसारानुपपत्तिस्तन्निरासश्च ❀

ननु नित्यस्याऽविकारित्वात् सुखदुःखादिसंसर्गानुपपत्तिः, तदुपपत्तौ वा न नित्यत्वं तदाह—"वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम्। चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फलः॥" तदप्ययुक्तम्। अनित्यत्वे ह्यकृताभ्यागमादिदोषस्योक्तत्वादेकसन्ताननियमोऽपि न सम्भवतीत्युक्तं प्रागिति।

## ❀ आर्हतसिद्धान्तः ❀

अपरस्त्वाह—नित्यत्वे पुरुषस्यैकस्वभावत्वात् सुखदुःखबन्धमोक्षादिक्रमानुपपत्तिः, सदैवात्मा सुखी दुःखी च स्यात्, तत्स्वभावाविनाशात्। नाप्यनित्य एवाकृताभ्यागमादिदोषः, तस्मादनेकान्तपक्ष एव निर्दुष्टः, तदुक्तम्—

"एकान्तग्रहरक्तानां नाथ स्वपरवैरिणाम्।
कुशलाकुशलं कर्म बन्धमोक्षौ तु न क्वचित्॥"

---

१. तस्मिन्=अनादिशब्दार्थे धर्मिणि। भावानुपादाने=भावाकारणके साध्यस्य=आत्मादिशब्दार्थस्य भावोपादानत्वेनानुपलभ्यमानत्वात्। तस्यैव=विकल्पपरिनिष्ठितस्यैव।

प्रमाणसिद्धश्चानेकान्तपक्ष इत्याह—

[1]"कटमोलिसुवर्णार्थी नाशोत्पादव्ययेषु च ।
शोकप्रमोदमाध्यस्थ्यं जनो जातित्रयात्मकम्" ॥ ( आप्त० ५९ )

अनेकान्ततः सप्तपदार्थज्ञानान्मोक्ष इत्याह—

"[2]जीवाजीवौ तथान्योन्यमास्रवः संवरस्तथा ।
निर्ज्जरा च तथा बन्धो मोक्षः सम्भ्रम इष्यते ॥"

"स्याद्वादलाञ्छिताश्चैते परिज्ञेयाः समीरिताः ।
तज्ज्ञानादाश्रवापेतो जीवो मोक्ष इहोदितः ॥"

## ❀ सप्ततत्त्वनिरूपणम् ❀

१—तत्र "चेतनास्वभावत्वात् तद्विकल्पलक्षणो जीवः" ( तत्त्व० वा० १।४।१४ )। तस्याश्चेतनाया विकल्पाः पर्यायाज्ञानसुखदुःखेच्छादयः, ते लक्षणं यस्यासौ जीवः ।

२—तद्विलक्षणस्त्वजीव इति ।

३—"पुण्यपापागमद्वारलक्षण आस्रवः" ( तत्त्व० वा० १।४।१६ )।

---

१. आप्तमीमांसापाठक्रमस्तु—
"घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम् ।
शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥
पयोव्रती न दध्यत्ति न पयोऽत्ति दधिव्रतः ।
अगोरसव्रतो नोभे तस्माद् वस्तुत्रयात्मकः ॥" ( आप्त० ५९।६० )

यद्यप्यत्र मुद्रिते सर्वत्र घटेत्यादिपाठः समुपलभ्यते, तथापि घटस्थाने कटेति भूषणोद्धृतः पाठ एव साधीयान् प्रतिभाति, कटकमुकुटसुवर्णेति दार्शनिकप्रयोगप्रसिद्धेः भूषणे मुहुर्मुहुस्तथैवोल्लेखाच्च । सुवर्णशकले कटस्य ( कटकस्य ) नाशानन्तरमुत्पन्नं मौलिं ( मुकुटं ) दृष्ट्वा कटार्थी सहेतुकं ( नाशहेतुकं ) शोकम् , मौल्यर्थी तदुत्पादहेतुकं प्रमोदम् , सुवर्णार्थी तत्स्थिति-हेतुकं माध्यस्थ्यं यातीत्यन्वयार्थोऽवगन्तव्यः ।

२. तदुक्तम्—
"जीवाजीवौ तथा पुण्यं पापमास्रवसंवरौ ।
बन्धश्च निर्जरामोक्षौ नव तत्त्वानि तन्मते ॥" ( षट्० समु० ४७ )
"जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम्" ( तत्त्वा० १।४ )

आस्रव इव आस्रवः। क उपमार्थः ? यथा महोदधिर्नद्यादिसलिलैरहरहरापूर्यते तथा मिथ्यादर्शनादिद्वारानुप्रविष्टैः कर्मभिरनिशं प्राणी पूर्यत इति मिथ्यादर्शनादिद्वारमास्रवः।

४—"आस्रवनिरोधलक्षणः संवरः" (तत्त्व० वा० १।४।१८)। संव्रियतेऽनेनेति संवरः। यथा कपाटेन संवृते गृहे दुष्टस्य प्रवेशो नास्ति, तद्वच्छुभानुष्ठानेन संवृते पुंसि पुण्यपापलक्षणस्य बन्धहेतोः कर्मणः प्रवेशो नास्तीति। अभिनवकर्मागमद्वारसंवरणात् संवरः।

५—"एकदेशकर्मसंक्षयलक्षणा निर्ज्जरा" (तत्त्व० वा० १।४।१६)। निर्ज्जरेव निर्ज्जरा, यथा मन्त्रौषधबलादिभिर्जीर्णवीर्यं विषं न कोपकरम्, तथोपात्तं कर्म तपोविशेषेण निर्जीर्णरसं न संसारफलप्रदम्।

६—"आत्मकर्मणोरन्योन्यप्रवेशानुप्रवेशलक्षणः सम्बन्धो बन्धः" (तत्त्व० वा० १।४।१७)। बन्ध इव बन्धः। यथा निगडादिबन्धेन बद्धः पुरुषोऽस्वतन्त्रः, तथा कर्मबन्धेनापीति।

७—"कृत्स्नकर्मवियोगलक्षणो मोक्षः" (तत्त्व० वा० १।४।२०)। निगडादिमुक्तवत् स्वातन्त्र्ये सति अभिप्रेतदेशगमनादेव पुमान् सुखी भवतीत्यर्थः।

## ❀ स्याद्वादस्वरूपम् ❀

स्याद्वादलाञ्छिता इति। स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यम्, स्यादस्ति चावक्तव्यं च, स्यान्नास्ति चावक्तव्यं च, स्यादस्ति च नास्ति चावक्तव्यं च—इत्येषा सप्तभंगी स्याद्वाद इत्युच्यते। तद्विशिष्टा जीवादयाः परिज्ञेयाः। किंलक्षणाऽसौ सप्तभंगीति चेद्, उच्यते "एकस्मिन् वस्तुनि प्रश्नवशाद् दृष्टेनेष्टेन च प्रमाणेनाविरुद्धविधिप्रतिषेधविकल्पना सप्तभंगी" (तत्त्व० वा० १।६।५)। "तद्यथा—स्याद् घटः, स्यादघटः, स्याद् घटश्चाघटश्च, स्यादवक्तव्यः, स्याद्घटश्चावक्तव्यश्च, स्यादघटश्चावक्तव्यश्च, स्याद् घटश्चाघटश्चावक्तव्यश्चेति"।

"तत्र स्वात्मनास्ति घटः, परात्मना नास्ति। घटबुद्ध्यभिधानानुवृत्तिलिंगः स्वात्मा यत्र तद्बुद्ध्यभिधानानुवृत्तिः स परात्मा पटादिः। कपालाद्यवस्था च। तत्र स्वात्मनापि यदि नास्ति घटः, तदा घटव्यवहार एव न स्यात्। तथा परात्मनापि यद्यस्ति, तदा पटादिव्यवहारोऽपि तत्र स्यात्। तस्मात् स्वरूपेण सन् घटः पररूपेण त्वसन्निति" (तत्त्व० वा० पृ० ३३)।

"उक्तैः प्रकारैरर्पितं घटत्वमघटत्वं च परस्परतो न भिन्नम्। भेदे हि तद्बुद्ध्यभिधानानुवृत्तिर्न स्यात् ततश्च सामानाधिकरण्याद्यभावः स्यात्। न चैवमस्ति, तस्मात्तदुभयात्मकोऽसौ क्रमेण तच्छब्दवाच्यतामास्कन्दन् स्याद् घटश्चाघटश्चेत्युच्यते। यदि तदुभयात्मकं वस्तु घट इत्येवोच्यते, तदेतरात्माऽसंग्रहादतत्त्वमेव स्यात्। अथाघट एवेत्युच्येत, तदात्मानुपादानादनृतमेव स्यात्। न वस्तु तावदेवेति। न चान्यः शब्दस्तदुभयात्मावस्थानत्वाभिधायी विद्यते। ततोऽसौ घटो वचनगोचरातीतत्वात् 'स्यादवक्तव्य' इत्युच्यते। घटात्मार्पणमुखेनोक्ताऽवक्तव्यस्वरूपनिरूपणेन चादिश्यमानः स एवार्थ इति 'स्याद्घटश्चावक्तव्यश्च'। निरूपिताऽघटभंग्यासंगेन प्रदर्शिता वक्तव्यवर्त्मना चोपदेश्यः स एवार्थ इति 'स्यादघटश्चावक्तव्यश्च'। तदुभयोरभिधानक्रमाक्रमार्पणवशादाविर्भूततद्व्यपदेशः स एवार्थ इति स्याद्घटश्चाघटश्चावक्तव्यश्चेति।

"एवं सर्वेष्वर्थेषु सप्तभंगी योज्या" (तत्त्व० वा० पृ० ३४)। न तथाभूतः कश्चिदर्थोऽस्ति यत्र सप्तभंगी नास्ति।

नन्वेकान्तानभ्युपगमान्नियमेनानेकान्ताभ्युपगमः प्राप्तस्ततः स एवैकान्त इति। कथं सर्वत्र सप्तभंगीति, न; अनेकान्तेप्येकान्तानभ्युपगमात्। तथा हि स्यादेकान्तः, स्यादनैकान्तः, स्यादेकान्तश्चानेकान्तश्च, स्यादवक्तव्यः, स्यादेकान्तश्चावक्तव्यश्च, स्यादनैकान्तश्चावक्तव्यश्च, स्यादेकान्तश्चानेकान्तश्चावक्तव्यश्च इति (तत्त्व० वा० पृ० ३५)।

## ❀ आर्हतसिद्धान्तनिरसनम् ❀

अत्रोच्यते—यत्तावदेकान्तग्रहरक्तानामित्यादि, तदयुक्तम्; एकान्तपक्ष एव कुशलाकुशलकर्माद्युपपत्तेः, तथा हि—यदि य एव कर्मणः कर्ता, स एव तत्फलोपभोक्तेत्ययमेकान्तः स्यात्, तदेष्टानिष्टप्राप्तिपरिहारार्था तत्कर्मसु प्रेक्षावतः प्रवृत्तिर्घटते। अनेकान्तपक्षे त्वन्यकृतमप्यन्येनोपभुज्यत इति स्यात्। तथा च भोजनादिक्रियास्वपि प्रेक्षावता न प्रवर्तितव्यम्। राजादिकृतेष्वेव भोजनादिकर्मसु नग्नश्रमणकस्यापि तृप्तिर्भविष्यति, अभवने ह्येकान्तग्रहः स्यात्।

## ❀ अनेकान्तपक्षे दोषसमुच्चयः ❀

किं च नित्यानित्ययोर्दोषं दृष्ट्वानेकान्तमभ्युपगच्छता पक्षद्वयस्याप्यभ्युपगमः स्यात्। तदभ्युपगमे चोभयपक्षोक्ता अपि दोषाः प्राप्ता इति। क एवं विग्रन्थादन्यो दोषान् परिहर्तुं जानाति? तस्मान्नित्य एवात्मा,

तत्समवेतसुखोत्पत्तौ सुखी, दुःखोत्पत्तौ दुःखीत्युच्यते। सुखदुःखादीनामेवोत्पत्तिविनाशौ नात्मनः स हि नित्योऽपि तेन तेन धर्मेणोत्पद्यमानेन विनश्यता च तद्वान् व्यपदिश्यते यथा दण्डादिसम्बन्धासम्बन्धाभ्यां दण्डी कुण्डली छत्री वाऽदण्डोऽकुण्डलोऽच्छत्रश्चेति चैत्रो व्यपदिश्यते।

## ॐ समन्तभद्रस्य कटमौलीत्युक्तिनिरासः ॐ

कटमौलिसुवर्णार्थी—इत्याद्यप्ययुक्तम्, तत्र हि पूर्वावयविनः कटकत्वसुवर्णत्वजातियुक्तस्य विनाश एव तद्विनाशोऽपि जातिरेकापि न विनष्टा, सुवर्णत्ववत् कटकत्वस्यापि व्यक्त्यन्तरे प्रत्यभिज्ञानात्। उत्तरं च द्रव्यं कटकत्वयुक्तं नोत्पादितमिति तदर्थिनः शोकः, पूर्वद्रव्यं च मौलित्वयुक्तं नासीदिदानीं तु तज्जातियुक्तमुत्पन्नमिति तदर्थिनः प्रमोदः, सुवर्णत्वेनानुयोगः पूर्वोत्तरयोरपि अवयविनोरस्तीति तदर्थिनो माध्यस्थ्यम्, यथा केनचित्किराटगृहे स्थापितं द्रव्यम्। तच्च किराटेनात्मोपयोगं कृत्वा तथाभूतं तस्य दत्तम्। ततोऽसौ माध्यस्थ्यमेव याति।

सुवर्णत्वजातिस्त्ववयवावयवेष्वप्यस्ति, तेन तदवयविनाशेऽप्यवयवेष्वनन्तरभाव्यवयव्यन्तरे च सुवर्णप्रत्ययसातत्यादविनष्टाभिमानः प्रदीपगंगोदकादिवद्वा तत्सदृशनिरन्तरभावात्तदेवेति मन्यमानः तदर्थी माध्यस्थ्यं याति। तस्मान्नैकस्य नित्यत्वमनित्यत्वं चेति। अनित्यत्वं हि नाशित्वं प्रसिद्धं, नित्यत्वं चानाशित्वं तच्चैतदुभयं विरुद्धत्वान्नैकत्र सम्भवति। न हि नष्टमनष्टं चेत्येकं किंचित् प्रतिभाति।

यद्यपि कटमुकुटाकारयोर्नाशोत्पादौ सुवर्णकारस्य च ध्रौव्यम्, तथाप्यत्र कस्यचिदेकस्य नित्यानित्यत्वसिद्धिः त्रयाणामाकाराणामन्योन्यधर्मासंसर्गात्, संसर्गे वा कटकार्थिनः शोकवत्प्रमोदमाध्यस्थ्ये अपि स्याताम्। अत एव त्रयाणामाकाराणां नैक्यम्। भेदेऽपि सामानाधिकरण्यानुपपत्तिरिति चेत्, न; तद्वति सामानाधिकरण्याद्, दण्डकुण्डलादीनां भेदेपि तदाश्रये पुंसि दण्डी कुण्डलीत्यादि सामानाधिकरण्यवत्। यदि पुनरभेदः स्यात्, तदा कटकाकारग्रहणादेव मुकुटाकारादिग्रहोऽपि स्याद्, गृहीताऽगृहीताकारयोरेकत्वायोगाद् एकत्वे वा खरजिनादीनामपि भेदो न स्यात्। पर्यायाणां परस्परं भेदोऽस्त्येव, न तु पर्यायपर्यायिनोरिति चेत्, न; तत्रापि परस्परपरिहारेणोपलम्भाद्भेदसिद्धेः, तथा हि—केयूरादौ सुवर्णकारोपलम्भेऽपि न कटाकारोपलम्भः, तथा राजतकटाकारोपलम्भेऽपि न सुवर्णकारोपलम्भः, तस्मादुपलम्भानुपलम्भादिविरुद्धधर्माध्यासात् खरोष्ट्रादीनामिव भेद एवेति।

## ❀ भेदस्याप्यनेकान्तत्वादेकान्ते दृष्टान्ताभावशङ्का ❀

नन्वस्तु नाम भेदस्तथापि भेद एवेत्ययुक्तम्; यतः स्याद्भेदः, स्यादभेदः, स्याद्भेदश्चाभेदश्च, स्यादवक्तव्यः, स्याद्भेदश्चावक्तव्यश्च, स्यादभेदश्चावक्तव्यश्च, स्याद्भेदश्चाभेदश्चावक्तव्यश्चेति। तदेवं सर्वं जगत्सप्तभंग्याघ्रातं न किंचिदेकान्तसाधनेऽस्त्युदाहरणमिति।

## ❀ तन्निरासः ❀

ननु जिनस्य मुक्तत्वसर्वज्ञत्वादिस्वभावः खरोष्ट्रसूकरादिस्वभावेभ्योऽतिनिकृष्टेभ्य एकान्तेन भिन्न इति कथं नास्त्युदाहरणम्? नह्येवं भवन्तः शक्नुवन्ति वक्तुम्—मुक्तावस्थो जिनः स्यान्निकृष्टतमः, स्यादनिकृष्टतमः, स्यान्निकृष्टतमश्चानिकृष्टतमः, स्यादवक्तव्यः, स्यान्निकृष्टतमश्चावक्तव्यश्च, स्यादनिकृष्टतमश्चावक्तव्यश्च, स्यान्निकृष्टतमश्चानिकृष्टतमश्चावक्तव्यश्चेति। अत्राप्येवं सप्तभंगीष्यत इति चेत्, तदेतदपेतागमयुक्तिकं परस्पर्द्धयाभिधीयमानं न विद्वन्मनः प्रीणाति। यदि खलु भवन्तः खरोष्ट्रसूकरादिकं जिनमिव कदाचिदुपासते, पाषाणपुरीषादिकं च गुडदधितक्रादिवद्भक्षयन्ति, तदा न स्यादेकान्तसिद्धिः। को हि जिनस्यातिशयो यः खरोष्ट्रादौ नास्त्येव? को वा खरोष्ट्रादेर्निकृष्टभावो यो नास्त्येव जिने यतः खरोष्ट्रादिपरिहारेण स एवोपास्यते? तथा पाषाणपुरीषादीनां को दोषो यो गुडादिषु नास्त्येव, गुडादीनां वा कोऽतिशयो यः पाषाणादिषु नास्त्येव, यतः पाषाणादिपरिहारेण गुडादीन्येव भक्ष्यन्ते? अथास्त्येव कश्चिदत्रैवातिशयो यद्वशादत्रैव प्रवृत्तिरिति, न तर्हि सर्वत्रानेकान्तः। अथ क्वचिदेकान्तः क्वचिदनेकान्त इति पक्षः, एवं तर्हि यत्रैकान्तः स तावद् दृष्टान्तः तव त्वनेकान्तसिद्धौ न दृष्टान्तः क्वचिदस्ति, तथा हि—यद्यस्माद् भिन्नं तत्तस्मादेकान्तेन भिन्नं ततोऽर्थान्तरत्वात् खरोष्ट्रादिभ्यो जिनादिवत्। सत्त्वाद्याकारेणाभेदोऽप्यत्रास्तीति चेत्, न; यस्याकारस्यैकान्तेन भेद उभयोः सिद्धः, तस्य दृष्टान्तत्वेनोपादानात्। अथ न कस्याप्येकान्तेन भेदसिद्धिः, ततः उपायस्यानुपायस्य भक्ष्याभक्ष्यादिविवेकनियमाभावान्न कस्यचित् क्वचित् प्रवृत्तिनियमः प्राप्नोति—इत्युक्तम्।

## ❀ अकलङ्कोक्तिनिरासः ❀

यत्पुनरेतत्—स्वात्मनाऽस्ति घटः परात्मना तु नास्तीति, किमेतेन भवति? यदि तावदेकस्य घटस्यानेकधर्मयोगित्वमिति, तदा नास्ति विवादः, एकस्यापि धर्मिणो विधिप्रतिषेधात्मकानेकधर्मयोगित्वाभ्युपगमात्। अथ भावाभावोभया-

त्मको घट इति, उभयात्मक इति कोऽर्थः ? यद्युभयधर्मकः, तदा नास्ति विवाद इत्युक्तम्। अथ घट एव तदन्याभाव इति, नन्वेवं शाक्यमतं भवताभ्युपगतं भवति, व्यावृत्तादन्या नैव व्यावृत्तिरित्यभिधानात्। तत्र च दूषणं प्रपंचेनोक्तम्।

## * प्रमाणाद्वस्तुसिद्धिः प्रमाणं चैकान्तवाद एव *

नन्वस्मन्मते भावतदन्याभावयोर्भेदोऽप्यस्त्युभयात्मकत्वाभ्युपगमात्, न; अभ्युपगममात्रादर्थसिद्धेरसिद्धेः। प्रमाणतो हि पदार्थसद्भावसिद्धिः, प्रमाणं च त्वया नोक्तं यतस्तदुभयात्मकत्वसिद्धिः स्यात्। अस्माभिस्तूक्तं प्रमाणम्—यद्यतोऽर्थान्तरम्, तदनेकान्तेनैव ततोऽर्थान्तरमिति।

किं च विवक्षितः पटाद्यभावो न घटात्मकः पटाद्यभावत्वात्, तत्प्रध्वंसवत्। कथं तर्हि घटः पटो न भवतीति प्रतिभासः ? इतरेतराभावनिबन्धनोऽयम्। नन्वितरेतराभावेन सह भावस्य कः सम्बन्धः सम्बन्धेऽपि घटे पटो नास्तीति प्रतीतिः स्यादिति। यत्तावत्कः सम्बन्ध इति, तन्न; उक्तोत्तरत्वात्—उक्तमत्र भावतदन्याभावयोः सन्निधिविशेषः कश्चित्तावदस्ति, यतस्तयोर्विश्लेषेण ग्रहणम्। तत्र यथेष्टं संज्ञापि क्रियताम्।

## * भावाभावयोरैक्यनिषेधः *

यच्चोक्तम्—सम्बन्धेपि घटे पटो नास्तीति प्रतीतिः स्याद् भूतले घटाभावप्रतीतिवत्। तदयुक्तम्; भाववत्सम्बन्धविशेषतः प्रतीतिवैलक्षण्योपपत्तेः। यथा भावसम्बन्धविशेषात् प्रतीतिवैलक्षण्यं दृष्टम्—कुण्डेऽस्ति नीलीद्रव्यमिति, नीलः पट इति मम प्रतीतिः, प्रतीतोऽर्थ इत्येवमादि। एवमभावसम्बन्धविशेषोऽपि प्रतीतिवैलक्षण्ये हेतुरस्तीति गम्यते। सर्वत्र हि कार्यविशेषेण हेतुविशेषसिद्धिरिति।

अपि चाभावस्य परतन्त्रोपलब्धिरित्युक्तम्, तेन यस्य प्रतियोगी यथाबुद्ध्युपस्थापितस्तदभावस्य तथा प्रतीतिर्भवत्यतो भूतलाधेयत्वेन बुद्ध्युपस्थापितस्य घटस्याभावो भूतलाधेय इव प्रतीयते—नास्त्यत्र घट इति। यदा तु तत्प्रतियोगी तदात्मकत्वेन बुद्ध्युपस्थापितः, तदा तदभावोपि तदात्मैव प्रतिभात्यघटोऽयं पट इति। तस्मान्न भावाभावयोरैक्यम्।

## * घटत्वाघटत्वयोरभेदसाधननिरासः *

यच्चोक्तम्—घटत्वमघटत्वं च परस्परतो न भिन्नमिति, तदतिव्यामूढभाषितं विधिप्रतिषेधयोरभेदस्य सर्वलोकप्रतीतिबाधितत्वात्।

## ❀ प्रसज्यपर्युदासपक्षेऽप्यभेदानुपपत्तिः ❀

प्रसज्यपर्युदासपक्षेऽप्यभेदानुपपत्तेश्च—प्रसज्यपक्षे तावद् घटत्वाभाव एवाघटत्वम्, न च तदेव तदभावः। सर्पाभावोऽसर्प एव स्यात्ततश्च सर्पवत्तदभावादपि भयं स्यात्, तद्विविक्ताविविक्तप्रदेशयोस्तुल्योपलम्भश्च स्यात्।

पर्युदासपक्षेऽपि घटत्वादन्यदघटत्वं पटत्वादिकमुच्यते, तच्च भिन्नमेव अभेदे हि घटादिष्वपि पटबुद्ध्यभिधानानुवृत्तिः स्यात्पटेऽपि घटादिबुद्धिः स्यात्।

## ❀ परात्मना परस्यातत्त्वानुपपत्तिः ❀

पटात्मनाऽसावघट इत्यप्ययुक्तम्। पटात्मना हि किं घटः सन्नघटः क्रियते? अथ ज्ञाप्यत इति? प्रथमपक्षे प्रमाणं नास्ति—न हि यथा मृत्पिण्डः कुलालादिभिः घटात्मना क्रियमाण उपलभ्यते, तथा स एव तदैवान्यदा वा केनचिदघटः क्रियमाणो दृश्यते। विनष्टो हि यद्यघटः स्यात्, तदा चासौ न घटः, तस्मान्न पटात्मना घट एवाघटः क्रियते। नापि ज्ञाप्यते, मिथ्या ज्ञप्तिप्रसंगादरजते रजतज्ञप्तिवत्। अथ पटात्मना न घटः प्रतिभातीत्यघटोप्यसावुच्यते, न; विरुद्धत्वात्। यत एव पटरूपेण न प्रतिभात्यत एवैकात्मकोऽसौ घट एवेत्युच्यते।

अपि च यत्राप्युभयधर्माधिकरणत्वेनोभयात्मकत्वमुच्यते, तत्रापि न स्वात्मपरात्मापेक्षया तदुभयात्मकं यथा नीलं च तदुत्पलं चेति। न हि परात्मना तन्नीलमुत्पलं चेत्युच्यते, किं तु स्वरूपेणैव तथा सदसदात्मकत्वमपि स्वरूपेणैव वाच्यम्। नान्यरूपेण सत्त्वमसत्त्वं वा मुख्यम्, न हि सुवर्णादेर्मृदादिरूपेण सत्त्वम्, नापि खपुष्पादेः स्तम्भादिरूपेणाऽसत्त्वम्, स्वरूपेणैवासत्त्वादिति। तद्यदि भावानामुभयात्मकत्वं स्यात्, तदा स्वरूपेणैव घटश्चाघटश्च स्यात्। पररूपेणाघटत्वे हि गौणं तदघटत्वं वटुमाणवकादेरग्नित्वसिंहत्वादिवदतो गौणं तदुभयात्मकं वस्तु, मुख्यतस्तु स्वरूपेणैव यदात्मकं यत्तदात्मकमेव तदिति।

## ❀ स्वरूपेणोभयात्मत्वासम्भवः ❀

स्वरूपेणैवोभयात्मकं वस्त्विवति चेत्, न; इष्टानिष्टस्वभावाव्यवस्थितेः प्राणिव्यवहाराभावप्रसंगात्। यथैव हि प्राणिनां सुखादिसत्त्वमिष्टम्, तथा तदसत्त्वमनिष्टम्। यथा च दुःखादिसत्त्वमनिष्टम्, तथा तदसत्त्वमिष्टम्। ततश्च स्वरूपेणैव सदसदात्मकत्वं सुखदुःखादिसाधनानामिष्टानिष्टत्वेन व्यवस्थानात् तत्प्राप्तिपरिवर्जनार्थे प्रवृत्तिनिवृत्ती न स्याताम्। अपि चायं सुखादिहेतुः

सत्त्वात्स्वकार्यकरणप्रवृत्तोऽप्यसत्त्वान्न शक्नोति कर्तुम्, अकुर्वतोऽप्यस्य[1] मोक्षो नास्ति सत्त्वात्तदयं सत्त्वासत्त्वाभ्यामाकृष्यमाणः कामवस्थां च तत्प्राप्नोतु ? दुस्तरे हि व्यसने [2]नग्नश्रमणकदुर्बुद्धिनायं वराकः पतित इति ।

## ❀ तीर्थङ्करवचनादीनामव्यवस्था ❀

अपि च त्वत्तीर्थंकरवचनं किं सत्यम् ? आहोस्विदसत्यमिति ? सत्यमेवेति न युक्तम्, एकान्तवादप्रसंगात् । अथात्रापि सप्तभंगीष्टा—स्यात्, सत्यम् , स्यादसत्यम्, स्यादुभयम्, स्यादवक्तव्यमित्येवमादिका, तदा प्रमाणाप्रमाणव्यवस्थानुपपत्तिः, स्याद्वादस्य सर्वत्राविशेषात् । तथा त्वत्तीर्थंकराणामप्यनुष्ठानं स्यात्कुत्सितम्, स्यादकुत्सितम्, स्यादुभयम् । चौरादीनामपि तथैवेति न कश्चिद्विशेषः । तथा चाश्रवादिव्यवस्थानुपपत्तिः किल, विशिष्टानुष्ठानवतामेव संवरनिर्ज्जरामोक्षा भवन्त्यविशिष्टानुष्ठानवतां त्वास्रवबन्धावेवेत्यभ्युपगमः । तच्चोभयमप्यनुष्ठानं यदा स्याद्विशिष्टं स्यादविशिष्टमित्यव्यवस्थितम्, तदा कथमास्रवादिव्यवस्था ?

## ❀ जीवाद्यव्यवस्था ❀

तथा जीवाजीवव्यवस्थाऽप्ययुक्ता । स्याद्वादे हि जीवोऽप्यजीवः स्यादजीवोऽपि जीवः स्यादिति कुतस्तयोर्व्यवस्था ? अथाव्यवस्थाप्यस्ति; सा किं परमार्थतः ? किं वाऽस्मानेवमेव प्रतारयसि ? न ह्येकान्तपक्षानभ्युपगमे क्वचिद् व्यवस्थोपपद्यते । येन च प्रकारेणार्थानां व्यवस्थोच्यते । स एव तेषां तात्त्विकः स्वभावः यस्त्वव्यवस्थितस्वभावः, स न तात्त्विकः, स्फटिकादेः पीतादिस्वभाववदुपप्लुतत्वात् । तस्मान्न वस्तुतः सदसदात्मकं वस्तु ।

## ❀ वस्तुनो नित्यानित्यात्मकत्वनिरासः ❀

नाऽपि नित्यानित्यात्मकम्, तथा हि—यद्यात्मादि वस्तु स्वेन पर्यायिरूपेण नित्यम्, तदा वस्तुतस्तन्नित्यमेव, तत्र पर्यायानित्यत्वेनानित्यत्वं कल्प्यमानं गौणमेव स्यात् । न च स्वरूपेणैव च तन्नष्टमनष्टं चेत्युपपद्यते । नष्टमेवेति निश्चयपूर्वकः सर्वप्राणिव्यवहारश्च दृश्यते, सोऽपि न स्यात् । अथात्मनः सुखादिरूपेणानित्यत्वमप्यस्ति, न; सुखादेस्ततोऽन्यत्वात्तदन्यत्वं च शाक्यमतदूषणप्रस्तावे समर्थितम् ।

---

१. अस्य=सुखादिहेतोः ।

२. नग्नश्रमणः=दिगम्बरजैनभिक्षुः ।

अनन्यत्वमप्यस्तीति चेत्, न; अन्यत्वनिश्चयेनैवाऽनन्यत्वस्य बाधितत्वाच्चन्द्रादित्ययोरिव। अनन्यत्वस्य वास्तवत्वे चान्यत्वमवास्तवं तैमिरिकोपलब्धचन्द्रान्तरवत्।

केनचिद्रूपेण नित्यः पुरुषः केनचिदनित्य इति ब्रुवाण इदं च प्रष्टव्यः— अथ ते रूपे पुरुषात्परस्परं च किं भिन्ने ? उताभिन्ने चेति ? भेदपक्षे तावन्न तयोर्नित्यानित्यत्वेन पुरुषस्य नित्यानित्यत्वम्, अतिप्रसंगात्। अभेदपक्षे तु येनैव रूपेण नित्यत्वं तेनैवानित्यत्वमिति प्राप्तम्, तत्रोक्तमेव दूषणम्। अथ भिन्नाभिन्ने, तत्रापि किं येनैव रूपेण भेदस्तेनैवाभेदः, अथ रूपान्तरेणेति ? यदि तेनैव, तदा पुनस्तदेव दूषणमथ रूपान्तरेण, ततोऽनवस्थाप्रसंगः, ततश्चेदमित्थमेवेति निश्चयः क्वचिन्न स्यात्तन्निश्चयाभावे तु तत्पूर्वकव्यवहारसाध्यः पुरुषार्थः कस्यचिन्न स्यात्। दृश्यते च बुद्धिमतां निश्चयपूर्वकाद् व्यवहारात्पुरुषार्थस्तस्मान्न नित्यानित्यभिन्नाभिन्नाद्यव्यवस्थेति।

## * मीमांसकमते भिन्नाभिन्नत्वानुपपत्तिः *

मीमांसकपक्षे तु भिन्नाभिन्नत्वं नितान्तमनुपपन्नम्। तन्मते हि नित्य एवात्मेष्यते। तस्यानित्यैः सुखादिभिस्तादात्म्यं न युक्तम्, नित्यत्वैकत्वविरोधात्, सुखादीनां वा नानात्वमनित्यत्वं च विरुध्यते। न त्वतादात्म्यमप्यस्ति, भिन्नाभिन्नत्वाभ्युपगमात्। न चाभेदपक्षः, दोषाभिधानात्। भेदाभ्युपगमेऽप्यभेदपक्षरुचया अत्यन्तं न त्यक्तस्तेनाभेदपक्षे पुरुषस्यानित्यत्वनानात्वप्रसक्तिः। भेदपक्षे त्वप्रसक्तिरिति जिनमतानुप्रवेशः।

## * सामान्यस्य भिन्नाभिन्नत्वनिरासः *

एतेन सामान्यस्य व्यक्तिभ्यो भिन्नाभिन्नत्वमप्यपास्तम्। तत्रापि यावतांशेन भेदस्तावतांशेन सामान्यव्यक्तिधर्मानुषंगः, ततश्च नित्यत्वव्यापकत्वादिधर्मकं सामान्यं न स्यात्। व्यक्तीनां वा सामान्यतादात्म्येन नित्यत्वाद्यनुषंगः प्राप्तस्तथा चैकान्तेनानित्यत्वाव्यापकत्वादिधर्मकाः प्रदीपादयोपि नोपलभ्येरन्। अथ सामान्यं नित्यत्वादिरूपेण विशेषेभ्य एकान्तेन भिद्यते। न तर्हि कथंचित्तदभिन्नं, तदेव हि सामान्यस्य रूपं यद्विशेषेभ्योऽर्थान्तरम्, तच्च नित्यत्वादिधर्मकं नाभिन्नमिति। भेद एव सामान्यविशेषयोः स्वरूपान्तरेणाभेदेऽपि नाभेदः स्वरूपान्तरस्यासामान्यात्मकत्वात्।

## * भिन्नयोर्देशभेदानियमः *

ननु यद्येकान्तेन भिन्नं सामान्यं, तदादेशभेदेनापि कदाचिदुपलभ्येत, न; स्वरूपादिभिरनेकान्तात्। यथा वा सुखादयः शरीरान्न देशभेदेनोपलभ्यन्ते। किं च देशभेदो यदि अन्येन देशभेदेनोपलभ्यते, सोऽपि देशभेदोऽन्येन देशभेदेनेत्यनवस्था। परमाण्वाकाशादीनां तु भेदेपि देशभेदाभावादभेदः प्राप्तः। एतेनेन्द्रियभेदाद्भेदः प्रत्युक्तः। स्वरूपभेदस्तु सामान्यविशेषयोरप्युपलभ्यते, नित्यानित्यानुगतव्यावृत्तादिस्वरूपभेदप्रतीतेरित्यलं प्रसंगेन। तदेवं धर्मधर्मिणोश्चैकान्तभेदसिद्धौ नित्यत्वव्यापकत्वादिधर्मोपपन्नः पुरुषो ज्ञानाद्याश्रयः सिध्यतीति।

## * सांख्यमताक्षेपस्तन्निरासश्च *

ननु च ज्ञानसुखदुःखाद्याश्रयत्वं पुरुषस्य न युक्तम्, प्रधानकार्यत्वप्रसंगात्। यद्यत्सुखदुःखमोहैरन्वितं तत्सर्वं प्रधानकार्यं, यथा शब्दादयो विषया इति, न; प्रमाणाभावात्—न हि प्रधानास्तित्वे प्रमाणं किंचिदस्ति।

## * प्रधाने प्रमाणोपन्यासः *

न नास्त्यन्वयपरिमाणशक्तिप्रवृत्तिकार्यकारणभाववैश्वरूप्येभ्योऽस्ति प्रधानम्। प्रधत्ते विकारान् प्रधीयन्ते वाऽस्मिन् विकारा इति प्रधानं मूलभूतं कारणम्। तच्च पञ्चभ्यो वीतेभ्यो निश्चीयते, तथा हि—

## * (१) अन्वयात् प्रधानसाधनम् *

विवादगोचरापन्ना भेदा एककारणपूर्वका, अन्वितत्वाद्, घटशरावादिवत्। यत्तदेकं कारणं तत्प्रधानम्।

## * (२) परिमाणात् प्रधानसाधनम् *

किं च परिमितत्वान्मूलादिवत्। यथा व्रीहौ संश्लिष्टानां [1]मूलांकुरपर्णनालकाण्डप्रसवशूकतुषपुष्पक्षीरतण्डुलकणानां परिमाणं दृष्टम्। तथा च

---

१. तुलना विधेया—"यत् परिमितम्, तस्य सत उत्पत्तिर्दृष्टा। तद्यथा—मूलाङ्कुर-पर्ण-नाल-दण्ड-वुष-तुष-शूक-पुष्प-क्षीर-तण्डुलकणानाम्। परिमिता महदहङ्कारेन्द्रिय-तन्मात्र-महाभूतलक्षण-भेदाः, तस्मात् कारणपूर्वकाः, यदेषां कारणम्, तदव्यक्तम्" (यु० दी० पृ० ७५)।

[1]पञ्चीकृतानां भेदानामस्ति परिमाणम्—एकादशेन्द्रियाणि, पञ्चतन्मात्राणि, पञ्च भूतानि, पञ्च विपर्ययभेदा इत्येवमादि। तस्मादेतेऽपि भेदाः क्वचिदेकस्मिन् कारणे संसृष्टाः। यत्र संसृष्टास्तत्प्रधानम्।

## * (३) शक्तितः प्रधानसाधनम् *

किं च शक्तितः प्रवृत्तेः त्रिष्वपि कालेषु कार्यप्रवृत्तिसमर्था शक्तिर्मृत्त्वादिदृष्टान्तेन। मृत्त्वादिशक्तिरपि तत्कारणेष्ववस्थिता गम्यते, तत्कारणशक्तिरपि तत्कारणकारणेष्वित्येवं तावद्यावदकारणम्।

## * प्रवृत्तेः प्रधानसाधनम् *

शक्तिशब्देन चाव्यक्तरूपेणावस्थितं कार्यमेवोच्यते। तस्य व्यक्तभावापत्तिः प्रवृत्तिरित्युच्यते। प्रवृत्तेः प्रागप्यस्ति शक्तिः, लब्धात्मकानां प्रवृत्तिदर्शनात्। प्रवृत्तिकालेऽपि अस्ति, तिरोभावदर्शनात्। तदूर्ध्वमप्यस्ति, पुनःप्रवृत्तिदर्शनात्। तदेवं यतः शक्तेः सर्वं व्यक्तं प्रवर्तते, सा शक्तिः सदावस्थायिनी प्रधानमित्युच्यते।

## * (४) कार्यकारणभावात् प्रधानसाधनम् *

इतश्चास्ति प्रधानं कार्यकारणभावोपलब्धेरासन्दिकादिवत्। [2]कार्यकारणभावशब्देनोपकार्योपकारकभाव उच्यते। उपकार्योपकारकभावेनावस्थितानां ह्येककारणप्रभवत्वं दृष्टम्, यथासंदिकादीनाम्। अस्ति च कार्यकारणानां भूतानां च परस्परमुपकार्योपकारकभावः एवं मनुष्यादीनां चातोऽस्त्येषामेकं कारणमिति।

---

१. तुलना—"इदं च महदादि व्यक्तं परिमितं दृष्टम्—एका बुद्धिः, एकोऽहङ्कारः, पञ्च तन्मात्राणि, एकादशेन्द्रियाणि, पञ्च भूतानि" (तत्त्व० सं० पं० पृ० २१)। माठराचार्यव्याख्यानुरूपमेवेदं व्याख्यानमिति मन्ये।

२. युक्तिदीपिकायामपि—"आह—तदनुपलब्धेरयुक्तम्, न हि शयनादीनां कारणकार्यविभागः कश्चिदुपलभ्यते, तस्मादयुक्तमेतत्। उच्यते—न, कार्यकारणयोरुपकारकोपकार्यप.........वत्वात् कारणं कार्यमिति (नात्र) निर्वर्त्यनिर्वर्तकभावोऽभिप्रेतः, किं तर्हि ? उपकारकोपकार्यभावः" (यु० दी० पृ० ७६)।

## ❀ (५) वैश्वरूप्यात् प्रधानसाधनम् ❀

इतश्चास्ति प्रधानम्, वैश्वरूप्योपलब्धेः, क्षीरादिवत्। तद्यथा—क्षीराद्दधि, दध्नस्तक्रम्, घृतं च, तदुपयोगात्पुष्टिस्ततोऽपि पुत्रादयः। कदाचिन्मृतस्य शरीरस्य क्वाथः। कुथितस्य कृमिभावेन परिणामः। कुथितं शरीरं वृक्षायुर्वेदे वृक्षाणां वृद्ध्यर्थमिति श्रूयते। तेन च वृक्षाणामपि तत्कार्यत्वम्, वृक्षाच्च फलम्, फलाद्रसस्तदुपयोगात्पुष्टिबलमित्येतत्सर्वं क्षीरेऽस्ति कार्यकारणयोरभेदादेवं स्थावराणां जंगमेषु सद्भावो जंगमानां च स्थावरेष्वित्येवं जात्यनुच्छेदेन सर्वं सर्वात्मकं देशकालाकारनिमित्तप्रतिबन्धान्न समानकालाभिव्यक्तिस्तदेतत् स्थावरजंगमवैश्वरूप्यं जलभूम्योः पारिणामिकम्। जलादिपरिणामोऽप्यन्यस्य कस्यचित् सोऽप्यन्यस्य सोऽप्यन्यस्य सोऽप्यन्यस्य तावद्यावदविभागः क्वचिदभूत्। यत्र चाविभागः, तत्प्रधानमिति।

## ❀ प्रधानसाधननिरासः ❀

तदेतत्सर्वमयुक्तम्—यत्तावदन्वितत्वादिति, तन्न; अनैकान्तिकत्वात्—पुरुषा अपि चैतन्यसत्त्वज्ञेयत्वादिभिरन्विता इति। अथ कारणधर्मसंसर्गित्वमन्वितत्वमभिप्रेतम्, तथापि दृष्टान्तस्य साध्यविकलत्वं घटशरावादीनामेककारण-पूर्वकत्वासिद्धेः।

अथ ये भेदा येनान्विताः, ते तदात्मका एव दृष्टा यथा चन्दनेनान्वितानि चन्दनशकलानि चन्दनान्न व्यतिरिच्यन्ते। मृदा चान्विता घटादयो नामृदात्मकाः तथा सर्वे भावाः सुखदुःखमोहैरन्विताः, तस्मात्सर्वे सुखाद्यात्मका इति, न; असिद्धत्वात्—न हि सर्वभावानां सुखाद्यन्वितत्वे प्रमाणं किंचिदस्ति।

## ❀ सर्वभावानां सुखाद्यन्वितत्वाभिधानम् ❀

ननूक्तं प्रमाणम्—शब्दस्पर्शरूपरसगन्धाः पञ्चापि त्रयाणां सुखदुःखमोहानां सन्निवेशविशेषाः। कस्मात्? पञ्चानां पञ्चानामेमकार्यभावात्। सात्त्विकराजसतामसपञ्चकत्रयावरोधार्थं वीप्साभिधानम्। एककार्यभावादित्यत्रापि वीप्सा द्रष्टव्या।

तत्र सात्त्विकानां पञ्चानामेकं कार्यं दृष्टम्— [1]प्रसादलाघवप्रसवाभिष्वं-

---

१. तुलना—"तथाहि—प्रसादलाघवाभिष्वङ्गोद्धर्षप्रीतयः सत्त्वस्य कार्यम्। सुखमिति च सत्त्वमेवोच्यते। तापशोषभेदस्तम्भोद्वेगापद्वेषा रजसः कार्यम्। रजश्च दुःखम्। दैन्यावरणसादनाध्वंसबीभत्सगौरवाणि तमसः कार्यम्। तमश्च मोहशब्देनोच्यते" (तत्त्व० सं० पं० पृ० २१)।

गोद्धर्षप्रीतयः, तथा हि—पुत्रस्ते जात इति शब्दं श्रुत्वास्य प्रसादः स्वस्थेन्द्रियं भवति। देहस्य लघुत्वं लाघवम्, तुष्टसाधनदातृत्वं प्रसवः, तत्रैषा शक्तिरभिष्वंगः, रोमाञ्चनमुद्धर्षः, प्रीतिः सुखमिति। एवं स्पर्शादिष्वपि योज्यम्।

तथा राजसानां पञ्चानामेकं कार्यं दृष्टम्—शोषतापभेदस्तम्भोद्वेगापद्वेषाः। तत्र पुत्रस्ते मृत इति शब्दं श्रुत्वाऽस्य शोषो भवत्युदकप्रार्थनपरत्वम्, तापो दुःखम्, भेदोऽश्रुप्रस्वेदामेध्याद्युत्सर्गः, स्तम्भः—किं करोमीत्युपायापरिज्ञानम्, अरतिरुद्वेगः, प्रतिकूलकरणेच्छाऽपद्वेषः। एवं स्पर्शादिष्वपि योज्यम्।

तथा तामसानां पञ्चानामेकं कार्यं दृष्टम्—वरणसादनापध्वंसबीभत्सदैन्यगौरवाणि। तत्र पुत्रस्ते मृत इति शब्दं श्रुत्वाऽस्य वरणं क्रियाप्रतिबन्धः, सादनं विषण्णता, अपध्वंसनं निस्तेजस्त्वं [1]प्रत्ययलोपो वा, बीभत्सो विद्रुतरूपत्वम्, दैन्यं यत्किंचित्प्रार्थनपरत्वम्, गौरवं स्वहस्तादीनामप्युत्क्षेपणाद्यसामर्थ्यम्। एवं स्पर्शादिष्वपि योज्यम्। एतैश्च शब्दादिभिरारब्धानि पृथिव्यादीनि पञ्च महाभूतानि, तस्मात्तान्यपि सत्त्वादीनां सन्निवेशविशेषमात्रम्। तथा करणात्मनां सुखदुःखमोहानां [2]त्रयोदशानां तदेव कार्यं प्रसादादि। तथा देवमनुष्यतिर्यग्योन्यात्मकानां प्रकाशप्रवृत्तिनियमानां तदेव कार्यं प्रसादादि। तस्मात्सर्वं जगत्सुखादीनां सन्निवेशमात्रमिति।

## ❀ तन्निरासः ❀

तदेतदप्ययुक्तम्—यदि नाम शब्दादीनां प्रसादादिकार्यजनकत्वं सुखादिस्वभावत्वे किमायाताम्? न ह्यत्र प्रतिबन्धः कश्चिदस्ति। नन्वत्रोक्तम्—शब्दादयः सुखादिस्वभावाः प्रसादादिजनकत्वात्, सुखादिवदिति, न; कालात्ययापदिष्टत्वात्। सुखादिस्वभावत्वे हि शब्दादीनामन्तःकरणैकसंवेद्यत्वप्रसंगो बधिराद्यभावप्रसंगश्च। न हि सुखादयः श्रोत्रादिविकलैः न गृह्यन्त इति। शब्दस्पर्शरूपरसगन्धानां प्रतिनियतेन्द्रियग्राह्यत्वं च न स्यादेकस्वभावत्वात्। नीलादिबुद्धिवदविशेषेण सुखादिबुद्धिप्रसंगश्च—यथा नीलादिस्वभावे वस्तुनि सर्वेषां तद्द्रष्टॄणामविशिष्टो नीलादिप्रतिभासो भवत्येवं यदि सुखादिस्वभावोऽपि बाह्योर्थः स्यात्तदा तत्र सुखादिप्रतिभासोऽपि सर्वेषां तद्द्रष्टॄणामविशिष्टः स्यात्, तस्मिन्नेवार्थे कस्यचित्सुखं कस्यचिद् दुःखं कस्यचित्तीव्रं कस्यचिन्मन्दमित्येवमादिविशेषो न स्यात्। तस्मान्न सुखादिस्वभावाः शब्दादय इति।

---

१. प्रत्ययलोपः—संज्ञाशून्यता चेतनाहीनतेति यावत्।

२. त्रयोदश—दशेन्द्रियाणि मनो बुद्धिरहङ्कारश्चेति।

## ❀ आकाशादीनां शब्दाद्यारब्धत्वनिरासः ❀

यच्चोक्तम्—एतैश्च शब्दादिभिरारब्धानीत्यादि, तद्विपरीतमेव कल्पितम्, यस्मादाकाशादिभिः शब्दादय आरभ्यन्ते, न तु शब्दादिभिराकाशादीनीति, आकाशस्य परमाणूनां च नित्यत्वात्। न च येन यदारब्धम्, तत्तदात्मकमेव। भेदाभावे हि कार्यकारणभाव एव न स्यात्, सिद्धासिद्धावस्थयोः स्वात्मनि क्रियाविरोधात्। नाप्येकजातित्वं नियमेन कार्यकारणयोः, प्रत्यक्षेणापि कुविन्दतुरीपटादीनां जातिभेदोपलम्भात्। न च जातिजातिमतोस्तादात्म्यं सिद्धं येनैकजातित्वेपि कार्यकारणयोरभेदः स्याज्जातितद्वतोरत्यन्तभेदस्य विस्तरेण प्रसाधितत्वात्। सत्तासम्बन्धित्वेन च पुरुषाणामप्येकत्वप्रसंगात्। ततश्च—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥" (सां० का० ३)

इत्ययमभ्युपगमो विरुध्यते।

## ❀ रूपादिमत्त्वान्न पृथिव्यादेः सुखादिरूपत्वम् ❀

रूपादिवैधर्म्याच्च, न सुखादिस्वभावाः पृथिव्यादयः। सुखादीनां परिणामविशेषाः पृथिव्यादय इति चेत्, ते किं सुखादिभ्योऽन्ये? अनन्ये वा? अन्यत्वे पुरुषवदत्रिगुणत्वम्। अनन्यत्वे तु रूपादिमत्त्वमैन्द्रियकत्वं च विरुध्येत, प्रधानवत्। धर्मान्तरापत्तौ सत्त्वादिष्वेव पृथिव्यादिव्यवहार इति चेत्, धर्मान्तरस्य ततोऽन्यत्वे पुरुषवदत्रिगुणत्वम्। अनन्यत्वे च प्रधानवन्नियतदेशकालत्वानुपपत्तिः स्वभाववैलक्षण्याभावप्रसंगश्च। केनचिद्रूपेणान्यत् केनचित्तदेव। नान्यदित्यत्राप्युक्तमेव। पृथिव्यादीनां च दूषणम्। तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वादिति चेत्, न; पञ्चविंशतितत्त्वाभ्युपगमविरोधात्। न हि बुद्ध्यादीनां प्रधानादन्यत्वेनावचने पञ्चविंशति तत्त्वान्युपपद्यन्ते। विरुद्धधर्माध्यासाच्च मिथः शब्दादीनामिन्द्रियाणां च पृथिव्यादीनां च भेदसिद्धेः, कथमन्यत्वावचनम्? पुरुषस्यापि वाऽन्यत्वाऽवचनं स्यात्। अपि च सुखदुःखमोहानामेकेन्द्रियसंवेद्यारूपादित्वसाधर्म्येऽप्येकान्तेन भेद इष्यते। शब्दादीनां तु प्रतिनियतेन्द्रियग्राह्यत्वादिवैधर्म्येपि नैकान्तेन भेद इत्यहो प्रामाणिकत्वम्। प्रत्यक्षादिनोपलभ्यमानेऽपि सुखादिभ्यः शब्दादीनामत्यन्तभेदे किंचित्साधर्म्यादभेदसिद्धावद्वैतसिद्धिरेव स्यात्, गुणपुरुषाणामपि साधर्म्यसद्भावात्। तस्मान्नान्वयात्प्रधानसिद्धिः।

## * परिमाणहेतुनिरासः *

नापि परिमाणासिद्धिः, परिमितानामेककारणसंसृष्टत्वे दृष्टान्तासिद्धेः। मूलांकुरादीनां तु व्रीह्यवयवेभ्योऽवयवान्तरसहितेभ्यः पूर्वपूर्वावयवविनाशे सति क्रमेणोत्पत्तिर्नैकत्र संसर्गोऽस्ति। नाप्येकस्मादुत्पत्तिः, सर्वकार्याणां कर्तृक-करणोपादानपूर्वकत्वसिद्धेः। नाप्येकोपादानपूर्वकत्वं कस्यचिद् द्रव्यस्यैकस्याप्यस्ति। अथैकजातीयोपादानपूर्वकत्वम्, तदा सिद्धसाध्यता; द्रव्यैकजातीय-स्यैवोपादानत्वाभ्युपगमात्। अवान्तरजातिभेदस्तु क्षित्युदकाद्युपादानानां प्रत्यक्षेणाप्युपलभ्यते। ततस्तदपह्नवे प्रत्यक्षादिबाधापि स्यात्। सुखादीनां तु न क्वचिदुपादानत्वं सिद्धम्, गुणत्वात्। तन्न परिमाणादपि प्रधानसिद्धिः।

## ❁ कार्यकारणभावहेतुनिरासः ❁

एतेनोपकार्योपकारकभावात्प्रधानसिद्धिरित्यपास्तम्।

## ❁ शक्तिप्रवृत्तिहेतुनिरासः ❁

नापि शक्तिप्रवृत्तेः प्रधानसिद्धिः। त्रिष्वपि कालेषु कार्यं कारणेष्ववस्थित-मस्तीति केनैतच्छ्रद्धेयम्? न हि कन्यकोदरे पुत्रपौत्रादयः प्रागप्यवस्थिताः सन्तीत्यत्र प्रमाणं किञ्चिदस्ति।

## ❁ वैश्वरूप्यहेतुनिरासः ❁

एतेन वैश्वरूप्यहेतुरपि अपास्तः। सत्कार्यत्वसामर्थ्यादेतेषां सिद्धिरिति चेत्, न; तस्यैवासिद्धत्वात्। नहि कार्यस्य प्रागस्तित्वे प्रमाणं किञ्चिदस्ति।

## ❁ सत्कार्यवादः ❁

ननूक्तं प्रमाणम्—

"असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥" (सां० का० ९)

एते चावीतहेतवः। यद्यसत्क्रियते शशविषाणाद्यपि क्रियेत, न तु क्रियते; तस्मात्सदेव कार्यम्।

यदि च तन्त्वादिषु पटादिकार्यं नास्ति, तदा पटाद्यर्थिनस्तन्त्वाद्युपादानं न कुर्युः, तत्कार्यशून्यत्वाद्वीरणादिवत्।

यदि चासन्नेव पटस्तन्तुभ्यो भवति, ततः सर्वं कार्यं भवेदसत्त्वाविशेषात्, न तु भवत्यतः सर्वसम्भवाभावान्निश्चीयते—यदेव यत्रास्ति, तदेव ततो भवतीति।

शक्तस्य च कर्तृत्वं सर्वैरेवेष्यते। न च शक्तिविकलं शक्तं युक्तम्। शक्तिं च न कार्यादन्यां पश्यामः। शक्यं च क्रियते तेन नासतः शक्यत्वं युक्तम्। किं च यद्यस्य कारणम्, तत्ततो भवति। न चासति कार्येऽस्येदं कारणमित्युपपद्यते। तस्मात्सदेव कार्यमिति।

## ❀ सत्कार्यवादनिरासः ❀

तदेतदप्ययुक्तम्—

यत्तावदसदकरणादिति, तन्न; प्रतिबन्धासिद्धेः। यदि नाम शशविषाणाद्यसत् क्रियमाणं न दृष्टम्, पटाद्यप्यसन्न क्रियत इति कुतः? यथैव हि शशविषाणादेरसत्त्वमक्रियमाणत्वं च सर्वलोकाविसंवादिना प्रत्यक्षादिना प्रमाणेन सिद्धम्, तथैव पटादीनां प्रागसत्त्वं क्रियमाणत्वं च सिद्धं किं नेष्यते? किं चासदकरणादसत्कार्यं किं नेष्टम्? तत्राप्येवं शक्यते वक्तुम्—यदि सत् क्रियते पुरुषाद्यपि क्रियेत? न तु क्रियते, तस्मादसत्कार्यमिति।

## ❀ उपादानग्रहणहेतुनिराकरणम् ❀

यत्तूक्तमुपादानग्रहणादिति, तदप्ययुक्तम्; विरुद्धत्वात्। यदि हि प्रागप्यस्ति कार्यम्, ततस्तदर्थं तत्कारणेषु न कश्चित्प्रवर्तेत, वैयर्थ्यात्—न हि लोके यस्य यदस्ति, स तदर्थं यतत इति। ननु पृष्ठं मे कुरु, केशान् मे कुरु इत्यादिव्यवहारदर्शनात् सतोऽपि क्रियमाणत्वं सिद्धम्, न तस्यौपचारिकत्वात्—पृष्ठकेशादिष्वन्यदेव किञ्चित्कार्यं क्रियते, पृष्ठकेशादिकं तूपचारेण क्रियत इत्युच्यते, न त्वञ्जसा तस्य प्रागेव निष्पन्नत्वात्। निष्पन्नस्य च निष्पादनासम्भवः, तत्रानर्थको हेतुः स्यात्। यद्यसन्नेव पटस्तन्तुभिः क्रियते, वीरणादिभिरपि किं न क्रियते इति चेत्, न; वीरणादीनां तत्रासामर्थ्यात्। सामर्थ्यमेव कार्यमिति चेत्, न शक्तेः कारणधर्मत्वात्ततः पश्चाद्भवत्कार्यं कथं तदात्मकं स्यात्? योग्यतां विज्ञाय च प्रतिनियतकारणोपादानम्, न तु कार्यदर्शनान्न ह्यनिष्पन्नः पटो द्रष्टुं शक्यते। किं च सर्वं सर्वात्मकमित्येवंवादिनां वीरणादिष्वपि पटोऽस्तीति किं न तैः पटः क्रियते? कस्माच्च न तानि पटार्थिभिरुपादीयन्ते?

## ॥ सर्वसम्भवाभावहेतुखण्डनम् ॥

एतेन सर्वसम्भवाभावोऽपि प्रत्युक्तः ।

यथोक्तम्—शक्यं च क्रियते न चासत् कर्तुं शक्यमिति, सत् कथं शक्यम् ? न हि प्रधानं पुरुषो वा केनचित्कर्तुं शक्यते ।

## ॥ कारणभावहेतुनिरासः ॥

यच्चोक्तम्—कारणभावादिति, तदपि विरुद्धत्वापयुक्तम् । यदि हि प्रागप्यस्ति कार्यम्, तदा कारणेन किं कर्तव्यम् ? अकिञ्चित्करं च कथं कारणम् ? न हि क्षेत्रज्ञानां परस्परं कार्यकारणभावः सम्भवति । कार्यस्य अभिव्यक्तिः कारणेन क्रियते इति चेत्, सा यद्यसती क्रियते, ततोऽसत्कार्यं स्यात् । सति चेदभिव्यक्तिः तदवस्थं कारकानर्थक्यम् । अभिव्यक्तेरप्यभिव्यक्तिः क्रियत इति चेत्, सापि सती स्यादसती वेत्यपर्यवसानम् । सर्वत्र सत्त्वाभ्युपगमे सर्वं सदैवाभिव्यक्तमित्यानर्थक्यमेव कारकाणाम् । एतेन धर्मान्तराप्रवृत्तिलाभाद्युक्तिभेदः प्रत्युक्तः । यत्किञ्चित्प्रयोजनं कारकाणामुच्यते, तत्सर्वं सर्वाकारेण प्रागेवास्तीत्यानर्थक्यमेव कारकाणाम् । येन वाकारेण प्रागस्ति, स तस्याकारः प्रागसन्नेव पश्चाद्धेतुभ्यो भवतीति कथं नासत्कार्यम् ?

माधवमताभ्युपगमे तु सांख्यनाश एव स्यात् । कथम् ? यदि ह्यभिव्यक्तिरन्यो वा कश्चिद्धर्मोऽसन्नेव क्रियते, ततोऽसदकरणादित्येवमादयोऽसमर्था हेतवः स्युस्ततः सत्कार्यत्वासिद्धौ वैश्वरूप्याद्यसिद्धेः प्रधानाद्यसिद्धिरिति । न चात्र विशेषः कश्चिदस्ति येन पटादिकार्यस्यैवासतः करणम् । सतश्चात्महानं च न सम्भवति, तद्धर्मस्य तु कस्यचित्सम्भवत्येवेति । न च किंचिदप्यसन्न भवतीति शक्यं वक्तुम् । [1]विस्फूर्जतापि हि कारकाणामवश्यं किञ्चित्फलं वाच्यम्, यदसिद्धं तैः साध्यत इति । यदि किञ्चिन्नासज्जायते न सन्निवर्तते, तदा देशकालाकारनिमित्तप्रतिबन्धान्न समानकालाभिव्यक्तिरित्येतदपि व्याहन्यते । यदि हि सदैव सन्त्यभिव्यक्तयः, कथं न समानकालाः ? न चेत्सन्ति, पश्चादपि कथं न भविष्यन्ति ? तथा देशादिप्रतिबन्धोऽपि संश्चेन्न कदाचिन्निवर्तिष्यते इति । सदैवानभिव्यक्तिप्रसंगः । अथासन्नेव प्रतिबन्धः तथापि कुतोऽनभिव्यक्तिरिति ? यत्पुनरेतत्—न वस्तुतः किञ्चिदुत्पद्यते निवर्तते वा, गुणानां हि संयोगवियोगमात्रे प्रवृत्तिनिवृत्तिव्यवहारः, सत्त्वादीनामेवान्यथा सन्निवेशे कार्यभेदोपचारः शिक्याद्यसूत्रादिवदिति, तदयुक्तम्,

१. विस्फूर्जता=उच्चैर्गर्जता भवता ।

अवयवेभ्योऽर्थान्तरस्यावयविनः समर्थितत्वात् संयोगस्य चार्थान्तरत्वादुत्पत्ति-विनाशधर्मकत्वाच्च कथं न किञ्चिदुत्पद्यते ? अपि च रज्वादीनां मूर्तत्वात् सावयवत्वादवयवक्रियाद्वारेणान्यथाऽन्यथा सन्निवेशः कर्तुं शक्यते, सत्त्वादीनां विभुत्वनिरवयवत्वात् । पुरुषवन्नान्यथान्यथा सन्निवेशः सम्भवति । वियोगोऽपि विभूनामयुक्तः । किं चारूपादिमतां सन्निवेशविशेषेऽपि कथं रूपाद्युप-लब्धिः ? न हि वायूनां सन्निवेशविशेषेऽपि शुक्लादिरूपमुपलभ्यते । येषां हि यथाभूता रूपादयः, तेषामन्यथा न्यथासन्निवेशेऽपि तथाभूता एव रूपादय उपलभ्यन्ते, यथा कृष्णतन्तूनाम् । तस्मान्न गुणसन्निवेशमात्रे पृथिव्यादि-व्यवहारोऽत एव न प्रधानस्योपादानत्वम् । तदुपादानत्वे हि पृथिव्यादीनां विचित्ररूपादियोगित्वं न स्यात् , कार्यद्रव्यस्योपादानरूपाद्यनुविधानदर्शनात् । प्रधानस्यापि विचित्ररूपादियोगित्वाभ्युपगमे परमाणुष्वेव प्रधानसंज्ञा कृता स्यादेकस्य विचित्ररूपादियोगासम्भवाद् द्रव्योपादानस्य चाल्पपरिमाणत्वनाना-त्वनियमोपलम्भात् । परमाणूनां च सुखाद्याश्रयत्वं प्रागेव प्रतिषिद्धम् । तस्मान्न सुखाद्याश्रयत्वे पुरुषस्य प्रधानत्वप्रसंगः । प्रधानस्य च सुखाद्याश्रयत्वे, पुरुषो निष्प्रामाणिकः स्यात् ।

ननु भोग्येन भोक्तुरनुमानमुक्तम्— सविकारं प्रधानम् , भोक्त्रविनाभूतम्, भोग्यत्वादोदनादिवत् । तथा परार्थाश्चक्षुरादयः, संहतत्वात् , शयनादिवदिति, तदयुक्तम् , भोगस्वरूपासिद्धेः । सुखदुःखे तज्ज्ञानं च लोकेपि भोगत्वेन प्रसिद्धम् , तच्च भवता बुद्धेः करणस्येष्टम् । तदन्यस्तु कः पुरुषस्य भोग इति ? एतेन परार्थत्वं प्रत्युक्तम् , को हि देहादिभिः पुरुषस्यार्थः सम्पाद्यते ? धर्मादयोऽपि हि बुद्धेरेवेष्यन्ते ।

## ❀ पुरुषार्थद्वैविध्यात्परार्थसिद्धिशंका ❀

ननु द्विविधः पुरुषार्थ उक्तः—शब्दाद्युपलब्धिर्गुणपुरुषान्तरदर्शनं च पूर्वेण भोग उक्तः, उत्तरेण मोक्षः इति । कथं भोग इति चेत्, उच्यते—बुद्धेराकूतं विदित्वेन्द्रियाणि विषयाकारेण परिणमन्ते । ततस्तदि-न्द्रियवृत्त्याकारेण बुद्धेः परिणामः, तस्यां बुद्धिवृत्तौ चैतन्याभिव्यक्तिर्न भवति, यथा सूर्यकान्तादित्यरश्मिसन्निपाते तलादिष्वग्निज्वालाभिव्यज्यते, तथा विषयेन्द्रियमनोवृत्तिसन्निपातेऽन्तःकरणवृत्तौ चैतन्यमभिव्यज्यते । सोऽयं बुद्धेरभिव्यक्तिः परिणामो भोग इत्युच्यते । तत्र यस्य मते त्रयोदशविधं करणम् , तन्मते महत्तत्वं बुद्धिशब्देनोच्यते । ये त्वेकादशविधं करणमिच्छन्ति, तन्मते तु मन एव बुद्धिः, तदुक्तम्—

"पुरुषोऽविकृतात्मैव स्वनिर्भासमचेतनम् ।
मनः करोति सान्निध्यादुपाधिः स्फटिकं यथा ॥"

"विविक्ते दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते ।
प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥"

सोऽयं प्रकृतिपुरुषयोर्भोक्तृभोग्यलक्षणोऽनादिसम्बन्धो बन्ध इत्युच्यते । स चादर्शनमूलस्तेनासौ दर्शनान्निवर्तते, तन्निवृत्तौ च निरुपाधिः पुरुषः स्वभावनिर्मलो मुक्त इत्युच्यते । तदुक्तम्—

"पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥"

पुनरप्युक्तम्—

"सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः ॥" (सां० का० ६७)

"प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥" (सां० का० ६८)

"औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥" (सां० का० ५८)

"रंगस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥"(सां० का० ५९)

"नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥" (सां० का० ६०)

"प्रकृतेः सुकुमारतरं न किंचिदस्तीति मे मतिर्भवति ।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥" (सां० का० ६१)

तदेवं द्विविधपुरुषार्थोपपत्तेर्न परार्थत्वानुपपत्तिरिति ।

## ❀ तन्निरासः ❀

तदेतदाकाशचर्वणवदनुपपन्नम्—

यत्तावदग्निज्वालावच्चैतन्यमभिव्यज्यते इति, तन्न; सत्कार्यत्वनिषेधादग्निज्वालाया अप्यभिव्यक्त्यनुपपत्तेः । सत्कार्यपक्षेऽपि तिरोहितस्याभिव्यक्तिः सम्भवति, न च त्वन्मते चैतन्यस्य तिरोभावोऽस्त्यपरिणामित्वाभ्युपगमात् ।

न हि विशिष्टाकारपरिणतायामपि बुद्धौ चितेः पूर्वस्वभावान्यथात्वं भवत्यपरिणामित्वविरोधात् ।

स्वभावाविशेषेऽपि भोगाभ्युपगमे तु सदैवाविशेषेण भोगः स्यात्तथा च कः पुंसः प्रधानकृतो भोगः ? चैतन्याकारेणैव बुद्धेः परिणाम एव भोग इति चेत्, स किं पुरुषनिमित्तो वा ? न वा ? पुरुषनिमित्तश्चेत्, न तर्ह्युदासीनः पुरुषः, स्वभोगकर्तृत्वात् । अथ क्रियापरिणामोऽपि तस्य नास्ति सन्निधिमात्रेण कर्तृत्वात्तेन कुर्वन्नप्युदासीन इत्युच्यते, न; अतिप्रसंगात् । यदि निर्व्यापारस्यापि सन्निधिमात्रेण कर्तृत्वं, तदात्मनां व्यापकत्वेन सर्वत्र सान्निध्यात् सर्वात्मानः सर्वेषां कर्तारः स्युः । मुक्तात्मानोपि भोक्तारः स्युः, तत्सन्निधिमात्राविशेषात् । अथ भोगमकुर्वन्नेव भोक्ता, न; अप्रसिद्धत्वात्—नहि भुजिक्रियामकुर्वन्नेव कश्चिद्भोक्ता प्रसिद्धः । किं च मुक्तात्मनामपि भोक्तृत्वप्रसंगाद्विशेषाभावात् । एतेन प्रतिबिम्बोदयः प्रत्युक्तः । चितिस्वभावाऽविशेषेऽपि सर्वपुंसां व्यापकत्वेन सन्निधानाविशेषेऽपि च कस्यचिंदेव पुंसः प्रतिबिम्बोदयः, न सर्वपुंसामिति, किंकृतोऽयं नियमः क्लेशकर्मादिविशेषकृत इति चेत्, न; क्लेशादेर्बुद्धिवृत्तित्वाभ्युपगमात् ।

## ❀ प्रकृतिपुरुषयोः स्वस्वामिभावासम्भवः ❀

ननु बुद्धिवृत्तित्वेऽपि स्वस्वामिसम्बन्धनियमात्पुरुषवृत्तित्वोपचारः, श्रूयते हि—भृत्यापराधेन स्वामिनो दण्ड इति, न; सर्वथोदासीनस्य स्वामित्वेन दृष्टान्ताप्रसिद्धेः । विपर्यये तु राजादिदृष्टान्तोऽस्ति । स्वत्वमप्युपकारकस्यैव भृत्यादेर्दृष्टम् । न च बुद्धिः पुंसः स्वभावनिर्मलस्य कंचिदुपकारं कर्तुं शक्नोति ।

नर्तकीवदात्मानं दर्शयन्त्येवोपकारिकेति चेत्, नैतदस्ति; नर्तकी हि रंगस्य स्वात्मदर्शनं जनयन्ती स्वात्मानं दर्शयतीत्युच्यते । न च बुद्धिः पुंसः किंचिज्जनयति सर्वथानुपकार्यत्वात् । न च नर्तक्यपि अदिदृक्षोः कस्यचिदात्मानं दर्शयितुं शक्नोति । दिदृक्षवश्च सुखाभिलाषात्पुनः पुनश्चक्षुर्व्यापारयन्तः पश्यन्तीति कथमुदासीनाः ? तस्मान्नोदासीनस्य भोगः क्वचित्प्रसिद्धः इति ।

## ❀ पुरुषस्य बन्धमोक्षाभावः ❀

एतेन मोक्षोपि प्रत्युक्तः । किं च यस्य सम्बन्धः, तस्य तदभावान्मोक्ष इत्युच्यते । बन्धश्चाज्ञानमभिमतः, यस्मादुक्तम्—

"धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥" (सां० का० ४४)

"वैराग्यात् प्रकृतिलयः संसारो भवति राजसाद्रागात् ।
ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः ॥" (सां० का० ४५)

तच्चाज्ञानरागादिकं बुद्धेरेवेष्टं न पुरुषस्येति कथमन्यकृतेनाज्ञानादिना पुरुषस्य बन्धसंसाराद्युपपत्तिः ? न हि तस्करापराधात्साधूनां बन्धो न्याय्यः, साधुकृताद्वा सुकृतात्तस्कराणां मोक्ष इति ।

## ❀ पुरुषे बन्धाद्युपचारस्तन्निरासश्च ❀

ननूपचारेणैव पुरुषस्य बन्धादिकमुच्यते यस्मादुक्तम्—

"रूपैः[७] सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषस्यार्थे विमोचयत्येकरूपेण ॥" (सां० का० ६३) इति ।

न; निमित्ताभावादुपचारस्याप्यनुपपत्तेः स्वस्वामिभावोऽपि त्वत्पक्षे नोपपद्यत इत्युक्तम् । भिन्नाभिन्नानुपपत्तेश्च—न तावत्स्वस्वामिभावः प्रकृतिपुरुषाभ्यां भिन्नः, स्वयमनभ्युपगमात्, न हि गुणपुरुषव्यतिरिक्तं त्वया किञ्चिदभ्युपगम्यते । अथाभिन्नः, तदा प्रकृतिपुरुषयोरनुच्छेदादनुच्छेद्यः स्वस्वामिभावः, ततो मोक्षानुपपत्तिः ।

## ❀ प्रकृतेः चरितार्थत्वनिरासः ❀

चरितार्थं प्रधानं न प्रवर्तते इत्येतदप्यनेन प्रत्युक्तम्, प्रवृत्तिनिमित्तस्यानुच्छेदात् । उच्छेदे वा प्रधानस्यापि उच्छेदः, तदभेदात् । एतेनौत्सुक्यनिवृत्तिः प्रत्युक्ता । शब्दाद्युपलब्धिवद्वा—यथा शब्दाद्युपलब्धिं कृत्वा न चरितार्थं भवति, पुनः शब्दाद्युपलब्धिदर्शनात्, तथा कृत्वापि गुणपुरुषान्तरदर्शनं पुनस्तदर्थमेव प्रवर्तेत ।

स्यादेतत्—शब्दाद्युपलब्धिं कृत्वा गुणपुरुषान्तरदर्शनार्थं प्रवर्तते, तस्मिन्नपि कृते नापरं प्रवृत्तिनिमित्तमस्तीति कुतः प्रवर्तेत ? यद्येवं शब्दाद्युपलम्भं कृत्वा तं प्रति निवृत्तौत्सुक्यत्वाद्गुणपुरुषान्तरदर्शनमेव करोतु, किमर्थं जन्मनि जन्मनि शब्दाद्युपलम्भमेव करोति ? एवं ह्यपुरुषार्थैव प्रकृतेः प्रवृत्तिः स्यात्—यदर्थं प्रवृत्ता न तत्सम्पादयति । शब्दाद्युपलम्भार्थं च न प्रवृत्तिर्घटते, तत्रौत्सुक्याभावाज्जन्मान्तरेषु कृतत्वात् । अप्रेक्षापूर्वकारित्वादन्यार्थं प्रवृत्ताप्यन्यत्सम्पादयतीति चेत, यद्येवं संसार्यात्मार्थं प्रवृत्तापि कदाचिन्मुक्तात्मनोऽपि भोगं सम्पादयेद्विवेकविकलत्वात् ।

७. सप्तभिर्भावैः = धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यैः ।

परमात्मज्ञानं च तदुपासनाङ्गत्वेनापवर्गसाधनम् ।

बुद्धेराकूतं विदित्वेत्याद्यप्ययुक्तम्, करणत्वादिन्द्रियाणां वास्यादिवन्नाकूतपरिज्ञानम्, नापि स्वतः प्रवृत्तिरिति ।

बुद्धेरपि धर्मज्ञानाद्यधिकरणत्वमयुक्तम्, करणत्वादचेतनत्वाच्च खनित्रादिवत् । पुरुषस्यापि न धर्माद्यधिकरणत्वं चेतनत्वान्मुक्तात्मवदिति चेत्, न; धर्मिदृष्टान्तग्राहकप्रमाणबाधितत्वात्, न हि ज्ञानव्यतिरिक्तं चैतन्यं कुतश्चित्सिद्धम् । यस्य ज्ञानं तस्यैव सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्म्मसंस्काराश्चेति समर्थितम् । दुःखतद्धेतुवियुक्तस्तु लोकेऽपि मुक्तः प्रसिद्धस्तेनामुक्तात्मनां दुःखं तन्निमित्तमधर्माविद्यादिकं चाभ्युपगन्तव्यमिति व्यवस्थितं तावद्यथोक्तम्—अपरात्मज्ञानं निःश्रेयसांगमिति ।

## * परमात्मज्ञाननिरूपणम् *

अथेदानीं परमात्मज्ञानं निश्रेयसांगत्वेन वक्तव्यम् ।

## * अभेदज्ञानस्य निःश्रेयसाङ्गत्वशङ्का *

ननु च परापरभेदेनात्मज्ञानं नैव निःश्रेयससाधनम्, कस्मात् ? अविद्यारूपत्वाद् भेदज्ञानस्य चन्द्रादिभेदज्ञानवत्, तथा च श्रुतिः—"एकमेवेदम्", "न द्वितीयम्", ( छां० उ० ६।२।१ )। "द्वितीयाद्वै भयं भवेत्" ( बृह० उ० १।४।२) । "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति", (कठो० ४।१०)। "सर्वं खल्विदं ब्रह्म" ( छां० उ० ३।१४।१ ) ।

"यस्य सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।
तस्य कः शोकः को मोह एकत्वमनुपश्यतः ॥" ( ईशा० उ० ७ ) ।

"यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥" ( ईशा० उ० ६ ) ।

"एक एव हि भूतात्मा देहे देहे व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥" ( ब्र० बिं १२ ) ।

अनुमानमप्युच्यते—सर्वं जगत् परमात्मनो न भिद्यते, सत्त्वज्ञेयत्वादिभ्यः, तत्स्वरूपवत् । न च प्रत्यक्षविरोधः, तस्य भेदाविषयत्वात् । तदुक्तम्—

"आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः ।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते ॥" ( ब्र० सि० २।१ ) ।

किं च सर्वं विवादास्पदीभूतं भेदज्ञानं भ्रान्तम्, भेदज्ञानत्वाच्चन्द्रादिभेदज्ञानवत्। अद्वैतज्ञानं भेदज्ञानस्य बाधकमेव तदुत्तरकालभावित्वात्, शुक्तिकादिज्ञानवत्। वेदार्थपर्यालोचनादुत्तरकालमद्वैतज्ञानं भवति, भेदज्ञानं त्वनाद्यविद्यावशात् सर्वेषां प्रागेवास्ति, ततस्तन्न बाधकम्, रजतज्ञानादिवत्।

त्रैलोक्याग्रहणे च ततो भिन्नः कथं घटः प्रतीयते? न हि येनाश्वो न दृष्टः, सोऽश्वाद्भेदेनानश्वं प्रतिपत्तुं शक्नोति घटपटयोरपि भेदः कथं गृह्यते? यदि लक्षणभेदात्, लक्षणयोरपि कथं भेदः? तत्रापि लक्षणभेदाश्रयणेऽनवस्था स्यात्। अथ प्रतिभासभेदाद्भेदः, प्रतिभासयोरपि कथं भेदः? तत्रापि प्रतिभासभेदाश्रयणेऽनवस्था प्रसरन्ती केन वार्यते? इतरेतराश्रयदोषाच्च—यावन्न घटः पटाद् व्यावृत्तः प्रतीतः, तावन्न घटाद् व्यावृत्तः पटः प्रतिपत्तुं शक्यते, यावच्च न घटाद् व्यावृत्तः पटः प्रतीतस्तावन्न पटाद् व्यावृत्तो घटः प्रतिपत्तुं शक्यत इति। सदाकारप्रतीत्यविशेषाच्च। न ह्येकाकारेण प्रतीयमानस्य नानात्वं युक्तम्, अभेदव्यवहारोच्छेदप्रसंगात्। अथ घटाद्याकारेण नानात्वं प्रतीयते। घटाद्याकारः सदाकारादन्योऽनन्यो वा? यद्यन्यः, ततोऽसन्नेवासौ सतोऽन्यत्वाच्छशविषाणवत्। वस्तुनश्चाद्वैतं चिन्त्यते। अथाऽभिन्नः, तदा घटाद्याकारोपि सदाकार एवेति। कथं भेदः? तस्मादविद्यानिबन्धनोऽयं भेदप्रतिभासः सा चाविद्या ब्रह्मणस्तत्त्वान्यत्वाभ्यामनिर्वचनीया। तेनाद्वैतपक्षेऽपि जगद्वैचित्र्यं न विरुध्यते। स्वप्नोपलब्धार्थवैचित्र्यवदविचारक्षमत्वादिति।

## ❀ तन्निरासः ❀

तदेतत्सर्वमयुक्तम्। यत्तावदागमबलेनाद्वैतसाधनम्, तन्न; द्वैतपक्षेऽप्यागमसद्भावात्। तत्र श्रुतौ तावदुक्तम्—

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति॥" (श्वेता० उ० ४।६)

तथा—

"द्वे ब्रह्मणी वेदितव्ये परं चापरं च" (मैत्रा० उ० ६।२२) इत्यादि।

तथा—

"तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्॥"
(श्वेता० उ० ६।७)

"कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः।
अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः॥"

इत्येवमादि । स्मृतावप्युक्तम्—

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥" (भ० गी० १५।५)

इत्येवमादि ।

## ❀ अद्वैतबोधकवाक्यानां द्वैते सामञ्जस्यम् ❀

तत्र द्वैतपक्षे यान्यद्वैताभिधायीनि वाक्यानि, तानि परमात्मविषयत्वेनार्थवन्ति व्याख्येयानि । एकमेवेदं परं ब्रह्मेति द्रष्टव्यम् । सर्वं च जगद् ब्रह्माधिष्ठितत्वेन ब्रह्मकृतत्वेन वा सर्वं खल्विदं ब्रह्मेत्युक्तम् । एवमन्यानि वाक्यानि अविरोधेन व्याख्येयानि । यस्य तु मते द्वितीयं न किञ्चिदस्ति, तस्य द्वैताभिधायीनि वाक्यान्यप्रमाणान्येव प्राप्तानि न हि तेषामुपचारेणाप्यर्थः सम्भवति, उपचारनिमित्ताभावात् । न चैकस्मिन्नेवागमे केषाञ्चिद् वाक्यानां प्रामाण्यं केषाञ्चिदप्रामाण्यमित्यत्र न्यायः कश्चिदस्ति । अथ संसारावस्थायां द्वैतं मोक्षावस्थायां त्वद्वैतमित्युभयेषां विषयविभागेन प्रामाण्यं वर्ण्यते, तदप्युक्तम्; द्वैतानभ्युपगमे संसारस्यैवानुपपत्तेः । यो हि तावत्परमात्मा संस्थानशरीराद्याकारो न भवति, नाप्यसौ रागादियोगाद् देवमनुष्यतिर्यक्षु संसरति, "न तस्य कार्यं करणं च विद्यते" (श्वेता० उ० ६।८) इत्यादिवाक्यैस्तस्य सदैव रूपादिरहितत्वासंसारित्वप्रतिपादनात् । तद्विकारसंसारोपपत्तिरिति चेत् , न; परिणामपक्षस्य निषिद्धत्वात् ।

## ❀ ज्ञानक्रियाशक्तिभ्यां संसारमोक्षव्यवस्था ❀

स्यान्मतिरेषा—द्विविधा तस्य परमात्मनः शक्तिः क्रियाज्ञानलक्षणा । तत्र क्रियाशक्तितस्तावत्प्रधानं भवति । प्रधानात्तु महदादिविकारप्रपञ्चः । कार्यकारणयोश्च भेदो नास्ति, तेन प्रधानादेः क्रियाशक्तितो न भेदः । शक्तिशक्तिमतोरपि भेदो नास्त्यतः सर्वं विश्वं ब्रह्मात्मकम् । ज्ञानशक्तितस्तु जीवात्मानो भवन्ति, तेऽपि ततो न भिद्यन्ते । तेषां चाविद्यावशेनोत्पन्नानां रागादियोगात्संसारः, तत्र ये जीवा अविद्यावन्त एव परे ब्रह्मणि लयं गच्छन्ति, तेषां मण्डूकचूर्णवदनिर्दग्धबीजभावत्वात् पुनरुत्पत्तिस्ततो रागादियोगात् पुनः संसार इति । ये तु ज्ञानाग्निनाऽद्वैतभावनास्थिरीभूतलक्षणेन भेदवासनाख्यं संसारबीजं दग्ध्वा ब्रह्मणि लीयन्ते, तेषां निर्दग्धबीजत्वान्न पुनरावृत्तिस्तथा च श्रुतिः—"कामयमानोऽथाकामयमानो योऽकामो निष्काम आत्मकाम

आप्तकामो भवति, न तस्य प्राणा उत्क्रामन्ति, तत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्म आप्नोति" ( बृह० उ० ४।४।६ ) इति। तथा "न पश्यतीत्याहुरेकीभवति, न शृणोतीत्याहुरेकीभवति" ( बृह० उ० ४।४।२ ) इत्यादि।

## ❀ तन्निरासः ❀

तच्च नैवम्। कस्मात्? परिणामपक्षस्य निषिद्धत्वात्। न हि रूपादिविहीनस्य रूपाद्याकारेण परिणतौ किञ्चित्प्रमाणमस्ति। सत्कार्यप्रतिषेधाच्च कार्यकारणयोरभेदोऽपि निषिद्धः। शक्तिशक्तिमतोरपि भेदः प्रसाधितः। उपादानकारणत्वं च मूर्तं प्रत्यमूर्तस्य नास्तीत्युक्तम्। तस्मान्नेश्वरस्योपादानकारणत्वम्। "ब्रह्मैव सन्"—इत्याद्यागमेन योगोत्कर्षः प्रशस्यते। परमोत्कर्षापन्नो हि योगी ब्रह्मवदत्यन्तनिर्मलत्वाद् ब्रह्मैवेत्युक्तः। तथाभूत एव सन् परं ब्रह्म पश्यतीत्यर्थः। एकीभवतीत्यत्राप्युपमा द्रष्टव्या—परब्रह्मनिष्ठो हि योगी न द्वितीयमात्मानमपि पश्यति। तेनैकीभवन्निवैकीभवतीत्युच्यते। यद्वा मुक्तैकवर्गान्तर्भवन्नेकीभवतीत्युच्यते। न तु वस्तुतोऽर्थान्तरभूतानामेकीभावः कदाचित्सम्भवति।

ननु तोयादीनामेकीभावो दृश्यते—तोयं तोयान्तरेण संश्लिष्टमेकीभवति। दीपो दीपान्तरेण, मृन्मृदन्तरेण, घृततैलादिकं घृततैलाद्यन्तरेणेति, नैतदस्ति; न हि तोयादीनामपि वस्तुत एकीभावः सिद्धः। किं तर्हि? तेषां परेण संश्लिष्टानामेकावयव्यारम्भकत्वेनैकत्वमुपचर्यते, विभागादर्शनमात्रेण वा। तोयादिवदेकीभावाभ्युपगमे चात्मनां विनाशोऽपि तद्वदेव स्यात्, तस्मान्न मोक्षावस्थायामप्यद्वैतम्। ये त्वीश्वरस्य परिणामं नेच्छन्ति, तन्मते तु नेश्वरस्य कारणत्वम्, कार्याभावात्—न हि कार्यमकुर्वत् कारणं युक्तम्। न चात्मानमेव करोति, स्वात्मनि क्रियाविरोधात्। संसारमोक्षयोरप्यनुपपत्तिः, ईश्वरस्य सदैव मुक्तत्वात्। तद्व्यतिरिक्तबन्धाभावाच्च। अविद्याप्रयोक्तृत्वमेव भगवतः कर्तृत्वमिति चेत्, न; अद्वैतपक्षे तस्याप्यनुपपत्तेः। नानात्वे हि सत्यविद्याप्रयोक्तृत्वमपि दृष्टम्, यथेन्द्रजालादिकर्ता मन्त्रौषधादिप्रयोगद्वारेण लौकिकानां विपर्ययज्ञानाख्यामविद्यां प्रवर्तयति। भेदाभावाच्च केषामविद्या? किंलक्षणा वाऽविद्या? केन च निमित्तेनेश्वरस्तां प्रयुंक्ते? विद्यापि का? यदि ब्रह्मस्वभावैव, तदा नित्यं विद्याऽस्तीत्यविद्योत्थानमेव न स्यात्। न हि विद्यायां सत्यामविद्याऽवकाशं लभते, तयोः सहावस्थितिविरोधात्, अविरोधे वा न कदाचिदविद्योच्छित्तिरित्यपवर्गानुपपत्तिः।

## ❀ अनिर्वचनीयत्वनिरासः ❀

तत्त्वान्यत्वानिर्वचनीयत्वपरिहारोऽप्ययुक्तः, तत्त्वप्रतिषेधादेवान्यत्वसिद्धेः, अन्यत्वप्रतिषेधाद्वाऽनन्यत्वसिद्धेरिति । कथमुभयथाप्यनिर्वचनीयत्वम् ? केशोण्डुकस्य ज्ञानादन्यत्वेन निर्वचनीयत्वात् । तथा च विपरीतख्यातिः समर्थिता । तत्रैव सदसत्त्वानिर्वचनीयत्वप्रतिषेधोऽपि कृतः, सत एकदेशकालाकारान्यत्वेन प्रतिभासनादित्युक्तम् ।

न च केशोण्डुक एवाविद्या, किं तु तदवभासि ज्ञानम्, तच्चोत्पत्तिविनाशधर्मकत्वात्कथं कूटस्थाद् ब्रह्मणो न भिन्नम् ? अनादित्वं चाविद्यायाः प्रवाहापेक्षया, अन्यथा प्रत्यक्षविरोधोऽपि स्यात् । तस्मादद्वैते सत्यविद्याऽपि न सम्भवतीत्यतो नाविद्याकृतभेदापेक्षयाऽपि भेदाभिधायीनि वेदवाक्यान्यर्थवन्ति सम्भवन्ति ।

## ❀ प्रत्यक्षानुमानयोरुपप्लुतत्वोक्तिनिरासः ❀

एतेन यदाहुः—"प्रत्यक्षानुमानयोरुपप्लवदर्शनाद्वेदानां त्वनुपप्लवत्वात्, न तत्प्रतिपादितस्याद्वैतस्य प्रत्यक्षानुमानाभ्यां बाधेति", तदप्यपास्तम्, वेदवाक्यैरेव बाधप्रतिपादनात् । किं च प्रत्यक्षस्योपप्लुतत्वे वेदसिद्धिः कुतः स्यात् ? अगृहीताच्च वेदान्नार्थप्रतिपत्तिः । पौरुषेयत्वं च वेदानां समर्थितम् । तेन प्रत्यक्षमूलत्वेनैवेषां प्रामाण्यम् । अनुमानस्याप्युपप्लुतत्वे पदवाक्यार्थेषु विप्रतिपत्तौ कथं निर्णयः ? कुतो विरुद्धाविरुद्धव्याख्याननिश्चयः ? स्वपरवाक्यानां च प्रामाण्याप्रामाण्यनिश्चयः कुत इति ? यदप्युक्तम्—"आहुर्विधातृप्रत्यक्षम्" ( ब्र० सि० २।१ ) इत्यादि, तदप्ययुक्तम्, निषेद्धृत्वेनापि प्रत्यक्षस्य समर्थितत्वात्प्रमाणान्तर्भावप्रस्तावे । तेन भूतलादिषु घटाद्यभाववदितरेतराभावोऽपि प्रत्यक्षेण गृह्यते । तथा चाक्षव्यापारभावानुविधायिनी घटादीनां सत्तासंवित्तिवत् परस्परभेदसंवित्तिरपि सर्वलोकाविसंवादेन भवन्ती दृश्यते । तस्मात्प्रत्यक्षेणाऽप्यद्वैतज्ञानं बाध्यते, अङ्गुल्याग्रे करिशतमस्तीत्यादिज्ञानवत् ।

## ❀ भेदज्ञानस्य भ्रान्तत्वानुमाननिरासः ❀

यच्चोक्तम्—विवादास्पदीभूतं भेदज्ञानं भ्रान्तं भेदज्ञानत्वाच्चन्द्रादिभेदज्ञानवदिति, तदप्ययुक्तम्; विद्याविद्ययोर्भेदज्ञानेनानैकान्तिकत्वात् । तस्यापि पक्षत्वमेवेति चेत्, तत्किमिदानीमविद्यैवैकास्ति, तत्त्वज्ञानं तु नास्त्येव ? तथा

चाद्वैतसिद्धिरपि कुतः ? भ्रान्तज्ञानेनैवाद्वैतसिद्धौ भेदसिद्धिरपि ततः स्याद-विशेषात् । अथाद्वैतज्ञानं भ्रान्तं न भवति, भ्रान्ताद् भिन्नं तर्हि तत्प्रतिपत्तव्यम् । तद्भेदप्रतिपत्तिश्च न भ्रान्तेति कथं नानैकान्तिकत्वम् ?

हेत्वर्थश्च कः ? किं प्रतिज्ञार्थ एव ? किं वा ततोऽर्थान्तरम् ? यदि प्रतिज्ञार्थ एव, तदाऽर्थपुनरुक्तत्वं साध्याविशिष्टत्वं च स्यात्--न हि भवत्य-ग्निरत्र वह्नेरिति । अथ भिन्न एव हेत्वर्थः, तदाऽप्यद्वैतविरोधः । तथा दृष्टान्तोऽपि यदि प्रतिज्ञार्थ एव, तदा न साधकोऽसिद्धत्वात्पुनरुक्तदोषश्च । भेदाभ्युपगमे त्वद्वैतविरोधः । प्रतिज्ञार्थश्च कः ? किं प्रमाणप्रमेयेत्यादिसूत्रस्य योऽर्थः, स एव ? किं वा ततोऽन्यः ? यदि प्रमाणादिसूत्रार्थ एव साध्यः, ततः सिद्धसाधनम् । ततोऽन्यश्चेत्, तदाऽप्यद्वैतविरोधः ।

## ❀ अद्वैतज्ञानस्य भेदज्ञानबाधकत्वानुमानभङ्गः ❀

यदप्युक्तम्--अद्वैतज्ञानं भेदज्ञानस्य बाधकमेव, तदुत्तरकालभावित्वा-च्छुक्तिकादिज्ञानवदिति, तदप्यनैकान्तिकम्--नखाग्रे करिशतमस्तीतिज्ञान-मनाप्तवचनात् पश्चाद्भवन्न पूर्वभाविनस्तदभावज्ञानस्य बाधकमिति । न चाद्वैते साध्यसाधनप्रतिपाद्यप्रतिपादकादिभाव उपपद्यते इति मौनमेवाद्वैतमिच्छता कर्तव्यमित्युक्तम् ।

## ❀ त्रैलोक्याग्रहणेऽपि भेदज्ञानोपपत्तिः ❀

यत्पुनरेतत्--त्रैलोक्याग्रहणे ततोऽन्यः कथं घटः प्रतीयते इति, तन्न; निर्विकल्पकबुद्धौ प्रतियोगिग्रहणमन्तरेणाप्यभावप्रतिभासनात् । गृहीतेषु चाभावेषु यथा यथा प्रतियोगिज्ञानं भवति, तथा तथा तद्विकल्पेन स्मृतिरेव भवतीत्युक्तम्--योऽसावर्थो मया दृष्टः, स एतदात्मको न भवतीत्येवं स्मृतिः सर्वाविसंवादेन भवन्ती दृश्यते । तस्मान्निर्विकल्पकज्ञानेन त्रैलोक्याग्रहणेपि ततो भिन्न एव घटो गृहीतस्ततो घटस्मृतिसहकारिणेन्द्रियेण घटाद्भिन्नः पट इति ज्ञानं सविकल्पकमेव जन्यते । ततश्च नेतरेतराश्रयो दोषः । एकदेशा-वस्थितानां च घटपटादीनामंगुल्योरिव युगपदपि भेदो गृह्यते, ततोऽपि नेतरेतराश्रयत्वम् ।

## ❀ लक्षणप्रतिभासभेदाद्भेदग्रहणव्यवस्था ❀

यच्चोक्तम्—किं लक्षणभेदाद् भेदः ? प्रतिभासभेदाद्वा ? इति, तन्न; उक्तोत्तरत्वात् । उक्तमत्रादावेव संशयविषये लक्षणभेदाद्भेदो गम्यत । सर्वत्र

च संशयनिमित्तं नास्ति, ततो नानवस्था। प्रतिभासभेदाद्भेदेऽपि—नानवस्था—न हि प्रतिभासानां भेदग्रहणे नार्थानां भेदव्यवस्थितिरिष्यते, येनानवस्था स्यात्। किं तर्हि? अर्थानां भेदप्रतिभासि ज्ञानमेकमपि प्रतिभासभेद इत्युच्यते। तस्याग्रहणेपि तद्विषयस्य नाग्रहणमिति समर्थितं सहोपलम्भनिराकरणप्रस्तावे।

## ❋ सदाकारोपपादिताद्वैतनिरासः ❋

यत्पुनरेतत्—सदाकारप्रतीत्यविशेषादिति, तन्न; तुल्यप्रमाणत्वात्—यत एव प्रमाणात् सदाकारप्रतीत्यविशेषोऽवगम्यते, तत एव प्रमाणाद्देशकालावयवगुणक्रियाजात्यादिविशेषाकारैः प्रतीतिविशेषोऽपि प्रतिभात्येवेति। विशेषाकाराणां सदाकारादन्यानन्यत्वाभ्यामनुपपत्तेरिति चेत्, कोऽयं सदाकारः? किं सत्तैव? किं तद्वानिति? यदि सत्तासामान्यम्, तदा ततो भिन्ना एव विशेषाकाराः, सामान्यतद्वतोर्भेदसमर्थनात्। न च शशविषाणवदसत्त्वप्रसंगः, शशविषाणस्य सत्तासम्बन्धाभावाद्विवक्षितविशेषाणां तु सत्ता सम्बन्धित्वात्। अथ सत्तावानेव सदाकार उच्यते, ततः सदाकारान्न देशकालादिविशेषाकारा भिद्यन्ते, तथापि सदाकाराविशेषाद्वर्गैकत्वं सिध्यतु न व्यक्त्यैकत्वम्। व्यक्त्येकत्वसाधने हि प्रत्यक्षादिविरोध उक्तः। तथा च सूत्रम्—"संख्यैकान्तासिद्धिः प्रमाणानुपपत्त्युपपत्तिभ्याम्" (न्या० सू० ४।१।४१) इति। प्रमाणानुपपत्तौ तावन्न सिद्धिः सर्ववादसिद्धिप्रसंगात्। प्रमाणोपपत्तौ च प्रमात्रादिभेदसिद्धिस्तथा चोक्तम्—"चतसृषु चेदं विधासु तत्त्वं परिसमाप्यत" (न्या० भा०) इति। अविद्यानिबन्धनः सर्वोऽयं भेदप्रतिभास इत्यत्रापि प्रमाणं वक्तव्यम्। न हि वाङ्मात्रेण कस्यचिदर्थस्य सिद्धिः, सर्ववादसिद्धिप्रसंगादित्युक्तम्। प्रमाणाभिधानेन च प्रतिपाद्यप्रतिपादकादिभेदसिद्धिरपरिहार्येति।

## ❋ शब्दाद्वैतं तन्निरासश्च ❋

एतेन शब्दाद्वैतं प्रत्युक्तम्, यदाहुः—

"अनाद्यनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥" (वाक्य० १।१)

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिवाभाति सर्वं शब्दे प्रतिष्ठितम्॥" (वाक्य० १।१२३)

यद्येनानुविद्धम्, तत्ततो न भिद्यते, यथा मृदानुविद्धा घटादयो नामृदात्मकाः। यो वा यस्य परिवर्तः स ततो न भिद्यते, यथा चन्द्रपरिवर्तो जलचन्द्रः शब्दपरिवर्तश्च सर्वोऽर्थः, शब्दाकारेण प्रतिभासनात्। तस्मात्सर्वोऽर्थः शब्दात्मक इति। शब्दा अपि सर्वैर्वर्णैरनुविद्धा, वर्णाश्च स्वरैरनुविद्धाः, स्वराश्च नादेनैकेनानुविद्धास्तस्मादेकं शब्दात्मकं सर्वं जगदिति। अद्वैताभिधानादेव विज्ञानाद्वैतब्रह्माद्वैतशब्दाद्वैतादीनां न कश्चिद्विशेषः। प्रतिष्ठापनप्रक्रियाभेदं मुक्त्वा विज्ञानाद्वैतमन्यथा प्रतिष्ठापयन्ति, ब्रह्माद्वैतमन्यथा, शब्दाद्वैतमन्यथेत्येतावन्मात्रेणाद्वैतवादिनां मतभेदः, न त्वद्वैतेऽपि कश्चिद्भेदः तथा च सूत्रकृता सर्वेषामद्वैतवादिनां प्रतिषेधार्थमेकमेव सूत्रमुक्तम्—"संख्यैकान्तासिद्धिरित्यादि"। सत्कार्यप्रतिषेधात् न स्पर्शाद्याकारेण शब्दतत्त्वस्य परिणाम इति।

## ❀ अविद्यातो भेदप्रतीतिनिरासः ❀

नाप्यविद्यावशेन भेदप्रतीतिः, अविद्या हि मिथ्याज्ञानमुच्यते। तच्च देशकालभेदेन निमित्तभेदेन च स्वरूपतश्च भिद्यते। अन्यथा सर्वत्र सर्वदा सर्वेषां च केशादिभ्रान्तिप्रसंगः, तत्त्वज्ञानानुदयप्रसंगश्च; निमित्ताभावात्। निमित्तसद्भावे च निमित्तनैमित्तकयोर्भेदाद्वैतविरोधः। तत्राप्यविद्यात एव भेद इति चेत्, एवं तर्हि न वस्तुतस्तत्त्वज्ञानं कुतश्चित्कदाचिदुत्पद्यत इत्यपवर्गानुपपत्तिः। अविद्यानिमित्तत्वे च तत्त्वज्ञानापवर्गयोः केशोण्डुकादिवदवास्तवत्वप्रसंगः, ततश्चेतरशास्त्रवदद्वैतशास्त्रमप्यपुरुषार्थं वस्तुतः प्राप्तम्।

## ❀ ब्रह्मणो मोक्षानुपपत्तिः ❀

अपि च मोक्षः कस्य चिन्त्यते? तस्यैव ब्रह्मण इत्ययुक्तम्, तस्य [1]स्वभावमुक्तत्वात्। संसारित्वे वा न कश्चिन्मुक्तोऽस्तीति मोक्षतदुपाययोः केनचिदप्यदृष्टत्वादनुपदेशप्रसंगः। तदनुपदेशे च कुतस्तत्र प्रवृत्तिः? प्रवर्तमानोऽपि यदैको मुक्तः, तदैव संसारोच्छेदप्रसंगोऽन्यस्य संसारिणोऽसम्भवात्। अविद्यावशान्नात्माभिमान इति चेत्, किमपवर्गेऽपि अविद्या न क्षीणा? न च मुक्तादन्योऽप्यात्मास्ति यस्याविद्या स्यात्। जीवात्मानः सन्तीति चेत्, ते किमन्ये? अनन्ये वा? यद्यन्ये, तदैकत्वविरोधः। अथ मुक्तादनन्ये, ततः कथं जीवात्मनां संसारः?

---

१. स्वभावमुक्तत्वात्—स्वभावतो मुक्तत्वात् नित्यशुद्धबुद्ध मुक्तस्वरूपत्वादित्यर्थः।

## ❀ जलचन्द्रवज्जीवरूपभेदानुपपत्तिः ❀

एतेन जलचन्द्रवदित्यपि निरस्तम्। यथैव हि राहुच्छन्ने चन्द्रे न कचिज्जलचन्द्र उपलभ्यते, एवं परमात्मनाऽपवर्गप्राप्ते संसारी न कचिदुपलभ्यते।

सुखदुःखादिव्यवस्थानुपपत्तिप्रसंगश्च--यथा यादृशमाकाशस्थस्य चन्द्रस्य रूपमुपलभ्यते, तादृशमेव सर्वजलचन्द्राणाम्, न प्रतिचन्द्रं रूपव्यवस्थाऽस्ति, तथा यादृशमेव स्वात्मनः सुखं दुःखं वा ज्ञानेच्छादिकं वा, तादृशमेव सर्वस्य स्यात्प्रतिपुरुषं सुखादिव्यवस्थानुपपत्तिः। शरीरभेदाद् व्यवस्थेति चेत्, न; अदृष्टत्वात्—बालकौमारयौवनादिशरीरभेदेऽपि व्यवस्था न दृष्टा; पूर्वशरीरेष्वनुभूतानि सुखादीनि शास्त्रादीनि च वृद्धशरीरेऽप्यनुसन्धत्ते—मम सुखमासीदिति।

## ❀ घटाकाशदृष्टान्तनिरासः ❀

एतेन घटाकाशमठाकाशाद्युदाहरणं प्रत्युक्तम्। किं च यथा घटनिवृत्तावेव घटाकाशं मुक्तं भवत्येवं देहनिवृत्तावेव तदवच्छिन्नः पुमान् मुक्तः स्यादित्ययत्नसिद्धो मोक्षः प्रसक्तः ततश्च मोक्षशास्त्रं व्यर्थम्।

## ❀ अविद्यासंस्कारनिरासः ❀

देहनिवृत्तावप्यविद्यादिसंस्कारस्तत्कृतोऽस्ति, तदवच्छिन्नस्य पृथग्भूतस्येवात्मप्रदेशस्य संसार इति चेत्, न; विकल्पानुपपत्तेः—स हि देहकृतः संस्कारः किं देहवत्परिच्छिन्नदेशः? किं वाकाशसत्तावद् व्यापक इति? प्राच्ये पक्षे चित्रकूटदेशस्थेन देहेन स्वावच्छिन्न एवात्मप्रदेशः कृतसंस्कारस्तत्रैव जन्मान्तरं जनयेत्, सुखदुःखाद्युपभोगोऽपि तत्रैव स्यात्, अन्यप्रदेशस्य तत्संस्कारेणावच्छिन्नत्वात्। अथ गत्वरः संस्कारः प्रदेशान्तरमप्यवच्छिनत्ति, न; अविद्याधर्मादिसंस्कारस्य निष्क्रियत्वेन गमनानुपपत्तिः। किं च मुक्तमपि प्रदेशं गत्वाऽवच्छिन्द्यात्। तदवच्छेदे च मुक्तस्य पुनः संसारित्वप्रसंगः। तत्रैवावस्थितः प्रदेशान्तरेऽपि स्वकार्यं संस्कारः करोतीति चेत्, एवमपि मुक्तप्रदेशेऽपि कुर्यादिति स एव प्रसंगः।

अथाकाशसत्तावद् व्यापकः संस्कारः, तेन तर्हि सर्वेऽप्यात्मप्रदेशा व्याप्ता इति। न कश्चित्प्रदेशोऽपवृक्तः[1] स्यात्। एतेन मणिसूत्रादिनिदर्शनं प्रत्युक्तम्, घटाकाशादिध्वान्तेनास्यापि तुल्यदोषत्वात्। तस्मान्न सर्वदेहेष्वेक एवात्मेति।

---

१. अपवृक्तः = अपवर्गं प्राप्तो मुक्त इति यावत्।

## ❀ अग्निविस्फुलिङ्गदृष्टान्तनिरासः ❀

अथ तप्तायःपिण्डादग्निकणा इवात्मतत्त्वाज्जीवात्मानोऽसंख्याता उत्पद्यन्ते। तेषां संसारमोक्षज्ञानादिव्यवस्थेति, न; संसारिणामप्यात्मनामनादित्वस्य प्रसाधितत्वात् कृतकानां चानित्यत्वप्रसंगस्ततोऽपरलोकित्वम्।

## ❀ समुद्रोदकदृष्टान्तनिरासः ❀

अथ समुद्रादुदकवत्तत एव निःसरन्ति, पुनस्तत्रैव लीयन्ते इति, न; समुद्रवद् ब्रह्मणः सावयवत्वादिदोषप्रसंगात्। प्रतिषिद्धश्च सत्कार्यवादः, तेन परिणामलयपक्षे न दृष्टान्तः कश्चित् सिद्धः।

## ❀ अविद्याया जीवत्वशंकातन्निरासश्च ❀

अथाविद्यैव जीवात्मा, तस्य चानादित्वमसंख्यातत्वं संसारित्वं च, तन्निवृत्तिश्च मोक्ष इति। स कस्येति वाच्यम्? ब्राह्मणस्तावन्न सम्भवतीत्युक्तम्। प्रदीपनिर्वाणवदिति चेत्, तदर्थं कः प्रवर्तते? जीवात्मैवेति चेत्, न; आत्मनिवृत्तेरपुरुषार्थत्वात्। अविद्यास्वभावो हि जीवात्मा किमर्थमात्मानं निवर्तयति? न च तस्यात्मनिवृत्तावुपायोऽस्ति। विद्या हि तावन्नाऽविद्यात्मके जीवे प्रादुर्भवति, विरोधात्। नापि ब्रह्मणि तत्र नित्यत्वात्। न चोपायान्तरेणाविद्याया आत्यन्तिकः क्षयः सम्भवति। न च मिथ्याज्ञानादन्या काचिदविद्याऽस्ति। ज्ञानस्य च सर्वस्याश्रितत्वं समर्थितम्, तेनाविद्या कस्येति वाच्यम्। ब्रह्मणस्तत्प्रदेशस्य वा न सम्भवतीत्युक्तम्। न ह्येकाश्रयत्वे सुखदुःखस्मृत्यादीनां व्यवस्था सम्भवति, शरीरभेदेऽप्यनुसन्धानदर्शनात्। गर्भशरीरानुभूतेष्वननुसन्धानवदिति चेत्, न; तत्र स्मृतिहेतोः संस्कारस्यानुत्पन्नत्वाद्विनष्टत्वाद्वाऽभिभूतत्वाद्वा। शरीरान्तरेष्वप्येवमिति चेत्, न; तत्राप्यस्मृतिप्रसंगात्। दृश्यते चोपाध्यायस्य शास्त्रार्थाद्यनुस्मृतिः। ततस्तत्संस्कारोऽनभिभूत एवास्तीति गम्यते। ततः शिष्यादेरपि स्मृतिप्रसंगस्तदात्मैकत्वात्कौमारादिशरीरेष्विव। तस्मात्प्रतिशरीरं सुखदुःखस्मृत्यादिव्यवस्थोपलम्भान्नानात्मेति। ननु भवत्पक्षेऽपि सर्वेऽप्यात्मानो व्यापकत्वात्सर्वस्मिन्नपि शरीरे सन्तीति व्यवस्थानुपपत्तिः एकस्मिंश्च शरीरे सर्वपुरुषाणां लिंगं गृह्येत, न; अदृष्टनियमाद् व्यवस्थोपपत्तेः—यत्कृतेनादृष्टविशेषेण यच्छरीरमुत्पादितम्, तत्तस्यैव भोगायतनं भवत्यात्मान्तराणां तु तत्र सन्निधिमात्रेण सत्त्वं न त्वधिष्ठातृत्वेनेत्यतो नैकस्मिन्नपि शरीरे सर्वेषां लिंगोपलब्धिप्रसंग इति। तदेवं स्थितमेतत्—संसार्यात्मानोऽसंख्याताः, परमात्मा त्वेक एवेत्यतः परमोपासन-

स चोपासनविधिः क्लेशकर्मक्षयसमाधिलाभार्थमनुष्ठानम्। तथा चोक्तम्—"तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" "क्लेशतनूकरणार्थः समाधिभावनार्थश्चेति।" तत्रोन्मादकामादिव्यपोहार्थमाध्यात्मिकादिदुःखसहिष्णुत्वं तपः। प्रशान्तमन्त्रस्येश्वरवाचिनोऽभ्यासः स्वाध्यायः। परमेश्वरतत्त्वस्य प्रबन्धेनानुचिन्तनमीश्वरप्रणिधानम्।

---

द्वारेण केषांचिन्मोक्षगमनेऽप्यविरोधः। तस्मात्परमात्मोपासनांगत्वेनापवर्गसाधनत्वादुक्तं परमात्मनोऽपरमात्मभ्योऽर्थान्तरत्वेन परिज्ञानमिति।

## ❀ उपासनाविधिः ❀

कः पुनस्तस्योपासनविधिरित्युच्यते—स चोपासनविधिः क्लेशक्षयसमाधिलाभार्थमनुष्ठानम्। येन केनचिदुपायेन क्लेशा रागद्वेषमोहाख्याः क्षीयन्ते, महेश्वरविषयं चित्तैकाग्र्यं च प्राप्यते, स उपायोऽनुष्ठीयमानः परमेश्वरोपासनविधिरित्युच्यते, तत्र "योगाच्चाध्यात्मविध्युपायैः" (न्या० सू० ४।२।४६) इति वचनात्। पातञ्जलादिशास्त्रेष्वपि उपदिष्टः उपायः स्वशास्त्राविरोधेन प्रतिपत्तव्यः। तत्र युक्तिसामर्थ्याच्च "परमतमप्रतिषिद्धमनुमतम्" इति हि तन्त्रयुक्तिः। तेनाशनात्मकाः सुवर्णदानदीक्षादय उपाया नात्र गृह्यन्ते, तेषां रागादिक्षपणे सामर्थ्याभावात्। अत्रापि तेषु च संसारनिवृत्तिर्न सम्भवतीति विचारितं दुःखसूत्रे। द्वादशविधप्रमेयतत्त्वज्ञानमन्तरेणान्यथा ज्ञानं नोपाय इत्यपि विचारितम्। द्वादशप्रमेयज्ञानमपि नोत्पन्नमात्रमसहायं रागादिनिवृत्तौ समर्थम्। किं तर्हि? योगोपायानुष्ठानसहितम्।

## ❀ द्विविधयोगनिरूपणम् ❀

योगश्च व्युत्थिताऽव्युत्थितावस्थाभेदेन द्विविधः—तत्र व्युत्थितावस्थायां तपःस्वाध्यायादिलक्षणः क्रियायोगः सेवनीयः। तथा चोक्तम्—"तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" (यो० सू० २।१), "क्लेशतनुकरणार्थः समाधिभावनार्थश्च" (यो० सू० २।२)। अर्थक्रममाश्रित्येह विपर्ययेण पाठः कृतः। पातञ्जले तु सूत्रे समाधिभावनार्थः क्लेशतनुकरणार्थश्चेति पाठः। तत्राध्यात्मिकादिदुःखसहिष्णुत्वं तपः। बाह्यनिमित्तनिरपेक्षं शारीरं मानसं च दुःखमाध्यात्मिकम्, मनुष्यपश्वादीनि भूतान्यधिकृत्योत्पन्नमाधिभौतिकम्, देवप्रयुक्तं शीतातपादिनिमित्तमधिकृत्योत्पन्नमाधिदैविकम्—तदेतत् त्रिविधमपि दुःखं शान्तभावेन नियमं कृत्वा सहमानस्य धर्माधर्मयोः सञ्चयक्षयौ कुर्वत्तप

इत्युच्यते। ततो धर्मसञ्चयाद् योगप्रवृत्तिहेतुः श्रद्धाद्यतिशयो भवति। अधर्मक्षयाच्च व्याधिसंस्त्यानसंशयप्रमादालस्यादीनामन्तरायाणामुपशमः, ततोऽनाकुलं चित्तं समाधीयते।

ननु दुःखेभ्यश्चित्तविक्षेप एव भवत्यतो न योगार्थिना तपः कर्तव्यम्, धर्माधर्मयोः संचयक्षयौ च जपप्रत्याहारादिभ्य एव भवतः, तपःसाधनत्वे तु प्रमाणं नास्तीति, नैतदस्ति, यो ह्युन्मादकामादिभिरभिभूतः, स कथं जपप्रत्याहारादिकं कर्तुं शक्नोति? अतस्तेन तपः कर्तव्यम्। यथा वस्त्रस्य स्थूलो मलः स्थूलोपायेन निवर्त्यते, सूक्ष्मस्तु सूक्ष्मोपायेनेति। तथात्मनः स्थूलो मलस्तावत्स्थूलोपायेन निवर्त्यते, सूक्ष्मस्तु पश्चात् सूक्ष्मोपायेन जपप्रत्याहारादिना निवर्त्यत इति।

## ❀ तपसो धर्मादिसाधनत्वे प्रमाणम् ❀

यच्चोक्तम्—धर्मसञ्चयादेस्तपःसाधनत्वे प्रमाणं नास्तीति, तन्न; आगमसिद्धत्वात्। तथा च मनुः—

"तपोमूलमिदं सर्वं यद्दैवं मानुषं सुखम्।
तपोमध्यं बुधैः प्रोक्तं तपोऽन्तं वेददर्शिभिः॥" (मनु० ११।२३४)

"महापातकिनश्चैव शेषाश्चाकार्यकारिणः।
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः॥" (मनु० ११।२३९)

"यत्किंचिदेनः कुर्वन्ति मनोवाङ्मूर्तिभिर्जनाः।
तत्सर्वं निर्दहन्त्याशु तपसैव तपोधनाः॥" (मनु० ११।२४१)

यद्यपि तपः स्वर्गादिफलकमपि भवति, तथापि विशिष्टज्ञानवैराग्यादिसहकार्युपकृतं चित्तप्रसादमेवेपद्व्यवधानेन करोति। प्रसन्ने तु चित्ते तपोनियमं चान्द्रायणादिकं परिसमाप्य योगांगान्येवानुतिष्ठेत। यस्तु पूर्वजन्मकृततपःसामर्थ्यात्प्रत्याहारादिषु समर्थ एव, तं प्रति तपो नोपदिश्यते, तदर्थस्य सिद्धत्वादिति।

## ❀ क्रियायोगनिरूपणम् ❀

प्रशान्तमन्त्रस्येश्वरवाचिनोऽभ्यासः स्वाध्यायः। क्षुद्रसिद्धिहेतुरपीश्वरवाची मन्त्रोऽस्तीति तत्प्रतिषेधार्थं प्रशान्तग्रहणम्। परमात्मैकनिष्ठेन भवितव्यमिति। ज्ञानार्थमीश्वरग्रहणं योगशास्त्रार्थाभ्यासो वा स्वाध्याय इति। परमेश्वरतत्त्वस्य भक्त्यतिशयात्प्रबन्धेनानुचिन्तनं पर्यालोचनमीश्वरप्रणिधानं स्तुतिजपपुष्पा-

**समासतो रागद्वेषमोहाः क्लेशाः, समाधिप्रत्यनीकत्वेन संसारापत्तिद्वारेण क्लेशहेतुत्वात्।**

दिभिराराधनं वा। सर्वक्रियाणां परमगुरावर्पणं वा। तद्वाचकस्य प्रणवस्य जपस्तदर्थभावनं चेति। सेयं तपःस्वाध्यायादिलक्षणक्रियायोगहेतुत्वाद् योग इत्युच्यते। स च क्रियायोगः संसेव्यमानः समाधिं भावयति क्लेशांश्च तनूकरोति।

## ❀ क्लेशाः ❀

के पुनरत्र क्लेशाः कियन्तो वेत्युच्यते। समासतो रागद्वेषमोहाः क्लेशाः, ते हि समाधिप्रत्यनीकत्वेन संसारापत्तिहेतुत्वेन च पुरुषं क्लेशयन्तीति। तत्राशक्तिलक्षणो रागः। असहिष्णुत्वलक्षणो द्वेषः मिथ्याप्रत्ययो मोह इति। ननु "अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः" (यो० सू० २।३) इति पतञ्जलिः। ततोऽस्मिताभिनिवेशयोः किं नात्राभिधानम्? न; असम्भवादत्रैवान्तर्भावाच्च। तथा हि—"दृग्दर्शनशक्त्योरेकात्मतेवाऽस्मिता" (यो० सू० २।६) इति लक्षणमुक्तम्। अस्यार्थः—"पुरुषो दृक्शक्तिर्बुद्धिर्दर्शनशक्तिः, तयोरेकस्वरूपापत्तिरिवास्मिता भोक्तृभोग्यशक्त्योरत्यन्तासंकीर्णयोरविभागप्राप्ताविव सत्यां भोगः प्रकल्प्यते। स्वरूपप्रतिलम्भे हि तयोः कैवल्यमेव भवति" (यो० भा० २।६) इति। एतच्च प्रधानप्रतिषेधाद्भोगप्रतिषेधाच्च प्रतिषिद्धम्। विभक्ते चाऽविभागज्ञानमविद्यैव, न ततोऽन्यास्मिता। तथाऽभिनिवेशलक्षणम्—"स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः" (यो० सू० २।९)। योऽयमात्माशीर्जातमात्रस्यापि सर्वप्राणिनो भवति—मा न भूवम्, भूयासमिति मरणत्रासः, सोऽभिनिवेशः। सोऽनादिमरणदुःखानुभवारूढवासनात्मत्वात्स्वरसवाहीत्युच्यते। स च यथाऽत्यन्तमूढेषु दृश्यते, तथा विदुषोऽपि ज्ञातपूर्वापरान्तस्यारूढः प्रतीयत इति। अस्यापि मोहे द्वेषे वान्तर्भावः, अवश्यम्भाविनि मरणे जीविताशाऽतस्मिंस्तदिति प्रत्ययरूपत्वात् मोहः। विदुषोऽपि अध्यात्मदोषवशाद्दिङ्मोहादिवन्मोहः सम्भवतीत्युक्तम्। मरणदुःखासहिष्णुत्वमेव मरणत्रासः, तेन द्वेषान्न भिद्यते। किञ्चिद्वैधर्म्याद्भेदे त्वीर्ष्यामन्युमात्सर्यमदमानादीनामपि भेदप्रसङ्गः, ततश्च पञ्चत्वनियमोपि न स्यात्, तस्मात् त्रिविधः एव क्लेशः। तथा च सूत्रम्—"तत् त्रैराश्यरागद्वेषमोहार्थान्तरभावात्" (न्या० सू० ४।१।३) इति। ननु दोषाणां त्रैराश्यमुक्तम्, क्लेशाः किं ततोऽन्ये? दोषा एव हि "न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य" (न्या० सू० ४।१।६४) इत्यत्र क्लेशशब्देन उक्ताः सूत्रकृतेति। त एते क्लेशाः क्रियायोगमनुतिष्ठद्भि-

तथा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि। तत्र देशकालावस्थाभिरनियताः पुरुषस्य शुद्धिवृद्धिहेतवो यमाः, अहिंसाब्रह्मचर्यास्तेयादयः। देशकालावस्थापेक्षिणः पुण्यहेतवः क्रिया-

---

विंद्भिः प्रतिदिनं तनूभवन्तः प्रत्यक्षेणाप्युपलभ्यन्त इति। यथा च क्रियायोगः क्लेशक्षयहेतुः, तथा योगाङ्गान्यपीत्यतस्तान्यप्यतियत्नेनानुष्ठेयानि।

## ॐ योगाङ्गानि ॐ

कानि पुनस्तानि योगाङ्गानि कियन्ति चेत्युच्यन्ते—"यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" (यो० सू० २।२९)। अङ्गानि निर्वर्तकानीत्यर्थः। समाधितः कोऽन्यो योगो यस्य समाधिरङ्गमिति चेत्, समाधिरेवान्त्यप्रकर्षापन्नो योगः, तस्य पूर्वः समाधिरङ्गम्, अन्त्यशब्दस्याद्यमध्यशब्दवत्। अथवा सर्वोऽपि समाधिप्रकर्षः पूर्वसमाधिजन्यत्वेन योग उत्तरप्रकर्षजनकत्वेनाङ्गमिति। यदि समाधित एव समाधिर्भवति, नन्वेवमेकमेवाङ्गं प्राप्तमतोऽष्टावङ्गानीति न वाच्यम्, न; पूर्वपूर्वसिद्धावुत्तरोत्तरासिद्धेः, न हि यमासिद्धौ नियमः सिध्यति, नियमासिद्धौ चासनं न सिध्यति, आसनासिद्धौ च प्राणयामो न सिध्यति, तदसिद्धौ प्रत्याहारो न सिध्यति, तदसिद्धौ धारणा न सिध्यति, तदसिद्धौ ध्यानं न सिध्यति, ध्यानासिद्धौ च समाधिर्न सिध्यति अतोऽष्टाङ्गानामपि योगाङ्गत्वमिति।

## ॐ १. यमनिरूपणम् ॐ

"तत्र देशकालावस्थाभिरनियताः पुरुषस्य शुद्धि-वृद्धिहेतवो यमाः।" शुद्धिरधर्मक्षयः, वृद्धिर्धर्मोपचयः। अथवा शुद्धिश्चित्तवैमल्यम्, वृद्धिर्योगोत्कर्षः। तद्धेतवो ये देशादिभिरनियताः सर्वस्मिन्देशेऽनुष्ठीयन्ते सर्वस्मिन् काले सर्वस्यामवस्थायाम्, ते यमा अहिंसादयः।

नन्वहिंसादयोऽपि कैश्चिद्देशादिनियमेनानुष्ठीयन्ते, यथा—तीर्थे हिंसां न करिष्यामि सर्वदिवसेषु वा। अयुद्धावस्थायां वा प्राणिवधं न करिष्यामीति। न; देशाद्यपेक्षित्वेऽहिंसादीनामपि नियमत्वात्, अत एव गृहस्थादेः परमार्थतो नियमाः सन्ति। यमैरुपेतो हि यतिरित्युच्यते। यमाभावे कथं गृहस्थादेर्नियमनिष्पत्तिरिति चेत्, न, प्रवर्तकधर्मनिष्पादकनियमनिष्पत्तेरविरोधात्। निवर्तको हि यतिधर्मः, तद्धेतवो नियमाश्रयमस्य न निष्पद्यन्त इति।

विशेषा नियमाः, देवताप्रदक्षिणसन्ध्योपासनजपादयः। योगकर्मविरोधिक्लेशजयार्थं करणबन्ध आसनम्, पद्मकस्वस्तिकादि। कौष्ठ्यस्य वायोर्गतिविच्छेदः प्राणायामः रेचकपूरककुम्भकप्रकारेण शनैश्शनैर्जेतव्यो वनगजेन्द्रवत्। समाधिप्रत्यनीकार्थेभ्यः समन्ताच्चेतसो व्यावर्तनं

---

## ❀ २. नियमनिरूपणम् ❀

"देशकालावस्थापेक्षिणः पुण्यहेतवः क्रियाविशेषनियमाः।" तत्रदेशापेक्षि देवताप्रदक्षिणम्। कालापेक्षि सन्ध्योपासनम्। जपक्रिया तु शुध्यवस्थामात्रमपेक्षते। पुण्यातिशयं प्रतिदेशाद्यपेक्षितत्वमस्त्यनन्तं, शिवसन्निधावित्यादिश्रवणात्। एवमन्येपि क्रियाविशेषा देशाद्यपेक्षत्वेन नियमा इति। पातञ्जलाभिप्रायेण तु निवृत्तिलक्षणा यमाः, प्रवृत्तिलक्षणा नियमा इति यमनियमलक्षणं द्रष्टव्यम्। तथा चोक्तम्—"अहिंसासत्यास्तेयब्रह्मचर्याऽपरिग्रहा यमाः" (यो० सू० २।३०)। "शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" (यो० सू० २।३२) इति।

## ❀ ३. आसननिरूपणम् ❀

"योगकर्मविरोधि क्लेशजयार्थं करणबन्ध आसनम्।" योगक्रियाया विरोधिनः क्लेशा व्याध्यादयः, तेषां ह्यासनजयाज्जयः श्रूयते। करणान्यत्र शरीरावयवाः पादादयः, तेषां बन्धः संयमः प्राणायामादिसिध्यर्थः। तदासनं स्थिरं सुखेनोपवेशनमित्यर्थः। तच्च पद्मकस्वस्तिकाद्यनेकप्रकारम्।

## ❀ ४. प्राणायामनिरूपणम् ❀

कोष्ठस्थवायोः श्वासप्रश्वासलक्षणस्य गतिच्छेदः प्राणायामः। प्रच्छन्ने निवाते निर्जने निःशब्दे च प्रदेशे यथासुखमासनं बद्ध्वा रेचकपूरककुम्भकप्रकारः कर्तव्यः। स च शनैः शनैर्जेतव्यो वनगजेन्द्रवत्। यथा वनगजेन्द्रः प्रयोगेण शनैर्जीयमानो महान्तमुपकारं करोति, हठादप्रयोगेण गृहीतस्तु विनाशमेव करोति तथा वायुः प्रयोगेण शनैर्जीयमानोऽशेषमधर्मं रागादिमलं च निर्नाश्य योगं प्रापयति, अप्रयोगेणातिक्रम्यावगृहीतस्तु वातगुल्माद्यनर्थमेव करोतीति।

## ❀ ५. प्रत्याहारनिरूपणम् ❀

समाधिप्रयत्नीकार्थेभ्यः समन्ताच्चेतसो व्यावर्तनं प्रत्याहारः। प्रत्याहृते हि चेतसीन्द्रियाण्यपि प्रत्याहृतानि भवन्ति। कस्मात्? तन्मूलनत्वादिन्द्रि-

प्रत्याहारः। देशबन्धश्चित्तस्य धारणा। तत्र प्रत्ययैकतानता ध्यानम्। तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। एतदेव ध्यानोत्कर्षान्निवाताचलप्रदीपावस्थानवदेकत्रैव चेतसोऽवस्थानं समाधिरभिधीयते।

एवमेतानि योगाङ्गानि मुमुक्षुणा सर्वेषु ब्रह्मादिस्थानेष्वनेकप्रकारदुःखभावनयाऽनभिरतिसंज्ञितं परं वैराग्यं महेश्वरे च परां भक्तिमाश्रित्य अत्यन्ताभियोगेन सेवितव्यानि। ततोऽचिरेणैव कालेन भगवन्तमनौ-

---

याणां प्रवृत्तेः। प्रत्याहाराभियुक्तस्येन्द्रियजयः समाधिलाभश्च भवति, नान्यथेति।

## ❋ ६. धारणानिरूपणम् ❋

देशबन्धश्चित्तस्य धारणा। कोऽत्र देशः? कश्च देशो चित्तस्य बन्ध इति? शरीराद्यवयवः पादादिः, बाह्यो वा सूर्यमण्डलादिर्देश इत्येके। वयन्तु ब्रूमः—परमात्मैवात्र देशोऽभिप्रेतः, तदाराधनप्रवृत्तत्वान्मोक्षार्थिनः। पादादिषु धारणानां हि विष्णुलोकादिप्राप्तिः फलं श्रूयते। चित्तस्य मनसः प्रयत्नेन धारणं निश्चलीकरणं बन्ध इत्युच्यते, साधारणेति।

## ❋ ७. ध्याननिरूपणम् ❋

तत्रैकतानता ध्यानम्। तस्मिन्धारणादेशे ध्येयालम्बनस्य प्रत्ययस्य सदृशः प्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम्। तत्रैकतानतेत्युक्तेऽपि चित्तस्येत्यनुवृत्तेश्चित्तस्यैकतानतेति गम्यते। मनसश्च सदृशप्रत्ययप्रवाहकर्तृत्वमेवैकतानतेति।

## ❋ ८. समाधिनिरूपणम् ❋

तदेवार्थमात्रनिर्भासस्वरूपेण शून्यमिव समाधिः। ध्यानमेव ध्येयाकारमात्रनिर्भासप्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति उपाधिसंसर्गात्स्फटिकवत्तदा समाधिरित्युच्यते। यद्वा ध्यानोत्कर्षान्निवाताचलप्रदीपावस्थानमिवैकत्रैव चेतसोऽवस्थानं समाधिरभिधीयते। स च प्रज्ञालोकचिह्नः समाध्युत्कर्षतारतम्याद्विप्रज्ञालोकोत्कर्षतारतम्यं भवति।

तदेवमेतानि योगाङ्गानि मुमुक्षुणा सर्वेषु ब्रह्मादिस्थानेष्वनेकप्रकाराणि सातिशयत्त्वयवधबन्धपरिक्लेशादीनि दुःखानि भावयता सर्वत्रानभिरतिसंज्ञितं परं वैराग्यमाश्रित्य महेश्वरे तु अत्यन्तोत्कृष्टगुणदर्शनात्परमां भक्तिमाश्रित्य

पम्यस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति । तं दृष्ट्वा निरतिशयं श्रेयः प्राप्नोति । तथा चोक्तम्—

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥" (श्वेता० उ० ६।२०)

"तमेव विदित्वाऽतिमृत्युमेति" ( श्वेता० उ० ३।८ ) इत्यादि च ।
तस्माच्छिवदर्शनादेव मोक्ष इति ।

---

तद्दर्शनार्थमत्यन्ताभियोगेन सेवितव्यानि । ततः समाधिप्रकर्षातिशयं प्राप्ताश्चिरेणैव कालेन भगवन्तमनौपम्यस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति । दृष्ट्वा निरतिशयं श्रेयोऽपवर्गाख्यं प्राप्नोति । तथा चोक्तम्—

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥" ( श्वेता० उ० ६।२० )

"तमेव विदित्वाऽतिमृत्युमेति" ( श्वेता० उ० ३।८ ) इत्यादि च ।

आत्मत्वाविशेषेति कस्मान्नान्यदर्शनान्मोक्ष इति चेत्, न; अन्यस्य सर्वानिमित्तत्वात्—न ह्यन्योप्यात्मा सर्वोत्पत्तिमतां निमित्तमिति । दिक्कालयोरपि सर्वोत्पत्तिमतां निमित्तकारणत्वादविशेष इति चेत्, न; अप्रमाणकत्वात् ।

## ॐ कालस्य दिशश्च सप्रमाणत्वाशङ्का ॐ

नन्वप्रमाणकत्वमसिद्धम्, यतः कालः परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गः, तेषां विषयेषु पूर्वप्रत्ययविलक्षणानामुत्पत्तावन्यनिमित्तासम्भवात् । यदत्र निमित्तम्, स कालः । क्षणलवनिमेषकाष्ठाकलामुहूर्त्तयामाहोरात्रार्द्धमासमासत्वर्यनसंवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुश्च सर्वक्रियाणां चोत्पत्तिस्थितिविनाशहेतुः, तद्व्यपदेशात् । स च तल्लिङ्गविशेषादेक एव क्रियाभेदान्मतिवत्पाचकवद्वा नानोपचर्यते । गुणवत्त्वादनाश्रितत्वाच्च द्रव्यमिति ।

तथा दिक् पूर्वापरादिप्रत्ययलिङ्गा, मूर्त्तद्रव्यमवधिं कृत्वा मूर्तेषु एवैतस्मादिदं पूर्वेणेदं पश्चिमेनेदं दक्षिणेनेत्येवमादयो दश प्रत्यया यतो भवन्ति, सा दिगिति । निमित्तासम्भवात् । द्रव्यं च दिक्, गुणवत्त्वादनाश्रितत्वाच्च । दिग्लिंगाविशेषादेकत्वेऽपि सूर्यसंयोगोपाधिवशात् प्राचीत्यादिभेदेन दश दिश इत्युपचारः । तथा लोकपालपरिग्रहवशान्माहेन्द्रीयादिभेदेन तद्दशत्वोपचारः । सर्वकार्योत्पत्त्यादिहेतुत्वं च दिशोऽपि, तद्व्यपदेशाद् गम्यत इति ।

## ॐ तन्निरासः ॐ

अत्रोच्यते—सामान्येन निमित्तमात्रपूर्वकत्वे साध्ये सिद्धसाधनम्, ईश्वरादिनिमित्तत्वात्। भूतात्मान्तःकरणतद्गुणादिव्यतिरिक्तनिमित्तपूर्वकत्वे साध्ये तु दृष्टान्तो नास्ति। ननु परिशेषसिद्धिरिष्टा, यस्मादुक्तं तेषामित्यादिः। तेषां युगपदादिप्रत्ययानां विषयेषु पटादिषु पूर्वप्रत्ययः क्रियागुणसामान्यादिविशेषणाः पटादिप्रत्ययाः तद्विलक्षणस्तु युगपदादिप्रत्यय एव तेषामुत्पत्तौ कालादन्यनिमित्तं न सम्भवतीत्यर्थः, न; परिशेषस्यासिद्धत्वात्।

## ॐ दिक्कालयोरीश्वरेण गतार्थत्वम् ॐ

तथा हि—भगवान् ईश्वरस्तावत्सर्वेषां ज्ञानाज्ञानात्मकानां कार्याणां निमित्तमस्ति। कर्मेन्द्रियादिकं च यथासम्भवमस्ति। नवीश्वरादिनिमित्तं पटादिप्रत्ययेष्वपि साधारणं ततस्तन्निमित्तत्वे पटादिप्रत्ययैरविशेषप्रसङ्ग इति, न; समानत्वात्—दिक्कालयोरपि सर्वोत्पत्तिमतां निमित्तकारणत्वं भवद्भिरिष्टम्। ततस्तन्निमित्त्वेऽप्यविशेषप्रसङ्ग इति।

ननु युगपदादिप्रत्ययेष्वेव कालस्यासाधारणनिमित्तत्वम्, पूर्वापरादिष्वेव दिशोऽसाधारणनिमित्तत्वम्, कार्यान्तरेषु च सर्वेषु साधारणं ततो नाविशेषप्रसङ्ग इति, न; तदात्मभेदात्। न हि कालस्य दिशो वा कार्यविशेषं प्रत्यात्मभेदोऽस्ति, अभिन्ने चात्मना सर्वकार्यनिमित्तत्वे महेश्वरवत्कथं कचिदसाधारणत्वम्।

अथैकस्यैवेत्थं स्वभावोऽभ्युपगम्यते—येन केषांचिदुत्पत्तौ साधारणं निमित्तं भवति, केषांचिदसाधारणमिति। तथापि न किंचित्कालकल्पनया, महेश्वरस्यैव तथा स्वभावः कल्प्यताम्। तस्य हि जगन्निमित्तत्वं साधितम्। दिक्कालयोस्तु न सर्वकार्यनिमित्तत्वेऽस्ति प्रमाणम्।

## ॐ तद्व्यपदेशानिराकरणम् ॐ

ननु तद्व्यपदेशादित्युक्तम्, सत्यमुक्तमिदमयुक्तं तूक्तम्; न हि येन यद् व्यपदिश्यते, तत्तस्य निमित्तमित्यस्ति व्याप्तिः, काकदण्डादीनां गृहपुरुषाद्यनिमित्तत्वेऽपि तद्व्यपदेशकत्वात्। उत्पत्त्याद्यपि रूपादिना व्यपदिश्यमानं दृष्टम्—शुक्लमुत्पन्नम्, शुक्लं तिष्ठति, शुक्लं विनष्टमिति।

तृतीयासप्तम्यन्तेनाप्यजनकेन व्यपदेशो दृश्यते, यथा देवदत्तस्य सुतः कृष्णेन रूपेण विशालेनाक्ष्णा चोत्पन्नः, शिखया परिव्राजकस्तिष्ठति, रक्तेन

वान्तेन मृतः पुरुष इति। सभायां मे शूलमुत्पन्नम्, सभायां चैत्रस्तिष्ठति, मृतश्चेति। मम भ्रातर्यागते सुत उत्पन्नः त्वय्यागते वृष्टिरुत्पन्नेत्येवमादि।

अथ युगपदादिप्रत्ययविशेषाणामेव निमित्तं काल इष्यते, न; युगपत्प्रत्ययाभावप्रसङ्गात्, तथा हि—यत्कार्यजातमेकस्मिन्काले कृतम्, तद्युगपत् कृतमित्युच्यते, तद्यद्येक एव कालस्ततः सर्वक्रियाणामेककालोत्पादान्न किंचिदयुगपत्कृतं स्याच्चिरक्षिप्रव्यवहाराभावप्रसङ्गश्च। यत्खलु बहुना कालेन कृतं तच्चिरेण कृतमित्युच्यते। यच्च स्वल्पेन कालेन कृतं तत्क्षिप्रं कृतमित्युच्यते। तच्चैतदुभयं कालैकत्वे दुर्घटम्।

## * उपाधिभेदात्कालभेदासम्भवः *

ननु मणिवदु(त्याचकवद्वो)पाधिभेदात्कालभेदं इत्युक्तम् कः पुनरत्रोपाधिभेदः? क्रियाभेद एवेति चेत्, ननु युगपत्कृतमित्यत्रापि क्रियाभेदोऽस्त्येव, किमित्ययुगपत्प्रत्ययो न भवति?

क्रमभाविक्रियाभेदः कालभेदव्यवहारहेतुरिति चेत्, क्रमभाव इति कोऽर्थः? युगपदनुत्पादः। युगपदनुत्पाद इति कोऽर्थः? एकस्मिन् कालेऽनुत्पादः। नन्वेवमितरेतराश्रयत्वप्रसङ्गः—यावन्न कालस्य भेदः सिध्यति, तावन्न क्रियाणां भिन्नकालोत्पादलक्षणः क्रमः सिध्यति। यावच्च क्रियाणां न क्रमभावः सिध्यति, तावन्न कालस्योपाधिभेदाद् भेदः सिध्यतीति। तस्मात्क्रियाधर्म एव कश्चित्क्षणपर्यायः कालशब्दस्यार्थः। तत्समाहारेषु लवनिमेषादिव्यवहारोऽपि द्रष्टव्यः, एकसमाहारेषु द्वित्र्यादिव्यवहारवद्, गुरुत्वसमाहारेषु कर्षपलादिव्यवहारवच्च। एवं चैककालमिदम्, चिरोत्पन्नम्, क्षिप्रमुत्पन्नम् अनन्तरोत्पन्नमित्येवमादिव्यवहार उपपद्यते।

## * परापरव्यतिकरस्य निरासः *

एतेन परापरव्यतिकरः प्रत्युक्तः। कथम्? दिक्कृतापरत्वाधारे यून्यपरत्वम्, दिक्कृतपरत्वाधारे तु स्थविरे परत्वमित्ययं परापरयोर्व्यतिकरः, सोऽपि कालैकत्वे दुर्घटः। यथा हि भूम्यवयवैरालोकावयवैर्वा बहुभिरन्तरितं वस्तु विप्रकृष्टं परमिति चोच्यते। स्वल्पैस्त्वन्तरितं सन्निकृष्टमपरमिति चोच्यते। तथा बहुभिः क्षणैरहोरात्रादिभिर्वान्तरितं विप्रकृष्टं परमिति चोच्यते। स्वल्पैस्त्वन्तरितं सन्निकृष्टमपरमिति चोच्यत इति। बहुत्वभावश्च गुरुत्वपरिमाणादिवदपेक्षानिबन्धनः कालैकत्वे दुर्घट इति।

## ❀ कालस्य क्रियारूपतानिरासः ❀

नापि क्रियैव कालः, तद्विशेषणत्वात्, परिमाणादिवत्। यथैषामेकं परिमाणम्; एतेषां भिन्नं परिमाणत्वम्, तथैषामेकः कालः, एतेषां भिन्न-कालत्वमिति प्रतीतिः। तत्र यथाऽणुत्वमहत्त्वादयः परिमाणविशेषाः, तथा क्षणलवादयः कालविशेषास्तथा हि—यतो नाल्पतरं परिमाणम्, तत्परमाणु-त्वम्, तथा यतो नाल्पतरः कालः, स क्षण इति। एवं च तल्लिङ्गाविशेषा-देकत्वमित्ययुक्तम्, गुरुत्वपरिमाणादेरप्येकत्वप्रसङ्गः, तुल्यचोद्यपरिहारत्वात्।

## ❀ कालस्य द्रव्यत्वनिरासः ❀

द्रव्यत्वमप्यनेनैव प्रत्युक्तम्। कालस्य क्रियाविशेषणत्वेन परिमाणादिवत्प्र-तिभासमानादनाश्रितत्वमसिद्धम्। परिमाणादेरपि वानाश्रितस्यैव विशेषणत्व-मस्तु। न च विशेषणविशेषणत्वेऽपि दण्डादेरिव......मत्त्वमुपलभ्यते। तन्न, गुणवत्त्वमप्यस्ति। संख्यादिमात्रेण च सामान्यादेरपि गुणवत्त्वप्रसंगः, तस्मान्न द्रव्यं कालः।

## ❀ दिशो द्रव्यत्वनिरासः ❀

एतेन दिशोपि द्रव्यत्वं प्रत्युक्तम्। मूर्तद्रव्यधर्मत्वादिशां दीर्घत्वह्रस्वत्वा-दिवत्तद्विशिष्टप्रत्ययानां मूर्तेष्वेव भावात्। दशधाभेदस्तु दिशां वास्तवोऽप्यस्तु को विरोधः?

ननु वास्तवत्वे यथा वाराणस्याः पश्चिमेन प्रयागः, तथा कान्यकुब्जादपि स्यात्, न; अनैकान्तात्सन्निकर्षविप्रकर्षादयो हि धर्म्मा वास्तवा इष्यन्ते। न च यथा प्रतिष्ठानापेक्षया सन्निकृष्टः प्रयागः, तथा कान्कुब्जापेक्षयापीति। तस्मात् प्रतिनियतनिमित्तापेक्षया प्राच्यादिधर्माणामप्यभिव्यक्तिरित्यलं प्रसंगेन। तन्न दिक्कालयोः सर्वोत्पत्तिमतां निमित्तकारणत्वम्।

अपि च यद्युपादानाद्यभिज्ञस्य कालस्य दिशो वा जगन्निमित्तत्वमिष्टम्, तदा महेश्वर एव नामान्तरेणोक्तः स्यात्। अचेतनत्वे त्वनुपास्यत्वात्, न तद्दर्शनं श्रेयःसाधनं स्यात्। चेतनो हि राजर्षिप्रभृतिभिः प्रतिदिनं विनयेन दृश्यमानः कदाचित्प्रसन्नो भूत्वाऽनुग्रहं यथासामर्थ्येन कुर्वन्नुपलभ्यते। नाचेतनोऽसमर्थो वा तस्माच्छिवदर्शनादेव मोक्ष इति।

कः पुनरयं मोक्ष इति ? एके तावद्वर्णयन्ति--समस्तात्मविशेषगुणोच्छेदे संहारावस्थायामाकाशवदात्मनोऽत्यन्तावस्थानं मोक्ष इति। कस्मात् ? सुखदुःखयोरविनाभावित्वाद् विवेकहानानुपपत्तेः। न च सुखार्थैव प्रेक्षावतां प्रवृत्तिः, कण्टकादिदुःखपरिहारार्थत्वेनापि प्रवृत्तेरुपलम्भादिति।

मोहाद्यवस्थात्वान्मूर्छाद्यवस्थावदत्र विवेकिनां प्रवृत्तिर्न युक्तेत्याहुरन्ये

## ❀ मोक्षस्वरूपनिरूपणम् ❀

कः पुनरयं मोक्ष इति ? एके तावद्वर्णयन्ति—समस्तात्मविशेषगुणोच्छित्तौ संहारावस्थायामाकाशवदात्मनः सर्वदावस्थानं मोक्षः। कस्मात् ? सुखदुःखयोरविनाभावित्वेन विवेकहानानुत्पत्तेः। न च सुखार्थैव प्रेक्षावतां प्रवृत्तिः, कण्टकादिदुःखपरिहारार्थत्वेनापि प्रवृत्तेरुपलम्भात्। न चैतच्छास्त्रं विषयिणः[1] प्रत्यारब्धं येन निर्विषये मोक्षे प्रवृत्तिर्न स्यात्, किं तु येऽत्यन्तं दुःखान्निर्विण्णाः, तान् प्रति दुःखोच्छेदार्थं ........................................................
मोक्षे प्रवर्तते। तेषां दुःखत्रयाभिघातात्तदुच्छेदमात्रार्थित्वादिति।

## ❀ मोक्षे सुखाभिव्यक्तिरितिन्यायमतम् ❀

मोहावस्थात्वान्मूर्च्छाद्यवस्थावदत्र विवेकिनां प्रवृत्तिर्न युक्तेत्याहुरन्ये[2] तदुक्तम्—

"दुःखहानाय नो युक्तं सुखं दुःखात्मकं वरम्।
न हि कश्चित्पदार्थज्ञो मोहसिद्धयै प्रवर्तते॥"

"वरं वृन्दावने रम्ये शृगालत्वं वृणोम्यहम्।
न तु निर्विषयं मोक्षं गौतमो गन्तुमिच्छति॥"

किं च यथा संसारावस्थायां सुखमिष्टं दुःखं वाऽनिष्टम्, तथा मोक्षावस्थायां दुःखनिवृत्तिरिष्टा सुखनिवृत्तिस्त्वनिष्टेति। समव्ययफलत्वात्तत्र प्रवृत्तिरयुक्ता। तदुक्तम्—

"अनन्तानि दुरन्तानि समव्ययफलानि च।
अशक्यानि च वस्तूनि नारभेत विचक्षणः॥"

तस्मात्प्रेक्षावतां प्रवृत्त्यन्यथानुपपत्तेः सुखसंवित्तिर्मुक्तस्याभ्युपगन्तव्या।

---

१. विषयिणः = विषयकामान् पुरुषान्।

१. अन्ये = नैयायिकैकदेशिनः।

दुःखे सति सुखस्यासम्भवात्कण्टकादिपरिहारोऽपि सुखोपभोगार्थ एवेत्यसमो दृष्टान्तः। कुतो मुक्तस्य सुखोपभोगसिद्धिरिति चेत्, आगमात्। उक्तं हि—

"सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम्।
तं वै मोक्षं विजानीयाद् दुष्प्रापमकृतात्मभिः॥" इति।

तथा "आनन्दं ब्रह्मणो विद्वान्न बिभेति", (तै० उ० २।४) "आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते।" "विज्ञानमानन्दं ब्रह्म" (बृह० उ० ३।९।३४) इति च। मुख्यार्थे बाधकाभावान्नोपचारप्रकल्पना। किं च भाराक्रान्तस्य तदपाये वाय्वादिसम्पर्कवशात्सुखोत्पादे सत्येव सुखशब्दप्रयोगः, न दुःखभावे।

---

यत्पुनरेतत्—दुःखपरिहारार्थापि प्रवृत्तिर्दृष्टेति, तन्न; दुखपरिहारमात्रार्थायां प्रवृत्तौ दृष्टान्तासिद्धेः। तथा हि—दुःखे सति सुखोपभोगस्यासम्भवात्। कण्टकादिदुःखपरिहारोऽपि सुखोपभोगार्थं एवेत्यसमो दृष्टान्तः। दुःखाविनाभावित्वं तु वैषयिकस्यैव सुखस्य, न तु नित्यस्येति।

## ❀ मोक्षे सुखसत्त्वे प्रमाणम् ❀

[1]कुतो मुक्तस्य सुखोपभोगसिद्धिरिति चेत्, नन्वर्थापत्तेरित्युक्तम्। किं चागमात्। उक्तं हि—

"सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्।
तं वै मोक्षं विजानीयाद् दुष्प्राप्यमकृतात्मभिः॥"
"आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते।"
"विज्ञानमानन्दं ब्रह्म।" (बृह० उ० ३।९।३४) इति च।

## ❀ दुःखाभावमात्रे न सुखव्यवहारः ❀

दुःखाभावमात्रेऽयं सुखशब्द इति चेत्, न; मुख्यगौणासम्भवात्। न तावदञ्जसा दुःखाभाव एव सुखम्। येन केनचिदाहारेण क्षुद्दुःखनिवृत्तेर्विशेषादानन्दविशेषो न स्यात्, तथा युवतिमात्रेण कामदुःखनिवृत्तेर्युवतिविशेषादानन्दविशेषो न स्यात्। गन्धरूपशब्दविशेषेभ्यस्तु सुखविशेष एव भवन्नुपलभ्यते। तत्राप्यौत्सुक्यदुःखं निवर्तते इति चेत्, न; औत्सुक्याभावेऽपि शब्दादिविशेषोपनिपाते सुखविशेषोपलब्धेः।

---

१. कुतः = कस्मात् प्रमाणादित्यर्थः।

तन्न; दुखाभाव एव सुखम् ।

अथोपचारेण दुःखाभावे सुखशब्दः प्रवर्तते, यथा भारापगमे सुखी संवृत्तोऽस्मीति, न मोक्षस्यापुरुषार्थत्वप्रसक्तौ प्रेक्षावतां तत्राप्रवृत्तिप्रसंगात्, तथा हि—

"दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते ।
न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः ॥"

किं च भारोद्वहनादिदुःखापगमे प्रतिबन्धकाभावादिष्टमारुतादिसमागमादपि सुखं भविष्यतीति मन्यमानः सुखी संवृत्तोऽस्मीत्युपचरति । नैतदुपचारनिमित्तं मोक्षेऽस्ति । न चासंवेद्यमानेऽपि दुःखाभावे भाक्तोऽपि सुखशब्दः प्रवर्तते ।

## ❀ मूर्च्छावस्थायामपि संवेदनम् ❀

मूर्च्छावस्थायामपि प्रवर्तेत सुषुप्तावस्थायां सुखशब्दप्रवृत्तिवदिति चेत्, न; तत्र संवेदनाभावसिद्धौ प्रमाणाभावात् । अन्यस्य खल्वभावः संवेदनेन गृह्यते, संवेदनस्य चाभावः केन गृह्यते ? यदि संवेदनेनैव ततः कथं संवेदनं नास्ति ? तथा च सर्वसंवेदनाभावेन संबन्धोऽपि लिंगस्य प्रतिपत्तुं न शक्यत इति । लिंगतोऽपि न सुषुप्तस्य सर्वज्ञानाभावगतिः ।

## ❀ सुषुप्तौ सुखं तत्संवेदनं च ❀

किं च सुखेनाहमस्वाप्समित्यनुस्मृतेः सुखं तत्संवेदनं च सुषुप्तस्याभ्युपगन्तव्यम् । पूर्वदिनेष्वपि तदभ्युपगमेऽयमेव न्यायः, दुःखस्मृत्यनुपलम्भमात्रादनुभावाभावमनुमाय निर्दुःखोऽहमस्वाप्समित्येनमर्थं सुखेनाहमस्वाप्समित्युपचरतीति चेत्, न; स्मृत्यनुपलम्भस्यानुभवाभावसिद्धावनैकान्तिकत्वात् । सुखानुभवस्मृतौ बाधकाभावाच्च ।

ननु यदि सुषुप्तावस्थायां ज्ञानमस्ति, तदा सुप्तावस्थातो मोक्षस्य को विशेषः ? सर्वज्ञानविरहोपलक्षिता सुषुप्तावस्थेत्युच्यते, नान्यथा विशेषोपपत्तेः । तथा हि—बाह्येन्द्रियजज्ञानोपलक्षिता तावत् जाग्रदवस्था, बाह्येन्द्रियेषु निर्व्यापारेषु सत्सु यत्र बाह्येन्द्रियजमिव ज्ञानं बाह्यार्थे स्मरणं भवति, सा सुप्तावस्था, यत्रोपरतेन्द्रियग्रामस्याशेषविकल्पशून्यस्य सुखमात्रावभासि ज्ञानम्, सा सुषुप्तावस्था । तत्र च सुखं नित्यं वा प्रतिभातु, निद्रासहकारिधर्मविशेषजनितं वेति । तस्मान्नासंवेद्ये दुःखाभावे सुखोपचारः क्वचित्प्रसिद्धः, मुख्यार्थे

सुखसंवेदनयोर्नित्यत्वात् मुक्तिसंसारावस्थयोरविशेषप्रसङ्ग इति चेत्, न; चक्षुर्घटयोः कुड्यादेरिव सुखसंवेदनयोः विषयविषयिभावसम्बन्धप्रत्यनीकस्य दुःखादेः संसारावस्थायां सद्भावात् तन्नाशे च मुक्तावस्थायां भवति सुखसंवेदनयोः सम्बन्धः इत्यतो नाविशेषः। तस्य सम्बन्धस्य कृतकत्वेन कदाचिन्नाशप्रसङ्ग इति चेत्, न; प्रध्वंसेनानैकान्तात्। वस्तुत्वे सतीति चेत्, न; द्रव्यादिष्वनन्तर्भावेन तदसिद्धत्वात्। अन्तर्भावे वा समवायादिभिः सह तत्संवेदनस्य सम्बन्धो न स्यात्।

---

बाधकाभावाच्च न खलु मोक्षे सुखास्तित्वाभिधायिनामागमानां मुख्यार्थे बाधकं किंचित्पश्यामो येन भाक्तमर्थं प्रतिपद्येमहि।

## ※ संसारावस्थाया नित्यसुखाभिव्यक्तेरभावः ※

सुखतत्संवेदनयोर्नित्यत्वान्मुक्तसंसारावस्थयोरविशेषप्रसङ्ग इति चेत्, न; चक्षुर्घटयोः कुड्यादेरिव सुखसंवेदनयोर्विषयविषयिसम्बन्धप्रत्यनीकस्याऽधर्मदुःखादेः संसारावस्थायां सद्भावात्। तन्नाशे च मुक्तावस्थायां भवति सुखसंवेदनयोः सम्बन्धः कुड्यादिनाशे चक्षुर्घटसम्बन्धवत्। सम्बन्धविरोधित्वमात्रेण कुड्याद्युदाहृतं, न कुड्यादिवदधर्मादेर्व्यवधायकत्वमस्ति, अमूर्तत्वादेकदेशयोर्व्यवधानासम्भवाच्च। किं तु "तच्च मोक्षेऽभिव्यज्यत" इति वचनात्समस्ताधर्मादिनिवृत्तौ सुखसंवेदनयोः सम्बन्धविशेषलक्षणाभिव्यक्तिर्भवतीति गम्यते। तेनोपचारेणाधर्मादेर्व्यवधायकत्वाभिधानेऽप्यदोषः। तस्मादभिव्यक्तिविशेषान्न मोक्षसंसारयोरविशेषः।

## ※ नित्यसुखतत्संवेदनयोः सम्बन्धोऽनित्योऽपि मोक्षे न नश्यति ※

तस्य सम्बन्धस्य कृतकत्वेन कदाचिन्नाशप्रसङ्ग इति चेत्, न; प्रध्वंसेनानेकान्तात्। वस्तुत्वे सतीति चेत्, न; द्रव्यादिष्वनन्तरभावेन तदसिद्धत्वात्। तदन्तर्भावे वा सामान्यसमवायाभावैः सह तत्संवेदनस्य सम्बन्धो न स्यात्। अदृष्टादिवशात् कर्मकारकं विषयः, तज्जनितं ज्ञानं विषयीति चेत्; न; ईश्वरज्ञानस्य नित्यस्यार्थैः सह सम्बन्धाभावप्रसङ्गात्, अस्मदादिज्ञानस्याप्यतीतानागतार्थैः सह सम्बन्धाभावप्रसङ्गाच्च। तस्मान्नित्यसुखसंवेदनयोः सम्बन्धस्य कृतकत्वेऽपि विनाशकारणाभावान्नित्यत्वमेवेति।

अदृष्टादिवशात् कर्मकारकं विषयः। तज्जनितज्ञानं विषयीति चेत्, न; ईश्वरज्ञानस्य नित्यस्यार्थैः सह सम्बन्धाभावप्रसङ्गादिति। तस्मात्कृतकत्वेऽपि नित्यसुखसंवेदनसम्बन्धस्य विनाशकारणाभावात् नित्यत्वं स्थितम्।

तत्सिद्धमेतत् नित्यसंवेद्यमानेन सुखेन विशिष्टा आत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष इति ॥

॥ इति श्रीमदाचार्यभासर्वज्ञविरचिते न्यायसारे
तृतीयः परिच्छेदः ॥
॥ सम्पूर्णोऽयं न्यायसारः ॥



## ※ नित्यसुखरागस्य बन्धानात्मकत्वम् ※

ननु रागस्य सम्बन्धनात्मकत्वान्नित्यसुखरागेण प्रवत्तो न मुच्यते, न; रागस्य विषयशक्तिलक्षणत्वात्। यो हि सुखसाधनेषु शब्दादिविषयेष्वभिष्वङ्गः, स राग इत्युच्यते। स हि बन्धनात्मकः, तस्य विषयार्जनरक्षणादिप्रवृत्तिद्वारेण संसारहेतुत्वात्। नित्ये तु सुखे यद्यपि रागः, तथाप्यसौ सर्वविषयार्ज्जनादिनिवृत्तिमोक्षोपायप्रवृत्तेरेव हेतुः, अन्यथा तस्य सुखस्य प्राप्तुमशक्यत्वात्। न हि तद्विषयसाध्यं, नापि तत्क्षीयते, येन विषयसुखार्थमिव पुनः पुनस्तदर्थं। हिंसादिष्वपि प्रवर्तेत। तन्न बन्धप्रसङ्गः।

किं चैवं द्वेषस्यापि बन्धात्मकत्वात् संसारदुःखद्वेषेण प्रवृत्तो न मुच्येत। अथ नास्त्येवास्य तत्रापि द्वेषः, ततः कथं संसारहेतुं परिहरति ?

किं चात्यन्तिकदुःखाभावरागेणापि प्रवृत्तस्य मोक्षो न स्यात्। दुःखाभावे न मानमस्तीति चेत्, कुतस्तं प्रार्थयते ? रागं विनैवमेवेति चेत्, नित्यसुखेऽपि तर्ह्यस्य रागो नास्ति तदपि रागं विनैवमेव प्रार्थ्यत इति यत्किंचिदेतत्। तस्माद्विषयरजतेच्छालक्षणः रागः पुण्यः, पुण्यप्रवृत्तिहेतुत्वाद् बन्धहेतुर्न त्वर्थित्वमात्रं, द्वेषोपि न जिहासामात्रम् किन्तु[1] .............................................।

श्रीमदाचार्यभासर्वज्ञविरचिते न्यायभूषणे संग्रहवार्तिके
तृतीयः परिच्छेदः समाप्तः।
सम्पूर्णोयं ग्रन्थः ॥



१. एतत्पर्यन्तेव मातृका समुपलब्धा।
सम्यक् सम्पादितं योगैर्भासर्वज्ञस्य भूषणम्।
सम्पश्यन्त्वमलप्रज्ञा नः शिवमिव योगिनः ॥

[ अनुबन्धः ]

[ १ ]

# विशिष्टशब्दावलिः

—त्र—

—:o:—

[ अनुबन्ध ]

## २

# विशिष्ट नामावलिः

—:०:—

[ अनुबन्ध ]

३

# भूषणकृतः कटाक्षोक्तयो लौकिकन्यायाश्च



—:०:—

[ अनुबन्ध ]

४

# न्यायभूषणतट्टिप्पणोद्धृतवाक्यावलिः

—अ—

—आ—



—इ—



—ई—

—उ—



—ए—

—ग—

—प—

—ब—



—भ—

—र—



—ल—

—व—

—र—



—ल—

—व—

—श—

—:०:—

# संकेतपत्रिका

| | | |
|---|---|---|
| अभि. को. | अभिधर्मकोशः | ज्ञानमण्डल प्रेस, काशी |
| अभि. प्र. | अभिधर्मप्रदीपः | जायसवाल रि. इन्स्टीच्यूट, पटना |
| अभि. स. | अभिधर्मसमुच्चयः | |
| अमर. | अमरकोशः | निर्णयसागर प्रेस, बम्बई |
| आप्त. | आप्तमीमांसा | सनातनजैन ग्रन्थमाला, काशी |
| ई. उ. | ईशावास्योपनिषत् | आनन्दाश्रम, पूना |
| ऋ. वे. | ऋग्वेदः | पूना प्रकाशन |
| कठो. | कठोपनिषत् | ,, ,, |
| का. वा. | कात्यायनवार्तिकम् | निर्णयसागर, बम्बई |
| का. श्रौ. सू. | कात्यायनश्रौतसूत्रम् | अच्युतग्रन्थमाला, काशी |
| कैवल्यो. | कैवल्योपनिषत् | सर्वहितैषी कम्पनी, काशी १९३८ ई. |
| कौलो. | कौलोपनिषत् | |
| गौ. का. | गौड़पादकारिका | कलिकाता विश्वविद्यालय, १९५० ई० |
| ज. मं. | जयमङ्गला (साङ्ख्य-कारिकाव्याख्या ) | कलकत्ता ओरियण्टल सिरीज |
| जैने. म. }<br>जैने. म. } | जैनेन्द्रमहावृत्तिः | भारतीय ज्ञानपीठ, काशी |
| जै. न्या मा. | जैमिनीन्यायमाला | आनन्दाश्रम,पूना |
| जै. सू. | जैमिनीय सूत्रम् | ,, ,, |
| ज्ञान. नि. | ज्ञानन्दी निबन्धावलिः | जायसवाल रिसर्च इन्स्टीच्यूट पटना १९५९ ई० |
| त. उ., तत्त्वो. | तत्त्वोपप्लवसिंहः | गायकवाड़ सिरीज बड़ौदा |
| तत्त्व. सू. | तत्त्वार्थ सूत्रम् | जैन संस्कृत संशोधन मण्डल बनारस १९५२ ई० |

| | | |
|---|---|---|
| तत्त्व. वा. | तत्त्वार्थवार्तिकम् | भारतीय ज्ञानपीठ, काशी १९४४ ई. |
| त. सं. पं. | तत्त्वसंग्रह पञ्जिका | गायकवाड़ सिरीज बड़ौदा १९२६ ई. |
| ता. टी. | न्यायवार्तिकतात्पर्यटीका | चौखम्बा संस्कृत सिरीज वाराणसी |
| त. सं. | तत्त्वसंग्रहः | गायकवाड़ सिरीज बड़ौदा |
| ता. दी. न्याय. | तात्पर्य दीपिका व्याख्या-न्याय सारस्य | एशियाटिक सोसाइटी, कलकत्ता |
| ता. परि. | तात्पर्यपरिशुद्धिः | एशियाटिक सोसाइटी कलकत्ता |
| तै. आ. | तैत्तिरीयारण्यकम् | आनन्दाश्रम, पूना |
| तै. सं. | तैत्तिरीय संहिता | ,, ,, |
| तं. वा. | तन्त्रवार्तिकम् | आनन्दाश्रम मुद्रणालय पूना १९२९ ई० |
| दुर्वेक | दुर्वेकमिश्रस्य धर्मोत्तर-प्रदीपः | जायसवाल रिसर्चइन्स्ट्रीच्यूट पटना १९५५ ई० |
| द्रव्य. | द्रव्यसंग्रहः | |
| धर्मो | धर्मोत्तर प्रदीपः | जायसवाल रिसर्च इन्स्ट्री-च्यूट, पटना, |
| न्या. कं. | न्यायकन्दली | वाराणसेय संस्कृतविश्व-विद्यालय, वाराणसी १९६३ ई० |
| न्या. कु. | न्यायकुसुमाञ्जलिः | चौखम्बा संस्कृत सिरीज वाराणसी |
| न्या. चं. | न्यायचन्द्रिका | मद्रास गवर्नमेण्ट ओरियण्टल सिरीज १९५९ ई० |
| न्या. बि. | न्यायबिन्दु | जायसवाल रिसर्च इन्स्ट्री-च्यूट, पटना |
| न्या. भा., भा. | न्यायभाष्यम् | चौखम्बा संस्कृत सिरीज वाराणसी |
| न्या. मं. | न्यायमञ्जरी | मेडिकलहाल प्रेस १८९५ ई. |

| | | |
|---|---|---|
| न्याया. वा. वृत्ति. | न्यायावतार वार्तिकवृत्तिः | भारतीय विद्या भवन बम्बई १९४९ ई० |
| न्याया. | न्यायावतारः | ,, ,, ,, |
| न्या. वा. | न्यायवार्तिकम् | चौखम्बा संस्कृत सिरीज वाराणसी १९१५ ई० |
| न्या. वि. | न्यायविनिश्चयः | भारतीय ज्ञानपीठ, काशी |
| न्या. सू. | न्याय सूत्रम् | चौखम्बा संस्कृत सिरीज़ वाराणसी १९४२ ई० |
| पञ्चास्ति. | पञ्चास्तिकायः | रायचन्द्र शास्त्रमाला बम्बई |
| पा. भा. | पातञ्जलमहाभाष्यम् | चौखम्बा संस्कृत सिरीज वाराणसी |
| पा. सू. | पाणिनिसूत्रम् | |
| प्र. पं. | प्रकरणपञ्चिका | बनारस हिन्दु विश्वविद्यलय १९६१ ई० |
| प्र. पं. | प्रकरण पञ्चिका | ,, ,, ,, |
| प्र. पा. अभि. | प्रज्ञापरिमिता अभिसमयालङ्कारालोकः | ओरियण्टल इन्स्ट्रीच्यूट बड़ौदा १९३२ ई० |
| प्र. भा. | प्रशस्तपादभाष्यम् | चौखम्बा संस्कृत सिरीज वाराणसी |
| प्र. भा. किर. | प्रशस्तपादभाष्यकिरणावली | विद्याविलासप्रेस काशी १९१९ ई० |
| प्र. मी. का. | प्रमाण मीमांसा | भारतीय विद्या भवन, बम्बई १९३९ ई० |
| प्र. मी. | प्रमाण मीमांसा | |
| प्र. वा. | प्रमाणवार्तिकम् | विहारएण्ड उड़ीसा रिसर्च सोसाइटी पटना |
| प्र. वा. अ. | प्रमाणवार्तिकालङ्कार | जायसवाल रिसर्च इन्स्टीच्यूट, पटना १९५३ ई० |
| प्र. वि. | प्रमाणविनिश्चय] | मैसूर युनिवर्सिटी सिरीज |
| बृ. | बृहती (शाबरभाष्यव्याख्या) | भद्रपुरीय विश्वविद्यालय १९३४ ई० |
| बो. अ. | बोधिचर्यावतारपञ्जिका | |

| | | |
|---|---|---|
| ब्र. सि. व्या. | ब्रह्मसिद्धव्याख्या | मद्रास गवर्नमेण्ट प्रेस, १९३७ ई० |
| भ. गी. | भगवद्गीता | गीता प्रेस, गोरखपुर |
| मध्यमका. | मध्यमकावतार | |
| मा. का. | माध्यमिक कारिका | मिथिला विद्यापीठ, दरभङ्गा १९६० ई० |
| मनु. | मनुस्मृतिः | चौखम्बा संस्कृत सिरीज वाराणसी |
| म. भा. | महाभारतम् | |
| मी. सू. | मीमांसासूत्रम् | आनन्दाश्रम मुद्रणालय, पूना १९२९ ई० |
| यु. दी. | युक्ति दीपिका | कलिकाता संस्कृत ग्रन्थ-माला १९२८ ई० |
| यो. सू. | योगसूत्रम् | चौखम्बा संस्कृत सिरीज, वाराणसी |
| र. नि. | रत्नकीर्ति निवन्धावली | जायसवाल रिसर्च इन्स्टीच्यूट, पटना, १९५७ ई० |
| लं. सू. | लंकावतारसूत्रम् | |
| वा. न्या. | वादन्यायः | महाबोधि सोसाइटी बनारस १९३६ ई० |
| वा. प. | वाक्य पदीय | विद्यापीठ पूना १९६५ ई. |
| विज्ञप्तिः | विज्ञप्तिमात्रता सिद्धिःविंशिका | पेरिस |
| वि. पु. | विष्णु पुराणम् | गीताप्रेस गोरखपुर सं. १९९० |
| विभ्र. वि. | विभ्रम विवेकः | ओरियण्टल सिरीज मद्रास १९३२ ई. |
| वि. महावग्ग | विनयपिटकस्स महावग्गो | बम्बई युविर्वसिटी |
| वै. सू. | वैशेषिक सूत्रम् | चौखम्बा संस्कृत सिरीज वाराणसी |
| श. ब्रा. | शतपथब्राह्मणम् | |
| शां. भा. | ब्रह्मसूत्र शांकरभाष्यम् | निर्णयसागर, बम्बई |
| श्लो. वा. | मीमांसा श्लोक वर्तिकम् | चौखम्बा संस्कृत सिरीज वाराणसी |

| | | |
|---|---|---|
| श्लो. वा. ता. | श्लोकवार्तिक तात्पर्य टीका | मद्रास युनिवर्सिटी १९४० ई० |
| सां. का. माठर. | साख्यकारिकामाठरवृत्तिः | चौखम्बा संस्कृत सीरीज वाराणसी १९२२ ई० |
| सां. का. | सांख्यकारिका | चौखम्बा संस्कृत सिरीज वाराणसी |
| सर्वद. | सर्वदर्शन | प्राच्यविद्या संशोधन मन्दिर पूना |
| हे. बि. | हेतुबिन्दु | गायकबाड़ सिरीज, बड़ौदा |
| हे. बि. टी. ग्रा. | हेतुबिन्दुटीकालोक | गायकवाड़ सिरीज, बड़ौदा, १९४९ ई० |



